THE

# KASHI SANSKRIT SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

**135**

( Alaṅkāra Section, No. 5 )

THE

# DHVANYĀLOKA

OF

## S'RĪ ĀNANDAVARDHANĀCHĀRYA

With the

**LOCHANA & BĀLAPRIYĀ COMMENTARIES**

By

**S'RĪ ABHINAVAGUPTA &**

**Paṇḍitrāja Sahṛdayatilaka S'RĪ RĀMAS'ĀRAKA**

*with the Divyāñjana Notes by*

KAVITĀRKIKA-CHAKRAVARTY

**PANDIT S'RĪ MAHĀDEVA S'ĀSTRI**

*Professor, Benares Hindu University.*

*Edited with Notes, Introduction, Indices & Appendices etc.*

by

MIMĀṂSĀ-SĀHITYĀCHĀRYA

**PANDIT PAṬṬĀBHIRĀMA S'ĀSTRI**

*Professor, Benares Hindu University.*

PUBLISHED BY

JAYA KRISHNA DAS HARI DAS GUPTA

*Chowkhambā Sanskrit Series Office,*

**Benares City.**

श्रीः

हरिदाससंस्कृतग्रन्थमालासमाख्य—

काशी-संस्कृत-सीरिज़ ग्रन्थमालायाः

१३५

अलङ्कारविभागे(५)पञ्चमं पुष्पम् ।

॥ श्रीः ॥

# ध्वन्यालोकः

श्रीमदानन्दवर्धनाचार्यविरचितः

सहृदयतिलकश्रीरामपारक-

कवितार्किकचक्रवर्ति-पण्डितश्रीमहादेवशास्त्रिविरचिताभ्यां

बालप्रियादिव्याञ्जनाभ्यां समुपेतेन

श्रीमदभिनवगुप्तपादविरचितेन लोचनेन सहितः

मीमांसासाहित्याचार्येण काशीहिन्दूविश्वविद्यालयमीमांसाध्यापकेन

पण्डित पट्टाभिरामशास्त्रिणा

भूमिकाविवेचनादिभिस्संयोज्य संशोधितः ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

वि० सं० १९९७

# ग्रन्थानुक्रमणिका ।


सम्पादकीयं किंचिन्निवेदनम् .... .... १—१७

विज्ञापना .... .... .... १९—२०

विषयसूची .... .... .... २१—२६

ग्रन्थः .... .... .... १—५५६

कारिकार्धसूची .... .... .... ५५७—५६०

वृत्त्युदाहृतश्लोकसूची .... .... .... ५६१—५६५

लोचनोदाहृतपद्यसूची .... .... .... ५६६—५७४

॥ श्रीः ॥

# सम्पादकीयं किञ्चिन्निवेदनम्

अयमिदानीं सटिप्पणलोचनोपेतो ध्वन्यालोकाख्यो ग्रन्थमणिस्सम्मुद्र्य प्रकाशपथमानीयतेऽध्येतृगणसौकर्याय । सलोचनोऽयं ध्वन्यालोको बहोः प्रागनेहसः निर्णयसागरमुद्रणालयतो लम्भितप्रकाशोऽपि बहुत्राशुद्धिविशिष्टः त्रुटितश्च सन्नध्येतॄणामध्यापकानाञ्च महान्तमनिर्वर्णनीयं क्लेशमुत्पादयामास । क्लेशमिमं दूरीचिकीर्षुरयं चौखम्बामुद्रणालयाधिपः प्राचीनग्रन्थोद्धरणदीक्षादीक्षितः श्रेष्ठिकुलतिलकः श्रीमान् जयकृष्णदासगुप्तमहोदयः ग्रन्थमिमं केरलदेशवास्तव्येन सहृदयतिलकेन रामषारकमहोदयेन विरचितया लोचनटिप्पण्या बालप्रियाख्यया समेतं मदाचार्यचरणेभ्यः पण्डितसार्वभौमेभ्यः वेदपूर्वोत्तरमीमांसादितन्त्रपारदृश्वभ्यः साम्प्रतं तिरुपतिश्रीवेङ्कटेश्वरसंस्कृतमहाविद्यालयाध्यक्षपदमलङ्कुर्वद्भ्यः तत्रभवद्भ्यः पूज्यपादेभ्यः श्रीचिन्नस्वामिशास्त्रिवर्येभ्यः प्राप्य संशोधनायान्यत्र दत्वापि तेनानवाप्ततृप्तिः कतिपयपृष्ठानां मुद्रणानन्तरं मह्यं प्रादात् संशोधनाय । अहमप्यूरीकृततदभ्यर्थनो ग्रन्थमिमं समीचीनया रीत्या संशोधयितुं कृतमतिः न्यायव्याकरणसाहित्यादिशास्त्रेष्वकुण्ठितमतिवैभवान् कवितार्किकचक्रवर्तिनः काशीहिन्दूविश्वविद्यालये साहित्यन्यायाध्यापकपदविभूषितान् पण्डितकुलधुरीणान् श्रीमहादेवशास्त्रिवर्यान् मत्सद्गुरुवरान् सम्प्रार्थ्य, तैर्विरचितां सहृदयह्लादिनीमध्येतृनिवहसन्देहसन्दोहापहन्त्रीमुपनेत्रापरनामधेयां लोचनदिव्याञ्जनाभिधां टिप्पणीं संयोज्य, तैरुपदिष्टं पन्थानमवलम्बमानोऽनेकमातृकाधारेण निरवर्तयमिदानीमस्य ग्रन्थरत्नस्य संशोधनकार्यम् । निर्णयसागरादिसंस्करणापेक्षया अस्मदीये संस्करणे वैशिष्ट्यं वर्तते न वेत्यत्र आर्यमिश्राः सहृदयधुरीणा विद्वांस एव प्रमाणम् । मनुष्यमात्रसुलभा अशुद्धिर्यद्यपि क्वचित्स्यादेव, तथापि 'शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति' इति न्यायमनुसरन्तस्सन्तो विद्वदपश्चिमाः दोषानुत्सार्य गुणान् गृह्णन्तो मदीयं परिश्रमं सफलयेयुरिति प्रथमतः तत्र भवतः पण्डितवरानभ्यर्थये । पूर्वसंस्करणापेक्षयाऽस्य वैलक्षण्यज्ञानायाऽधः काञ्चन पट्टिकां निवेशयामि—

| नि० संस्करणम् | पृ० | पं० | चौ० संस्करणम् | पृ० | पं० |
|---|---|---|---|---|---|
| यः समाम्नातः समाख्यातः, तस्य | ३ | ५ | यः समाम्नातपूर्वः सम्यक् आसमन्तादाम्नातः प्रकटितः, तस्य | १० | २ |
| परुषानुप्रासः । उपनागरिकानुप्रासः । उपनागरिका ललिता । नागरिकया विदग्धया उपमितेति कृत्वा । मध्यमं कोमलम् । अपरुषमित्यर्थः | ६ | ४ | परुषानुप्रासा नागरिका । मसृणानुप्रासा उपनागरिका ललिता, नागरिकया विदग्धया उपमितेति कृत्वा । मध्यममकोमलपरुषमित्यर्थः | १८ | ३ |
| तथापि वाच्ये नानैकान्तिको हेतुः | १३ | २१ | तथापि वाच्येऽनैकान्तिको हेतुः | ४६ | ७ |
| तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः । बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः॥३॥ ततो नेह प्रतन्यते केवलमनूद्यते पुनर्यथोपयोगमिति | १४ | १ | तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः । बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः ततो नेह प्रतन्यते ॥३॥ केवलमनूद्यते पुनर्यथायोगमिति । | ४९ | १ |
| तथापि द्वितीयस्थानसंक्रान्ताभावादसौ न भवति | १७ | १ | तथापि द्वितीयस्थानसंक्रान्ता तावदसौ न भवति | ५७ | ९ |
| रसस्य च शब्दवाच्यत्वं तेनापि | १९ | २४ | रसश्च व्यङ्ग्य एव, तस्य च शब्दवाच्यत्वं तेनापि | ६८ | ९ |
| को दोषः अपि चोक्तनीत्या | २० | ९ | को दोषः । यदि तु रसानुवेधेन विना न तुष्यति, तद्भयानकरसानुवेधो नात्र सहृदयदर्पणमध्यास्ते ; अपि तूक्तनीत्या | ६९ | ९ |

| नि० संस्करणम् | पृ० | पं० | चौ० संस्करणम् | पृ० | पं० |
|---|---|---|---|---|---|
| इत्यत्र विभावानुभावौ म्लानतया प्रतीयेते। प्रतिपन्नं कुर्वतोत्कण्ठाचर्वणागोचरं प्रतिपाद्यत एव | २५ | १८ | इत्यत्र विभावानुभावावम्लानतया प्रतीयेते। उत्कण्ठा च चर्वणागोचरं प्रतिपद्यत एव | ८२ | ६ |
| अपि च सङ्करालङ्कारस्य सङ्करोक्तिरेव ध्वनिसम्भावनांकरोति। अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्तनिमित्तिभावाद्वाभिधेयप्रतीयमानयोः | ४२ | २ | अपि च सङ्करालङ्कारेऽपि च क्वचित् सङ्करोक्तिरेव ध्वनिसम्भावनां निराकरोति। अप्रस्तुत···निमित्तिभावाद्वा अभिधीयमानस्याप्रस्तुतस्य प्रतीयमानेन प्रस्तुतेनाभिसम्बन्धः तदाभिधीयमानप्रतीयमानयोः | १२४ | ३ |
| यदि वा कर्मधारये। अत्र पक्षे विवक्षितश्चासौ वाच्यश्चेति। तत्रार्थः | ४६ | १० | यदि वा कर्मधारयेणार्थपक्षे अविवक्षितश्चासौ वाच्यश्चेति, विवक्षितान्यपरश्चासौ वाच्यश्चेति। तत्रार्थः | १३७ | ७ |
| दीतिरित्युच्यते। उदाहरति यथा चञ्चदिति | ८० | २३ | दीतिरित्युच्यते। यथा–चञ्चदित्यादि। तत्प्रकाशनपरश्चार्थः प्रसन्नैर्गमकैर्वाचकैरभिधीयमानः समासानपेक्ष्यपि दीप्तिरित्युच्यते। यथा–यो य इत्यादि। चञ्चादिति। | २०६ | ६ |
| स न केवलं ध्वनेर्विषयो यावदयमन्योऽपि | १२१ | २६ | स न केवलं ध्वनेर्न विषयो यावदयमन्योऽपि | २८६ | १३ |

| नि० संस्करणम् | पृ० | पं० | चौ० संस्करणम् | पृ० | पं० |
|---|---|---|---|---|---|
| स्वपौरुषानुस्मरणं प्रति……तद्धितप्रयोगस्य प्रत्ययसहितस्याबहुमानास्पदत्वम् । विलुण्ठनशब्देन………निर्दयावस्कन……व्यञ्जकत्वम् । | १५४ | १४ | स्वपौरुषानुस्मरणं प्रति व्यञ्जकत्वम् । आमटिकेति स्वार्थिकतद्धितप्रयोगस्य स्त्रीप्रत्ययसहितस्याबहुमानास्पदत्वं प्रति, विलुण्ठनशब्दे विशब्दस्य निर्दयावस्कन्दनं प्रति व्यञ्जकत्वम् | ३४६ | १७ |
| निकृष्टत्वात् । ………चे ………शब्दो……………… एवंप्रयुक्तो जन्तो… | १५५ | १६ | निकृष्टत्वात् । यदि वेयसुनन्तोऽयं शब्दो मुनिनैवं प्रयुक्तो णिजन्तो वा । | ३५१ | ११ |
| किं स्व………इत्यनेनामर्षातिशयः | १५८ | २२ | 'किं किम्? स्वस्था भवन्ति मयि जाग्रति' इत्यनेनामर्षातिशयः | ३५५ | २२ |
| अन्ये तु स्थायितया पठितस्यावि स्थायित्वमेव । | १७५ | १४ | अन्ये तु स्थायितया पठितस्यापि रसस्य रसान्तरे व्यभिचारित्वमस्ति, यथा क्रोधस्य वीरे ; व्यभिचारितया पठितस्यापि स्थायित्वमेव रसान्तरे, यथा तत्त्वज्ञानविभावकस्य निर्वेदस्य शान्ते ; व्यभिचारिणो वा सत एव व्यभिचार्यपेक्षया स्थायित्वमेव । | ३८६ | ११ |
| कथं तद्युच्य……। नो चेत्स तस्य | १८८ | २६ | कथं तद्युच्यतेऽर्थान्तमिति । नो चेत्स तस्य | ४१६ | १४ |

| नि० संस्करणम् | पृ० | पं० | चौ० संस्करणम् | पृ० | पं० |
|---|---|---|---|---|---|
| त्वर्थान्तरेऽपि······एक त्वमेवोच्यते किं हि तद्वाचकत्वं स······ ङ्कोच्यत इत्याह | १८४ | १७ | त्वर्थान्तरेऽपि शब्दस्य वाचकत्वमेवोच्यते किं हि तद्वाचकत्वं स· ङ्कोच्यत इत्याशङ्क्याह | ४१८ | १२ |

इत्येवं बहुषु स्थलेषु कारिका वृत्तिरूपेण, वृत्तिश्च कारिकारूपेण मुद्रितं भागं यथामति यथावत्संशोध्य प्रकाशितोऽयं ग्रन्थो विद्वत्तल्लजानां मोदायैव भवेदिति विश्वसिमि। अत्र च पाठसंशोधने बालप्रियाया रचयिता श्रीमान् सहृदयतिलको रामषारकमहोदयोऽत्यन्तमेव प्रशंसापात्रम्। तत्रापि निगूढतयाऽवस्थिता अशुद्धी निराकृत्य साहित्यपरम्परामात्रसुलभान् साधुपाठांश्च तत्र तत्र निवेश्य नितान्तमन्वगृह्णन् मद्गुरुचरणाः कवितार्किकचक्रवर्तिनः पं० महादेवशास्त्रिपादाः।

## साहित्ये ध्वन्यालोकस्य स्थानम्

साहित्यशास्त्रे ध्वन्यालोकस्य परमं स्थानं परिकल्पनीयम्। वामनभामहादयः प्राचीना अलङ्कारशास्त्रप्रवर्तका नैकविधान् ग्रन्थान् व्यभान्त्सुः, तथापि ते ग्रन्था ध्वनिमार्गमुपदेष्टुं ध्वन्यालोक इव नालमभवन्। नूतन एव कश्चन रमणीयः पन्थाः सहृदयानां महाकवीनां सञ्चाराय प्रदर्शितो वर्ततेऽस्मिन् ग्रन्थे, यस्मिंश्च पथि सञ्चरन्तो काव्यनाटकादिरचयितारो महाकवित्वपदं भजन्ते। तदिदमुक्तम्—'येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्त' इति। मम्मटभट्टादयो महान्तो ध्वन्यालोकमिमं सर्वात्मना अवलम्बमानाः काव्यप्रकाशादिकमनल्पं प्रबन्धं विरचय्य जगति लब्धप्रतिष्ठा विराजन्ते। किं बहुना! साहित्यशास्त्रस्य जीवातुरयं ग्रन्थमणिरिति निस्सङ्कोचं स्वीकर्तव्यम्।

## साहित्यशब्दव्युत्पत्तिः

साहित्यशब्दव्युत्पत्त्यापि विषयोऽयं दृढीभवति। तथाहि—सहितं रसेन युक्तं विशिष्टं साहित्यम्, तस्य भावः साहित्यम्। अथवा-हितेन निरतिशयप्रेमास्पदेन इतरेच्छानधीनेच्छाविषयेण रसेन सहितम्, उभयत्र व्यञ्जकत्वप्रतिपादकत्वान्यतरसम्बन्धेन विशिष्टं तस्य भावः। किं वा-हितं पिहितम् आवृतं तत्सहितम्। अपिवा-हितं सन्निहितं नेदिष्ठम् 'हिरण्मयेन पात्रेण सत्यस्य पिहितं मुखम्' 'तद्दूरे चान्तिके च यत्' इति च श्रुतेः। सद्भिर्महाकविभिस्सम्यङ्निहितं रक्षितं वा तत्सन्निवेशेनैव महा-

कवित्वलाभात्, प्रहितं प्रेषितं साक्षात्परमानन्दरूपेण, परमेश्वरेण वा। अवहितं निगृहीतेन मनसा ध्यातं प्राचेतसद्वैपायनप्रभृतिभिर्महर्षिभिर्वा, हितं सुहितम् 'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः' इति स्मरणात् अक्षय्यतृप्तिसम्पादनं वा, तत्सहितं तस्य भावः। सर्वथा चेद्वयो व्युत्पत्तयो रसरूपमर्थं न व्यभिचरन्ति। यद्यपि साहित्यपदं वाङ्मयेऽपि प्रयुज्यते–'संस्कृतसाहित्यं हिन्दी साहित्यम्' इत्यादि, तथापि 'साहित्ये सुकुमारवस्तुनि' 'नमोऽस्तु साहित्यरसाय तस्मै' 'येषां न चेतो ललनासु लग्नं मग्नं न साहित्यसुधासमुद्रे' 'साहित्यसङ्गीतकलाविहीनः' 'साहित्यपाथोनिधिमन्थनोत्थम्' 'साहित्यादपि शास्त्राणि' इत्येवं प्रभृतिनि लक्ष्ये व्यवहृतमनेकार्थमपि व्यञ्जकत्वप्रतिपादकत्वान्यतरसम्बन्धेन लोकोत्तरचमत्कारकारिरसनीयवस्तुविशिष्टं काव्यालङ्काररूपम् उन्मग्नसौन्दर्यसारं सुधामहाह्रदसब्रह्मचारि शास्त्रमत्र प्रतिपाद्यम्।

## साहित्यस्य शास्त्रत्वम्

शास्त्रं हि नाम शासनकरणम्। शासनञ्चानधिगतार्थज्ञापनम्–ज्ञानविषयत्वाभाववदर्थबोधनम्। ज्ञानविषयतायाः केवलान्वयित्वेन तत्सामान्याभावस्यासम्भवेऽपि स्वानुपजीविप्रमाणाप्रयोज्यज्ञानविषयत्वसामान्याभाववत्सकलपुमर्थसाधनार्थविषयकज्ञानसाधनत्वं तदिति ध्येयम्। स्वानुपजीवीनि प्रमाणानि न्यायवेदान्तप्रभृतीनि, तत्प्रयोज्यज्ञानविषयता द्रव्यगुणादिषु ब्रह्ममायादिषु च, तत्सामान्याभाववन्तः सकलपुमर्थसाधनानि च रसादयः, तद्विषयकज्ञानसाधनत्वं साहित्यस्येति तस्य शास्त्रत्वे कस्सन्दिहीत? विशेषतश्च ध्वन्यालोकस्य प्रमाणान्तरेणानधिगतध्वनिस्वरूपप्रतिपादकत्वाच्छास्त्रत्वमसन्दिग्धमेव। 'आनन्द इति च ग्रन्थकृतो नाम, तेन स आनन्दवर्धनाचार्य एतच्छास्त्रद्वारेण सहृदयहृदयेषु प्रतिष्ठां देवतायतनादिवदनश्वरीं स्थितिं गच्छतु' इति ब्रुवन्तः श्रीमन्तोऽभिनवगुप्ताचार्या अपि ध्वन्यालोकस्य शास्त्रत्वं मुक्तकण्ठं स्वीकुर्वते। कविकुलशेखरः श्रीराजशेखरोऽपि काव्यमीमांसायां—पञ्चमी साहित्यविद्या इति यायावरीयः। सा हि चतुसृणामपि विद्यानां निष्यन्दः' इत्युपवर्णयन्नस्य शास्त्रत्वं विर्विचिकित्समभिप्रैति।

अत्र केचन अभिदधते–शास्त्रान्तरसिद्धमेवार्थं महाकवयस्सन्दर्भयन्ति। अत एव कविकुलतिलकः श्रीहर्षोऽभ्यधात्—

'जगत्त्रयीपण्डितमण्डितैषा सभा न भूता न च भाविनी च।
राज्ञां गुणज्ञापनकैतवेन संख्यावतः श्रावय वाङ्मुखानि' ॥ इति।

ध्वनिञ्च वैयाकरणाः प्रतिपादयाम्बभूवुः। तथा च पस्पशायां शब्द-

स्वरूपनिरूपणे—'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद्यथा—शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवक इति। ध्वनिं कुर्वन्नेवमुच्यते। तस्माद्ध्वनिः शब्द' इति। साहित्यस्य परमं रहस्यं रसश्च साक्षाद्भगवती श्रुतिः प्रतिपादयति—'रसो वै सः' 'रसं ह्येवायं लब्ध्वानन्दी भवति' इति। उपमादयश्चालङ्कारा अग्निपुराणे परमर्षिणा निरूपणकर्मतां नीताः। एवञ्च कमनधिगतमर्थं प्रतिपादयत्साहित्यं दवीयसीं शास्त्रपदवीमासादयेत् इति।

विश्वगनिभाल्य साहसिकत्वमेवाचरितमायुष्मता। शास्त्ररसिकास्तद्रक्षणदक्षास्तदीयमपि कमनीयं कञ्चन सुकुमारमर्थं केचन वर्णयन्ति कवयः प्रसङ्गलङ्गतं, न तु तदीयमेव। यथा—'शृङ्गारसर्गरसिकद्व्यणुकोदरि त्वं द्वीपाग्निपान्नयनयोर्नयगोचरस्त्वम्' इति प्रतिपादितदिशा केचनैव ह्यणवः शृङ्गाररससर्गाय निसर्गतः पर्याप्ता न सर्वे; एवं नाभव्याः, नासुन्दराः, नारुन्तुदा, न रूक्षाः, नोपेक्षिताः पदार्थाः कविसहृदयशिरोमणिभिः काव्यकर्मणि समाद्रियन्ते, अनाघ्राताः सुमनस इव लोभनीयाः सौन्दर्यसारसम्भृताः शर्कराकरम्बितदुग्धधारातोऽप्यभ्यधिकमधुराः सर्वथाभिनवाः उच्छलत्तरङ्गभङ्गा इव पीयूषमहोदधेरन्तरमान्तमानन्दसन्दोहमुद्वेलयन्तो रसवृष्टिभिरार्द्रयन्तोऽर्था महाकविभिः सङ्ग्रथ्यन्ते। वस्तुतस्तु तैरेव निस्तुषैर्निर्माणकर्मतामश्रमश्राद्भिर्महाकवित्वपदवी नेदीयसी भवति प्राक्तनपुण्यपरिपाकसौभाग्यभाजाम्। अथवा विसंष्टुलाः शिलाशकला नर्मदाप्रवाहपतितास्तदीयावर्त्ताविच्चिताः तलगतोपलपरिपिष्टाः परमेश्वरप्रतिमारूपतया परिणताः पूज्यां स्थितिमाश्रयन्ते, एवं लौकिकाः शास्त्रान्तरप्रसिद्धिभाजोऽपि वस्तुभेदाः कविप्रतिभासंस्कृताः सन्निवेशविशेषवशमापद्यमाना निर्माणकुट्टतष्टाः सहृदयहृदयं प्रविष्टाः रसनिर्झरान् प्रवाहयन्ति। एवञ्च क्वचन प्रत्यग्रान् अन्यत्र विशेषणवैलक्षण्येन विलक्षणान् पदार्थान्निबध्नन्तो महाकवयो विधातारमप्यतिशयानाः केवलाह्लादमयीं सर्गरचनामातन्वाना लोकोत्तरचमत्कारचातुर्यचर्याञ्चितचारुचरिताः कथमिव शास्त्रान्तरसिद्धमेवार्थं सन्दर्भयन्तीति जुगुप्साकलङ्कक्लेशलेशैरपि स्पृश्येरन्। अत एव सुकवेः काव्ये स्वातन्त्र्यमुपदिशन्तः श्रीमदाचार्यानन्दवर्धना विषयमेनमुपोद्बलयन्ति—

> अपारे काव्यसंसारे कविरेकः प्रजापतिः।
> यथास्मै रोचते विश्वं तथेदं परिवर्तते॥
> शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्।
> स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥

भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ॥ इति ।

ध्वनिश्च वैयाकरणाः प्रतिपादयाम्बभूवुरिति यन्महाभाग उद्वैरयत्, तत्रेषदिवावधातव्यम् । शब्दमात्रकथनं किञ्चिदिव तत्र विवेचनं न तन्निरूपणश्रेयःसर्वस्वं तस्मै दातुं क्षमोति । शवर्णास्तावन्त एव, शब्दा अपि प्रायः प्रयुक्ता एव, न तु तैरेव येषां केषामपि चरितार्थता कर्तुं पार्यते । अपि तु श्लाघनीयो महान् विषयो विदुषामपि विस्मयावहः कश्चन यैः प्राक्तनपुण्यपरिपाकपवित्रितमतिशालिभिः प्रतिभाप्रभाप्रभावितवैभवैः प्रजनितसंक्षोभान् पूर्वपक्षान् समूलं विदलय्य विगलितदोषैर्लक्षणैः संलक्ष्य भेदप्रभेदैः सन्दर्श्य नव्यैर्भव्यैरुदाहरणैः सञ्चार्य प्रतिष्ठाप्यते, ते हि तत्रभवन्तः समादरणीयपौरुषा महापुरुषैः तादृशस्य निगूढतमविषयस्य उपज्ञावन्तः प्रथमे प्रभवाः परिगण्यन्ते । ईदृशञ्च ध्वनेर्निरूपणसौष्ठवं साहित्याचार्यैरेवानन्दवर्धनैः समपादि न वैयाकरणधुरीणैः शब्दसाधुत्वमात्रप्रसाधनकर्मठैः ।

परमार्थतस्तु वैयाकरणाः स्फोटव्यञ्जकक्षणिकवर्णेषु ध्वनिपदं प्रयुञ्जाना यां काञ्चन प्रतिष्ठां प्रतिपद्यन्ताम् मा स्म तावत्तत्र वादीत् कश्चिदपि । ध्वनिप्रस्थापनपरमाचार्यकाश्चर्यकारिणस्तु किमपि लोकोत्तरमेव ध्वनेः स्वरूपं प्रत्यपादयन् शब्दार्थमयकाव्यगोचरं, यत्राद्यापि विस्मयते मनीषिनिवहः, अभिमन्यते कविवर्गः, अनुभवति च गौरवं सहृदयलोक इति बंहीयाननयोः ध्वनिस्वरूपयोर्भेदः । तस्माद्द्वितीयो गतार्थताप्रयासः सुतरां विहतः ।

एवेकौ तु तृतीयतुरीयावनुयोगौ वशिष्येते प्रतिविधातुम् । तत्र श्रुतिपुराणयोः साहित्यमध्यपातित्वात् ध्वनिकतिपयालङ्कारवर्णनं न दोषाय । तयोः कवित्वप्रौढिप्रकर्षभद्रासनासीनत्वादेव परमेष्ठिनः कृष्णद्वैपायनस्य महर्षेश्च प्रबर्हकविव्यपदेशस्तत्र तत्र व्यवहृतः सङ्गच्छते—'कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः' 'पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता' 'एकोऽभून्नलिनात्परस्तु पुलिनाद्वल्मीकतश्चापरः । तेऽभूवन् कवयः' इत्यादिषु । किञ्चैवं सर्वेषामेव शास्त्राणां श्रुतिस्मृतिमूलानुधावित्वाच्छास्त्रत्वव्याघातः प्रसज्येत, अन्यथा तेषां प्रामाण्यमेव भज्येत । एवञ्च शास्त्रस्वरूपनिरूपणे श्रुतिस्मृतिभिन्नत्वं प्रमाणविशेषणं देयम् । अपि च तत्र तत्र ध्वन्यलङ्कारयोः प्रस्तावमात्रे सम्पन्नेऽपि तयोः पर्याप्तविवेचनं साहित्यनिबन्धेषूपलभामह इति तस्यैव तत्र प्रामाण्यमुपपादनार्हम् ।

## ग्रन्थप्रतिपाद्यम्

एवञ्च सकलसहृदयजनमनःप्रकाशमानं समस्तसत्कविकाव्योपनिषद्भूतं सल्लक्षणलक्षितं भेदप्रभेदैरुपबृंहितं ध्वनिमस्मिन् ग्रन्थे निरूपयन्तः श्रीमन्त आनन्दवर्धनाचार्याः साहित्यस्य शास्त्रत्वं स्थापयाञ्चक्रुरित्यहो धन्यधन्यस्संवृत्तोऽयं साहित्यसमाजः। किञ्चेमे आनन्दवर्धनाः ललितोचितसन्निवेशचारुणः काव्यस्य, शरीरस्येवात्मानं सहृदयश्लाघ्यं सारभूतं गुणालङ्कारव्यतिरिक्तं ध्वनिं प्रतिपादयितुं प्रवृत्ताः, प्रथमतः स्वपूर्ववर्तिनां कतिपयानां समूलं ध्वनिं निराकर्तुमुद्यतानां वादिनां मतानि सविशेषं सयुक्ति च निराचक्रुः। तत्र प्राधान्येन त्रयः पक्षा वादिनाम्–प्रथमे ध्वनिं कालसम्बन्धिनं नावगच्छन्ति, अपरे शोभाहेतुं तं नाभ्युपयन्ति, चरमे च शब्दार्थगुणालङ्कारेष्वन्तर्भावे प्रयतन्ते।

तत्र 'ध्वनिः कालसम्बन्धी भासमानत्वात् घटवत्' इति प्रथमे निराकृताः। यद्यपि शुक्तिरजतस्य, रज्जुसर्पस्य, मरुमरीचिकासलिलस्य, गन्धर्वनगरादेश्च भासमानत्वहेतुना सत्त्वमापतेदिति शङ्कोदियात्, तथापि क एवमाह सत्त्वमेषां नास्तीति, सर्वथा असतां भासमानत्वानुपपत्तेर्वन्ध्यापुत्रशशविषाणखपुष्पादिवत् इति सा निराकर्तुमुचिता।

'ध्वनिः काव्यशोभाहेतुः कालिदासादिनिष्ठमहाकवित्वव्यपदेशबीजत्वात्' व्यतिरेके चैत्रमैत्रादयो निदर्शनानि इत्यपरे समुत्तरिताः।

'ध्वनिः गुणालङ्काररूपो न भवति, अङ्गित्वादात्मवत्' इति चरमेऽपि जिज्ञासाप्रतिबन्धपर्यङ्कमधिशायिताः। विस्तरस्त्वदसीयोऽचिरादेव प्रकाशमेष्यन्त्यां मद्गुरुवर्यैः पण्डितकुलावतंसैः श्री महादेवशास्त्रिपादैर्विरचितया व्याख्ययोपेतस्य रसगङ्गाधरस्य भूमिकायामवलोकनीयः।

एवं वादिनां पक्षान्निरस्य ध्वनेस्स्वरूपञ्च सप्रभेदं सुनिरूप्य ग्रन्थस्यान्ते श्रीमन्तो ध्वनितत्त्वविवेचनपरमाचार्यवर्या महाभारते महता सन्दर्भेण शान्तो रसः प्रधानमिति युक्तिप्रयुक्तिकौशलैरुपापीपदन्। तदसहमानाः केचन समुद्घोषयन्ति—शान्तस्य तावद्रसत्वमेवानुपपन्नम्। अत एव दशरूपककारैः शान्तस्य रसत्वं नाङ्गीकृतम्, सहृदयशिरोमणिभिः काव्यप्रकाशकारैरपि 'शान्तोऽपि नवमो रसः' इत्यभिदधानैस्तस्य तत्त्वमौदासीन्यमुद्रया प्रकट्यकारि। श्रीभोजराजेन शृङ्गारप्रकाशे शृङ्गारस्यैव रसत्वमूरीचक्रे। उज्ज्वलनीलमणौ भक्तेरेव तथात्वमभ्युपागम्यत।

किञ्च सम्भवत्यपि तस्य रसत्वे महाभारतस्य तन्मुख्यत्वं व्युत्पत्तिविरुद्धम्, उपपत्त्यनन्वितम्, प्रसिद्धिप्रतिहतञ्च। तथाहि—'सङ्ग्रामे प्रयोजनयोद्धृभ्यः' इति पाणिनीयानुशासनेन भरताः (तद्वंशप्रभवाः

क्षत्रियाः ) योद्धारोऽस्य सङ्ग्रामस्येति भारतः सङ्ग्राम इति हि भारतपदस्य व्युत्पत्तिः युद्धं तदर्थं प्रकटयन्ती वीररसप्रधानत्वे पर्यवस्यतीति स्फुटो व्युत्पत्तिविरोधः। अपि चाभ्यासो भूयसा वर्णनं तात्पर्यनिर्णये लिङ्गमिति सबाहूत्क्षेपं वाक्यकोविदैर्विपश्चिद्भिर्निश्चीयते। स हि यत्र यस्योपलभ्यते तत्र तदीयं तात्पर्यमवद्योतयति। महाभारते च युद्धस्यैव भूयसा वर्णनमुपलभ्यमानं तत्तात्पर्यमवद्योतयत् महाग्रन्थस्य वीररसव्यञ्जकत्वं प्राधान्येन ग्राहयतीति के संशेरताम् उपपत्त्यनन्वये।

किञ्च व्यवहारः शब्दवृत्तिग्राहकशिरोमणिरभिहितस्तदीयतत्त्वपरामर्शकैः। 'अत्र ग्रामे महाभारतं भवति साम्प्रतम्, एतत्कुटुम्बिनो महाभारतं कुर्वन्ति' इत्युच्यमानः पामरापामरसाधारणो लोको महाभारतशब्देन युद्धं प्रत्येतीति प्रसिद्धिप्रतिघातोऽकामेनापि स्वीकार्यः। अत एव सर्व एव महाकविसम्प्रदायस्तन्मूलककथानुस्यूतं काव्यं नाटकञ्च व्यभान्त्सीत्—ऊरुभङ्गं, वेणीसंहारं, किरातार्जुनीयम्, शिशुपालवधमित्यादि वीररसप्रधानं, नाद्यावधि किञ्चिदप्यस्माभिराकर्णितं शान्तरसप्रवणम्।

यच्च भारते स्वर्गारोहवर्णनं पाण्डवानामन्येषाञ्च, तदितिहासवर्णनमात्रं, न तेन शान्तरसमुख्यता कलयितव्या। अन्यथा रामायणेऽपि पर्यवसाने भगवतः श्रीरामभद्रस्य महाप्रस्थानवर्णनेन सीताविषयककरुणप्रवणता 'काव्यस्यात्मा स एवार्थः' इति स्वयमेव वर्ण्यमाना नोपपद्येत। एवं श्रीमद्भागवतस्य भक्तिरसप्रवाहप्रवाहकता साक्षात्परमेश्वरस्य श्रीकृष्णचन्द्रस्य वैकुण्ठगमननिबन्धमात्रेण सर्वैरेवाभ्युपेता निलीयेत। एवञ्च महाभारतस्य वीररसप्राधान्यमेवाङ्गीकर्तव्यम्। अत एव महाभारताद्रिगूढाभिसन्धिनिधानभूताया गीतायाः परमैदम्पर्यविषयः कर्मयोगोऽपि साधु सङ्गच्छत इति। विषयस्यास्य निर्णये निर्मत्सरा विबुधर्षभा एव प्रभव इत्यन्यत्र लेखनीं व्यापारयामि।

## आनन्दवर्धनाचार्याः तत्कालश्च

एवमिमं सर्वातिशायिनं साहित्यस्य शिरोमणिभूतं ग्रन्थमत्युत्तमया प्रणाल्या, अनितरसाधारणेन विषयोपपादनचातुर्येण, अतिगभीरया शैल्या, अतिश्लाघीयस्या च शय्यया विरचय्य श्रीमन्त आनन्दवर्धनाचार्याः याथातथ्येन काव्यस्य तत्त्वं प्रत्यग्रेण ध्वनिमार्गेण प्रदर्शयन्तः पण्डितकुलस्य मनांस्यानन्देन वर्धयन्तोऽन्वर्थसंज्ञामलभन्त। अत एवोक्तं श्रीमता राजशेखरेण—

ध्वनिनातिगभीरेण काव्यतत्त्वनिवेदिना।

आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥ इति ।

त इमे महाभागाः कस्मिन् काले कुत्र भुवमिमां जन्मनाऽलङ्कृत्य ग्रन्थमिमं व्यतेनुरिति याथातथ्येन निर्णयो यद्यपि न सुकरः, तथापीतिहासग्रन्थालोडनेनैवं निर्णेतुं शक्यते–काश्मीरेषु क्रिस्तोः पश्चात् (855-884. A. D.) समये राज्यं पालयतोऽवन्तिवर्मणो महाराजस्य सभायां राज्ञा तेन सम्मानिता आसन् इति । तदिदमुक्तं केनचिदभियुक्तेन—

मुक्तामणिशिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ॥ इति ।

इमे हि ध्वन्यालोके नाम्ना उद्धृतश्लोकद्वारा च कालिदासं, पुण्डरीकं, बाणं, भट्टोद्भटं, भामहं, मनोरथं, सर्वसेनं, सातवाहनम् , अमरुकं, धर्मकीर्तिं, मधुमथनविजयं, रत्नावलीं, तापसवत्सराजं रामाभ्युदयञ्च स्पृशन्ति । तत्र तत्त्वबिन्दुकर्ता बौद्धमतावलम्बी धर्मकीर्तिः क्रिस्तोः पश्चात् (635-650 A. D.) सप्तमशतके आसीदिति सर्वैरप्यैतिहासिकैर्निर्विवादमभ्युपगम्यते । एतदुपष्टम्भिका युक्तयः पुरावृत्तविमर्शकधुरीणैः श्रीसतीशचन्द्रविद्याभूषणमहोदयैः स्वकृते 'The History of Indian Logic' इति सञ्ज्ञिते [1]ग्रन्थे सुनिरूपिताः । इतिहासतत्त्वान्वेषणतत्पराः श्रीमन्तो M. कृष्णमाचार्या अपि स्वकृते [2]संस्कृतेतिहासग्रन्थे क्रिस्तोः पश्चात् षष्ठशतकस्यान्ते सप्तमशतकस्यादौ च धर्मकीर्तिरवर्तत इत्यभिप्रयन्ति । एवं वामनः स्वकृते काव्यालङ्कारसूत्रे शिशुपालवधोत्तररामचरितकादम्बरीतः उदाहरणानि निर्दिशन् क्रिस्तोः पश्चात् अष्टमशतकस्यान्ते नवमशतकस्यादौ वा स्वस्य स्थितिमवगमयति । क्रिस्तोः पश्चात् नवमशतकावसानकालिकः श्रीमान् भट्टनायकः स्वविरचिते हृदयदर्पणे ध्वन्यालोकं खण्डयतीति लोचनादितस्सर्वं विदितमेव । अतश्च नवमशतकमध्यवर्तित्वमेवाऽऽनन्दवर्धनाचार्याणामवगम्यते । किञ्चानन्दवर्धनाचार्यैर्विरचितदेवीशतकस्य व्याख्या काचन चन्द्रादित्यसूनुना कैयटेन विरचिता समुपलभ्यते । तत्र च तेन स्वकीयो ग्रन्थः क्रिस्तोः परं (978 A. D.) समये समाप्तिमगादिति स्पष्टमुल्लिखितम् । एतेनाप्यष्टमदशमशतकयोर्मध्ये तेषां स्थितिरवगम्यते ।

---

1. See page 303. The History of Indian Logic.

2. See page 734 Classical Sanskrit Literature by M. Krishnamachariar.

## कारिकावृत्त्योरैकत्वानेकत्वविचारः

एते ध्वन्यालोकेन साकं 'देवीशतकम्' 'विनिश्चयटीकाविवृतिः' 'अर्जुनचरितमहाकाव्यम्' 'विषमबाणलीला' 'तत्त्वालोकः' इति च ग्रन्थान् प्राणैषुरित्यवगम्यते । तत्र ध्वन्यालोक एव 'काव्यालोकः' 'सहृदयालोकः' इति नामभ्यां व्यवह्रियते । अस्मिंश्च ग्रन्थे कारिकारूपेण तद्वृत्तिरूपेण च द्वौ भागावुपलभ्येते । तत्र वृत्तिकार एव कारिकाकारोऽपि, उत तस्मादयमन्य इति बहोः कालादनिश्चित एव पण्डितसमाजे वर्तते । वस्तुतः संशयास्पदमेवायं विषयः, झटिति निर्णेतुमशक्यश्च । बलवत्तरप्रमाणानुपलम्भाद्बहव ऐक्यमेव मन्यन्ते । अहञ्चैतद्विषये सन्दिहानः सन्देहमिमं दूरीकर्तुं विदितवेदितव्यान् पण्डितकुलतिलकान् पूज्यपादान् श्रीगुरुवरान् महामहोपाध्याय श्रीप्रमथनाथतर्कभूषणमहोदयान् अप्राक्षम् । तेऽपि सुविचार्य 'उभयोरपि भेदमेवाकलयामि' इत्यूचुः । युक्तमेवेदं मे प्रतिभाति । लोचने श्रीमन्तोऽभिनवगुप्तपादाः कारिकाकारं वृत्तिकारञ्च भेदेन व्यपदिशन्ति । प्रथमोद्योते एकोनविंशकारिकाव्याख्यानावसरे '[2]द्वितीयोद्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणञ्च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान् । तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्योते मूलविभागमवोचत्' इति, तथा षड्विंशकारिकायां लोचने 'इत्यत्र श्लोके वृत्तिकृत्' इति, 'वृत्तिकारेण त्वन्वयपूर्वको व्यतिरेक इति शैलीमनुसर्तुमन्वयः पूर्वमुपात्तः' इति, एवं द्वितीयोद्योते प्रथमकारिकाव्याख्यानावसरे—'तत्र प्रथमोद्योते वृत्तिकारेण प्रकाशितः......भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि सम्मतम्' इति, एवमन्यत्र बहुषु स्थलेषु 'कारिकाकारस्तु' 'वृत्तिकारेण तु' इत्येवं व्यवहरन्त उभयोर्भेदमेवाभिप्रयन्ति लोचनकारा इत्यनुमीयते । यद्युभयोर्ग्रन्थसन्दर्भयोः एक एव कर्ता अभविष्यत् तर्हि लोचनकृदेवं भेदेन न व्याहरिष्यत् । किञ्च वृत्तिकारास्तत्र तत्र कारिकाव्याख्यानावसरे स्वव्याख्याया विषयान् सङ्ग्रहेण पद्यैर्निर्दिशन्ति । तेषां पद्यानां मूलकारिकाणाञ्च भाषयापि भेदोऽवगम्यते । इतोऽपि बलवतः प्रमाणस्यास्मिन्विषयेऽनुपलम्भादेतावदेवात्रोपलभ्यते ।

---

1. अयमेव ग्रन्थः तृतीयोद्योतान्ते 'यत्त्वनिर्देश्यत्वं सर्वलक्षणविषयं बौद्धानां प्रसिद्धं तन्मतपरीक्षायां ग्रन्थान्तरे निरूपयिष्यामः' इत्यत्र 'ग्रन्थान्तर' शब्देनोल्लिख्यते वृत्तिकारेण । 2. See Page 163.

3. See page 259.

## ध्वन्यालोकस्य व्याख्याः अभिनवगुप्तश्च

ध्वन्यालोकस्यास्य द्वे व्याख्ये—चन्द्रिका, लोचनञ्चेति। तत्राद्याऽनुपलम्भदोषदूषिता। लोचनञ्चास्माकं सौभाग्यवशादुपलभ्यते। अस्य च निर्मातारः श्रीमदाचार्याभिनवगुप्तपादाः। चन्द्रिकामवलोक्यैवेमे लोचनमरचयन्निति प्रतीयते। तत्र तत्र लोचने 'इत्यलमस्मत्पूर्ववंशीयैः सह विवादेन' इति निर्दिशन्तः 'पूर्ववंशीयै'रिति पदेन चन्द्रिकाकारमेवाभिप्रयन्तीत्यनुमीयते। एतेषां पाण्डित्यमधिकृत्य विवेचने नास्माकमधिकारः। इमे च काश्मीरानेव जन्मनालञ्चक्रुरित्यवगम्यते। एतेषां पितरौ नरसिंहगुप्तविमलाख्यौ। तन्त्रालोकव्याख्यात्रा स्पष्टमिदमुल्लिख्यते—"[1]अस्य हि ग्रन्थतः नरसिंहगुप्तविमलाख्यौ पितरौ इति गुरवः' इति। तन्त्रालोकस्य ३७ अध्याये स्वयमेवेमे स्वपितुरन्वयं निर्दिशन्ति—

'तस्मिन् कुबेरपुरचारुशितांशुमौलिसांमुख्यदर्शनविरूढपवित्रभागे।
वैतस्तरोधसि निवासममुष्य चक्रे राजा द्विजस्य परिकल्पितभूमिसम्पत्॥
तस्यान्वये महति कोऽपि वराहगुप्तनामा बभूव भगवान् स्वयमन्तकाले।
गीर्वाणसिन्धुलहरीकलिताग्रमूर्धा यस्याकरोत्परमनुग्रहमाग्रहेण॥
तस्यात्मजः चुखुलकेति जने प्रसिद्धश्चन्द्रावदातधिषणो नरसिंहगुप्तः।
यं सर्वशास्त्ररसमज्जनशुभ्रचित्तं माहेश्वरी परमलङ्कुरुते स्म भक्तिः' ॥इति।

नरसिंहगुप्तः स्वीयं पुत्रमभिनवगुप्तं बाल्यावस्थायामेवाध्ययनाय कस्याञ्चन वलभौ प्रवेशयामास। तत्र पठन्नयं अतिसौक्ष्म्यात् बुद्धेः मुखरत्वाच्च सर्वानप्यध्येतॄनतिशयानः निखिलानामपि बालानां भयप्रदश्चासीत्। तदा तत्रत्येन गुरुणाऽयं 'बालवलभीभुजङ्गः' इति नाम्ना व्यपदिष्ट इत्यपि काव्यप्रकाशीयबालबोधिनीटीकातोऽवगम्यते। तत्र च कञ्चित्कालमधीत्यानन्तरं स्वपितुस्सकाशादेव [2]व्याकरणमध्यगीष्ट। 'भट्टेन्दुराजचरणाब्जकृताधिवासहृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम्' इति लोचनस्थपद्येन भट्टेन्दुराजसकाशात् साहित्यमधीतमिति स्पष्टं प्रतीयते। एवं [3]ब्रह्मविद्यां (वेदान्तं) भूतिराजात्, भूतिराजतनयाच्च [4]शैवमतं, वामनाथतो [5]द्वैताद्वैततन्त्रम्, श्रीमदुत्पलाचार्यपुत्रात् लक्ष्मणगुप्तनाथाच्च

1. See T. A. Comm. 1, 14,

२. 'पित्रा स शब्दगहने कृतसन्निवेशः इति तन्त्रालोकटीकाकारः।

३. 'अथोच्यते ब्रह्मविद्या सद्यः प्रत्ययदायिनी।
शिवः श्रीभूतिराजो यामस्मभ्यं प्रत्यपादयत्'।

४. 'श्रीनाथसन्ततिमहाम्बरधर्मकान्तिः श्रीभूतिराजतनयः स्वपितृप्रसादः'

५. आमर्दसन्ततिमहार्णवकर्णधारः सद्देशिकैरकवरात्मजवामनाथः'।

त्रिकदर्शनम्[1], भट्टतौताच्च नाट्य-वेदतत्त्वार्थञ्चाध्यगीष्ट[2]। भट्टतौत-सकाशादध्ययनावसरे काचन जनश्रुतिरेवं वर्तते—भट्टतौतेन बहवो विद्यार्थिनोऽध्यापिताः। तेषु अभिनवगुप्तपादस्य सब्रह्मचारी भवदेव-नामा कश्चन विद्यार्थी अवर्तत। सोऽप्यभिनवगुप्तपाद इवातिबुद्धिमानासीत्। यथा स्वबाल्यावस्थायामभिनवगुप्तः सर्वानपि विद्यार्थिनो भीषयन् 'बालवलभीभुजङ्ग' इत्यप नामाभजत, तथाऽयमपि भवदेवः तथा कुर्वन् तदेव नाम स्वयमप्यभजत। अत एव भवदेवः स्वकृते तौतातितमततिलके—

'मामध्ययनदशायामुवाच वाचं दृशि स्वप्ने।
बालवलभीभुजङ्गापरनामा त्वमसि भवदेव॥

इत्यात्मनो बालवलभीभुजङ्गापरनामभाक्त्वं कथयति। अस्य च निर्णयोऽस्मत्सम्पादनकर्मीभूते तौतातितमततिलकस्य द्वितीये भागे करिष्यते।

एवमिमे स्वीयं सर्वमपि जीवनं शास्त्राध्ययन एव व्ययीकृत्य सर्वतोमुखं पाण्डित्यं सम्पाद्य जगति लब्धप्रतिष्ठाः, सर्वमपि जगत् हिमेन्दुकुन्दकुमुदप्रस्पर्धिसत्कीर्त्या धवलयन्तः संख्यातीतान् ग्रन्थान् प्राणैषुः। एभिर्विरचिताश्च ग्रन्थाः यथोपलम्भं निर्दिश्यन्ते—बोधपञ्चदशिका, मालिनीविजयवार्तिकम्, त्रिंशिकावृत्तिः, तन्त्रालोकः, तन्त्रसारः, ध्वन्यालोकलोचनम्, अभिनवभारती, भगवद्गीतासङ्ग्रहः, परमार्थसारः, ईश्वरप्रत्यभिज्ञाविमर्शिनी, ईश्वरप्रत्यभिज्ञावृत्तिविमर्शिनी, क्रमस्तोत्रम्, देहस्थदेवताचक्रस्तोत्रम् भैरवस्तोत्रम्, परमार्थद्वादशिका, परमार्थचर्चा, अनुभवनिवेदनम्, तन्त्रोच्चय, घटकर्परकुलकविवृतिः, क्रमकेलिः, शिवदृष्ट्यालोचनम्, पूर्वपञ्चिका, पदार्थप्रवेशनिर्णयटीका, प्रकीर्णकविवरणम्, प्रकरणविवरणम्, काव्यकौतुकविवरणम्, कथामुखतिलकम्, लघ्वी प्रक्रिया, भेदवादविवरणम्, देवीस्तोत्रविवरणम्, तत्त्वप्रकाशिका, शिवशक्त्यविनाभावस्तोत्रम्, बिम्बप्रतिबिम्बवादः, परमार्थसङ्ग्रहः, अनुत्तरशतकम्, प्रकरणस्तोत्रम्, बृहतीविमर्शिनी, नाट्यालोचनम्, अनुत्तरतत्त्वविमर्शिनीवृत्तिः, इत्येव-

---

१. 'देवी त्रिंशतिकेऽपि अस्य श्रीसोमानन्दपादेभ्यः प्रभृति त्रिकदर्शनवदेव गुरवः। त्र्यम्बकप्रसरसागरवीचिसोमानन्दात्मजोत्पलजलक्ष्मणगुप्तनाथः'।

२. सद्विप्रतोतवदनोदितनाट्यवेदतत्त्वार्थमर्थिजनवाञ्छितसिद्धिहेतोः॥

इति प्रमाणान्युपष्टम्भकानि।

मन्यांश्च ग्रन्थान् व्यभान्त्सुः। एते च ग्रन्थाः स्पष्टममीषां कियान् पाण्डित्यप्रकर्ष इत्यवद्योतयन्त्येव।

एतेषु लोचनमधिकृत्य नास्माभिरधिकं वक्तव्यम्। लोचनमामूलचूडं यस्सम्यगधिगच्छति स एवालङ्कारिकगोष्ठीषु प्रथमगणनामर्हति। आनन्दवर्धनाचार्यैरुपदिष्टे प्रत्यग्रे गम्भीरे सर्वाङ्गीणसुन्दरे च पथि सञ्चरतां कवितल्लजानाम् आलङ्कारिकाणाञ्च लोचनमेकमेव सुमहत्साह्यमाचरति। विना लोचनेन केवमालोकप्रकाशिते पथि सञ्चरन्नन्ध एव परिगण्यते यथा लोकः, तथाऽनेनापि लोचनेन विना ध्वनिमार्ग विहरन्तो महाकवयो भृशं क्लिश्येयुः। एतादृशं क्लेशं दूरीकर्तुमेवाभिनवगुप्तपादैर्लोचनं व्यरचि। अत्र चातिसरलया वचोभङ्ग्या, सर्वातिशायिन्या विषयोपपादनसरण्याऽतिवेलं विषयास्सूपपादिताः, खण्डितानि च वादिदन्तिनां विविधानि मतानि, स्थिरीकृतश्चानन्दवर्धनाचार्यप्रवर्तितो ध्वनिमार्गः।

## लोचनकाराणां कालः

एतेषां जन्मतिथिः क्रिस्तोः पश्चात् एकादशशतकमिति सर्वेऽपीतिहासतत्वान्वेषिणो निरणैषुः। तत्रापि विशेषेण निर्णयः बृहतीविमर्शिन्या एतैर्विरचिताया अन्ते निर्दिष्टेन पद्येन भवति। तथाहि—

> इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे
> तिथिशशिजलधिस्थे मार्गशीर्षावसाने।
> जगति विहितबोधामीश्वरप्रत्यभिज्ञां
> व्यवृणुत परिपूर्णां प्रेरितः शम्भुपादैः॥

इति पद्यं तद्ग्रन्थस्यान्त उपलभ्यते। यथाऽत्र वाराणस्यां बार्हस्पत्यमानेन वर्षगणना प्रचलति, तथा काश्मीरेषु क्वचन सप्तर्षमानेन वर्षगणना। इदानीञ्चात्र १९९७ तमो विजयनामा वैक्रमो वत्सरः, तथा तत्र ५०१७ तमो वत्सरः परिगण्यते। कल्यब्दप्रारम्भात् पञ्चविंशतिवर्षानन्तरं सप्तर्षमानेन वत्सरारम्भः। अधुना ५०४२ तमः कल्यब्दः, तत्र २५ वर्षेषु न्यूनीकृतेषु सत्सु ५०१७ तमो वर्षस्सप्तर्षमानेन सिध्यति। यथा हि सर्वैरप्यस्माभिः क्रैस्तवाब्दे १९४० तमे सत्यपि, चत्वारिंशत्तमो वर्ष इति व्यवह्रियते, तथा काश्मीरदेशस्था अपि ४०९० तमं वर्षं नवतितमो वर्ष इति व्यवहरन्ति। तथा च सप्तर्षमानेन नवतितमे ( ४०९० ) वर्षे, तिथिशशिजलधौ ४११५ तमे कल्यब्दे, तदनुसारेण ( १०१३ A. D. ) क्रैस्तवाब्दे मार्गशीर्षमासस्यावसाने बृहतीविमर्शिनी लोचनकारैर्निर्मितेत्यायाति।

एवमेव स्वकृतक्रमस्तोत्रभैरवस्तोत्रयोरन्ते—
'षट्षष्ठिनामके वर्षे नवम्यामसितेऽहनि ।
मयाऽभिनवगुप्तेन मार्गशीर्षे स्तुतः शिवः' ॥
वसुरसपौषे कृष्णदशम्यामभिनवगुप्तः स्तवमिममकरोत् ।
इति पद्यद्वयमुपलभ्यते । एतेनापि तेषां कालनिर्णयस्सुकरः । विशेषश्चाभिनवगुप्ताचार्यविषये, श्रीमद्भिः K. C. पाण्डेयमहोदयैः सुपरिश्रम्य ऐतिहासिकदृशा अभिनगुप्तानामितिहासपाण्डित्यतद्विरचितग्रन्थविवेचनादिकं सुविचार्य विरचितात् [2]Abhinavagupta An Historical & Philosophical Study इति शीर्षकादनल्पाद्ग्रन्थादवगन्तव्यः ।

लोचनस्याऽस्यातिप्रौढतया दुरवगाहत्वादध्येतृभिरत्यन्तं क्लेशोऽनुभूयत इत्यवगत्य महता परिश्रमेण लोचनग्रन्थग्रन्थिविभेदिन्यौ तन्मर्मप्रकाशिके च बालप्रियादिव्याञ्जननाम्न्यौ टिप्पण्यौ व्यतेनुः श्रीमन्तस्सहृदयतिलका रामषारकाः, कवितार्किकचक्रवर्तिनः पं० महादेवशास्त्रिपादाश्च । उभे अपि टिप्पणी कियदुपकुर्वातेऽध्येतृवर्गेभ्य इति त एव जानीयुर्ग्रन्थस्यास्याध्ययनेन । मयापि तत्र तत्र विषयविवेचनमकारि । ग्रन्थस्यान्ते च कारिकार्धानां, ध्वन्यालोकलोचनयोरुद्धृतानां पद्यानाञ्च यथोपलम्भं तत्तत्स्थानप्रकाशिकाञ्च सूचीं न्यवेशयम । एवं पूर्वसंस्करणान्यपेक्ष्य पाठतो विषयतश्च सुन्दरमेवेदं संस्करणं समपादि मया, तथापि मनुष्यमात्रसुलभा दोषा भवेयुरेव । अतस्सर्वानपि विद्वन्मणीन् सविनयं साञ्जलिबन्धञ्चाभ्यर्थये यत् श्रीमन्तो मदीयान् दोषान् विस्मृत्य मामनुगृह्णन्त्विति ।

## प्रणतिसमर्पणम्

एतत्संशोधने तत्र तत्र समुत्पन्नान् संशयसन्देहान् समुत्सार्य नितान्तमुपकृतवद्भ्यः मय्यहैतुकीमनुपमाञ्च कृपादृष्टिं निक्षिप्य काशीहिन्दूविश्वविद्यालये महामानसैः पण्डित श्रीमदनमोहनमालवीयमहोदयैः प्रतिष्ठापिते मां मीमांसाध्यापकस्थाने नियुक्तवद्भ्यः, तलस्पर्शिपाण्डित्यभरसम्पादितयशःप्रवाहपरिप्लावितदिगन्तेभ्यः, पवित्रमयजीवनेभ्यो महामहोपाध्यायपदालङ्कृतेभ्यः काशीहिन्दुविश्वविद्यालये संस्कृतविभागाध्यक्षेभ्यः पूज्य श्रीप्रमथनाथतर्कभूषणमहोदयेभ्यः, बाल्यादेवारभ्य

1. पद्यमिदमेवमेव सर्वासु मातृकासूपलभ्यते ।
2. Chowkhamba Sanskrit Studies Vol. I.

मां स्वान्त एव निवेश्यात्मजादपि स्वकीयात् शतगुणं सहस्रगुणं वाधिकं
प्रेम मयि निदिध्याशनवसनादिप्रदानपुरस्सरं पूर्वमुत्तरञ्च तन्त्रं ये सम-
ध्यापयन् आचारञ्च शिष्टपरम्पराप्राप्तमशिक्षयन्, ये च समुपादिशन्
लोकयात्रोपयोगिनीं व्यवहारपद्धतिम् , येषाञ्चान्ते वसन् विशेषतः पुस्त-
कसंशोधनादिकार्यं समभ्यगोषि, तेभ्यो जगति विश्रुतसत्कीर्तिभ्यः
प्रातःस्मरणीयेभ्यः वेदविशारदपण्डितसार्वभौममीमांसाकेसर्याद्यनेको-
पाधिविभूषितेभ्यः पूज्यपादाचार्यचरणेभ्यः पं० श्रीचिन्नस्वामिशास्त्रिवर्येभ्यः,
स्वीयममूल्यमपि समयमविगणय्य यैरिदं सदयं, सहार्दञ्च साहित्यं
न्यायशास्त्रञ्चाध्यापितोऽहं, येषाञ्चानुपमया कृपानिर्झरिण्या ध्वन्या-
लोकस्यास्य संशोधनं संवृत्तम् , तेभ्यः श्रीगुरुचरणेभ्यः साहित्यव्याक-
रणन्यायशास्त्रेष्वकुण्ठितमतिशक्तिभ्योऽतिवेलप्रसरत्प्रतिभापरीवाहेभ्यः
भारतश्रीप्रधानसम्पादकेभ्यः कवितार्किकचक्रवर्तिभ्यः श्रीमहादेवशास्त्रिपा-
देभ्यश्चान्यत्किमपि प्रत्युपकर्तुमनीशानः केवलमहं मदीयं हृदयाब्जकोशं
तेषां चरणारविन्देषु सप्रश्रयं सश्रद्धञ्च समुपहरामि ।

करालेऽप्यस्मिन् कलिकाले उपद्रवशतैस्सर्वतस्समाकीर्णेऽपि जग-
ति स्वकुलपरम्परागतां संस्कृतसाहित्यदार्शनिकग्रन्थसमुद्धरणश्रद्धां
मात्रयाप्यनुत्सृज्यैतादृशानामत्युत्तमानां ग्रन्थानां लोकोपकारधिषणयैव
केवलं मुद्रणे प्रकाशने च बद्धपरिकरं, चौखम्बापुस्तकावल्यधिपं श्रेष्ठि-
कुलभूषणं श्रीजयकृष्णदासहरिदासगुप्तमहोदयं सानुजं सपुत्रपौत्रञ्चै-
तादृशात्युत्तमकार्यकरणे भूयो भूयः प्रोत्साहयन्नापूरयंश्चाशीः पुञ्जै-
र्विरमामि ।

वाराणसी हनुमद्घट्टः
आषाढकृष्ण ११
वै० सं. १९९७

इति विद्वज्जनानुचरो
विधेयः
पट्टाभिरामशास्त्री

श्रीरस्तु

# विज्ञापना

सलोचनोऽयं ध्वन्यालोकः समेषामपि साहित्यग्रन्थानामुपनिषद्भूत इति नावि- दितं विदुषाम्। तत्र ध्वन्यालोककृतो राजानक श्रीमदानन्दवर्धनाचार्यस्य लोचनकर्तॄणां महामाहेश्वराचार्य श्रीमदभिनवगुप्तपादानाञ्च जीवनचरित्रादिकं बहुभिर्निरूपितचर- मिति न वितन्यते। लोचनव्याख्यायाः बालप्रियाया रचयितॄन् अस्मत्तातपादानधि- कृत्यात्र किञ्चिदुच्यते।

रामाभिधानाः षारकजातीया इमे (इयं जातिः केरलमात्रप्रसिद्धा) १८६७ तमे क्रिस्ताब्दे गोश्रीराष्ट्रान्तर्गतसङ्गमग्रामे ब्राह्मणोत्तमाज्जनिमलभन्त। बाल्ये स्वगृहस्था एव अधिगतप्राथमिकसंस्कृतपाठाः एकादशे वयसि श्रीगोश्रीश्वराणामावासभूतां प्रथितां पूर्णत्रयीपुरीमिमामाजग्मुः। तत्र तत्काले गो श्रीराजकुमाराणां गीर्वाणभाषाध्यापकात् स्वमातुलादेः काव्यं ज्योतिश्शास्त्रं, सिद्धान्तकौमुद्यादिकं पूर्वतनश्रीगोश्रीमहाराजात् दिनकरीपर्यन्तं न्यायशास्त्रञ्चाध्यगीषत। ततः श्रीमहाराजास्थानपण्डितस्य श्रीमध्वा- चार्यस्य सविधे इदानीन्तनश्रीमद्युवराजेन सह गादाधर्यां पञ्चलक्षण्यादिकमधीत- वन्तः। त्रयोविंशे वयसि पुनः श्रीशेषाचार्यपाठशालायां महाराजेनाध्यापकपदे नियु- क्तास्तत्र गो श्रीराजकुमारान् तद्राजकुमारीं चाध्यापयामासुः।

अस्मिन् काले पण्डितसार्वभौमेन गत श्रीराजर्षिणा पण्डितमणिपरीक्षिदपराख्य श्रीरामवर्मराजकुमारादीनां गादाधर्याद्युपरि ग्रन्थाध्यापनाय शतकोटिकर्तृ श्रीरामशा- स्त्रिणां प्रशिष्यो नैयायिकाग्रेसरः श्रीशठकोपाचार्यस्समानीयात्र नियुक्तः। ततश्चेमे राजकुमारादिभिस्समं तत्सविधे च कांश्चिद्वर्षान् पठनचिन्तनादिकं कुर्वन्तः कांश्चित् दिनकर्यादिकं पाठयन्तश्च न्यायशास्त्रे समधिकां व्युत्पत्तिमभ्यगच्छन्। तदानीं श्रीप- रिक्षिद्राजकुमाराणां निरतिशयं सौहार्दं सम्पादयद्भिरेतैस्तैः सह शाकुन्तलादि साहित्य- ग्रन्थानामर्थचर्चां शाकुन्तलव्याख्यां च कुर्वद्भिः स्वयञ्च कुवलयानन्दकाव्यप्रकाशाद्य- लङ्कारग्रन्थेषु कृतपरिश्रमैः अलङ्कारशास्त्रेऽपि नितान्तं नैपुण्यं समासादि। कांश्चित् तद्ग्रन्थानध्यापयद्भिरमीभिः कुवलयानन्दादिग्रन्थानां शुद्धां पाठरीतिं सम्पाद्य व्या- ख्याकरणादिषु प्रयतमानैश्चाभावि। पुनः षट्त्रिंशे वयसि एरणाकुलदेशस्थायामाङ्गलेय- महाकलाशालायां प्रधानसंस्कृताध्यापकपदं प्राप्ताः क्रमेण तत्रापि शिष्यसम्पदा यशसा चालङ्कृता अवर्तन्त।

तस्मिन्नवसरे साहित्यशिरोमण्यादिकक्ष्यायां पाठ्यतया नियमितं ध्वन्यालोकं कांश्चित् पाठयितुमुपक्रममाणा एते बोम्बानगरमुद्रितमशुद्धिबहुलं तत् पुस्तकमवलोक्य ध्वन्यालोकं लोचनं च शुद्धीकर्तुमुद्युक्तवन्तः। महता प्रयासेन केरलेषु ग्रन्थालयेभ्य- स्तालीपत्रलिखितान् पञ्चषांस्तद्ग्रन्थान् लोचनस्य प्रथमोद्योतपर्यन्तं कौमुदीनामकमा- दितः किञ्चिद्भागस्याञ्जननामकं च व्याख्यानं समपीपदन्। लब्धेषु सर्वेष्वपि ग्रन्थेषु प्रायः एकैव पाठरीतिरासीत्।

सलोचनस्य ध्वन्यालोकस्य पठनपाठनादिना प्रचुरः प्रचारः केरलेषु पुरैवासीदित्यनेनाभ्यूहितुं शक्यमेव । ततश्शुद्धां पाठपद्धतिमुपलभ्य लोचनस्य विद्यार्थ्युपयोगिनीं काञ्चन व्याख्यां विरचयितुं मतिमकुर्वत । कौमुद्यादिकं यावल्लब्धं तावत्ततः समीचीनमूरीकृत्य पुनः स्वयं चालोच्य दुरवगाहासु कासुचित् लोचनपङ्क्तिषु श्रीपरीक्षिद्राजकुमारादिभिस्सहार्थं पर्यालोच्य च विरचितयाऽनया बालप्रियया गहनं लोचनं बालसुलभं व्यधुः ।

एतेषां पाण्डित्यमनुपश्यता पूर्वतनश्रीगोश्रीराजर्षिणा सहृदयतिलकाभिधं बिरुदमेभ्यो ददे ।

१९२२ तमे क्रिस्ताब्दे मद्रपुरागतेन तदानीन्तनाङ्गलेयचक्रवर्तितनूजेन युवराजेन एड्वेर्डभिधानेनाष्टमेन एतेषां गैर्वाणीपण्डिताग्र्यत्वमाकलय्य रत्नखचितं सुवर्णकङ्कणं साल्वाभिधानक्षौमतल्लजाभ्यां सह दत्वा सम्मानिताः ।

किञ्चात्रत्यसंस्कृतकलाशालाविद्वत्समित्या पण्डितराजाख्यं बिरुदमेभ्योऽदीयत ।

यथाकालम् ( पञ्चपञ्चाशद्वयःपूर्तौ ) आङ्गलेयकलाशालायामध्यापकपदान्निवृत्ताश्चैते पूर्णत्रयीपुर्यामस्यामेव वासं स्थिरमकार्षुः । यतो यद्गृहजातैः पुरुषैर्हि गोश्रीवंशजातानां संस्कृताक्षरपठनारम्भरूपविद्यारम्भादिकं निर्वर्तयितव्यमिति तदप्येतैरेव निर्वाह्यम् । किंचात्रैतेषामन्तेवासिनस्सुहृदश्च बहवो राजकुमारादयो विद्यन्ते । तदाप्रभृत्यपि शास्त्रप्रतिपत्त्यैव स्वसविधमागतानां न्यायालङ्काराध्यापनादिना कालमतिवाहयन्तोऽवर्तन्त । सप्तत्यधिकवयस्काः किञ्चिदस्वस्थशरीरा अप्येते सम्प्रत्यप्यध्यापनादिक "मह्रो" कुर्वन्ति । शिरोमण्यादिपरीक्षकपदञ्चैतेऽलङ्कृतवन्तोऽलङ्कुर्वन्ति चेत्यास्तामिदम् ।

एतैः विरचिताः ग्रन्थास्त्वेते—

शतालङ्कारोदाहरणभूतं रामवर्मशतकाव्यं खण्डकाव्यम्, शाकुन्तलव्याख्या, मालविकाग्निमित्रव्याख्या, एतत्त्रयं मुद्रितम् । विक्रमोर्वशीयव्याख्या, रत्नावलीटिप्पणी, कुवलयानन्दतच्चन्द्रिकयोर्व्याख्या, चित्रमीमांसाटिप्पणी, दिनकरीयटिप्पणी, व्युत्पत्तिवादटिप्पणी, इयं लोचनव्याख्या च । श्रीभागवतसारसङ्ग्रहरूपस्य केरलप्रसिद्धस्य नारायणीयस्य च विस्तृता व्याख्या विरच्यमाना वर्तते । अस्या अपि समाप्तिरचिरादेव भविष्यतीति ।

Tripunittura
Cochin State
23-2-40

के. नारायण पिषारटि M. A.
संस्कृतमहापाठशालाध्यक्षः

# सलोचनध्वन्यालोकगतानां विषयाणां सूची


| विषयाः | पृष्ठम् |
| --- | --- |
| मङ्गलाचरणम् | १ |
| काव्यात्मभूतध्वनिविषये मतभेदप्रदर्शनम् | ९ |
| शब्दस्य वाच्यातिरिक्तव्यङ्ग्यार्थबोधकत्वं नास्ति, वाच्यव्यतिरिक्तं व्यङ्ग्यं सदपि तद्भाक्तम्, असाधारणधर्मप्रकारेण तन्निरूपयितुमशक्यत्वात्तदभाव एवेति त्रयाणां प्रधानविप्रतिपत्तिप्रकाराणां निरूपणम् | १४ |
| तत्र प्रथमविकल्पस्य त्रैविध्यप्रतिपादनम् | १५ |
| एतेषु 'शब्दार्थमये काव्ये शब्दार्थगुणालङ्कारापेक्षया कस्यचिदन्यस्य शोभाहेतुत्वविशिष्टस्य ध्वनेरभाव' इत्यभाववादिनां यः प्रथमः कल्पः तन्निरूपणम् | १६ |
| 'स्वरूपेणैव ध्वनेरभाव' इत्यभाववादिनां यो द्वितीयः कल्पः तस्य निरूपणम् | २१ |
| द्वितीयकल्पस्याभिप्रायान्तरवर्णनं तत्खण्डनं च | २४ |
| 'काव्यशोभाकारिषु शब्दार्थालङ्कारगुणेष्वन्तर्भावाद्ध्वनेरभाव' इति तृतीयकल्पनिरूपणम् | २५ |
| 'वाच्यव्यतिरिक्तं व्यङ्ग्यं सदपि तद्भाक्तम्' इति प्रधानविप्रतिपत्तिप्रकारेषु द्वितीयप्रकारनिरूपणम् | २८ |
| भाक्तशब्दार्थविवेचनम् | २९ |
| गुणवृत्तिशब्दार्थविवेचनम् | ३१ |
| भाक्तवादप्रवृत्तौ भामहवामनादिमतोपन्यासपुरस्सरं हेतूपन्यासः | ३२ |
| प्रधानविप्रतिपत्तिप्रकारेषु तृतीयप्रकारोपन्यासः | ३३ |
| मतत्रये उत्तरोत्तरं भव्यबुद्धित्वनिरूपणम् | ३४ |
| 'तत्स्वरूपं ब्रूमः' इत्यनेनानुबन्धचतुष्टयप्रदर्शनम्, 'सहृदयमनःप्रीतये' इति भागस्य व्याख्या च | ३५ |
| सहृदयशब्दार्थनिरुक्तिः | ३८ |
| रसचर्वणाया एव मुख्यभूतात्मत्वमित्युपपादनम् | ३९ |
| साधु काव्यनिषेवणस्यानन्दसम्पादकत्वोपपादनम् | ४० |
| 'सहृदयानामानन्दो मनसि लभतां' इति वृत्तिग्रन्थस्थानन्दपदस्य विशेषार्थप्रतिपादनम् | ४१ |
| ध्वनिं निरूपयितुं भूमिकारचनम् | ४२ |
| सहृदयश्लाघ्यस्यैवार्थस्य काव्यात्मत्वव्यवस्थापनम् | ४४ |
| निरुक्तस्यार्थस्य वाच्यः प्रतीयमानश्चेति द्वैविध्यप्रतिपादनम् | ४६ |
| तत्र वाच्यस्यात्र ग्रन्थे प्रतिपादनं नास्तीति कथनम् | ४७ |
| वाच्यार्थात्प्रतीयमानार्थस्यान्यत्वोपपादनम् | ४८ |

| विषयाः | पृष्ठम् |
|---|---|
| प्रतीयमानस्यार्थस्य वस्त्वलङ्काररसाद्यात्मत्वेन विभागकरणम् | ५० |
| विधिरूपे वाच्ये प्रतिषेधरूपस्य व्यङ्ग्यस्योदाहरणप्रदर्शनम् | ५२ |
| 'भ्रम धार्मिके'ति गाथाव्याख्यानम् | ५४ |
| 'भ्रम धार्मिके'ति गाथायां प्रतीयमानस्य निषेधरूपार्थस्य मीमांसकमतेन लाक्षणिकत्वादिशङ्का | ५५ |
| पूर्वोक्ताभिहितान्वयवादिमतखण्डनम् | ५६ |
| अन्विताभिधानवादिमतेन शङ्का तत्खण्डनञ्च | ६४ |
| 'भ्रम धार्मिक' इत्यत्र भट्टनायकमतप्रदर्शनं तत्खण्डनञ्च | ६८ |
| प्रतिषेधरूपे वाच्ये विधिरूपव्यङ्ग्यस्योदाहरणम् तद्व्याख्या च | ७१ |
| विधिरूपे वाच्येऽनुभयरूपस्य व्यङ्ग्यस्योदाहरणं, तद्व्याख्या च | ७३ |
| प्रतिषेधरूपे वाच्येऽनुभयरूपस्योदाहरणं तद्व्याख्या च | ७४ |
| विषयभेदादपि व्यङ्ग्यस्य वाच्याद्भेदप्रतिपादनं, तदुदाहरणञ्च | ७६ |
| रसभावतदाभासतत्प्रशमादीनामभिधेयसामर्थ्याक्षिप्तत्वप्रतिपादनम् | ७८ |
| रसस्यैव काव्यात्मत्वमितिहासबलात्प्रसाधनम् | ८४ |
| प्रतीयमानस्य रसस्य काव्यात्मत्वं सहृदयानुभवसिद्धमिति निरूपणम् | ९१ |
| काव्यार्थतत्त्वज्ञानामेव प्रतीयमानार्थप्रतीतिर्नान्येषामिति निरूपणम् | ९३ |
| व्यङ्ग्यस्य प्राधान्यप्रतिपादनम् | ९७ |
| व्यङ्ग्यस्य सत्यपि प्राधान्ये वाच्यवाचकतद्भावस्य प्रथमोपादाने सदृष्टान्तं बीजोपन्यासः | ९९ |
| व्यङ्ग्यार्थस्य वाच्यार्थप्रतीतिपूर्वकत्वोपपादनम् | १०० |
| वाच्यार्थप्रतीतिपूर्वकत्वेऽपि व्यङ्ग्यार्थस्य प्राधान्यव्याकोपाभावप्रतिपादनम् | १०१ |
| ध्वनिकाव्यस्य लक्षणकथनम् | १०३ |
| भट्टनायकमतदूषणपुरस्सरं शब्दार्थयोरुभयोरपि ध्वननव्यापारसद्भावोपपादनम् | १०४ |
| चारुत्वप्रतीतेः काव्यात्मत्वाङ्गीकरणम् | १०५ |
| समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्ताद्यलङ्कारेषु ध्वनेरन्तर्भावशङ्कानिराकरणाय 'उपसर्जनीकृतस्वार्थौ' इति कारिकाभागव्याख्यानम् | १०८ |
| समासोक्तौ व्यङ्ग्यानुगतवाच्यस्यैव प्राधान्यप्रतिपादनम् | १०९ |
| आक्षेपे पूर्वोक्तप्राधान्यप्रतिपादनम् | १११ |
| अनुक्तनिमित्तायां विशेषोक्तौ तत्प्रतिपादनम् | ११७ |
| पर्यायोक्ते प्रतीयमानस्य व्यङ्ग्यस्य ध्वनावन्तर्भावः, ध्वनेस्तत्रान्तर्भावो नास्तीति निरूपणम् | ११८ |
| अपह्नुतिदीपकयोस्तत्प्रतिपादनम् | ११९ |
| एवं सङ्कराद्यलङ्कारेषु व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वनिरूपणम् | १२३ |
| पूर्वोक्तानां विषयाणां संक्षेपेण प्रतिपादनम् | १३० |

| विषयाः | पृष्ठम् |
|---|---|
| प्रकारान्तरेणालङ्काराणां ध्वनेश्च तादात्म्यनिराकरणम् | १३१ |
| 'सूरिभिः कथित' इति कारिकाभागव्याख्या | १३२ |
| नादशब्दवाच्यानां स्फोटाभिव्यञ्जकानां वर्णानां ध्वनिशब्दवाच्यत्वमिति वैयाकरणमतोत्थापनम् | १३३ |
| पूर्वोक्तमतदूषणम् | १३५ |
| अविवक्षितवाच्यः विवक्षितान्यपरवाच्यश्चेति ध्वनेर्भेदद्वयकथनम् | १३६ |
| पूर्वोक्तयोर्विभागयोरुदाहरणम् | १३७ |
| भाक्तपक्षवादिमतदूषणोपक्रमः | १४० |
| भक्तेर्ध्वनेश्च वैलक्षण्यप्रतिपादनम् | १४१ |
| भक्तेर्ध्वनिलक्षणत्वखण्डनम् | १४२ |
| उपचरितशब्दप्रयोगस्थले ध्वन्यभावप्रतिपादनम् | १४६ |
| लक्षणाव्यापारस्य ध्वननव्यापारस्य च भिन्नविषयकत्वप्रतिपादनम् | १४८ |
| भक्तेर्ध्वैलक्षणकत्वेऽव्याप्तिप्रदर्शनम् | १५१ |
| गौणलाक्षणिकयोर्भेदप्रतिपादनम् | १५२ |
| लक्षणास्वरूपविभागविचारः | १५३ |
| रत्यादिप्रतीतेश्शाब्दत्वमनङ्गीकुर्वतो मीमांसकस्य मतम्, तद्दूषणञ्च | १५५ |
| रसप्रतीतेरलौकिकत्वोपपादनम्। | १५८ |
| ध्वनेः भक्त्युपलक्षितत्वस्वीकारेऽलङ्काराणां लक्षणकरणवैयर्थ्यप्रतिपादनम् | १६१ |
| तृतीयाभाववादिनो मतदूषणम् | १६२ |
| **द्वितीयोद्द्योतः** | |
| अविवक्षितवाच्यप्रभेदप्रतिपादनोपक्रमः | १६५ |
| अर्थान्तरसंक्रमिताविवक्षितवाच्योदाहरणतत्समन्वयौ | १६७ |
| अत्यन्ततिरस्कृताविवक्षितवाच्योदाहरणतत्समन्वयौ | १७२ |
| विवक्षितवाच्यध्वनेर्विभागः | १७४ |
| रसभावतदाभासतत्प्रशमादीनामुदाहरणानि | १७५ |
| रसवदाद्यलङ्कारेषु रसध्वनेरनन्तर्भावकथनम् | १८० |
| रसविषये भट्टनायकमतोपपादनम् | १८२ |
| पूर्वोक्तमतखण्डनम् | १८४ |
| रसवदाद्यलङ्कारस्वरूपकथनम् | १९१ |
| रसवदलङ्कारविभागोदाहरणे | १९३ |
| ध्वनेः उपमाद्यलङ्काराणां, रसवदलङ्कारस्य च विभक्तविषयत्वोपसंहारः | १९८ |
| अलङ्कार्यध्वन्यपेक्षया गुणालङ्काराणां पार्थक्योपपादनम् | २०४ |
| सम्भोगविप्रलम्भश्रृङ्गारकरुणानामुत्तरोत्तरं श्रैष्ठ्यप्रतिपादनम्, तेषां माधुर्याश्रितत्वप्रतिपादनञ्च | २०७ |
| रौद्रवीराद्भुतेषु ओजोगुणव्यवस्थितिः, तदुदाहरणञ्च | २०८ |
| प्रसादगुणस्य सर्वरससाधारण्यप्रतिपादनम् | २१२ |
| श्रुतिदुष्टादीनामनित्यदोषाणां ध्वन्यात्मनि श्रृङ्गारे हेयत्वप्रदिपादनम् | २१४ |
| विवक्षितान्यपरवाच्यस्य ध्वनेरङ्गानामानन्त्यप्रतिपादनम् | २१५ |

| विषयाः | पृष्ठम् |
|---|---|
| शृङ्गारस्य स्वगतभेदविभागः, सुरतविरहणजलक्रीडापानकादीनां सम्भोगशृङ्गारान्तर्गतत्वप्रतिपादनम् | २१६ |
| अभिलाषेर्ष्यादीनां विप्रलम्भशृङ्गारान्तर्गतत्वकथनम् | २१७ |
| शृङ्गाराङ्गेषु अनुप्रासस्य व्यञ्जकत्वाभावोपपादनम् | २१८ |
| विशेषतो विप्रलम्भशृङ्गारे यमकादीनां प्रतिषेधः | २१९ |
| रसाक्षिप्ततयोपात्तस्य बन्धस्य ध्वन्यलङ्कारत्वोपपादनम्, तदुदाहरणञ्च | २२० |
| पूर्वोक्तविषयाणां सङ्ग्रहेण प्रतिपादनम् | २२२ |
| रूपकादीनामलङ्काराणां शृङ्गारव्यञ्जकत्वोपपादनम्, तन्निवेशप्रकारश्च | २२३ |
| विवक्षितान्यपरवाच्यध्वनेर्द्वितीयभेदविभागः | २३४ |
| शब्दशक्तिमूलकानुरणनध्वनेः श्लेषस्य च विभिन्नविषयकत्वप्रतिपादनम्, तदुदाहरणञ्च | २३५ |
| अर्थशक्त्युद्भवध्वनेस्सोदाहरणं निरूपणम् | २४७ |
| अस्मिन्नेव ध्वनौ तृतीयप्रकारनिरूपणम् | २५१ |
| अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य विभागः | २५४ |
| तत्र कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्योदाहरणम् | २५५ |
| कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरस्योदाहरणानि | २५६ |
| अर्थशक्त्युद्भवेऽलङ्कारध्वनिनिरूपणम् | २५७ |
| दीपकाद्यलङ्कारेऽन्तरस्य गम्यमानत्वेऽपि ध्वनिव्यपदेशाभावनिरूपणम् | २५९ |
| पूर्वोक्तविषयापवादनिरूपणम् | २६० |
| उपमाक्षेपोत्प्रेक्षादिध्वनिनिरूपणम् | २६२ |
| अलङ्कारध्वनेः प्रयोजनवत्त्वप्रतिपादनम् | २७८ |
| वस्तुमात्रेणालङ्काराणां व्यङ्ग्यत्वे ध्वनिव्यपदेशः, अलङ्कारान्तरव्यङ्ग्यभावे तु ध्वन्यङ्गत्वमिति भेदोपपादनम् | २७९ |
| विवक्षितवाच्याभासविवेकोपक्रमः, पूर्वोक्तध्वनिसङ्कलीकरणञ्च | २८१ |
| अविवक्षितवाच्याभासविवेकः | २८५ |
| ध्वन्युपसंहारः | २८६ |


## तृतीयोद्द्योतः


| विषयाः | पृष्ठम् |
|---|---|
| अविवक्षितवाच्यस्य सोदाहरणं पदप्रकाशत्वादिनिरूपणम् | २८९ |
| पूर्वोक्तस्य वाक्यप्रकाशकत्वोदाहरणानिरूपणम् | २९३ |
| विवक्षिताभिधेयस्यानुरणनरूपव्यङ्ग्यस्य शब्दशक्त्युद्भवे पदप्रकाशकत्वनिरूपणम् | २९६ |
| पूर्वोक्तस्य वाक्यप्रकाशकत्वनिरूपणम् | २९७ |
| पूर्वोक्तस्य कविप्रौढोक्तिनिष्पन्नशरीरस्यार्थशक्त्युद्भवे पदवाक्यप्रकाशकत्वनि० | २९८ |
| पूर्वोक्तस्य स्वतस्सम्भविशरीरार्थशक्त्युद्भवे पदप्रकाशकत्वनि० | २९९ |
| तस्यैव वाक्यप्रकाशत्वरूपणम् | ३०० |
| काव्यविशेषस्य ध्वनेः पदप्रकाशत्वानुपपत्तिशङ्कापरिहारौ | ३०१ |

| विषयाः | पृष्ठम् |
|---|---|
| पूर्वोक्तानां विषयाणां सङ्ग्रहेण प्रतिपादनम् | ३०२ |
| वर्णानां रसद्योतकत्वोपपादनम् | ३०३ |
| पूर्वोक्तविषये उदाहरणप्रदर्शनम् | ३०४ |
| सङ्घटनास्वरूपोपपादनम् | ३०९ |
| माधुर्यादिगुणानाश्रित्य संघटनाया रसाभिव्यञ्जकत्वोपपादनम् | ३१० |
| गुणानां संघटनायाश्च भेदोपपादनम् | ३११ |
| रसाभिव्यञ्जकानां गुणानामाश्रयचर्चा | ३१३ |
| संघटनानियमे हेतुकथनम् | ३१८ |
| संघटनासामान्ये प्रसादस्यावश्यकत्वप्रतिपादनम् | ३२१ |
| संघटनाया औचित्यं नियामकान्तरमिति प्रतिपादनम् | ३२३ |
| मुक्तकसन्दानितकविशेषककलापककुलकादीनां स्वरूपविवेकः | ३२४ |
| गद्यकाव्येष्वपि संघटनाया औचित्यमेव नियामकमिति निरूपणम् | ३२६ |
| अलक्ष्यक्रमध्वनेरितिकर्तव्यता प्रतिपादनम् | ३२९ |
| प्रबन्धस्य रसाभिव्यञ्जकत्वे हेत्वन्तरकथनम् | ३३५ |
| मुखप्रतिमुखगर्भादिसन्धीनां तदङ्गानाञ्च काव्येष्वावश्यकत्वप्रतिपादनम् | ३३६ |
| सन्धीनां तदङ्गानाञ्च स्वरूपविवेकः | ३३८ |
| प्रबन्धस्य रसव्यञ्जकत्वे उद्दीपनप्रशमनयोस्सोदाहरणं हेतुत्वप्रतिपादनम् | ३४१ |
| सुप्तिङ्वचनकारकसमासादीनामपि सोदाहरणं व्यञ्जकत्वप्रतिपादनम् | ३४७ |
| रसादीन् बन्धुमिच्छतः कवेः विरोधिपरीहारे दृष्टिरावश्यकीति प्रतिपादनम् | ३६० |

| विषयाः | पृष्ठम् |
|---|---|
| विरोधिनां पदार्थानां सोदाहरणं प्रतिपादनम् | ३६१ |
| पूर्वोक्तविषयाणां सङ्ग्रहेण प्रतिपादनम् | ३६४ |
| पूर्वोक्तविषयस्य सोदाहरणं प्रतिप्रसवकथनम् | ३६५ |
| रसादीनां विरोधिरसादिभिस्समावेशासमावेशयोः क्रमप्रदर्शनम् | ३[illegible]७ |
| साधारण्येन परस्परं विरुद्धयो रसयोरपि समावेशप्रकारकथनम् | ३८० |
| पूर्वोक्त एव विषयेऽसाधारण्येन समावेशप्रकारकथनम् | ३८७ |
| एकप्रबन्धस्थयो रसान्तरव्यवहितयो रसयोः परस्परं निर्विरोधित्वप्रतिपादनम् | ३९५ |
| श्रृङ्गाररसे सर्वथा विरोधिरससमावेशप्रतिषेधः | ३९६ |
| श्रृङ्गारविरोधिनि रसे श्रृङ्गाराङ्गसमावेशो न दोषायेति प्रतिपादनम् | ३९९ |
| निरुक्तप्रकारेण रससमावेशे कवेः क्वापि प्रमादित्वाभावप्रतिपादनम् | ४०० |
| रसादितात्पर्येण संनिवेशितानां वृत्तीनां नाट्यकाव्ययोः शोभावहत्वप्रतिपादनम् | ४०१ |
| वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्यापि भानमेकयैव वृत्त्या भवतु, किं व्यञ्जनाव्यापारस्वीकारेणेत्याक्षेपः, तत्समाधानञ्च | ४०५ |
| वाक्यस्य व्यञ्जकत्वमनङ्गीकुर्वतो मीमांसकस्याक्षेपस्तत्समाहितिश्च | ४१३ |
| व्यञ्जकत्वगौणत्वयोः स्वरूपतो विषयतश्च भेदोपपादनम् | ४२३ |

| विषयाः | पृष्ठम् |
|---|---|
| व्यङ्गयव्यञ्जकयोर्याथातथ्येन स्वरूपविवेकः | ४४३ |
| त्रिविधस्य गुणीभूतव्यङ्गयस्य स्वरूपनिरूपणम् | ४५८ |
| गुणीभूतव्यङ्गयस्य बहुतरलक्ष्यव्यापकत्वप्रतिपादनम् | ४६३ |
| गुणीभूतव्यङ्गयेनालङ्कारस्यापि रम्यत्वप्राप्तिरित्युपपादनम् | ४६४ |
| काका अर्थान्तरप्रतीतिस्थले गुणीभूतव्यङ्गयत्वोपपादनम् | ४७७ |
| गुणीभूतव्यङ्गयस्य सङ्कीर्णविषयत्वोपपादनम् | ४८० |
| गुणीभूतव्यङ्गयस्यापि काव्यप्रकारत्वोपपादनम् | ४८३ |
| चित्रकाव्योपपादनोपक्रमः, शब्दार्थभेदेन तस्य द्वैविध्योपपादनञ्च | ४९४ |
| चित्रशब्दार्थं निरूपणम् | ४९५ |
| चित्रकाव्यविरचने कवेस्स्वातन्त्र्यप्रतिपादनम् | ४९८ |
| पूर्वोक्तविषयाणां सङ्ग्रहेण प्रतिपादनम् | ५०० |
| सङ्करसंसृष्टिभ्यां ध्वनेरनन्तप्रकारत्वोपपादनम् | ५०१ |
| ध्वनिप्रभेदसङ्कीर्णस्य सोदाहरणं निरूपणम् | ५०२ |
| गुणीभूतव्यङ्गयसङ्कीर्णत्वनिरूपणम् | ५०४ |
| अलङ्कारेषु तन्निरूपणम् | ५०७ |
| सोदाहरणं सप्रभेदञ्च संसृष्टालङ्कारान्तरसङ्कीर्णनिरूपणम् | ५१३ |
| संसृष्टालङ्कारसंसृष्टत्वोदाहरणम् | ५१५ |
| ध्वनिप्रभेदानामसंख्येयत्वप्रतिपादनम् | ५१६ |
| शब्दसम्बद्धानामुपनागरिकादीनां, अर्थसम्बद्धानां कौशिक्यादीनां वृत्तीनां काव्यजीवितत्वनि० | ५१७ |

**चतुर्थोद्द्योतः—**

| विषयाः | पृष्ठम् |
|---|---|
| सगुणीभूतव्यङ्गयस्य ध्वनेर्निरूपणप्रयोजनकथनम् | ५२२ |
| ध्वनिप्रभेदप्रकारेष्वन्यतमप्रकारस्यापि निरूपणे कवेः फलप्राप्तिरिति सोदाहरणं निरूपणम् | ५२३ |
| रसभावतदाभासतत्प्रशमनलक्षणस्य ध्वनिमार्गस्य रसाश्रयाद्बहुप्रकारत्वोपपादनम् | ५२६ |
| विवक्षितान्यपरवाच्यस्य शब्दशक्त्युद्भवानुरणनरूपव्यङ्गयप्रकारसमाश्रयेण नवत्वप्रतिपादनम्, तदुदाहरणञ्च | ५२८ |
| काव्येऽङ्गित्वेनोपात्तस्यैकस्यैव रसस्य सोदाहरणं छायातिशयाधायकत्वप्रतिपादनम् | ५२९ |
| महाभारते शान्तरसस्य मुख्यत्वोपपादनम् | ५३० |
| कवेः प्रतिभागुणवत्त्वे सति काव्यार्थस्य विरामाभावप्रतिपादनम् | ५३७ |
| शुद्धस्य वाच्यस्यापि देशकालाद्यवस्थाविशेषभेदेन सोदाहरणमानन्त्यप्रतिपादनम् | ५३८ |
| विविधाभिः कविमतिभिरुपभुक्ताया अपि काव्यस्थितेः सोदाहरणं क्षयाभावप्रतिपादनम् | ५४५ |
| कविवाचां मिथः संवादे सत्यपि तासां विभिन्नविषयकत्वप्रतिपादनम् | ५४६ |
| संवादविभागप्रतिपादनम् | ५४७ |
| वस्त्वन्तरसदृशानामपि काव्यवस्तूनां प्रतिपादने काव्यस्य नवत्वोपपादनम् | ५४८ |
| पूर्वोक्तवस्तुप्रतिपादने कवेर्दोषाभावप्रतिपादनम् | ५४९ |
| सुकविवाण्या माहात्म्यप्रतिपादनम् | ५५० |
| उपसंहारः | ५५२ |

श्रीमदानन्दवर्धनाचार्यप्रणीतो-

# ध्वन्यालोकः ।



श्रीसहृदयतिलकरामषारककृतया बालप्रियाख्यटीकयोद्भासितया गोस्वामिश्रीदामोदर-शास्त्रिनिर्मितया विषमस्थलदर्शिन्या दिव्याञ्जनाख्यटिप्पन्याऽऽक्तया च

**श्रीमदाचार्याभिनवगुप्तविरचितया लोचनाख्यया व्याख्ययाऽनुगतः ।**

**प्रथम उद्द्योतः ।**

## श्रीमदाचार्य्याभिनवगुप्तकृतं लोचनम्

श्रीभारत्यै नमः

अपूर्वं यद्वस्तु प्रथयति विना कारणकलां

जगद्ग्रावप्रख्यं निजरसभरात्सारयति च ।

क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति त-

त्सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते ॥

## श्रीसहृदयतिलकरामषारककृतबालप्रिया

श्रीगुरवे नमः

श्रीगुरून्पूर्णवेदेशं सङ्गमेशञ्च माधवम् ।

शिवं शिवाञ्च नम्राणां कामधेनुम्मुहुर्नुमः ॥

काव्यालोको लोचनञ्च द्वे ग्राह्यग्राहके सताम् ।

तद्ग्रन्थकारावाचार्यौ रसिकाग्रेसरौ स्तुमः ॥

लोचनस्यादिमोद्द्योतमात्रस्यात्र पुरा कृता ।

विवृतिर्लभ्यते तत्तां दृष्ट्वा ग्रन्थान्तराणि च ॥

पाठान्केरलविख्यातानालम्ब्य च यथामति ।

कुर्मो बालप्रियां प्रायः प्रौढलोचनटिप्पनीम् ॥

अथ तत्रभवन्तः श्रीमदाचार्याभिनवगुप्तपादाः काव्यालोकव्याख्यानश्चिकीर्षवस्तस्य निर्विघ्नपरिसमाप्तये विहितं समुचितेष्टदेवतानमस्कारात्मकम्मङ्गलं शिष्यशिक्षार्थं ग्रन्थतो-निबध्नन्त्यपूर्वमित्यादि ।

यत्=कमलमनम्भसि कमलेत्यादिकाव्यात्मकं सरस्वतीतत्त्वम् , कारणकलां वि-

### लोचनम्

भट्टेन्दुराजचरणाब्जकृताधिवास-
हृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम् ।
यत्किंचिदप्यनुरणन्स्फुटयामि काव्या-
लोकं स्वलोचननियोजनया जनस्य ॥

### बालप्रिया

ना–तत्तत्कार्यं प्रति प्रसिद्धं यद्यदुपादानादिकारणन्तस्य कला लेशः तां विना=अन्तरेणैव अपूर्वं=लोकप्रसिद्धवस्तुविजातीयमद्भुतञ्च वस्तु=निरुपाख्यशशशृङ्गादिविलक्षणमनम्भोऽधिकरणककमलादिकं पदार्थम् प्रथयति=सृष्ट्वा विस्तारयति, किञ्च यद् ग्रावप्रख्यं=पाषाणतुल्यं निसर्गतो नीरसं जगत्=सर्वं वस्तु निजः स्वीयः काव्यसम्बन्धी यो रसः शृङ्गारादिः तस्य भरादतिशयात् सारयति=सारं करोति विभावादित्वयोजनेन रसव्यञ्जकं करोतीति यावद्, वाक्याभ्यामाभ्यां काव्यात्मकसरस्वतीतत्त्वस्य विश्वकर्तुः प्रजापतेरुत्कर्षरूपव्यतिरेको व्यञ्जितः ; तमेव स्थिरीकर्तुमाह—क्रमादित्यादि । यज्जगदिति चानुपज्यते, प्रख्या कवेः प्रतिभा; उपाख्या वचनं प्रथमं प्रख्या पश्चादुपाख्येति तयोर्यः क्रमात्प्रसरः तेन सुभगं हृद्यं सद्, भासयति=निसर्गेणारमणीयमपि सर्वं वस्तु रसव्यञ्जकत्वसम्पादनेन रमणीयं सत्प्रकाशयतीत्यर्थः, चकारस्यात्र सम्बन्धः, अत्र प्रख्योपाख्याप्रसरस्यापूर्ववस्तुनिर्माणे सरसत्वकरणे च हेतुत्वमार्थिकं बोध्यम्, अत्राद्येन वाक्येनापूर्ववस्तुनो निर्माणं द्वितीयेन पूर्वं सतो वस्तुनस्सरसत्वकरणं तृतीयेन द्वयोरपि हृद्यतया प्रकाशनञ्चोक्तमित्यपि व्याचक्षते, तत्=तथाविधमपूर्ववस्तुप्रथयितृत्वादिधर्मविशिष्टम्, तद्धर्मसम्पत्त्यर्थमाह–कवीति । कविसहृदयावित्याख्या यस्य तत्, कविसहृदयशब्दावत्र निर्माणरूपकविव्यापारविचारात्मकसहृदयव्यापारविषयकाव्यपरौ, यद्वा कविसहृदयैराख्यायत उच्यते इति तदाख्यम्, अथ वा कविसहृदययोराख्या=आभीक्ष्ण्येन ख्यानं स्फुरणं यस्य तत् काव्यात्मकमित्यर्थः, तत्त्वमारोपितं बोध्यम्, सरस्वत्याः=शब्दप्रपञ्चाभिमानिन्या देवतायाः, तत्त्वं=पारमार्थिकं रूपम्, विजयते=सर्वस्मादुपरि वर्तते, अनेन तन्नमस्कारो ग्रन्थकर्तुर्गम्यते; अथ च सरस्वत्यास्तत्त्वं ध्वनिकाव्यम्, विजयते: अपूर्वमित्याद्यर्थः पूर्ववद्बोध्य इति प्रतिपाद्यार्थोऽप्यासूत्रित इति दिक् ।

अथौद्धत्यं परिहरन्नात्मनो व्याख्याननैपुणीं दर्शयन् कीर्त्यनुवृत्तये नामनिर्देशं कुर्वंश्च प्रतिजानीते–भट्टेत्यादि । भट्टेन्दुराजस्य=तन्नामकस्य गुरोः चरणाब्जयोः=पद्मतुल्ययोः पादयोः तत्सन्निधाविति यावद् योऽधिवासस्तेन चरणाब्जशुश्रूषयेति यावद्; हृद्यानि=स्वहृदयस्थानि; अथ च श्रोतृजनहृदयप्रियाणि श्रुतानि शास्त्राणि यस्य सः, यथा पद्मेन सुरभीकरणे वस्तुनो हृद्यत्वं तथेत्युपमाऽत्र ध्वन्यते, यत्किंचित्=स्वल्पम्, अपिरेवार्थे ; यद्वाऽनुरणन्नपीति योजना, अपिशब्दः स्वल्पाभिधानेन सह स्फुटीकरणस्यापाततो विरोधं द्योतयति,

लोचनम्

स्वयमव्युच्छिन्नपरमेश्वरनमस्कारसम्पत्तिचरितार्थोऽपि व्याख्यातृश्रोतॄणामविघ्नेना-

बालप्रिया

अनुरणन्=ब्रुवन् घण्टाऽऽदिनादस्थानीयस्य मूलकृद्वचनस्यानुरणनस्थानीयं व्याख्यान-रूपं स्ववचनमित्यनेन प्रकाश्यते, स्वेति । लोच्यते दृश्यतेऽनेनेति लोचनं स्वस्य लोचनं—मनः तस्य नितरां योजनया मनःप्रणिधानेनेत्यर्थः, काव्यालोकं जनस्य स्फुटयामि=विशदीकरोमि, यद्वा स्वस्य लोचनं ज्ञानं तस्य नियोजनया व्याख्यानरूपानुरणनद्वारा समर्पणेन स्फुटयामि=प्रकाशयामि, यथा नेत्रयोजनेन तथेत्युपमाध्वनिरत्रापि बोध्यः ।

वृत्तिकारकृतस्य स्वेच्छेत्यादिपद्यस्य तात्पर्यार्थमवतारिकया दर्शयति—स्वयमित्यादि । स्वयमिति वृत्तिकारस्य निर्देशः, अव्युच्छिन्नः=मध्ये विच्छेदेन रहितः परमेश्वरस्य=तत्तल्लीलाविग्रहमवलम्बमानस्य परमात्मनः; नमस्कारः तस्य सम्पत्तिः=प्रकर्षः तया चरितः=लब्धः अर्थः=विघ्ननिवृत्त्यादिरूपसाक्षात्प्रयोजनं यस्य सः, तथाभूतस्य मङ्गलाचरण-आपाततो विरोधमपिशब्दो द्योतयति, व्याख्यातृश्रोतॄणामिति फलसम्पत्तय इत्यादिना सम्बन्धः, अविघ्नेन=विघ्नध्वंसेन, अभीष्टेति । व्याख्यातॄणां व्याख्यानं श्रोतॄणां श्र-

## दिव्याञ्जनाख्या टिप्पणी

श्रीश्रीगौरकृष्णः शरणम् ।

गौरकृष्णगुरून्नत्वा ध्वन्यालोकस्य लोचनम् ।
अनज्मि दिव्याञ्जनतो दुर्दर्शार्थमवेक्षितुम् ॥

अथ ध्वनिप्रस्थापकाचार्यश्रीमदानन्दवर्धनविरचितं ध्वन्यालोकनिबन्धनं व्याख्यातवतो भरतदर्शनसूत्रभाष्यकारप्रधानस्याचार्यश्रीमदभिनवगुप्तस्य लोचनाख्ये व्याख्याने विषमस्थलानि मुख्यत्वेन विशदयितुकामस्य दिव्याञ्जननामिकेयं टिप्पणी; प्रासङ्गिकी त्वपरत्रापीति न प्रतिश्रुतिविरोध उद्भावनीयः ।

यत्त्वत्रोत्तरपदाव्यवहितपूर्वत्वविशिष्टविद्यायोन्यन्यतरसम्बन्धवाचकदन्तपदोद्देश्यकानङ्विधायकानङृतो द्वन्द्व इति शास्त्रेण विद्याद्वारकैकयज्ञार्विज्यसम्बन्धेन विद्यासम्बन्धिवाचकहोतापोतृवदिहापि विद्याद्वारकैकप्रतिपाद्यविषयकज्ञानानुकूलव्यापारवत्त्वसम्बन्धेन सम्बन्धिवाचकयोर्व्याख्यातृपदश्रोतृपदयोर्द्वन्द्वेऽपि व्याख्याताश्रोतॄणामित्युचितमिति कश्चिदाक्षिपति तन्मन्दम्—

"ऋतो विद्यायोनिसम्बन्धेभ्यः" पूर्णतत्सूत्रानुवृत्तित ऋत्पदानुवृत्त्यैव निर्वाहे प्रकृतसूत्रे पुना ऋद्ग्रहणमानङ्विध्युद्देश्यताऽवच्छेदककोटिप्रविष्टसमस्यमानयावत्पदानामृदन्तत्वस्यापेक्षां दर्शयद् विद्यायोन्यन्यतरवाचित्वमपि तदवच्छेदककुक्षौ समाविवेशयिषतीति व्याख्यातृशब्दस्य कथं चित्तदन्यतरवाचित्वेऽपि श्रोतृशब्दे तद्वाचित्वनियमादर्शनाद् विशेषणाभावप्रयुक्तविशिष्टाभावमुद्रयोद्देश्यताऽवच्छेदकत्वानाक्रान्तत्वादानङोऽप्रवृत्तेः साध्वेव व्याख्यातृश्रोतॄणामिति ।

श्रीनृहरये नमः

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः ।**
**त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः ॥**

लोचनम्

भीष्टव्याख्याश्रवणलक्षणफलसम्पत्तये समुचिताशीःप्रकटनद्वारेण परमेश्वरसांमुख्यं करोति वृत्तिकारः—**स्वेच्छेति** ।

मधुरिपोर्नखाः वो युष्मान्व्याख्यातृश्रोतॄंस्त्रायन्ताम् , तेषामेव सम्बोधनयोग्यत्वात् ; सम्बोधनसारो हि युष्मदर्थः , त्राणं चाभीष्टलाभं प्रति साहायकाचरणं, तच्च तत्प्रतिद्वन्द्विविघ्नापसारणादिना भवतीति , इयदत्र त्राणं विवक्षितम् , नित्योद्योगिनश्च भ-

बालप्रिया

वणञ्चाभीष्टं फलं तस्य सम्पत्तये=निष्पत्तये , तदुभयसम्पत्तौ तदुभयहेतुकग्रन्थप्रतिष्ठारूपं फलं ग्रन्थकारस्य च सिद्ध्यतीति भावः , समुचितं=ग्रन्थारम्भे योग्यं यदाशिषः प्रकटनं=वचनन्तद्द्वारेण , परमेश्वरस्य साम्मुख्यं=व्याख्यातृश्रोतॄन् प्रत्याभिमुख्यं त्राणेच्छारूपम् , करोति=सम्पादयति , तत्त्राणस्य परमेश्वरसाम्मुख्यायत्तत्वात्त्राणाङ्गभूतं तत्साम्मुख्यमाशीर्वादेन सम्पादयतीत्यर्थः , यद्वा समुचिताया आशिषः प्रकटनं=ग्रन्थतो निबन्धनं तद्द्वारेण , परमेश्वरे विषये साम्मुख्यं=व्याख्यातृश्रोतॄणामाभिमुख्यमनुगन्धानात्मकम् करोति=उत्पादयति , वृत्तिकार इत्यनेन स्वेच्छेत्यादिकं न कारिकारूपसूत्राद्यपद्यमिति दर्शितम् , व इत्यस्य व्याख्यातृश्रोतॄनिति व्याख्याने हेतुमाह—तेषामिति । कुतोऽत्र सम्बोधनप्रसङ्ग इत्यत आह—सम्बोधनेति । सम्बोधनं सारः=प्राणो युष्मदर्थत्वप्रयोजकोंऽशो यस्य सः, न ह्यसम्बोध्यो युष्मदा व्यपदिश्यते, त्रायन्तामित्यनेनात्र विवक्षितं व्याचष्टे—त्राणञ्चेति । अभीष्टेति=व्याख्यानश्रवणरूपेत्यर्थः , सहायस्य कर्म साहायकं तत्प्रतिद्वन्द्वीति; अभीष्टलाभप्रतिबन्धकेत्यर्थः , अपसरणं=निवर्तनम् , आदिपदेनार्थतत्त्वमनीषासमुन्मेषादेः परिग्रहः , इयदिति । उक्तरूपमित्यर्थः , अथ ध्वनिं का-

टिप्पनी

वृत्तिकार इति । स्वकृतानामेव मूलरूपाणां कारिकाणां व्याख्याऽऽत्मकवृत्तेः कर्तेत्यर्थः, अत एव विशिष्टस्यैवारिप्सितत्वेन मूले मङ्गलाकरणेऽपि नाचारविरोधः ।

के चित्तु मूलेऽपि "काव्यस्यात्मे" तिप्रथमकारिकायामाद्यपदस्य काव्येत्यस्यान्यपरत्वेऽपि परार्थोपनीतोदकुम्भदर्शनवत् श्रवणमात्रेणापि ; "काव्यालापाश्च ये के चिद् गीतकान्यखिलानि च । शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः"—

इत्यादिप्रमाणतो भगवत्स्फोरकत्वेन वस्तुनिर्देशरूपमङ्गलं जातमेवेत्यपि वदन्ति, कारिकाकृद्वृत्तिकृतोरभेदस्त्वग्रे दर्शयिष्यते ।

सम्बोधनसारो हीति । स्वजन्यबोधाश्रयत्वेन वक्त्रभिप्रायविषयत्वावच्छिन्नस्य

## लोचनम्

गवतोऽसम्मोहाध्यवसाययोगित्वेनोत्साहप्रतीतिर्वीररसो ध्वन्यते, नखानां प्रहरणत्वेन प्रहरणेन च रक्षणे कर्तव्ये नखानामव्यतिरिक्तत्वेन करणत्वात्सातिशयशक्तिता कर्तृत्वेन सूचिता, ध्वनितश्च परमेश्वरस्य व्यतिरिक्तकरणापेक्षाविरहः, मधुरिपोरित्यनेन तस्य सदैव जगत्त्रासापसारणोद्यम उक्तः, कीदृशस्य मधुरिपोः ? स्वेच्छया केसरिणः, न तु कर्मपारत-

## बालप्रिया

व्यात्मानं प्रतिपादयिष्यता ग्रन्थकृता कृतस्यास्य प्रथमपद्यस्य काव्यरूपत्वादस्मिन्नपि ध्वनियोजनीय इति मन्वानो रसादिभेदेन त्रिविधेषु ध्वनिषु प्रधानभूतं रसध्वनिमादौ योजयति–नित्येत्यादि । चशब्दः समुच्चये ध्वन्यते चेति सम्बन्धः; न वाच्यार्थमात्रमनेनोच्यते किन्तु रसो ध्वन्यते चेत्यर्थः, नित्योद्योगिन इति । उद्योगो नाम=बाह्यसंनाहात्मकोद्यमनक्रियारूप उत्साहानुभावः, भगवत इत्यनेनासम्मोहाध्यवसाययोगित्वेनोत्साहोपपत्तेरौचित्यं दर्शितम् , यथोक्तं भरतेन "उत्तमप्रकृतिरुत्साहात्मको वीर इति" असंमोहेन=सम्मोहराहित्येन योऽध्यवसायः=एतदेवं कर्तुं शक्यमिति वस्तुतत्त्वनिश्चयः तद्योगित्वेनेति उत्साहहेतुकथनम् , असंमोहश्चाध्यवसायश्च तद्योगित्वेनेति केचित् , उत्साहप्रतीतिरिति । स्वेच्छाकेसरिणो मधुरिपोः प्रसन्नार्तिच्छिद इति पदैर्हिरण्यकशिपुप्रभृतिनिबर्हणादिविषयकोत्साहस्य व्यञ्जनया सहृदयानां प्रतीतिरित्यर्थः, सत्यादिव्यभिचारिप्रतीतिरुपलक्षणमिदम् , वस्तुध्वनिं दर्शयति–नखानामित्यादि । प्रहरणत्वेनेति करणत्वे हेतुः सिंहादीनामायुधत्वेनेत्यर्थः , प्रहरणत्व इति पाठे निमित्ते सप्तमी, ननु नखानां प्रहरणत्वेऽपि कथं त्राणक्रियां प्रति करणत्वमित्यतस्तत्सम्भावनां दर्शयति–प्रहरणेनेति । प्रहरणं हि स्वस्यान्यस्य वा रक्षां कर्तुमुपादीयत इति भावः, अव्यतिरिक्तत्वेन करणत्वादिति, अव्यतिरिक्तत्वमपृथग्भूतत्वमाभ्यन्तरत्वमिति यावत् तद्विशिष्टकरणत्वादित्यर्थः, करणं द्विविधं बाह्यमाभ्यन्तरञ्च, बाह्यं खड्गादि; आभ्यन्तरं हस्तादि, करणत्वात् कर्तृत्वेनेति सम्बन्धः, करणत्वमनुक्त्वा कर्तृत्वोक्त्येत्यर्थः, मधुरिपुर्नखैस्त्रायतामिति वक्तव्यमनुक्त्वा मधुरिपोर्नखास्त्रायन्तामित्युक्त्येति यावत् , सातिश-

## टिप्पणी

स्वसम्बोध्यस्य युष्मत्पदार्थतयाऽन्यत्र व्यवस्थापितत्वादित्याशयः ।

उत्साहप्रतीतिरिति । विभावादीनां मिथो नान्तरीयकत्वेन

"सद्भावश्चेद् विभावादेर्द्वयोरेकस्य वा भवेद् ।
ऊटित्यन्यसमाक्षेपे तदा दोषो न विद्यते" ॥

इत्युक्तदिशा प्रकृते सपत्नमध्वायसुरालम्बनेन योग्यतयाऽऽक्षिप्तानां तदीयनिर्भीकत्वादिज्ञानाद्युद्दीपनतद्विषयावहेलाऽऽद्यनुभावगर्वादिसंचारिणां पानकरसन्यायेन योगाद् उत्साहस्य प्रतीतिरित्यर्थः ।

लोचनम्

न्त्र्येण, नाप्यन्यदीयेच्छया, अपि तु विशिष्टदानवहननोचिततथाविधेच्छापरिग्रहौचित्या-देव स्वीकृतसिंहरूपस्येत्यर्थः; कीदृशा नखाः ? प्रपन्नानामार्तिं ये छिन्दन्ति; नखानां हि छेदकत्वमुचितम्; आर्तेः पुनश्छेद्यत्वं नखान्प्रत्यसम्भावनीयमपि तदीयानां नखानां-स्वेच्छानिर्माणौचित्यात्सम्भाव्यत एवेति भावः, अथ वा त्रिजगत्कण्टको हिरण्यकशिपु-र्विश्वस्योत्क्लेशकर इति स एव वस्तुतः प्रपन्नानां भगवदेकशरणानां जनानामार्तिकारि-त्वान्मूर्तैवार्तिस्तं विनाशयद्भिरार्तिरेवोच्छिन्ना भवतीति परमेश्वरस्य तस्यामप्यवस्थायां-परमकारुणिकत्वमुक्तं; किं च ते नखाः स्वच्छेन स्वच्छतागुणेन नैर्मल्येन; स्वच्छमृदुप्र-

बालप्रिया

या शक्तिः=सामर्थ्यं येषां तेषां भावस्तत्ता, शक्ततेति च पाठः, व्यङ्ग्यान्तरमप्याह–ध्वनितश्चेति, उक्तव्यङ्ग्येनेति शेषः, व्यतिरिक्तकरणेति। बाह्यखड्गादीत्यर्थः, जगत्त्रासे-ति। तत्तद्दुर्जनेभ्यो जगतो यस्त्रासः तदपसारणे य उद्यमः स इत्यर्थः, उक्त इति। व्यञ्जित इत्यर्थः, इममर्थं मनसिकृत्य पूर्वं नित्योद्योगिन इत्युक्तमिति बोध्यम्, न तु क-र्मपारतन्त्र्येणेत्यादेः स्वीकृतेत्यत्र सम्बन्धः, आद्यमिच्छापदेन द्वितीयं स्वपदेन च गम्य-मिति बोध्यम्, विशिष्टेति विशिष्टं=दानवान्तरहननापेक्षया विशेषवत्, दानवस्य=हिर-ण्यकशिपोर्हननं यद्वा विशिष्टः=सुरनरतिर्यगाद्यवध्यत्वरूपविशेषवान् यो दानवस्तस्य हननं तस्मिन्नुचितो यस्तथाविधायाः=नरहरिविग्रहावलम्बनविषयिकाया इच्छायाः परि-ग्रहः, उचितेतीच्छाविशेषणं वा तस्मिन् यदौचित्यमर्थात् स्वस्य तस्माद्धेतोरित्यर्थः, स्वीकृ-तसिंहरूपस्येति। सिंहरूपस्य नररूपमिश्रत्वं प्रसिद्धमतो नोक्तम्, ये च्छिन्दन्तीति। न-इति शेषः, छेदकत्वमिति। छेदनक्रियाकर्तृत्वमित्यर्थः, छेद्यत्वं=छेदनकर्मत्वमस्य सम्भाव्यत इत्यनेन सम्बन्धः, असम्भावनीयमिति। आर्तेरमूर्तत्वादिति भावः, तदी-यानां=नरहरिसम्बन्धिनाम्, स्वेच्छेति। स्वेच्छया=भगवत इच्छया यन्निर्माणं=नखानां-नर्माणं तेन हेतुना; औचित्यादमूर्तस्यापि वस्तुनश्छेदने सामर्थ्यात्, यद्वा स्वेच्छया–स्वातन्त्र्येण निर्माणे=अमूर्तच्छेदनादेः करणे नखानामौचित्यादित्यर्थः, सम्भाव्यत एव=निर्धार्यत एव, लोकदृष्ट्यनुरोधेनाह–अथ वेति। अस्मिन् पक्षे आर्तिशब्द आर्तिकारणं-लक्षयति तस्याव्यभिचारेण निखिलार्तिकारित्वञ्च ध्वनतीति बोध्यम्, विनाशयद्भिरिति। नखैरिति शेषः, आर्तिरेवोच्छिन्ना भवतीति। तथाविधस्य हिरण्यकशिपोः हननमार्ति-रेवोच्छेदनं न तु कस्य चित्प्राणिन इति भगवद्बुद्धिरिति भावः, तस्यामप्यवस्थायां=हन-नावस्थायामपि, उक्तमिति। व्यञ्जितमित्यर्थः, आर्तिमेव छिनत्ति न तु कञ्चित्प्राणिनमित्य-र्थप्रतीत्येति भावः, अत्र प्रपन्नेत्यादिविशेषणं त्राणाशीर्वादहेतुगर्भस्वच्छेत्यादिप्रशंसापरं-प्रशस्यमाना हि देवता प्रसेदुषी प्रेप्सितं प्रयच्छति, तत्र स्वच्छस्वच्छायेत्यत्र कर्मधारय-भ्रमं वारयन्व्याचष्टे–स्वच्छेनेत्यादि। स्वच्छतागुणेनेत्यस्यैव विवरणं नैर्मल्येनेति, भाव-वृत्तयः=स्वच्छताऽऽदिधर्मवाचकाः, छाययेत्यस्य व्याख्यानं वक्रेत्यादि, अत्र वस्तुध्व-

लोचनम्

भृतयो हि मुख्यतया भाववृत्तय एव; स्वच्छायया च वक्रहृद्यरूपयाऽऽकृत्याऽऽयासितः-खेदित इन्दुर्यैः, अत्रार्थशक्तिमूलेन ध्वनिना बालचन्द्रत्वं ध्वन्यते, आयासनेन तत्सन्निधौ चन्द्रस्य विच्छायत्वप्रतीतिरहृद्यत्वप्रतीतिश्च ध्वन्यते, आयासकारित्वं च नखानां सुप्रसिद्धम् ; नरहरिनखानां तच्च लोकोत्तरेण रूपेण प्रतिपादितम्, किं च तदीयां स्वच्छतां कुटिलिमानं चावलोक्य बालचन्द्रः स्वात्मनि खेदमनुभवति; तुल्येऽपि स्वच्छकुटिलाकारयोगेऽमी प्रपन्नार्तिनिवारणकुशलाः; न त्वहमिति व्यतिरेकालङ्कारोऽपि ध्वनितः, किंचाहं पूर्वमेक एवासाधारणवैशद्यहृद्याकारयोगात्समस्तजनाभिलषणीयताभाजनमभवम्, अद्य

बालप्रिया

निमाहार्थेति । वक्रहृद्यरूपाकृत्यायासितत्वस्य बालचन्द्र एव सम्भवात्तदर्थसामर्थ्यमूलेनेत्यर्थः, बालचन्द्रत्वं ध्वन्यत इति । इन्दुपदार्थस्य चन्द्रस्य बालत्वं ध्वन्यत इत्यर्थः, आयासित इत्यस्य खेदित इत्यर्थो लक्षणया; तत्फलमाहायासनेनेत्यादि । तत्सन्निधौ= नखसन्निधौ , विच्छायत्वेति=निश्शोभत्वेत्यर्थः, ध्वन्यत इति । ध्वनिव्यापारेण जायत-इत्यर्थः , सुप्रसिद्धमिति । प्रहरणरूपत्वादिति भावः, तच्च=आयासकारित्वञ्च, लोकोत्तरेणेति=स्वच्छत्वादिपूर्वोक्तरूपेणेत्यर्थः, प्रतिपादितमिति । तथा च विदारणादिनाऽऽयासकारिभ्यो लौकिकनखेभ्यो नरहरिनखानां व्यतिरेको व्यज्यत इति भावः, प्रपन्नार्तिच्छिद इति विशेषणसहकारेण व्यतिरेकान्तरस्यालङ्कारान्तरस्य च ध्वनिन्दर्शयति किञ्चेत्यादि । तदीयां=नखसम्बन्धिनीम् , कुटिलिमानमित्यत्र तदीयमिति विपरिणामेन सम्बन्धः , स्वात्मनीति । परेषामविदितमित्यर्थः , अनुभवप्रकारमाह—तुल्येऽपीत्यादि । न त्वहमितीति । इतिशब्दस्यानुभवतीत्यनेन व्यतिरेकालङ्कार इत्यनेन च सम्बन्धो बोध्यः, ध्वनित इति=उक्तार्थप्रतीत्या सहृदयानां व्यतिरेकव्यक्तिरित्यर्थः, इति व्यतिरेकालङ्कारोऽपि ध्वनित इति पाठः, अपिशब्देन पूर्वोक्तव्यतिरेकस्य समुच्चयः, एवंविधा इति । वैशद्यहृद्याकारयुक्ता इत्यर्थः, सन्तापार्तिच्छेदकुशलाश्चेति । आत्मनो हि सन्तापस्यैव च्छेदने कुशलत्वं न सर्वासामार्तीनामिति भावः, बालेन्दुबहुमानेनेति । एते नखाः न किन्तु बालेन्दव इति बहुमत्येत्यर्थः, आयासमिति । अयशोहेतुकं दुःखमित्यर्थः , अनुभवतीवेति । इवशब्दरहितश्च पाठः, उत्प्रेक्षापह्नुतिध्वनिरिति=उत्प्रेक्षार्थोऽपह्नुतिरुत्प्रेक्षाऽपह्नुतिः तस्याः ध्वनिः=अपह्नुत्युत्प्रेक्षयोरङ्गाङ्गितया स्थितत्वात्तत्सङ्करध्वनि-

टिप्पणी

अत्रार्थशक्तीति । प्रकारताऽवच्छेदकताऽवच्छेदकताऽऽपन्नस्य शक्यस्य स्वपदार्थस्य मधुरिपुनखस्य शक्तिः पदपरिवृत्तिसहत्वरूपसामर्थ्यं मूलं प्रयोजकं यस्य तादृशेन स्वतःसम्भविना व्यञ्जनाव्यापारेण । बालचन्द्रत्वमिति । वक्रिमहृद्यत्वनिबन्धनकमनीयत्वकरणकमधुरिपुनखकर्तृकायासकर्मत्वं योग्यतावशात्तादृशचन्द्र एव पर्यवस्यतीति भावः । आयासनेनेति । अत्राप्यायासपदार्थीयतादृशशक्तिप्रयुक्तव्यञ्जनेन विच्छायत्वादिकं वस्तु बालचन्द्रगतं व्यज्यते ।

लोचनम्

पुनरेवंविधा नखा दश बालचन्द्राकाराः सन्तापार्तिच्छेदकुशला
बहुमानेन पश्यति, न तु मामित्याकलयन्बालेन्दुरविरतमायासम
ध्वनिरपि, एवं वस्त्वलङ्काररसभेदेन त्रिधा ध्वनिरत्र श्लोकेऽस्मद्गुराभ

बालप्रिया

रिति यावत्, बालेन्दुरविरतमायासमनुभवतीवेत्युत्प्रेक्षायां हि पूर्वोक्तं तानेव बालेन्दुं बहुमानेन पश्यति न तु मामित्याकलनं निमित्तं तत्र च स्पष्टापह्नुतिः; न ः एते किन्तु बालेन्दव इति लोकस्य प्रतीतेः; तथा चात्रोत्प्रेक्षा नखविषयकनखत्वनिषे र्वकबालेन्दुत्वारोपरूपलोकप्रतीतिविषयकबालचन्द्रगतप्रतीतिनिबन्धनेत्यतोऽपह्नुतिबः त्मानं लभत इत्यङ्गाङ्गिभावो बोध्यः, निगमयत्येवमित्यादि । अत्र वीररसः ङ्गी; उत्साहस्य प्राधान्येन प्रतीयमानत्वादिति ध्येयम्,

नन्वत्र ग्रन्थकारगतभगवद्विषयकरतेर्व्यङ्ग्यत्वस्य वक्तव्यतया भावध्वनिरेवाङ्गित्वेन वाच्यः, रसस्तु तदङ्गतयेति चेदत्राहुः–प्रतिपन्नभगवत्तन्मयीभावस्य ग्रन्थकर्तुराशीः-कर्तृतया वाक्यमिदं न भावपरं भक्तस्य भेदेन भजनीयदेवताविषयकरतेर्व्यङ्ग्यायाः खलु भावत्वम्, ग्रन्थकर्तुर्भगवत्तन्मयीभावश्च स्वयं सूत्रकृदवस्थायां मङ्गलाकरणादपूर्वप्रस्थानकर्तृत्वाच्च सिद्धः,

टिप्पणी

उत्प्रेक्षाऽपह्नुतिध्वनिरपीति । बालचन्द्रकर्तृकायासानुभवस्योत्प्रेक्षा हि नखत्वप्रतिषेधपुरस्सरबालचन्द्रत्वविधानप्रत्ययलक्षणविषयापह्नवमारमनीनमवलम्बतेऽतोऽङ्गाङ्गिभावः सङ्करोऽनयोरिति भावः ।

यत्त्वायासितरूपैकपदव्यञ्जकानुप्रविष्टयोरेनयोरेकव्यञ्जकानुप्रवेशात्मा सोऽत्रेति कश्चित्, तन्मन्दम्–मिथोऽनपेक्षत्वरूपपृथग्व्यवस्थितत्व एव ध्वनिगते योग्यताऽस्त्येकव्यञ्जकानुप्रवेशात्मनः सङ्करस्य, प्रकृते चोक्तदिशोत्प्रेक्षाऽपन्हुत्योः सापेक्षत्व मिथोऽस्ति,

न च नैरपेक्ष्ये संसृष्टेः प्रसङ्ग इति शङ्क्यम्? पदरूपविषयभेदविशिष्टानपेक्षत्वस्य संसृष्टौ विवक्षितत्वाद्,

एकव्यञ्जकानुप्रवेशे च विशेष्यसत्त्वेऽपि विशेषणाभावान्न संसृष्टिलक्षणातिव्याप्तिरित्याकूतम् ।

एवं वस्त्वलंकाररसेति । यद्यपि सर्वमेव वस्तु तथाऽपीह रसालंकारभिन्नं वस्तुपदेन विवक्षितम्, अलंकारत्वं च रसादिप्रतियोगिकभेदवद्व्यङ्ग्यप्रतियोगिकभेदविशिष्टशब्दार्थान्यतरनिष्ठविषयितासम्बन्धावच्छिन्नचमत्कृतिजनकताऽवच्छेदकताऽवच्छेदकत्वम्, रसश्च भग्नावरणचिद्विशिष्टः स्थायी । त्रिधा ध्वनिरत्रेति । यद्यपि प्रकारान्तरेण ध्वनीनां बाहुविध्येऽपि ध्वन्यमानविषयभेदनिबन्धनध्वनिविभागजनकत्वप्रकारकाचार्य्यतात्पर्यविषयीभूतधर्माणां वैविध्येन ध्वनित्रिधात्वमप्यविरुद्धमिति भावः ।

**काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।**
**केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं**
**तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥ १ ॥**

## लोचनम्

अथ प्राधान्येनाभिधेयस्वरूपमभिदधदप्रधानतया प्रयोजनप्रयोजनं तत्सम्बद्धं प्रयोजनं च सामर्थ्यात्प्रकटयन्नादिवाक्यमाह—**काव्यस्यात्मेति** ।

काव्यात्मशब्दसंनिधानाद्बुधशब्दोऽत्र काव्यात्मावबोधनिमित्तक इत्यभिप्रायेण वि-

## बालप्रिया

**अथे**त्यारम्भार्थः। **अभिधेयस्वरूपमिति** । ध्वनिस्वरूपमित्यर्थः। **प्रयोजनेति**। **प्रयोजनस्य** ध्वनिरूपाभिधेयज्ञानस्य **प्रयोजनं** प्रीतिरूपम्, अभिदधदित्यस्यात्रानुषङ्गः। अभिधेयस्वरूपस्य तत्स्वरूपं ब्रूम इति वाक्यार्थत्वं; प्रयोजनप्रयोजनस्य प्रीतय इति पदार्थत्वमतस्तदभिधानयोः प्राधान्याप्राधान्ये। **तत्सम्बद्धमिति** । तेन प्रयोजनप्रयोजनेन सम्बद्धमित्यर्थः । **प्रयोजनम**भिधेयज्ञानरूपम् । **सामर्थ्यात्** अर्थसामर्थ्यादाक्षेपत इति यावत् । **प्रकटयन्** बोधयन् । ध्वनिस्वरूपवचनस्य हि प्रयोजनं ध्वनिस्वरूपज्ञानं सहृदयानाम् । तस्य हि प्रयोजनं मनःप्रीतिः । एवञ्च तयोर्हेतुहेतुमद्भावेन प्रयोजनप्रयोजनरूपायाः प्रीतेरभिधानात्तद्धेतुभूतस्य ध्वनिस्वरूपज्ञानस्य प्रकटनं सिद्ध्यतीति भावः ।

ननु बुधशब्दस्य सामान्यतो ज्ञातृवाचित्वात् वृत्तौ 'काव्यतत्त्वविद्भिरि'ति कुतो व्याख्यातमित्यतस्तदवतारयति—**काव्येति**। **काव्यात्मबोधः निमित्तं** प्रयोगनिमित्तं यस्य सः। यद्वा **निमित्तं** प्रवृत्तिनिमित्तम् । तच्च तत्पदजन्यबोधे प्रकारतया भासमानो धर्मः । ननु

## टिप्पनी

प्राधान्येनेति । प्रतिपिपादयिषितत्वान्मुख्यत्वेन। अभिधेयेति । "तेन ब्रूम" इति प्रतिज्ञातत्वाद्ध्वन्यात्मकविषयम् । प्रयोजनप्रयोजनमिति । ध्वनिस्वरूपाभिधानस्य ध्वनिस्वरूपज्ञानं प्रयोजनम्, अस्य च सहृदयमनःप्रीतिरतदिति भवति तदभिधानस्य तादृशप्रीतिस्तथा प्रयोजनम् ।

प्रयोजनप्रयोजनतावच्छेदककुक्षौ मनःपदोपादानं च भरतदर्शनाध्वनीनानां प्रक्रियांशे भूम्ना व्याकरणदर्शनानुसारित्वस्फोरणाय, इदमीये हि दर्शने सुखादिविशेषगुणानां मनोनिष्ठत्वमेवाभिमतं नात्मनिष्ठत्वम् ।

बुधशब्दोऽत्रेति । सामान्यपरशब्दानां विशेषपरत्वे लक्षणैवाश्रयणीयाऽन्यथा शाब्दविषयत्वानुपपत्तिरेव स्यात् ।

**बुधैः काव्यतत्त्वविद्भिः**, काव्यस्यात्मा ध्वनिरिति **संज्ञितः**, परम्परया यः समाम्नातपूर्वः सम्यक् आसमन्तादाम्नातः प्रकटितः, तस्य सहृद-

### लोचनम्

वृणोति—**काव्यतत्त्वविद्भिरिति** । आत्मशब्दस्य तत्त्वशब्देनार्थं विवृण्वानः सारत्वमपरशाब्दवैलक्षण्यकारित्वं च दर्शयति । इतिशब्दः स्वरूपपरत्वं ध्वनिशब्दस्याचष्टे, तदर्थस्य विवादास्पदीभूततया निश्चयाभावेनार्थत्त्वायोगात् । एतद्विवृणोति—**संज्ञित इति** । वस्तुतस्तु न तत्संज्ञामात्रेणोक्तम्, अपि त्वस्त्येव ध्वनिशब्दवाच्यं प्रत्युत समस्तसारभूतम् । न ह्यन्यथा बुधास्तादृशमामनेयुरित्यभिप्रायेण विवृणोति—**तस्य सहृदयेन्यादि**-

### बालप्रिया

काव्यात्मविद्भिरित्येव कुतो नोक्तमित्यत आह—**आत्मेति**। **तत्त्वशब्देन** अबाधितस्वरूपवाचिना तत्त्वशब्देन। **अपरेति**। अपरेभ्यः शाब्देभ्यः लौकिकवैदिकशब्दप्रतिपाद्येभ्यः स्वस्य **यद्वैलक्षण्यं** सहृदयश्लाघ्यत्वादिना तत्कारित्वम्, **दर्शयति** व्यञ्जयति, तदर्थस्येति शेषः । आत्मेवात्मेत्यात्मशब्दोऽत्र गौणः; तेन चाबाधितस्वरूपत्वरूपात्मसाम्येन ध्वनिरूपार्थो लक्ष्यत इति ज्ञापनाय तत्त्वशब्देन तदर्थविवरणं, तेन तस्य सारत्वादिकं व्यङ्ग्यमिति भावः। **इतिशब्द** इति। ध्वनिरितीत्यत्रेतिशब्द इत्यर्थः। **आचष्टे** ग्राहयति, सर्वशब्दानां शब्दस्वरूपपरत्वं तत्तत्सङ्केतितार्थपरत्वञ्चास्ति। तत्रेतिशब्दप्रयोगे शब्दस्वरूपपरत्वं, प्रकृते ध्वनिपदोत्तरमितिशब्दकरणाद्ध्वनिशब्दोऽयं संज्ञारूपध्वनिशब्दस्य प्रतिपादक इत्यर्थः । तत्संज्ञाप्रकारेण संज्ञिनो भानञ्चाक्षेपादिना भवति यथा जातिशक्तिपक्षे व्यक्तेर्भानम् । यद्वा ध्वनिपदस्य लक्षणया ध्वनिसंज्ञित इत्यर्थ इति भावः। उक्तार्थे हेतुमाह—**तदर्थस्ये**त्यादि । **तदर्थस्य** ध्वनिशब्दाभिधेयस्य ध्वन्यमानत्वविशिष्टस्य, **विवादास्पदीभूततया** ध्वनिरस्ति नास्तीति विप्रतिपत्तिविषयतया। **निश्चयाभावेनेति**। निश्चयाभाव इति पाठे निमित्ते सप्तमी। ध्वन्यमानत्वप्रकारेण तद्धर्मिणो मध्यस्थानां निश्चयाभावादित्यर्थः। **अर्थत्वायोगादिति**। ध्वनिपदनिरूपितवृत्तिग्रहाधीनज्ञानविषयत्वासम्भवादित्यर्थः। यद्वा तदर्थस्येत्यस्य निश्चयाभावेनेत्यनेन सम्बन्धः । **अर्थत्वायोगादिति** ध्वन्यमानत्वविशिष्टरूपार्थवत्त्वासम्भवादित्यर्थः। ध्वनिशब्दस्येत्यस्यानुषङ्गः । **एतदिति** ध्वनिशब्दस्य स्वरूपपरत्वमित्यर्थः । नन्वेवं ध्वनिशब्दस्य ध्वनिसंज्ञित इत्यर्थकथने सति तस्य 'सहृदयमनःप्रकाशमानस्यापी'ति समनन्तरग्रन्थविरोधः, सहृदयमनःप्रकाशमानस्येत्यनेन ध्वन्यमानत्वविशिष्टार्थस्य सहृदयप्रतीतिविषयत्वाभिधानादित्याशङ्कां परिहर्तुं तद्ग्रन्थाभिप्रायमाह—**वस्तुतस्त्वि**त्यादि । **तदिति** । ध्वनिपदमित्यर्थः । यद्वा ध्वनिरूपं वस्त्वित्यर्थः। **संज्ञामात्रेणेति** । मात्रपदेन ध्वन्यमानत्वरूपप्रवृत्तिनिमित्तस्य व्यवच्छेदः । **ध्वनिशब्दवाच्यं** ध्वन्यमानत्वविशिष्टम् । अस्त्येवेत्यत्र हेतुमाह—**न ह्यन्यथे**त्यादि । **विवृणोतीति**—कारिकास्थं तस्येति पदं व्याचष्ट इत्यर्थः। **सहृदयेत्यादिनेति**। सहृदयमनःप्रकाशमानस्ये-

लोचनम्

ना। एवं तु युक्ततरम्—इतिशब्दो भिन्नक्रमो वाक्यार्थपरामर्शकः, ध्वनिलक्षणोऽर्थः काव्यस्यात्मेति यः समाम्नात इति। शब्दपदार्थकत्वे हि ध्वनिसंज्ञितोऽर्थ इति का सङ्गतिः? एवं हि ध्वनिशब्दः काव्यस्यात्मेत्युक्तं भवेद्, गवित्ययमाहेति यथा। न च विप्रतिपत्तिस्थानमसदेव, प्रत्युत सत्येव धर्मिणि धर्ममात्रकृता विप्रतिपत्तिरित्यलमप्रस्तुतेन भूयसा सहृदयजनोद्वेजनेन। बुधस्यैकस्य प्रामादिकमपि तथाभिधानं स्यात्, न तु भूयसां तद्युक्तम्। तेन बुधैरिति बहुवचनम्। तदेव व्याचष्टे—**परम्परयेति।** अविच्छिन्नेन प्रवाहेण तैरेतदुक्तं विनाऽपि विशिष्टपुस्तकेषु विनिवेशनादित्यभिप्रायः। न च बुधा भूयां-

बालप्रिया

त्यनेनेत्यर्थः। यदिदं संज्ञाप्रकारेण ध्वनिलक्षणं वस्तु काव्यात्मत्वेनाभिहितं तदश्रद्धोपहन्यमानमानसजनबुद्ध्यनुरोधेनैव। ध्वन्यमानत्वविशिष्टार्थस्य सहृदयप्रतीतिसिद्धतया तद्बुद्ध्यनुरोधेन च समनन्तरग्रन्थ इति भावः। यद्वा नन्वेवं ध्वनिपदस्य ध्वनिसंज्ञित इत्यर्थकत्वे कथमभावादिवादिप्रत्युत्थानम्, तेषां ध्वन्यमानत्व एव विवादेन ध्वनिसंज्ञायां विवादाभावादित्यत आह—**वस्तुतस्त्वि**त्यादि। **विवृणोतीति**। विविच्य वदतीत्यर्थः। **सहृदये-त्यादिनेति**। आदिपदेन सहृदयमनःप्रकाशमानस्याप्यभावमन्ये जगदुरित्यादेस्सङ्ग्रहः। ध्वनिरितीति योजनेन वृत्तिकृद्विवरणमुपलक्षणमित्यभिप्रायेणाह—**एवं त्वि**त्यादि। एवं वक्ष्यमाणं योजनं व्याख्यानं वेति शेषः। **युक्ततरमिति**। तरपा पूर्वव्याख्यानस्य युक्तत्वमस्तीति ज्ञाप्यते। **भिन्नक्रम** इति। यस्मादनन्तरं श्रूयते ततोऽन्यत्र योजनीय इत्यर्थः। काव्यस्यात्मेति समाम्नातपूर्व इति योजनेति भावः। **वाक्यार्थपरामर्शक** इति। समाम्नाने काव्यस्यात्मेति वाक्यार्थप्रतिपादकत्वं बोधयतीत्यर्थः, न तु तद्वाक्याभेदमिति भावः। वाक्यमत्र पदसमुदायः। योजनां दर्शयति—**ध्वनी**त्यादि। ध्वनिरित्यस्य विवरणं—**ध्वनिलक्षणोऽर्थ** इति। ध्वन्यमानत्वविशिष्ट इत्यर्थः। एवञ्चास्यैवार्थस्य तस्येति तत्पदेन परामर्शः। ध्वनिरितीति योजनापक्षे ध्वनिपदस्य केवलसंज्ञापरत्वे दोषमाह—**शब्दे**त्यादि। **शब्दपदार्थकत्वे** ध्वनिपदस्य ध्वनिरिति संज्ञामात्रार्थकत्वे सति। **का सङ्गतिरि**ति। असङ्गतं स्यादित्यर्थः। अत्र हेतुमाह—**एवं ही**त्यादि। ध्वनिपदस्य प्रागुक्तरीत्याऽर्थपरत्वासङ्गतिशङ्कां परिहरति—**न चे**त्यादि। **विप्रतिपत्तिस्थानं** विप्रतिपत्तिविषयो धर्मी। **धर्ममात्रकृते**त्यादि। यथा शब्दादौ सत्येव धर्मिणि नित्यत्वानित्यत्वादिधर्मकृता विप्रतिपत्तिः, प्रकृते च ध्वनिसंज्ञिते धर्मिणि गुणालङ्कारान्तर्भूतत्वभाक्तत्वादिधर्मकृता विप्रतिपत्तिरिति भावः। बुधैरिति बहुवचनार्थं व्याचष्टे—**बुधस्ये**त्यादि। **तथाभिधानं** काव्यात्मत्वेनाभिधानम्। **तत्** प्रामादिकाभिधानम्। **तेने**ति। तदभिधानस्य प्रामाणिकत्वेनोपादेयत्वद्योतनार्थमित्यर्थः। **तदेवे**ति। उक्तप्रयोजनकं बहुवचनमेवेत्यर्थः। परम्परयेत्यस्य विवरणम**विच्छिन्नेने**त्यादि। **एतदिति**। ध्वनेः काव्यात्मत्वमित्यर्थः। **विशिष्टे**ति। विशिष्टपुस्तकेषु **विनिवेशनं** लेखनेन स्थापनं, तस्माद्विनाऽप्युक्तमिति सम्बन्धः। साक्षादुपदेशसिद्धोऽयमर्थ इति भावः।

यजनमनःप्रकाशमानस्याप्यभावमन्ये जगदुः। तदभाववादिनां चामी

लोचनम्

सोऽनादरणीयं वस्त्वादरेणोपदिशेयुः; एतत्त्वादरेणोपदिष्टम्। तदाह—**सम्यगाम्नातपूर्व** इति। पूर्वग्रहणेनेदम्प्रथमता नात्र सम्भाव्यत इत्याह, व्याचष्टे च—**सम्यगासमन्तात् म्नातः प्रकटित** इत्यनेन। **तस्येति**। यस्याधिगमाय प्रत्युत यतनीयं, का तत्राभावसम्भावना। अतः किं कुर्मः, अपारं मौर्ख्यमभाववादिनामिति भावः। न चास्माभिरभाववादिनां विकल्पाः श्रुताः, किं तु सम्भाव्य दूषयिष्यन्ते, अतः परोक्षत्वम्। न च भविष्यद्वस्तु दूषयितुं युक्तम्, अनुत्पन्नत्वादेव। तदपि बुद्ध्यारोपितं दूष्यत इति चेत्; बुद्ध्यारोपितत्वादेव भविष्यत्त्वहानिः। अतो भूतकालोन्मेषात् पारोक्ष्याद्विशिष्टाद्यतनत्वप्रतिभानाभावाच्च लिटा प्रयोगः कृतः—**जगदुरिति**। तद्व्याख्यानायैव सम्भाव्य दूषणं प्रकटयिष्यति। सम्भावनाऽपि नेयमसम्भवतो युक्ता, अपि तु सम्भवत एव, अन्यथा सम्भावनानामपर्य-

बालप्रिया

**इत्यभिप्राय** इति। परम्परयेति वचने वृत्तिकाराभिप्राय इत्यर्थः। समाम्नातपूर्व इत्यत्र संशब्दार्थं दर्शयितुमाह—**न चे**त्यादि। पूर्वग्रहणस्य फलमाह—**पूर्वे**ति। **अत्र** आख्याने। **इत्याह** इति व्यञ्जयति। **व्याचष्टे चे**ति। उक्तमर्थं व्याचष्टे चेत्यर्थः। सम्यगित्यादिना पूर्वशब्दार्थोऽपि व्याख्यात इति भावः। बुधसमाम्नातत्वोक्त्या लब्धस्य विवरणं सहृदयमनःप्रकाशमानस्यापीति। तेन गम्यमर्थन्दर्शयति—**यस्ये**त्यादिना। जगदुरिति लिटः प्रयोगस्योपपत्तिं वृत्तौ व्याचक्षीरन्नित्यादेस्तद्विवरणरूपत्वादिकञ्च दर्शयितुमाह—**न चे**त्यादि। **अस्माभिः** ध्वनिवादिभिः, विरुद्धाः कल्पा **विकल्पा** विकल्पितार्थाः। यदि न श्रुताः कथन्तर्हि दूषयिष्यन्त इत्यत आह—**सम्भाव्ये**ति। केचिदाचक्षीरन्नित्यादिना सम्भावना। यत्रार्थश्शब्दो वेत्यत्र व्याख्याने 'यदप्युक्त'मित्यनुवादपूर्वकं 'तदप्ययुक्त'मित्यादिना दूषणञ्चेति बोध्यम्। **अत** इति। अश्रुतत्वादित्यर्थः। भूतत्वं साधयितुमाह—**न चे**ति। **अनुत्पन्नत्वादेवे**ति। एवकारः पौनर्वचनिकः, पूर्वोक्ताद्भविष्यत्वादेवेत्यर्थः। शङ्कते—**तदपी**ति। **तत्** भविष्यद्वस्तु, बुद्धावारोपितं **बुद्ध्यारोपितं** बुद्धिविपर्यासीकृतम्। समाधत्ते—**बुद्धी**ति। आरोपणं करणम्। उपसंहरति—**अत** इति। वास्तवभूतत्वस्यासम्भवमभिप्रेत्य **उन्मेषादि**त्युक्तम्। प्रातिभासिकं भूतकालावच्छिन्नत्वं लिट्प्रयोगावलम्बनमिति भावः। **विशिष्टे**ति। कालविशेषरूपेत्यर्थः। एवं लिटः प्रयोगं प्रसाध्याचक्षीरन्नित्यादिलिङ्प्रयोगान् प्रकृतसङ्गतान् दर्शयति—**तद्व्याख्यानायैवे**ति। लिटो व्याख्यानायैवेत्यर्थः, न तु स्वतन्त्रतयेत्येवकारार्थः। व्याख्यानायेत्यस्य सम्भाव्येत्यनेन सम्बन्धः। नन्वाचक्षीरन्नित्यादिभिरेव जगदुरित्यस्य व्याख्याने सम्भवति किं मध्ये तदभाववादिनाञ्चामी इत्यादिग्रन्थेनेत्याशङ्कावारणायावतारयति—**सम्भावनाऽपीति**। **इयं** लिट्समर्थकत्वेनोपात्ता। **असम्भवतः** कथञ्चिदप्यप्रतीतस्य। **अपर्यवसानं स्यादि**ति। पर्यवसानस्थानालाभादिति भावः।

**विकल्पाः संभवन्ति ।**

### लोचनम्

वसानं स्यात् दूषणानां च। अतः सम्भावनामभिधायिष्यमाणां समर्थयितुं पूर्वं **सम्भवन्तीत्याह**। सम्भाव्यन्त इति तूच्यमानं पुनरुक्तार्थमेव स्यात्। न च सम्भवस्यापि सम्भावना, अपि तु वर्तमानतैव स्फुटेति वर्तमानेनैव निर्देशः। ननु चासम्भवद्वस्तुमूलया सम्भावनया यत्सम्भावितं तद्दूषयितुमशक्यमित्याशङ्क्याह—**विकल्पा** इति। न तु वस्तु सम्भवति तादृक् यत इयं सम्भावना, अपि तु विकल्पा एव। ते च तत्त्वावबोधवन्ध्यतया स्फुरेयुरपि, अत एव 'आचक्षीरन्' इत्यादयोऽत्र सम्भावनाविषया लिङ्प्रयोगा अतीतपरमार्थे पर्यवस्यन्ति। यथा—

> यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत्।
> दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत्॥

### बालप्रिया

**अभिधायिष्यमाणाम्** आचक्षीरन्नित्यादिना वक्ष्यमाणाम्। **समर्थयितुमि**ति। यत्सम्भवति तत्सम्भाव्यत इति व्याप्त्या साधयितुमित्यर्थः।**सम्भवन्तीत्याहे**ति।'तदभाववादिनामि'त्यादि'सम्भवन्ती'त्यन्तमाहेत्यर्थः।ननु सम्भवन्तीत्यस्य स्थाने सम्भाव्यन्त इत्युच्यतां तदा प्रतिज्ञा चादौ कृता स्यादित्यत्राह—**सम्भाव्यन्त इती**ति। **पुनरुक्तार्थमि**ति। लिङ्भिरित्यर्थः। ननु सम्भावनामूलभूतस्सम्भवोऽपि किं सम्भावनीयः? नेत्याह—**न चे**ति। **वर्तमानेनेति**। लटेत्यर्थः। विकल्पा इत्युक्तमवतारयति—**ननु चे**ति। सम्भवद्वस्तुमूलमाश्रयो यस्यास्तया, **सम्भावितं** विषयीकृतमुत्पादितं वा। विकल्पा इत्युक्तया कथं परिहार इत्यतस्तत्प्रकारं व्याचष्टे—**न त्वि**त्यादि। तादृक्सम्भावनया सम्भावितं **वस्तु** परमार्थसन्न सम्भवति। अत्र हेतु**र्यत** इति। **इयमि**ति। कारणभूतेत्यर्थः। तर्हि किमालम्बना सम्भावनेत्यत आह—**अपि त्वि**त्यादि। प्रमाणयुक्त्याभासाभ्यामधिष्ठानभूते काव्यात्मनि ध्वनिस्वरूपे विरुद्धतया कल्प्यन्त इति **विकल्पाः** पक्षाः। ननु भावे कथमभावकल्पनेत्यत आह—**ते चे**ति। **तत्त्वे**ति। ध्वनिस्वरूपकाव्यात्मसंवित्तिविरहेणेत्यर्थः। **स्फुरेयुरपि** स्फुरन्त्येव। **अत एवे**ति। यत इमे पक्षा भ्रान्तिकल्पिताः, तत एवेत्यर्थः। **अतीते**ति। अतीतो भूतः **परमार्थ**स्तात्पर्यार्थो येषां ते। परमार्थत्व इति च पाठः। पर्यवस्यन्तीति मूले जगदुरिति लिट्प्रयोग इव वृत्तावाचक्षीरन्नित्यादिसम्भावनार्थकलिङ्प्रयोगोऽपि क्रियायाः सम्भावनारूपबुद्ध्यारोपितत्वनिमित्तकभूतत्वे पर्यवस्यतीत्यर्थः। उक्तार्थे दृष्टान्तमाह—**यथे**ति। **यदि नामे**ति। वस्तुतत्त्वनिवेदनमुखेन वैराग्यजननार्थमिदं वचनम्। **कायस्य** शरीरस्य। **यदि**ति। मांसादीत्यर्थः। **शुनः काकांश्चे**ति भक्षणाय प्रवृत्तानित्यर्थात् सिद्ध्यति। **इत्यत्रे**ति। भूतप्राणतेवेति सम्बन्धः। **एव**मिति। बहिर्भूतान्तर्गतमांसादिकत्वेनेत्यर्थः।

लोचनम्

इत्यत्र। यद्येवं कायस्य दुष्टता स्यात्तदैवमवलोक्येतेति भूतप्राणतैव। 'यदि न स्यात्ततः किं स्यादि'त्यत्रापि, किं वृत्तं यदि पूर्ववन्न भवनस्य सम्भावनेत्ययमेवार्थ इत्यलमप्रकृतेन बहुना। तत्र समयापेक्षणेन शब्दोऽर्थप्रतिपादक इति कृत्वा वाच्यव्यतिरिक्तं नास्ति व्यङ्ग्यम्, सदपि वा तदभिधावृत्त्याक्षिप्तं शब्दावगतार्थबलाकृष्टत्वाद्भाक्तम्, तदनाक्षिप्तमपि वा न वक्तुं शक्यं कुमारीष्विव भर्तृसुखमतद्वित्सु इति त्रय एवैते प्रधानविप्रतिपत्तिप्रकाराः। तत्राभावविकल्पस्य त्रयः प्रकाराः—शब्दार्थगुणालङ्काराणामेव शब्दा-

बालप्रिया

**कायस्य** शरीरस्य। **एवमि**ति। निवार्यमाणश्वकाकत्वेन लोक इत्यर्थः। वाक्याभ्यां श्लोकस्य सारार्थौ दर्शितः। **भूतप्राणतैवे**ति। अतीतपरमार्थतैवेत्यर्थः। सम्भावनाविषयतद्बहिर्भवनादिक्रियायाः भूतकालावच्छिन्नत्वमेव प्रतीयत इति यावत्। विधाविव निषेधस्थलेऽप्येवमेवेति दर्शयितुमाह—**यदी**त्यादि। यदि नामेत्यादिपद्यस्य शेषभूतमिदमेकपादात्मकं वाक्यम्—**यदि न स्यादि**ति। कायस्यान्तर्यत्तद्बहिर्न स्याद्यदीत्यर्थः। किन्तु यथायथमेव व्यवस्थितान्तर्बहिर्भाग एवायं कायस्स्यादिति भावः। **ततः किं स्या**दिति। तदाऽपि किं फलं स्यादित्यर्थः। तदाऽप्यतिजुगुप्सितोऽयं कायो निष्फल एव फल्गुतरविषयोपभोगमात्रोपयोगित्वादिति भावः। **इत्यत्रापी**त्यस्य **अयमेवार्थ** इत्यनेन सम्बन्धः। उक्तं वाक्यं स्वयं व्याचष्टे—**किं वृत्तमि**त्यादि। यदि न भवनस्य सम्भावना किं वृत्तमिति योजना। **ततः किं स्यादि**त्यस्य विवरणं—**किं वृत्तमि**ति। तदापि किं फलं जातं न किञ्चिदित्यर्थः। **यदि न स्यादि**त्यस्य विवरणं **यदि न भवनस्य सम्भावने**ति। **पूर्ववदि**ति वैधर्म्येण दृष्टान्तकथनं, यदि नामेत्यादौ यथा भवनस्य सम्भावनेति। **अयमेवार्थ** इति निषेधस्थलेऽपि लिङस्सम्भावनैवार्थ इति भावः। अथादौ प्रतिपत्तिसौकर्याय तात्पर्यं दर्शयति—**तत्रे**त्यादिना। **तत्र** ध्वनिविषये। **समयापेक्षणेन** सङ्केतसहकारेण। **इति कृत्वा** इत्यतो हेतोः, शब्दस्य सङ्केतितार्थबोधकत्वादिति यावत्। **वाच्यव्यतिरिक्तं** सङ्केतितार्थव्यतिरिक्तम्। **व्यङ्ग्यं** तत्त्वेनाभिमतम्, **नास्ति** काव्ये नास्ति, व्यङ्ग्यत्वेनाभिमतं काव्यप्रतिपाद्यं न भवति काव्यशब्दासङ्केतितत्वादित्यर्थः। **सदपी**ति। तद्वाच्यव्यतिरिक्तं व्यङ्ग्यं सदपि भाक्तमिति सम्बन्धः। अत्र हेतुः—**अभिधावृत्त्याक्षिप्तमि**ति। **अभिधावृत्त्या** अभिधापुच्छभूतया **वृत्त्या** लक्षणया, **आक्षिप्तं** बोधितम्। अत्र हेतुः—**शब्दे**ति। **बलं** सहकारि। **तदनाक्षिप्तं** अभिधावृत्त्यनाक्षिप्तम्। तत्सदित्यनयोरनुषङ्गः, सदपीति योजना। **वक्तुम्** असाधारणधर्मप्रकारेण प्रतिपादयितुम्। **न शक्यं** शक्तिर्नास्ति बुधेष्विति शेषः। अत्र दृष्टान्तः—**कुमारीष्विवे**ति। वचनशक्त्यधिकरणत्वविवक्षया सप्तमी। **अतद्वित्सु** भर्तृसुखमजानतीषु। **प्रधानविप्रतिपत्ती**ति। कारिकोक्तत्वादेषां प्राधान्यम्। तानेव प्रकारानाह—**शब्दे**त्यादि। शब्दार्थयोर्ये गुणाः, अलङ्काराश्च तेषामेव। ते ह्युभयवादिसिद्धशोभाहेतुभावाः। **शब्दे**ति। काव्यशोभाकारित्वादित्यर्थः। हेतुरयं वक्ष्यमाणे सर्वत्र बोध्यः—यत्र यत्र काव्यशोभाकारित्वं तत्र तत्र श-

लोचनम्

र्थशोभाकारित्वाल्लोकशास्त्रातिरिक्तसुन्दरशब्दार्थमयस्य काव्यस्य न शोभाहेतुः कश्चिदन्योऽस्ति योऽस्माभिर्न गणित इत्येकः प्रकारः, यो वा न गणितः स शोभाकार्येव न भवतीति द्वितीयः, अथ शोभाकारी भवति तर्ह्यस्मदुक्त एव गुणे वालङ्कारे वान्तर्भवति, नामान्तरकरणे तु कियदिदं पाण्डित्यम्। अथाप्युक्तेषु गुणेष्वलङ्कारेषु वा नान्तर्भावः, तथापि किंचिद्विशेषलेशमाश्रित्य नामान्तरकरणमुपमाविच्छित्तिप्रकाराणामसंख्यत्वात्। तथापि गुणालङ्कारव्यतिरिक्तत्वाभाव एव। तावन्मात्रेण च किं कृतम्? अन्यस्यापि वैचित्र्यस्य शक्योत्प्रेक्षत्वात्। चिरन्तनैर्हि भरतमुनिप्रभृतिभिर्यमकोपमे एव शब्दार्थालङ्कारत्वेनेष्टे, तत्प्रपञ्चदिक्प्रदर्शनं त्वन्यैरलङ्कारकारैः कृतम्। तद्यथा—'कर्मण्यण्' इत्यत्र कुम्भकाराद्युदाहरणं श्रुत्वा स्वयं नगरकारादिशब्दा उत्प्रेक्ष्यन्ते, तावता क आत्मनि बहुमानः। एवं-

बालप्रिया

ब्दार्थगुणाद्यन्यतमत्वमिति व्याप्तिरनेन दर्शिता। **लोके**ति। लोकशास्त्रशब्दौ लौकिकवैदिकशब्दपरौ। **अन्यः** गुणालङ्कारेभ्योऽन्यः, कश्चिन्नास्तीति सम्बन्धः। गुणाद्यतिरिक्तः काव्यशोभाहेतुः कश्चिन्नास्तीति प्रतिज्ञा, प्रमाणाभावादिति हेतुरत्र बोध्यः। नन्वियं प्रतिज्ञा न युक्ता, गुणाद्यतिरिक्तस्य शोभाहेतोस्सिद्धौ तन्निषेधायोगादसिद्धौ निषेधस्याशक्यत्वाच्चेत्यत आह—**योऽस्माभि**रित्यादि। भवतामभिमत इति चार्थात्सिद्ध्यति, तथा च परमते प्रतियोगिप्रसिद्ध्या तन्निषेध इति भावः। ननु लब्धरूपे क्व चिदित्याद्युक्तनीत्या धर्मिस्वरूपसिद्ध्युपजीवनेन धर्मविशेषविषयतयैव निषेधस्यानुज्ञेयत्वाद्व्यङ्ग्यस्वरूपसत्तानिषेधो न सम्भवतीत्यतो द्वितीयं प्रकारमाह—**यो वे**त्यादि। **न गणित** इति। गुणालङ्कारव्यतिरिक्तत्वेनेत्यर्थात्। **स** इति अस्माभिरगणितो व्यङ्ग्यत्वेन भवदभिमतोऽर्थ इत्यर्थः। ननु व्यङ्ग्यस्य शोभाकारित्वं स्वसंवेदसाक्षिकं कथमपह्नूयत इत्यतः प्रकारान्तरमाह—**अथे**त्यादि। **स** इत्यनुपज्यते। **अथ** यदि। **अन्तर्भवती**ति। व्यङ्ग्यत्वेनाभिमतं गुणालङ्कारान्यतरदेव भवितुमर्हति काव्यशोभकारित्वादित्यर्थः।

ननु ध्वन्यादिसमाख्यावशात्तद्भेदसिद्धिरित्यत आह—**नामान्तरे**ति। ननु न केवलं नामान्तरकरणमेव, तन्निमित्तमस्त्यतो न गुणाद्यन्तर्भाव इत्याशङ्कामभ्युपगच्छति—**अथापी**त्यादि। **नान्तर्भाव** इति। काव्यजीवितत्वादिविशेषादिति भावः। परिहरति—**तथापी**त्यादि। **नामान्तरकरण**मिति। अस्मदुक्तानां गुणादीनां काव्यजीवितत्वादिविशेषमाश्रित्य ध्वन्यादिनामान्तरं भवद्भिः क्रियत इत्यर्थः। अत्र हेतुमाह—**उपमे**ति। **विच्छित्तिः** वैचित्र्यम्। **उपमे**त्यलङ्कारान्तराणां गुणानाञ्चोपलक्षणम्। फलितमाह—**तथापी**त्यादि। **तथापि** तथा च। ततः किमिति तदाह—**ताव**दिति। **तावन्मात्रेण** किंचिद्विशेषलेशमाश्रित्य नामान्तरकरणमात्रेण। **किं कृत**मिति। न किंचिदपि पाण्डित्यं सम्पादितमित्यर्थः। अत्र हेतुर**न्यस्ये**ति। तदेवोपपादयति—**चिरन्तनै**रित्यादि। उक्तमर्थं सोपहासदृष्टान्तं निगमयति—**तदि**त्यादि। **तत्** तस्मात्। तत्रेति वा पाठः। तथा सती-

**तत्र केचिदाचक्षीरन्— शब्दार्थशरीरन्तावत्काव्यम् । तत्र च शब्दग-**

लोचनम्

प्रकृतेऽपीति तृतीयः प्रकारः । एवमेकस्त्रिधा विकल्पः, अन्यौ च द्वौविति पञ्च विकल्पा इति तात्पर्यार्थः । तानेव क्रमेणाह—**शब्दार्थशरीरं तावदित्यादिना** । तावद्ग्रहणेन कस्याप्यत्र न विप्रतिपत्तिरिति दर्शयति। तत्र शब्दार्थौ न तावद्ध्वनिः, यतः संज्ञामात्रेण हि को गुणः ? अथ शब्दार्थयोश्चारुत्वं स ध्वनिः । तथापि द्विविधं चारुत्वम्— स्वरूपमात्रनिष्ठं संघटनाश्रितं च । तत्र शब्दानां स्वरूपमात्रकृतं चारुत्वं शब्दालङ्कारेभ्यः, संघटनाश्रितं तु शब्दगुणेभ्यः । एवमर्थानां चारुत्वं स्वरूपमात्रनिष्ठमुपमादिभ्यः । संघटनापर्यवसितं त्वर्थगुणेभ्य इति न गुणालङ्कारव्यतिरिक्तो ध्वनिः कश्चित्। **संघटनाधर्मा इति**। शब्दार्थयोरिति शेषः । यद्गुणालङ्कारव्यतिरिक्तं तच्चारुत्वकारि न भवति, नित्यानित्यदोषा असाधुदुःश्रवादय इव । चारुत्वहेतुश्च ध्वनिः, तन्न तद्व्यतिरिक्त इति व्यतिरेकी हेतुः। ननु वृत्तयो रीतयश्च यथा गुणालङ्कारव्यतिरिक्ता-

बालप्रिया

त्यर्थः। **इति तात्पर्यार्थ** इति। वृत्तिग्रन्थस्येति शेषः । 'शब्दार्थशरीरं तावदि'त्यत्र तावच्छब्दस्सम्प्रतिपत्त्यर्थ इत्याह—**तावद्ग्रहणेने**ति। कस्याप्यत्र न विप्रतिपत्तिरिति ध्वनिवादिनोऽप्यभिमतमेतदित्यर्थः। शब्दार्थयोर्ध्वनित्वमनिराकृत्य तदाश्रितगुणादीनां ध्वनित्वनिराकरणमसंगतं स्यादतस्तेषां क्रमेण ध्वनित्वं निराकरोति—**तत्रे**त्यादिना । **तावत्** प्रथमम्। **न ध्वनिरि**ति। तयोः शरीरत्वेन जीवितरूपव्यङ्ग्यत्वाभ्युपगमस्य स्वसिद्धान्तविरुद्धत्वादिति भावः। यदि च तयोरेव ध्वनिसंज्ञा, तदा व्यर्थः प्रयास इत्याह—**संज्ञेति** । **गुणः** उपकारः । **अथे**त्यादि । **अथ** यदि, यतश्चारुत्वम्। **स** इति। चारुत्वहेतुरित्यर्थः। **तथापी**त्यस्य न गुणालङ्कारव्यतिरिक्तो ध्वनिः कश्चिदित्यनेन सम्बन्धः। अत्र हेतुं चारुत्वस्य गुणालङ्कारमात्रकार्यत्वप्रदर्शनेनाह—**द्विविधमि**त्यादिना। **स्वरूपमात्रकृतं** स्वरूपमात्रनिष्ठम्। **संघटने**ति। रचनेत्यर्थः। गुणानां संघटनाश्रितत्वं वक्ष्यते। **इती**ति—हेतौ । यतो गुणालङ्कारजन्यचारुत्वविधाद्वयानन्तर्भूतचारुत्वविधान्तरविरहस्तत इत्यर्थः। नेत्यादि । चारुत्वहेतोर्ध्वनेर्न गुणालङ्कारातिरिक्ततया सद्भावः सेद्धुमर्हतीत्यर्थः। संघटनाधर्मा इत्यत्र स्वोक्तार्थानुरोधेन पूरयति—**शब्दार्थयोरिति शेष** इति। स्वोक्तार्थेऽनुमानं प्रमाणमाह—**यदि**त्यादि। अत्रोदाहरणावयवत्रयप्रदर्शनं मीमांसकमतानुरोधेन। ध्वनित्वेनाभिमतो न गुणालङ्कारव्यतिरिक्तः, चारुत्वहेतुत्वादिति प्रतिज्ञाहेतू द्रष्टव्यौ। **असाधुदुःश्रवादय** इति भावप्रधानो निर्देशः। असाधुत्वं व्याकरणलक्षणरहितत्वं स नित्यो दोषः, सर्वत्र वर्जनीयत्वात् । दुःश्रवत्वं श्रुतिदुष्टत्वं, स ह्यनित्यो दोषः, शृङ्गारादावेव वर्जनीयत्वाद् । **व्यतिरेकी**ति । केवलव्यतिरेकीत्यर्थः । गुणालङ्कारविशेषयोरत्र दृष्टान्तत्वसम्भवादन्वयव्यति-

१. इत आरभ्य साहित्यव्याकरणाचार्यैः पं० महादेवशास्त्रिपाण्डेयैर्विरचिता टिप्पणी पं० पद्माभिरामशास्त्रिणा विरचितं विवरणं च । प्रकाश्यते। अत्राऽयमनुमानप्रयोगः—

**ताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव । अर्थगताश्चोपमादयः । वर्णसंघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते । तदनतिरिक्तवृत्तयो वृत्तयोऽपि**

**लोचनम्**

श्चारुत्वहेतवश्च, तथा ध्वनिरपि तद्व्यतिरिक्तश्च चारुत्वहेतुश्च भविष्यतीत्यसिद्धो व्यतिरेक इत्यनेनाभिप्रायेणाह—**तदनतिरिक्तवृत्तय** इति । नैव वृत्तिरीतीनां तद्व्यतिरिक्तत्वं सिद्धम् । तथा ह्यनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्वस्वरूपविवेचनाय वर्गत्रयसम्पादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः, वर्तन्तेऽनुप्रासभेदा आस्विति । यदाह—

सरूप[1]व्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।

**बालप्रिया**

**रेकीत्यर्थ** इति केचित् । 'शब्दार्थशरीरमि'त्यादेः 'प्रतीयन्त' इत्यन्तस्य वृत्तिग्रन्थस्य सारार्थं व्याख्यायोत्तरग्रन्थं प्रकृतोपयोगं दर्शयन्नवतारयति—**नन्वित्यादि । असिद्धो व्यतिरेक** इति । यत् गुणालङ्कारव्यतिरिक्तं, तच्चारुत्वकारि नेति व्यतिरेकव्याप्तेर्गुणालङ्कारव्यतिरिक्तासु चारुत्वहेतुतया सम्प्रतिपन्नासु वृत्तिरीतिषु व्यभिचारादसिद्धिरित्यर्थः । **इत्यभिप्रायेणे**ति । इतिशङ्कायामुत्तराभिप्रायेणेत्यर्थः । तदभिप्रायं विशदयति—**नैवे**त्यादि । **तद्व्यतिरिक्तत्वं** गुणालङ्कारव्यतिरिक्तत्वम् । वृत्तीनान्तावदनुप्रासालङ्कारान्तर्भावं दर्शयितुमाह—**तथा ह्यनुप्रासानामेवे**त्यादि । अनुप्रासानामेवेत्यस्य **वर्गत्रयसम्पादनार्थ**मित्यनेन सम्बन्धः । तदपि किमर्थमित्यत्राह—**परुषत्वे**त्यादि । परुषत्वादिस्वरूपाणां विशिष्य प्रदर्शनार्थमित्यर्थः । तस्यापि फलमाह—**दीप्ते**ति । **दीप्तं** रौद्रादौ रसे, **मसृणं** मधुरं शृङ्गारादौ, **मध्यमं** हास्यादौ, तथाविधं यद्वर्**णनीयं** विभावादि, **तदुपयोगितया** वर्णनीयविशेषोपयोगित्वेनानुप्रासविशेषोपादेयतासिद्ध्यर्थमित्यर्थः । **अनुप्रासजातय** इति । अनुप्रासानामाश्रयभूता जातय इत्यर्थः । विवरिष्यते चेदमुपरि । **वृत्तय इत्युक्ताः** वृत्तय इति व्यवहृताः । तत्र व्युत्पत्तिमाह—**वर्तन्त** इति । **अनुप्रासभेदाः** अनुप्रासविशेषाः । **आस्वि**ति । वृत्तिरित्यत्र वृतिधातोरधिकरणे क्तिन्निति भावः । **यदाहे**ति । भट्टोद्भट इति शेषः । **सरूपे**ति । **एतासु**

ध्वनिः, गुणालङ्कारव्यतिरिक्तत्वाभाववान्, चारुत्वहेतुत्वात्, यो हि गुणालङ्कारव्यतिरिक्तो भवति स चारुत्वहेतुर्न भवति । यथा–असाधुत्वदुःश्रवत्वादिको दोष इति । केवलव्यतिरेकी नाम–'असत्सपक्षो यत्र व्यतिरेकसहचारेण व्याप्तिग्रहः ।

१. उद्भटकाव्या., १. ८.

२. 'अकर्तरि च कारके संज्ञायां' (पा. सू., ३. ३. १९ ) इत्यधिकारस्थेन 'स्त्रियां क्तिन्' ( पा. सू., ३. ३. ९४. ) इत्यनेनेत्यर्थः ।

लोचनम्

पृथक्पृथगनुप्रासमुशन्ति कवयः सदा ॥ इति ॥

पृथक्पृथगिति । परुषानुप्रासा नागरिका । मसृणानुप्रासा उपनागरिका, ललिता । नागरिकया विदग्धया उपमितेति कृत्वा । मध्यममकोमलपरुषमित्यर्थः । अत एव वैदग्ध्यविहीनस्वभावासुकुमारापरुषग्राम्यवनितासादृश्यादियं वृत्तिर्ग्राम्येति । तत्र तृतीयः कोमलानुप्रास इति वृत्तयोऽनुप्रासजातय एव । न चेह वैशेषिकवद्वृत्तिर्विवक्षिता, येन

बालप्रिया

उक्तासु । **तिसृषु वृत्तिषु** परुषादिषु । **पृथक्पृथक्** स्वरूपाणां सजातीयानां **व्यञ्जनानां न्यासः** उपनिबन्धः तम् । **अनुप्रासमुशन्ति** इच्छन्ति । "शषाभ्यामि[1]"-त्यादिकारिकात्रयेण परुषादिवृत्तीनां स्वरूपमुक्तन्तद्ग्रन्थे द्रष्टव्यम् ।

पृथक् पृथगित्यंशं व्याचष्टे–**परुषे**त्यादि । परुषवर्णारब्धत्वात्परुषोऽनुप्रासो यस्यां वृत्तौ सा । परुषाया एव नागरिकेति संज्ञा । **मसृणे**ति । मधुरवर्णारब्धत्वान्मसृणोऽनुप्रासो यस्यां सा । अस्या नामद्वयमाह—**उपनागरिका ललिते**ति । उ[2]पमिता नागरिकया उपनागरिकेत्यन्वर्था संज्ञेत्याह—**नागरिक**येति । परुषानुप्रासः मसृणानुप्रास इति पाठस्तु अनुप्रासवृत्त्योरैक्याभिप्रायेण योज्यः । वक्ष्यमाणग्राम्यवृत्तावनुप्रासस्य मध्यमत्वं दर्शयितुम्मध्यमशब्दार्थमाह–**मध्यममकोमलपरुषमि**ति । मधुरवर्णभिन्नं परुषवर्णभिन्नश्चेत्यर्थः । तदारब्धोऽनुप्रासो मध्यमानुप्रास इत्यर्थः । तदनुप्रासाया वृत्तेः ग्राम्यसंज्ञामुपादनपूर्वकमाह—**अत एवे**त्यादि । **अत एव** माधुर्यपारुष्यराहित्यादेव । **वैदग्ध्ये**त्यादि । **वैदग्ध्यविहीना स्वभावतः असुकुमारा** अमधुरा, **अपरुषा** अनुद्धणस्वभावा च या **ग्राम्यवनिता,** तत्सा**दृश्यादि**त्यर्थः । **तत्र तृतीयः कोमलानुप्रास** इति । उक्तेष्वनुप्रासेषु मध्यमानुप्रासः कोमलानुप्राससंज्ञकश्चेत्यर्थः । अनेन ग्राम्याया वृत्तेः रू[3]ढा कोमलसंज्ञा च भट्टोद्भटोक्ता दर्शिता । उपसंहरति–**वृत्तय** इत्यादि ।

---

१. शषाभ्यां रेफसंयोगैष्टवर्गेण च योजिता ।
परुषा नाम वृत्तिस्स्यात् ह्लह्वाद्यैश्च संयुता ॥
सरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगिभिः ।
स्पर्शैर्युतां च मन्यन्ते उपनागरिकां बुधाः ॥
शेषैर्वर्णैर्यथायोगं कथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥

उद्भटका., १. ५–७.

२. 'अवादयः क्रुष्टाद्यर्थे तृतीयया' ( वार्ति., १८७. चौ. सं. ) इति वार्तिकेन समास इत्यर्थः ।

३. कोमलवर्णानुप्रासाभावेन योगार्थाभावादित्यर्थः ।

**याः कैश्चिदुपनागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगो-**

लोचनम्

जातौ जातिमतो वर्तमानत्वं न स्यात्, तदनुग्रह एव हि तत्र वर्तमानत्वम्। यथाह कश्चित्—

लोकोत्तरे हि गाम्भीर्ये[1] वर्तन्ते पृथिवीभुजः। इति।

तस्माद्वृत्तयोऽनुप्रासादिभ्योऽनतिरिक्तवृत्तयो नाभ्यधिकव्यापाराः। अत एव व्यापारभेदाभावान्न पृथगनुमेयस्वरूपा अपीति वृत्तिशब्दस्य व्यापारवाचिनोऽभिप्रायः। अनतिरिक्तत्वादेव वृत्तिव्यवहारो भामहादिभिर्न कृतः। उद्भटादिभिः प्रयुक्तेऽपि तस्मिन्नार्थः कश्चिदधिको हृदयपथमवतीर्ण इत्यभिप्रायेणाह—**गताः श्रवणगोचरमिति**।

बालप्रिया

शषादितत्तद्वर्णरचनारूपाः परुषाद्या वृत्तयो वस्तुतोऽनुप्रासेषु वर्तन्ते। यथा—पृथिवीभुजि गाम्भीर्यं, ताः परुषत्वादिविशिष्टानुप्रासादिभिरभिव्यज्यन्ते च। यथा—गोत्वादिजातयो गवादिभिः। अतश्च स्वाश्रयाभिव्यङ्ग्यत्वसाम्याद्वृत्तीनां जातित्वोपचार इति भावः। ननु वृत्तिरूपजातौ तज्जातिमतोऽनुप्रासस्य वर्तनमुक्तमयुक्तं, वैशेषिकमतविरुद्धत्वादित्यत आह—**न चे**त्यादि। **इह** अस्मन्मते। **वैशेषिकवत्** वैशेषिकमत इव। **वृत्तिर्न विवक्षिते**ति। वर्तनमाधेयत्वरूपत्न विवक्षितमित्यर्थः। तर्हि तत्र वर्तनं किन्नामेत्यत आह—**तदनुग्रह एवे**ति। वृत्तिरूपजातिकर्तृकानुग्रह एवेत्यर्थः। स च तत्कर्तृकं भेदकधर्मसमर्पणं रसाभिव्यञ्जनसामर्थ्याधानं वा।

उक्तार्थे दृष्टान्तमाह—**लोकोत्तर** इति। **गम्भीर्ये वर्तन्त** इति। गाम्भीर्यानुगृहीता भवन्तीत्यर्थः। गाम्भीर्यकर्तृकानुग्रहश्च सकलकार्यनिर्वहणसामर्थ्याधानादिरूपः। वृत्तौ 'तदनतिरिक्तवृत्तय' इत्यत्र तत्पदार्थन्दर्शयन्नुपसंहरति—**तस्मादनुप्रासादिभ्य** इत्यादि। नास्त्यतिरिक्ता वृत्तिर्व्यापारो यासां ता इत्यर्थकतया व्याचष्टे—**नाभ्यधिके**ति। अनुप्रासानां यो व्यापारो रसव्यञ्जनविषयः, स एव वृत्तीनामपीति भावः। तदनतिरिक्ता इत्यनुक्त्वा एवमुक्तेः फलन्दर्शयति—**अत एवे**त्यादि। **अतः** उक्तात् व्यापारभेदाभावादेवेति योजना। **न पृथगनुमेयस्वरूपा** इति। पृथगनुप्रासावगमं विना नानुमेयस्वरूपाः, किन्तु वृत्तिव्यञ्जकवर्णविशेषरूपानुप्रासलिङ्गगम्या इति भावः। न पृथगभिधेयस्वरूपा इति च पाठः। अनुप्रासाभ्यधिकव्यापारसत्त्वे तु वृत्तीनां स्वरूपं पृथगभिधेयं स्यादिति तद्भावः। उक्तार्थे वृद्धसम्मतिमाह—**अनती**ति। अनुप्रासानतिरिक्तव्यापारत्वोक्त्या तदनतिरिक्तत्वं सिद्धमित्याशयेन **अनतिरिक्तत्वादे**वेत्युक्तम्। ननूद्भटादिभिः कृत एवेत्यत्राह—**उद्भटादिभि**रिति। **प्रयुक्ते** कृते। **तस्मिन्** वृत्तिव्यवहारे। **नार्थ** इति। **अर्थः** वृत्तिशब्दार्थः। **अधिकः** अनुप्रासरूपार्थादधिकः।

---

१. 'गाम्भीर्यं यत्प्रभावेण विकारो नोपलभ्यत' (दशरू., ४. ६.) इति लक्षणलक्षितं गाम्भीर्यम्।

चरम् । रीतयश्च वैदर्भीप्रभृतयः । तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति ।

**लोचनम्**

**रीतयश्चे**ति । तदनतिरिक्तवृत्तयोऽपि गताः श्रवणगोचरमिति सम्बन्धः । तच्छब्दे-नात्र माधुर्यादयो गुणाः, तेषां च समुचितवृत्त्यर्पणे यदन्योन्यमेलनक्षमत्वेन पानक इव गुडमरिचादिरसानां सङ्घातरूपतागमनं दीप्तललितमध्यमवर्णनीयविषयं गौडीयवैदर्भ-पाञ्चालदेशहेवाकप्राचुर्यदृशा तदेव त्रिविधं रीतिरित्युक्तम् । जातिर्जातिमतो नान्या, समु-

**बालप्रिया**

**इत्यभिप्रायेणे**ति । 'गता' इत्यादिग्रन्थ उक्तार्थपर इत्यर्थः । 'रीतयश्चे'त्यत्र समुचि-तपदानुषञ्जनेन पूरयन्नाह—**तदि**त्यादि । तच्छब्दोऽत्र गुणपरामर्शक इत्याह—**तच्छ-ब्देने**ति । प्रत्यवमृश्यन्त इति शेषः । तथा पाठश्च । कथन्नाम रीतीनां गुणानतिरिक्तत्व-मिति तदुपपादयति—**तेषाञ्चे**त्यादि । तेषां समुचितवृत्त्यर्पणे यत्सङ्घातरूपतागमनं त्रिविधं तदेव रीतिरिति सम्बन्धः । **तेषां** गुणानाम् । **समुचिते**ति । **समुचिता** दीप्तादिवर्णनीयौचित्यवती या **वृत्तिः** विशिष्टा वर्णरचना, तस्यां यद्गुणानामर्पणं तस्मि-न्नित्यर्थः। **समुचिता** तत्तद्रसव्यञ्जनोचिता या **वृत्तिः** व्यापारः, तदर्पणे निमित्ते इति केचित् । **अन्योन्ये**ति । परस्परसंश्लेषयोग्यत्वेन हेतुनेत्यर्थः । त्रैविध्योपपादकं—**दीप्ते**-त्यादि । द्वन्द्वगर्भकर्मधारयस्य विषयपदेन बहुव्रीहिः । **सङ्घाते**ति । समूहताप्राप्तिरि-त्यर्थः । असंहततया पृथक् पृथक् प्रातिस्विकरूपेणावस्थितानामेकत्र समूहीभावेन रूपा-न्तरप्राप्तिरिति यावत् । सङ्घातरूपत्वेन हृद्यत्वे दृष्टान्तः—**पानक इवे**ति । तथा च माधु-र्यादिगुणानां प्रत्येकं प्रातिस्विकरूपेण रीतिशब्दवाच्यत्वं नास्ति, परन्तु विशिष्टसङ्घात-धर्मवत्तयेति भावः । ननु केनैतदुक्तमिति शङ्कायां वैदर्भ्यादिशब्दप्रवृत्तिनिमित्तन्दर्शयन्नु-त्तरमाह—**गौडीये**त्यादि । गौडविदर्भपाञ्चालसम्बन्धिनो गौडीयादयो ये देशास्तेषां तत्र-त्यकवीनामिति यावत् । विशिष्टवर्णनविषये यो **हेवाकः** स्वभावः स्वाच्छन्द्यं वा, तं **प्रा-चुर्येण** पश्यतीति तेन । वामनेनेति भावः । हेवाकप्राचुर्यस्य दृशा दर्शनेन हेतुनेत्यर्थो वा । विदर्भादिषु दृष्टत्वात्तत्समाख्येति भावः । त्रिविधमित्यनेन रीतिगतमपि गौडीया वैदर्भी पाञ्चालीति त्रैविध्यं सूचितम् । यथोक्तं वामनेन—"रीतिरात्मा[1] काव्यस्य । विशिष्टा पदरचना रीतिः । विशेषो गुणात्मा । सा त्रेधा—वैदर्भी गौडीया पाञ्चाली च । वैद-र्भादिषु दृष्टत्वात्तत्समाख्या । समग्रगुणा वैदर्भी । ओजःकान्तिमती गौडीया । माधुर्यसौ-कुमार्योपपन्ना पाञ्चाली" इति ।

ननूक्तरीत्या वृत्त्यनुप्रासयोर्जातिजातिमद्भावाद्रीतिगुणयोस्समुदायसमुदायिभावाच्च कथमैक्यमत आह—**जातिरि**त्यादि । **समुदायः** अवयवी । **समुदायिनः** अव-

१. वा. सू., १. २. ६–१३.

**अन्ये ब्रूयुः—नास्त्येव ध्वनिः । प्रसिद्धप्रस्थानव्यतिरेकिणः काव्य-**

लोचनम्

दायश्च समुदायिनो नान्य इति वृत्तिरीतयो न गुणालङ्कारव्यतिरिक्ता इति स्थित एवासौ व्यतिरेकी हेतुः । तदाह—**तद्व्यतिरिक्तः कोऽयं ध्वनिरिति** । नैष चारुत्वस्थानं शब्दार्थरूपत्वाभावात् । नापि चारुत्वहेतुः, गुणालङ्कारव्यतिरिक्तत्वादिति । तेनाखण्ड-बुद्धिसमास्वाद्यमपि काव्यमपोद्धारबुद्ध्या यदि विभज्यते, तथाप्यत्र ध्वनिशब्दवाच्यो न कश्चिदतिरिक्तोऽर्थो लभ्यत इति **नाम**शब्देनाह ।

ननु मा भूदसौ शब्दार्थस्वभावः, मा च भूत्चारुत्वहेतुः, तेन गुणालङ्कारव्यति-रिक्तोऽसौ स्यादित्याशङ्क्य द्वितीयमभाववादप्रकारमाह—**अन्य** इति । भवत्वेवम् ; तथापि नास्त्येव ध्वनिर्यादृशस्तव लिलक्षयिषितः । काव्यस्य ह्यसौ कश्चिद्वक्तव्यः । न

बालप्रिया

यवात् । **नान्य** इति । तयोस्तादात्म्यस्यैवाङ्गीकारादिति भावः । प्रकृतमुपसंहरति—**इतीति** । **स्थित एव** उपपन्न एव । 'तद्व्यतिरिक्त' इत्यादिग्रन्थः उक्तानुमानस्य निगमनरूप[1] इत्यभिप्रायेणावतारयति–**तदि**त्यादि । **तदाह** तस्मादाह । 'तद्व्यतिरि-क्त' इति हेतुगर्भतच्छब्देन शब्दार्थौ तद्गुणालङ्काराश्च परामृश्यन्ते । 'कोऽयमि' त्यत्र किंशब्दः किमेष चारुत्वस्थानमुत चारुत्वहेतुरिति विकल्पनिषेधपरश्चेत्याशयेन विवृणोति–**नैष** इत्यादिना । शब्दार्थतद्गुणालङ्कारव्यतिरिक्तः काव्यचारुताहेतुत्वविशि-ष्टो ध्वनिर्नास्तीति विशिष्टध्वनिसत्तानिषेधश्चानेनार्थात्सिद्ध्यतीति बोध्यम् । **एष** इति । ध्वनित्वेनाभिमत इत्यर्थः । इतीत्यस्यानन्तरं किंशब्देनाहेति शेषो बोध्यः । किंशब्दे-नैवोक्तार्थे लब्धे किं नामशब्देनेत्यत आह—**तेने**त्यादि । **अपोद्धारबुद्ध्येति** । विभा-गबुद्ध्येत्यर्थः । **नामशब्देनाहे**ति । नामशब्दोऽत्यन्तासत्त्वद्योतक इति भावः ।

एतावता शब्दार्थतद्गुणालङ्कारव्यतिरिक्तस्य काव्यशोभाहेतुत्वविशिष्टस्य ध्वनेर-भाव एव सिद्धः, न तु स्वरूपेण ध्वनेरभाव इति तत्सिद्ध्यै पक्षान्तरोपक्षेप इत्याशये-नावतारयति–**नन्वि**त्यादि । **असौ** ध्वनिः । **तेने**ति तथापीत्यर्थः । यद्वा[2] चारुत्वहेतु-त्वाभावेनेत्यर्थः । चारुत्वहेतुत्वाद्धि गुणाद्यन्तर्भाव आपादितः, तदनङ्गीकारे तु तद्व्यति-रिक्तध्वनिसद्भावसम्भावनार्ह एवेत्यर्थः । **गुणालङ्का**रेति शब्दार्थयोरुपलक्षणम् । **इ-त्याशङ्क्ये**ति । इति ध्वनिवादिशङ्काम्मनसिकृत्येत्यर्थः । **भवत्वेवमि**त्यभ्युपगमे । तर्हि जितमस्माभिरित्यत्राह–**तथापी**त्यादि । ननूक्तमेव तदस्तित्वमित्यत आह—**यादृश** इत्यादि । तादृश इति पूर्वेण सम्बन्धः । **यादृशो लिलक्षयिषितः** काव्यसम्बन्धितया लक्षणयुक्तं कर्तुमभिलषितः । इममर्थन्दर्शयन्नाह–**काव्यस्य ही**त्यादि । समुदितस्य

१. निगमनं नाम–'अनुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्ष-ताधीप्रयुक्तसाध्यधीजनकं वाक्यम् ।

२. तेनेत्यस्य तथाप्यर्थकत्वाप्रसिद्धेराह यद्वेति ।

**प्रकारस्य काव्यत्वहानेः सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम्। न चोक्तप्रस्थानातिरेकिणो मार्गस्य तत्सम्भवति। न च तत्सम-**

लोचनम्

चासौ नृत्तगीतवाद्यादिस्थानीयः काव्यस्य कश्चित्। कवनीयं काव्यं, तस्य भावश्च काव्यत्वम्। न च नृत्तगीतादि कवनीयमित्युच्यते।

**प्रसिद्धेति**। प्रसिद्धं प्रस्थानं शब्दार्थौ तद्गुणालङ्काराश्चेति, प्रतिष्ठन्ते परम्परया व्यवहरन्ति येन मार्गेण तत्प्रस्थानम्। **काव्यप्रकारस्येति**। काव्यप्रकारत्वेन तव स मार्गोऽभिप्रेतः, 'काव्यस्यात्मा' इत्युक्तत्वात्। ननु कस्मात्तत्काव्यं न भवतीत्याह—**सहृदयेति**। **मार्गस्येति**। नृत्तगीताक्षिनिकोचनादिप्रायस्येत्यर्थः। **तदिति**। सहृदयेत्यादिकाव्यलक्षणमित्यर्थः। ननु ये तादृशमपूर्वं काव्यरूपतया जान-

बालप्रिया

काव्यस्य समुदायितया सम्बन्धित्वेन ह्यसौ वक्तव्यः। न च गुणादिभ्यो व्यतिरेके सति काव्यसम्बन्धित्वमस्य शक्योपपादं, नृत्तगीतादिवत्। तदयं प्रयोगः—विवादाध्यासितो[1] ध्वनिः, न काव्यं, शब्दार्थातिरिक्तत्वात्; न च काव्यसम्बन्धी, तद्गुणालङ्कारातिरिक्तत्वात्, नृत्तगीतादिवदिति। न च साध्यविकलो दृष्टान्तः, तेषामकवनीयत्वेन काव्यत्वाभावस्य तत्सम्बन्धित्वाभावस्य च प्रसिद्धत्वादित्यर्थः। नृत्तगीतादेर्नाट्यस्थले शोभाकारित्वरूपविशेषं मनसिकृत्य दृष्टान्ततया कथनम्।

स्वोक्तार्थपरतया प्रसिद्धेत्यादिग्रन्थं व्याचष्टे—**प्रसिद्धमि**त्यादि। **प्रतिष्ठन्त** इत्यस्य व्याख्या—**परम्परये**त्यादि। **परम्परया** अविच्छिन्नप्रवाहेण। **व्यवहरन्ति** काव्यव्यवहारं कुर्वन्ति। **येन मार्गेण** मार्गतुल्येन येन। ध्वनेः काव्यप्रकारत्वोक्तिर्ध्वन्यभाववादिनो व्याहतेत्याशङ्क्य परप्रसिद्ध्युपजीविनी तदुक्तिरित्याह—**काव्येत्यादि**। **काव्यप्रकारत्वेन** काव्यभेदत्वेन। तत्वेनाभिमत इति तदर्थ इति भावः। वृत्तौ 'प्रसिद्धे'त्यादिना पूर्वोक्तो हेतुर्दर्शितः। काव्यत्वहानेरित्यनेन साध्यश्चेति बोध्यम्। **इत्याहेति**। इत्याशङ्कायामाहेत्यर्थः। मार्गपदेन प्रकृते विवक्षितं व्याचष्टे—**नृत्तेति**। **अक्षिनिकोचनादी**त्यादिपदेनाक्षिसम्भविनां विकारान्तराणां परिग्रहः। **प्राय**शब्दस्तुल्यार्थकः। **सहृदये**त्यादीति। सहृदयहृदयाह्लादिशब्दार्थमयत्वमित्यर्थः। 'सहृदयहृदयाह्लादी'त्यनेन गुणालङ्कारसुन्दरत्वमुक्तम्। 'न च तत्समये'त्यादिवृत्तिग्रन्थ एक एव शङ्कोत्तरात्मकः। तत्र शङ्काभागं विवृणोति—**नन्वि**त्यादि। **तादृशमि**ति। यत्तत्र भवद्भिर्नृत्तगीतादिप्रायमिति सोपहासमुक्तं ध्वनिस्वरूपन्तदित्यर्थः। **अपूर्वं** पूर्वमनुन्मीलितम्। **जानन्ती**त्यनेन 'तत्समयान्तः पातिनः सहृदयान् कांश्चिदि'ति

१. ध्वनित्वस्याऽप्रसिध्या तद्रूपेण पक्षताया निर्वक्तुमशक्यत्वाद्विवादाध्यासितत्वेन तां समर्थयितुमाह—विवादाध्यासित इति।

**यान्तःपातिनः सहृदयान् कांश्चित्परिकल्प्य तत्प्रसिद्ध्या ध्वनौ काव्यव्यपदेशः प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते ।**

**लोचनम्**

न्ति, त एव सहृदयाः । तदभिमतत्वं च नाम काव्यलक्षणमुक्तप्रस्थानातिरेकिण एव भविष्यतीत्याशङ्क्याह—**न चे**ति । यथा हि खड्गलक्षणं[1] करोमीत्युक्त्वा आतानवितानात्मा प्राव्रियमाणः सकलदेहाच्छादकः सुकुमारश्चित्रतन्तुविरचितः संवर्तनविवर्तनसहिष्णुरच्छेदकः सुच्छेद्य उत्कृष्टः खड्ग इति ब्रुवाणः, परैः पटः खल्वेवंविधो भवति न खड्ग इत्ययुक्ततया पर्यनुयुज्यमान एवं ब्रूयात्—ईदृश एव खड्गो ममाभिमत इति तादृगेवैतत् । प्रसिद्धं हि लक्ष्यं भवति न कल्पितमिति भावः । तदाह—**सकलविद्व**दिति । विद्वांसोऽपि हि तत्समयज्ञा एव भविष्यन्तीति शङ्कां सकलशब्देन निराकरोति ।

**बालप्रिया**

ृत्यर्थो विवृतः । तत्समयः ध्वनिपदसङ्केतः । 'तत्प्रसिद्ध्ये'त्याद्यंशं व्याचष्टे—**तदभी**ति । नामशब्देन तदभिमतत्वस्यैव काव्यलक्षणत्वमिति सूचयति—**इत्याशङ्क्याहे**ति । इत्येकांशेन ध्वनिवादिशङ्कामनूद्य परिहारमाहेत्यर्थः । 'सकले'त्यादि परिहारग्रन्थस्याभिप्रायं सदृष्टान्तं स्पष्टयन्नाह—**यथाही**त्यादि । **खड्गलक्षणं** खड्गस्वरूपम् । **करोमी**ति । करोतिरत्र वचनक्रियावाची । अत एव **इति ब्रुवाण** इति वक्ष्यते । **आताने**ति । **आतानः** आयामो विस्तारः । **वितानः** तिर्यग्विस्तारः । **आत्मा** स्वभावो यस्य सः । **प्राव्रियमाणः** प्रावरणीक्रियमाणः । प्रावरणस्वरूप इति च पाठः । **संवर्तने**ति । **संवर्तनं** सङ्कोचनम् । **विवर्तनं** विकासनम् । ते **सहिष्णुः** तद्योग्यः । **इति ब्रुवाण** इति । आतानादिविशिष्टः पदार्थः उत्कृष्टखड्ग इति वदन्नित्यर्थः । **पर्यनुयुज्यमानः** आक्षिप्यमाणः सन् । कथं ब्रूयादित्यत्राह—**ईदृश** इत्यादि । ईदृशः पदार्थ एव मम खड्गत्वेनाभिप्रेत इत्यर्थः । **एतदि**ति । सहृदयान्तरकल्पनयोक्तं काव्यलक्षणमित्यर्थः ।

नन्वमुया सोपहासोक्त्या किं जातम् ? न नः किञ्चिच्छिन्नमित्यत आह—**प्रसिद्ध**मिति । **लक्ष्यं** लक्षणेन निरूपणीयम् । **न कल्पित**मिति । लक्ष्यं भवतीत्यनुषज्यते । **तदाह** उक्ताद्धावादाह । उक्ताभिप्रायं वचनमाहेत्यर्थः । विद्वन्मनसामुचितविषय एव प्रवृत्तिसम्भवाद्विद्वत्पदेन उक्ताभिप्रायस्सूचित इति भावः । 'सकले'त्युक्तेः फलमाह—**विद्वांसोऽपी**ति । **तत्समयज्ञाः** ध्वनिसमयज्ञाः । ननु माभूत्सकलवि-

१. यद्वा लक्षणमित्यस्य लक्षणकथनमित्यर्थः । तथा च कृतिविषयस्य तादृशकथनस्य सम्पाद्यमानतया 'ब्रुवाण' इत्यस्य सुस्पष्टा सङ्गतिः । अत एव 'युद्धं करोमीत्युक्त्वा युध्यमानः परान् विजयते' इत्यादिप्रयोगाणां समौचित्यं सिद्धं भवति ।

**पुनरपरे तस्याभावमन्यथा कथयेयुः—न सम्भवत्येव ध्वनिर्नामापूर्वः कश्चित्। कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्त-**

**लोचनम्**

एवं हि कृतेऽपि न किञ्चित्कृतं स्यादुन्मत्तता परं प्रकटितेति भावः।

यस्त्वत्राभिप्रायं व्याचष्टे—जीवितभूतो ध्वनिस्तावत्तवाभिमतः, जीवितं च नाम प्रसिद्धप्रस्थानातिरिक्तमलङ्कारकारैरनुक्तत्वात्तच्च न काव्यमिति लोके प्रसिद्धमिति। तस्येदं सर्वं स्ववचनविरुद्धम्। यदि हि तत्काव्यस्यानुप्राणकं तेनाङ्गीकृतं पूर्वपक्षवादिना तच्चिरन्तनैरनुक्तमिति प्रत्युत लक्षणार्हमेव भवति। तस्मात्प्राक्तन एवात्राभिप्रायः।

ननु भवत्वसौ चारुत्वहेतुः शब्दार्थगुणालङ्कारान्तर्भूतश्च, तथापि ध्वनिरित्यमुया भाषया जीवितमित्यसौ न केनचिदुक्त इत्यभिप्रायमाशङ्क्य तृतीयमभाववादमुपन्यस्यति **पुनरपर** इति। **कामनीयकमि**ति कमनीयस्य कर्म। चारुत्वधीहेतुतेति यावत्।

**बालप्रिया**

द्वन्मनोग्राहिता, को दोष इत्यत आह—**एवं ही**त्यादि। अभिनवपरिकल्पितसहृदय-हृदयाह्लादकारित्वात्मकलक्षणे कृते, किञ्चिल्लक्षणं कृतन्न स्यात्, परन्तु उन्मत्ततैव प्रकाशिता स्यान्न तु विद्वत्तेत्यर्थः।

व्याख्यानान्तरमनुवदति—**यस्त्वि**त्यादि। **अभिप्रायं** द्वितीयाभाववाद्यभिप्रायम्। **जीविते**ति। ध्वनिर्जीवितभूतोऽभिमत इति सम्बन्धः। **तच्चे**ति। ध्वन्यात्मकं जीवितञ्चेत्यर्थः। **न काव्यमि**ति। जीवितभूतो ध्वनिर्न काव्यमलङ्कारकारैरनुक्तत्वादिति प्रयोगः। तद्दूषयति—**तस्ये**त्यादि। स्ववचनविरोधमुपपादयति—**यदि ही**त्यादि। **तत्** ध्वनिस्वरूपम्। **अनुप्राणकं** जीवितम्। **तेन पूर्वपक्षवादिना** अभाववादिना। **अङ्गीकृतं यद्**ीति। जीवितभूत इति सिद्धवचनादङ्गीकारः स्फुट एवेति भावः। **तत्** तर्हि। **अनुक्तमि**ति। अनुक्तत्वाद्धेतोः। **लक्षणार्हमेवे**ति। लक्षयितव्यमेवेत्यर्थः। न निषेधार्हमिति भावः। **प्राक्तनः** पूर्वोक्तः। **अभिप्रायः** अभाववाद्यभिप्रायः।

तृतीयमवतारयति—**नन्वि**त्यादि। यद्येवं किं भवतः प्रयासेनेत्यत आह—**तथापी**ति। एवमप्यसौ **ध्वनिरित्यमुया भाषया जीवितमिति न केनचिदुक्तः** ध्वनिः काव्यात्मेति केनापि लक्षणकारेण नोक्तमित्यर्थः। अतो लक्षणपुरस्सरन्तद्वक्तुमस्मत्प्रयास इति भावः। **इत्यभिप्रायं** ध्वनिवाद्यभिप्रायम्। **आशङ्क्ये**त्यनन्तरं प्रवर्तितमिति शेषः। वुञो भावार्थत्वे चारुत्वहेत्वन्तर्भावोक्तिरनुपपन्ना स्यादतो व्याचष्टे—**कमनीयस्य कर्मे**ति। फलितमाह—**चारुत्वे**ति। काव्यस्येत्यर्थात्। वृत्तौ 'तस्ये'त्यस्य ध्वनेरित्यर्थः। 'चारुत्वहेतुष्वि'त्यस्य गुणालङ्कारेष्वित्यर्थः।

भावात्। तेषामन्यतमस्यैव वा अपूर्वसमाख्यामात्रकरणे यत्किञ्चन कथनं स्यात्।

किञ्च वाग्विकल्पानामानन्त्यात्सम्भवत्यपि वा कस्मिंश्चित्काव्यलक्षणविधायिभिः प्रसिद्धैरप्रदर्शिते प्रकारलेशे ध्वनिर्ध्वनिरिति यदेतदलीक-

लोचनम्

ननु विच्छित्तीनामसंख्यत्वात्काचित्तादृशी विच्छित्तिरस्माभिर्दृष्टा, या नानुप्रसादौ, नापि माधुर्यादावुक्तलक्षणेऽन्तर्भवेदित्याशङ्क्याभ्युपगमपूर्वकं परिहरति—**वाग्विकल्पानामि**ति। वक्तीति वाक् शब्दः। उच्यत इति वागर्थः। उच्यतेऽनयेति वागभिधाव्यापारः। तत्र शब्दार्थवैचित्र्यप्रकारोऽनन्तः। अभिधावैचित्र्यप्रकारोऽप्यसंख्येयः। **प्रकारलेश** इति। स हि चारुत्वहेतुर्गुणो वालङ्कारो वा। स च सामान्यलक्षणेन संगृहीत एव। यदाहुः—'काव्यशोभायाः कर्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलङ्काराः'[1] इति। तथा 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः'[2] इति। **ध्वनिर्ध्वनिरि**ति वीप्सया सम्भ्रमं सूचयन्नादरं दर्शयति—**नृत्यत** इति। तल्लक्षणकृद्भिस्तद्युक्तकाव्यवि-

बालप्रिया

'किञ्च वाग्विकल्पानामि'त्यादिग्रन्थं व्याख्यास्यमानं मनसिकृत्यावतारयति लोचने—**नन्विति**। **विच्छित्तीनामि**ति। विविधं छिद्यन्त इति विच्छित्तयः वैचित्र्याणि, तासाम्। **अनुप्रासादा**वित्यादिपदेनोपमादेः परिग्रहः। **उक्तलक्षण** इति द्वयोर्विशेषणम्। भवदुक्तलक्षण इत्यर्थः। **अभ्युपगमपूर्वकमि**ति। किञ्चेत्यनेनाभ्युपगमो दर्शितः। 'वाग्विकल्पानामि'त्यत्र वाक्पदं नानार्थकं विकल्पपदं वैचित्र्यार्थकमिति व्याचष्टे—**वक्ती**त्यादि। **अभिधावैचित्र्ये**ति। एतत्तु कुन्तकादिमताभिप्रायेणोक्तम्। भावार्थं विवृणोति—**स ही**त्यादि। **सः** प्रकारलेशः। **स च** चारुत्वहेतुश्च। वामनोक्तन्तल्लक्षणमाह—**काव्यशोभाया** इत्यादि। **तदतिशये**ति। काव्यशोभातिशयेत्यर्थः। भामहोक्तञ्चाह—**तथा वक्रे**ति। **वक्रा** विचित्रा चमत्कारकारिणी। **अभिधेयशब्दयोः** वाच्यवाचकयोरुक्तिरभिधा। एवञ्च यद्यद्वैचित्र्यान्तरमुल्लिख्यते तस्य तस्य कथितगुणालङ्कारसामान्यलक्षणसङ्गृहीतत्वात्तत्कर्त्रदृष्टत्वमसम्भाव्यमिति भावः। **वीप्सये**ति द्विर्वचनेनेत्यर्थः। **सम्भ्रममि**ति। ध्वनिवादिनो ध्वनिप्रस्थानस्थापने त्वरामित्यर्थः। **सूचयन्नि**ति। सम्भ्रमे द्योत्ये द्विर्वचनमत्रेति भावः। **आदरमि**ति। ध्वनिवादिनो ध्वनावादरमित्यर्थः। 'नृत्यत' इत्यत्र कर्तृपदमौचित्यात्पूरयति—**तदित्यादि**। तत्पदं ध्वन्यर्थकम्। केचिद्ध्वनिलक्षणकृतः, केचित्तद्युक्तकाव्यविधायिनः, केचित्तत्काव्यश्रवणोद्भूतचमत्काराः

१. वा. सू., ३. १. १-२.

२. भामहालङ्कर., १. ३६.

सहृदयत्वभावनामुकुलितलोचनैर्नृत्यते, तत्र हेतुं न विद्मः । सहस्रशो हि महात्मभिरन्यैरलङ्कारप्रकाराः प्रकाशिताः प्रकाश्यन्ते च । न च तेषामेषा दशा श्रूयते । तस्मात्प्रवादमात्रं ध्वनिः । न त्वस्य क्षोदक्षमं तत्त्वं किञ्चिदपि प्रकाशयितुं शक्यम् । तथा चान्येन कृत एवात्र श्लोकः—

यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालंकृति

**लोचनम्**

धायिभिस्तच्छ्रवणोद्भूतचमत्कारैश्च प्रतिपत्तृभिरिति शेषः । ध्वनिशब्दे कोऽत्यादर इति भावः । **एषा दशे**ति । स्वयं दर्पः परैश्च स्तूयमानतेत्यर्थः । **वाग्विकल्पाः** वाक्प्रवृत्तिहेतुप्रतिभाव्यापारप्रकारा इति वा । **तस्मात्प्रवादमात्र**मिति । सर्वेषामभाववादिनां साधारण उपसंहारः । यतः शोभाहेतुत्वे गुणालङ्कारेभ्यो न व्यतिरिक्तः, यतश्च व्यतिरिक्तत्वे न शोभाहेतुः, यतश्च शोभाहेतुत्वेऽपि नादरास्पदं तस्मादित्यर्थः । न चेयमभावसम्भावना निर्मूलैव दूषितेत्याह—**तथा चान्येने**ति । ग्रन्थकृत्समानका-

**बालप्रिया**

प्रतिपत्तारः, तैस्त्रिभिरित्यर्थः । केचित्तु—अनादरन्दर्शयतीति, अतद्युक्तकाव्येति, अतच्छ्रवणेति च पठन्ति । तत्पक्षे अनादरमित्यस्याभाववादिनां ध्वनावनादरमित्यर्थः । अतद्युक्तेत्यादि तल्लक्षणकृद्भिरित्यस्य अतच्छ्रवणेत्यादि प्रतिपत्तृभिरित्यस्य च विशेषणं बोध्यम् । फलितमाह—**ध्वनिशब्द** इति । योऽयं ध्वनिवादिनामत्यादरः स ध्वनिशब्दवाच्यस्य कस्यचिदर्थान्तरस्य वक्तुमशक्यत्वाद्ध्वनिशब्दमात्रविषयकः पर्यवस्यति । स चोपहासहेतुरेव सम्पद्यत इति भावः । **परै**रिति । ध्वनियुक्तकाव्यविधायिभिरित्यर्थः । सिंहावलोकनन्यायेन 'वाग्विकल्पानामानन्त्यादि'त्यत्र वाग्विकल्पपदमन्यथा व्याचष्टे—**वागि**त्यादि । अभाववादस्यान्योन्यसम्बद्धतया उपन्यासादैक्यसिद्धेरुपसंहारेणापि तदनुरूपेण भाव्यमित्याशयेनाह—**सर्वेषामि**ति । साधारण्यं स्पष्टयति—**यत** इत्यादि । **नादरास्पद**मिति । गुणालङ्कारेष्वेवान्तर्भावेन शब्दमात्रस्यैवापूर्वत्वादिति भावः । 'तथाचे'त्यादिग्रन्थः पूर्वोक्ताभाववादसम्भावनामूलप्रदर्शनपर इत्याशयेन तद्ग्रन्थमवतारयति—**न चे**त्यादि । **इयमभावसम्भावना** पूर्वोपदर्शिता अभाववादसम्भावना । **निर्मूलैव** सती **न दूषिता,** किन्तु समूलैवेति भावः । करिष्यमाणस्याप्यभाववाददूषणस्य बुद्धिस्थत्वेन कृतप्रायत्वाद्दूषितेति भूतनिर्देशः । **इत्याहे**ति । इत्याशयेनाहेत्यर्थः । न चास्य 'यस्मिन्नि'त्यादिश्लोकस्य श्रुतत्वेन 'जगदु'रिति लिङ्बोध्यस्य पारोक्ष्यस्य समर्थनाय 'न चास्माभिरभाववादिनां विकल्पाः श्रुताः' इति प्रागुक्तं कथं सङ्गच्छत इति वाच्यम् । यथाश्रुतार्थकस्यास्य श्लोकस्य श्रुतत्वेऽपि पूर्वोपदर्शितानां बहूनामभाववादप्रकाराणां विशिष्याश्रुतत्वेन तद्वचनस्य तत्परत्वात् । **ग्रन्थकृदि**त्यादिना मत्सरं तदुक्तेर्हेतुत्वेन

**व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत् ।**
**काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो**
**नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः ॥**

लोचनम्

लभाविना मनोरथनाम्ना कविना । यतो न **सालङ्कृति**, अतो न **मनःप्रह्लादि** । अनेनार्थालङ्काराणामभाव उक्तः । **व्युत्पन्नै रचितं च नैव वचनैरि**ति शब्दालङ्काराणाम् । **वक्रोक्तिः** उत्कृष्टा संघटना, **तच्छून्य**मिति शब्दार्थगुणानाम् । वक्रोक्तिशून्यशब्देन सामान्यलक्षणाभावेन सर्वालङ्काराभाव उक्त इति केचित् । तैः पुनरुक्तत्वं न परिहृतमेवेत्यलम् । **प्रीत्येति** । गतानुगतिकानुरागेणेत्यर्थः । **सुमतिने**ति । जडेन पृष्टो भ्रूभङ्गकटाक्षादिभिरेवोत्तरं ददत्तत्स्वरूपं काममाचक्षीतेति भावः ।

एवमेतेऽभावविकल्पाः शृङ्खलाक्रमेणागताः, न त्वन्योन्यासम्बद्धा एव । तथा हि तृतीयाभावप्रकारनिरूपणोपक्रमे पुनःशब्दस्यायमेवाभिप्रायः, उपसंहारैक्यं च सङ्गच्छते । अभाववादस्य सम्भावनाप्राणत्वेन भूतत्वमुक्तम् । भाक्तवादस्त्वविच्छिन्नः

बालप्रिया

सूचयति—'यस्मिन्नि'ति । 'यस्मिन्' काव्ये । 'सालङ्कृति' अत एव 'मनःप्रह्लादि' । 'किञ्चन वस्तु' वर्ण्यमानः कश्चिदर्थो 'नास्ति' । 'व्युत्पन्नै'रिति । नैवेति पाठे यदित्यस्यापकर्षः । यन्नेति च पाठः । 'यत्' काव्यम् । व्युत्पन्नैः अनुप्रासादियोगाद्विचित्रतयोत्पन्नैः 'वचनैः' शब्दैः । 'नैव रचितञ्च', तथा यत् 'वक्रोक्तिशून्यञ्च' भवति, तत् तथाविधमर्थालङ्कारादिशून्यं 'काव्यं ध्वनिना समन्वितमिति प्रीत्या प्रशंसन् जडः ध्वनेस्स्वरूपं सुमतिना पृष्टस्सन् किमभिदधाति । वयं नो विद्म' इत्यन्वयः । भावार्थं व्याचष्टे—**यत** इत्यादि । **अनेने**ति । प्रथमवाक्येनेत्यर्थः । **उक्त** इति । काव्य इति शेषः । अभाव उक्त इत्यस्य शब्दालङ्काराणां शब्दार्थगुणानामित्यनयोरपि सम्बन्धो बोध्यः । **सङ्घटनेति** । शब्दार्थयोरिति शेषः । व्याख्यानान्तरमनुवदति–**वक्रोक्ती**त्यादि । वक्रोक्तिस्सुन्दरतरोक्तिः सौन्दर्यञ्च वैचित्र्यमेव । तत्खलु सामान्यलक्षणमलङ्काराणामिति सर्वालङ्काराभाव उक्तो भवतीत्यर्थः । दूषयति–**तैरि**ति । **गते**ति । गतस्यानुगतिः **गतानुगतिका** । कुत्सायां कः । तस्यामनुरागेण । यद्वा-**गते** अन्यगमने गतमनुगमनं गतानुगतं तदेषामस्तीति गतानुगतिकाः । स्वयं विचारमकृत्वा परोक्तिमेवानुसरन्त इति यावत् । तेषां सम्भवतानुरागेण । 'सुमतिने'ति पदस्य प्रयोजनं व्याचष्टे–**जडे-नेत्**यादि ।

किमित्येते विकल्पाः परस्परसम्बद्धा व्याख्याता इति शङ्कायां वृत्तिग्रन्थानुगुण्यादित्याह—**एवमि**त्यादि । **शृङ्खलाक्रमेणागताः** परस्परसम्बद्धाः । कुत इत्यत्राह--**तथाही**ति । **पुनश्शब्दस्यायमेवाभिप्राय** इति । 'पुनरपर' इत्यत्र पुन-

भाक्तमाहुस्तमन्ये । अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरि-
त्याहुः ।

लोचनम्

पुस्तकेष्वित्यभिप्रायेण भाक्तमाहुरिति नित्यप्रवृत्तवर्तमानापेक्षयाभिधानम् । भज्यते[1]
सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यत इति भक्तिर्धर्मोऽभिधेयेन सामीप्यादिः, तत आगतो
भाक्तो लाक्षणिकोऽर्थः । यदाहुः—

अभिधेयेन सामीप्यात्सारूप्यात्समवायतः ।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥ इति ॥

बालप्रिया

शब्दः उक्ताभिप्रायक एवेत्यर्थः । यदि पुनश्शब्दस्य विशेषार्थकत्वं, तदा अपरे पुन-
रिति वक्तव्यं, तदपहाय पुनश्शब्दस्यादौ पाठः प्रागुक्तप्रकारापेक्षमुत्तरस्यानन्तर्यन्द-
र्शयन् सम्बन्धमवगमयतीति भावः । सम्बन्धश्चावतारिकया दर्शितपूर्वः । ज्ञापकान्तर-
रञ्चाह—उपेति । अन्योन्यासम्बद्धत्वे सति उपसंहारभेदेन भाव्यमिति भावः । 'जग-
दुरित्याहु'रिति च प्रयुक्तं तद्भावमाह—**अभावेत्यादि** । **उक्तमिति** । जगदुरित्यनेने-
ति शेषः । **पुस्तकेषु** अलङ्कारग्रन्थेषु । **नित्येति** ईश्वरोऽस्तीत्यादिवदत्र नित्यप्र-
वृत्ते वर्तमाने लडित्यर्थः । 'नित्यप्रवृत्त' इति भोजसूत्रम् । भाक्तशब्दस्यार्थं व्याख्या-
तुम्भक्तिशब्दस्य कर्मव्युत्पत्त्यार्थमाह—**भज्यत** इत्यादि । भञ्जव्यावृत्तयेऽर्थमाह[2]—
**सेव्यत** इति । केनेत्यत्राह—**पदार्थेनेति** । गङ्गादिपदलक्ष्यतीराद्यर्थेनेत्यर्थः । नन्वत्र
पदार्थकर्तृकं सेवनन्नाम किमित्यत आह—**उत्प्रेक्ष्यत** इति । पदार्थेन प्रतीक्ष्यत इत्यर्थः ।
स्वबोधनिमित्तत्वेनाश्रीयत इति यावत् । अत्र हेतुः—**प्रसिद्धतयेति**। सामीप्यादेर्निमित्त-
त्वेन प्रसिद्ध्येत्यर्थः । यद्वा—पदार्थेन सेव्यत इत्युपचारेणोक्तम् । तेन च वक्तुः प्रतिप-
त्तुर्वा तीरादेर्गङ्गादिपदेन प्रतिपादने सामीप्यादेर्निमित्तत्वेन पर्यालोचनरूपं यदुत्प्रेक्षण-
न्तदत्र विवक्षितमित्याह—**प्रसिद्धतयोत्प्रेक्ष्यत** इति । वक्त्रा प्रतिपत्त्रा वेति शेषः ।
अभिधेयेन सामीप्यादिर्धर्म इति सम्बन्धः । **तत आगतः** सामीप्यादिनिमित्तात्प्रती-
तः । स क इत्यत्राह—**लाक्षणिक** इति । लक्ष्य इत्यर्थः । अत्र संवादमाह—**यदाहुर-
भिधेयेन सामीप्यादि**त्यादि । अस्यार्थः स्वयमेव वक्ष्यते ।

१. भज्यत इति । पदार्थेनाऽभिधेयेन, प्रसिद्धतया प्रसिद्धिविशिष्टं ( वैशिष्ट्यस्य
तृतीयार्थत्वात् ) सामीप्यादिनिमित्तं, लक्ष्यार्थबोधनाय उत्प्रेक्ष्यतेऽपेक्ष्यत इत्यर्थः ।
प्रसिद्धिवैशिष्ट्यकथनेनाप्रसिद्धानां परम्परासम्बन्धादीनां व्यावृत्त्या नेयार्थत्वदोषस्य
सावकाशत्वं सूचितं भवति । अनेन प्रसिद्धार्थप्रतियोगिकलक्ष्यार्थानुयोगिकसामीप्यादि-
स्सम्बन्धो लक्षणया लक्ष्यार्थबोधने प्रयोजक इत्युक्तं भवति ।

२. 'भञ्जू आमर्दने' इति धातुपाठः ।

लोचनम्

गुण[1]समुदायवृत्तेः शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः, तत आगतो गौणोऽर्थो भाक्तः। भक्तिः प्रतिपाद्ये सा[2]मीप्यतैक्ष्ण्यादौ श्रद्धातिशयः, तां प्रयोजनत्वेनोद्दिश्य तत

बालप्रिया

गौणार्थस्याप्युक्तरीत्यैव लाभेऽपि तल्लाभः प्रकारान्तरेणापि वक्तव्य इत्याशयेनाह—**गुणे**ति। गुणसमुदाये वृत्तिर्यस्य, तस्य गुणसमुदायं प्रतिपादयत इत्यर्थः। **शब्दस्ये**ति। सिंहादिशब्दस्येत्यर्थः। सिंहादिशब्दा हि सिंहत्वादिजातिं तद्विशिष्टव्यक्तिं वा अभिदधाना अपि स्वार्थाविनाभूतान् शौर्यादिगुणानप्याक्षेपात्प्रतिपादयन्तीति भावः। **अर्थभागः** गुणसमुदायात्मकार्थैकदेशः। **तैक्ष्ण्यादिः** शौर्यादिः। सिंहो माणवक- इत्यादौ शौर्यादेर्गुणैकदेशस्यैव प्रतीतिरिति भावः। केचित्तु—**गुणसमुदायवृत्ते**रित्यस्य गुणद्वारा समुदाये गुणिनि माणवकादौ वृत्तिर्यस्य तस्येत्यर्थमाहुः। **तत** इति। तैक्ष्ण्यादेरित्यर्थः। सारूप्यान्निमित्तादिति यावत्। अथ भक्तिशब्दस्य भावव्युत्पत्त्याप्यर्थमाह—**भक्तिरि**त्यादि। **प्रतिपाद्ये** बोधनीये। **सामीप्यतैक्ष्ण्यादा**विति।

ननु गङ्गायां घोष इत्यादिस्थले लक्ष्यतीरादौ गङ्गागतपावनत्वादिकमेव प्रतिपाद्यं, न तु सामीप्यादि। एवं सिंहो माणवक इत्यादौ माणवकादौ सिंहादितादूप्यं पराक्रमातिशयादिकं वा। स्पष्टमिदं काव्यप्रकाशादौ। वक्ष्यते चैवमुपरि लोचने। तथा च **सामीप्यतैक्ष्ण्यादा**वित्युक्तिः कथं सङ्गच्छत इति चेत्; अत्र केचित्—पाठोऽयं लेखकप्रमादागतः पावनत्वादावित्येव पठनीयमिति। परे तु—सामीप्यादेः परम्परया प्रयोजनसाधनत्वात्सामीप्यपदेन पावनत्वादिकं तैक्ष्ण्यपदेन सिंहताद्रूप्यादिकञ्च लक्षणया विवक्षितमतो नासङ्गतिरित्याहुः। **श्रद्धातिशय** इति। श्रद्धा वक्तुर्मनसा भजनमनुसन्धानात्मकं, तस्या अतिशय इत्यर्थः। **तामि**ति। तद्विषयभूतं पावनत्वादिकमित्यर्थः। यद्वा—**श्रद्धातिशयः** प्रतिपत्तुः प्रतीतिविशेषः। **तामि**ति। श्रद्धातिशयरूपां भक्तिमित्यर्थः। पावनत्वादिप्रतीतिमिति यावत्। **तत** इति। श्रद्धातिशयरूपभक्तेरित्यर्थः। **आगतः** प्रयुक्तः। **लाक्षणिकश्चे**ति। शब्द इति शेषः। व्युत्पत्तेरभेदेऽपि प्रकृतिभेदेनार्थान्तरमाह **मुख्यस्य चे**ति। **भङ्गो भक्तिरि**ति। भञ्जिधातोः क्तिन्निति भावः। इतीत्यनन्तरं तत आगतो भाक्त इत्यनुषङ्गः। **आगतः** प्रतीतः। कथित-

१. 'मुखं चन्द्र' इत्यादौ लक्षणायाः पार्थक्येन मीमांसकमतसिद्धगौणीप्रतिपाद्यार्थस्यापि भाक्तपदेन संग्रहणाय 'गुणसमुदाये'त्यादिना विग्रहान्तरं प्रदर्शितम्।

२. अत्र सामीप्येति प्रामादिकम्, कारिकायां तस्य निमित्तत्वेनोक्तेः प्रतिपाद्यत्वासम्भवात्। 'तैक्ष्ण्यादा'विति तु युक्तम्। 'अग्निर्माणवक' इत्यादौ तस्य प्रयोजनत्वेन प्रतिपत्तेस्सर्वसम्प्रतिपन्नत्वात्।

लोचनम्

आगतो भाक्त इति गौणो लाक्षणिकश्च। मुख्यस्य चार्थस्य भङ्गो भक्तिरित्येवं मुख्यार्थबाधा, निमित्तं, प्रयोजनमिति त्रयसद्भाव उपचारबीजमित्युक्तं भवति। **काव्यात्मानं गुणवृत्तिरिति।** सामानाधिकरण्यस्यायं भावः—यद्यप्यविवक्षितवाच्ये ध्वनिभेदे 'निःश्वासान्ध इवादर्शः' इत्यादावुपचारोऽस्ति, तथापि न तदात्मैव ध्वनिः, तद्व्यतिरेकेणापि भावात्, विवक्षितान्यपरवाच्यप्रभेदादौ अविवक्षितवाच्येऽप्युपचार एव,[1] न ध्वनिरिति वक्ष्यामः। तथा च वक्ष्यति—

भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।
अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तथा॥ इति॥
कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम्। इति च।

बालप्रिया

व्याख्याप्रकारस्य फलमाह—**एवमित्यादि।** भङ्गार्थव्याख्यानस्य मुख्यार्थबाधारूपबीजसिद्धिः, सेवनरूपार्थव्याख्यानस्य निमित्तसिद्धिः, श्रद्धातिशयार्थव्याख्यानस्य प्रयोजनसिद्धिश्च फलमिति भावः। त्रयशब्देन सम्भूयैव बीजत्वमिति दर्शयति—**उपचारबीजमिति।** उपचारो नाम लक्षणा गौणी च। लक्षणया गौण्या च व्यवहारः। लक्ष्यगौणार्थबोधो वा। उपचारो नामान्यत्र अन्यावाप इति केचित्।

ननु ध्वनिर्नाम गुणवृत्तिव्यतिरेकी नास्तीति वक्तव्ये सामानाधिकरण्येन निर्देशस्य कोऽभिप्राय इत्यत आह—**सामानाधिकरण्यस्येति।** 'तं भाक्तमि'ति मूले 'ध्वनिसंज्ञितमि'त्यादिना वृत्तौ च सामानाधिकरण्येन निर्देशस्येत्यर्थः। यद्वा—**इति सामानाधिकरण्यस्येति।** एवं सामानाधिकरण्येन निर्देशस्येत्यर्थः। अस्मिन् पक्षे काव्यात्मानमित्यादिप्रतीकधारणन्नेति बोध्यम्। पदयोस्सामानाधिकरण्यन्नामैकधर्मिबोधकत्वम्। **अयं भाव** इति। ध्वनिगुणवृत्त्योस्तादात्म्यमेव ध्वनिवादिभिर्निरसनीयं, न तु ध्वनेस्सर्वथोपचारस्पर्शित्वमपीत्यमुमर्थन्द्योतयितुं सिद्धान्तविरुद्धतादात्म्यपक्षोपक्षेपार्थोऽयं सामानाधिकरण्येन निर्देश इति भाव इत्यर्थः। तमेव भावं विवृणोति—**यद्यपीत्यादि। उपचार** इति। गुणवृत्तिरित्यर्थः। **तदात्मा** उपचारात्मा। **तद्व्यतिरेकेणापि** उपचारं विनापि। **भावात्** ध्वनेस्सत्वात्। कुत्रेत्यत आह—**विवक्षितान्यपरवाच्यप्रभेदादाविति। अविवक्षितवाच्य** इति। अविवक्षितवाच्यध्वनावित्यर्थः। **वक्ष्याम** इति। रामोऽस्मीत्यादाविति भावः। **वक्ष्यतीति।** मूलकार इति शेषः। वृत्तौ 'गुणवृत्तिरि'ति भाक्तशब्दस्य व्याख्यानं तत्पदेन प्रकृते विवक्षितानर्था-

---

१. उपचार एव न ध्वनिरितीति। उपचारस्य तत्र सत्वेऽपि न ध्वन्युपचारयोस्तादात्म्यम्, रूपभेदादित्यर्थः। तथा च प्रयोगः—ध्वनिरुपचाराद्भिन्नः, तद्रूपभिन्नरूपवत्वादिति।

**यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितः, तथापि अमुख्यवृत्त्या काव्येषु व्यवहारं**

**लोचनम्**

**गुणाः** सामीप्यादयो धर्मास्तैक्ष्ण्यादयश्च। तैरुपायैर्वृत्तिरर्थान्तरे यस्य, तैरुपायैर्वृत्तिर्वा शब्दस्य यत्र स गुणवृत्तिः शब्दोऽर्थो वा। गुणद्वारेण वा वर्तनं गुणवृत्तिरमुख्योऽभिधाव्यापारः। एतदुक्तं[1] भवति—ध्वनतीति वा, ध्वन्यत इति वा, ध्वननमिति वा यदि ध्वनिः, तथाप्युपचरितशब्दार्थव्यापारातिरिक्तो नासौ कश्चित्। मुख्यार्थे ह्यभिधैवेति पारिशेष्यादमुख्य एव ध्वनिः, तृतीयराश्यभावात्।

ननु केनैतदुक्तं ध्वनिर्गुणवृत्तिरित्याशङ्क्याह—**यद्यपि चे**ति। **अन्यो** वेति।

**बालप्रिया**

न्विवृणोति—**गुणा** इत्यादिना। **उपायैः** निमित्तैः। **अर्थान्तरे** तीरादौ माणवकादौ च। **यस्य** गङ्गादिसिंहादिशब्दस्य। **यत्रे**ति। तीराद्यर्थे इत्यर्थः। **गुणद्वारेण** सामीप्यतैक्ष्ण्यादिद्वारेण। **वर्तनमि**ति वृत्तिशब्दार्थविवरणम्। पर्यवसितमाह—**अमुख्य** इति। अमुख्य इत्यनेन लक्षणागौण्योर्द्वयोर्ग्रहणम्। किं तत इत्यत आह—**एतदि**त्यादि। **उपचरिते**ति। गुणवृत्तिशब्दप्रतिपाद्येभ्यः शब्दार्थव्यापारेभ्योऽतिरिक्त इत्यर्थः। **असौ कश्चित्** ध्वनिर्नाम कश्चित्। ननु यदि ध्वन्यभावाभिप्रायेण ध्वनेर्गुणवृत्त्यभेदः साध्यते, तर्ह्यभिधाया अभेदोऽपि साध्यतामित्यत्राह—**मुख्यार्थ** इति। एवकारेण नात्र ध्वननस्य सम्भावनाऽपीति दर्शयति। फलितमाह—**इतीति**। **पारिशेष्यादि**ति। शिष्यमाणे संप्रत्ययः परिशेषः, स एव पारिशेष्यम्, तस्मादित्यर्थः। **अमुख्य एव** गुणवृत्तिरेव। अत्र हेतुः—**तृतीये**ति। वाचकवाच्याभिधारूपः प्रथमो राशिः, लक्षकलक्ष्यलक्षणारूपो द्वितीयः, व्यञ्जकव्यंग्यव्यञ्जनरूपस्तृतीयो भवदभिमतः, तस्याभावादित्यर्थः। तथा च ध्वनिर्नाम गुणवृत्तिरेव, अमुख्यत्वादिति फलितम्।

**नन्वि**त्यादि। इति शब्दस्योभयत्र सम्बन्धः। इति **केनोक्तं इत्याशंक्याहे**ति। 'यद्यपी'त्यादिना शङ्कां कृत्वा 'तथापी'त्यादिना समाधानमाह इत्यर्थः। वृत्तौ 'अन्यो वे'त्यत्र गुणवृत्तेरन्यो मुख्य इत्यर्थभ्रमः स्यादतो व्याचष्टे—**गुणे**ति। वाशब्दो दृष्टान्तार्थः। यथा अभाववादिभिर्ध्वनिर्गुणालङ्कारप्रकार इति नोक्तं, तथा भाक्तवादिभिरपि ध्वनिर्गुण-

१. 'एतदुक्तं भवती'त्यादिग्रन्थस्यायमाशयः—ध्वनिर्गुणवृत्तिभिन्नः कश्चित्पदार्थो नास्तीति प्रतिज्ञाय 'न हि प्रतिज्ञामात्रेण वस्तुसिद्धि'रित्याशयेन तदुपपादकमाह—'मुख्यार्थ' इत्यादिना। 'इदं पदमिममर्थमभिधत्त' इति वाक्येन प्रतीयमानाद्व्यापारात् मुख्यार्थनिरूपितात् 'इदं पदमिममर्थं ध्वनती'ति वाक्येन प्रतियमानोऽमुख्यार्थनिरूपितो व्यापारो भिन्न एव। स च गुणवृत्तिरूप एव पर्यवस्यति। कुत इति चेत्—मुख्यामुख्यव्यापारभिन्नतृतीयराश्यभावात् इति।

दर्शयता ध्वनिमार्गो मनाक्स्पृष्टोऽपि न लक्षित इति परिकल्प्यैवमुक्तम्—'भाक्तमाहुस्तमन्ये' इति ।

लोचन

गुणालङ्कारप्रकार इति यावत् । **दर्शयते**ति । भट्टोद्भटवामनादिना । भामहेनोक्तं[1]—'शब्दाश्छन्दोभिधानार्थाः' इति अभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो[2] बभाषे—'शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च' इति । वामनोऽपि 'सादृश्याल्लक्षणा[3] वक्रोक्तिः' इति । **मनाक्स्पृष्ट** इति । तैस्तावद्[4]ध्वनिदिगुन्मीलिता, यथा-

बालप्रिया

वृत्तिरिति कण्ठतो नोक्तमित्यर्थः । 'दर्शयते'ति मनाक् स्पर्शे हेतुः । अत्रैकवचनं[5] सामान्याभिप्रायकम् । अनेन काव्यलक्षणविधायिन एव विवक्षिता इत्याशयेन पूरयति—**भट्टे**त्यादि । क्रमेण तद्वचने दर्शयति—**भामहेने**त्यादि "इतिहासाश्रयाः कथाः । लोकोयुक्तिः कलाश्चेति मन्तव्याः काव्यहेतवः" इति शिष्टं पादत्रयम् । इत्युक्तमित्यन्वयः । ततः किमित्यत आह—**अभिधानस्ये**ति । अत्रेति शेषः । **वामनोऽपी**ति बभाषे इत्यनुषङ्गः । **सादृश्या**दिति । **वक्रोक्तिः** तन्नामालङ्कारः । तथा चा'भिधानमि'ति वचनेन भामहो 'गुणवृत्ति'रिति वचनेन भट्टोद्भटो 'लक्षणे'ति वचनेन वामनश्च काव्येषु गुणवृत्त्या व्यवहारं दर्शितवन्त इति फलितार्थः । 'ध्वनिमार्गो मनाक् स्पृष्टोऽपि न लक्षितः'इत्यमुं भागं पूर्वपक्षोपक्षेपानुगुण्येन व्याचष्टे—**तैस्तावदि**त्यादि । सम्प्रतिपत्तौ तावच्छब्दः । 'ध्वनिमार्गो मनाक्स्पृष्ट' इत्यस्य विवरणं—**ध्वनिदिगुन्मीलिते**ति । गुणवृत्तेः प्रयोजनाविनाभावात्प्रयोजनस्य च वक्ष्यमाणविधया व्यञ्जनव्यापारैकगोचरत्वाच्च गुणवृत्त्या व्यवहारं दर्शयद्भिरेव भामहभट्टोद्भटादिभिः ध्वनेर्गमकं प्रदर्शितमित्यर्थः । तैर्ध्वनिमार्गस्य स्पर्शेऽपि लक्षणकरणेन पृथक् तत्स्वरूपस्यानिरूपणाद्गुणवृत्तिरेव ध्वनिः, न तदतिरिक्त इति तदुक्तिमर्थसिद्धामुपजीव्येदं भाक्तवादप्रस्थानं प्रवृत्तमित्याह—**यथालिखिते**त्यादि । तु शब्दः परन्त्वित्यर्थे । **न लक्षित** इत्यस्य व्याख्यानम्—

१ भामहालङ्कार., १. ९.  २. स्वकृत 'भामहविवरण' इति बोध्यम् ।

३. वा काव्य सू., ४. ३. ८.

४ 'तैस्तावद्ध्वनिदिगुन्मीलिते'त्यादिसन्दर्भस्येदमैदम्पर्यम्—गङ्गादिपदात्तीराद्यर्थप्रतिपत्तये प्रवाहाद्यर्थप्रतीतिजननोपक्षीणसामर्थ्यामभिधां व्यतिरिच्य गुणवृत्तिमङ्गीकुर्वाणैर्भामहादिभिः तत एव पदाच्छैत्यपावनत्वातिशयाद्यर्थप्रतिपत्तये तृतीयव्यापारोऽप्यवश्याभ्युपगन्तव्यः । एवञ्च वृत्त्यन्तरस्वीकारपारिपाट्येन ध्वनिदिगपि नूनमुन्मीलितैवेति ।

५. 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' ( पा. सू., १. २. ५८ ) इति सूत्रेणेत्यर्थः ।

**केचित्पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः। तेनैवंविधासु विमतिषु स्थितासु सहृ-**

**लोचनम्**

लिखितपाठकैस्तु स्वरूपविवेकं कर्तुमशक्नुवद्भिस्तत्स्वरूपविवेको न कृतः, प्रत्युतोपालभ्यते, अभग्ननारिकेलवत् यथाश्रुततद्ग्रन्थोद्ग्रहणमात्रेणेति। अत एवाह—**परिकल्प्यैवमुक्त**मिति। यद्येवं न योज्यते तदा ध्वनिमार्गः स्पृष्ट इति पूर्वपक्षाभिधानं विरुध्यते।

**शालीनबुद्धय** इति। अप्रगल्भमतय इत्यर्थः। एते च त्रय उत्तरोत्तरं भव्यबुद्ध-

**बालप्रिया**

**तत्स्वरूपविवेको न कृत** इति। अत्र हेतुः—**स्वरूपविवेकं कर्तुमशक्नुवद्भि**रिति। तैरित्यनुषङ्गः। अशक्तौ हेतुर्यथेत्यादि। लेखनानतिक्रमेण लक्ष्यभूतानि ध्वनिकाव्यानि पठितवद्भिरित्यर्थः। यद्वा—**यथे**त्युपमायां लिखितपाठकैरिवेत्यर्थः। अविशेषज्ञैरिति यावत्। न केवलं ध्वनिस्वरूपविवेकाकरणमेव, विवेचनार्हतत्स्वरूपापलापश्चेत्याह—**प्रत्युते**त्यादि। **उपालभ्यते** प्रतिक्षिप्यते। तैरित्यनुषङ्गः। ध्वनिरिति शेषः। उपालम्भोऽयं भामहादीनामनुमेयो, भट्टोद्भटग्रन्थटीकाकारादीनां तु प्रत्यक्षः। **अभग्ननारिकेलवदि**ति। षष्ठ्यन्ताद्वतिः। **उद्ग्रहण**मित्यनेनास्य सम्बन्धः। उपालम्भे हेतुं दर्शयति—**यथाश्रुते**ति। यथाश्रुतं विचारं विना यत्तद्ग्रन्थानां लक्ष्यभूतानां ध्वनियुक्तकाव्यग्रन्थानामुद्ग्रहणं धारणं तन्मात्रेणेत्यर्थः। 'अभग्ननारिकेलकल्पयथाश्रुते'ति च पाठः। **अत एवे**ति। उक्तार्थाभिप्रायादेवेत्यर्थः। वृत्तौ 'इती'ति हेतौ। 'इति परिकल्प्ये'त्यादेरयमर्थः—यतो भट्टोद्भटादिभिर्ध्वनिमार्गस्पर्शमात्रं कृतं, न तु ध्वनिस्वरूपविवेचनं, प्रत्युत तदुपालम्भश्च, ततो हेतोर्भक्तिरेव ध्वनिर्न तदतिरिक्त इति तदभिप्रायमुक्तिपर्यन्तं कल्पयित्वा 'भाक्तमाहुस्तमन्ये' इत्युक्तमिति। ननु 'ध्वनिमार्ग' इत्यादिग्रन्थः किमर्थमेवं व्याख्यातः? ध्वनेर्मार्गः—मृग्यतेऽन्विष्यते विचार्यते इति मार्गः अविवक्षितवाच्यलक्षणो भेदः स्पृष्टः ज्ञात इति कुतो न व्याख्यात इत्यत आह—**यद्येव**मित्यादि। **विरुध्यत** इति। ध्वन्यवान्तरभेदस्य ज्ञाने सति गुणवृत्तिरेव ध्वनिर्न तदतिरिक्त इति वचनमसङ्गतं भवेदित्यर्थः। यद्वा—ननु 'न लक्षित' इति ग्रन्थो न दृष्ट इति यथाश्रुतार्थपरतया कुतो न व्याख्यात इत्यत आह—**यद्येव**मित्यादि। 'न लक्षित' इति ग्रन्थ इति शेषः। **विरुध्यत** इति। ध्वनेः स्पृष्टत्वस्यादृष्टत्वस्य च वचनं विरुद्धं स्यादित्यर्थः।

विप्रतिपत्तिप्रकाराणामेषामुक्तौ क्रमो विवक्षित इत्याह—**एत** इत्यादि। अभाववादित्रयमेकीकृत्य त्रय इत्युक्तिः। **भव्यबुद्धयः** सद्बुद्धयः। भव्यबुद्धित्वं विविच्य दर्शयति—**प्राच्या** इत्यादि। **प्राच्याः** अभाववादिनः। **सर्वथा** प्रकारत्रयेणापि।

**दयमनःप्रीतये तत्स्वरूपं ब्रूमः ।**

### लोचनम्

यः । प्राच्या हि विपर्यस्ता एव सर्वथा । मध्यमास्तु तद्रूपं जानाना अपि सन्देहेनापह्नुवते । अन्त्यास्त्वनपह्नुवाना अपि लक्षयितुं न जानत इति क्रमेण विपर्याससन्देहाज्ञानप्राधान्यमेतेषाम् । **तेने**ति। एकैकोऽप्ययं विप्रतिपत्तिरूपो[1] वाक्यार्थो निरूपणे हेतुत्वं प्रतिपद्यत इत्येकवचनम् । **एवंविधासु विमति**ष्विति निर्धारणे सप्तमी । आसु मध्ये एकोऽपि यो विमतिप्रकारस्तेनैव हेतुना **तत्स्वरूपं ब्रूम** इति, ध्वनिस्वरूपमभिधेयम्, अ-

### बालप्रिया

**विपर्यस्ताः** देहात्मवादिचार्वाका इव विपर्ययज्ञानयुक्ताः । **मध्यमाः** भाक्तवादिनः। तुशब्दः पूर्वेभ्यो विशेषं द्योतयति, तमाह—**तद्रूपं जानाना अपी**ति । सम्मुग्धतया यत्किञ्चिदस्ति वाच्यातिरिक्तमिति तद्रूपं जानन्तोऽपीत्यर्थः । **सन्देहेन** मुख्यगुणवृत्तिव्यतिरिक्तव्यापारस्य अस्तित्वनास्तित्वाभ्यां सन्देहेन **अपह्नुवते**। 'निह्नुवत' इति च पाठः । **अनपह्नुवाना** इति । तद्रूपमित्यनुषङ्गः। 'अनिह्नुवाना' इति च पाठः । **लक्षयितुमि**ति । ध्वनिमिति शेषः । फलितमाह—**इती**ति । विपर्यासस्य ध्वनिस्वरूपजिज्ञासां प्रति प्रतिबन्धकत्वं, सन्देहस्य त्वनुकूलत्वमतस्तद्वतोः पूर्वापेक्षयोत्तरस्योत्कर्षः । अन्त्यस्य तु लक्षणकरणमात्रविषयकाज्ञानम् । तस्य सुखोच्छेद्यत्वादुभयापेक्षयाप्युत्कर्ष इति भावः । **एकैकोऽपी**ति । किमुत त्रय इत्यपिशब्दार्थः । **इत्येकवचनमि**ति । 'तेने'त्यत्र तत्पदेन पूर्ववाक्यत्रयार्थाः परामृश्यन्ते । तृतीयया तेषां ध्वनिस्वरूपवचने हेतुत्वमुच्यते । एकवचनेन तु तेषां प्रत्येकं हेतुत्वमस्तीति बोध्यत इति भावः । उक्तार्थानुगुणं वृत्तिं विवृणाति-**एवमि**त्यादि । **निर्धारणे सप्तमी**ति । न तु भावलक्षणे[2] सप्तमीति भावः।निर्धारणं प्रकटयन्नाह-**आस्वि**त्यादि । वृत्तौ 'तेने'त्यस्य व्याख्यानं 'एवमि'त्यादि 'स्थितास्वि'त्यन्तम् । तत्र एकेनापीति पूरणीयमित्याशयेनाह-**एकोऽपी**त्यादि । 'तस्याभावं जगदुः' 'तेन तत्स्वरूपं ब्रूमः' 'भाक्तमाहुः'

१. विप्रतिपत्तिरूप इति । विवादाध्यासितो ध्वनिः काव्यसम्बन्धी न वेति प्रथमे, ध्वनिर्गुणवृत्तिभिन्नो न वेति द्वितीये, ध्वनिर्लक्षयितुं शक्यो न वेति तृतीये च विप्रतिपन्न इत्यर्थः ।

२. 'यस्य च भावेन भावलक्षणम्' (पा. सू., २. ३. ३७.) इति सूत्रेणेत्यर्थः । तथा च सति ज्ञानजनकज्ञानविषयत्वरूपलक्षणार्थकसप्तम्या एकैकस्य विप्रतिपत्तिप्रकारस्य निरूपणहेतुत्वं न प्रतीयेत । 'यतश्च निर्धारणम्' ( पा. सू., २. ३. ४१. ) इति निर्धारणसप्तम्या तु घटकत्वाद्यर्थिकया तत्तद्विमतिघटितसमुदायघटकेन केनाप्येकेन विप्रतिपत्तिप्रकारेण ध्वनिस्वरूपनिरूपणस्य प्रयोज्यता सुप्रतीता भवतीति भावः ।

**तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणीयसीभिरपि चिरन्तनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम् ,**

## लोचनम्

भिधानाभिधेयलक्षणो ध्वनिशास्त्रयोर्वक्तृश्रोत्रोर्व्युत्पाद्यव्युत्पादकभावः सम्बन्धः, विमतिनिवृत्त्या तत्स्वरूपज्ञानं प्रयोजनम्, शास्त्रप्रयोजनयोः साध्यसाधनभावस्सम्बन्ध इत्युक्तम्।

अथ श्रोतृगतप्रयोजनप्रयोजनप्रतिपादकं 'सहृदयमनःप्रीतये' इति भागं व्याख्यातुमाह—**तस्य ही**ति। विमतिपदपतितस्येत्यर्थः। ध्वनेः स्वरूपं लक्षयतां सम्बन्धिनि

## बालप्रिया

'तेन ब्रूमः' 'केचिदूचुः' 'तेन ब्रूमः' इति पृथक् पृथक् योजना लभ्यत इति भावः। अवतारिकोक्तरीत्या 'तेन तत्स्वरूपं ब्रूम' इत्यनेन प्रदर्शितमभिधेयादिकं श्रोतृप्रवृत्त्यङ्ग[1] प्रसङ्गाद्दर्शयति—**ध्वनिस्वरूप**मित्यादि। **अभिधानाभिधेयलक्षण** इति। अभिधायकाभिधेयभावस्वरूप[2] इत्यर्थः। अत्र व्युत्क्रमेण निर्देशः। एवमुपर्यपि बोध्यम्। प्रतिपाद्यप्रतिपादकभाव इति यावत्। **सम्बन्ध** इत्यनेनान्वयः। **व्युत्पाद्ये**ति। व्युत्पादकव्युत्पाद्यभाव इत्यर्थः। **विमतिनिवृत्त्ये**ति। ध्वनिस्वरूपविषयकविमतिनिवृत्त्या सहितमित्यर्थः। विप्रतिपत्त्युपन्यासपूर्वकं 'तेन ब्रूम' इत्युक्त्या विमतिनिवृत्तेः प्रयोजनत्वं लभ्यत इति भावः। **प्रयोजन**मिति। तत्स्वरूपवचनस्य प्रयोजनमित्यर्थः। **साध्ये**ति। साधनसाध्यभाव इत्यर्थः। **इत्युक्त**मिति। तेन 'तत्स्वरूपं ब्रूम' इत्यनेनोक्तार्थाः प्रदर्शिता इत्यर्थः।

**अथे**त्यादि। **श्रोतृगते**ति। श्रोतृगतं प्रयोजनं पूर्वोक्तं विमतिनिवृत्त्या सह ध्वनिस्वरूपज्ञानं, तस्य यत्प्रयोजनं प्रीतिरूपं तत्प्रतिपादकमित्यर्थः। 'लक्षयता'मित्यादिभागस्यैव 'सहृदये'त्याद्यंशव्याख्यारूपत्वादवशिष्टस्य तच्छेषत्वाच्च **व्याख्यातुमाहे**त्युक्तं, न तु व्याचष्ट इति। तच्छब्दस्य प्रकरणसिद्धमर्थमाह[3]—**विमती**ति। व्यवहिततत्वेनान्वयं दर्शयन् व्याचष्टे—**ध्वनेरि**त्यादि। वृत्तौ 'आनन्द' इति प्रीतिपदार्थकथनम्।

---

१. अनुबन्धचतुष्टयमित्यर्थः। अनुबन्धत्वञ्च प्रवृत्तिप्रयोजकज्ञानविषयत्वम्। तत्प्रयोजकञ्च ज्ञानं 'इदं मत्कृतिसाध्यम्' 'इदं मदिष्टसाधनम्' इति। तत्रेदंपदेन विषयः, मत्पदेनाधिकारी, इष्टपदेन प्रयोजनं, साधनपदेन च साध्यसाधनभावस्सम्बन्धश्चाभिलप्यते।

२. अभिधायकत्वनिरूपिताभिधेयत्वमित्यर्थः। वैयाकरणमतेन प्रतियोग्यनुयोग्युभयनिष्ठधर्मस्य सम्बन्धतास्वीकारादिति भावः।

३. तच्छब्दस्य वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तत्वादित्यर्थः।

लोचनम्

**मनसि आनन्दो** निर्वृत्यात्मा चमत्कारापरपर्यायः, **प्रतिष्ठां** परैर्विपर्यासाद्युपहतैरनुन्मूल्यमानत्वेन स्थेमानं, **लभता**मिति प्रयोजनं सम्पादयितुं तत्स्वरूपं प्रकाश्यत इति

बालप्रिया

तेनात्र विवक्षितमाह—**निर्वृत्यात्मे**ति। ननु हेत्वन्तरप्रापिताप्रतिष्ठत्व एव 'प्रतिष्ठां लभताम्' इत्युक्तेः प्रसक्तिरित्यत आह–**परै**रित्यादि। **परैः** अभाववाद्यादिभिः। **विपर्यासादी**त्यादिपदेन सन्देहलक्षणकरणाज्ञानयोः सङ्ग्रहः। **अनुन्मूल्यमानत्वेन** अनुच्छिद्यमानत्वेन। यथा परैरुच्छिद्यमानो न भवति तथेत्यर्थः। प्रतिष्ठापदविवरणम्—**स्थेमान**मिति। स्थिरतया वर्तमानमित्यर्थः। 'लभतामिती'ति वृत्तिस्थेनेतिपदेन गम्यमानमर्थमाह—**इति प्रयोजनं सम्पादयितु**मिति। कारिकायां 'प्रीतये' इत्यत्र प्रीतिं सम्पादयितुमित्यर्थे 'क्रियार्थे'[2] त्यादिसूत्रेण चतुर्थीति भावः। 'ध्वनेः स्वरूप'मित्यस्य 'लक्षयता'मित्येतत्कर्मतया, 'प्रकाश्यत' इत्यत्र प्रथमान्ततया तदनुषङ्गं दर्शयन्नाह—**तत्स्वरूप**मिति[1]। **सङ्गति**रिति। सम्बन्ध इत्यर्थः। अत्र 'तेन तत्स्वरूपं ब्रूमः' इत्युक्त्या विमतिनिवृत्तेस्तत्स्वरूपवचनप्रयोजनत्वं यद्यपि लभ्यते, तथापि तस्याः न मुख्य[3]प्रयोजनत्वम्, किन्तु प्रीतेरेव। सा तु प्रीतेरङ्गमित्येतत्पर'स्तेने'त्यादिचतुर्थपाद

---

१. तत्स्वरूपमिति। 'ध्वनेस्स्वरूपं' इत्यस्यावृत्त्या 'लक्षयताम्' इत्यत्र लक्षधात्वर्थे 'प्रकाश्यत' इत्यत्र काशधात्वर्थे चोभयत्र कर्मतयान्वय इत्यर्थः। 'ध्वनेस्स्वरूप'मिति पदन्तु प्रधानीभूतकाशधात्वर्थानुरोधेन प्रथमान्तमेव, न तु गुणीभूतलक्षणक्रियानुरोधेन द्वितीयान्तम्। अत्र च 'स्वादुमि णमुल्' ( पा. सू., ३. ४. २६ ) इति सूत्रस्थभाष्यानुवादिन्याविमे कारिके प्रमाणतया द्रष्टव्ये—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥ इति ॥

तेन 'क्षुधं प्रतिहन्तुं शक्यं' इति कैयटप्रयोगः, 'ओदनं पक्त्वा भुज्यते' 'पूजयितुं शक्यते हरिः' इत्यादयश्च प्रयोगाः च्युतसंस्कारा एव। विस्तरस्तु अनभिहिताधिकारस्थशब्दरत्नादावनुसन्धेयः।

२. 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' ( पा. सू., २. ३. १४. ) इति सम्पूर्णं सूत्रम्।

३. मुख्यत्वञ्च—अन्येच्छानधीनेच्छाविषयत्वम्। अन्यासामुपायेच्छानां उपेयानन्देच्छाधीनत्वम्। उपेयानन्देच्छायास्तु नोपायेच्छाधीनत्वमिति अन्या इच्छा ( उपायेच्छा ) तदनधीना उपेयभूतानन्देच्छा, तद्विषयत्वं प्रीत्यपरपर्याये आनन्देऽस्तीति मुख्यत्वं तस्य सुस्पष्टसमन्वयमिति।

लोचनम्

सङ्गतिः। प्रयोजनं च नाम तत्सम्पादकवस्तुप्रयोक्तृताप्राणतयैव तथा भवतीत्याशयेन 'प्रीतये तत्स्वरूपं ब्रूम' इत्येकवाक्यतया व्याख्येयम्। तत्स्वरूपशब्दं व्याचक्षाणः संक्षेपेण तावत्पूर्वोदीरितविकल्पपञ्चकोद्धरणं सूचयति—**सकले**त्यादिना। **सकल**शब्देन **सत्कवि**शब्देन च प्रकारलेशे कस्मिंश्चिदिति निराकरोति। **अतिरमणीय**मिति भाक्ताद्व्यतिरेकमाह। न हि 'सिंहो वटुः' 'गङ्गायां घोषः' इत्यत्र रम्यता काचित्। **उपनिषद्भूत**शब्देन तु अपूर्वसमाख्यामात्रकरण इत्यादि निराकृतम्। **अणीयसीभिरि**त्यादिना गुणालङ्कारानन्तर्भूतत्वं सूचयति। **अथ चे**त्यादिना 'तत्समयान्तःपातिन'

बालप्रिया

इत्यमुमर्थं प्रयोजनपदार्थनिर्वचनपूर्वकं प्रदर्शयति—**प्रयोजनञ्चे**त्यादि। **तदि**ति। तस्य प्रयोजनस्य **सम्पादकं यद्वस्तु** तस्य, तत्प्रतीति यावत्। या **प्रयोक्तृता** प्रयोजकता, सा **प्राणो** यस्य तद्भावेनैव तत्प्रेरकत्वस्वभावशालितयैवेति यावत्। **तथा** प्रयोजनम्। **भवती**ति। 'भाती'ति च पाठः। **नामे**ति प्रसिद्धौ। अनेन प्रयुङ्क्ते प्रेरयतीति प्रयोजनपदव्युत्पत्तिर्दर्शिता। **इत्याशयेने**ति। अत्र विमतिनिवृत्तेः न ध्वनिस्वरूपवचनप्रयोजकता, तज्ज्ञानवत्तस्याः स्वयमपुरुषार्थत्वात्। किन्तु प्रीतेरेवेति सैव तस्य मुख्यं प्रयोजनम्। विमतिनिवृत्तिस्तु तदङ्गमेवेत्यभिप्रायेणेत्यर्थः। **इत्येकवाक्यतये**ति। इत्येवंविधविशिष्टैकार्थप्रतिपादकतयेत्यर्थः। **व्याख्येय**मिति। व्याख्यातव्यमित्यर्थः। अतस्तथा तन्मूलं वृत्तिकृता व्याख्यातमिति विमतिनिवृत्तेरपि मुख्यप्रयोजनत्वसम्भवे 'तेन तत्स्वरूपं ब्रूमः' 'सहृदयमनःप्रीतये तत्स्वरूपं ब्रूमः' इति च व्याख्येयतया वाक्यभेदः स्यादिति च भावः। यद्वा—**व्याख्येय**मित्यत्र व्याख्या इयमिति छेदः। इयं व्याख्या वृत्तिकृतो व्याख्या। **इत्येकवाक्यतदा** इत्यस्य या एकवाक्यता तत्प्रदर्शिकेत्यर्थः। 'सकले'त्यादिध्वनिस्वरूपविशेषणप्रयोजनं दर्शयति—**तत्स्वरूपशब्दमि**त्यादिना। **संक्षेपेणे**ति। उत्तरत्र विस्तरेण करिष्यति। संक्षेपेण विस्तरेण च प्रतिपाद्यमानो ह्यर्थः प्रतिपित्सूनां प्रतीतिपथमनायासेनावतरेदिति भावः। **उद्धरणं** प्रतिक्षेपम्। **इति निराकरोती**ति। यतः सकलशब्देन निखिलविपश्चिद्व्याप्तत्वं सत्कविशब्देन प्रमाणसिद्धत्वात्प्राधान्यं चोक्तं, तस्मादखिलकाव्यविपश्चिद्व्याप्यत्वावकृतमप्राधान्यकृतं वा प्रकारलेशत्वं निराकृतमित्यर्थः। **व्यतिरेकं** वैलक्षण्यम्। **नहीति**। पराक्रमातिशयादिव्यंग्यसद्भावेऽपि तयोर्वाक्ययोर्गुणालङ्कारोपस्कृतशब्दार्थात्मककाव्यत्वाभावान्नात्यन्तरमणीयतेत्यर्थः। **उपनिषद्भूते**ति। काव्यतत्त्वानभिज्ञैर्दुर्ज्ञेयत्वादतिरहस्यभूतेत्यर्थः। अनेन सर्वोत्कृष्टत्वप्रदर्शनात्समाख्यामात्रत्वस्य निरासः सूचित इत्याह—**उपनिषदि**त्यादि। **सूचयती**ति। वृत्तौ 'अणीयसीभिरपी'ति। सूक्ष्मतराभिरतिनिशिताभिरपीत्यर्थः। तादृशीभिर्बुद्धिभिरप्रकाशितपूर्वस्य कथं स्थूलबुद्धिसंवेद्यगुणाद्यन्त-

१. ध्वनिस्वरूपनिरूपणमित्यर्थः।

**अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते ॥ १ ॥**

लोचनम्

इत्यादिना यत्सामयिकत्वं शङ्कितं तन्निरवकाशीकरोति । **रामायणमहाभारत**शब्दे-नादिकवेः प्रभृति सर्वैरेव सूरिभिरस्यादरः कृत इति दर्शयति । **लक्षयता**मित्यनेन वाचां स्थितमविषय इति परास्यति । लक्ष्यतेऽनेनेति लक्षो लक्षणम् । लक्षेण निरूपयन्ति लक्षयन्ति, तेषां लक्षणद्वारेण निरूपयतामित्यर्थः । **सहृदयाना**मिति । येषां काव्या-नुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते स्वहृदयसं-

बालप्रिया

भूतत्वमिति भावः । अनेनाद्याभाववादो निराकृतः । **इति परास्यती**ति । 'तत्स्वरूपं ब्रूम'इत्यस्य लक्षणप्रदर्शनेन ध्वनिस्वरूपं प्रकाशयाम इति खल्वर्थः। ततश्चेह प्रदर्शित-लक्षणद्वारा सहृदयानां ध्वनेर्निरूपणं भवति । एवं चोक्तनिरासः सिध्यतीति भावः । निर्वचनपूर्वकमुक्तमुपपादयति-**लक्ष्यत** इत्यादि । **इति लक्षो लक्षण**मिति । लक्षश-ब्दः करणघञन्त इति भावः । **लक्षेणे**ति । लक्षशब्दात् "प्रातिपदिकाद्धात्वर्थे' इत्यनेन निरूपणार्थे णिजिति भावः । अप्रसिद्धार्थकत्वात्सहृदयपदं व्याचष्टे-**येषामि**-त्यादि । **काव्यानामनुशीलनं** शब्दपाठोऽर्थानुसन्धानं **च** । तस्य **अभ्यासः** पौ-नःपुन्यं **तद्वशात्** । **विशदी**ति । विशदीभावो रसावेशौन्मुख्यम् । मनसो मुकुररूपणेन स्वतो वैशद्येऽपि संस्कारवशादतिरेकः प्रकाश्यते । **वर्णनीये**ति । वर्णनीयं नायकादिवि-भावादि । **तन्मयीभवनस्य** तत्तादात्म्यापत्तिरूपस्य **योग्यता** सामर्थ्यमित्यर्थः । 'ते सहृदया' इति सम्बन्धः । उच्यन्त इति शेषः । अनेन रूढिर्दर्शिता । योगमप्याह-**स्वे**ति । **स्वहृदयमेव संवादः** संवादकप्रमाणं, **तद्भाजः** विमलतरेण हृदयेन सह वर्तन्त इत्यवयवार्थः । यद्वा-स्वस्मिन् कविहृदयं संवादकत्वेन भजन्तीति तथा । अ-

१. यद्यप्यत्र करणे घञ् दुर्लभः, ल्युटा बाधात्, तथापि 'उपदेशेऽजनुनासिक इत्' (पा. सू., १. ३. २.) इति सूत्रस्थोपदेशपदसाधुत्वप्रतिपादनपरमहाभाष्यो-क्तदिशा लक्षधातोः बाहुलकात् करणे घञि लक्ष इत्यस्य सिद्धिः । मम त्विदं प्रतिभाति-लक्षयतामित्यस्य निरूपयतामित्यर्थः । निरूपणं नाम लक्षणप्रयोज्यलक्ष्यविषयकबोधा-नुकूलो व्यापारः । तथा च धात्वर्थेनैव लक्षणादिना निरूपणस्य सङ्गृहीतत्वात् अग-तिकगतिबाहुलकमाश्रित्य करणघञन्तव्युत्पादनप्रयासः किमर्थ इति सुधियो विभा-वयन्त्विति ।

२. 'ईच गणः' (पा. सू., ७. ४. ९७.) इति सूत्रस्थं वार्तिकमिदम् । यद्यपी-दृशधात्वर्थे णिच् न क्वचिदुदाहृतः, तथापि 'धात्वर्थ' इत्युक्तेस्तद्भवितुं शक्नोतीति भावः ।

लोचनम्

वादभाजः सहृदयाः । यथोक्तम्—

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥ इति ॥ नाट्यशास्त्र

**आनन्द इति ।** रसचर्वणात्मनः प्राधान्यं दर्शयन् रसध्वनेरेव सर्वत्र मुख्यभूतमात्मत्वमिति दर्शयति । तेन यदुक्तम्—

ध्वनिर्नामापरो योऽपि व्यापारो व्यञ्जनात्मकः ।
तस्य सिद्धेऽपि भेदे स्यात्काव्येंऽशत्वं न रूपता ॥

इति तदपहस्तितं भवति । तथा ह्यभिधाभावनारसचर्वणात्मकेऽपि त्र्यंशे काव्ये रसचर्वणा तावज्जीवितभूतेति भवतोऽप्यविवादोऽस्ति । यथोक्तं त्वयैव—

काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक् । इति ।

बालप्रिया

स्मिन् पक्षे समानं हृदयं येषामिति बहुव्रीहिरिति भावः । उक्तार्थे प्रमाणमाह—**यथोक्त**मिति । **योऽर्थ** इति । यः **हृदयसंवादी** स्वहृदयेन तन्मयीभवनलक्षणसंवादशीलः, तद्विषयः सहृदयश्लाघ्यो विभावादिलक्षणोऽर्थः । **तस्य भावः** भावना निरन्तरचर्वणा । **रसोद्भवः** चर्वणाप्राणस्य रसस्याभिव्यक्तिहेतुः । **शरीरमि**त्यादि । तेनार्थेन हृदयव्याप्तिपूर्वकं सहृदयशरीरमपि **व्याप्यते** । अत एव पुलकाद्याविर्भावः । **शुष्कं काष्ठं** न शिलादि । अनेन दृष्टान्तेन दार्ष्टान्तिके रत्यादिवासनासत्त्वमप्यासूत्रितम् । शुष्कमित्यनेन काव्यानुशीलनकृतमनोवैशद्यञ्च । आनन्दपदोपादानफलमाह—**रसे**त्यादि । रसचर्वणैवात्मा स्वरूपं यस्य स आनन्दः तस्य । **प्राधान्यं** वस्त्वलङ्कारध्वनिभ्यां प्राधान्यम् । **दर्शयती**ति । वस्त्वलङ्काररसेषु रसध्वनेरेव प्राधान्यमितरयोस्तु तत्पर्यवसायितया गौणमिति दर्शयितुमेतदुक्तमित्यर्थः । एतत्प्रदर्शनेन परपक्षोऽपि निराकृत इत्याह—**तेने**त्यादि । **तेन** रसध्वनेर्मुख्यत्वप्रदर्शनेन । **यदुक्त**मिति । भट्टनायकेनेति शेषः । **तदपहस्तितं** निराकृतमिति सम्बन्धः । **ध्वनि**रिति । **नामे**त्यनेन पारोक्ष्यं दर्शयन् स्वानभिमतत्वं सूचयति । **अपरः** अभिधाभावनाभ्यां भिन्नः । **योऽपी**ति । अयुक्तस्याङ्गीकारद्योतकोऽपिशब्दः । **तस्ये**ति । **तस्य** अभिधाभावनाभ्यां **भेदे सिद्धेऽपि** । वस्तुतो निरूप्यमाणे भेदो न सिध्यतीति भावः । **स्यादि**ति । तस्य काव्ये अंशत्वं स्यात् **रूपता** आत्मत्वरूपमंशित्वम् । न स्यादित्यर्थः । ध्वनिः काव्यांशभूतः शब्दव्यापारत्वादभिधावदिति प्रयोगः । रसध्वनेरात्मत्वप्रदर्शनमात्रेण कथमेतदपहस्तितमित्यत उपपादयति—**तथाही**त्यादि । **अभिधा** मुख्या अमुख्या च । **भावना** भावकत्वम् । **रसचर्वणा** भोगकृत्वम् । एतदुपरि वक्ष्यते । **त्र्यंशेऽपी**त्यन्वयः । **त्वये**ति भट्टनायकेनेत्यर्थः ।

**काव्य** इति । **रसयिता** रसचर्वणाशीलः । **सर्वः** काव्ये अधिकारीति शेषः । **न बोद्धा** इतिहासादाविव बोद्धा सर्वो न, तथा **न नियोगभाक्** वेदादाविव नियो-

लोचनम्

तद्वस्त्वलङ्कारध्वन्यभिप्रायेणांशमात्रत्वमिति सिद्धसाधनम्। रसध्वन्यभिप्रायेण तु स्वाभ्युपगमप्रसिद्धिसंवेदनविरुद्धमिति। तत्र कवेस्तावत्कीर्त्यापि प्रीतिरेव सम्पाद्या। यदाह—'कीर्तिं [1]स्वर्गफलामाहुः' इत्यादि। श्रोतॄणां च व्युत्पत्तिप्रीती यद्यपि स्तः, यथोक्तम्—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥ इति॥

तथापि तत्र प्रीतिरेव प्रधानम्। अन्यथा प्रभुसंमितेभ्यो वेदादिभ्यो मित्रसंमितेभ्यश्चेतिहासादिभ्यो व्युत्पत्तिहेतुभ्यः कोऽस्य काव्यरूपस्य व्युत्पत्तिहेतोर्जायासंमित-

बालप्रिया

ज्यः सर्वः न अधिकारीति शेषः। किन्तु रसयितैवेत्यर्थः। अनेन रसचर्वणाया अधिकारसम्पादकत्ववचनेन तस्याः प्राधान्येन जीवितत्वमुक्तमेवेति भावः। केचित्तु **काव्ये सर्वः** सर्वो व्यापारः। **रसयिता** कान्तेव रसचर्वणाहृत्। **न बोद्धा** बन्धुरिव न बोधयिता। **न नियोगभाक्** प्रभुरिव न नियोगकर्तेत्यर्थ इति व्याचक्षते।

**तदि**ति। तस्मादित्यर्थः। यद्वा-त्वदुक्तमित्यर्थः। अंशमात्रत्वमित्येतद्वस्त्वलङ्कारध्वन्यभिप्रायेण चेत्तदा **सिद्धसाधनम्**। रसध्वनेरेवांशित्वेनेतरध्वन्योरंशत्वस्य ध्वनिवादिनः सिद्धस्य साधनमित्यर्थः। **रसे**ति। अंशमात्रत्वमितीत्यनुषज्यते। **स्वाभ्युपगमे**ति। स्वसिद्धान्तलक्ष्यप्रसिद्धिसहृदयानुभवैर्विरुद्धमित्यर्थः। ननु कीर्त्यादिफलान्तराणामपि सत्त्वात् 'सहृदयमनःप्रीतये' इत्यस्योपलक्षणत्वमभ्युपेत्य तान्यपि कुतो नोक्तानीत्यत्राह—**तत्रे**त्यादि। तत्र इति प्राधान्येनानन्द एवोक्त इति सम्बन्धः। **तत्र** काव्ये। **स्वर्गे**ति। स्वर्गः निरतिशयानन्दः फलं यस्यास्ताम्। शङ्कते—**श्रोतॄणामि**ति। व्युत्पत्तिश्च प्रीतिश्च **व्युत्पत्तिप्रीती**। **यथोक्तमि**ति। भामहेनेति शेषः। **वैचक्षण्यं** व्युत्पत्तिम्। **काव्यनिषेवणमि**ति 'निबन्धनमि'ति च पाठः। समाधत्ते—**तथाऽपि तत्रे**ति। **तत्र** व्युत्पत्तिप्रीत्योर्मध्ये। **प्रधानं** प्रधानफलम्। विपक्षे बाधकप्रदर्शनेनोक्तं द्रढयति—**अन्यथे**त्यादि। **अन्यथा** प्रीतिरूपप्रधानफलकत्वाभावे। **अस्य काव्यरूपस्य** वेदादिभ्यः इतिहासादिभ्यश्च को विशेषः? व्युत्पत्तिहेतुत्वस्य समानत्वेन विशेषो न स्यादित्यर्थः। व्युत्पत्तिहेतुत्वं त्रिष्वपि साधारणमिति दर्शयितु-

१. यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्पदं स्वःपदास्पदम्॥
इति स्वर्गस्वरूपं बोध्यम्।

२. भामहका., १. २.

**लोचनम्**

त्वलक्षणो विशेष इति प्राधान्येनानन्द एवोक्तः[1]। चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं मुख्यं फलम्।

**आनन्द** इति च ग्रन्थकृतो नाम। तेन स आनन्दवर्धनाचार्य एतच्छास्त्र[2]द्वारेण सहृदयहृदयेषु प्रतिष्ठां देवतायतनादिवदनश्वरीं स्थितिं गच्छत्विति भावः। यथोक्तम्—

उपेयुषामपि[3] दिवं सन्निबन्धविधायिनाम्।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः॥ इति॥

यथा मनसि प्रतिष्ठा एवंविधमस्य मनः, सहृदयचक्रवर्ती खल्वयं ग्रन्थकृदिति यावत्। यथा—'युद्धे प्रतिष्ठा परमार्जुनस्य' इति। स्वनामप्रकटीकरणं श्रोतॄणां प्रवृ-

**बालप्रिया**

मुभयत्रोक्तिः। वेदादिप्रभृतीनां प्रभ्वादिसम्मितत्वं काव्य[4]प्रदीपादौ विवृतम्। **उक्त** इति। कारिकायां फलत्वेनोक्त इत्यर्थः। भामहवचनं तु धर्मादिव्युत्पत्तेः कीर्तेश्चाङ्गतया फलत्वाभिप्रायकं, न तु मुख्यतयेत्याह—**चतुर्वर्गे**ति। चतुर्वर्गव्युत्पत्तेरपि च **पार्यन्तिकं फलमानन्द एवे**ति सम्बन्धः। **अपि चे**त्यनेन कीर्तेः समुच्चयः।

'सहृदयानामानन्द' इत्यादिग्रन्थमन्यथाऽपि व्याचष्टे—**आनन्द** इति। 'नाम चे'ति सम्बन्धः। यथा भीमसेनादेः भीमादिनाम, तथेति भावः। **तेने**ति। नामत्वेन हेतुनेत्यर्थः। **इति भाव** इत्यनेनास्य सम्बन्धः। **सः** मूलग्रन्थकारः। **एतच्छास्त्रं** ध्वनिग्रन्थः। हितशासनरूपत्वादेतस्य शास्त्रत्वम्। प्रतिष्ठाशब्दो हि देवतानां तत्समुचितायतने स्थितौ प्रसिद्ध इत्यतो **देवते**त्यादिदृष्टान्तकथनम्। **देवतायतनादिवत्** देवः देवतायतनादिष्विव। आदिपदेन भक्तजनहृदयपरिग्रहः। 'प्रतिष्ठां लभता'मित्यस्य विवरणम्—**अनश्वरीं स्थितिं गच्छत्विति**। शास्त्रद्वारेण वर्तनं नाम शास्त्रस्यैव वर्तनमित्यभिप्रायेण भामहवचनं संवादयति—**यथोक्त**मिति। **अनश्वरीं स्थितिं गच्छत्विति** प्रार्थिता स्थितिरवश्यंभाविनीत्यभिप्रायेणाह—**यथे**ति। **यथा मनसि** सहृदयमनसि **प्रतिष्ठा** भवति, **एवंविधं** तथाविधम्। **अस्य** आचार्यस्य **मनः** वैदुष्यमेतच्छास्त्रं वा। उक्तमुपपादयति—**सहृदये**ति। **खल्वि**ति प्रसिद्धौ। **यावदि**त्यवधारणे। प्रार्थितेऽस्मिन्नर्थे न संशय इत्यर्थः। अनेन ग्रन्थकृतोऽपि कीर्तिद्वारा प्रीतिरूपं फलं भवतीति दर्शितम्। प्रतिष्ठाशब्दस्योक्तार्थकत्वे प्रयोगं संवादयति—**यथे**ति। **प्रतिष्ठा** बहुमा-

---

१. कारिकायां प्रीतिशब्देन, वृत्तावानन्दशब्देनेति भावः।

२. शास्त्रं शासनकरणम्। अज्ञातज्ञापकमिति यावत्। तथा च प्रमाणान्तरेणाज्ञातस्य ध्वनिस्वरूपस्यानेन ज्ञापनादेतस्य शास्त्रत्वं सुप्रतिष्ठितमेवेति भावः।

३. भामहका, १. ६.

४. 'शब्दस्तावत्त्रिधा—प्रभुसंमितः, सुहृत्संमितः, कान्तासंमितश्चे'त्यादिकाव्यप्रदीपग्रन्थो द्रष्टव्यः। ( काव्यप्र., पृ. ६. पूना. सं. )

तत्र ध्वनेरेव लक्षयितुमारब्धस्य भूमिकां रचयितुमिदमुच्यते—

योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।

**लोचनम्**

त्त्यङ्गमेव सम्भावनाप्रत्ययोत्पादनमुखेनेति ग्रन्थान्ते वक्ष्यामः । एवं ग्रन्थकृतः कवेः श्रोतुश्च मुख्यं प्रयोजनमुक्तम् ॥ १ ॥

ननु 'ध्वनिस्वरूपं ब्रूमः' इति प्रतिज्ञाय वाच्यप्रतीयमानाख्यौ द्वौ भेदावर्थस्येति वाच्याभिधाने का सङ्गतिः कारिकाया इत्याशङ्क्य सङ्गतिं कर्तुमवतरणिकां करोति—तत्रेति । एवंविधेऽभिधेये प्रयोजने च स्थित इत्यर्थः । भूमिरिव **भूमिका** । यथा अपूर्वनिर्माणे चिकीर्षिते पूर्वं भूमिर्विरच्यते, तथा ध्वनिस्वरूपे प्रतीयमानाख्ये निरूपयितव्ये निर्विवादसिद्धवाच्याभिधानं भूमिः । तत्पृष्ठेऽधिकप्रतीयमानांशोल्लिङ्गनात् । वा·

**बालप्रिया**

नात्मिका स्थितिः । किमर्थमेवं स्वनामप्रकटीकरणत्वेन व्याख्यानमित्यत आह—**स्वे**ति । **प्रवृत्त्यङ्गमेवे**ति । न ख्यात्यादिलाभायेत्येवकारार्थः । **सम्भावनाप्रत्ययोत्पादनमुखेने**ति । **सम्भावना** बहुमानः, **प्रत्ययः** तद्धेतुराप्तत्वबुद्धिः, तदुभयोत्पादनद्वारेणेत्यर्थः । किमेतत् ग्रन्थकाराभिप्रेतमित्यत्राह—**इती**ति । **ग्रन्थान्ते वक्ष्यामः** "आनन्दवर्धन इति प्रथिताभिधान" इत्यस्य व्याख्यावसरे प्रकाशयिष्यामः । उपसंहरति—**एव**मिति । **ग्रन्थकृतः** ध्वनिग्रन्थकृतः । **मुख्यं प्रयोजनं** प्रीतिरूपम् । मुख्यमित्यनेन धनादीन्यवान्तरप्रयोजनानि दर्शितानीत्यलम् ॥ १ ॥

'तत्र ध्वनेरेव लक्षयितुमि'त्यादिग्रन्थमवतारयति—**नन्वि**त्यादि । **वाच्याभिधाने का सङ्गति**रिति । अप्रकृतत्वात्तदभिधानमसङ्गतमित्यर्थः । 'तत्रे'ति भावलक्षणसप्तमी द्विवचनान्तात्त्रल् । तत्पदेनाभिधेयप्रयोजनयोः पूर्वोक्तयोः परामर्शः । स्थितयोरिति शेषश्चेत्याशयेन व्याचष्टे-**एवंभूत** इत्यादि । 'एवंविध' इति च पाठः । ध्वनिस्वरूपे प्रीतिरूपे चेति तदर्थः । यद्वा—अभिधेयमात्रविशेषणमिदम् । विमतिपदपतित इति तदर्थः । **भूमिरिव भूमिके**ति । अवतरणमिवावतरणिका, पीठमिव पीठिका । इमानि पदानि "इवेप्रतिकृतावि"ति कन्प्रत्ययान्तानि । **यथाऽपूर्वे**ति । अपूर्वं यन्निर्मीयत इति अपूर्वनिर्माणं प्रासादादि तस्मिन् । **निर्विवादसिद्धे**ति । ध्वनिवादिनां तत्प्रतिक्षेपकाणां च सम्प्रतिपन्नेत्यर्थः । **भूमिः** अधिष्ठानं उपाय इति यावत् । वाच्यस्य भूमित्वे तदभिधानस्यापि भूमित्वम्, वाच्यप्रतीयमानार्थयोरधिष्ठानाधिष्ठेयभावेन प्रतीतेः । प्रतीयमानार्थोपयोगितया इह वाच्यार्थाभिधानं सङ्गतमेवेति भावः । कथं तस्य भूमिसादृश्यमित्यत आह—**त**दिति । तस्य वाच्यस्य **पृष्ठे** पश्चात् । वाच्यप्रतीत्युत्तरकाल इति यावत् । **अधिकस्य**

१. पा. सू., ५. ३. ९६.

## वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥ २ ॥

**लोचनम्**

च्येन समशीर्षिकया[1] गणनं तस्याप्यनपह्नवनीयत्वं प्रतिपादयितुम्। **स्मृतावि**त्यनेन 'यः समाम्नातपूर्व' इति द्रढयति। 'शब्दार्थशरीरं काव्यमि'ति यदुक्तं, तत्र शरीरग्रहणादेव केनचिदात्मना तदनुप्राणकेन भाव्यमेव। तत्र शब्दस्तावच्छरीरभाग एव सन्निविशते सर्वजनसंवेद्यधर्मत्वात्स्थूलकृशादिवत्। अर्थः पुनः सकलजनसंवेद्यो न भवति। न

**बालप्रिया**

वाच्यव्यतिरिक्तस्य। **प्रतीयमानस्य** व्यङ्ग्यस्य। **उल्लिङ्गनादु**ल्लेखनात्। 'तत्पृष्ठेऽस्थिते'ति पठित्वा, **तत्पृष्ठे** पक्षभूते तस्मिन्नुत्थिततया व्यतिरिक्ततया प्रतीयमानांशस्य उल्लिङ्गनादनुमानादिति केचित्। **समशीर्षिकया** समप्रधानतया। **गणनं** 'वाच्यप्रतीयमानाख्यावि'ति निर्देशः। **तस्यापि** प्रतीयमानस्यापि। **अपि**र्दृष्टान्तार्थः। अनेन प्रतीयमानमस्ति अर्थांशत्वात्, वाच्यवदिति प्रमाणमपि सूचितमित्युक्तम्, प्रमाणोक्त्यैवानपह्नवनीयत्वसिद्धेः। स्थिताविति वक्तव्ये 'स्मृता'वित्युक्तेः फलं व्याचष्टे—**स्मृता**वितीत्यादि। यद्बुधैः समाम्नातं तत् स्मृतिरूपं च, यथा मन्वादिभिर्धर्मादिसमाम्नानं तच्च प्रमाणान्तरमूलं, तद्वदिदमपीति द्रढयितुं स्मृतावित्युक्तमिति भावः। 'योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थित' इत्यनेन कारिकापूर्वार्धेनोक्तं सहृदयश्लाघ्यत्वविशिष्टार्थस्य काव्यात्मत्वं सोपपत्तिकं दर्शयन् वृत्त्यनुसारेण तदर्थं विवृणोति—**शब्दे**त्यादिना। शब्दार्थावेव शरीरं यस्य तत्। **उक्त**मिति। पूर्वपक्षवादिभिरुक्तमित्यर्थः। **तत्र शरीरग्रहणादेव** शब्दार्थयोः काव्यशरीरत्वस्वीकारादेव। यद्वा—**तत्र** तस्मिन्नुक्ते सति। **शरीरे**ति। काव्यस्य शरीरस्वीकारादेवेत्यर्थः। **एव**कारेण प्रमाणान्तरानपेक्षत्वं सूचितम्। **केनचित्** शब्दार्थयोरन्यतरेण। किमर्थमिति चेदाह—**तदि**ति। तत् काव्यमनुप्राणयति जीवयति सहृदयाह्लादकं करोतीति तदनुप्राणकं, तेन। **भाव्यमेवे**त्येवकारेणान्यथाशरीराभासत्वप्रसक्तिं दर्शयति। विमतं शरीरमात्मवत्, शरीरत्वादस्मदादिशरीरवदिति प्रयोगः। **तत्रे**त्यादि। **तत्र** आत्मावश्यंभावित्वे सति। यद्वा शब्दार्थयोर्मध्ये शरीरभाग एवेत्येवकारेण आत्मकोटिनिवेशे योग्यता निरस्यते। **सर्वे**ति। **सर्वजनसंवेद्या धर्माः** तीव्रत्वमन्दत्वादयो मधुरत्वपरुषत्वादयो वा यस्य तत्त्वात्। दृष्टान्ते तु स्थूलत्वादयो धर्माः। यद्वा—संवेद्यशब्दो भाववचनः सर्वजनसंवेद्यत्वरूपधर्मकत्वादित्यर्थः। विमतश्शब्दो नात्मा, सर्वजनसंवेद्यधर्मत्वात्, स्थूलादिशरीरवदिति प्रयोगः। सर्वेत्यादिना बाह्येन्द्रियग्राह्यत्वरूपो हेतुर्दर्शित इति केचित्। तर्ह्यर्थस्यात्मत्वमस्त्वत आह—**अर्थः पुन**रित्यादि। पुनश्शब्दोऽर्थस्यात्मत्वयोग्यतारूपविशेषद्योतकः। **सकले**ति। काव्यार्थस्य सहृदयैकवेद्यत्वात्तदितरवाक्यार्थस्य व्युत्पन्नजनमात्रवेद्यत्वाच्चा-

---

१. द्वन्द्वघटकसर्वपदार्थानां समप्राधान्यादिति भावः।

लोचनम्

ह्यर्थमात्रेण काव्यव्यपदेशः, लौकिकवैदिकवाक्येषु तदभावात्। तदाह—**सहृदयश्लाघ्य** इति। स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्या विभज्यते।

तथाहि—तुल्येऽर्थरूपत्वे किमिति कस्मैचिदेव सहृदयाः श्लाघन्ते। तद्भवितव्यं तत्र केनचिद्विशेषेण। यो विशेषः, स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यव-

बालप्रिया

र्थत्वावच्छिन्नस्सर्वजनवेद्यो न भवतीत्यर्थः[1]। अनेन शब्दस्यानात्मत्वसाधकं यदुक्तं, तदत्र नास्तीति दर्शितम्। तर्हि किमर्थसामान्यस्य काव्यात्मत्वम्? नेत्याह—**न ही**त्यादि। **अर्थमात्रेण** व्युत्पन्नजनवेद्येन कृत्स्नेनार्थेन व्यवहारं प्रति व्यवहर्तव्यस्य हेतुत्वाभिप्रायेण, हेतौ तृतीया। **काव्यव्यपदेशः** काव्यव्यवहारः। **वाक्येष्विति**। वाक्यविषयक इत्यर्थः[2]। **तदभावात्** काव्यव्यपदेशाभावात्। अन्यथा तद्वाक्येष्वपि काव्यव्यपदेशः स्यादिति भावः। **तदाहे**त्यादि। शब्दस्य काव्येतरवाक्यार्थस्य च काव्यात्मत्वाभावात्तद्व्यावृत्त्यर्थं 'अर्थस्सहृदयश्लाघ्य' इत्याहेत्यर्थः। अथ सहृदयश्लाघ्यत्वरूपविशेषणगम्यार्थप्रदर्शनेन काव्यार्थस्यात्मत्वमुपपादयन्नुत्तरार्धस्य भावं विवृणोति—**स एक** इत्यादि। **एक एव** एकत्वेनैव भासमानः। **सः** अर्थः सहृदयश्लाघ्योऽर्थः। **द्विशाखतया** द्व्यंशत्वेन। **विवेकिभिः** विवेचनशीलैः। **विभागबुद्ध्या** विरुद्धावन्योन्यव्यावृत्तधर्माणौ भागावंशावस्येति विभागः, तद्बुद्ध्या हेतुना।

उक्तमुपपादयति—**तथाही**त्यादि। **तुल्येऽर्थरूपत्व** इति। काव्यार्थस्य लौकिकाद्यर्थस्य चार्थरूपत्वे तुल्ये सतीत्यर्थः। द्वयोरर्थयोरर्थत्वेन साम्येऽपीति यावत्। **किमिति**। कस्मात् कारणात्। अस्मद्विवक्षितान्नान्यस्मादिति भावः। **कस्मैचिदेव** काव्यार्थायैव। **तत्** तस्मात्। **तत्र** काव्यार्थे। **विशेषेण** श्लाघाहेतुभूतेन विशेषेण। अतिशयाधायको धर्मो विशेषः। काव्यार्थो विशेषवान्, सहृदयश्लाघ्यत्वात्, यन्नैवं तन्नैवम्, यथा लौकिकादिवाक्यार्थ इति प्रयोगः। **य** इत्यादि। **विशेषः** विशेषाधायकः। **स प्रतीयमानभाग** इति। इत्युच्यत इति शेषः। अनेनान्यो भागो वाच्य इति दर्शितम्। **विवेकिभिरि**त्यादि। स इत्यनुषज्यते। यथा ह्यात्मा स्वसान्निध्यविशेषमात्रेण जडात्मकघटादिविलक्षणतया सशिरस्कदेहपिण्डे स्वचैतन्यारोपणमुखेनात्मभावप्रतीतिहेतुः, अत एव तच्छ्लाघ्यतासम्पादकश्च, तथा प्रतीयमानभागोऽपि इतरवाक्यार्थापेक्षया सहृदयश्लाघालक्षणं कमप्यतिशयं काव्यार्थे सम्पादयतीति तस्य विशेषहेतुत्व-

---

१. अर्थत्वव्यापिका सर्वजनसंवेद्यता न भवतीति यावत्।

२. विषयक इति। यद्यपि व्यवहारस्य शब्दरूपतया शब्दस्य च निर्विषयकत्वेन नेदं समीचीनम्, तथापि शब्दजन्यज्ञानस्य सविषयकत्वेन तज्जनकेऽपि याचितमण्डनन्यायेन तत्त्वव्यपदेशस्साधीयान्। व्यवहारस्य ज्ञानरूपत्वे तु न शङ्काकलङ्कावसरोऽपीति ध्येयम्।

**काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया**

**लोचनम्**

स्थाप्यते। वाच्यसंवलनाविमोहितहृदयैस्तु तत्पृथग्भावे विप्रतिपद्यते, चार्वाकैरिवात्मपृथग्भावे। अत एव **अर्थ** इत्येकतयोपक्रम्य **सहृदयश्लाघ्य** इति विशेषणद्वारा हेतुमभिधायापोद्धारदृशा **तस्य द्वौ भेदा**वंशावित्युक्तम्, न तु द्वावप्यात्मानौ काव्यस्येति।

कारिकाभागगतं काव्यशब्दं व्याकर्तुमाह—**काव्यस्य** हीति। **ललित**शब्देन गुणालङ्कारानुग्रहमाह। **उचित**शब्देन रसविषयमेवौचित्यं भवतीति दर्शयन् रसध्वनेर्जीवितत्वं सूचयति। तदभावे हि किमपेक्षयेदमौचित्यं नाम सर्वत्रोद्घोष्यत इति भावः।

**बालप्रिया**

रूपात्मगुणयोगादात्मत्वं विवेकिभिरुपपत्त्या निर्धार्यत इत्यर्थः। कुतस्तर्हि सर्वेषां तथा न प्रतीतिः, प्रत्युत विमतिश्चेत्यत आह—**वाच्ये**त्यादि। प्रतीयमानस्य या **वाच्यसंवलना** वाच्यार्थमिश्रणा, तया निरूढनिबिडतरताद्रूप्यभावनावासनाधिरूढया **विमोहितं** विवेकसामर्थ्यरहितं कृतं **हृदयं** येषां तैः। **तत्पृथग्भावे** तस्य प्रतीयमानस्य वाच्याच्छरीरभूतात्पृथग्भावे। दृष्टान्तमाह—**चार्वाकै**रिति। शरीरादिति शेषः। व्याख्यातमर्थं कारिकारूढं करोति—**अत एवे**त्यादि **काव्यस्ये**त्यन्तेन। **अत एव** यतो देहात्मन्यायेन वाच्यव्यंग्ययोरवस्थानं विवेचकाविवेचकदृष्टिद्वयानुरोधिनी च तत्पृथग्भावापृथग्भावपरिच्छित्तिस्तत एव। **एकतये**ति। एकवचनान्ततयेत्यर्थः। **उपक्रम्य** वचनोपक्रमं कृत्वा। अविवेचकदृष्टचतुरोध्यविभागबुद्ध्योपस्थापितं यद्वाच्यव्यंग्ययोरर्थयोरेकत्वं, तद्बोधकैकवचनान्तत्वेनार्थ इत्यनुवादभागे निर्दिश्येत्यर्थः। **विशेषणद्वारा** विशेषणमुखेन। **हेतु**मिति। सहृदयश्लाघाहेतुभूतो द्व्यंशत्वसाधकश्च योऽर्थविशेषस्तमित्यर्थः। **तद्भवितव्यं तत्र केनचिद्विशेषेणे**त्युक्तं प्राक्। **अभिधाये**ति। प्रदर्श्येत्यर्थः। **अपोद्धारदृशा** विभागबुद्ध्या। **भेदा**वित्यस्य व्याख्यानं—**अंशा**विति। श्लाघनक्रियायाः कर्मभूत एकोंऽशो वाच्यो यस्तस्या हेतुभूतः, स प्रतीयमानांश इत्यर्थः। **न त्वि**त्यादि। किन्तु प्रतीयमान एवात्मा, वाच्यस्त्वंशः शरीरभूत इति भावः। अत्राविभागबुद्धिगम्याकारेणार्थस्य पूर्वार्धे काव्यात्मत्वनिर्देशः, उत्तरार्धे तु विभागबुद्धिगम्याकारेण द्व्यंशत्वविधानमिति सारार्थः। 'अर्थस्सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थित' इति च कारिकापाठः।

**काव्यशब्द**मिति। 'काव्यात्मे'त्यत्र काव्यशब्दमित्यर्थः। 'ललितोचित' शब्दाभ्यां काव्यसम्बन्धिनस्सर्वे सङ्गृहीता इत्याह—**ललिते**त्यादि। **गुणालङ्कारानुग्रहमाहे**ति। गुणालङ्कारकर्तृकमनुग्रहं साहायकं चारुत्वकरणमिति यावत्। **रसविषयमे**वेति। इतिवृत्तादीनामुपादेयानां रसशेषत्वात्[1]तद्विषयमपि रसविषयमेवेति भावः। **सूचयती**ति।

१. अङ्गत्वादित्यर्थः।

स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ ।

## लोचनम्

**योऽर्थ** इति [1]यदानुवदन् परेणाप्येतत्तावदभ्युपगतमिति दर्शयति । **तस्ये**त्यादिना तदभ्युपगम एव द्व्यंशत्वे सत्युपपद्यत इति दर्शयति । तेन यदुक्तम्—'चारुत्वहेतुत्वाद्गुणालङ्कारव्यतिरिक्तो न ध्वनिः' इति, तत्र ध्वनेरात्मस्वरूपत्वाद्धेतुरसिद्ध इति दर्शितम् । न ह्यात्मा चारुत्वहेतुर्देहस्येति भवति । अथाप्येवं स्यात्तथापि वाच्येऽनैकान्तिको

## बालप्रिया

रसविषयमौचित्यं रसस्य प्राधान्यं विना न घटते, तस्मिंश्च सति तस्यात्मत्वं सिद्धमिति भावः । एतदेव विपक्षे बाधकमुखेन साधयति—**तदभाव** इत्यादि । तस्य जीवितभूतस्य रसस्याभावे । **उद्भाव्यत** इति । अभाववादिभिरपीति शेषः । वृत्तौ 'सन्निवेशे' त्यस्य शब्दार्थयोः संस्थानेत्यर्थः । 'य' इत्यादिनिर्देशस्य फलमाह—**योऽर्थ** इत्यादि । **यदा** यच्छब्देन । यच्छब्दघटितवाक्येनेति यावत् । **परेणापि** पूर्वपक्षिणापि । **एतत्** प्रतीयमानं वस्तु । **तावत्** आदौ संप्रतिपत्तौ वा । **अभ्युपगत**मिति । प्रतीयमानस्य काव्यार्थान्तर्भावादिति भावः । **त**दित्यादि । **तदभ्युपगमः** प्रतीयमानाभ्युपगमः । **द्व्यंशत्वे सति** उपपद्यत एवेति सम्बन्धः । एकांशाङ्गीकारे अंशान्तरस्यावारणीयत्वादिति भावः । तदभ्युपगम एवोपपद्यते, नानभ्युपगम इति वा । यद्वा—**एतत्** काव्यार्थस्य सहृदयश्लाघ्यत्वम् । **तदभ्युपगमः** सहृदयश्लाघ्यत्वाभ्युपगम इति । एवञ्च पूर्वपक्षोक्तानुमानमपि परास्तमित्याह—**तेने**त्यादि । **तेन** उक्तभङ्ग्या ध्वनेरात्मत्वप्रतिपादनेन । **इति दर्शित**मित्यनेनान्वयः । **तत्रे**ति । तदनुमान इत्यर्थः । **असिद्ध** इति । स्वरूपासिद्ध इत्यर्थः । ननु ध्वनेरात्मत्वेऽपि चारुत्वहेतुत्वं किं न स्यादित्यतो दृष्टान्तगर्भमाह—**न हीति** । 'इति न भवति ही'ति सम्बन्धः । लोक इति शेषः ।

ननु प्रतीयमानस्य वाच्यार्थश्लाघालक्षणातिशयहेतुत्वेन चारुत्वहेतुत्वमस्त्येवेति कथमसिद्धिः । लोकेऽप्यात्मा चारुत्वहेतुः, शवशरीरे सर्वाभरणभूषितेऽपि चारुत्वादर्शनादित्यत्राह—**अथाप्येव**मिति । **अथापि** यद्यपि । **एव**मिति । आत्मनश्चारुत्वहेतुत्वमित्यर्थः । **स्यादि**त्यभ्युपगमे । **तथापी**ति । तथापीह दोषोऽस्तीत्यर्थः । तमाह—**वाच्य** इति । **अनैकान्तिकः** [2]व्यभिचारी । प्रतीयमानसंवलनोपाधिकस्य चारुत्वहेतुत्वस्य वाच्यार्थेऽपि सत्त्वात्तस्य गुणालङ्कारव्यतिरिक्तत्वाच्च तत्र व्यभिचार इत्यर्थः ।

---

१. यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता ।
तच्छब्दयोग औत्तर्यं साध्यत्वञ्च विधेयता ॥
इति भट्टवार्तिकोक्तानुवादलक्षणं बोध्यम् ।

२. अनैकान्तिको व्यभिचारी । तत्त्वञ्च साध्याभाववद्वृत्तित्वम् ।

**तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।**
**बहुधा व्याकृतः सोऽन्यैः**
**काव्यलक्ष्मविधायिभिः ।**
**ततो नेह प्रतन्यते ॥ ३ ॥**

**केवलमनूद्यते पुनर्यथोपयोगमिति ॥ ३ ॥**

लोचनम्

हेतुः । न ह्यलङ्कार्य एवालङ्कारः, गुणी एव गुणः । एतदर्थमपि वाच्यांशोपक्षेपः । अत एव वक्ष्यति—'वाच्यः[1] प्रसिद्धः' इति ॥ २ ॥

**तत्रेति** । द्व्यंशत्वे सत्यपीत्यर्थः । **प्रसिद्ध** इति । वनितावदनोद्यानेन्दूदयादिर्लौकिक एवेत्यर्थः । 'उपमादिभिः प्रकारैः स व्याकृतो बहुधे'ति सङ्गतिः । **अन्यै**-रिति[2] कारिकाभागं **काव्ये**त्यादिना व्याचष्टे । 'ततो नेह प्रतन्यत' इति विशेषप्रतिषेधेन शेषाभ्यनुज्ञेति दर्शयति—**केवलमि**त्यादिना ॥ ३ ॥

बालप्रिया

तद्व्यतिरिक्तत्वं दर्शयति—**न ही**त्यादिना । **एतदर्थमपी**ति । न केवलं भूमिकार्थम्, अनैकान्तिकत्वप्रदर्शनार्थमपीत्यर्थः । उत्तरकारिकायां वाच्यस्य प्रसिद्धत्वकथनमप्येतदभिप्रायकमित्याह—**अत एवे**ति । प्रसिद्धे हि वस्तुनि व्यभिचारोद्भावनम् ॥ २ ॥

कारिकायां तत्रेति भावलक्षणसप्तमी । तत्पदेन वाच्यप्रतीयमानयोः परामर्शः । द्विवचनान्तात्त्रल् । अपिशब्दश्चाध्याहार्य इत्याशयेन व्याचष्टे—**द्व्यंशत्वे सत्यपी**ति । अर्थस्येति शेषः । द्वयोर्भेदयोः सतोरपीत्यर्थः । अपिशब्देनैकस्यैव बहुधा व्याकरणे विरोधं दर्शयताऽन्येषामपारं मौर्ख्यं द्योत्यते । प्रसिद्धपदं व्याचष्टे—**वनिते**त्यादि । आलम्बनादि[3]रूप इत्यर्थः । एतत्प्रदर्शनेन रसध्वनेः प्राधान्यं द्योत्यते **लौकिकः** लोकविदितः । 'काव्यलक्ष्मविधायिभि'रित्यस्य कारिकाचतुर्थपादत्वशङ्कां परिहर्तुमाह—**अन्यैरि**त्यादि । **इति विशेषप्रतिषेधेने**त्यादि । अज्ञातज्ञापनलक्षणं प्रतिपादनं हि प्रतननं, तस्य विशेषरूपस्य प्रतिषेधेन तत्प्रतिद्वन्द्वितया परिशिष्टमनुवदनं गम्यत इति भावः ॥ ३ ॥

---

१. ध्वन्या., १. ३.

२. 'अन्यैरिति कारिकाभागं व्याचष्ट' इति लोचनेन 'काव्यलक्ष्मविधायिभि'रित्यस्य व्याख्यानभूतत्वोक्त्या 'काव्यलक्ष्मविधायिभि'रिति वृत्तिग्रन्थः प्रतीयते । 'ततो नेह प्रतन्यत' इति तु कारिकाचतुर्थपादः । तथाच 'काव्यलक्ष्मविधायिभि'रित्यस्य चतुर्थपादत्वेन मुद्रणं N. S. संस्करणे भ्रमविलसितमेवेति बोध्यम् ।

३. आदिपदेनोद्दीपनानुभावौ ग्रहीतव्यौ ।

## प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।

### लोचनम्

**अन्यदेव वस्त्विति** । **पुन**श्शब्दो वाच्याद्विशेषद्योतकः । तद्व्यतिरिक्तं सारभूतं चेत्यर्थः । **महाकवीनामि**ति बहुवचनमशेषविषयव्याप[1]कत्वमाह । एतदभिधास्यमानप्रतीयमानानुप्राणितकाव्यनिर्माणनिपुणप्रतिभाभाजनत्वेनैव महाकविव्यपदेशो भवतीति भावः । यदेवंविधमस्ति तद्भाति । न ह्यत्यन्तासतो[2] भानमुपपन्नम् ; रजताद्यपि नात्यन्तमसद्भाति । अनेन सत्वप्रयुक्तं तावद्भानमिति भानात्सत्वमवगम्यते । तेन यद्भाति तदस्ति तथेत्युक्तं भवति । तेनायं प्रयोगार्थः-प्रसिद्धं वाच्यं धर्मि,

### बालप्रिया

'प्रतीयमानमि'त्यादिकारिकाव्याख्यानेनैव 'स ह्यर्थ' इत्यतः प्राक्तनो वृत्तिग्रन्थोऽपि व्याख्यातो भवतीत्याशयेन कारिकां व्याचष्टे—**पुनश्शब्द** इत्यादि । **वाच्यादि**ति । 'वाच्यांशादि'ति च पाठः । अन्यपदं व्याचष्टे—**तदि**ति । वाच्यव्यतिरिक्तमित्यर्थः । वस्तुपदं व्याचष्टे—**सारे**ति । **इति बहुवचन**मिति । 'वाणीष्वि'ति बहुवचनस्याप्युपलक्षणमिदम् । **अशेषविषयव्यापकत्व**मिति । प्रतीयमानस्येति शेषः । **एतदि**ति । एतस्मिन्नेतद्ग्रन्थे **अभिधास्यमा**नेन प्रतीयमानेन । **एतदि**ति प्रतीयमानविशेषणं वा । **इति भाव** इति । 'महाकवीनामि'ति प्रकृत्यंशेनायमर्थो गम्यत इत्यर्थः । कारिकायाः प्रतीयमानसत्त्वसाधकानुमानपरतां दर्शयितुमुपक्रमते—**यदि**त्यादि । **यत्** यस्मात् । **एवंविधं** व्यतिरिक्तं सारभूतं च प्रतीयमानम् , **अस्ति । तत्** तस्मात् । **भाती**ति । हेतुहेतुमद्भावोऽयमार्थिको बोध्यः । अनेन सत्त्वभासमानत्वयोर्हेतुहेतुमद्भावरूपानुकूलतर्कश्च प्रकाशितः । न्यायमतानुसारेणाह—**न ही**ति । **भानं** प्रतीतिः । **उपपन्नं** युक्तिसिद्धम् । **रजताद्यपी**ति । अत्यन्तमसच्च भाति, किन्तु आपणादौ सदेव रजतादि शुक्तिकादौ भातीति भावः । **अनेने**ति । अत्यन्तासतोऽभानेनेत्यर्थः । यद्वा—'अस्ति' 'विभाती'तिकारिकाभागेनेत्यर्थः । अस्मिन् पक्षे **इत्युक्तं भवती**त्यनेनास्य सम्बन्धः । तावदिति सम्प्रतिपत्तौ । **यदि**ति । यद्यदित्यर्थः । **भाती**ति । यथेति शेषः । **इत्युक्त**मिति । इति व्याप्तिः कारिकायां वृत्तौ च प्रदर्शितेत्यर्थः । **तेने**ति । भानसत्त्वयोः व्याप्तिप्रदर्शनेनेत्यर्थः । **अयं** वक्ष्यमाणः प्रयुज्यत इति **प्रयोग**स्तद्रूपार्थः । प[3]रार्थानुमान-

---

१. महाकविवाणीत्वव्यापकत्वमित्यर्थः । व्यापकत्वञ्च—स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । प्रमेयत्वादिनाऽस्यातिप्रसक्तत्वे तु स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वं बोध्यम् ।

२. वन्ध्यापुत्रगगननलिनादेरित्यर्थः ।

३. परार्थानुमानञ्च न्यायसाध्यम् । न्यायश्च—अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकः, उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायो वा ।

**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥४॥**

**प्रतीयमानं पुनरन्यदेव वाच्याद्वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्सहृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलङ्कृतेभ्यः प्रतीतेभ्यो वावयवेभ्यो व्यतिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु । यथा ह्यङ्गनासु लावण्यं पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः ।**

### लोचनम्

प्रतीयमानेन व्यतिरिक्तेन तद्वत्, तथा भासमानत्वात् लावण्योपेताङ्गनाङ्गवत् । प्रसिद्धशब्दस्य सर्वप्रतीतत्वमलङ्कृतत्वं चार्थः । **यत्तदि**ति सर्वनामसमुदायश्चमत्कारसारताप्रकटीकरणार्थमव्यपदेश्यत्वमन्योन्यसंवलनाकृतं चाव्यतिरेकभ्रमं दृष्टान्तदार्ष्टान्तिकयोर्दर्शयति । एतच्च **किमपी**त्यादिना व्याचष्टे । लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवय-

### बालप्रिया

रूपन्यायप्रयोग इति यावत् । **प्रसिद्ध**मित्यादि **धर्मी**त्यन्तेन पक्षनिर्देशः । 'सिद्धं धर्मिणमुद्दिश्य साध्यधर्मोऽभिधीयत' इति वचनानुरोधेन प्रसिद्धं धर्मीति चोक्तं, न त्वनयोः पक्षकोटिप्रवेशः । **प्रतीयमानेन व्यतिरिक्तेन तद्वदि**ति साध्यनिर्देशः । स्वव्यतिरिक्तप्रतीयमानसम्बद्धमित्यर्थः । वाच्यस्यैव प्रतीयमानत्वमभ्युपगच्छतां मते स्वात्मकप्रतीयमानवत्त्वं सिद्धमिति सिद्धसाधनवारणाय स्वव्यतिरिक्तत्वनिवेशः । **तथा भासमानत्वादि**ति हेतुनिर्देशः । स्वव्यतिरिक्तप्रतीयमानवत्त्वेन प्रमीयमाणत्वादित्यर्थः । अत्र दृष्टान्तः—**अङ्गनाङ्गवदि**ति । अत्र स्वव्यतिरिक्तप्रतीयमानपदार्थत्वेन लावण्यं ग्राह्यमिति प्रदर्शयितुं **लावण्योपेते**त्युक्तम् । **अङ्गवदि**त्यनन्तरं इतीति शेषः । वृत्तौ 'अलङ्कृतेभ्यः प्रतीतेभ्यो वा' इत्यत्र वाशब्दः समुच्चयार्थक इति प्रदर्शयितुं व्याचष्टे—**प्रसिद्धशब्दस्ये**त्यादि । लावण्यस्य भूषणशोभातो व्यतिरेकं दर्शयितुमलङ्कृतत्वरूपार्थस्यापि कथनम् । कारिकायां 'यत्तदि'त्यत्र यच्छब्दः पूर्वोक्तप्रतीयमानवस्तुवाची । 'तदि' ति तच्छब्दस्तु प्रसिद्धार्थक इत्याशयेन 'सहृदयसुप्रसिद्धमि' ति वृत्तौ व्याख्यातम्, आभ्यां गम्यमानमर्थं व्याचष्टे—**यत्तदि**त्यादि । **समुदाय** इति । यच्छब्दसहितस्तच्छब्द इत्यर्थः । चमत्कारः सारः प्राणो यत्र तत् । चमत्कारसारं प्रतीयमानं लावण्यं च तस्य भावस्तत्ता तस्याः । **प्रकटीकरणार्थं** द्योतनार्थम् । **अव्यपदेश्यत्वं** व्यपदेष्टुमशक्यत्वम् । रसध्वन्यभिप्रायेण चेदमुक्तम् । **अन्योन्येति** । वाच्यव्यङ्ग्ययोरङ्गलावण्ययोश्चेत्यर्थात्सिध्यति । 'अव्यतिरेकभ्रमं चे'ति योजना । **दृष्टान्ते**त्यादि । यत्तदित्यस्य दृष्टान्तेऽपि सम्बन्धोऽस्तीति भावः । **दर्शयति**

स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलंकाररसादयश्चेत्यनेकप्रभेदप्रभिन्नो दर्शयिष्यते। सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वम्।

**लोचनम्**

वव्यतिरिक्तं धर्मान्तरमेव। न चावयवानामेव निर्दोषता वा भूषणयोगो वा लावण्यम्, पृथङ्निर्वर्ण्यमानकाणादिदोषशून्यशरीरावयवयोगिन्यामप्यलङ्कृतायामपि लावण्यशून्येयमिति, अतथाभूतायामपि कस्याञ्चिल्लावण्यामृतचन्द्रिकेयमिति सहृदयानां व्यवहारात्।

ननु लावण्यं तावद्व्यतिरिक्तं प्रथितम्। प्रतीयमानं किं तदित्येव न जानीमः, दूरे तु व्यतिरेकप्रथेति। तथा भासमानत्वमसिद्धो हेतुरित्याशङ्क्य **स ह्यर्थ** इत्यादिना स्वरूपं तस्याभिधत्ते। **सर्वेषु च**ेत्यादिना च व्यतिरेकप्रथां साधयिष्यति। तत्र प्रतीयमानस्य तावद्द्वौ भेदौ—लौकिकः, काव्यव्यापारैकगोचरश्चेति। लौकिको यः स्वशब्दवाच्यतां कदाचिदधिशेते, स च विधिनिषेधाद्यनेकप्रकारो वस्तुशब्देनोच्यते। सोऽपि द्विविधः—यः पूर्वं क्वापि वाक्यार्थेऽलङ्कारभावमुपमादिरूपतयान्वभूत्, इदानीं त्वनल-

**बालप्रिया**

सूचयति। **किमपीत्यादिना व्याचष्ट** इति। वृत्तौ 'किमपी'त्यादेः दार्ष्टान्तिकेऽपि सम्बन्धो बोध्य इति भावः। दृष्टान्तस्य साध्यवैकल्यशङ्कां परिहर्तुमाह—**लावण्यं हीत्यादि**। **धर्मान्तरं** धर्मविशेषः। उक्तमुपपादयति—**न चे**ति। **पृथगिति**। **पृथङ्निर्वर्ण्यमाना** दृश्यमानाः **काणादिदोषशून्या**श्च ये **शरीरावयवा**स्तद्यो**गिन्याम**पि। काणशब्दः काणत्वपरः। **अतथाभूताया**मिति। काणत्वादिदोषसहितायामनलङ्कृतायां चेत्यर्थः। **चन्द्रिके**त्यारोपेणोक्तिः। वृत्तौ 'पृथगि'त्यादि। पृथङ्निर्वर्ण्यमानेभ्यो निखिलावयवेभ्यो व्यतिरेकीत्यर्थः।

'स ह्यर्थ' इत्यादिवृत्तिग्रन्थमवतारयति—**नन्वि**त्यादि। **तदि**ति। भवदुच्यमानमित्यर्थः। 'किमित्येव न जानीम' इत्येवकारसूचितं कैमुतिकन्यायं स्पष्टीकरोति—**दूर** इति। तस्येति शेषः। **व्यतिरेक**स्य वाच्याद्भेदस्य, **प्रथा** प्रसिद्धिः। धर्मसिद्धेः धर्मिसिध्यधीनत्वात् प्रतीयमानस्यासिद्धौ तत्र वाच्यभेदस्याप्यसिद्धिरित्यर्थः। **इती**ति हेतौ। **तथे**त्यादि। तथाभासमानत्वरूपो हेतुः हेत्वप्रसिद्धिरूपदोषविशिष्ट इत्यर्थः। 'वस्तुमात्र' मित्यादिवृत्त्युक्तमुपपादयति—**तत्र प्रतीयमानस्ये**त्यादि। **तत्र प्रतीयमानस्य** अस्तित्वे सति। **तावद**ादौ। **लौकिकः** लोकविदितः। **काव्ये**ति। **काव्यं** शब्दार्थमयं तस्य शब्दस्यार्थस्य च यो **व्यापारः** व्यञ्जनारूपः तदैक**गोचरः** नान्यगोचरः। ततश्चालौकिक इति भावः। **लौकिको य** इति। स इति शेषः। **कदाचित्** वाच्यत्वावस्थायाम्। **वस्तुशब्देने**ति। वस्तुध्वनिशब्देनेत्यर्थः। वस्तुशब्दं व्याख्याय 'वस्तुमात्र' मिति मात्रशब्दव्याख्यासौकर्यायादावलङ्कारध्वनिं व्याख्यातुमाह—**सोऽपी**त्यादि। **पूर्वं** वाच्यत्वावस्थायाम्। **इदानीं** व्यंग्यत्वावस्थायाम्। **अन्यत्र** वाच्यार्थे यो

लोचनम्

ङ्कारूप एवान्यत्र गुणीभावाभावात्, स पूर्वप्रत्यभिज्ञानबलादलंकारध्वनिरिति व्यपदिश्यते ब्राह्मणश्रमणन्यायेन[1]। तद्रूपताभावेन तूपलक्षितं वस्तुमात्रमुच्यते। मात्रग्रहणेन हि रूपान्तरं निराकृतम्। यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः, किं तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणाव्यापाररसनीयरूपो रसः, स काव्यव्यापारै-

बालप्रिया

गुणीभावः तस्याभावात्। नन्वनलङ्कारस्वरूपत्वे कथमलङ्कारध्वनिरिति व्यवहार इत्यत आह—**पूर्वे**ति। 'न्यायेन व्यपदिश्यत' इति सम्बन्धः। **श्रमणः** आर्हतसमयप्रविष्टः। **तद्रूपताभावेन** अलङ्काररूपत्वाभावेन। **मात्रग्रहणे**नेति। 'वस्तुमात्रमि'ति वृत्तिस्थमात्रशब्देनेत्यर्थः। **रूपान्तरं** अलंकाररूपत्वम्।

**स्वप्नेऽपी**ति। स्वप्ने ह्यघटमानमपि घटते। **न लौकिकव्यवहारपतित** इति। न पुत्रजन्मादिहर्षतुल्यरूप इति भावः। **शब्दे**ति। **शब्दैः** गुणालंकारसुन्दरकाव्यशब्दैः। **समर्प्यमाणाः** सम्यक्तया रसाभिव्यञ्जनसमुचिततया अर्प्यमाणाः सहृदयहृदयमुकुरोदरे संक्रामिताः। अनेन विभावादेर्वास्तवसत्वमप्रयोजकमिति दर्शितम्। स्पष्टमिदं दशरूपकादौ। अत एव शकुन्तलादीनामिव मालत्यादीनामपि विभावत्वादिकमुपपन्नम्। न केवलं काव्यशब्दसमर्पणकृतमेव विभावत्वादिकं, किंतु सहृदयहृदयसंवादकृतमपीत्याह—**हृदये**ति। **शब्दसमर्प्यमाणाः हृदयसंवादसुन्दराश्च ये विभावानुभावाः** तेषां **समुचिताः प्राक्**जन्मनः आरभ्य "न ह्येतच्चित्तवृत्तिशून्यः प्राणी भवती" त्युक्तदिशा आत्मनि विशेषतो **निविष्टाः** याः **रत्यदीनां वासनाः**[2] सूक्ष्मरूपाः, तासाम**नुरागेण** उद्बोधद्वारकेण रूषणेन। **सुकुमारा** रसचर्वणयोग्यतां गता या **स्वस्य** चर्वयितुः सहृदयस्य **संवित्** सम्यग्वेत्त्यनयेति संविन्मनः, तस्या य **आनन्द**मयः **चर्वणा**रूपो **व्यापारः** तेन, **रसनीय**मास्वादनीयं **रूपं** यस्य सः। यथोक्तं मुनिना—"आस्वादयन्ति मनसे" त्यादि। यद्वा—**सुकुमारः** नित्यमनोहरः। **स्वसंवित्** स्वानुभवसिद्धः, **आनन्द**मयश्च यः **चर्वणाव्यापारः** तेनेत्यर्थः। **रस-**

१. यथा कश्चन प्रथमतो ब्राह्मणो भूत्वाऽनन्तरं श्रमणत्वं (बौद्धसंन्यासित्वं) प्राप्तोऽपि (अवैधशिखासूत्रपरित्यागेन ब्राह्मणत्वाभाववानपि) भूतपूर्वसंज्ञानुसारेण 'ब्राह्मण' इति व्यवदिश्यते, तथा प्रकृतेऽपि पूर्वमयमलङ्कार आसीदित्येतावता अलङ्कारव्यपदेश इति भावः। इदमत्र ध्येयम्—यत् या व्यक्तिः प्राक् ब्राह्मणत्वजातिमती पश्चात्परित्यक्तब्राह्मणभावा भूतपूर्वगत्या, सा ब्राह्मणव्यपदेशभाग्भवति। नात्र तथा, यतो या उपमाद्यलङ्कारव्यक्तिः, सा गुणीभावात्सर्वत्रालङ्काररूपैव। या च प्रधानतया ध्वनिव्यपदेशमासादयति, सा न कदाचिदपि गुणीभावादलङ्कारभावमाप्नोतीति कथमत्रायं न्यायः सङ्गटत इति।

२. रत्यादिवासना रत्यादिसंस्कारः। रतिश्चेच्छाविशेषः। एतेनानुभवेनेवेच्छारूपेण

तथा ह्याद्यस्तावत्प्रभेदो वाच्याद्दूरं विभेदवान्। स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः। यथा—

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण॥

लोचनम्

कगोचरो रसध्वनिरिति, स च ध्वनिरेवेति, स एव मुख्यतयात्मेति।

यदूचे भट्टनायकेन—'अंशत्वं न रूपता' इति, तद्वस्त्वलङ्कारध्वन्योरेव यदि नामोपालम्भः, रसध्वनिस्तु तेनैवात्मतयाङ्गीकृतः, रसचर्वणात्मनस्तृतीयस्यांशस्याभिधाभावनांशद्वयोत्तीर्णत्वेन निर्णयात्, वस्त्वलङ्कारध्वन्यो रसध्वनिपर्यन्तत्वमेवेति वयमेव वक्ष्यामस्तत्र तत्रेत्यास्तां तावत्। **वाच्यसामर्थ्याक्षिप्त**मिति भेदत्रयव्यापकं

बालप्रिया

**ध्वनिरि**तीत्यनन्तरमुच्यत इति शेषः। वस्त्वादिध्वनितो विशेषमाह—**स चे**ति। चस्त्वर्थे। **ध्वनिरेव** व्यंग्य एव, न वाच्य इत्येवकारार्थः। **इती**ति हेतौ। **स एव** रसध्वनिरेव। एवकारेण वस्त्वादिध्वनेर्व्यवच्छेदः। **मुख्यतया आत्मे**ति। वस्त्वादिध्वनेरौपचारिकमेवात्मत्वं, न मुख्यमिति भावः। **इती**त्यनन्तरमुच्यत इति शेषः।

**तदि**ति। तद्वचनमित्यर्थः। **यदि नामे**ति निश्चये सत्यनिश्चयवचनम्। **उपालंभः** प्रतिक्षेपः, आत्मत्वनिषेध इति यावत्। भवेदिति शेषः। तद्वचनं वस्त्वलंकारध्वन्योरेवात्मत्वप्रतिषेधरूपं स्यान्न रसध्वनेरित्यर्थः। कुत इत्यत्राह—**रसे**ति। कथमिदमवगतमित्यत्राह—**रसचर्वणे**त्यादि **निर्णयादि**त्यन्तम्। वस्त्वलंकारध्वन्योरात्मत्वप्रतिषेधोऽस्मदभिमत एवेति तत् सिद्धसाधनमित्याह—**वस्त्वि**ति। **रसध्वनिपर्यन्तत्वमे**वेति। वाच्ययोर्वस्त्वलंकारयोरिव ध्वन्यमानयोरपि तयोः विभावादिरूपत्वेन कस्यचिद्रसस्य व्यञ्जकतया पर्यवसानाद्रसध्वनिविश्रान्तत्वमेवेत्यर्थः। विश्रान्तधामत्वकृतं हि मुख्यमात्मत्वं, तच्च रसध्वनेरेव। वस्त्वलंकारध्वन्योस्तु ध्वन्यमानत्वकृतो वाच्यादुत्कर्ष इत्यमुख्यमात्मत्वम्। तदपेक्षया च 'ध्वनिः काव्यात्मे'ति सामान्येनोक्तिरिति भावः। 'वाच्यसामर्थ्याक्षिप्तमि'ति क्लीबैकवचनान्तत्वेन निर्देशाद्वस्तुमात्रमित्यस्यैव विशेषणमिति भ्रमः स्यादतस्तन्निवृत्तये व्याचष्टे—**वाच्यसामर्थ्याक्षिप्त**मिति। **भेदत्रये**ति। वाच्यसामर्थ्याक्षिप्तमित्यस्य लिंगवचनयोर्विपरि-

---

रत्यादिनापि संस्कारो जन्यत इति साहित्यदर्शनस्य स्वतन्त्रसिद्धान्त आगूरितो भवतीति बोध्यम्।

१. 'वाच्यसामर्थ्याक्षिप्तमि'त्यस्य प्रत्यासत्त्या वस्तुमात्रेणैव कश्चिदन्वयं मा बोधीत्याह—'वाच्यसामर्थ्याक्षिप्तमि'त्यादि। तथा च तस्यालङ्कारादिष्वप्यन्वयात् वा-

लोचनम्

सामान्यलक्षणम् । यद्यपि हि ध्वननं शब्दस्यैव व्यापारः, तथाप्यर्थसामर्थ्यस्य सह-कारिणः सर्वत्रानपायाद्वाच्यसामर्थ्याक्षिप्तत्वम् । शब्दशक्तिमूलानुरणनव्यङ्ग्येऽप्यर्थसा-मर्थ्यादेव प्रतीयमानावगतिः, शब्दशक्तिः केवलमवान्तरसहकारिणीति वक्ष्यामः । **दूरं विभेदवानिति** । विधिनिषेधौ विरुद्धाविति न कस्यचिदपि विमतिः । एतदर्थं प्रथमं तावेवोदाहरति—

'भ्रम धार्मिक विस्रब्धः[1] स शुनकोऽद्य मारितस्तेन ।

गोदावरीनदीकूललतागहनवासिना दृप्तसिंहेन ॥

बालप्रिया

णामेनालंकारा रसादय इत्यनयोरपि योजना कार्येति भावः । 'वाच्यसाम-र्थ्याक्षिप्त' इति पाठे तु अर्थ इत्यस्य विशेषणम् । **सामान्यलक्षण**मिति । वाच्यसामर्थ्याक्षिप्तत्वं वस्तुध्वन्यादिभेदत्रयानुगतो धर्म इत्यर्थः । नन्वभिधादिव्यापा-रवत् ध्वननव्यापारस्य शब्दाश्रयत्वाद्दूस्त्वादिध्वनेरुक्तलक्षणमसम्भवीति शङ्कते—**यद्य-पी**ति । समाधत्ते—**तथा**पीत्यादि । ननु शब्दशक्तिमूले ध्वनौ शब्दशक्तिरेव सहका-रिणी नेतरेत्यत आह—**शब्दे**त्यादि । तर्हि मा भूच्छब्दशक्तिरित्यत्राह—**शब्दशक्ति-**रिति । **अवान्तरसहकारिणी** अर्थसामर्थ्योपकारिणी । **वक्ष्याम** इति । शब्दश-क्तिमूलप्रभेदनिरूपण इति शेषः । वृत्तौ 'आद्यःप्रभेद' इति । विधिनिषेधादिरूपवस्तुमा-त्ररूपो भेद इत्यर्थः । **दूरं विभेदवा**निति । अत्यर्थं भिन्न इत्यर्थः । आत्यन्तिकं भेदमुपपादयति लोचने—**विधी**त्यादि । **विधिनिषेधौ** एकस्याः क्रियायाः विधिर्निषे-धश्च । **विरुद्धा**विति । विरोधो नाम युगपदेकत्र वृत्तित्वाभावो, भिन्नत्वं वा । इतीति प्रकारे, इत्यत्रेत्यर्थः । विपरीता मति**र्विमतिः** । **एतदर्थं** अविमत्यर्थम् । विमत्यभा-वाद्धेतोरिति यावत् । यद्वा—**एतदर्थं** आत्यन्तिकभेदप्रदर्शनार्थम् । **तावेव** वाच्यव्यं-ग्यभूतौ विधिनिषेधावेव । यथेत्यस्य व्याख्यानं-**उदाहरती**ति । अन्यत उद्धृत्य तत्प्र-तिपादकवाक्यानि आहरति प्रबन्धमिमं प्रापयतीत्यर्थः ।

छायां पठति—**भ्रमे**त्यादि । विस्तब्धमिति च पाठः । 'गोदानदीकच्छनिकुञ्जवा-सिने'ति छाया । तत्र गोदापदस्य गोदावरीति, कच्छादिपदयोः कूललतागहनेति च विव-

---

च्यसामर्थ्याक्षिप्तश्च वाच्यसामर्थ्याक्षिप्ताश्च वाच्यसामर्थ्याक्षिप्ताश्च वाच्यसामर्थ्याक्षिप्तमिति 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' ( पा. सू., १. २. ६५. ) इति सूत्रेण एक-शेष एकवचनान्तता चेति ।

१ विस्रब्ध इत्येव पाठस्साधीयान्, न तु विश्रब्ध इति । 'स्रम्भु विश्वासे' इति इति 'श्रम्भुप्रमादे' इति च धातुपाठात् । 'स्रम्भुविश्वासे' दन्त्यादिरयम्, तालव्यादिस्तु प्रमादे गतः' इति सिद्धान्तकौमुद्युक्तेश्च ।

२. लक्षणनिष्ठासंभवश्च लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् ।

लोचनम्

कस्याश्चित्सङ्केतस्थानं जीवितसर्वस्वायमानं धार्मिकसञ्चरणान्तरायदोषात्तदवलुप्य-मानपल्लवकुसुमादिविच्छायीकरणाच्च परित्रातुमियमुक्तिः। तत्र स्वतःसिद्धमपि भ्रमणं श्वभयेनापोदितमिति प्रतिप्रसवात्मको निषेधाभावरूपः, न तु नियोगः प्रैषादिरूपोऽत्र विधिः; अतिसर्गप्राप्तकालयोर्ह्ययं लोट्। तत्र भावतदभावयोर्विरोधाद्द्वयोस्तावन्न युगप-

बालप्रिया

रणम्। वक्तृविशेषानुक्तौ व्यंग्यप्रतीत्यनुदयमाशंक्यावतारिकामाह—**कस्याश्चिदि**-त्यादि। परित्राणे हेतुः—**जीवितसर्वस्वायमान**मिति। अतिप्रियत्वादिति भावः। **सञ्चरणे**न योऽन्**तरायः** चौर्यसुरतस्य स्वल्पकालविच्छेदरूपो विघ्नः तद्रूपो **दोष**-स्तस्मात्। दोषान्तरमप्याह—**तदवे**ति। तेन धार्मिकेण **अवलुप्यमान**मपह्रिय-माणं **पल्लवकुसुमादि**, तेन यद्**विच्छायीकरणं** निश्शोभतापादनं, तस्मात्। **तत्रे**ति। तथा सतीत्यर्थः। **स्वत** इत्यादि। अत्र भ्रमणरूपे वाक्यार्थे 'विधिर्निषेधा-भावरूपः न तु प्रैषादिरूपो नियोग' इति सम्बन्धः। ननु किमिति मुख्य एव न स्यादित्यत्राह—**प्रतिप्रसवात्मक** इति। अत्र हेतुमाह—**स्वत** इत्यादि। **श्वभयेन** कर्त्रा। **अपोदितं** प्रतिषिद्धम्। **इती**ति हेतौ। यथोक्तं 'प्राप्ते तु प्रतिषेधे हि प्रतिप्रस-वयोगिता' इति। निषेधाभावरूपो विधिरित्यत्र हेतुत्वेन लोडर्थमाह—**अतिसर्गे**ति।

अयमर्थः—स्वतस्सिद्धं भ्रमणं श्वभीतिर्निषेधति स्म। प्रतिषिद्धस्य भ्रमणस्य प्रतिषेधकाभावः सम्प्रति कथ्यते। अतोऽयं प्रतिप्रसवः। प्रतिषेधनिवर्तनं हि सः। अतो भ्रमणस्येदानीं न कश्चित् प्रतिबन्ध इति निषेधाभावोऽत्र विधिः, न तु नियोगः। न खल्वेषा स्वैरिणी राजेव भ्रमणविधिं करोति, श्वभयमिव भ्रमणनिषेधं वा। किं तर्हि? भ्रमणप्रतिषेधकाभावं कथयति। ततो भ्रमणं विधीयमानताकोटिं निविशते। तस्मादयं लोट् कामचाराभ्यनुज्ञारूपातिसर्गे, प्राप्तकालार्थश्चायं लोडिति। अथ भ्रमणनिषेधस्य व्यंग्यत्वं व्यवस्थापयिष्यन् वाच्यत्वादिकं निराकरोति—**तत्रे**त्यादिना। **तत्र** तथा-विधवचने। **द्वयोः** भ्रम, मा भ्रमीरिति विधिनिषेधरूपयोरर्थयोः। **युगपत्** एकदा।

---

१. 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा. सू., ३. ३. १६३.) इति सूत्रेणेत्यर्थः। प्रामाणान्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्त्तना प्रैषः। अतिसर्गः कामचारः।

२. धार्मिकघटितसामानाधिकरण्येनेत्यर्थः।

३. व्यङ्ग्यप्रतीतौ वक्त्रादिवैशिष्ट्यज्ञानस्य सहकारिकारणत्वादिति भावः। अभिहितश्चात्र प्रकाशकृद्भिः—

> वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।
> प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम्॥
> योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा। इति।

काव्यप्र., ३. २१–२२.

लोचनम्

द्वाच्यता, न क्रमेण, विरम्य व्यापाराभावात् । 'विशेष्यं नाभिधा[1] गच्छेत्' इत्यादिनाभिधाव्यापारस्य विरम्य व्यापारासंभवाभिधानात् ।

ननु तात्पर्यशक्तिरपर्यवसिता विवक्षया दृप्तधार्मिकतदादिपदार्थानन्वयरूपमुख्यार्थबाधबलेन विरोधे[2]निमित्तया विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः । एवमनेनोक्तमिति हि व्यवहारः, तत्र

बालप्रिया

**न वाच्यता** न अभिधेयता । अत्र हेतुः-**भावे**ति । घटतदभावयोरिव तयोर्विरोधादित्यर्थः । विरुद्धयोस्तयोर्युगपद्बुद्धिपथानारोहित्वादिति यावत् । **न क्रमे**णेति । वाच्यतेत्यनुषज्यते । अत्र हेतुमाह—**विरम्य व्यापाराभावा**दिति । अभिधाया विरम्य पुनः सम्भवाभावादित्यर्थः । एकश्शब्द एकमर्थमभिधया बोधयित्वा पुनस्तया अर्थान्तरं न बोधयति यतः, तस्मादिति यावत् । अत्र प्रमाणमाह—**विशेष्यमि**त्यादि । आदिपदेन 'क्षीणशक्तिर्विशेषण' इत्यस्य संग्रहः । **अभिधा** गवादिपदाभिधा । **विशेषणे** गोत्वादावर्थे । **क्षीणा** विरता । **शक्तिः** बोधजननसामर्थ्यं यस्याः सा तथा सती । **विशेष्यं** गवादिव्यक्तिरूपम् । **न गच्छेत्** न बोधयेदिति तदर्थः । अतश्च विधिनिषेधयोरेक एवाभिधेय इति भावः ।

यद्येवं तर्हि निषेधस्यैवात्र बोधो भवत्विति शङ्कते—**नन्वि**त्यादि । यत्र तात्पर्यं तद्धि वाक्यार्थः । तात्पर्यविषयश्चात्र भ्रमणनिषेधः । अतः स एव वाक्यार्थः । तेन तस्य **विवक्षया** विवक्षितत्वाद्धेतोः । **अपर्यवसिता** भ्रमणविधौ पर्यवसानमनाप्नुवती । **तात्पर्यशक्तिः** पदनिष्ठा विवक्षितार्थप्रतीतिंजननसामर्थ्यरूपतात्पर्यात्मिका शक्तिः । वाक्यार्थीभूतस्य निषेधस्य प्रतीतिं करोति । केन व्यापारेणेत्यत्राह—**लक्षणये**ति । लक्षणानिमित्तमाह—**विरोधे**ति । विरोधरूपसम्बन्धनिमित्तयेत्यर्थः । 'वाच्यार्थस्य च वाक्यार्थे सम्बन्धानुपपत्तितः' इत्युक्तं मुख्यार्थबाधं दर्शयति—**दृप्ते**त्यादि । भ्रमेत्यस्य मुख्यार्थकत्वे दृप्तत्वाद्यभिधानस्य वैयर्थ्यापत्त्या दृप्तादिपदार्थघटितवाक्यार्थे भ्रमणविधिरूपमुख्यार्थस्य योऽ**नन्वयः** अन्वयोपपत्त्यभावः, तद्रूपो यो **मुख्यार्थबाध**स्तस्य **बलेन** सहकारेणेत्यर्थः । **अभिहितान्वयदृशे**ति । अभिहितान्वयदर्शनेनेत्यर्थः । अभिहितान्वयवादिमतानुरोधेनेति यावत् । फलितमाह—**इती**त्यादि । **शब्दशक्ति**रभिधा तन्मूलः । तात्पर्यशक्तिलक्षणाशक्त्योरभिधाश्रयत्वेनावस्थानादिति भावः । वक्ष्यते च 'अभिधापुच्छभूता लक्षणे'ति । **सोऽर्थ** इति । भ्रमणनिषेध इत्यर्थः । अत्र प्रमाण

१. अभिधा नित्येच्छेति नैयायिकाः, नित्यज्ञानं नित्ययत्नो वेति तदेकदेशिनः, बोधकतेति प्राचीनवैयाकरणाः, वाच्यवाचकभावापरपर्याया सेति मञ्जूषाकृत , पदार्थान्तरमिति मीमांसकाः ।

२. प्रतियोगित्वसम्बन्धप्रयोज्ययेत्यर्थः ।

लोचनम्

वाच्यातिरिक्तोऽन्योऽर्थ इति ।

नैतत्; त्रयो ह्यत्र व्यापाराः संवेद्यन्ते—पदार्थेषु सामान्यात्मस्वभिधाव्यापारः, समयापेक्षयार्थावगमनशक्तिर्ह्यभिधा । समयश्च तावत्येव, न विशेषांशे, आनन्त्याद्व्यभिचाराच्चैकस्य । ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते, 'सामा-

बालप्रिया

माह—**एवमित्यादि**। **उक्तमिति हि व्यवहार** इति । न तु व्यञ्जितमिति व्यवहार इति भावः । उपसंहरति—**तच्चेति** । **वाच्यातिरिक्तः** अभिधेयातिरिक्तः ।

विपरीतलक्षणयाऽत्र निषेधप्रतीतिर्न सम्भवति, तस्या अनवकाशादित्याशयेन मतमेतत्प्रत्याचष्टे—**नैतदित्यादि** । **एतन्न** एतन्मतं युक्तं नेत्यर्थः । कुत इत्यत्राह—**त्रय इत्यादि** । **अत्र** लोकव्यवहारे । **त्रयो व्यापाराः** अभिधातात्पर्यलक्षणाः । शब्दस्येति शेषः । **संवेद्यन्ते** ज्ञायन्ते । आद्यस्य व्यापारस्य विषयमाह—**पदार्थेष्विति । सामान्यात्मसु** गोत्वादिसामान्यरूपेषु । **अभिधाव्यापार** इति । गवादिपदानामिति शेषः । स्वरूपमाह—**समयेत्यादि** । **समयापेक्षया** सङ्केतग्रहणसहकारेण । 'समयापेक्षे'ति च पाठः । समयं सङ्केतग्रहणमपेक्षत इति तदर्थः । **अर्थावगमनशक्तिः** अर्थबोधनसामर्थ्यम् । **तावत्येव** सामान्यात्मकपदार्थ एव । एवकारव्यवच्छेद्यमाह—**नेत्यादि । विशेषांशे** व्यक्त्यात्मनि । कुत इत्यत्राह—**आनन्त्यादिति** । विशेषांशानामनन्तत्वादित्यर्थः । तथा च सर्वस्मिन् विशेषे समयः कर्तुं न शक्यः । अनन्तश्च स्यादिति भावः । हेत्वन्तरमप्याह—**व्यभिचाराच्चैकस्येति** । एकैकस्य विशेषांशस्य मिथो व्यभिचाराच्चेत्यर्थः । **गोपदेन** यस्य गोव्यक्तिविशेषस्य बोधो जायते, तस्मिन्नितरगोव्यक्तिगतसमयो नास्तीति रीत्या व्यभिचारो बोध्यः । यद्वा—**समयश्चेत्यत्र** समयशब्दस्य सङ्केतग्रह इत्यर्थः । सर्वस्मिन् विशेषे सङ्केतग्रहस्य व्यवहाराङ्गत्वे दोषमाह—**आनन्त्यादिति** । विशेषाणामनन्तत्वात्सर्वस्मिन् विशेषे सङ्केतग्रहो न सम्भवतीत्यर्थः । तर्ह्येकस्मिन्नेव विशेषे तद्ग्रहो व्यवहाराङ्गमस्त्वित्यत्राह—**व्यभिचाराच्चैकस्येति** । अगृहीतसङ्केतकस्यापि गवादिव्यक्तिविशेषस्य गवादिपदेन बोधोदयात्तत्र सङ्केतग्रहस्य व्यभिचाराच्चेत्यर्थः । अथ द्वितीयं व्यापारं सविषयं दर्शयति—**तत इत्यादि** । **ततः** उक्ताद्धेतोः । **परस्परान्विते** आकाङ्क्षावशाद्गुणप्रधानभावेन मिथस्संबद्धे । **विशेषरूपे** सामान्यात्मकतत्तत्पदार्थाक्षिप्ततत्तद्व्यक्तिरूपविशेषघटिते । **वाक्यार्थे** विषये । **तात्पर्यशक्तिः** स वाक्यार्थः परः प्रधानतया प्रतिपाद्यः येषां तानि तत्पराणि तेषां भावस्तात्पर्यं तद्रूपा शक्तिः, पदानामिति शेषः । आक्षेपं बोधयन्नाह—**सामान्यानीत्यादि** । **सामान्यानि** पदैरभिहिताः सामान्यरूपा अर्थाः **अन्यथा** विशेषाणामनवगमने । **असिद्धेः** क्रियाद्यन्वयासिद्धेः । **विशेषं** स्वाश्रयव्यक्तिरूपं **गमयन्ति** । स्वाविनाभावाद्बोधयन्ति । 'सामान्यानन्यथे'ति पाठे तु

लोचनम्

न्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि' इति न्यायात्। तत्र च द्वितीयकक्ष्यायां 'भ्रमे'ति विध्यतिरिक्तं न किञ्चित्प्रतीयते, अन्वयमात्रस्यैव प्रतिपन्नत्वात्। न हि 'गङ्गायां घोषः' 'सिंहो बटुः' इत्यत्र यथान्वय एव बुभूषन् प्रतिहन्यते, योग्यताविरहात्; तथा तव भ्रमणनिषेद्धा स श्वा सिंहेन हतः। तदिदानीं भ्रमणनिषेधकारणवैकल्याद्भ्रमणं तवोचितमित्यन्वयस्य काचित्क्षतिः। अत एव मुख्यार्थबाधा नात्र शङ्क्येति न विपरीतलक्षणाया अवसरः।

भवतु वासौ। तथापि द्वितीयस्थानसंक्रान्ता तावदसौ न भवति। तथा हि-मुख्यार्थबाधायां लक्षणायाः प्रक्लृप्तिः। बाधा च विरोधप्रतीतिरेव। न चात्र पदार्थानां स्वात्मनि विरोधः। परस्परं विरोध इति चेत्—सोऽयं तर्ह्यन्वये विरोधः प्रत्येयः।

बालप्रिया

पदानीति शेषः। **सामान्यानां** स्वाभिहितसामान्यरूपाणामर्थानाम**नन्यथासिद्धे**रविनाभावादित्यर्थः। एवमुपनिबद्धपीठिको लक्षणां निराकर्तुमारभते—**तत्र चे**त्यादि। **तत्र** तात्पर्यशक्तिविषयभूतायाम्। **द्वितीयकक्ष्यायां** अभिधाव्यापारविषयापेक्षया द्वितीयस्यां कक्ष्यायाम्। **भ्रमे**त्यादिवाच्यो भ्रमणविधिरेव प्रतीयते, नान्यन्निषेधरूपं किञ्चिदित्यर्थः। **अन्वयमात्रस्ये**ति। वाक्यार्थमात्रस्येत्यर्थः। एवकारो मात्रशब्दार्थस्फुटीकरणार्थः। एतद्व्यवच्छेद्यं **विध्यतिरिक्त**मित्यादि पूर्वोक्तं बोध्यम्। **प्रतिपन्नत्वादि**ति। ज्ञातत्वादित्यर्थः। उक्तमुपपादयति—**न ही**त्यादि। 'इत्यन्वयस्य न हि काचित् क्षति'रिति सम्बन्धः। **गङ्गाया**मित्यादि वैधर्म्येणोदाहरणम्। **अन्वय** इति वाच्यधर्मिणोरन्वय इत्यर्थः। **बुभूषन्नेव** भवितुमारब्धवानेव। **प्रतिहन्यते** बाधितो भवति। **योग्यताविरहा**दिति। गङ्गादिपदवाच्यधर्मिणः स्रोतोविशेषादेः घोषादिना सहाधाराधेयभावसम्बन्धादेरभावादित्यर्थः। **क्षतिः** बाधा। फलितमाह—**अत एवे**त्यादि। **अत एव** अन्वयक्षतेरभावादेव।

अथ लक्षणाप्रयोजनविषये ध्वनिव्यापारं प्रदर्शयिष्यन्नभ्युपगम्यापि लक्षणां तस्याः पूर्वपक्ष्यभिमततात्पर्यशक्तिविषयकक्ष्यानिवेशं निराकुर्वन्नाह—**भवतु वे**त्यादि। **असौ** लक्षणा। **द्वितीयस्थानसङ्क्रान्ते**ति। तात्पर्यकक्ष्यानिविष्टेत्यर्थः। **तावदि**ति सम्प्रतिपत्तौ, वाक्यालङ्कारे वा। एतदेवोपपादयति—**तथाही**त्यादिना। **लक्षणायाः प्रक्लृप्ति**रिति। लक्ष्यार्थोपस्थितिकल्पनेत्यर्थः। **बाधा चे**ति। बाधापदार्थश्चेत्यर्थः। 'सा चे'ति क्वचित् पाठः। **विरोधप्रतीतिरेवे**ति। मुख्यार्थबाधा नाम मुख्यार्थस्य यो विरोधस्तत्प्रतीतिरेवेत्यर्थः। एवकारेण नात्र विवाद इति दर्शयति। उक्तो विरोधः पदार्थानां स्वात्मन्युत परस्परमिति विकल्पं हृदि निधायाद्यं निराचष्टे—**न चे**त्यादि। चस्त्वर्थः। **अत्र** लक्षणस्थले। 'अत्र विरोधस्तु पदार्थानां स्वात्मनि ने'ति सम्बन्धः। **स्वात्मनि** स्वेन सह। द्वितीयमाशङ्कते—**परस्पर**मिति। पदार्थानामित्यनुषङ्गः। समाधत्ते—**सोऽ**-

लोचनम्

न चाप्रतिपन्नेऽन्वये विरोधप्रतीतिः, प्रतिपत्तिश्चान्वयस्य नाभिधाशक्त्या, तस्याः पदार्थप्रतिपत्त्युपक्षीणाया विरम्याव्यापारात् इति तात्पर्यशक्त्यैवान्वयप्रतिपत्तिः ।

नन्वेवं 'अङ्गुल्यग्रे करिवरशतम्' इत्यत्राप्यन्वयप्रतीतिः स्यात् । किं न भवत्यन्वयप्रतीतिः दशदाडिमादिवाक्यवत्, किन्तु प्रमाणान्तरेण सोऽन्वयः प्रत्यक्षादिना बाधितः प्रतिपन्नोऽपि शुक्तिकायां रजतमिवेति तदवगमकारिणो वाक्यस्याप्रामाण्यम् । 'सिंहो माणवकः' इत्यत्र द्वितीयकक्ष्यानिविष्टतात्पर्यशक्तिसमर्पितान्वयबाधकोल्लासानन्तरमभि-

बालप्रिया

यमित्यादि । **तर्हि सः** लक्षणामूलत्वेन प्रसिद्धः । **अयं** भवद्भिरभ्युपगतो **विरोधः । अन्वये** पदार्थानां परस्परान्वये **प्रत्येयः** ज्ञातव्यः । **न चेत्यादि । अप्रतिपन्ने** अज्ञाते । 'विरोधप्रतीतिर्न चे'त्यन्वयः । धर्मिण्यप्रतीते धर्मरूपस्य विरोधस्य तत्र प्रतीत्ययोगादिति भावः । तर्हि प्रतिपन्नेऽस्त्वित्यत्राह—**प्रतिपत्तिश्चे**त्यादि । **अव्यापारा**दिति । व्यापारासम्भवादित्यर्थः । मुख्यार्थबाधा नाम लक्षणास्थले 'सिंहो माणवक' इत्यादौ सिंहादिपदमुख्यार्थस्य माणवकपदार्थेन सहाकाङ्क्षातात्पर्यवशाद्भासमानस्तादात्म्यादिसंसर्गरूपो योऽन्वयस्तस्मिन् विरुद्धत्वस्य प्रतीतिः । विरुद्धत्वं च तस्मिन्नन्वये सिंहादिप्रतियोगिकत्वस्य माणवकाद्यनुयोगिकत्वस्य च द्वयोरभावेन तद्रूपं बाधितत्वम् । अतएव वक्तृविवक्षितत्वाभावस्तदित्यपि केचित् । भवति च सत्यपि बाधनिश्चये वाक्यजन्यो बोध इति भावः ।

प्रसङ्गादाशङ्कते—**नन्वेवमित्यादि । एवं** बाधितस्याप्यन्वयस्य वाक्यात्प्रतीत्यङ्गीकारे । इष्टापत्त्या समाधत्ते—**किन्ने**त्यादि । **किं न भवति** भवत्येव । वैधर्म्येण दृष्टान्तमाह—**दशे**त्यादि । "दशदाडिमानि षडपूपा" इत्यादि महाभाष्योदाहृतवाक्यसमुदायस्थल इवेत्यर्थः । तत्र भवतिक्रियाध्याहारेण प्रत्येकं दशदाडिमानीत्यादि तत्तद्वाक्यादन्वयबोधे सत्यपि सर्ववाक्यार्थानां मिथः संसर्गावगाह्येकविशिष्टार्थबोधात्मकान्वयप्रतीतिराकाङ्क्षादिकारणाभावान्न भवति, प्रकृते च तत्सत्वादन्वयप्रतीतिर्भवत्येवेत्यर्थः । विशेषमाह—**किन्त्वि**ति । 'प्रतिपन्नोऽपि सोऽन्वयः शुक्तिकायां रजतमिव प्रत्यक्षादिना प्रमाणान्तरेण बाधित' इति सम्बन्धः । **इती**ति हेतौ । अन्वयस्य बाधितत्वादित्यर्थः । तस्य ज्ञानस्य स्वोत्तरजातबाधज्ञानविशिष्टत्वादिति यावत् । **वाक्यस्य** 'अङ्गुल्यग्र' इत्यादिवाक्यस्य । ननु तर्हि 'सिंहो माणवक' इत्यादेरप्यप्रामाण्यं स्यादित्यत्राह—**सिंह** इत्यादि । **शक्त्या समर्पिते** बोधिते **अन्वये, बाधकस्य** विरोधस्य **उल्लासः** प्रतीतिः तदनन्तरम् । **तद्बाधकविधुरी**ति । **तद्बाधकस्य** अन्वयबाधकस्य **विधुरीक-**

१. 'दश दाडिमानि, षडपूपाः, कुण्डम्, अजाजिनम्, पललपिण्डः, अधरोरुकमेतत्कुमार्याः, स्फैयकृतस्य पिता प्रतिशीनः' इति ( महाभा., १. २. ४५ ) महाभाष्यं द्रष्टव्यम् ।

लोचनम्

धातात्पर्यशक्तिद्वयव्यतिरिक्ता तावत्तृतीयैव शक्तिस्तद्बाधकविधुरीकरणनिपुणा लक्षणाभिधाना समुल्लसति ।

नन्वेवं 'सिंहो वटुः' इत्यत्रापि काव्यरूपता स्यात्; ध्वननलक्षणस्यात्मनोऽत्रापि समनन्तरं वक्ष्यमाणतया भावात्। ननु घटेऽपि जीवव्यवहारः स्यात्; आत्मनो विभुत्वेन[1] तत्रापि भावात्। शरीरस्य खलु विशिष्टाधिष्ठानयुक्तस्य[2] सत्यात्मनि जीवव्यवहारः, न यस्य कस्यचिदिति चेत्–गुणालङ्कारौचित्यसुन्दरशब्दार्थशरीरस्य सति ध्वननाख्यात्मनि काव्यरूपताव्यवहारः। न चात्मनोऽसारता काचिदिति च समानम्। न चैवं भक्तिरेव ध्वनिः, भक्तिर्हि लक्षणाव्यापारस्तृतीयकक्ष्यानिवेशी। चतुर्थ्यां तु कक्ष्यायां ध्वननव्यापारः। तथा हि–त्रितयसन्निधौ लक्षणा प्रवर्तत इति तावद्भवन्त एव वदन्ति। तत्र मुख्यार्थबाधा तावत्प्रत्यक्षादिप्रमाणान्तरमूला। निमित्तं च यदभिधीयते सामीप्यादि तदपि प्रमाणान्तरावगम्यमेव ।

बालप्रिया

**रणे** बाधने **निपुणा** समर्था। **समुल्लसति** प्रवर्तते । तथा च तत्र लक्ष्यार्थस्य न बाधितत्वमिति भावः ।

लक्षणाङ्गीकारेऽतिप्रसङ्गमाशङ्कते—**नन्वेव**मिति। 'आत्मनः अत्रापि भावात्' सत्वादिति सम्बन्धः। प्रतिबन्द्या उत्तरयति—**ननु घटेऽपी**ति । तत्परिहारमाह—**शरीरस्ये**ति। **विशिष्टे**ति। करचरणाद्यवयवै**र्विशिष्टं यदधिष्ठानं** संस्थानं तेन **युक्तस्य।** तुल्यमुत्तरमस्माकमित्याह—**गुणे**ति । गुणालङ्काराणामौचित्येन रसविषयकेण सुन्दरौ शब्दार्थावेव शरीरं तस्य । **न चे**त्यादि। **इति च समान**मिति । यथाऽऽत्मनो निस्सारघटादिसम्बन्धित्वेऽपि नासारता काचित्, तथा ध्वननाख्यात्मनो लौकिकवाक्ये सत्त्वेऽपि नासारता कापीत्यर्थः। नन्वेवं भक्तिरेव ध्वनिः स्यादित्याशङ्क्य परिहरति—**न चैव**मित्यादि। **एवं** लक्षणास्थले ध्वननसद्भावे सति । 'ध्वनिर्न चे'त्यन्वयः। अत्र हेतुमाह-**भक्तिर्ही**ति । भिन्नकक्ष्यानिविष्टत्वादुभयोर्विषयभेदो यतः, तस्मादित्यर्थः । **त्रितयसन्निधा**विति। मुख्यार्थबाधादित्रये सतीत्यर्थः। **भवन्त एव वदन्ती**ति । लक्षणाध्वननयोरभेदं वदन्तो भवन्त एवाहुरित्यर्थः । 'भवतां मतमि'ति च पाठः। मुख्यार्थबाधादिषु त्रिष्वन्त्यस्य ध्वनिव्यापारमात्रगम्यत्वं साधयिष्यन्नादावाद्ययोरन्यसिद्धत्वमाह— **तत्रे**त्यादिना । **अभिधीयत** इति । "अभिधेयेन सामीप्यादि" त्यादिवचनेनोच्यत इत्यर्थः ।

एवं बाधानिमित्तयोरन्यविषयत्वमुक्त्वा प्रयोजनस्यानन्यविषयत्वं स्वरूपकथ-

---

१. विभुत्वञ्च सर्वमूर्तसंयोगित्वम्। मूर्तानि तु पृथिवीजलतेजोवायुमनांसि ।

२. रसनलोचनादीन्द्रियैर्मनसा तत्तदवयवैश्चेत्यर्थः ।

लोचनम्

यत्त्विदं घोषस्यातिपवित्रत्वशीतलत्वसेव्यत्वादिकं प्रयोजनमशब्दान्तरवाच्यं प्रमाणान्तराप्रतिपन्नम्, वटोर्वा पराक्रमातिशयशालित्वं, तत्र शब्दस्य न तावन्न व्यापारः। तथाहि—तत्सामीप्यात्तद्धर्मत्वानुमानमनैकान्तिकम्[1], सिंहशब्दवाच्यत्वं च वटोरसिद्धम्। अथ यत्र यत्रैवंशब्दप्रयोगस्तत्र तत्र तद्धर्मयोग इत्यनुमानम्, तस्यापि व्याप्तिग्रहणकाले मौलिकं[2] प्रमाणान्तरं वाच्यम्, न चास्ति। न च स्मृतिरियम्[3], अननुभूते तद-

बालप्रिया

नेनाह—**यत्त्वि**त्यादि। 'यत्तु अतिपवित्रत्वादिकं पराक्रमातिशयशालित्वं वा तत्रे'ति सम्बन्धः। **घोषस्ये**ति। इदं चातिपवित्रत्वादेः तीरे प्रत्यायनद्वारा घोषेऽपि तत्प्रत्यायनमस्ति तस्यैव परमतात्पर्यविषयत्वादित्याशयेनोक्तम्। यद्वा—घोषाधिकरणस्येति तदर्थः। **अशब्दान्तरवाच्यं** लाक्षणिकशब्दातिरिक्तशब्दाबोध्यम्। **प्रमाणान्तरे**ति। शब्दातिरिक्तप्रमाणेत्यर्थः। **वटोर्वे**ति। प्रयोजनमित्यादित्रयमनुषज्यते। ननु तर्हि शब्देनापि न तत्प्रतीतिरित्यलं तद्व्यापारान्तरगवेषणयेत्यत आह—**तत्रे**त्यादि। **तत्र** पूर्वोक्ते प्रयोजने। **शब्दस्य न तावन्न व्यापार** इत्युक्तं द्रढयति—**तथा ही**त्यादिना। **तत्सामीप्यादि**ति। तीरं गङ्गागतातिपवित्रत्वादिधर्मवत्, गङ्गासामीप्यात्, मुनिजनादिवदित्यनुमानमित्यर्थः। **अनैकान्तिकं** गङ्गातटादिगतशिरःकपालादौ व्यभिचारि। **सिंहे**ति। **वटुः** सिंहधर्मवान् सिंहशब्दवाच्यत्वात्, सम्प्रतिपन्नसिंहवदित्यत्र सिंहशब्दवाच्यत्वरूपो हेतुः स्वरूपासिद्ध इत्यर्थः। अनुमानान्तरमाशंक्य निराचष्टे–**अथे**त्यादि। **एवमि**ति। लक्षणयेत्यर्थः। **इत्यनुमान**मिति। तटः गङ्गाशब्दवाच्यवृत्तिधर्मवान् लक्षणया गङ्गाशब्दप्रयोगविषयत्वात्; वटुः सिंहशब्दवाच्यवृत्तिधर्मवान्, लक्षणया सिंहशब्दप्रयोगविषयत्वात्; यो लक्षणया यत्पदप्रयोगविषयः, स तत्पदवाच्यवृत्तिधर्मवान् इत्यादिरत्र प्रयोगो बोध्यः। यद्वा–**इत्यनुमान**मिति। एवं व्याप्तिविशिष्टो हेतुरित्यर्थः। **तस्यापी**त्यादि। तस्मिन् यद्व्याप्तिग्रहणं तत्काले। **मौलिक**मिति। मूले अनुमानाङ्गव्याप्तिग्रहणरूपे साधनतया भवमित्यर्थः। **प्रमाणान्तरं** प्रत्यक्षादि। **न चास्ती**ति। प्रमाणान्तरमित्यनुषज्यते। सामान्यमुखव्याप्त्यधीनानुमितिस्थले प्रकृतसाध्यहेत्वोः तत्सजातीययोर्वा प्रत्यक्षादिना व्याप्तिग्रहणं वाच्यम्। तच्च लक्षणास्थले व्यभिचारशङ्कया उत्पत्तुन्नार्हतीत्यर्थः। **न चे**ति। **इयं** पावनत्वा-

---

१. गङ्गागतातिपवित्रत्वादेः तीरघोषादावभावाद्बाधश्च।

२. मूलमेव मौलिकम्, विनयादित्वात्स्वार्थिकष्ठक्। व्याप्तिग्रहप्रयोजकं प्रत्यक्षादिप्रमाणं नास्तीत्यर्थः। व्याप्तिश्चात्र यद्वाच्यवाचकलाक्षणिकशब्दप्रयोगविषयो यो यः, स स तद्वृत्तिधर्मवान् इत्यभिमता। तत्र तीरादौ गङ्गादिवृत्तिधर्मस्यातिपवित्रत्वादेरभावेन नेयं सामान्यमुख्यपि व्याप्तिः प्रामाणिकीति भावः।

३. 'उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभाग्भवति'

लोचनम्

योगात्, नियमाप्रतिपत्तेर्वक्तुरेतद्विवक्षितमित्यध्यवसायाभावप्रसङ्गाच्चेत्यस्ति तावदत्र शब्दस्यैव व्यापारः। व्यापारश्च नाभिधात्मा, समयाभावात्। न तात्पर्यात्मा, तस्यान्वयप्रतीतावेव परिक्षयात्। न लक्षणात्मा, उक्तादेव हेतोः स्खलद्गतित्वाभावात्। तत्रापि हि स्खलद्गतित्वे पुनर्मुख्यार्थबाधा निमित्तं प्रयोजनमित्यनवस्था स्यात्। अत एव यत्केनचिल्लक्षितलक्षणेति नाम कृतं तद्व्यसनमात्रम्। तस्मादभिधातात्पर्यलक्षणाव्यति-

बालप्रिया

दिप्रयोजनज्ञानं 'स्मृतिर्न चे'त्यन्वयः। न च स्मृतिप्रतिपन्नमेतदित्यर्थः। अत्र हेतुमाह—**अननुभूते तदयोगा**दिति। ननु तत्स्मृतिः कथञ्चित्सम्पाद्येत्यतो हेत्वन्तरमाह—**नियमे**त्यादि। नियामकस्य कस्यचिदनुपलंभादेतदेव प्रयोजनमत्र विवक्षितमित्यनिश्चयप्रसंगाच्चेत्यर्थः। व्यञ्जनव्यापारोपगमे तु सहकारिविशेषान्नियमः सेत्स्यतीति भावः। निगमयति—**इती**त्यादि। **इती**ति हेतौ। यत एवं नान्यगम्यं प्रयोजनं तत इत्यर्थः। **अत्रे**ति। पावनत्वादौ प्रयोजन इत्यर्थः। अथ व्यञ्जनव्यापारस्य पारिशेष्यात्सिद्धिं दर्शयितुमाह—**व्यापारश्चे**त्यादि। अत्रेत्यस्यानुषङ्गः। **समयाभावात्** गङ्गादिशब्दस्य पावनत्वादौ सङ्केताभावात्। **अन्वयप्रतीता**विति। प्राथमिकवाच्यार्थान्वयबोध इत्यर्थः। **उक्तादे**वेत्यादि। पूर्वोक्तो हेतुर्मुख्यार्थबाधादिः, तस्माद्यत् **स्खलद्गतित्वं** स्खलन्ती प्रतिहन्यमाना गतिरवबोधनव्यापारो यस्य शब्दस्य तस्य भावस्तत्त्वम्। स्वार्थाद्भ्रंश इति यावत्। तस्याभावादित्यर्थः। गङ्गादिशब्दानां हि मुख्यार्थबाधादिवशात्तीरादाववगमयितव्ये स्वार्थात्स्रोतोविशेषादेर्यथा भ्रंशः, तथा प्रयोजने पावनत्वादाववगमयितव्ये स्वार्थात्तीरादेर्भ्रंशो नास्ति, यतस्तस्मादित्यर्थः। यद्वा—**उक्तादेव हेतो**रिति। नियमाप्रतिपत्तेरित्यादिपूर्वोक्ताद्धेतोरित्यर्थः। हेत्वन्तरं चाह—**स्खलद्गतित्वाभावा**दिति। अस्यार्थः पूर्ववद्बोध्यः। अभ्युपगम्यापि दोषमाह—**तत्रापी**त्यादि। प्रयोजनं निमित्तीकृत्यापि लक्ष्यार्थात् स्खलद्गतित्वेऽङ्गीक्रियमाणे पुनः पुनरपि लक्षणामूलपरिकल्पनया लक्षणानवस्था स्यादित्यर्थः। **व्यापारश्च नाभिधात्मे**त्याद्येतदन्तग्रन्थस्य विवरणरूपः—"[1]नाभिधा, समयाभावादि"त्यादिकाव्यप्रकाशग्रन्थ इति द्रष्टव्यम्। गङ्गादिशब्देन तीरादौ लक्षिते पुनः पावनत्वादिप्रयोजनमपि लक्ष्येत। अत एव तल्लक्षणायाः लक्षितलक्षणेति नामेति केचित्। तन्मतं निराकरोति—**अत एवे**त्यादि। **अतएव** अनवस्थादिदोषादेव। **नाम कृत**मिति। प्रयोजनविषयव्यापारस्येति शेषः। **व्यसनमात्रं** ध्वनिनिराकरणनिर्बन्धमात्रं तद्धेतुकमिति यावत्। वक्ष्यते च "[2]तेनायं लक्षितलक्षणाया न विषयः" इति। **तस्मा**दित्यादि। **ध्वनने**ति। **ध्वनना**दिरूपाः

इत्यभियुक्तोक्त्या निर्देश्यस्य पावनत्वादिज्ञानस्य नपुंसकत्वेऽपि प्रतिनिर्देश्यस्मृत्यपेक्षया'इयमि'ति स्त्रीलिङ्गनिर्देशस्समीचीन एवेति विभाव्यम्।

१. काव्यप्र., २. १५ २. 'मुख्यां वृत्तिं परित्यज्य' ( ध्वन्या., १. २० )

लोचनम्

रिक्तश्चतुर्थोऽसौ व्यापारो ध्वननद्योतनव्यञ्जनप्रत्यायनावगमनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्यः । यद्वक्ष्यति—

'मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥ इति ॥

तेन समयापेक्षा वाच्यावगमनशक्तिरभिधाशक्तिः । तदन्यथानुपपत्तिसहायार्थावबोधनशक्तिस्तात्पर्यशक्तिः । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्लक्षणाशक्तिः । तच्छक्तित्रयोपजनितार्थावगममूलजाततत्प्रतिभासपवित्रितप्रतिपत्तृप्रतिभासहाया-

बालप्रिया

**सोदराः** पर्यायाश्च ये **व्यपदेशाः** शब्दाः तैः **निरूपितो** निश्चित इत्यर्थः। ध्वननादिव्यपदेशः प्रसिद्धः । व्यपदेशश्च व्यपदेश्यं विना न तिष्ठतीति तच्छ्रवणान्यथाऽनुपपत्तिनिरूपणीयोऽयमिति यावत् । **अभ्युपगन्तव्यः** अनिच्छद्भिरपीति शेषः । प्रयोजनांशे न लक्षणेत्यत्र मूलसम्मतिमाह—**यद्वक्ष्यती**ति ।

एवं प्रयोजनविषयकं ध्वननव्यापारं प्रसाध्य तमेवेतरव्यापारत्रयाद्भेदेन स्पष्टयितुं व्यापाराणां स्वरूपं दर्शयति—**तेने**त्यादि । **समयापेक्षे**ति । तदर्थसङ्केतग्रहणसहकारेण तदर्थबोधनसामर्थ्यं पदनिष्ठमभिधा नाम शक्तिरित्यर्थः । सामर्थ्यं नाम शक्त्यपरपर्यायं पदार्थान्तरमिति बोध्यम् । **तदन्यथे**ति । **तस्या** अभिधायाः, **अन्यथा** आत्मानं विना **अनुपपत्तिः**असम्भवः प्रयोजनाभावादिना सहायो यस्याः सा । केचित्तु तस्य विशेषरूपस्यान्वितार्थस्य अन्यथा तात्पर्याभावे या अनुपपत्तिः, तत्सहायेति व्याचक्षते । **अर्थे**ति । संसृष्टार्थेत्यर्थः । **मुख्ये**ति । **मुख्यार्थबाधादि**त्रयं यत्**सहकारि** तद**पेक्षत** इति तथा । **तच्छक्ती**ति । **तत्** पूर्वोक्तं यत् **शक्तित्रय**मभिधादिकं तेन, **उपजनितः** य**दर्थानां** पदार्थवाक्यार्थलक्ष्यार्थानाम**वगमः** बोधः, तस्मादेव **मूला**ज्जाता, **तत्प्रतिभासेन** अभिधेयाद्यर्थानां निरन्तरप्रतीत्या **पवित्रितस्य** संस्कारलक्षणातिशयवत्तया

इति कारिकाव्याख्यानावसरे लोचन इति शेषः । १. ध्वन्या., १. २०.

२. वाक्यार्थबोधं प्रति तात्पर्यशक्तेः कारणतां व्यतिरेकेण द्रढयितुमाह—तदन्यथेति । तदभावे ( कारणाभावे ) तदभावः ( कार्याभावः ) इति हि व्यतिरेकस्वरूपम् । तथा च तस्याः तात्पर्यशक्तेः, अन्यथा प्रकारान्तरेण अर्थात्तात्पर्यशक्त्यभावे, अनुपपत्तिः वाक्यार्थबोधाभावः, सहायः कारणत्वकल्पने मूलं यस्यास्सेत्यर्थः ।

३. अर्थेति । अर्थपदेनात्रादग्धदहनन्यायेनान्वयरूपार्थ एव विवक्षित इति ध्येयम् ।

४. अभिधादिशक्तित्रयप्रयोज्यार्थावबोधस्य ध्वननव्यापारं प्रति सहकारितां 'जाता'न्तग्रन्थेन दर्शयित्वा, ध्वन्यमानार्थबोधः सहृदयस्यैव भवतीति सूचयितुं प्रतिपत्तृविशेषणमाह—तत्प्रतिभासपवित्रितेति । तस्य ध्वन्यमानार्थस्य यः प्रतिभासः काव्यादौ पुनः पुनरनुसन्धानं, तेन पवित्रितः तदाहितसंस्कारातिशयविशिष्टेत्यर्थः । सहृदय इति

लोचनम्

र्थद्योतनशक्तिर्ध्वननव्यापारः; स च प्राग्वृत्तं व्यापारत्रयं न्यक्कुर्वन्प्रधानभूतः काव्यात्मेत्याशयेन निषेधप्रमुखतया च प्रयोजनविषयोऽपि निषेधविषय इत्युक्तम्। अभ्युपगममात्रेण चैतदुक्तम्; न त्वत्र लक्षणा, अत्यन्ततिरस्कारान्यसंक्रमणयोरभावात्। न ह्यर्थशक्तिमूलेऽस्या व्यापारः। सहकारिभेदाच्च शक्तिभेदः स्पष्ट एव, यथा तस्यैव शब्दस्य व्याप्तिस्मृत्यादिसहकृतस्य विवक्षावगतावनुमापकत्वव्यापारः। अ-

बालप्रिया

सम्पादितस्य **प्रतिपत्तुर्या प्रतिभा तत्सहाया। अर्थद्योतनशक्तिः** प्रयोजनादिलक्षणस्यार्थस्य व्यञ्जने सामर्थ्यम्। इत्युक्तं भवतीति शेषः। अस्त्वेवंभूतोऽसौ; कथमस्यैव काव्यात्मत्वमित्यत आह—**स चे**ति। चकारोऽवधारणे। 'स च काव्यात्मे'ति सम्बन्धः। अत्र हेतुः—**प्रधानभूत** इति। तत्र हेतुः—**प्राग्वृत्त**मित्यादि। अभिधादित्रयमपेक्ष्य **स्वयं प्रवृत्तोऽपि** तदुपसर्जनीकुर्वन्नित्यर्थः। व्यङ्ग्यस्य काव्यात्मत्वाद्व्यञ्जनस्यापि तत्त्वं बोध्यम्। नन्वेतावता 'भ्रम धार्मिके'त्यादौ भ्रमणनिषेधो लक्षणाविषयः, तदन्यप्रयोजनविषयकश्च व्यञ्जनाव्यापार इत्यायातम्। तथाच कथं वृत्तिकृता 'प्रतिषेधरूप' इति वदता व्यञ्जनाव्यापारस्य निषेधविषयकत्वमुक्तमित्यत आह-**इत्याशये**नेत्यादि। **इत्याशयेन** उक्ताभिप्रायेण 'प्रयोजनविषयोऽपि सः निषेधप्रमुखतया निषेधविषय इत्युक्तमि'ति सम्बन्धः। **प्रयोजनं विषयो** यस्य सः। प्रयोजनं चात्र स्वैरिण्याः सङ्केतस्थानपरित्राणस्वच्छन्दविहरणादिकम्। **निषेधप्रमुखतया** निषेधप्रतीतिद्वारकत्वेन। **इत्युक्त**मिति। कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूप इत्यनेन प्रदर्शितमित्यर्थः। भ्रमणनिषेधोऽत्र लक्ष्य एव। प्रयोजनस्योक्तस्य निषेधप्रतीतिपूर्वकप्रतीतिविषयत्वान्निषेधरूपतया उक्तिरित्यर्थः। वस्तुतोऽत्र लक्षणा न प्रवर्तत इति वृत्तिग्रन्थानुगुण्येनाह—**अभ्युपगम**त्यादि। **अभ्युपगममात्रेण** प्रौढिवादमात्रेण। **इदं** विपरीतलक्षणया निषेधबोधनम्। अत्र लक्षणाया अप्रवृत्तौ हेतुमाह—**अत्यन्ते**ति। यत्र वाच्यस्यात्यन्ततिरस्कारोऽन्यसङ्क्रमणं वा तत्र हि लक्षणा। न चात्र भ्रमणविधिरूपस्य वाच्यस्योभयं तस्मादित्यर्थः। नन्वत्रार्थशक्तिमूलो ध्वनिरेवास्तु; तत्रापि किं न लक्षणेत्यत आह—**न ही**ति। **अर्थशक्तिमूल** इति हेतुगर्भम्। ध्वनाविति शेषः। **अस्या व्यापारः** लक्षणायाः प्रवृत्तिः। किंचार्थशक्तिमूलध्वननव्यापारस्य वक्तृबोद्धव्यवैशिष्ट्यादिकं सहकारि, लक्षणायास्तु मुख्यार्थबाधादिकमतोऽप्यनयोर्भेद इत्याह-**सहकारी**ति। उक्तमर्थं दृष्टान्तेन विशदयति-**यथे**त्यादि। **तस्यैव** अर्थबोधनाय प्रयुक्तस्यैव। **शब्दस्य** गामानयेत्यादिशब्दस्य। **स्मृत्यादी**त्यादिपदेन पक्षधर्मताज्ञानपरिग्रहः। **अनुमापकत्वव्यापारः** अनुमापकत्वशक्तिः। अयं वक्ता एतद्विवक्षुः एतच्छब्दप्रयोगात् इत्यादिः प्रयोगोऽत्र बोध्यः। उक्तं चैतत्तृतीयोद्योते। **अक्षादी**ति। अक्षं चक्षुरादीन्द्रियम्। आदिपदेन तत्सन्निकर्षादि-

---

यावत्। तत्त्वञ्च व्यङ्ग्यार्थबोधप्रयोजकतावच्छेदकविलक्षणधर्मवत्त्वमिति भावः।

**लोचनम्**

क्षा[1]दिसहकृतस्य वा विकल्पकत्वव्यापारः । एवमभिहितान्वय[2]वादिनामियदनपह्नवनीयम् ।

योऽप्यन्विताभिधा[3]नवादी 'यत्परः शब्दः स शब्दार्थः' इति हृदये ग्रहीत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घमिच्छति, तस्य यदि दीर्घो व्यापारस्तदेकोऽसाविति कुतः ? भिन्नविषयत्वात् । अथानेकोऽसौ ? तद्विषयसहकारिभेदादसजातीय एव युक्तः । सजातीये च कार्ये विरम्यव्यापारः शब्दकर्मबुद्ध्यादीनां पदार्थविद्भिर्निषिद्धः । असजातीये चास्मन्नय एव ।

**बालप्रिया**

परिग्रहः । **विकल्पकत्वव्यापारः** सविकल्पकज्ञानजनकत्वशक्तिः । शब्दो हि श्रोत्रादिसहकारेण स्वप्रत्यक्षं जनयति । अथ च ज्ञायमानः संज्ञाशब्दः संज्ञिनि चक्षुस्सन्निकर्षादिकाले स्वविशेषणकं संज्ञिप्रत्यक्षं जनयति इति मतविशेषः । **इयदि**ति । अभिधादित्रयोत्तीर्णध्वनिव्यापारोऽस्तीत्येतावदित्यर्थः । **अनपह्नवनीय**मनिराकरणीयं, प्रत्युताभ्युपगन्तव्यमिति भावः ।

**योऽपी**त्यादि । अपिशब्दस्तुशब्दार्थे । 'य इच्छति तस्ये'ति सम्बन्धः । गामानयेत्यादिकस्य तत्तद्वाक्यस्य तत्तद्वाक्यार्थे प्रथमं सङ्गतिग्रहः, पश्चादावापोद्वापाभ्यामन्वितस्वार्थे गवादिपदानां सङ्गतिग्रह इत्यादिरन्विताभिधानवादिमतप्रक्रियाऽन्यतोऽवधेया । **यत्पर** इति । योऽर्थः परः प्रधानप्रतिपाद्यः तात्पर्यविषयो यस्य सः **शब्दार्थः** शब्दाभिधेयः । **शरवत्** शरव्यापारतुल्यम् । **इच्छती**ति । यथोक्तम्—"सोऽयमि[4]षोरिव दीर्घदीर्घो व्यापार" इति । यथा धनुर्धरेण प्रेरितश्शरो वेगाख्येनैकेनैव व्यापारेण परस्य वर्मच्छेदनगात्रभेदनादिका अनेकक्रियाः करोति, तथा सुकविना प्रयुक्तः शब्दोऽभिधाख्येनैकेनैव व्यापारेण पदार्थवाक्यार्थयोर्लक्ष्यत्वेन व्यङ्ग्यत्वेनाभिमतयोश्च प्रतीतीर्जनयतीत्यर्थः । इत्थं तन्मतमुपन्यस्य तेनापि ध्वननमङ्गीकारयितुं स दीर्घोऽभिधाव्यापारः किमेकः प्रतिविषयमनेको वेति विकल्प्याद्यं प्रत्याचष्टे—**तस्ये**त्यादि । अभिमत इति शेषः । 'व्यापारो दीर्घस्तस्याभिमतो यदी'ति सम्बन्धः । **तत्** तर्हि । **असौ एक इति कुतः?** एको भवितुं नार्हतीत्यर्थः । अत्र हेतुः—**भिन्ने**ति । भिन्नाः विषयाः वाच्याद्यर्थाः यस्य तत्त्वात् । विषयभेदे सति तत्सम्बन्धिव्यापारभेदोऽप्यावश्यक इति भावः । द्वितीयमनूद्यावद्यति—**अथे**त्यादि । **अथे**ति यदीत्यर्थे । **तत्** तर्हि । **विषये**ति । विषयाः वाच्यलक्ष्यव्यंग्यत्वेनाभिमता-

---

१. सर्वे एव शब्दा नेत्रादीन्द्रियसहकारेण स्वप्रकारकार्थविशेष्यकप्रत्यक्षादिकं जनयन्तीति सौगता मन्यन्ते । प्रमाणयन्ति चात्र—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ॥

२. तौतातितमतानुयायिनामित्यर्थः ।  ३. प्राभाकार इत्यर्थः ।

४. काव्यप्र., p, २१३. ( *edn*, Ānandāśrama Press, Poona )

## लोचनम्

अथ योऽसौ चतुर्थकक्षानिविष्टोऽर्थः, स एव झटिति वाक्येनाभिधीयत इत्येवंविधं दीर्घदीर्घत्वं विवक्षितम्, तर्हि तत्र सङ्केताकरणात्कथं साक्षात्प्रतिपत्तिः । निमित्तेषु सङ्केतः, नैमित्तिकस्त्वसावर्थस्संकेतानपेक्ष एवेति चेत्–पश्यत श्रोत्रियस्योक्तिकौशलम् । यो ह्यसौ पर्यन्तकक्षाभाग्यर्थः[1] प्रथमं प्रतीतिपथमवतीर्णः, तस्य पश्चात्तनाः पदार्थावगमाः

## बालप्रिया

अर्थाः । **सहकारिणः** समयमुख्यार्थबाधादिवक्तृवैशिष्ट्यादयः । तेषां **भेदात्** । **असजातीयः** भिन्नजातीयः । सजातीयत्वे दोषप्रदर्शनेनोक्तमेव साधयति–**सजातीय** इत्यादि । अनेकोऽसावित्यस्य विपरिणामेनानुषङ्गः । अनेकेऽस्मिन् व्यापारे सजातीये अङ्गीक्रियमाणे सतीत्यर्थः । स पुनर्न प्रवर्तेत इति शेषः । अत्र हेतुमाह—**कार्य** इत्यादि । **कार्ये** कार्यं प्रति । **पदार्थविद्भिः** नैयायिकादिभिः । नन्वसजातीयोऽस्त्वित्यत्राह–**असजातीय** इत्यादि । अनेकेऽस्मिन्नसजातीये अङ्गीक्रियमाणे च सतीत्यर्थः । **अस्मन्नय एवेति** । व्यापारभेदसिद्ध्या ध्वननव्यापारसिद्धेरिति भावः । यद्वा सजातीय इत्यादेरयमर्थः—किंच व्यापारस्य यत्कार्यमनेकार्थज्ञानं तत्सजातीयमन्यद्वेति विकल्पं मनसि निधायाह—**सजातीय** इत्यादि । **सजातीये कार्ये** तत्प्रति । **व्यापारः** अभिधादिः । **निषिद्ध** इति । अतो व्यापारान्तरस्वीकारे चास्मन्नय एवेति भावः । **असजातीय** इति । कार्ये इत्यनुषज्यते । **अस्मन्नय एवे**ति । कार्यस्य विजातीयत्वे तत्कारणभूतव्यापारवैजात्यस्यावश्यकत्वात् ध्वननव्यापारसिद्धिरिति भावः ।

अथ व्यापारस्य दीर्घत्वं नाम नैकत्वमेकजातीयत्वं वा; किन्तु प्रतिपिपादयिषितार्थप्रतिपादनझाटित्यविशेष एव । अतो व्यंग्यस्याभिधाविषयत्वमस्त्येवेत्याशङ्कते—**अथे**त्यादि । **अथ** यदि । 'विवक्षितमथे'ति सम्बन्धः । **चतुर्थे**ति । अन्त्येत्यर्थः । **स एव** सोऽपि । समाधत्ते—**तर्ही**त्यादि । **तत्र** अन्त्यकक्ष्यानिविष्टार्थे । **साक्षा**दिति । अभिधयेत्यर्थः । **कथ**मिति । भवतीति शेषः । न भवतीत्यर्थः । अथ पदार्थवाक्यार्थयोर्निमित्तनैमित्तिकभावाभ्युपगमान्निमित्तभूतेषु पदार्थेषु सङ्केतग्रहणात्तन्मात्रेणैव पृथगन्त्यवाक्यार्थविषयकसङ्केतानपेक्षया तद्वाक्यार्थप्रतीतिरभिधाव्यापारेण भवतीत्याशङ्कामुद्भाव्य व्युदस्यति—**निमित्तेष्वि**त्यादि । निमित्तेषु पदार्थेषु । **असावर्थः** अन्त्यवाक्यार्थः । **पश्यते**त्यादि परिहासवचनम् । 'इत्युक्तिकौशलमि'ति सम्बन्धः । **पर्यन्तकक्ष्यायाः भागी** भजनशीलः । **पश्चात्तनाः** वाक्यार्थप्रतीत्युत्तरकालभा-

---

[1] 'भजो ण्विः' (पा.सू.,३.२.६२.)इति ण्विप्रत्ययान्तः पर्यन्तकक्ष्याभाक्छब्दः। तथा च 'पर्यन्तकक्ष्याभागर्थः' इत्येव लोचनग्रन्थस्साधीयान्। 'भाग्यर्थ' इति पाठस्तु ण्विप्रत्ययान्तेन न समर्थयितुं शक्यः, कुत्वाप्राप्तेः । यदि तथैव पाठ इत्याग्रहः, तदा घञन्तादिना कथञ्चित्समर्थनीयः ।

लोचनम्

निमित्तभावं गच्छन्तीति नूनं मीमांसकस्य प्रपौत्रं प्रति नैमित्तिकत्वमभिमतम् ।

अथोच्यते—पूर्वं तत्र सङ्केतग्रहणसंस्कृतस्य तथा प्रतिपत्तिर्भवतीत्यमुया वस्तुस्थित्या निमित्तत्वं पदार्थानाम्, तर्हि तदनुसरणोपयोगि न किञ्चिदप्युक्तं स्यात् । न चापि प्राक्पदार्थेषु सङ्केतग्रहणं वृत्तम्, अन्वितानामेव सर्वदा प्रयोगात् । आवापोद्वापाभ्यां तथाभाव इति चेत्-सङ्केतः पदार्थमात्र एवेत्यभ्युपगमे पाश्चात्यैव विशेषप्रतीतिः ।

अथोच्यते—दृष्टैव झटिति तात्पर्यप्रतिपत्तिः किमत्र कुर्म इति । तदिदं वयमपि न नाङ्गीकुर्मः । यद्वक्ष्यामः—

> तद्वत्सचेतसां सोऽर्थो वाक्यार्थविमुखात्मनाम् ।
> बुद्धौ तत्त्वावभासिन्यां झटित्येवावभासते ॥ इति ॥

किं तु सातिशयानुशीलनाभ्यासात्तत्र सम्भाव्यमानोऽपि क्रमः सजातीयतद्विक-

बालप्रिया

विनः । **पदार्थावगमाः** पदार्थप्रतीतयः । **प्रपौत्रं प्रती**त्यादि । प्रपौत्रं निमित्तमपेक्ष्यात्मनो नैमित्तिकत्वमभिमतं स्यादित्यर्थः ।

अथ पदार्थप्रतीतेः पश्चात्तनत्वेऽपि तद्विषयकसङ्केतग्रहणस्य पूर्वं जातत्वात्तद्द्वारकः पदार्थानां निमित्तत्वव्यपदेशो न विरुध्यते । उपलभ्यते हि गृहीतसङ्केतस्य प्रतिपत्तु- 'गङ्गायां घोष' इत्यादिवाक्यश्रवणानन्तरमेव झटिति शैत्यपावनत्वादिरूपपार्यन्तिकार्थप्रतीतिरित्याशङ्कामुद्भाव्य परिहरति—**अथोच्यत** इत्यादिना । **तदनुसरणे**ति । **तस्याः** पार्यन्तिकार्थप्रतीतेः **अनुसरणे** स्वमतेन निर्वहणे **यदुपयोगि** । यद्वा—**तदनुसरणे** पदार्थानां पार्यन्तिकार्थप्रतीतिनिमित्तत्वानुसरणे । **यदुपयोगि** निमित्तम् । **किञ्चिदपि उक्तं न स्यात्** उक्तं न भवति । गृहीतसङ्केतस्याभिधया सङ्केतितपदार्थावगमो भवेत् । पार्यन्तिकार्थस्यासङ्केतितस्य कथमवगमो भवेदिति भावः । किञ्च पूर्वं पदार्थेषु सङ्केतग्रहणमपि न घटत इत्याह—**न चा**पीति । **अन्वितानामेव** अन्वितार्थबोधकानामेव । वाक्यत्वमापन्नानामेवेति यावत् । शङ्कते—**आवा**पेत्यादि । **तथाभावः** पृथक् पृथक् पदार्थेषु सङ्केतग्रहणस्य भवनम् । परिहरति—**सङ्केत** इत्यादि । **विशेषप्रतीतिः पाश्चात्यै**वेति । वाक्यार्थप्रतीतिः पश्चात्तन्येव भवति, न पूर्वकालभवेत्यर्थः । तथा च भवत्सिद्धान्तो विरुध्येतेति भावः ।

**अथे**त्यादि । **तात्पर्यप्रतिपत्तिः** पार्यन्तिकार्थप्रतीतिः । **किमत्र कुर्म** इति । पदार्थेषु सङ्केतग्रहणस्य निमित्तता भवतु मा वेति भावः । यद्येवं तर्हि सिद्धं नः समीहितमित्याह—**तदि**त्यादि । विशेषमाह—**किन्त्वि**त्यादि । **तत्रे**ति । पार्यन्तिकार्थरूपव्यंग्यार्थप्रतीतावित्यर्थः । **सम्भाव्यमानोऽपि** प्रमाणेन ज्ञायमानोऽपि । **क्रमः** पदार्थप्रतीतेः पौर्वापर्यम् । 'संवेद्यत' इति सम्बन्धः । अत्र हेतुमाह—**सजाती**येत्यादि । **सजातीयाः** वाक्यार्थप्रतीत्यङ्गत्वेन सजातीयाः ये **तद्विकल्पाः** पदार्थविषयकप्रत्ययाः । तेषां

लोचनम्

ल्पपरम्परानुदयादभ्यस्तविषयव्याप्तिसमयस्मृतिक्रमवन्न संवेद्यत इति । निमित्तनैमित्तिकभावश्चावश्याश्रयणीयः, अन्यथा गौणलाक्षणिकयोर्मुख्याद्भेदः '[1]श्रुतिलिङ्गादिप्रमाणषट्कस्य पारदौर्बल्यम्' इत्यादिप्रक्रियाविघातः, निमित्ततावैचित्र्येणैवास्याः समर्थितत्वात् । निमित्ततावैचित्र्ये चाभ्युपगते किमपरमस्मास्वसूयया । येऽप्यविभक्तं स्फोटं वाक्यं तदर्थं चाहुः, तैरप्यविद्यापदपतितैः सर्वेयमनुसरणीया प्रक्रिया । तदुत्तीर्णत्वे तु सर्वं परमेश्वराद्वयं ब्रह्मेत्यस्मच्छास्त्रकारेण न न विदितं तत्त्वालोकग्रन्थं विरचयतेत्यास्ताम् ।

बालप्रिया

**परम्पराया अनुदयाद**नुल्लेखादित्यर्थः । क्रमो हि हेतुहेतुमद्भावेनावस्थितयोर्धर्मः, तस्य ज्ञाने तयोर्ज्ञानमपेक्षितमिति भावः । अनुदये हेतुमाह-**सातिशये**ति । सातिशयं यद**नुशीलनं** पर्यालोचनं तस्या**भ्यासात्** पौनःपुन्यादित्यर्थः । क्रमस्य सत्त्वेऽप्यप्रतिपत्तौ दृष्टान्तमाह-**अभ्यस्ते**ति । **अभ्यस्तः** भूयो भूयः पर्यालोचितो विषयो ययोस्ते । यद्वा-अभ्यस्ते विषये धूमादिहेतौ गवाद्यर्थे च ये व्याप्तिसमययोः वह्न्यादिसाध्यव्याप्तिगवादिपदसङ्केतयोः स्मृती, तयोरनुमितिशाब्दबोधयोर्यः क्रमस्तद्वदित्यर्थः । इतीत्यादि। **इती**ति हेतौ । अतो हेतोरित्यर्थः । क्रमस्य निमित्तनैमित्तिकभावोपजीव्यत्वात्तस्य च साधितत्वादिति यावत् । निमित्तनैमित्तिकभावाश्रयणस्यावश्यकत्वं विपक्षे बाधकमुखेनाह—**अन्यथे**त्यादि । 'अन्यथा इत्यादि प्रक्रियाविघात' इति सम्बन्धः । **गौणे**ति । गौणलाक्षणिकार्थप्रतीतौ हि मुख्यार्थबाधानिमित्तं, ततश्च मुख्यार्थो मौलिकं निमित्तमित्यापतति । तदन्तरेण बाधाया मुख्यामुख्यनियमस्य चासिद्धेरित्यर्थः । लौकिकीं प्रक्रियामुक्त्वा वैदिकीमाह-**श्रुती**त्यादि। श्रुत्यादिपदार्थास्तदुदाहरणानि चापोदेवीयादौ काव्यप्रदीपादौ च ग्रन्थे प्रपञ्चितानि । निमित्तनैमित्तिकभावानाश्रयणे कथमुक्तप्रक्रियाविघात इत्यत आह—**निमित्तते**ति । निमित्ततायाः **वैचित्र्येण** भेदेन । **अस्याः** प्रक्रियायाः । **समर्थितत्वा**दिति । एतन्निमित्ततावैचित्र्यञ्च अभिधाया दीर्घदीर्घत्वांगीकारे नोपपद्यत इति भावः । ननु तर्हि निमित्तनैमित्तिकभावोऽस्तु विचित्रो, येनायं प्रक्रियाविघातो न स्यादित्यत्राह—**निमित्तते**ति । निमित्ततावैचित्र्यांगीकारे व्यापारभेदस्याप्यङ्गीकर्तव्यतया किमस्मदुक्तावमर्ष इत्यर्थः । **येऽपी**ति । स्फोटवादिनो वैयाकरणादय इत्यर्थः। **अविद्ये**ति । **अविद्यापदं** व्यवहारमार्गः । **अस्मच्छास्त्रकारेण** आनन्दवर्धनाचार्येण । **न न विदितं** विदितमेव । अत्र हेतुः—**तत्त्वालोकग्रन्थं विरचयतेति ।**

१. 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' ( जै. सू., ३. ३. १४. ) इत्यत्र शाबरभाष्यादौ विषयोऽयं द्रष्टव्यः ।

लोचनम्

यत्तु भट्टनायकेनोक्तम्—इह दृप्तसिंहादिपदप्रयोगे च धार्मिकपदप्रयोगे च भयानकरसावेशकृतैव निषेधावगतिः तदीयभीरुवीरत्वप्रकृतिनियमावगममन्तरेणैकान्ततो निषेधावगत्यभावादिति तत्र केवलार्थसामर्थ्यनिषेधावगतेर्निमित्तमिति । तत्रोच्यते—केनोक्तमेतत् 'वक्तृप्रतिपत्तृविशेषावगमविरहेण शब्दगतध्वननव्यापारविरहेण च निषेधावगतिः' इति । प्रतिपत्तृप्रतिभासहकारित्वं ह्यस्माभिर्द्योतनस्य प्राणत्वेनोक्तम् । भयानकरसावेशश्च न निवार्यते, तस्य भयमात्रोत्पत्त्यभ्युपगमात् । प्रतिपत्तुश्च रसावेशो रसाभिव्यक्त्यैव । रसश्च व्यङ्ग्य एव, तस्य च शब्दवाच्यत्वं तेनापि नोपगतमिति

बालप्रिया

**यत्त्वि**त्यादि । उक्तिप्रकारमाह—**इहे**त्यादि । **इह** 'भ्रमे'त्यादौ । भयानकरसावेशकृतैव निषेधावगतिरिति सम्बन्धः । कुत इत्यत आह—**दृप्ते**त्यादि । निमित्तरूपार्थे सप्तम्यौ । श्वमारणनिमित्तभ्रमणविधिसिद्धं धार्मिकभीरुत्वं विना निषेधार्थो न सिध्यतीति **धार्मिके**त्याद्युक्तम् । तावन्मात्रेणापि गृहभ्रमणविधिरेवानुगृहीतो भवति, न प्रकृतनिषेध इत्यतो **दृप्तसिंहादी**ति च । एवकारो भयानकरसावेशस्य निषेधावगतिजनने प्राधान्यं दर्शयति । ध्वननव्यापारेणैवास्तु निषेधावगतिः, किमित्येवं कल्प्यत इत्यत्राह—**तदीये**त्यादि । **तदीय**योः धार्मिकसिंहसम्बन्धिनोः । भीरुत्ववीरत्वरूपयोः **प्रकृत्योः** स्वभावयोः **नियम**स्याविनाभावस्या**वगमं** ज्ञानम् । **अन्तरेण** विना । **एकान्ततः** कारणान्तरेण तन्नियमात् । ध्वननव्यापारमात्रेणेति यावत् । **निषेधे**ति । भ्रमणनिषेधेत्यर्थः । फलितमाह—**इती**त्यादि । **इति तदि**ति । इत्युक्ताद्धेतोरित्यर्थः । अर्थसामर्थ्यस्यापि सहकारितया हेतुत्वानपायं केवलपदेन दर्शयति । 'इति यत्तु उक्तमि'ति सम्बन्धः । 'तत्र केवले'त्यादिकं श्रुत्वा तदसहमानो ध्वनिवाद्याह—**केने**त्यादि । 'इत्येतत्केनोक्तमि'ति सम्बन्धः । यद्वा—**एतदि**ति वक्तृप्रतीत्यादिसमासघटकम् । एतस्य वाक्यस्य सम्बन्धिनौ एतौ वा यौ वक्तृप्रतिपत्तृविशेषौ सङ्केतस्थानपरिरक्षणोत्सुककामिनीभीरुधार्मिकौ; तयोरवगमस्य विरहेण अभावेन । विशेषपदेन वक्तृगतस्वैरिणीत्वादिकं प्रतिपत्तृगतप्रतिभादिकं च विवक्षितम् । ननु त्वयैवोक्तमित्यात्राह—**प्रतिपत्त्रि**ति । तदुक्तं कञ्चिदंशमनुजानन् विरुद्धमंशं निराकरोति—**भयानके**त्यादि । **न निवार्यत** इति । तस्यास्तित्वमात्रं न निषेधावगतिं प्रति हेतुत्वमिति भावः । कथं बोद्धव्ये धार्मिके भयानकरसावेश इत्यत आह—**तस्ये**त्यादि । **तस्य** भयानकरसावेशस्य । **भयमात्रोत्पत्त्ये**ति । प्रकृत्यादित्वात्तृतीया । तद्रूपस्य तस्येत्यर्थः । मात्रपदेन रसत्वं व्युदस्यते । **अभ्युपगमात्** बोद्धव्ये स्वीकारात् । तथैव किं सहृदयस्य नेत्याह—**प्रतिपत्तु**रित्यादि । **प्रतिपत्तुः** सहृदयस्य तु रसोऽभिव्यज्यते, नोत्पद्यते । तदभिव्यक्त्या तदावेशश्च भवतीत्यर्थः । बोद्धव्यस्य भयमिव, सहृदयस्य रसोऽप्युत्पद्यतां किं तदभिव्यक्तिकल्पनयेत्यत आह—**रसश्चे**-

लोचनम्

व्यङ्ग्यत्वमेव। प्रतिपत्तुरपि रसावेशो न नियतः, न ह्यसौ नियमेन भीरुधार्मिकसब्रह्मचारी सहृदयः।

अथ तद्विशेषोऽपि सहकारी कल्प्यते, तर्हि वक्तृप्रतिपत्तृप्रतिभाप्राणितो ध्वननव्यापारः किं न सह्यते। किं च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति सुष्ठुतरां ध्वनिध्वंसोऽयम्। यदाह—'क्रोधोऽपि देवस्य वरेण तुल्यः' इति। अथ रसस्यैवेयता प्राधान्यमुक्तम्; तत्को न सहते। अथ वस्तुमात्रध्वनेरेतदुदाहरणं न युक्तमित्युच्यते, तथापि काव्योदाहरणत्वाद्द्वावप्यत्र ध्वनी स्तः, को दोषः।

यदि तु रसानुवेधेन विना न तुष्यति, तत भयानकरसानुवेधो नात्र सहृदयहृदयदर्पणमध्यास्ते; अपि तु उक्तनीत्या सम्भोगाभिलाषविभावसङ्केतस्थानोचितविशिष्टका-

बालप्रिया

त्यादि। फलितमाह—**इतीति**। यद्यस्ति प्रतिपत्तृ रसाभिव्यक्तिः, तर्हि तयैवास्तु निषेधावगतिरित्यत्राह—**प्रतिपत्तुरपी**त्यादि। **प्रतिपत्तुरपि** सहृदयस्यापि। **नियतः** अविनाभूतः। उक्तमुपपादयति—**न ही**त्यादि। **सब्रह्मचारी** सदृशः। कस्यचिद्भयानकरसास्वादसम्भवेऽपि वीरादिप्रकृतेः प्रतिपत्तुस्तदसम्भवात्, भयानकरसाभिव्यक्त्या निषेधप्रतीतिर्न भवतीति भावः।

शङ्कते—**अथेति**। **तद्विशेषोऽपि** प्रतिपत्तृविशेषोऽपि। विशेषो भीरुस्वभावत्वम्। **सहकारीति**। भयानकरसाभिव्यक्ताविति शेषः। परिहरति—**तर्ही**त्यादि। उक्तनयेनापसिद्धान्तापातादपि रसावेशकृता निषेधावगतिरिति वक्तुं न शक्यमित्युपहासमुखेनाह—**किञ्चे**त्यादि। **दूषयतेति**। भयानकविभावादीनभिदधत्या तद्रसावेशशक्तिसहकारिण्या अभिधया अर्थादभिहित एवायं निषेध इत्यभिप्रायेण दूषयतेत्यर्थः। **क्रोधोऽपी**त्यादि। तदिहायातमिति शेषः। क्रोधो हि शापेन तुल्यः। अत्र तु वरेणेति भावः। शङ्कते—**अथेति**। रसस्य प्राधान्यमेव दर्शितं न तु वस्तुध्वनेर्दूषणमित्यर्थः। परिहरति—**तदिति**। **तत्** तर्हि। **को न सहत** इति। वस्तुध्वने रसध्वन्यङ्गत्वमिष्टमिति भावः। पुनरपि शङ्कते—**अथेति**। परिहरति—**तथाऽपीति**। **ध्वनी स्तामिति**। कामचाराभ्यनुज्ञाने लोट्। अत्र हेतुः—**काव्येति**।

ननु कामचाराभ्यनुज्ञानं न युक्तं, रसस्यैव सहृदयाह्लादकारित्वादित्यत आह—**यदि त्वि**त्यादि। **अनुवेधः** आवेशः। **तुष्यतीति**। सहृदय इति शेषः। तुष्यते इति पाठे सहृदयेनेति शेषः। **उक्तनीत्येति**। कस्याश्चित् सङ्केतस्थानं जीवितसर्वस्वायमानमिति पूर्वोक्तरीत्येत्यर्थः। **सम्भोगेति**। **सम्भोगाभिलाषस्य विभावः** उद्दीपनविभावभूतं यत्**सङ्केतस्थानं** तस्य। तथा तस्यैवाभिलाषस्य **उचिताः** सम्भोगानुगुण्याद्**विशिष्टाश्च** ये **काकादयः अनुभावाः**, आदिपदेन तात्कालिक्योऽन्याश्चेष्टा ग्राह्याः। तेषाञ्च **शबलनात्**संवलनाद**दुदितो**ऽभिव्यक्तो यः **शृङ्गाररसः**, तस्यानुवेध

लोचनम्

काद्यनुभावशबलनोदितशृङ्गाररसानुवेधः। रसस्यालौकिकत्वात्तावन्मात्रादेव चानवगमात्प्रथमं निर्विवादसिद्धविविक्तविधिनिषेधप्रदर्शनाभिप्रायेण चैतद्वस्तुध्वनेरुदाहरणं दत्तम्।

यस्तु ध्वनिव्याख्यानोद्यतस्तात्पर्यशक्तिमेव विवक्षासूचकत्वमेव वा ध्वननमवोचत्, स नास्माकं हृदयमावर्जयति। यदाहुः–'भिन्नरुचिर्हि लोकः'[1] इति। तदेतदग्रे यथायथं प्रतनिष्याम इत्यास्तां तावत्। **भ्रमे**ति। अतिसृष्टोऽसि प्राप्तस्ते भ्रमणकालः। **धार्मिके**ति। कुसुमाद्युपकरणार्थं युक्तं ते भ्रमणम्। **विस्रब्ध** इति शङ्काकारणवैकल्यात्। **स** इति यस्ते भयप्रकम्प्रामङ्गलतिकामकृत। **अद्ये**ति। दिष्ट्या वर्धस इत्यर्थः। **मारित** इति पुनरस्यानुत्थानम्। **तेने**ति। यः पूर्वं कर्णोपकर्णिकया त्वयाप्याकर्णितो गोदावरीकच्छगहने प्रतिवसतीति। पूर्वमेव हि तद्रक्षायै तत्तयोपश्रावितोऽसौ; स चाधुना तु

बालप्रिया

इत्यर्थः। सहृदयहृदयदर्पणमध्यास्त इत्यनुषङ्गः। विवेचनदशायामत्र भयानकविभावादयो न प्रतीयन्ते, अपि तु शृङ्गारसम्बन्धिन एवेति भावः। ननु यदि शृङ्गारध्वनिरत्राङ्गी, तर्हि कुतस्तदुदाहरणत्वेनेयं गाथा नोक्ता? वस्तुध्वन्युदाहरणतयोक्ता चेत्यत आह—**रसस्ये**त्यादि। **तावन्मात्रादेव** उदाहरणमात्रादेव। **अनवगमात्** अवगमासम्भवात्। वक्ष्यमाणयुक्तिभिरेव रसस्वरूपज्ञानसम्भवादिति भावः। **तावन्मात्रादेवे**त्यस्य लोकमात्रादेवेत्यर्थ इति केचित्। **निर्विवादे**ति। **निर्विवादसिद्धं विविक्तं** विवेको भेदो ययोर्विधिनिषेधयोः। एतदुक्तं भवति—रसध्वनिर्हि काव्यात्मत्वेन प्रतिपिपादयिषितः। स च प्रमाणेन केनापि न सिद्धो लोके, नाद्यापि काव्यव्यापारविषयतया च। अतस्तत्प्रतिपादनार्थमारभमाणेन तदुपोद्घाततया प्रथमं वस्तुध्वन्यादिकमन्यदेव वाच्याद्भिन्नत्वेन प्रदर्शनीयं, पश्चादविवादसिद्धे ध्वनिसामान्ये साक्षाल्लक्षणीयो रसध्वनिरुदाहरणीय इति।

**यस्त्वि**त्यादि। **विवक्षायाः** विवक्षितार्थस्य। **सूचकत्व**मनुमापकत्वम्। **नावर्जयती**ति। निर्युक्तिकत्वादिति भावः। नन्वेतद्द्वयातिरिक्तं नाद्यापि हृदयपथमवतरतीत्यत्राह—**तदेतदि**ति। यदुक्तमतिसर्गप्राप्तकालयोर्द्वयं लोडिति, तदनुरोधेन व्याचष्टे—**भ्रमे**त्यादि। **स** इत्यनुभूतार्थकमित्याह—**यस्त** इति। 'अद्ये'ति पदं पूर्वं विधिः प्रतिकूलोऽभूदिदानीं तु भवद्भाग्यमहिम्नाऽनुकूलो जात इत्यर्थं द्योतयतीत्याह—**दिष्ट्ये**ति। 'मारित' इत्यादेर्व्यङ्ग्यं दर्शयति—**मारित** इतीत्यादिना। 'तेने'ति पदमप्यनुभूतार्थकमित्याह—**यः पूर्वमि**ति। 'वसतीत्याकर्णित' इति सम्बन्धः। ननु स्वैरिण्या गोदावरीतीरे सिंहसद्भावस्स्वयमारोपितः। तत्कथमेवमुक्तमित्यतो व्याख्याता तदुपपादयति—**पूर्वमेवे**त्यादि। **तद्रक्षायै** सङ्केतस्थानरक्षणार्थम्। **तत्तयोपश्रावितोऽसा**विति। **तत्** सिंहनिवासवृत्तम्। **असौ** धार्मिकः। सङ्केतस्थानरक्षणार्थमन्यापदे-

१. रघुवं., ६, ३०.

क्वचिद्वाच्ये प्रतिषेधरूपे विधिरूपो यथा—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए मह णिमज्जहिसि ॥

लोचनम्

दृप्तत्वात्ततो गहनान्निस्सरतीति प्रसिद्धगोदावरीतीरपरिसरानुसरणमपि तावत्कथाशेषीभूतं का कथा तल्लतागहनप्रवेशशङ्कयेति भावः ।

**अत्ता** इति ।

श्वश्रूरत्र शेते अथवा निमज्जति अत्राहं दिवसकं प्रलोकय ।
मा पथिक राज्यन्ध शय्यायामावयोः शयिष्ठाः ॥

**मह** इति निपातोऽनेकार्थवृत्तिरत्रावयोरित्यर्थे न तु ममेति । एवं हि विशेषवचनमेव शङ्काकारि भवेदिति प्रच्छन्नाभ्युपगमो न स्यात् । कांचित्प्रोषितपतिकां तरुणीमवलोक्य प्रवृद्धमदनाङ्कुरः संपन्नः पान्थोऽनेन निषेधद्वारेण तयाभ्युपगत इति निषेधाभावोऽत्र

बालप्रिया

शेन पूर्वं स्वैरिण्यैव वृत्तान्तोऽयं सख्यादिद्वारा धार्मिकस्य कर्णगोचरीकृत इत्यर्थः । नन्वेवं किमिति स्वयमुक्तमित्यत आह—**स चाधुना त्विति** । सः सिंहः । **गहनान्निस्सरतीति** । इतीत्यनन्तरं तयाऽसावुपश्राव्यत इति शेषः । धार्मिकस्य शङ्का मा भूदिति 'गोदे'त्याद्यनुवादपूर्वकं सिंहस्य दृप्तत्वादिविशेषो बोध्यत इति भावः । विशेषबोधनस्य फलमाह—**प्रसिद्धे**त्यादि । **इति भाव** इति । बोध्यत इति शेषः । एते चार्थाः भ्रमणनिषेधव्यञ्जने सहकारिभूताः । एवमुपर्यपि बोध्यम् ।

"णिमज्जइ" इत्यस्य छायां द्वेधा दर्शयति—**शेत** इत्यादि । **अनेकार्थवृत्तिरिति** । बहुवचनान्त इत्यर्थः । एवं हि प्रच्छन्नाभ्युपगमो न स्यादिति सम्बन्धः । अत्र हेतुमाह—**विशेषे**ति । **शङ्के**ति । श्वश्र्वादिशङ्केत्यर्थः । **प्रच्छन्ने**ति । प्रच्छन्नत्वाभावेऽभ्युपगमस्य न सहृदयचमत्कारकारितेति भावः । **कांचि**दित्यादि । **तरुणीमा**कारैः **प्रोषितपतिकां** चालोक्येत्यर्थः । 'सम्पन्न' इत्यनेनास्य सम्बन्धः । **प्रवृद्धे**ति । दर्शनक्षणे **मदनाङ्कुरो** जातस्तदीयसौन्दर्यादेर्मुहुरवलोकनादिना स प्रवृद्धः। **अनेन** मा शयिष्ठा इत्युक्तेन । **निषेध** एव **द्वार**मुपायस्तेन । **तया** प्रोषितपतिकया।

१. एत्थ णिमज्जइ अत्ता एत्थ अहं एत्थ परिअणो सअलो ।
पन्थिअ रत्तीअन्धअ मा मह सअणे णिमज्जिहिसि ॥
छाया—( अत्र निमज्जति श्वश्रूरत्राहमत्र परिजनः सकलः ।
पथिक राज्यन्धक मा मम शयने निमङ्क्ष्यसि ॥ )
इति गाथासप्तशत्यनुमतः (गाथास., ७.६७.) पाठः ।

लोचनम्

विधिः । न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्तनास्वभावः सौभाग्याभिमानखण्डनाप्रसङ्गात् । अत एव **राज्यन्धे**ति समुचितसमयसंभाव्यमानविकाराकुलितत्वं ध्वनितम् । भावतदभावयोश्च साक्षाद्विरोधाद्वाच्याद्व्यङ्ग्यस्य स्फुटमेवान्यत्वम् ।

यस्त्वाह भट्टनायकः—'अहमित्यभिनयविशेषेणात्मदशावेदनाच्छाब्दमेतदपी' ति । तत्राहमिति शब्दस्य तावन्नायं साक्षादर्थः; काक्वादिसहायस्य च तावति ध्वननमेव व्यापार इति ध्वनेर्भूषणमेतत् । अत्रेति प्रयत्नेनानिभृतसंभोगपरिहारः । अथ यद्यपि भवान्मदनशरासारदीर्यमाणहृदय उपेक्षितुं न युक्तः, तथापि किं करोमि पापो दिवसको-ऽयमनुचितत्वात्कुत्सितोऽयमित्यर्थः[1] । प्राकृते पुंनपुंसकयोरनियमः[2] । न च सर्वथा त्वामुपेक्षे, यतोऽत्रैवाहं तत्प्रलोक्य नान्यतोऽहं गच्छामि, तदन्योन्यवदनावलोकनवि-

बालप्रिया

**अभ्युपगतः** शयनाभ्युपगमः कृतः । फलितमाह—**इती**त्यादि । **विधिरि**ति । स च पान्थगतनिषेधशङ्कानिवृत्त्यर्थः । **न त्वि**त्यत्र हेतुमाह—**सौभाग्ये**ति । विधेर्निमन्त्रणरूपत्वे स्वानुरागप्रकाशनादिति भावः । व्याख्यातेऽर्थे प्रमाणत्वेन पदान्तरमवतारयति—**अत एवे**त्यादि । **अत एव** यतो विधिर्निषेधाभावरूपस्तत एव । **समुचिते**ति । **समुचिते** सम्भोगयोग्ये **समये** रात्रौ भविष्यतीत्यात्मना **सम्भाव्यमानो** योऽर्थः तन्निमित्तका ये **विकाराः** । यद्वा—भविष्यन्तीति सम्भाव्यमाना ये विकाराः तैराकुलितत्वमित्यर्थः । तद्ध्वननेनात्मनः सौभाग्याभिमानः ख्यापित इति भावः । **भावे**ति । व्यंग्यशयनक्रियाविधिलक्षणस्य भावस्य वाच्यतदभावस्य चेत्यर्थः ।

**अहमि**त्यादि । अभिनयविशेषसहितेनाहमिति पदेनेत्यर्थः । **आत्मदशे**ति । स्वीयकामावस्थेत्यर्थः । **एतदपि** निषेधद्वारा अभ्युपगमनमपि । अपिशब्दोऽर्थान्तरसमुच्चये । **शाब्दं** शब्दाभिधेयम् । प्रतिवक्ति—**तत्रे**त्यादि । **अय**मिति । उक्त इत्यर्थः । **काक्वादी**ति । आदिपदेनाभिनयो गृह्यते । **तावति** उक्तार्थे । वाच्यार्थं सिद्धवत्कृत्योक्तव्यंग्यशेषतयाऽवान्तरवाक्याभिप्रायं विवृणोति—**प्रयत्नेने**त्यादि । विधेय इति शेषः । अनुरागातिरेकेण सम्भावितो य आवयोरनिभृतः सम्भोगः तस्य परिहारः । पूर्वव्याख्यातरात्र्यन्धपदार्थाभिप्रायेणाह—**भवानि**ति । उपेक्षितुं न युक्त इत्यनेन स्वस्याभिलाषोऽपि प्रदर्शितः । **अनुचितत्वा**दिति । सम्भोगायोग्यत्वादित्यर्थः । 'दिअसअमि'त्यस्य कथं प्रथमान्ततया व्याख्यानमित्यत आह—**प्राकृत** इति । न चोपेक्षे

१. 'कुत्सिते' (पा. सू., ५. ३. ७४.) इति सूत्रेणेति बोध्यम् ।

२. 'ते हि नो दिवसा गताः' (उत्तर., १. १९.) 'दिवसाः परिणामरमणीयाः' (शाकुन्त., १. ३.) इत्यादौ दिवसशब्दस्य पुंस्त्वेन निर्देशात् गाथायां 'दिअसअं' इति नपुंसकत्वेन निर्देशः कथमित्याशङ्कां परिहर्तुमाह—'प्राकृत' इत्यादि । यद्यपि 'वा तु क्लीबे दिवसवासरौ' इति कोशे दिवसशब्दस्य क्लीबतोक्ता, तथापि तथा प्रयोगेऽप्र-

क्वचिद्वाच्ये विधिरूपेऽनुभयरूपो यथा—

वच्च मह च्चिअ एक्केइ होन्तु णीसासरोइअव्वाइं ।
मा तुज्ज वि तीअ विणा दक्खिण्णहअस्स जाअन्तु ॥

**लोचनम्**

नोदेन दिनं तावदतिवाहयाव इत्यर्थः । प्रतिपन्नमात्रायां च रात्रावन्धीभूतो मदीयायां शय्यायां मा श्लिषः[1], अपि तु निभृतनिभृतमेवात्ताभिधाननिकटकण्टकनिद्रान्वेषणपूर्वकमितीयदत्र ध्वन्यते ।

व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ॥

अत्र व्रजेति विधिः । न प्रमादादेव नायिकान्तरसंगमनं तव, अपि तु गाढानुरागात्[2], येनान्यादृङ्मुखरागः गोत्रस्खलनादि च, केवलं पूर्वकृतानुपालनात्मना दाक्षिण्येनैकरूप-

**बालप्रिया**

इति सम्बन्धः । **प्रतिपन्नमात्राया**मिति । ईषदर्थे मात्राशब्दः । **अन्धीभूतो मा श्लिष** इति । अन्धीभूतत्वेन श्लेषणं निषिध्यते, न तु श्लेषणमात्रम् । **अत्ते**ति । अत इत्यभिधानं यस्य सः । 'दत्तावधाने'ति पाठे स्वभावत एव सावधान इत्यर्थः । **कण्टक** श्वश्रूरूपः । स्वाभिमतविरोधित्वेनानिष्टकारित्वात्कण्टकत्वेनोक्तिः । **पूर्वकमि**ति । शय्यां प्राप्नुहीति शेषः । **इय**दिति । उक्तमित्यर्थः ।

**विधिरि**ति । वाच्य इति शेषः । व्यंग्यमाह—**न प्रमादा**दित्यादि । **त्वमेकरूपताभिमानेन** अहमेकरूप इत्यभिमानेन । अत्र मद्विषये । 'स्थित इति यत् तत् केवलं दाक्षिण्येनैवे'ति सम्बन्धः । केवलैवकाराभ्यामनुरागरूपहेतोर्व्यवच्छेदः । अत एवाह—**पूर्वे**ति । **पूर्वकृतेन** पूर्वकर्मणा अदृष्टेन हेतुना यदनुपालनं मत्पालनम् । यद्वा—पूर्वकृतं यद्दाक्षिण्यं तस्यानुपालनमविच्छेदेन पालनं तदात्मना दाक्षिण्येन । फलि-

ऽप्रयुक्तैव जागर्तीति भावः ।

१. 'मा श्लिष' इत्येव पाठस्साधीयान्; आलिङ्गन एव श्लिषश्च्लेः क्सादेशविधानात्, अत्र च शय्यया सहालिङ्गनाभावात् । तथैव च कौमुद्यामप्युदाहृतं दीक्षितैः—'अश्लिक्षत् कन्यां देवदत्तः' 'समश्लिषज्जतुकाष्ठम्' इति ।

२. प्रेमप्रणयरागाणामुत्तरोत्तरतारतम्यमवातानामित्थं रूपाणि शास्त्रेषूपवर्णितानि—तत्र प्रेम नाम 'अयं मम अहमस्य' इत्याकारकः पक्षपातविशेषः । प्रणयः—प्रेमैवावलोकनादिना प्रकर्षं नीतमपराधसहस्रेणाप्यविचालितं वा । रागः—परिचयातिशयेन रञ्जनक्षमः प्रणय एव । तत्र गाढत्वं निश्शेषमुत्सारितगुर्वादिपारवश्यकत्वमिति बोध्यम् । विशेषतस्त्वेषां भेदाः प्रेमरसायने द्रष्टव्याः ।

क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा—

दे आ पसिअ णिवत्तसु मुहससिजोह्णाविलुत्ततमणिवहे ।
अहिसारिआणँ विग्घं करोसि अण्णाणँ वि हआसे ॥

लोचनम्

त्वाभिमानेनैव त्वमत्र स्थितः, तत्सर्वथा शठोऽसीति[1] गाढमन्युरूपोऽयं खण्डितनायिका-[2] भिप्रायोऽत्र प्रतीयते । न चासौ व्रज्याभावरूपो[3] निषेधः, नापि विध्यन्तरमेवान्य-निषेधाभावः ।

दे इति निपातः प्रार्थनायाम् । आ इति तावच्छब्दार्थे । तेनायमर्थः—

प्रार्थये तावत्प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥

अत्र व्यवसिताद्गमनान्निवर्तस्वेति[4] प्रतीतेर्निषेधो वाच्यः । गृहागता नायिका गोत्र-

बालप्रिया

तमाह—**तदि**त्यादि । **सर्वथे**ति । तत्रैवासक्तत्वेन, उभयत्रापि वेत्यर्थः । अनुभयरूप-त्वं विवृणोति—**न चे**त्यादि । **व्रज्याभावरूप** इति । व्रज्या गमनम् । **अन्यनिषेधाभाव** इति । व्रज्यापेक्षया अन्यो निषेधाभाव इत्यर्थः । तदात्मकं विध्यन्तरमिति सम्बन्धः । अभिप्रायरूपव्यंग्यस्य तदुभयरूपत्वाभावादिति भावः ॥

'प्रार्थय' इत्यादौ निषेधवाचकस्य नञादेरप्रयोगादसङ्गतिमाशङ्क्याह—**अत्रे**-त्यादिना । निवर्तस्वेत्यनेन मा गम इत्यर्थस्योक्ततया गमननिषेधो वाच्य इति भावः । व्यंग्यबोधाङ्गतया वक्त्रादिविशेषं दर्शयति—**गृहागते**त्यादि । 'अन्यासामपी'त्यपि-

१. 'शठोऽयमेकत्र बद्धभावो यः । दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति' (साहि. द., ३. ७६.) इति शठलक्षणं बोध्यम् ।

२. 'पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता' ॥ (साहि. द., ३. ११७)
इति खण्डितालक्षणं बोध्यम् ।

३. 'विध्यभावरूप' इत्यपि लोचनस्थः पाठः 'अनुभयरूप' इति परममूलेन सङ्गत एव । तस्य विध्यभावविध्यर्थकत्वात् । न चात्र विध्यभावः (व्रजनाभावः), विध्य-न्तरं वा व्यङ्ग्यम् , अपि तु गाढमन्युरूपो नायिकाभिप्राय इति व्यङ्ग्यस्यानुभय-रूपत्वं सिद्धमिति दर्शितं 'न चे' त्यादिग्रन्थेन ।

४. अथवा—अत्र निवर्ततेर्निषेधार्थकतया निषेधज्ञानं प्रति प्रतियोगितावच्छेदक-विशिष्टप्रतियोगिज्ञानस्य कारणत्वादत्र च गाथायां तत्प्रतियोगिवाचकपदाभावात् विसं-ष्ठुलतानिराकरणायाध्याहारेण प्रतियोगिनं दर्शयितुमाह—'व्यवसिताद्गमनादि'ति । अध्यवसितादिति वा पाठः । निश्चितादिति तदर्थः ।

### लोचनम्

स्खलिताद्यपराधिनि नायके सति ततः प्रतिगन्तुं प्रवृत्ता, नायकेन चाटूपक्रमपूर्वकं निवर्त्यते। न केवलं स्वात्मनो मम च निर्वृतिविघ्नं करोषि, यावदन्यासामपि; ततस्तव न कदाचन सुखलवलाभोऽपि भविष्यतीत्यत एव हताशासीति वल्लभाभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः।

यदि वा सख्योपदिश्यमानापि तदवधीरणया गच्छन्ती सख्योच्यते—न केवलमात्मनो विघ्नं करोषि, लाघवादबहुमानास्पदमात्मानं कुर्वती, अत एव हताशा, यावद्वदनचन्द्रिकाप्रकाशितमार्गतयान्यासामप्यभिसारिकाणां विघ्नं करोषीति सख्यभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः। अत्र तु व्याख्यानद्वयेऽपि व्यवसितात्प्रतीपगमनात्प्रियतमगृहगमनाच्च निवर्तस्वेति पुनरपि वाच्य एव विश्रान्तेर्गुणीभूतव्यङ्ग्यभेदस्य प्रेयोरसवदलङ्कारस्योदाहरणमिदं स्यात्, न ध्वनेः।

तेनायमत्र भावः—काचिद्भ्रमसात्प्रियतममभिसरन्ती तद्गृहाभिमुखमागच्छता तेनैव हृदयवल्लभेनैवमुपश्लोक्यतेऽप्रत्यभिज्ञानच्छलेन, अत एवात्मप्रत्यभिज्ञापनार्थमेव नर्मवचनं

### बालप्रिया

शब्दार्थमाह—**न केवलमि**त्यादि। **निर्वृतिविघ्न**मिति। विघ्नपदेनात्र निर्वृतिविघ्नो विवक्षित इति भावः। फलितमाह—**तत** इत्यादि। **ततः** सर्वेषामपि सुखविघ्नकरणात्। **अत एवे**ति। सुखलेशस्याप्यलाभादेवेत्यर्थः। **हतेति**। **हता** विषयालाभाद्भग्ना **आशा** यस्याः सा। एवं वाच्यार्थं व्याख्याय व्यंग्यं दर्शयति—**इती**त्यादि। **इती**ति हेतौ। उक्तेन वाच्यार्थेन हेतुनेत्यर्थः। **वल्लभे**ति। त्वत्सदृशी नान्या काचिदित्येवंरूपो यो वल्लभाभिप्रायः, तद्रूप इत्यर्थः।

प्रकारान्तरेण व्याचष्टे—**यदि** वेत्यादि। 'न केवलमात्मनो विघ्नं करोषि, यावदन्यासामपी'ति सम्बन्धः। **आत्मनो विघ्नं करोषी**त्यस्य विवरणम्—**लाघवा**दित्यादि। **अत एव** अबहुमानास्पदत्वकरणादेव। **सख्यभिप्राय** इति। स च पूर्ववद्बोध्यः। **प्रतीपगमना**दिति। स्वगृहं प्रति गमनादित्यर्थः। **विश्रान्ते**रिति। उक्तव्यंग्यस्येति शेषः। **प्रेयोरसव**दिति। प्रेयश्च रसवच्चानयोस्समाहारः प्रेयोरसवत्तदात्मकालङ्कारस्येत्यर्थः। भावस्य पराङ्गत्वे प्रेयोऽलङ्कारः। रसस्य तत्त्वे रसवदलङ्कारः। सखीवचनपक्षे सखीगताया नायिकाविषयकरतेर्भावरूपाया व्यंग्यत्वात्तस्याश्चानुभावरूपतदुक्तार्थद्वारेण 'निवर्तस्वे'ति वाक्यार्थं प्रत्यङ्गत्वात्प्रेयोऽलङ्कारत्वम्। नायकोक्तिपक्षे तूक्तरीत्या रसवदलङ्कारत्वमित्यर्थः। **न ध्वने**रिति। तथा च प्रक्रमविरोध इति भावः।

**तेनाय**मिति। **अयं** वक्ष्यमाणप्रकारः। **उपश्लोक्यत** इति। मुखेन्दुकान्तिवर्णनादिरूपोपश्लोकनमात्राभिप्रायकमेतदित्यर्थः। ननु गूढाभिसरणे नायिकायाः साक्षान्नायकेनोपश्लोकनमनुचितमित्यत्राह—**अप्रत्यभिज्ञानच्छलेने**ति। **अप्रत्य-**

क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितो यथा—

कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरम् ।

लोचनम्

**हताश** इति । अन्यासाञ्च विघ्नं करोषि तव चेप्सितलाभो भविष्यतीति का प्रत्याशा । अत एव मदीयं वा गृहमागच्छ, त्वदीयं वा गच्छावेत्युभयत्रापि तात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाटूवात्मा व्यङ्ग्य इत्येव व्यवतिष्ठते । अन्ये तु—'तटस्थानां सहृदयानामभिसारिकां प्रतीयमुक्तिः' इत्याहुः । तत्र हताशे इत्यामन्त्रणादि युक्तमयुक्तं वेति सहृदया एव प्रमाणम् ।

एवं वाच्यव्यङ्ग्ययोर्धार्मिकपान्थप्रियतमाभिसारिकाविषयैक्येऽपि स्वरूपभेदाद्भेद इति प्रतिपादितम् । अधुना तु विषयभेदादपि व्यङ्ग्यस्य वाच्याद्भेद इत्याह—**क्वचिद्वाच्यादिति** । **व्यवस्थापित** इति । विषयभेदोऽपि विचित्ररूपो व्यवतिष्ठमानः सहृदयैर्व्यवस्थापयितुं शक्यत इत्यर्थः ।

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥

**कस्य** वेति । अनीर्ष्यालोरपि भवति रोषो दृष्ट्वैव; अकृत्वापि कुतश्चिदेवापूर्वतया

बालप्रिया

**भिज्ञानं** तद्विषयकप्रत्यभिज्ञानाभावः, तस्य **छलेन** तदप्रत्यभिज्ञानं स्वस्मिन्नारोप्येत्यर्थः । **अत एव** उपश्लोकनरूपत्वादेव । **आत्मेति** । स्वस्य बोधनायेत्यर्थः । प्रियजनेनैव नर्मवचनस्य प्रयोक्तव्यत्वादिति भावः । 'हताश इति नर्मवचनमि'ति सम्बन्धः । तत्पदस्योक्तार्थानुगुणमर्थमाह—**अन्यासां चे**त्यादि । अन्यासां च त्वद्गृहगमनोत्सुकस्य मम चेति चकारार्थः । व्यंग्यमाह—**अत एवे**त्यादि । **अत एव** यत एवंरूपो वाच्यार्थः, तत एव । 'मदीयं गृहमागच्छ त्वदीयं वा गृहं गच्छावेति चाटवात्मा वल्लभाभिप्रायो व्यंग्य' इति सम्बन्धः । **इत्येवेति** । उक्तरूपव्यंग्यः **व्यवतिष्ठत** एव, न तु पश्चाद्वाच्योपस्काराय धावतीत्यर्थः । अत्र पक्षे 'निवर्तस्वे' त्यस्य तवाध्यवसायान्निवर्तस्वेति वाच्यार्थो बोध्यः । **अन्ये त्विति** । पक्षेऽस्मिन् तटस्थानां नायिकाप्रेमाभावात्तेषां वचनं न प्रवर्तकं, न वा निवर्तकमतः पूर्वोक्तव्यंग्यस्य वाच्याङ्गत्वं नेति बोध्यम् । **आमन्त्रणादी**त्यादिपदेन अभिसारिकाविघ्नकरणवचनादेर्ग्रहणम् ।

ननु वृत्तौ 'व्यवस्थापित' इत्युक्तिः कथं सङ्गच्छते व्यवस्थापनस्यानिष्पन्नत्वादित्यतो व्याचष्टे—**विषयभेदोऽपी**त्यादि । **विचित्ररूपः** नानाविधः । 'कस्ये' त्यस्य भावार्थविवरण**मनीर्ष्यालोरपी**त्यादि । 'कस्य वे'ति वाकारोऽवधारणार्थको दृष्ट्वेत्युत्तरं योज्य इत्याशयेन व्याचष्टे—**दृष्ट्वैवे**त्यादि । एवकारार्थमाह—**अकृत्वा-**

सभमरपउमग्घाइणि वारिअवामे सहसु एह्निम् ॥

अन्ये चैवंप्रकारा वाच्यद्विभिन्नदिनः प्रतीयमानभेदाः सम्भवन्ति। तेषां दिङ्मात्रं तत्प्रदर्शितम्। द्वितीयोऽपि प्रभेदो वाच्याद्विभिन्नः सप्रपञ्च-

**लोचनम्**

प्रियायाः सव्रणमधरमवलोक्य। सभ्रमरपद्माघ्राणशीले शीलं हि कथंचिदपि वारयितुं न शक्यम्। वारिते वारणायां, वामे तदनङ्गीकारिणि। सहस्वेदानीमुपालम्भपरम्परामित्यर्थः। अत्रायं भावः—काचिदविनीता कुतश्चित्खण्डिताधरा निश्चिततत्सविधसंनिधाने तद्भर्तरि तमनवलोकमानयेव कयाचिद्विदग्धसख्या तद्वाच्यतापरिहारायैवमुच्यते। सहस्वेदानीमिति वाच्यमविनयवतीविषयम्। भर्तृविषयं तु-अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम्। सहस्वेत्यपि च तद्विषयं व्यङ्ग्यम्। तस्यां च प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेशिकलोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम्। तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। सपत्नीमध्ये इयता खलीकृतास्मीति

**बालप्रिया**

पीति। वस्तुतस्सव्रणत्वाभावेऽपीत्यर्थः। तर्हि कथं तदवलोकनमित्यत आह—कुतश्चिदित्यादि। केनापि कारणेन प्रागदृष्टविशेषवत्तया प्रमुखतः सव्रणतया विलोकयेत्यर्थः। कृत्वापीति पाठे कुतश्चिल्लाक्षारसादिना केनचिदेव कृत्वाऽपि स्वयं कृत्वापीत्यर्थः। 'वामे' इत्यस्य तदनङ्गीकारिणीति विवरणम्। अत्रायं भाव इति। उक्ते वाच्यार्थे स्थिते वक्ष्यमाणो व्यंग्यार्थ इत्यर्थः। कुतश्चिदिति। जारादिनेत्यर्थः। तद्वाच्यतेति। भर्तुरुपालम्भविषयतेत्यर्थः। तस्याः वाच्यतेति वा। वाच्यतापरिहारप्रसङ्गः क इत्यत उक्तं निश्चितेति। सख्या निश्चितेत्यर्थः। सन्निधः पुरोभागातिरिक्तः प्रदेशः। वाच्यव्यंग्ययोर्विषयभेदं दर्शयति—सहस्वेत्यादिना। इत्यावेद्यमानमिति। निरपराधत्वमित्यर्थः। सहस्वेति। अधरव्रणावलोकनजनितकोपभरं सहस्वेत्यर्थः। इयमेवंखण्डिताधरा तदन्यहेतुकत्वशङ्कया मा कुप्येत्यर्थः। तस्यां नायिकायाम्। उपालभ्यमानायामिति। प्रियतमागमनसमय इति शेषः। तद्व्यलीकमिति। तस्य भर्तुर्व्यलीकमप्रियमनया कृतमिति शङ्कितो यः प्रातिवेशिकलोकस्तद्विषयमित्यर्थः। प्रत्यायनं निरपराधत्वबोधनम्। तत्सपत्न्यामिति। विषयभेदकथनप्रकरणत्वात्सप्तमी, तस्यै इत्यर्थः। तदित्यादि। तत्पदे नायिकार्थके। सौभाग्येति। नायिकासौभाग्येत्यर्थः। ख्यापनमिति। व्यंग्यमिति शेषः। इति शब्दबलादिति। श्रुतप्रियाशब्दायाः प्रियतमकृतोपालम्भप्रतीत्यनन्तरमियमेव मत्तोऽधिकतरं सुभगेति प्रतीतिसम्भवादिति भावः। इयतेति। अविनयस्फुटोद्भावनेनेत्यर्थः। खलीकृता लघुःकृता। प्रत्युतेति। सखीमध्य इत्यनुषज्यते। बहुमान इति। अविनयस्यात्य-

मग्रे दर्शयिष्यते। तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः

लोचनम्

लाघवमात्मनि ग्रहीतुं न युक्तं; प्रत्युतायं बहुमानः, सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनं व्यङ्ग्यम्। अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभेत्थं रक्षिता, पुनः प्रकटरदनदंशनविधिर्न विधेय इति तच्चौर्यकामुकविषयसम्बोधनं व्यङ्ग्यम्। इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यमिति। तदेतदुक्तं **व्यवस्थापित**शब्देन। **अग्र** इति। द्वितीयोद्द्योते 'असंलक्ष्यक्रमव्यङ्ग्यः क्रमेणोद्द्योतितः परः'[1] इति विवक्षितान्यपरवाच्यस्य द्वितीयप्रभेदवर्णनावसरे। यथा हि विधिनिषेधतदनुभयात्मना रूपेण संकलय्य वस्तुध्वनिः संक्षेपेण सुवचः, तथा नालङ्कारध्वनिः, अलङ्काराणां भूयस्त्वात्। तत एवोक्तम्—**सप्रपञ्चं** इति। **तृतीयस्त्वि**ति। तुशब्दो व्यतिरेके। वस्त्वलंकारावपि शब्दाभिधेयत्वमध्यासाते तावत्। रसभावतदाभासतत्प्रशमाः पुनर्न कदाचिदभिधीयन्ते, अथ चास्वाद्यमानताप्राणतया भान्ति। तत्र ध्वननव्यापारादृते नास्ति कल्पनान्तरम्। स्खलद्गतित्वाभावे मुख्यार्थबाधादेर्लक्षणानिबन्धनस्यानाशङ्कनीयत्वात्। औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्या रसो, व्यभिचारिण्या भावः, अनौचित्येन तदाभासः, रावणस्येव सीतायां रतेः। यद्यपि तत्र हास्यरसरूपतैव, 'शृङ्गाराद्धि भवेद्धास्यः' इति वचनात्। तथापि पाश्चात्येयं सामाजिकानां

बालप्रिया

न्तप्रच्छादनादिति भावः। **सखी**ति। नायिकेत्यर्थः। **सम्बोधन**मिति। उपदेश इत्यर्थः। न ह्येतत्सर्वं स्वोत्प्रेक्षामात्रेणोक्तमपि तु विविधमवस्थापितो 'व्यवस्थापित' इति वृत्तिग्रन्थानुरोधेनेत्याह—**तदेतद्**ित्यादि। ननु वस्तुध्वनिवदलङ्कारध्वनेरप्यत्रैव प्रदर्शनीयत्वे किमित्यग्रे दर्शयिष्यत इत्युक्तमित्यतस्तात्पर्यमाह—**यथा ही**त्यादि। व्यतिरेकमेव दर्शयति—**वस्त्वि**त्यादि। 'शब्दाभिधेयत्वमपी'ति योजना। किं रसादयोऽपि तथेत्यत्राह—**रसभावे**ति। भावादिग्रहणेन वृत्तिस्थादिशब्दो व्याख्यातः। **अथ चे**ति। तथाऽपीत्यर्थः। **तत्रे**ति। रसादिभान इत्यर्थः। **कल्पनान्तरं** व्यापारान्तरम्। नास्तीत्यत्र हेतुमाह—**स्खलद्**िति। रसादीनां स्वरूपमाह—**औचित्येने**ति। 'औचित्येन प्रवृत्तावि'ति रसभावयोः सम्बध्नाति। स्थायिन्याश्चित्तवृत्तेरास्वाद्यत्वे रसः, व्यभिचारिण्याश्चित्तवृत्तेरास्वाद्यत्वे भाव इति योजना। **अनौचित्येने**ति। स्थायिन्याश्चित्तवृत्तेरनौचित्येन प्रवृत्तावित्यर्थः। **तदाभासः** रसाभासः। रसाभासानां हास्याद्भेदं दर्शयिष्यन् प्राधान्याच्छृंगाराभासविषयमाह—**रावणस्ये**ति। हास्यविषय एवायमित्याशंक्य परिहरति—**यद्यपी**त्यादि। **तत्र** सीताविषयकरावणरतौ। **शृङ्गाराद्**िति। शृङ्गाराभासद्वारेणेत्यर्थः। **पाश्चात्या** तन्मयीभवनकालोत्तरकालभवा। पूर्वापरविवेक-

१. ध्वन्या., २. ४.

लोचनम्

स्थितिः, तन्मयीभवनदशायां तु रतेरेवास्वाद्यतेति शृङ्गारतैव भाति पौर्वापर्यविवेकावधारणेन 'दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिम्' इत्यादौ। तदसौ शृङ्गाराभास एव। तदङ्गं भावाभासश्चित्तवृत्तेः प्रशम एव प्रक्रान्ताया हृदयमाह्लादयति यतो विशेषेण, तत एव तत्संगृहीतोऽपि पृथग्गणितोऽसौ। यथा—

एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम्।
दंपत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहम्॥[1]

इत्यत्रेर्ष्यारोषात्मनो मानस्य प्रशमः। न चायं रसादिरर्थः 'पुत्रस्ते जातः' इत्यतो यथा हर्षो जायते तथा। नापि लक्षणया। अपि तु सहृदयस्य हृदयसंवादबलाद्विभा-

बालप्रिया

दशायां विभावाभासज्ञानद्वारा स्थाय्याभासनिश्चयेनेत्यर्थः। **इयं स्थितिः** रतेर्हास्यरूपत्वाध्यवसायः। कुत इत्यत्राह—**तन्मयी**त्यादि। **पौर्वापर्ये**ति। विभावरत्याद्योर्यत् पौर्वापर्यं तद्विवेकस्यावधीरणेनाभावेन। 'इत्यादौ भाती'त्यन्वयः। श्लोकोऽयं द्वितीयोद्योते वक्ष्यते। अत्रादौ सहृदयानां सीताविषयकरावणरतेस्तन्मयीभावेनास्वाद्यतेति शृङ्गारचर्वणैव, पश्चात्तद्रतेरनुचितालम्बनकत्वज्ञानेन तद्विषयकहासोद्बोधाद्धास्यचर्वणा शृङ्गारचर्वणा च तदाभासचर्वणैवेत्याशयेनोपसंहरति—**तदि**ति। **तदङ्गं भावाभास** इति। शृङ्गारादिरसाभासस्याङ्गभूतो भावो भावाभास इत्यर्थः। भावशब्देनैव भावप्रशमस्यापि ग्रहणसम्भवात् किमिति पृथक् तद्ग्रहणमित्यत आह—**चित्तवृत्ते**रित्यादि। **प्रक्रान्तायाः** रसं व्यञ्जयितुमारब्धायाः। 'प्रशम एव यतो विशेषेणाह्लादयति, ततोऽसौ पृथग्गणित' इत्यन्वयः। **तत्संगृहीतोऽपि** भावशब्देन बोधितोऽपि। **असौ** भावप्रशमः।

**एकस्मिन्निति**। एकस्मिन् शयने सख्या कथंचिदेकशयनं नीतयोः। मानस्यानुवृत्त्या या पराङ्मुखता तया। वीतमपगतमुत्तरं शयनानन्तरकृत्यं यत्र, तत्तथा। ताम्यतोः सन्तप्यतोः। अन्योन्यस्येति। गौरवभङ्गभयेन हृदि स्थितमप्यनुनयमकुर्वतोः। अपाङ्गयोर्वलनाद्विवर्तनात्। मानकलिः प्रणयरोषकलहः। हासेन रभसेन वेगेन, यद्व्यावृत्तं व्यावर्तनं तेन च सहितः कण्ठग्रहो यत्र, तत्तथा। योजयति—**इत्यत्रे**ति। ईर्ष्यारूपो रोषस्तदात्मनः। क्रोधेति च पाठः। **प्रशम** इति। प्रतीयत इति शेषः। 'वाच्यसामर्थ्याक्षिप्तः प्रकाशत' इत्यनेन दर्शितं विभावादिव्यंग्यत्वं रसादेः साधयिष्यन् आदौ तस्य तात्पर्यशक्तिगम्यत्वं निषेधति—**न चे**त्यादि तथेत्यन्तेन। अत्र काव्यादिति शेषः। यथा 'पुत्रस्ते जात' इत्यादिवाक्यं प्रियरूपार्थप्रतिपादनमुखेन श्रोतुर्हर्षमुत्पादयति,

1. अमरुक.,

प्रकाशते, न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव । तथा हि वाच्यत्वं तस्य स्वशब्दनिवेदितत्वेन वा स्यात्, विभावादिप्रतिपादनमुखेन वा । पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीति-

लोचनम्

वानुभावप्रतीतौ तन्मयीभावेनास्वाद्यमान एव रस्यमानतैकप्राणः सिद्धस्वभावसुखादिविलक्षणः परिस्फुरति । तदाह-**प्रकाशत** इति । तेन तत्र शब्दस्य ध्वननमेव व्यापारोऽर्थसहकृतस्येति । विभावाद्यर्थोऽपि न पुत्रजन्महर्षन्यायेन तां चित्तवृत्तिं जनयतीति जननातिरिक्तोऽर्थस्यापि व्यापारो ध्वननमेवोच्यते । **स्वशब्देति** । शृङ्गारादिना शब्देनाभिधाव्यापारवशादेव निवेदितत्वेन । **विभावादीति** । तात्पर्यशक्त्येत्यर्थः । तत्र स्वशब्दस्यान्वय[1]व्यतिरेकौ रस्यमानतासारं रसं प्रति निराकुर्वन्ध्वननस्यैव ताविति

बालप्रिया

तथा काव्यं विभावाद्यर्थप्रतिपादनद्वारा तात्पर्यशक्त्या रसचर्वणां न जनयतीत्यर्थः । **नापीति** । रसादिरर्थ इत्यनुषज्यते । **परिस्फुरतीत्य**पकृष्यते । **अपि त्वित्यादि** । हृदयस्य संवादः सम्प्रतिपत्तिः, स एव बलं सहकारि तस्मात् । **प्रतीतावित्य**नेन सामग्री दर्शिता । आस्वाद्यमान एव सन् । रसपदलभ्यार्थकथनं—**रस्यमानतेति** । सुखादिवत्साध्यत्वं व्यावर्तयति—**सिद्धे**त्यादि । आत्मानतिरेकेण सिद्धस्वभावः । सुखादि तु तदतिरेकेण साध्यस्वभावमिति सुखादिविलक्षणश्चेत्यर्थः । यद्वा—स्थाय्येव विभावादिप्रत्ययारभ्यत्वाद्रस इति मतमपाकर्तुमाह—**सिद्धेति** । सिद्धस्वभावा ये सुखादयो भावाः सुखपदेन रतिर्विवक्षिता। तद्विलक्षण इत्यर्थः। **तदाह** तदेतदाह। फलितमाह—**तेने**त्यादि । **तेन** कारकत्वलक्षकत्वयोरभावेन । **इतीति** । उक्तमिति शेषः । अथार्थस्यापि ध्वननमेव व्यापार इति जनकत्वनिषेधपूर्वकं दर्शयति—**विभावाद्यर्थोऽपी**त्यादि । 'स्वशब्दनिवेदितत्वेन वे'त्यादिना यत् कल्पद्वयमुक्तं तदभिधातात्पर्यशक्तिद्वयाभिप्रायकमिति दर्शयति—**शृङ्गारादिने**त्यादि । **तत्रेति** । आद्यपक्ष इत्यर्थः । **अन्वयेति** । यत्र यत्र रसादिप्रतीतिः, तत्र तत्र स्वशब्द इत्यन्वयः । यत्र यत्र न स्वशब्दः, तत्र तत्र नेति व्यतिरेकः, तावित्यर्थः । यद्वा—स्वशब्दसत्वे रसादिप्रतीतिस्तदभावे रसादिप्रतीत्यभाव इत्यन्वयव्यतिरेकावित्यर्थः । **रस्यमानतासार**मिति हेतुगर्भम् ।

१. तत्सत्वे तदितरयावत्कारणसत्वे कार्यसत्वमन्वयः । तदभावे कार्याभावो व्यतिरेकः । न हि यस्य कस्यचिदेकस्य कारणस्य सत्वे कार्यसत्वं दृष्टमिति बहुत्रान्वयव्यभिचारप्रसक्तिवारणायान्वयस्वरूपे तदितरयावत्कारणकूटसत्वं निवेशितम् । व्यतिरेके त्वेकस्यापि कारणस्याभावे कार्यं न भवतीति तत्र तदितरयावत्कारणकूटाभावो न निवेशनीय इति ।

**प्रसङ्गः । न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम् । यत्राप्यस्ति तत्, तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः । स्वशब्देन सा केवलमनूद्यते, न तु तत्कृता । विषयान्तरे तथा तस्या अदर्शनात् । न हि केवलशृ-**

लोचनम्

दर्शयति—**न च सर्वत्रेति** । यथा भट्टेन्दुराजस्य—

> यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
> यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत् ।
> दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
> कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥

इत्यत्रानुभावविभावावबोधनोत्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वणागोचरोऽर्थो रसात्मा स्फुरत्येवाभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिशब्दाभावेऽपि । एवं व्यतिरेकाभावं प्रदर्श्यान्वयाभावं दर्शयति—**यत्रापी**ति । **तदि**ति स्वशब्दनिवेदितत्वम् । **प्रतिपादनमुखेने**ति । शब्दप्रयुक्तया विभावादिप्रतिपत्त्येत्यर्थः । **सा केवल**मिति । तथा हि—

> याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानतां

बालप्रिया

व्यभिचारविषयमुदाहरति—**यदि**ति । **विश्रम्य** मध्ये मध्ये विरम्य । **निःस्थेमनी** स्थैर्यरहिते अतिव्याकुले । आद्यपादेन अलसा नाम दृष्टिरुक्ता । व्रीडौत्सुक्ये च द्योत्येते । **दरिद्रति** कृशीभवन्ति शुष्यन्ति च । **लूने**त्याद्युपमया म्लानच्छायत्वादिकं द्योत्यते । **निबिडः** घनः वर्णान्तरानुप्रवेशरहितः । पादत्रयेणानुभावव्यभिचारिवर्गो दर्शितः । **यूनि** आरब्धयौवने । **कृष्ण** इत्यनेन विभावश्च । **वनितासु** गोपीषु । **एषैव** उत्तालसविलोकनादिरूपैव । **वेषस्थितिः** वेषरचना । **तदि**ति । तन्मयीभवनस्य युक्तिर्योगस्तया । **तदि**ति । तेषां रसादीनां त एव वा ये **विभावानुभावाः,** तेषा**मुचिता याश्चित्तवृत्तयः** स्थायिव्यभिचारिरूपास्तासां **वासनाभिरनुरञ्जिताया** रूषितायास्**स्वसंविदो** या **आनन्दमयी चर्वणा** तस्याः, **गोचरो** विषय इत्यर्थः । 'रसात्मा अर्थः इत्यादिशब्दाभावेऽपि स्फुरत्येवे'ति सम्बन्धः । **अभिलाषः** अभिलाषविप्रलम्भः । अत्राभिलाषो महावाक्येन चिन्तादयस्त्ववान्तरवाक्येन व्यज्यन्त इति बोध्यम् । **अन्वयाभाव**मिति । यदि लक्ष्ये स्वशब्देन रसादिप्रतीतिस्तर्ह्यन्वयः स्यान्न तु स्वशब्देनातोऽन्वयाभाव इति भावः । वृत्तौ 'यत्रापी' त्यपिशब्दस्तुशब्दार्थे । **यात** इति । **द्वारवतीं, यात** इत्यनेन प्रत्यागमनप्रत्याशाविरहः सूच्यते । **मधुरिपा**वित्यनेन दुष्टनिग्रहव्यग्रताद्योतनेन स एवोपोद्बलितः । **तदा** मगधराजे मधुरामुपरुन्धति सति । आलिङ्गने हेतुमाह—**तद्दत्ते**ति । तेन मधुरिपुणा

लोचनम्

कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया ।
तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥

इत्यत्र विभावानुभावावम्लानतया प्रतीयेते । उत्कण्ठा च चर्वणागोचरं प्रतिपद्यत एव । सोत्कण्ठाशब्दः केवलं सिद्धं साधयति, उत्कमित्यनेन तूक्तानुभावानुकर्षणं कर्तुं सोत्कण्ठाशब्दः प्रयुक्त इत्यनुवादोऽपि नानर्थकः, पुनरनुभावप्रतिपादने हि पुनरुक्तिरतन्मयीभावो वा न तु तत्कृतेत्यत्र हेतुमाह—**विषयान्तर** इति । 'यद्विश्रम्य'

बालप्रिया

दत्ता या झम्पा वेगेनोर्ध्वादिदेशादास्फालनपूर्वकपतनक्रिया विहरणकालभवा तया । झम्पाशब्दः पुल्लिंगो वा । **आनताम्** दाने हि प्रतिग्रहीतुरानतिरुचिता । 'सम्पन्नते'ति पाठे तेन दत्ता सम्पादिता सम्पन्नता पुष्पपल्लवादिसमृद्धिर्यस्यास्तामित्यर्थः । **कालिन्दीतटरूढे**ति वल्लभविहरणस्थानरूढत्वेन सौभाग्यातिशयं सूचयति, तद्देशस्यौत्कण्ठाकारित्वं च । **तत्** तथाविधम् । **गात**मिति भावे क्तः । **गुर्वि**ति । गुरुणा प्रभूतेन बाष्पेण रुद्धकण्ठतया गद्गदं यथा तथा **गलन्** प्रसरन् **तार** उच्चैस्तरश्च **स्वरो** यत्र तत्तथा । **येन** गीतेन । यदाकर्णनेनेति यावत् । **अन्तर्जलचारिभिः** सारसादिभिरपि, न केवलं जलबहिर्भागसञ्चारिभिर्हंसादिभिः । **उत्कं** सोत्कण्ठम् । **उत्कूजितं** उच्चैःकूजितं तन्मयीभवनयुक्त्या रुदितमित्यर्थः । **विभावानुभावा**विति । मधुरिपुविरहो, वियुक्तो मधुरिपुर्वा आलम्बनविभावः, कालिन्दीतटादय उद्दीपनविभावाः, लतालिङ्गनादयोऽनुभावाः । 'विभानुभावमि'ति च पाठः । **अम्लानतया** अक्लेशेन वाच्यतयैवेति यावत् । **प्रतीयेते** प्रतीयत इति च पाठः । ततः किमत आह—**उत्कण्ठा चे**ति । **चर्वणाया गोचरं** विषयत्वं **प्रतिपद्यत एव,** नात्र स्वशब्दापेक्षामूलकस्संशयः कार्य इत्यर्थः । ननु सा स्वशब्दावेदितैवेत्यत आह—**सोत्कण्ठाशब्द** इति । **सिद्धं साधयती**ति । ज्ञातं ज्ञापयतीत्यर्थः । अतश्चानुवादक इति भावः । **केवल**शब्देनात्र विभावानुभावौ प्रति सहकारित्वमपि नेति दर्शयति । अनुवादोऽप्ययं नानर्थक इत्याह—**उत्क**मित्यादि । अयमर्थः—जलचारिणां कूजितेऽपि गुरुबाष्पेत्याद्युक्तानुभावानां संयोजन एव तन्मयीभवनयुक्त्या तदुत्कण्ठायाश्चर्वणागोचरत्वं भवति । उत्कमित्यनेन च तदनुभावसाहित्यं प्रतिपिपादयिषितम् । न च केवलेनोत्कशब्देन तत्प्रतिपादनं भवति, तस्य तावत्यपर्याप्तत्वात् । सति च पूर्ववाक्ये सोत्कण्ठाशब्दे तत्संगृहीतानामनुभावानां सोत्कण्ठासमानार्थकोत्कशब्देन प्रतिपादनं भवतीति सोत्कण्ठाशब्दस्सप्रयोजन इत्यर्थः । ननु पुनरप्यनुभावप्रदर्शनमस्त्वित्यत आह—**पुनरि**ति । न केवलं पुनरुक्तिरेव, तथाविधस्यानुभवजातस्य तन्मयीभवनोपयोगितापि न स्यादनौचित्यप्रतिपत्तिग्रस्तसौभाग्यत्वादित्याह—**अतन्मयी**ति । 'विषयान्तर'

ङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्व-प्रतीतिरस्ति। यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो विशिष्टेभ्यो रसादीनां प्रतीतिः, केवलाच्च स्वाभिधानादप्रतीतिः, तस्मादन्वय-व्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्, न त्वभिधेयत्वं कथ-

लोचनम्

इत्यादौ। न हि यदभावेऽपि यद्भवति तत्कृतं तदिति भावः। अदर्शनमेव द्रढयति-**न हीति**। केवलशब्दार्थं स्फुटयति—**विभावादीति**। **काव्य** इति। तव मते काव्यरूपतया प्रसज्यमान इत्यर्थः। **मनागपीति**।

> शृङ्गारहास्यकरुणरौद्रवीरभयानकाः[1]।
> बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥

इत्यत्र। एवं स्वशब्देन सह रसादेर्व्यतिरेकान्वयाभावमुपपत्त्या प्रदर्श्य तथैवोप-संहरति—**यतश्चे**त्यादिना **कथञ्चिदि**त्यन्तेन। अभिधेयमेव सामर्थ्यं सहकारिशक्तिरूपं विभावादिकं रसध्वनने शब्दस्य कर्तव्ये, अभिधेयस्य च पुत्रजन्महर्षभिन्नयोगक्षेम-तया जननव्यतिरिक्ते, दिवाभोजनाभावविशिष्टपीनत्वानुमितरात्रिभोजनविलक्षणतया चानुमानव्यतिरिक्ते ध्वनने कर्तव्ये सामर्थ्यं शक्तिः विशिष्टसमुचितो वाचकसाकल्यमिति

बालप्रिया

इत्यस्य विवरणम्-**यद्भिन्नम्येत्यादाविति**। भावमाह—**न हीति**। 'तत्तत्कृतं न ही'ति सम्बन्धः। ननु विभावादिप्रतिपादकत्वाभावे कथं काव्यत्वं, येन सिद्धवन्निर्देश इत्या-शङ्कां परिहरन् पराभिमतस्यैव काव्यरूपत्वप्रसञ्जनाभिप्रायेयमुक्तिरित्याह—**तव मत** इत्यादि। स्वशब्दकृता रसादिप्रतीतिः न विभावादिकृतेत्यस्मिन् मते काव्यत्वेनानभि-मतमपि काव्यमापद्येतेत्यर्थः। तथाविधमेवोदाहरणमाह—**शृङ्गारेति**। 'यतश्चे'त्या-दिवृत्तिग्रन्थस्यानर्थक्यशङ्कामुपसंहारत्वोक्त्या शमयन्नाह—**एवमित्यादि**। वृत्तावभि-धेयसामर्थ्याक्षिप्तत्वमुपसंहृतं, तत्तु शब्दार्थोभयगतध्वननव्यापारगम्यत्वरूपमिति व्या-चष्टे—**अभिधेयमेवे**त्यादि। सामर्थ्यपदस्य विवरणम्—**सहेत्यादि**। **सहकारि एव शक्तिः** शक्नोत्यनयेति शक्तिस्तद्रूपम्। तत्किमित्यत्राह—**विभावादिकमिति**। **ध्वनन** इत्याक्षेपपदव्याख्यानम्। कर्मधारयाश्रयणेन शब्दे योजयित्वा षष्ठीतत्पुरुषा-श्रयेणार्थे योजयति—**अभिधेयस्य चे**त्यादि। अभिधेयस्येत्यस्य ध्वनन इत्यनेन सम्बन्धः। **भिन्नयोगक्षेमतया** भिन्नस्वभावतया। पुत्रजन्म खलु हर्षं जनयति, न तथा विभावाद्यर्थो रसं जनयतीति तद्विलक्षणत्वमर्थगतध्वननस्य। अनुमानपक्षमपि पराकरोति—**दिवेति**। सामर्थ्यमित्यस्य व्याख्यानम्—**शक्तिरिति**। शक्तिमेव विवृ-णोति—**विशिष्टेति**। गुणालङ्कारादिविशिष्टेन समुचितेन रसानुगुणेन च **वाचकेन**

[1] भरतना., P. 69 *edn*, Chowkhamba, Benares.

श्चित्, इति तृतीयोऽपि प्रभेदो वाच्याद्भिन्न एवेति स्थितम्। वाच्येन त्वस्य सहेव प्रतीतिरित्यग्रे दर्शयिष्यते।

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**

लोचनम्

द्वयोरपि शब्दार्थयोर्ध्वननं व्यापारः। एवं द्वौ पक्षावुपक्रम्याद्यो दूषितः, द्वितीयस्तु कथञ्चिद्दूषितः कथञ्चिदङ्गीकृतः, जननानुमानव्यापाराभिप्रायेण दूषितः; ध्वननाभिप्रायेणाङ्गीकृतः।

यस्त्वत्रापि तात्पर्यशक्तिमेव ध्वननं मन्यते, स न वस्तुतत्त्ववेदी। विभावानुभावप्रतिपादके हि वाक्ये तात्पर्यशक्तिर्भेदे संसर्गे वा पर्यवस्येत्; न तु रस्यमानतासारे रसे इत्यलं बहुना। इतिशब्दो हेत्वर्थे। 'इत्यपि हेतोस्तृतीयोऽपि प्रकारो वाच्याद्भिन्न एवे'ति सम्बन्धः। **सहेवेति**। इवशब्देन विद्यमानोऽपि क्रमो न संलक्ष्यत इति तद्दर्शयति—**अग्र** इति। द्वितीयोद्द्योते॥ ४॥

एवं 'प्रतीयमानं पुनरन्यदेव' इतीयता ध्वनिस्वरूपं व्याख्यातम्। अधुना काव्यात्मत्वमितिहासव्याजेन च दर्शयति—**काव्यस्यात्मेति**। स एवेति प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यं[1], इतिहासबलात् प्रक्रान्तवृत्तिप्र-

बालप्रिया

**साकल्यं** परिपूर्णत्वमित्यर्थः। **इतीति** हेतौ। **आद्य** इति। 'स्वशब्दनिवेदितत्वेन वे'ति पक्ष इत्यर्थः। **द्वितीय** इति। 'विभावादिप्रतिपादनमुखेन वे'ति पक्ष इत्यर्थः।

रसादीनामभिधेयसामर्थ्याक्षिप्तत्वमेवेति वदतो वृत्तिकृतस्तात्पर्यशक्तिरेव ध्वननव्यापारोऽभिमतः, न तु तद्व्यतिरिक्तश्चतुर्थकक्ष्यानिवेशी अभिधेयान्यथाऽनुपपत्तिसह्यार्थबोधनशक्तेरेव तात्पर्यशक्तित्वादिति कश्चिदाह, तन्मतमनूद्य दूषयति—**यस्त्वि**त्यादि। **भेदे संसर्गे** वेति। गामानयेत्यादौ कर्मान्तरेभ्यः क्रियान्तरेभ्यश्च भेदो वाक्यार्थः, संसर्गस्त्वार्थ इति केचित्। कर्मविशेषादेः क्रियाविशेषेण सम्बन्धरूपसंसर्गो वाक्यार्थः, भेदस्त्वार्थ इत्यपरे॥ ४॥

ननु ध्वनिस्वरूपे वाच्याद्भेदेन समर्थिते, लक्षणमनुक्त्वा तस्यात्मत्वप्रतिपादिकायाः कारिकायाः का सङ्गतिरित्यतो वृत्तानुवादपुरस्सरं तां दर्शयति—**एवमि**त्यादिना। **व्याख्यात**मिति। ध्वनिस्वरूपं तस्य काव्यात्मत्वञ्चेति प्रकृतयोर्द्वयोराद्यं प्रतिपादितमित्यर्थः। **इतिहासव्याजेने**ति। व्याजशब्देन ध्वनेरात्मत्वप्रतिपादन एव तात्पर्यं, नेतिहासोपक्षेप इति दर्शितम्। प्रकृतानुगुण्येन व्याचष्टे—**स एवे**त्यादि। **स एवे**ती-

१. मन्तव्यमनुमातव्यम्, 'आत्मा वा अरे द्रष्टव्यः, श्रोतव्यो, मन्तव्यो, निदिध्यासितव्यः' (बृहदा., २. ४. ५.) इत्युपनिषदि 'मन्तव्यश्चोपपत्तिभि'रिति स्मृतौ च मननस्यानुमानत्वेन प्रसिद्धेः। तदाकारश्च—'काव्यस्यात्मे'ति पद्यघटकं तत्पदं रस-

**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥ ५ ॥**

**लोचनम्**

न्थार्थबलाच्च। तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण 'ध्वनिः काव्यस्यात्मे'ति सामान्येनोक्तम्। **शोक** इति। क्रौञ्चस्य द्वन्द्ववियोगेन सहचरीहननोद्भूतेन साहचर्यध्वंसनेनोत्थितो यः शोकः स्थायिभावो निरपेक्षभावत्वाद्विप्रलम्भशृङ्गारोचितरतिस्थायिभावादन्य[1] एव, स एव तथाभूत[2]विभावतदुत्थाक्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमादा-

**बालप्रिया**

त्यस्यानन्तरं तच्छब्देनेति, **रसध्वनि**रित्यस्यानन्तरं परामृष्ट इति च शेषः। **मन्तव्यमि**ति। युक्त्या निश्चेतव्यमित्यर्थः। तामाह—**इतिहासे**त्यादि। **इतिहासबलादि**ति। कारिकाशेषबलादित्यर्थः। **प्रक्रान्ते**ति। 'तृतीयस्त्वि'त्यादिना पूर्वोक्तेत्यर्थः। 'प्रतीयमानस्य चे'त्यादि समनन्तरवृत्तिग्रन्थस्याप्युपलक्षणमिदम्। **तेने**ति। यस्माद्रस ध्वनिरेव स एवेति परामर्शनीयस्तस्मादित्यर्थः। 'तेन इत्यभिप्रायेण सामान्येनोक्तमि'ति सम्बन्धः। इतिशब्दपरामृष्टमभिप्रायमाह—**रस एवे**त्यादि। **सर्वथे**ति। अङ्गित्वेऽङ्गत्वे चेत्यर्थः। **इती**ति हेतौ। अन्यथा प्रतिपत्तिनिरासाय विवक्षितं व्याचष्टे—**क्रौञ्चस्ये**त्यादि। द्वन्द्ववियोगकारणमाह—**सहचरी**त्यादि। द्वन्द्ववियोगेनेत्यस्य व्याख्यानम्—**साहचर्यध्वंसनेने**ति। **उत्थितः** उत्पन्नः। क्रौञ्च इति शेषः। साहचर्यध्वंसोत्थत्वेन प्राप्तं शृङ्गारस्थायित्वं प्रतिषेधति—**निरपेक्षे**त्यादि। अपेक्षायाः सङ्गमप्रत्याशायाः निष्क्रान्तो निरपेक्षो भावस्तत्त्वात्। क्रौञ्चेत्यादिकं व्याख्याय शोकस्य श्लोकताप्राप्तिं विवृणोति—**स एवे**त्यादि। क्रौञ्चे जातस्य शोकस्य वासनारूपेणादिकवौ स्थितस्य शोकस्य चाभेदबुद्धिकृतमैक्यं विवक्षित्वा **स एवे**त्युक्तम्। 'स एवेति श्लोकरूपतां प्राप्त' इति सम्बन्धः। अत्र हेतुः—**करुणरसरूपतां प्रतिपन्न** इति। तत्र चा**स्वाद्यमानतां प्रतिपन्न** इति। रत्यादिचित्तवृत्तिरास्वाद्यमाना हि शृङ्गारादिव्यपदेशगोचर इति भावः। आस्वाद्यमानताप्राप्तौ हेतुः—**हृदये**त्यादि। सहृदयस्यादौ हृदयसंवादः, ततस्तन्मयीभावलाभस्तदुत्तरमास्वाद इति क्रमः। अत्रापि हेतुः—**तथाभूते**त्यादि। **तथाभूतो** ध्वस्तसाहचर्यो **विभावः** क्रौञ्चरूपः।

---

ध्वनिविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितप्रकृतवक्तृसमवेततात्पर्यीयविशेष्यतावत्, इतिहासैकवाक्यत्वात्, प्रकृतग्रन्थैकवाक्यत्वाच्चेति।

१. अन्य एवेति। 'मा निषादे'ति पद्ये शोक एव स्थायिभावो व्यङ्ग्यः, न तु वियोगकालावच्छिन्ना विप्रलम्भशृङ्गारव्यपदेश्या रतिः। आलम्बनविभावस्य सहचरस्य प्रध्वंसात् ( प्रध्वस्तालम्बनविभावकत्वात् ) इति भावः।

२. तथाभूतः ध्वस्तः, मृत इति यावत्।

लोचनम्

स्वाद्यमानतां प्रतिपन्नः करुणरसरूपतां लौकिकशोकव्यतिरिक्तां स्वचित्तद्रुतिसमास्वाद्यसारां प्रतिपन्नो रस[१]परिपूर्णकुम्भोच्चलनवच्चित्तवृत्तिनिःष्यन्दस्वभाववाग्विलापादिवच्च समयानपेक्षत्वेऽपि चित्तवृत्तिव्यञ्जकत्वादिति नयेनाकृतकतयैवावेशवशात्समुचितशब्दच्छन्दोवृत्तादिनियन्त्रितश्लोकरूपतां प्राप्तः—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ इति ।

न तु मुनेः शोक इति मन्तव्यम् । एवं हि सति तद्दुःखेन सोऽपि दुःखित इति कृत्वा रसस्यात्मतेति निरवकाशं भवेत् । न च दुःखसन्तप्तस्यैषा दशेति । एवं चर्व-

बालप्रिया

आक्रान्दनादीत्यादिपदेनावनितलपरिलुण्ठनादिर्ग्राह्यः । करुणरसरूपताप्राप्तेः फलमाह—लौकिकेति । स्वरूपसामग्रीभेदादिति भावः । स्वसंवेदनप्रमाणसिद्धत्वमलौकिकरसस्य दर्शयितुमाह—स्वेत्यादि । स्वस्य चर्वयितुश्चित्तस्य या द्रुतिस्तन्मयीभावजनिता पुलकादिभिर्लक्ष्यमाणा तया समास्वाद्यो मनसाऽनुभाव्यः सारः प्राणो यस्यास्ताम् । कथमात्मभूतस्य रसस्य बहिःश्लोकतया परिणाम इति शङ्कायां दृष्टान्तेनोत्तरमाह—रसेत्यादि । यथा जलपरिपूर्णमौलिस्थकुम्भोच्चलने तद्गतजलं बहिः प्रस्रवति, तथेत्यर्थः । मूर्तत्वामूर्तत्वाभ्यां वैषम्यशङ्कायां दृष्टान्तान्तरमाह—चित्तवृत्तीत्यादि । यथा दुःखादि चित्तवृत्तिपरिणामरूपा वाङ्मया विलापादयः, आदिपदेन प्रशंसादयो ग्राह्याः, तथेत्यर्थः । चकारो विकल्पे । ननु रसस्य काव्यात्मत्वं तद्विषयत्वेनैव वक्तव्यम् । न च समयसव्यपेक्षप्रवृत्तिकस्य शब्दस्य तद्विषयत्वं सम्भवतीत्याशङ्कामनुवदन् व्यंग्यत्वेन तद्विषयत्वं दर्शयति—समयानपेक्षत्वेऽपीत्यादि । इति नयेनेति । लोके हि विलापप्रशंसादयो वचनप्रकाराः शोकबहुमानरूपां चित्तवृत्तिं व्यञ्जयन्तीत्युक्तरीत्येत्यर्थः । अकृतकतयैवेति । अमुमर्थमनेन प्रकाशयामीति बुद्धिपूर्वकत्वमन्तरेणैवेत्यर्थः । तर्हि कथमित्यत आह—आवेशवशादिति । आवेशः आत्मव्याप्तिः । समुचितेति । समुचिता एव शब्दादयो रसादीन् व्यञ्जयन्तीति भावः । आदिकवेः श्लोकत्वमागत इत्येवं व्याख्यायादिकवेः शोक इत्यन्वयभ्रमं निरस्यति—न त्वित्यादि । मुनिशब्देन दुःखप्रसङ्गं निरस्यति । तथाऽन्वये दोषमाह—एवमित्यादि । तद्दुःखेन ज्ञातेन क्रौञ्चदुःखेन । सोऽपि आदिकविरपि । इति कृत्वा इत्यर्थाद्धेतोः । इतीति । इति वचनमित्यर्थः। दोषान्तरमप्याह—न चेति । एषा दशेति । शापवचनकर्तृत्वरूपा श्लोकरचनारूपा वा दशेत्यर्थः । उपसंहरति—एवमित्यादि । एवमुक्तप्रकारेण चर्वणोचितः शोकस्थायिभाव एवात्मा यस्य तथा भूतो यः करुणरसस्तस्य

१. रसो जलम् । 'श्रृङ्गारादौ जले वीर्ये सुवर्णे विषशुक्रयोः । तिक्तादावमृते चैव निर्यासे पारदे ध्वनौ ॥ आस्वादे च रसं प्राहुः' इति कोशः ।

विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः सारभूतः।

**लोचनम्**

णोचितशोकस्थायिभावात्मककरुणरसमुच्चलनस्वभावत्वात्स एव काव्यस्यात्मा सारभूतस्वभावोऽपरशाब्दवैलक्षण्यकारकः।

एतदेवोक्तं हृदयदर्पणे—'यावत्पूर्णो न चैतेन तावन्नैव वमत्यमुम्' इति। अगम इति च्छान्दसेनाडागमेन। स एवेत्येवकारेणेदमाह—नान्य आत्मेति। तेन यदाह भट्टनायकः—

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः।
अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्॥

इति तदपास्तम्। व्यापारो हि यदि ध्वननात्मा रसनास्वभावस्तन्नापूर्वमुक्तम्। अथाभिधैव व्यापारस्तथाप्यस्याः प्राधान्यं नेत्यावेदितं प्राक्।

श्लोकं व्याचष्टे—**विविधे**ति। विविधं तत्तदभिव्यञ्जनीयरसानुगुण्येन विचित्रं कृत्वा

**बालप्रिया**

समुच्चलनं बहिः प्रसरणं स्वभावः स्वरूपं यस्य 'मा निषादे'त्यादिश्लोकस्य तस्य भावस्तत्वं तस्मात्। **स एव** करुणरस एव। **काव्यस्यात्मे**ति। यतो 'मा निषादे'त्यादिकाव्यं करुणरससमुच्चलनस्वरूपमतः काव्यस्य रस एवात्मेति भावः। आत्मेत्यस्य व्याख्या **सारभूतस्वभाव** इति। तदुपपादकम्—**अपरे**त्यादि।

काव्यस्य रससमुच्चलनस्वभावत्वे भट्टनायकवचनं संवादयति—**यावदि**ति। कविरिति शेषः। **एतेन** रसेन। **यावन्न पूर्णः** विभावादितन्मयीभवनक्रमेण, **तावत् अमुं** रसम्। **नैव वमति** बहिर्भावमापाद्य परास्वादनीयं नैव करोति। रसेन पूर्ण एव कविः, काव्यरूपेण रसमुद्गिरतीति रसवमनरूपस्य काव्यस्य रसरूपत्वमेवेति भावः। स्वेन विलिखिते 'मा निषादे'त्यादौ 'अगम' इत्यडागमस्य "नमाङ्योग"[1] इति निषेधशङ्कायामुपपत्तिमाह—**अगम** इत्यादि। **तेने**ति। रसस्यात्मत्वसमर्थनेनेत्यर्थः। 'तदपास्तमि'त्यनेनास्य सम्बन्धः। **शब्दे**ति। **आश्रित्ये**ति। प्रवृत्तमिति शेषः। **शास्त्रं** वेदादि। **अर्थतत्वेन** अर्थप्राधान्येन। **युक्त**मितिहासादि। 'युक्ते' इति च पाठः। **एतयोर्द्वयोः** शब्दार्थयोः। **काव्यधीः** काव्यव्यवहारः। तद्वति प्रबन्ध इति शेषः। **व्यापार** इति। व्यापारप्राधान्य इत्यत्र व्यापारपदार्थ इत्यर्थः। **अथे**ति शङ्कायाम्।

विविधं वाच्यवाचकरचनासु प्रपञ्चेन चारु इति विग्रहमभिप्रेत्य व्याचष्टे—**तत्तदि**त्यादि। तैस्तैर्वाच्यादिभिरभिव्यञ्जनीयो यो रसः, तं प्रत्यानुगुण्येन। **विचित्रं कृत्वे**ति।

१. पा. सू., ६, ४, ७४.

तथा चादिकवेर्वाल्मीकेः निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः[1] शोक एव श्लोकतया परिणतः ।

लोचनम्

वाच्ये वाचके रचनायां च प्रपञ्चेन यच्चारु शब्दार्थालङ्कारगुणयुक्तमित्यर्थः । तेन सर्वत्रापि ध्वननसद्भावेऽपि न तथा व्यवहारः । आत्मसद्भावेऽपि क्वचिदेव जीवव्यवहार इत्युक्तं प्रागेव । तेनैतन्निरवकाशम्; यदुक्तं हृदयदर्पणे—'सर्वत्र तर्हि काव्यव्यवहारः स्यात्' इति । **निहतसहचरी**ति विभाव उक्तः । **आक्रन्दित**शब्देनानुभावः ।

बालप्रिया

वाच्यादीति शेषः । कृत्वेत्यस्य प्रपञ्चेनेत्यनेन, वाच्य इत्यादित्रयस्य चार्वित्यनेन च सम्बन्धः । **प्रपञ्चेन** प्रपञ्चनेन । **चारु** सुन्दरम् । अनेन विवक्षितमाह—**शब्दे**त्यादि । **तेने**ति । विविधेत्याद्युक्तस्य काव्यत्वेनेत्यर्थः । **सर्वत्रापि** सिंहो देवदत्त इत्यादावपि । **तथा व्यवहारः** काव्यव्यवहारः । 'इति यदुक्तमेतन्निरवकाशमि'ति सम्बन्धः । **विभाव** इति । ध्वस्तसाहचर्यः क्रौञ्च आलम्बनविभावः, निहननमुद्दीपनविभावः । ननु निहतेत्यादियथाश्रुतग्रन्थेन तदाक्रन्दजनितो मुनेश्शोक इत्यर्थ इव प्रतीयते । तत्कथं

१. 'निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनित' इति । अत्र केचित् "मा निषादे"ति वाल्मीकीयपद्येन सहचरहननस्यैव प्रतिपादनात् "निहतसहचरविरहकातरक्रौञ्च्याक्रन्दजनित" इति मूलं परिवर्त्य तथैव व्याचक्षते । तथैव च लोचनग्रन्थमपि बहुत्र परिवर्त्तयन्ति । अन्ये पुनः मूलमपरिवर्त्यापि 'मा निषादे'ति प्रसिद्धार्थानुरोधेन क्लिष्टं विगृह्य व्याकुर्वन्ति । विदुषान्त्वेवं परामर्शः—ध्वन्यालोकस्य सर्वेष्वेव पुस्तकभेदेषु "निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः" इत्येव पाठस्समुपलभ्यते । लोचनेऽपि "सहचरीहननोद्भूतेन" "निहतसहचरीति विभाव उक्तः" इत्येवं प्रभृतयो मूलसंवादिन एव पाठा विलोक्यन्ते । सर्वं एवायं पाठभेदो लेखकप्रमादान्मुद्रणदोषाद्वा समागत इति सम्भावयितुमपि दुश्शकम् । उपपत्तिरप्यत्र जागर्त्ति—ध्वनिं निरूपयितुं प्रवृत्तोऽयं ग्रन्थः ध्वन्यमान एवार्थे श्रद्धत्ते । 'मा निषादे'त्यादिपद्यस्य च शक्त्या प्रतिपाद्यमानः क्रौञ्चहननाद्यात्मक एवार्थः । तथापि व्यञ्जनयात्र कश्चनापरोऽप्यर्थस्सूच्यते । तथाहि—राज्यक्षयविपिनवासादिदुःखेनाल्पीभावं कार्श्यं गतयोस्सीतारामयोर्मिथुनात् समुदायात् एकं सीतारूपमवयवं यत्त्वमवधीः वधादप्यधिकपीडां प्रापितवानसि; तस्मात् हे निषाद सदेवर्षिगणत्रैलोक्यपीडक रावण ! प्रतिष्ठां लङ्कापुराधिष्ठानादिरूपां ब्रह्मकल्पदर्वा[illegible] मा गमः इति प्रकृतकाव्यार्थरूपो लोकोत्तरचमत्कारकारी करुणरसानुकूलः [illegible] विचारयतां मनस्यवतरति । अत एव रामायणटीकाकृतः श्रीगोविन्दराजकतकरामायणशिरोमणिकारादयः प्राचीनास्सहृदयशिरोमणयस्सबहुमानमेनमर्थं व्याचक्षाणा विलोक्यन्ते । करुणरससन्निधानीभूते कविकुलैकोपजीव्य एत-

शोको हि करुणस्थायिभावः । प्रतीयमानस्य चान्यभेददर्शनेऽपि

लोचनम्

**जनित** इति । चर्वणागोचरत्वेनेति शेषः ।

ननु शोकचर्वणातो यदि श्लोक उद्भूतस्तत्प्रतीयमानं वस्तु काव्यस्यात्मेति कुत इत्याशङ्क्याह—**शोको हीति** । करुणस्य तच्चर्वणागोचरात्मनः स्थायिभावः । शोके हि स्थायिभावे ये विभावानुभावास्तत्समुचिता चित्तवृत्तिश्चर्व्यमाणात्मा रस इत्यौचित्यात्स्थायिनो रसतापत्तिरित्युच्यते । प्राक्स्वसंविदितं परत्रानुमितं च चित्तवृत्तिजातं

बालप्रिया

पूर्वं तन्निषेध इत्यतो व्याचष्टे—**चर्वणे**त्यादि । तदाक्रन्देन जनितश्चर्वणागोचरीकृत इत्यर्थः । शोक इत्यस्य वासनारूपेण स्थितो मुनेः शोक इत्यर्थश्चेति भावः ।

ननु 'शोको ही'त्यादिग्रन्थेन शोकस्य करुणरसस्थायित्वानुवादोऽत्र निरर्थक इत्यतस्तद्ग्रन्थमवतारयति—**नन्वि**त्यादि। **तदि**ति। तर्हीत्यर्थः। **प्रतीयमानं वस्त्वि**ति । रस इत्यर्थः । प्रकृताविस्मरणार्थमेवमुक्तम् । समाधानसिद्ध्यनुगुणं व्याचष्टे—**करुणस्ये**त्यादि । **तच्चर्वणे**ति । शोकचर्वणेत्यर्थः । 'शोकः श्लोकत्वमागतः' इति शोकचर्वणातः श्लोकोत्पत्तिवचनेनैव रसस्यात्मत्वं प्रकाशितमेव शोकचर्वणागोचरात्मत्वात्करुणरसस्येति भावः। ननु कथमन्यचर्वणाया अन्यो विषयः स्यादित्यत उपपादयति—**शोके ही**त्यादि । **शोके स्थायिभावे** क्रौञ्चादिवर्ण्यमानगते शोकादौ स्थायिभावे । निमित्ते सप्तमी । **ये विभावानुभावा** इति । शोकादेर्निमित्तभूता ये विभावाः कार्यभूता ये अनुभवाश्चेत्यर्थः । **तत्समुचिता** चर्व्यमाणानां तेषां विभावानुभावानां समुचिता । वर्ण्यमानतत्तद्गतस्थायिसजातीयेति यावत् । **चित्तवृत्तिः** चर्वयितरि वासनारूपेण स्थिता शोकादिचित्तवृत्तिः । **चर्व्यमाणात्मा** रस्यमानात्मा । **रसः** रसपदार्थः । **औचित्यादि**ति । उपयोगित्वनिबन्धनादुपचारादित्यर्थः, न मुख्यत्वेनेति भावः। **रसतापत्तिः** रसत्वप्राप्तिः । **उच्यते** "स्थायिभावो रस" इत्यादिना उच्यते । उपयोगित्वं दर्शयति—**प्रागि**त्यादि । सहृदयेनेति शेषः । **स्वसंविदितं** स्वस्मिन्ननुभूतम् । **परत्र** क्रौञ्चादौ । **अनुमित**माक्रन्दनादिनेत्यर्थात् । **चित्तवृत्ती**ति । स्थायीत्यर्थः । **संस्कारे**त्यादि । स्वानुभवसंस्कारं स्वानुमानसंस्कारं चाधाय ताभ्यां हृदयसंवादमादधानं सदित्यर्थः । 'यत उपयुज्यते तत औचित्यादि'-

स्मिन् महाकाव्ये स्वत एवालौकिकसीतारामादिविभावघटितसंविधानमाहात्म्यातिवायादभिव्यज्यमानः करुणरसप्रवाहः सहृदयहृदय[illegible]मानसरः प्रधानभावमासादयतीति व्यङ्ग्यपक्षपातिनो ध्वन्यालोकलोचन[illegible]तात्पर्यनिर्भरमादधानास्समीचीनमुपपद्यन्त इति ।

१. अन्यभेदेत्येव पाठस्साधीयान् 'अन्यौ भेदौ वस्त्वलङ्कारात्मे'ति लोचनोक्तेः

**रसभावमुखेनैवोपलक्षणं प्राधान्यात् ।**

लोचनम्

संस्कारक्रमेण हृदयसंवादमादधानं चर्वणायामुपयुज्यते यतः । ननु प्रतीयमानरूपमात्मा तत्र त्रिभेदं प्रतिपादितं न तु रसैकरूपम्, अनेन चेतिहासेन रसस्यैवात्मभूतत्वमुक्तं भवतीत्याशङ्कयाभ्युपगमेनैवोत्तरमाह—**प्रतीयमानस्य चे**ति । अन्यो भेदो वस्त्वलङ्कारात्मा । **भाव**ग्रहणेन व्यभिचारिणोऽपि चर्व्यमाणस्य तावन्मात्राविश्रान्तावपि स्थायिचर्वणापर्यवसानोचितरसप्रतिष्ठामनवाप्यापि प्राणत्वं भवतीत्युक्तम् । यथा—

नखं नखाग्रेण विघट्टयन्ती विवर्तयन्ती वलयं विलोलम् ।
आमन्द्रमाशिञ्जितनूपुरेण पादेन मन्दं भुवमालिखन्ती ॥

इत्यत्र लज्जायाः । रसभावशब्देन च तदाभासतत्प्रशमावपि संगृहीतावेव ; अवान्तरवैचित्र्येऽपि तदेकरूपत्वात् । **प्राधान्यादि**ति । रसपर्यवसानादित्यर्थः । तावन्मात्राविश्रान्तावपि चान्यशाब्दवैलक्षण्यकारित्वेन वस्त्वलङ्कारध्वनेरपि जीवितत्वमौचित्यादुक्तमिति भावः ॥ ५ ॥

बालप्रिया

ति सम्बन्धः । **प्रतीयमानरूपमात्मे**ति । "काव्यस्यात्मा ध्वनि"रिति प्रतीयमानसामान्यस्यात्मत्वाभिधानादिति भावः । वृत्तौ 'रसे'त्यादि । रसमुखेनैव भावमुखेनैव चेत्यर्थः । 'उपलक्षणमि'ति । प्रतीयमानस्येत्यनुषज्यते । केनापि सम्बन्धेनान्योन्यसम्बन्धिषु प्रधानस्य यदन्यज्ञापनं तदुपलक्षणं; यथा राजाऽसौ गच्छतीत्यत्र राजा परिवारस्योपलक्षकः । अत्र भावग्रहणस्य फलमाह—**भावे**त्यादि । 'भावग्रहणेन इत्युक्तमि'ति सम्बन्धः । **तावदि**ति । **तावन्मात्रे** स्वरूपमात्रे । **अविश्रान्तिः** विश्रान्त्यभावस्तस्यामपीत्यर्थः । अपिशब्देनामुख्यत्वं सूचितम् । तर्हि रसप्रतिष्ठया भाव्यमित्यत आह—**स्थायी**त्यादि । स्थायिचर्वणायां यत्पर्यवसानं तत्पूर्णताकरणलक्षणं तदेव **उचितरसप्रतिष्ठा** तामप्राप्यापीत्यर्थः । **प्राणत्वं** काव्यजीवितत्वम् । **भवती**ति । तच्चर्वणयैव चमत्कारोदयादिति भावः ।

**नखमि**ति । अत्र वलयविवर्तनोक्त्या प्रियतमादर्शनजनितं कार्श्यं व्यज्यते । अत्रोक्तैर्नखविघट्टनादिभिरनुभावैर्गम्येन प्रियतमवार्ताश्रवणादिना विभावेन चाभिव्यज्यमानाया लज्जायाः शृङ्गारनिष्ठामनवाप्य चर्वणागोचरीभवन्त्याः प्राणत्वमित्याह—**अत्र लज्जाया** इति । प्राणत्वमित्यनुषङ्गः । **रसे**त्यादि । रसशब्देन रसाभासस्य, भावशब्देन भावाभासतत्प्रशमयोश्च ग्रहणमित्यर्थः । वृत्तौ 'प्राधान्यादि'त्यस्य रसस्य प्राधान्यादित्यर्थः । तत्र हेतुमाह—**रसपर्यवसानादि**ति । अन्येषामिति शेषः । प्रसङ्गादाह—**तावदि**त्यादि । **तावन्मात्राविश्रान्तौ** वस्त्वलङ्कारस्वरूपमात्रे विश्रान्त्यभावे । **अपि चे**ति निपातोऽपीत्यर्थे । 'अन्यशाब्दवैलक्षण्यकारित्वेनौचित्यादि'ति सम्बन्धः ।

**सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥६॥**

**तत् वस्तुतत्त्वं निःष्यन्दमाना महतां कवीनां भारती अलोकसामान्यं**

लोचनम्

एवमितिहासमुखेन प्रतीयमानस्य काव्यात्मतां प्रदर्श्य स्वसंवित्सिद्धमप्येतदिति दर्शयति—**सरस्वती**ति । वाग्रूपा भगवतीत्यर्थः । वस्तुशब्देनार्थशब्दं तत्त्वशब्देन च वस्तुशब्दं व्याचष्टे । **निःष्यन्दमाने**ति । दिव्यमानन्दरसं स्वयमेव प्रस्नुवानेत्यर्थः । यदाह भट्टनायकः—

वाग्धेनुर्दुग्ध एतं हि रसं यद्बालतृष्णया ।

बालप्रिया

अथेदमालोचनीयं सहृदयैः—श्रीवाल्मीकिना "मा निषादे"त्यादिश्लोकेन श्लोकान्तरैश्च सहचरस्य पुंस एव क्रौञ्चस्य निहननं निर्दिष्टम्, अत्र तु 'निहते'त्यादियथाश्रुतग्रन्थेन वृत्तिकृता, 'सहचरीहननोद्भूतेने'ति 'निहतसहचरीति विभाव उक्त' इति च व्याख्यानेन लोचनकृता, 'निषादनिहतसहचरीकं क्रौञ्चयुवानमि'त्यादिवचनेन काव्यमीमांसाकारेण च सहचरीहननं प्रतिपादितमित्येतेषां ग्रन्थकृतां रामायणवचनविरुद्धार्थप्रतिपादने निमित्तं किमिति । अत्र केचित्—'निहते'त्यादिवृत्तिग्रन्थस्य 'निहतः सहचरीविरहकातरः स्वत एव सहचरीविरहासहिष्णुश्च यः क्रौञ्चस्तदुद्देश्यको य आक्रन्दस्तज्जनित' इत्यर्थः । लोचने 'सहचरीहनने'त्यत्र 'सहचरे'ति पाठेन भाव्यम् । 'निहतसहचरीति विभाव उक्त' इत्यस्य "निहतसहचरी"त्यादिग्रन्थेन विभावः प्रदर्शित इत्यर्थश्चेति न रामायणवचनविरोधः । काव्यमीमांसाकृद्वचनं च यथाश्रुतवृत्तिग्रन्थार्थावबोधमूलकमश्रद्धेयमेवेति वदन्ति ॥ ५ ॥

**एवमित्यादि । स्वसंवित्सिद्धं** सहृदयानुभवसिद्धम् । **एतदि**ति । प्रतीयमानस्य काव्यात्मत्वमित्यर्थः । **दर्शयती**ति । पूर्वकारिकयेतिहासः प्रतीयमानस्य काव्यात्मत्वे प्रमाणमित्युक्तम्, अनया तु तत्स्थिरीकरणाय स्वसंवेदनलक्षणं प्रमाणमुच्यते । स्वसंवेदने हि न कस्यापि विमतिरित्यर्थः । **सरस्वती**ति । 'सरस्वती'त्यादिश्लोकेनेत्यर्थः । सरस्वतीपदं व्याचष्टे—**वाग्रूपा भगवती**ति । 'तदि'त्यस्य पूर्वोक्तमित्यर्थः । 'वस्तुतत्वमि'ति "अर्थवस्तु" इत्यस्य व्यख्यानमित्याह—**वस्तुशब्देने**त्यादि । **अर्थेषु** वस्त्वलङ्काररसेषु । **वस्तु** सारभूतमर्थवस्तु । 'तदर्थवस्त्वि'त्यस्य फलितमर्थं कर्म कृत्वा 'निःष्यन्दमाने'त्येतद्व्याचष्टे—**दिव्यमि**त्यादि । **दिव्यं** अलौकिकम् । **स्वयमेवे**ति सदाऽभिमुख्यं सूचयति । **प्रस्नुवाना** क्षारयन्ती । अनेन सरस्वत्या धेनुसाम्यं सूच्यते । उक्तव्याख्याने प्रमाणमाह—**यदाहे**ति ।

**वागि**ति । वाक् काव्यरूपा सैव धेनुः । **एतं** दिव्यं **रसम्** । **बालतृष्णया**

लोचनम्

तेन नास्य समः स स्याद्दुह्यते योगिभिर्हि यः ॥

तदावेशेन विनाप्याक्रान्त्या हि यो योगिभिर्दुह्यते । अत एव—

यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥

इत्यनेन साराग्र्यवस्तुपात्रत्वं हिमवत उक्तम् । 'अभिव्यनक्ति परिस्फुरन्तमि'ति । प्रतिपत्तॄन् प्रति सा प्रतिभा नानुमीयमाना, अपि तु तदावेशेन भासमानेत्यर्थः । यदुक्तमस्मदुपाध्यायभट्टतौतेन—'नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः' इति । 'प्रतिभा' अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा ; तस्या 'विशेषो' रसावेशवैशद्यसौन्दर्यं काव्यनि-

बालप्रिया

सहृदयवत्से स्नेहेन हेतुना । हि दुग्धे प्रस्नौति यत्, **तेन** तस्माद्धेतोः **सः अस्य** बालतृष्णया प्रस्तुतस्य रसस्य, **समः न स्यात्, यः** आनन्दरसः । योगिभिर्हि दुह्यत इत्यर्थः । असमत्वं स्फुटयितुं तुरीयपादार्थमाह—**तदावेशेने**त्यादि । **तदावेशेन** रसावेशेन । **अपि**रेवार्थे । **आक्रान्त्या** बलात्कारेण आनन्दरूपेश्वरतन्मयीभावभावनाप्रकर्षसम्पादनेनेति यावत् । वाग्धेनोस्तु बालतृष्णया तदावेशवशात्तद्दोग्धृतेति भावः । आक्रान्तिदुग्धात्स्वयं प्रस्नुतस्य सातिशयत्वे प्रमाणमाह—**अत एवे**त्यादि । **अत एव** यतो रसपरिपूर्णायास्तदावेशपरवशाया धेनोः प्रस्नवनं प्रति स्वयं कर्तृत्वं, तत एव । हिमवतः वत्सरूपस्येति यावत् । 'अत एव इत्यनेन हिमवतः साराग्र्यपात्रत्वमुक्तमि'ति सम्बन्धः । सरस्वतीप्रतिभाविशेषमभिव्यनक्त्यनुमापयतीत्यर्थभ्रमं निवर्तयन् व्याचष्टे—**प्रतिपत्तॄनि**त्यादि । अभिव्यनक्तीत्यत्र प्रतिपत्तॄन् प्रतीति पूरणीयम् । प्रतिपत्तॄणामित्यर्थः । **सा प्रतिभा** महाकविसम्बन्धिनी प्रतिभा । **नानुमीयमाने**ति । तथाविधसरस्वतीलिङ्गकानुमितिविषयो नेत्यर्थः । **तदि**ति । प्रतिभाविषयभूतरसावेशेनेत्यर्थः । **भासमाने**ति । प्रत्यक्षविषयभूतेत्यर्थः । तथाविधा सरस्वती महाकवीनां तथाविधं प्रतिभाविशेषं स्फुरणविशिष्टमभिव्यनक्ति—रसावेशानभिमुखस्वरूपावरणनिवर्तनात्मकाभिव्यञ्जनेन प्रतिपत्तॄणां प्रत्यक्षविषयं करोतीति कारिकार्थ इति भावः । कविगतस्य रसस्य कथं प्रतिपत्तृगतत्वमित्यत आह—**यदुक्तमि**त्यादि । **नायकस्ये**ति । नायकस्य कविसमारोपाच्छ्रोतुस्तु रसचर्वणयेति भावः। प्रतिभाविशेषमित्येतद्व्याचष्टे—**प्रतिभे**त्यादि । **प्रज्ञा** बुद्धिः। **रसे**ति।

१. रसानां शृङ्गारादीनां भग्नावरणचिद्विषयीकृतानां रत्यादीनां य आवेशः साक्षात्कारः, तत्सम्बन्धि तदुपयोगि यद्वैशद्यं नैर्मल्यं, दोषरहितत्वे सति प्रसादमाधुर्यादिगुणवत्त्वं, तेन सौन्दर्यम् उपादेयत्वं यस्य तथाविधं यत्काव्यं, तन्निर्माणक्षमत्वमित्यर्थः । एतेन 'रसावेशवैशद्यसौन्दर्यकाव्यनिर्माणक्षमत्वमि'ति समस्तोऽपि पाठस्साधीयानेवेति वेद्यम् ।

प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्ति । येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते ।

इदं चापरं प्रतीयमानस्यार्थस्य सद्भावसाधनं प्रमाणम्—

**शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।**
**वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ ७ ॥**

सोऽर्थो यस्मात्केवलं काव्यार्थतत्त्वज्ञैरेव ज्ञायते । यदि च वाच्यरूप

लोचनम्

र्माणक्षमत्वम् । यदाह मुनिः—'कवेरन्तर्गतं भावं'[१] इति । **येनेति** । अभिव्यक्तेन स्फुरता प्रतिभाविशेषेण निमित्तेन महाकवित्वगणनेति यावत् ॥ ६ ॥

**इदं चेति** । न केवलं 'प्रतीयमानं पुनरन्यदेव' इत्येतत्कारिकासूचितौ स्वरूपविषयभेदावेव; यावद्भिन्नसामग्रीवेद्यत्वमपि वाच्यातिरिक्तत्वे प्रमाणमिति[२] यावत् । **वेद्यत**

बालप्रिया

**रसावेशस्य** कारणभूतं **यद्वैशद्यं** रसावेशानभिमुखत्वराहित्यं तेन **यत्सौन्दर्यं** रसपरत्वादिलक्षणम् । यद्वा—रसावेशेन यद्वैशद्यं "विवक्षातत्परत्वेने"त्यादिसूचितदोषराहित्यं, तेन सौन्दर्यं तत्सूचितगुणसाहित्यं तद्रूपं काव्यनिर्माणक्षमत्वमित्यर्थः । सरस्वतीप्रतिभाविशेषं प्रतिपत्तॄणामभिव्यनक्तीत्यत्र संवादमाह—**यदाहेति** । 'येने'त्यादिवृत्तिग्रन्थं व्याचष्टे—**अभिव्यक्तेनेत्यादि** । **अभिव्यक्तेन** अतएव **स्फुरता** प्रतिपत्तॄणां प्रत्यक्षविषयेण । 'निमित्तेने'त्यन्तं 'येने'त्यस्य व्याख्यानम् । **महाकवित्वगणनेति** । प्रतिपत्तॄणामादौ रसस्यानुभवस्ततः प्रतिभायास्ततो महाकवित्वगणनेति भावः ॥ ६ ॥

'न केवलमि'त्यादि 'वेद्यत्वमपी'त्यन्तं 'इदञ्चापरमि'त्यस्य विवरणम् । सद्भावेत्यादेर्वाच्यातिरिक्तत्वेन सद्भावस्येत्याद्यर्थ इत्याह—**वाच्येत्यादि** । तथा च कारिका

१. विभावेनाहृतो योऽर्थस्त्वनुभावेन गम्यते ।
वागङ्गसत्त्वाभिनयैस्स भाव इति संज्ञितः ॥
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥
भरतना., P. 79 *edn*, Chowkhamba, Benares.

२. प्रमाणमिति । अनुमितिकारणमित्यर्थः । इदमाचार्यमतानुसारेण । हेतुज्ञानस्य तत्कारणत्वमते तु प्रमाणमित्यस्य प्रमितिकारणतानिरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकतावदित्यर्थः । विमतं प्रतीयमानं वाच्यव्यतिरिक्तं, वाच्यवेदकसामग्रीविभिन्नसामग्रीप्रयोज्यवित्तिविषयत्वात् , लक्ष्यार्थवत् इत्यत्रानुमानाकारो बोध्यः ।

**एवासावर्थः स्यात्तद्वाच्यवाचकरूपपरिज्ञानादेव तत्प्रतीतिः स्यात्। अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिवाऽप्रगीतानां गान्धर्वलक्षणविदामगोचर एवासावर्थः।**

लोचनम्

इति। न तु न वेद्यते, येन न स्यादसाविति भावः। काव्यस्य तत्त्वभूतो योऽर्थस्तस्य भावना वाच्यातिरेकेणानवरतचर्वणा तत्र विमुखानाम्। स्वराः षड्जादयः सप्त। श्रुतिर्नाम शब्दस्य वैलक्षण्यमात्रकारि यद्रूपान्तरं तत्परिमाणा स्वरतदन्तरालोभयभेदकल्पिता द्वाविंशतिविधा। आदिशब्देन जात्यंशकग्रामरागभाषाविभाषान्तरभाषादेशी·

बालप्रिया

नाधिकारिभेदप्रदर्शनपरा, किन्तु सामग्रीभेदप्रदर्शनपरा। वाच्यार्थबोधेऽनुशिष्टशब्दार्थज्ञानरूपा, व्यंग्यार्थबोधे तु सहृदयत्वादिरूपा च सामग्री पूर्वोत्तरार्धाभ्यां दर्शिता चेति भावः। वेदने सिद्धे तत्सामग्रीचिन्तावकाश इत्याशयेन पुनरपि **वेद्यत** इत्युक्तम्, तद्व्याचष्टे—**न** **त्वि**त्यादि। **येन** अवेदनेन। **असौ** प्रतीयमानार्थः। वृत्तौ 'सोऽर्थ' इत्याद्युत्तरार्धस्य विवरणं 'तस्मादि'ति पूर्वार्धेन सम्बन्धः। तद्विवरणं 'यदि चे'त्यादि। 'असौ अर्थः' प्रतीयमानार्थः। 'तत्प्रतीतिः' प्रतीयमानार्थप्रतीतिः। इष्टापत्तिं परिहरति—'अथ चे'त्यादि। 'अथ चासावर्थः काव्यतत्त्वार्थभावनाविमुखानां वाच्यवाचकलक्षणमात्रकृतश्रमाणामगोचर' इति सम्बन्धः। तत्र दृष्टान्तः—'अप्रगीतानां गन्धर्वलक्षणविदां स्वरश्रुत्यादिलक्षणमिवे'ति। 'अगोचरः' अग्राह्यः। 'गान्धर्वलक्षणविदां ग्रन्थपठनेन सङ्गीतलक्षणं जानताम्। कारिकायां 'स ही' त्यत्र स त्विति च पाठः। काव्येत्यादिकं व्याचष्टे—**काव्यस्ये**त्यादि। **शब्दस्ये**ति। गीतादिरूपशब्दस्येत्यर्थः। **वैलक्षण्यमात्रकारि** परस्परभेदमात्रकारि। न गुणाधायकमिति भावः। **रूपान्तरं** रूपविशेषः। गीतादिशब्दश्रवणे सति तस्य शब्दस्य यद्रूपान्तरं लवादिकालांशं निमित्तीकृत्य जायते तदित्यर्थः। **तदि**ति। तत् परिमाणं कालप्रमाणं यस्याः सेत्यर्थः। तन्मात्रकालेति यावत्। **स्वरे**ति। स्वरः तस्य स्वरस्यान्तरालमुभयमर्थात्पार्श्वद्वयं च तेषां यो भेदस्तत्कल्पितेत्यर्थः। श्रुतिर्नाम स्वरस्यैवांश इति यावत्। **जाती**त्यादि। जात्यादीनां स्वरूपमन्यतोऽवधातव्यम्। **अप्रगीता-**

१. अत्रायं विषयविवेकः—उपासनायां सत्स्वपि सगुणेषु प्रसिद्धदेवतान्तरेषु नादब्रह्मोपासनया सर्वा अपि देवता उपासिता भवन्तीति तत्र तत्र प्रतिपादितमुपलभामहे। अत एवोक्तं सङ्गीतरत्नाकरे—

नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः। भवन्त्युपासिता नूनं यस्मादेते तदात्मकाः॥ इति।

(सं. र., P. 31 *edn*, Ānandāṣrama Press, Poona.)

तत्र प्राणाग्निसंयोगादभिव्यक्तो ध्वनिर्नाद इत्यभिधीयते। स च नादोऽभिव्यञ्ज-

बालप्रिया

**नामिति** नञ्समासघटकं प्रगीतपदं व्याचष्टे—**प्रकृष्टमित्यादि** । पक्षान्तरमाह—

कनाडीभेदवशात् द्वाविंशतिप्रकारो भवति । इम एव भेदाः श्रुतय इति व्यपदिश्यन्ते । श्रवणार्थस्य धातोः क्तिन् प्रत्यये श्रूयन्त इति व्युत्पत्त्या श्रुतिशब्दो निष्पन्नः । अत्र नादापरपर्यायश्रुतिविभागविषये बहवः प्रकारा वर्त्तन्ते—केचन द्वाविंशतिं श्रुतीर्मन्यन्ते, अपरे च षट्षष्टिभेदभिन्नाः श्रुतय इत्याचक्षते, अन्ये पुनरानन्त्यं कथयन्ति श्रुतीनाम् । अत एवोक्तं कोहलेन—

> द्वाविंशतिं केचिदुदाहरन्ति श्रुतीः श्रुतिज्ञानविचारदक्षाः ।
> षट्षष्टिभिन्नाः खलु केचिदासामानन्त्यमेव प्रतिपादयन्ति ॥ इति ॥

तत्र द्वाविंशतिपक्ष एव प्रकृते ग्रन्थकाराभिमतः । एतासां श्रुतीनां मिथो भेदः-वीणादण्डे पूर्वोत्तरभावेन द्वाविंशतिं तन्त्रीः परिकल्प्य प्रथमापेक्षया द्वितीयादितन्त्रीषु किञ्चित्किञ्चिद्दृढीकरणपूर्वकं वाद्यमानासु तासु प्रत्यक्षतोऽवगन्तुं शक्यः ।

आभ्यश्च श्रुतिभ्यः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाख्याः सप्त स्वरा भवन्ति । स्वतः सहकारिकारणनिरपेक्षं रञ्जयति श्रोतृचित्तमनुरक्तं करोतीति स्वरः, इति तद्व्युत्पत्तिः । सप्तानामप्यमीषां स्वराणां व्यस्तानां सतां दृष्टादृष्टफलौपयिकत्वं न भवतीति तत्सिद्धये ग्रामस्यावश्यकता जायते । ग्रामो नाम स्वरसमूहः । एतावत्युच्यमाने लौकिकवैदिकवाक्येष्वपि स्वरसमूहस्य सम्भवात्तत्रातिव्याप्तिस्स्यादिति तद्व्यावृत्तये मूर्च्छनाक्रमतानवर्णालङ्कारजात्याद्याश्रयत्वे सति स्वरसमूहत्वं ग्रामत्वमिति लक्षणं वक्तव्यम् । मूर्च्छनादीनां स्वरूपविभागादयः सङ्गीतरत्नाकरस्य स्वराध्यायतोऽवसेयाः । स चायं ग्रामो द्विविधः-षड्जग्रामः, मध्यमग्रामश्चेति । तत्रैकस्मिन् वीणादण्डे द्वाविंशतिं तन्त्रीः परिकल्प्य आदितस्तुरीयायां तन्त्र्यां षड्जस्वरः, सप्तम्यां ऋषभः, नवम्यां गान्धारः, त्रयोदश्यां मध्यमः, सप्तदश्यां पञ्चमः, विंश्यां धैवतः, द्वाविंश्यां निषादश्चेति स्वरेषु विन्यस्तेषु षड्जग्रामो भवति । अयमेव शुद्धाश्रयः षड्जग्राम इति व्यवह्रियते । एवमपरस्मिन् वीणादण्डे आदितस्तुरीयायां तन्त्र्यां मध्यमः, सप्तम्यां पञ्चमः, एकादश्यां धैवतः, त्रयोदश्यां निषादः, सप्तदश्यां षड्जः, विंश्यामृषभः, द्वाविंश्यां गान्धारश्चेति विन्यस्तेषु स्वरेषु मध्यमग्रामो भवति । अयमेव विकृताश्रयो मध्यमग्राम इति व्यपदिश्यते । एवञ्च षड्जग्रामे—षड्जमध्यमपञ्चमाः चतसृभ्यः श्रुतिभ्य उत्पन्नाः, ऋषभधैवतौ तिसृभ्य उत्पन्नौ, गान्धारनिषादौ द्वाभ्यामुत्पन्नौ ; मध्यमग्रामे च मध्यमधैवतषड्जाः चतसृभ्य उत्पन्नाः, पञ्चमर्षभौ तिसृभ्य उत्पन्नौ, निषादगन्धारौ द्वाभ्यामुत्पन्नाविति द्वैग्रामिक्यो द्वाविंश्यः श्रुतयः स्वरतदन्तरालोभयभेदकल्पिताः सिद्धाः ।

तत्र षड्जग्राममध्यमग्रामयोर्मिलित्वा सन्त्यष्टादश जातयः—षाड्जी, आर्षभी, गान्धारी, मध्यमा, पञ्चमी, धैवती, नैषादी, षड्जकैशिकी, षड्जोदीच्यवा, षड्ज-

**एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्य सद्भावं प्रतिपाद्य प्राधान्यं तस्यै-**

लोचनम्

मार्गा गृह्यन्ते । प्रकृष्टं गीतं गानं येषां ते प्रगीताः, गातुं वा प्रारब्धा इत्यादिकर्मणि[१] क्तः । प्रारम्भेण चात्र फलपर्यन्तता लक्ष्यते ॥ ७ ॥

**एवमिति** । स्वरूपभेदेन भिन्नसामग्रीज्ञेयत्वेन चेत्यर्थः । प्रत्यभिज्ञेयादि

बालप्रिया

**गातुं** वेति । **आदिकर्मणीति** । प्रारम्भरूपार्थ इत्यर्थः । **फलेति** । फलमत्र स्वरादिसाक्षात्कारः ॥ ७ ॥

एवमित्यनेन सन्निहितमात्रपरामर्शभ्रमः स्यादतो व्याचष्टे—**स्वरूपभेदेनेत्या**

मध्यमा, गान्धारोदीच्यवा, रक्तगान्धारी, कैशिकी, मध्यमोदीच्यवा, कार्मारवी, गान्धारपञ्चमी, आन्ध्री, नन्दयन्ती इति । तत्रादितस्सप्त शुद्धजातयः षड्जग्रामस्य, अवशिष्टाश्च मध्यमग्रामस्येति विवेकः ।

अत्र सर्वासामपि जातीनामंशा बहवो भवन्ति । 'स रि ग म प ध नि' इति स्वरविशेषाणामेव अंश इति संज्ञा । काश्चन जातय एकांशाः, ( अर्थात् एकः स्वरः अंशो यासां ताः ), अपराश्च द्व्यंशाः, अन्याश्च त्र्यंशा इत्येवमादिर्विभागो भरतनाट्यशास्त्रादौ दर्शितः ।

सुखेन तदवगमायाधः पट्टिका प्रदर्श्यते—

| जातिनामानि | अंशाः | जातिनामानि | अंशाः |
|---|---|---|---|
| १ षाड्जी | सगमपध | १० षड्जमध्यमा | सरिगमपधनि |
| २ आर्षभी | रिधनि | ११ गान्धारोदीच्यवा | सम |
| ३ गान्धारी | सगमपनि | १२ रक्तगान्धारी | सगमपनि |
| ४ मध्यमा | सरिमपध | १३ कैशिकी | सगमपधनि |
| ५ पञ्चमी | रिप | १४ मध्यमोदीच्यवा | प |
| ६ धैवती | रिध | १५ कार्मारवी | रिपधनि |
| ७ नैषादी | सगनि | १६ गान्धारपञ्चमी | प |
| ८ षड्जकैशिकी | सगप | १७ आन्ध्री | रिगपनि |
| ९ षड्जोदीच्यवा | समधनि | १८ नन्दयन्ती | प |

एवं द्वैग्रामिकीनां सर्वासामपि जातीनां त्रिषष्टिरंशा विज्ञेयाः । एतेषां स्वरूपं भरतनाट्यशास्त्रस्याष्टाविंशेऽध्याये निरूपितं, तत एवावगन्तव्यम् ।

स्वरगतप्रतिपादितजातिजन्यत्वेन प्रसक्ता ग्रामरागाः, भाषाः, विभाषाः, आन्तरभाषाः देशीमार्गादयः । तेषां स्वरूपं सङ्गीतरत्नाकरस्य रागविवेकाध्यायतोऽवगन्तव्यम्, विस्तरभिया नेह प्रदर्श्यत इति ।

१. "आदिकर्मणि क्तः कर्तरि च" ( पा.सू., ३.४.७१. )ति सूत्रेणेत्यर्थः ।

वेति दर्शयति—

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥ ८ ॥**

व्यङ्ग्योऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन, न शब्दमात्रम् । तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयौ । व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ता-

लोचनम्

त्यर्हार्थे[1] कृत्यः[2], सर्वो हि तथा यतते इतीयता प्राधान्ये लोकसिद्धत्वं प्रमाणमुक्तम् । नियोगार्थेन च कृत्येन शिक्षाक्रम उक्तः । प्रत्यभिज्ञेयशब्देनेदमाह—

'काव्यं तु जातु जायेत कस्यचित्प्रतिभावतः'

इति नयेन यद्यपि स्वयमस्यैतत्परिस्फुरति, तथापीदमित्थमिति विशेषतो निरू-

बालप्रिया

दि । 'स्वरूपविषयभेदेने'ति च पाठः । कथं प्राधान्यं दर्शितमित्यतो व्याचष्टे—**अर्हार्थ** इत्यादि । **कृत्यः** कृत्यप्रत्ययः । **सर्वः** सकलस्सहृदयः । 'तथा ही'ति सम्बन्धः । अर्हत्वेन हीत्यर्थः। **यतते** तथाविधशब्दार्थयोर्बुभुत्सया प्रवर्तते । फलितमाह—**इती**त्यादि । **इयता** सहृदयप्रत्यभिज्ञेयत्ववचनेन । **प्राधान्ये** व्यंग्यस्य प्राधान्ये विषये । **लोके**ति । सहृदयलोकेत्यर्थः । 'सहृदयैः सोऽर्थः तथाविधः शब्दश्च महाकवेस्तौ शब्दार्थौ यत्नतः प्रत्यभिज्ञेयावि'ति सम्बन्धः । 'तावि'ति प्रत्यभिज्ञाकारप्रदर्शकः । एतौ महाकवेः तौ तादृशौ शब्दार्थावित्याकारकसहृदयप्रत्यभिज्ञानार्हावित्यर्थ इति भावः । अथ तौ शब्दार्थौ महाकवेः महाकविना प्रत्यभिज्ञेयावित्यर्थान्तरं च ग्राह्यमित्याह—**नियोगे**त्यादि । अस्मिन् पक्षे 'तावि' त्यस्य पूर्वोक्तावित्यर्थः । पूर्वार्धश्च भिन्नं वाक्यम् । **शिक्षाक्रमः** कविशिक्षाप्रकारः । शब्दार्थप्रत्यभिज्ञानस्य फलमाह—**प्रत्यभिज्ञे**येत्यादि । **काव्यमि**ति । तुशब्दः शास्त्रादितो विशेषद्योतकः । **जातु** कदाचिदेव । **कस्यचित्** न सर्वस्य । कोऽसावित्यत्राह—**प्रतिभावत** इति । **स्वयं** स्वयमेव । **अस्य** कवेः। **एतत्** काव्यम् । **इदमि**ति । **इदमित्थं कर्तव्यमि**ति निरूपणप्रकारः । **निरूप्यमाणमि**ति । निरूप्य क्रियमाणमित्यर्थः । तदित्यनुषज्यते । **सहस्रे**ति । सहस्रधा भवतीत्यर्थः । विच्छित्तिप्रकाराणामनन्तत्वादिति भावः । विशेषनिरूपणस्य कर्तव्यतां व्यतिरेकोदाहरणेन समर्थयते—**यथोक्त**मिति । प्रत्यभिज्ञाशास्त्रान्त इति शेषः ।

---

१. प्रत्यभिज्ञारूपधात्वर्थान्वयपक्षे महाकवेरित्यत्र "कृत्यानां कर्तरि वा" ( २. ३. ७१. ) इति कर्तरि षष्ठी ।

२. "अर्हे कृत्यतृचश्च" ( ३. ३. १६९. ) इत्येकवाक्यतापन्नेन "अचो यत्" ( ३. १. ९७. ) इत्यनेन कृत्यसंज्ञको यत्प्रत्ययः ।

भ्यां महाकवित्वलाभो महाकवीनां, न वाच्यवाचकरचनामात्रेण ।

लोचनम्

प्यमाणं सहस्रशाखीभवति । यथोक्तमस्मत्परमगुरुभिः श्रीमदुत्पलपादैः—

तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके
कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा ।
लोकस्यैष तथानवेक्षितगुणः स्वात्मापि विश्वेश्वरो
नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥ इति ॥

तेन ज्ञातस्यापि विशेषतो निरूपणमनुसन्धानात्मकमत्र प्रत्यभिज्ञानं, न तु लदेवे-दमित्येतावन्मात्रम् । **महाकवेरिति** । यो महाकविरहं[1] भूयासमित्याशास्ते । एवं व्यङ्ग्यस्यार्थस्य व्यञ्जकस्य शब्दस्य च प्राधान्यं वदता व्यङ्ग्यव्यञ्जकभावस्यापि[2]

बालप्रिया

**तैस्तैरिति** । सामान्यतोऽवगतस्यापीश्वरस्य विशेषतोऽवगममन्तरेण न फलपर्यन्तीभावलाभ इत्यर्थप्रदर्शनपरोऽयं श्लोकः । **तैस्तैरुपयाचितैः** दूतीसम्प्रेषणात्मवृत्तान्तनिवेदनादिभिरुपचारपूर्वकयाचनैः । 'उपनतोऽपी'ति योजना । न केवलमुपनतः, तन्व्या अन्तिके स्थितोऽपि । **एवमपरिज्ञातः** यो मया लोकोत्तरसौन्दर्यादिगुणविशिष्टत्वेन श्रुतस्तत एव रागातिशयेन प्रार्थितश्च स कान्तोऽयमिति विशेषेणाज्ञातः । अत एव **लोकसमानः** जनसाधारणत्वं प्राप्तः । **कान्तः** तन्वीकामनाविषयः पुरुषः । **यथा रन्तुं** रमयितुं तन्वीमानन्दयितुमिति यावत् । न प्रभवतीति शेषः । एवं दृष्टान्तं प्रदर्श्य प्रकृतमाह—**लोकस्ये**त्यादि । 'लोकस्यात्मे'ति सम्बन्धः । **अनवेक्षिते**ति । लोकेन विशेषतोऽज्ञातेत्यर्थः । यस्मात्सामान्यतो ज्ञातेऽपि विशेषाज्ञानसम्भवः, तस्मात् स्वतः स्फुरितयोरपि शब्दार्थयोः महाकविना युक्तमेव प्रत्यभिज्ञानकरणमिति भावः । तर्हि कोऽत्र प्रत्यभिज्ञापदार्थ इत्यत उक्तफलतया तत्स्वरूपमाह—**तेने**त्यादि । महाकवित्वनिर्वृत्तौ शिक्षानर्हत्वान्नियोगायोगमाशङ्क्य व्याचष्टे—**यो महे**त्यादि । महाकविरित्यस्य महाकवित्वप्रकारकाशंसाविषय इत्यर्थ इति भावः । वृत्तौ 'महाकवेस्तौ शब्दार्थौ सहृदयैः प्रत्यभिज्ञेयावि'विति 'तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयावि'ति च योजना बोध्या । महाकविना प्रत्यभिज्ञेयावित्यस्योपपादकम्—'व्यंग्ये'त्यादि । 'सुप्रयुक्ताभ्यां' विशेषतो निरूप्य प्रयुक्ताभ्याम् । 'महाकवीनामि'त्यस्य उक्तोऽर्थः । वृत्तिग्रन्थेन व्यञ्जकस्यापि प्रधान्यं दर्शितमत आह—**एव**मित्यादि । **उपपन्न**मिति । ध्वनिरिति

---

१. महाकवित्वप्रकारकेच्छावानित्यर्थः ।
२. व्यञ्जनाव्यापारस्यापीत्यर्थः ।

इदानीं व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथममुपाददते कवयस्तदपि युक्तमेवेत्याह—

आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः ।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः ॥ ९ ॥

यथा ह्यालोकार्थी सन्नपि दीपशिखायां यत्नवाञ्जनो भवति तदुपायतया । न हि दीपशिखामन्तरेणालोकः सम्भवति । तद्वद्व्यङ्ग्यमर्थं प्रत्या-

लोचनम्

प्राधान्यमुक्तमिति ध्वनति ध्वन्यते ध्वननमिति त्रितयम[1]प्युपपन्नमित्युक्तम् ॥ ८ ॥

न[2]नु प्रथमोपादीयमानत्वाद्वाच्यवाचकतद्भावस्यैव प्राधान्यमित्याशङ्क्योपायानामेव प्रथममुपादानं भवतीत्यभिप्रायेण विरुद्धोऽयं प्राधान्ये साध्ये हेतुरिति दर्शयति—**इदानी**मित्यादिना । आलोकनमालोकः ; वनितावदनारविन्दादिविलोकनमित्यर्थः । तत्र चोपायो दीपशिखा ॥ ९ ॥

बालप्रिया

वक्ष्यमाणमुपपन्नमित्यर्थः ॥ ८ ॥

व्यंग्यव्यञ्जकप्राधान्यानुवादेन वाच्यवाचकयोः प्रथमोपादानयुक्तत्ववचनं वृत्तावयुक्तं, प्राधान्यानुवादस्यानुपयोगादित्यतः शङ्कोत्तरत्वेन घटयति—**नन्वि**त्यादि । **वाच्ये**त्यादि । द्वन्द्वैकवद्भावः । प्रथमोपादीयमानत्वहेतोः को दोष इत्यतः सोऽपि दर्शित इत्याह—**उपायानामेवे**त्यादि । **विरुद्ध** इति । साध्याभावेनाप्राधान्येन व्याप्त इत्यर्थः । अप्रयोजक इत्यर्थो वा । आलोकशब्दस्य प्रकाशरूपार्थे प्रसिद्धेः प्रकृते तदर्थमाह—**आलोकन**मिति । चाक्षुषज्ञानमित्यर्थः । आलोकनमित्यस्यैव विवरणम्—**वनिते**त्यादि । वृत्तौ 'प्रतिपादकस्ये'ति । वक्तुरित्यर्थः ॥ ९ ॥

---

१. ननु त्रितयमिति न्यूनम् ; ध्वन्यतेऽनेनेति चतुर्थस्यापि सम्भवात् इति चेन्न; ध्वननमित्यनेन संग्रहीतुं शक्यत्वात् ।

२. 'नन्वि'त्यादि 'दर्शयती'त्यन्तलोचनग्रन्थस्यायमभिप्रायः—'वाच्यवाचकतद्भावः प्रधानं प्रथमोपादीयमानत्वात्' इत्यनुमानेन व्यङ्ग्यार्थस्य प्राक्प्रतिपादितं प्राधान्यं दुरुपपादमित्याशङ्का । तदुत्तरञ्च—नेदमनुमानं समीचीनं, हेतोर्विरुद्धत्वात् । साध्यव्यापकीभूताभावप्रतियोगी च हेतुर्विरुद्धः । असाधारणो वा । साध्यमत्र प्राधान्यम् । तद्व्यापकीभूताभावः प्रथमोपादीयमानत्वाभावः । स चोपेये प्रधाने भवति, न तूपाये प्रथमोपादीयमाने । तत्प्रतियोगित्वं प्रथमोपादीयमानत्वे हेताविति भवत्यस्मिन् हेतौ विरोधो दोषः । अतो दुष्टत्वात् तदनुमानमुपेक्षार्हमिति ।

हृतो जनो वाच्येऽर्थे यत्नवान् भवति। अनेन प्रतिपादकस्य कवेर्व्यङ्ग्यमर्थं प्रति व्यापारो दर्शितः।

प्रतिपाद्यस्यापि तं दर्शयितुमाह—

**यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।**
**वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः॥ १० ॥**

यथा हि पदार्थद्वारेण वाक्यार्थावगमस्तथा वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः।

**लोचनम्**

प्रतिपदिति भावे क्विप्। 'तस्य वस्तुन' इति व्यङ्ग्यरूपस्य सारस्येत्यर्थः। अनेन श्लोकेनात्यन्तसहृदयो यो न भवति तस्यैष स्फुटसंवेद्य एव क्रमः। यथात्यन्तशब्दवृत्तज्ञो यो न भवति तस्य पदार्थवाक्यार्थक्रमः। काष्ठाप्राप्तसहृदयभावस्य तु वाक्यवृत्तकुशलस्येव सन्नपि क्रमोऽभ्यस्तानुमानाविनाभावस्मृत्यादिवदसंवेद्य इति दर्शितम्॥१०॥

**बालप्रिया**

वृत्तौ 'प्रतिपाद्यस्ये'ति। वाच्यार्थस्येत्यर्थः। 'तमि'ति। व्यङ्ग्यमर्थं प्रति व्यापारमित्यर्थः। स च स्वप्रतीत्युत्पादनरूपः। कारिकायां 'प्रतिपत्तस्ये'त्यत्रान्यथाप्रतिपत्तिनिरासायाह—**प्रतिपदि**त्यादि। प्रतिपत्तिरिति तदर्थ इति भावः। कारिकायां 'पदार्थे'त्यस्य 'वाच्यार्थे'त्यस्य च ज्ञायमानतत्तदर्थेत्यर्थः। तत्तदर्थज्ञानमिति वा। 'सम्प्रतीयत' इति। प्रतिपत्तृभिर्ज्ञायत इत्यर्थः। अत्र वाच्यव्यंग्यप्रतीत्योः पदार्थवाक्यार्थप्रतीतिसाम्यकथनस्य फलान्तरमप्यस्तीत्याह—**अनेने**त्यादि। 'अनेन श्लोकेन इति दर्शितमि'ति सम्बन्धः। **यः** यः प्रतिपत्ता। **तस्य** तथाविधस्य प्रतिपत्तुः। **एषः** वाच्यव्यंग्यनिष्ठः। अत्र दृष्टान्तमाह—**यथे**त्यादि। **शब्दवृत्ते**ति। वाक्यवृत्तेत्यर्थः। **पदार्थे**त्यादि। स्फुटसंवेद्य इत्यनुषङ्गः। **काष्ठाप्राप्ते**ति। उत्कर्षप्राप्तेत्यर्थः। **वाक्यवृत्तकुशलस्ये**ति। वाक्यस्फोटादिकं जानत इत्यर्थः। सतोऽपि क्रमस्यासंवेद्यत्वे दृष्टान्तः—**अभ्यस्ते**त्यादि। अभ्यस्ते विषये **अनुमानम**नुमितिः **अविनाभावस्मृतिः** व्याप्तिस्मृतिः तयोः। आदिपदेन समयस्मृत्यर्थबोधयोः परिग्रहः। तद्वत्तन्निष्ठक्रमवदित्यर्थः॥ १० ॥

१. अविनाभावो व्याप्तिः। तथा हि—विनाशब्दस्याभाववानर्थः। साध्यमित्यध्याहार्यम्। तथा चान्वयबललभ्यसाध्याभाववत्तो निरूपितत्वसम्बन्धेन भावपदार्थे वृत्तित्वे, तस्य च विनापूर्ववर्तिनञर्थाभावेऽन्वयः। एवञ्च साध्याभाववन्निरूपितवृत्तित्वाभावो व्याप्तिरिति फलितम्। वस्तुतस्तु—साध्याभाववन्निरूपितकालिकादिसम्बन्धावच्छिन्नवृत्तिताया वह्निमान् धूमादित्यादिस्थलीयसद्धेतावपि सत्वेनापतन्त्या

**इदानीं वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य प्राधान्यं यथा न व्यालुप्यते तथा दर्शयति—**

**स्वसामर्थ्यवशेनैव वाक्यार्थं प्रतिपादयन् ।**
**यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥ ११ ॥**

**लोचनम्**

**न व्यालुप्यत** इति । प्राधान्यादेव तत्पर्यन्तानुसरणरणरणकत्वरिता मध्ये विश्रान्तिं न कुर्वत इति क्रमस्य सतोऽप्यलक्षणं प्राधान्ये हेतुः । स्वसामर्थ्यमाकाङ्क्षायोग्यतासन्निधयः । **विभाव्यत** इति । विशब्देन विभक्ततोक्ता; विभक्ततया

**बालप्रिया**

'स्वसामर्थ्ये'त्यादिकारिकाद्वयमवतारयति वृत्तौ—'इदानीमि'त्यादि । 'तत्प्रतीतेः' व्यंग्यप्रतीतेः । 'न व्यालुप्यते' नापगच्छति प्रत्युत सिध्यति । ननु कारिकायां सतोऽपि क्रमस्यालक्षणं दर्शितं, तस्य कथं प्राधान्योपपादकत्वमित्यत आह—**प्राधान्यादेवे**त्यादि । **प्राधान्यादेव** व्यंग्यस्येत्यर्थात् । **तदि**ति । तत्पर्यन्तं प्रयोजनभूतप्रतीयमानार्थपर्यन्तं यदनुसरणं बुध्याऽनुधावनं, 'तत्तात्पर्ये'ति पाठे प्रतीयमानरूपतात्पर्यार्थं प्रति यदनुसरणमित्यर्थः । तत्र **रणरणकेन** औत्सुक्येन **त्वरिताः** सन्त इत्यर्थः । सहृदया इति शेषः । **मध्ये** वाच्यांशचर्वणायाम् । **विश्रान्तिं न कुर्वत** इति । तथा च का कथा क्रमपर्यालोचनायामिति भावः । **हेतुरि**ति । ज्ञापकमित्यर्थः । 'स्वसामर्थ्ये'त्यस्य स्वस्य पदार्थस्य यत् सामर्थ्यं सहकारीत्यर्थाभिप्रायेण विवृणोति—**आकांक्षे**त्यादि । कारिकायां 'व्यापारनिष्पत्ता'विति स्वव्यापारस्य वाक्यार्थप्रतिपादनरूपस्य निष्पत्तौ सत्यां वाक्यार्थबुद्धावित्यर्थः । वृत्तौ 'विभक्ततये'ति कारिकोपस्कार इति भ्रमं नुदति-**विशब्देने**ति । **भाव्यते** प्रतिपत्तृभिर्ज्ञायते । **अनेने**ति । विभा-

---

अव्याप्तेर्वारणाय वृत्तौ हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया, सत्तासाध्यकद्रव्यत्वहेतावव्याप्तिः, सामान्यादिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धेः । अतस्साध्यं विना अभाव इति तदर्थः । साध्याभावत्वावच्छेदेनाभावस्यान्वयात् अवच्छेदकत्वस्य च व्यापकत्वे पर्यवसानात् साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति तदीयो निर्गलितार्थः ।

१ 'यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदविशिष्टतत्पदत्वमाकांक्षा । वैशिष्ट्यञ्च अव्यवहितपूर्ववृत्तित्वाव्यवहितोत्तरत्वान्यतरसम्बन्धेन बोध्यम् । यत्पदस्य षष्ठ्यन्तराजपदस्य, यत्पदाभावप्रयुक्तं पुरुषपदाभावप्रयुक्तं, अन्वयबोधाजनकत्वं अन्वयबोधासमर्थत्वं, निरुक्तसम्बन्धेन राजपदविशिष्टपुरुषपदत्वमाकांक्षेत्यर्थः । 'एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसम्बन्धो योग्यता' । 'अविलम्बेन पदार्थोपस्थितिः सन्निधिः ।

यथा स्वसामर्थ्यवशेनैव वाक्यार्थं प्रकाशयन्नपि पदार्थो व्यापारनिष्पत्तौ न भाव्यते विभक्ततया ।

तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥ १२ ॥

लोचनम्

न भाव्यत इत्यर्थः । अनेन विद्यमान एव क्रमो न संवेद्यत इत्युक्तम् । तेन यत्स्फोटाभिप्रायेणासन्नेव क्रम इति व्याचक्षते तत्प्रत्युत विरुद्धमेव । वाच्येऽर्थे विमुखो विश्रान्तिनिबन्धनं परितोषमलभमान आत्मा हृदयं येषामित्यनेन सचेतसामित्यस्यैवार्थोऽभिव्यक्तः । सहृदयानामेव तर्ह्ययं महिमास्तु, न तु काव्यस्यासौ कश्चिदतिशय इत्याशङ्क्याह-**अवभासत** इति । तेनात्र विभक्ततया न भासते, न तु वाच्यस्य सर्वथैवानवभासः । अत एव तृतीयोद्द्योते[1] घटप्रदीपदृष्टान्तबलाद्व्यङ्ग्यप्रतीतिकालेऽपि वाच्यप्रतीतिर्न विघटत इति यद्वक्ष्यति तेन सहास्य ग्रन्थस्य न विरोधः ॥११, १२॥

बालप्रिया

वनमात्रनिषेधेन वस्तुसत्ताया अभ्यनुज्ञानादित्यर्थः । **तेने**ति । विद्यमानक्रमालक्षणप्रतिपादनेनेत्यर्थः । विरुद्धमेवेत्यनेनास्य सम्बन्धः । **स्फोटाभिप्राये**णेति । वाक्यतदर्थाववविभक्तस्फोटरूपावित्यभिप्रायेणेत्यर्थः ।

कारिकायां 'सोऽर्थ' इति । वाक्यार्थरूपवाच्यार्थ इत्यर्थः । 'तत्वार्थे'ति । व्यंग्यार्थेत्यर्थः । 'वाच्यार्थविमुखात्मना'मित्यत्र विमुखशब्दं प्रकरणलब्धमर्थमादाय व्याचष्टे—**वाच्य** इत्यादि । **विश्रान्तिरेव निबन्धनं** कारणं यस्य तम् । नात्यन्तं वाच्यबहिर्मुख इति भावः । विशेषणस्यास्य फलमाह—**अनेने**ति । **अभिव्यक्तः** प्रदर्शितः । **सहृदयानामेवे**त्यादि । यद्युक्तलक्षणसहृदयबुध्युपाधिकमस्य झटित्येन स्फुरणं, तर्ह्यन्वयव्यतिरेकाभ्यां तद्बुद्धेरेव तद्धेतुत्वात्सहृदयानामेव लोकोत्तरः कश्चिदतिशयोऽयं न काव्यस्येत्यर्थः । **अवभासत** इतीति । काव्यश्रवणसमयसमनन्तरसमासाद्यमानजन्मनस्तदर्थावभासस्य कार्यस्य परिस्फुटोपलब्धस्य काव्यव्यापारैकनिबन्धनत्वनिश्चयात्काव्यस्यैवायमतिशय इति भावः । **तेने**त्यादि । **तेन** उक्तेन कारिकाद्वयव्याख्यानप्रकारेण । **अत्र** वाच्यार्थे । **विभक्तता** व्यंग्यार्थापेक्षया पृथक्त्वम् । **न भासते** विभक्तत्वस्य केवलमनवभासनमित्यर्थः । **सर्वथैवे**ति । स्वरूपेणापीति यावत् । केचित्तु 'विभक्ततये'ति पठित्वा अत्रेति बुद्धावित्यर्थः । **विभक्ततये**ति । वाच्यादित्यर्थात् । **न भासत** इति व्यङ्ग्योऽर्थ इति शेषः ; येन क्रमो लक्ष्येत इति व्याचक्षते । **अत ए**वेति । उक्तव्याख्यानादित्यर्थः । वाच्यस्य स्वरूपतोऽवभासाङ्गीकरणाद्विभागमात्रस्या-

१ तृतीयोद्योते ३३ कारिकायामयं विषयो विवृतः ।

एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्यार्थस्य सद्भावं प्रतिपाद्य प्रकृत उपयोजयन्नाह—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥१३॥**

लोचनम्

**सद्भाव**मिति । सत्तां साधुभावं प्राधान्यं चेत्यर्थः । द्वयं हि प्रतिपिपादयिषितम् । **प्रकृत** इति लक्षणे । **उपयोजयन्** उपयोगं गमयन् । तमर्थमिति चायमुपयोगः । स्वशब्द आत्मवाची । स्वश्चार्थश्च तौ स्वार्थौ ; तौ गुणीकृतौ याभ्याम् ; यथासंख्येन तेनार्थो गुणीकृतात्मा, शब्दो गुणीकृताभिधेयः । **तमर्थ**मिति । 'सरस्वती स्वादु तदर्थवस्तु'

बालप्रिया

नवभासाङ्गीकाराच्चेति यावत् । **न विरोध** इति । इदमुपलक्षणम् , दृष्टान्तवैषम्यमपि नास्तीति बोध्यम् ॥ १२ ॥

'साधुभावमि'त्यस्य व्याख्यानं—**प्राधान्य**मिति । **इत्यर्थ** इति । यथोक्तम्—"सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते" इति । **द्वय**मुक्तार्थद्वयम् । **लक्षण** इति । प्रस्तुतस्य ध्वनेर्लक्षण इत्यर्थः । **उपयोग**मिति । अर्थाद्व्यंग्यसद्भावस्य । केनांशेनोपयोजनमित्यत आह—**त**मिति । व्यङ्ग्यस्य सद्भावे सिद्ध एव तमर्थमिति तत्पदेन परामर्शो युज्यत इति भावः । अर्थस्यार्थाभावाद्व्याचष्टे—**स्वश्चे**त्यादि । 'उपसर्जनीकृता-वि'त्यस्य विवरणम्-**गुणीकृता**विति । फलितमाह-**तेने**त्यादि । तथाविधोऽर्थस्तथा-

१. 'स्वं चासावर्थश्च तौ स्वार्थौ' इत्यपि पाठस्समीचिनः । आत्मनि स्वशब्दस्य नपुंसकतायास्साधुत्वात् । यद्यपि स्वशब्दः पुल्लिङ्ग एव, 'विभाषा जसी'ति प्रकरणे 'स्वमात्मीये' इत्येव प्रतिपादनीये 'स्वमज्ञातिधनाख्याया'मिति गुरुभूतसूत्रनिर्देशस्यैव प्रमाणत्वात् , 'द्योस्स्वर्गनभसोः स्वो ज्ञात्यात्मनोस्स्वं निजे धने' इति हेमचन्द्रोक्तेः, 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनीकोशात् , 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरकोशे स्वमित्यस्य आत्मीये, आत्मनीत्यस्य स्व इति पूर्वस्मिन्नन्वयेन तद्विरोधशङ्कानुत्थानाच्च, तथाप्यमरकोश इत्थं क्लिष्टान्वयकल्पने 'स्वो ज्ञातावात्मनि धने त्वस्त्री आत्मीयके त्रिषु' इति पाठं विहाय त्रिः स्वशब्दोपादानस्य वैयर्थ्यात् ,

'बन्धूकबन्धूभवदेतदस्या मुखेन्दुनानेन सहोज्जिहाना ।
रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठलेखा' ॥

( नैषध., ७. ३७ )

इति नैषधीयपद्ये 'बन्धूकबन्धूभवदि'ति विशेषणकात्मार्थकस्वशब्दस्य प्रयोगकरणाच्च स्वशब्दस्यात्मार्थकत्वे नपुंसकत्वमप्यस्त्येवेति सूक्ष्ममीक्षणीयम् ।

यत्रार्थो वाच्यविशेषः वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति । अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽ

लोचनम्

इति यदुक्तम् । **व्यङ्क्तः** द्योतयतः । व्यङ्क्त इति द्विवचनेनेदमाह—यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथाप्यर्थस्यापि सहकारिता न त्रुट्यति, अन्यथा अज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात् । विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव, विशिष्ट[1]शब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापारः । तेन यद्भट्टनायकेन द्विवचनं दूषितं तद्गजनिमीलिकयैव । अर्थः शब्दो वेति तु विकल्पाभिधानं प्राधान्याभिप्रायेण । काव्यं च तद्विशेषश्चासौ काव्यस्य वा विशेषः । काव्यग्रहणाद्गुणालङ्कारोपस्कृतशब्दार्थपृष्ठपाती ध्वनिल-

बालप्रिया

विधः शब्दश्चेत्यर्थः । नन्वेकैकत्र शब्दार्थयोरेकैकस्यैव व्यञ्जकत्वात् व्यंक्त इति द्विवचनमनुपपन्नमित्यत आह—**द्विवचनेने**त्यादि । उभयोरपि ध्वननं व्यापारः 'द्विवचनेनेदमाह' इति सम्बन्धः । **विशिष्टशब्दे**ति । यथारसं वर्णानां भेदादिति भावः । **तेने**ति । युक्त्या द्विवचनसमर्थनेनेत्यर्थः । **गजनिमीलिकये**ति । यथा गजस्याक्षिनिमीलनं न बुद्धिपूर्वकमपि तु स्वभावत एवेत्यविचारो गजनिमीलिकाशब्देन लक्ष्यते । ननु यदि समुच्चयस्तर्हि 'अर्थशब्दावि'ति भाव्यमित्यत आह—**अर्थ** इत्यादि । **प्राधान्ये**ति । व्यञ्जनप्राधान्येत्यर्थः । अयं भावः—वाकारोऽत्र शब्दार्थयोः व्यञ्जनक्रियाकर्तृत्वे विकल्पस्य न बोधकः, येन "शिरः[2]श्वा काको वा द्रुपदतनयो वा परिमृशे"दित्यादाविवैकवचनं भवेत्, अपि तु व्यञ्जनक्रियायां कर्तृत्वेनान्वितयोः शब्दार्थयोः व्यञ्जनप्राधान्ये विकल्पमवगमयति । तथा च विकल्पितव्यञ्जनप्राधान्यौ शब्दार्थौ व्यङ्क्त इति वाक्यार्थ इति । विशेषशब्दस्य विशिष्टार्थत्वाभिप्रायेण विवृणोति—**काव्यमि**त्यादि । पक्षान्तरमाह—**काव्यस्य वे**ति । काव्येत्यादि । 'यो ध्वनिलक्षण आत्मा स तथाविधशब्दार्थपृष्ठपातीति काव्यग्रहणादुक्तमि'ति संबन्धः । शब्दार्थपृष्ठपातित्वं तद्व्य-

१. 'विशिष्टे'ति । प्रमाणेत्यर्थः । आप्तोच्चरितेति यावत् । अत एव 'शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः । अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता' ( काव्यप्र., ३. ५. ) इति काव्यप्रकाशस्सङ्गच्छते । गुणालङ्कारोपस्कृतेति वा विशिष्टशब्दार्थः । अनुपदं स्वयमेव तथा वक्ष्यमाणत्वात् ।

२. परित्यक्ते देहे रणशिरसि शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ।
असंख्यातास्त्रौघद्रविणमदमत्तस्य च रिपो-
र्ममैवायं पादः शिरसि निहितस्तस्य न करः ॥ ( वेणी., ३. २२. ) ।

लोचनम्

क्षण 'आरमे'त्युक्तम्। तेनैतन्निरवकाशं श्रुतार्थापत्तावपि[1] ध्वनिव्यवहारः स्यादिति। यच्चोक्तम्—'चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्यात्' इति तदङ्गीकुर्म एव। नाम्नि खल्वयं विवाद इति। यच्चोक्तम्—'चारुणः प्रतीतिर्यदि काव्यात्मा प्रत्यक्षादिप्रमाणादपि सा भवन्ती तथा स्यात्' इति। तत्र शब्दार्थमयकाव्यात्माभिधानप्रस्तावे क एष प्रसङ्ग इति न किञ्चिदेतत्। स इति। अर्थो वा शब्दो वा, व्यापारो वा। अर्थोऽपि वाच्यो वा ध्वनतीति, शब्दोऽप्येवम्। व्यङ्ग्यो वा ध्वन्यत इति व्यापारो वा

बालप्रिया

ङ्गयत्वात्। तेनेति। यतो गुणालङ्कारोपस्कृतशब्दार्थपृष्ठपातिनो ध्वनिव्यवहारस्तत इत्यर्थः। स्यादिति। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ रात्रिभोजनादेर्गम्यत्वादिति भावः। चारुत्वप्रतीतिस्तर्हीत्यादि। यदि चारुत्वहेतुतया प्रसिद्धेभ्यो गुणादिभ्योऽन्यः काव्यात्मा स्यात्तर्हि चारुत्वप्रतीतिरेव तदात्माऽस्तु, तस्याः दृष्टत्वेनादृष्टवस्त्वन्तरकल्पने गौरवादिति तदतिरिक्तो न ध्वनिरित्याक्षेपः। कुतोऽङ्गीकार इत्यत आह—नाम्नीति। खलुरवधारणे। चारुत्वप्रतीतिरित्यस्य चारुत्वप्रतीतेर्विषयो हेतुर्वा कश्चिद्गुणादिभ्योऽन्य इत्यर्थस्य वक्तव्यतया ध्वनिनाम्न्येव विवाद इत्यर्थः। चारुणः प्रतीतिरिति। चारुवस्तुप्रतीतिरित्यर्थः। वस्तुविशेष्यकचारुत्वप्रतीतिरिति यावत्। सेति। चारुवस्तुप्रतीतिरित्यर्थः। तथा ध्वनिव्यवहारविषयः। प्रकरणानभिज्ञोऽसौ पूर्वपक्षी, अत उपेक्ष्य इति परिहरति—तत्रेत्यादि। तत्र प्रत्यक्षादिविषये। 'एष प्रसङ्गः क' इति सम्बन्धः। ननु काव्यस्य शब्दार्थव्यापारात्मकत्वेन बहूनां सम्भवात् कस्येदं "स काव्यविशेषो ध्वनि"रिति ध्वनिसंज्ञितत्वाभिधानमित्यत आह—अर्थो वेत्यादि। कस्य कथं ध्वनिशब्दवाच्यत्वमित्यत्राह—अर्थोऽपीत्यादि। सर्वत्र इतिशब्दो 'ध्वनिरिति प्रतिपादितमि'त्यनेन सम्बध्यते। एवमिति। ध्वनतीति प्रकारेणेत्यर्थः। शब्दवाच्यव्यङ्ग्यव्यञ्जनानि चत्वार्यपि योगेन ध्वनिशब्दवाच्यानीत्यर्थः। प्राधान्येनेति मुख्यतायां हेतुः; समुदायस्य समुदाय्यपेक्षया प्राधा-

---

१. "दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना अर्थापत्तिरि"ति शाबरं भाष्यम्। दृष्टशब्दः प्रमितमात्रवचनः। शब्दप्रमाणप्रमित इति श्रुतपदस्यार्थः। श्रुतपदस्य पृथगुपादानं त्वर्थविषयदृष्टार्थापत्त्यपेक्षयाऽस्याः श्रुतार्थापत्तेः प्रमाणग्राहिणीत्वेन वैलक्षण्यप्रदर्शनार्थम्। तथा च लक्षणपरभाष्यस्यायमर्थः—प्रमाणषट्केण प्रमितस्यार्थस्यार्थान्तरेण विनानुपपत्तिमालोच्य तदुपपत्तये याऽर्थान्तरकल्पना सा अर्थापत्तिरिति। तत्र शब्दपूर्विका प्रमाणग्राहिण्यर्थापत्तिः श्रुतार्थापत्तिरिति व्यवह्रियते। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति श्रुतेन वाक्येन दिवाऽभुञ्जाने देवदत्ते पीनत्वरूपो योऽर्थः प्रमितः, तदन्यथानुपपत्तिमालोच्य तदुपपत्तये 'रात्रौ भुङ्क्ते' इति रात्रिभोजनरूपार्थप्रतिपादकवाक्यान्तरस्य कल्पनाच्छ्रुतार्थापत्तिरियमिति बोध्यम्।

नुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम् । यदप्युक्तम्— 'प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति' इति, तदप्ययुक्तम् । यतो लक्षणकृतामेव स केवलं न प्रसिद्धः, लक्ष्ये तु परीक्ष्य-

लोचनम्

शब्दार्थयोर्ध्वननमिति । कारिकया तु प्राधान्येन समुदाय एव काव्यरूपो मुख्यतया ध्वनिरिति प्रतिपादितम् । **विभक्त** इति । गुणालङ्काराणां वाच्यवाचकभावप्राणत्वात् । अस्य च तदन्यव्यङ्ग्यव्यञ्जकभावसारत्वान्नास्य तेष्वन्तर्भाव इति । अनन्यत्र भावो विषयशब्दार्थः। एवं तद्व्यतिरिक्तः कोऽयं ध्वनिरिति निराकृतम्। **लक्षणकृतामेवे**ति । लक्षणकाराप्रसिद्धता विरुद्धो हेतुः; तत एव हि यत्नेन लक्षणीयता । लक्ष्ये त्वप्रसिद्धत्व-

बालप्रिया

न्यात् । **मुख्यतये**ति । इतरेषान्त्वमुख्यतयेति भावः । **ध्वनिरि**त्यादि । रूढया ध्वनिपदार्थत्वेनोक्तमित्यर्थः । तथाच सः तथाविधः शब्दवाच्यव्यङ्ग्यव्यञ्जनसमुदायात्मकः काव्यविशेषो ध्वनिरिति कथितः । रूढया ध्वनिपदवाच्यत्वेन कथित इति कारिकार्थः । तथाविधकाव्यविशेषत्वं लक्षणं, रूढया ध्वनिपदवाच्यत्वं लक्ष्यतावच्छेदकम् । यद्यपि 'काव्यस्यात्मे'ति प्रस्तुतस्य ध्वनेर्लक्षणं व्यङ्ग्यत्वमात्रमिति तदेव वक्तव्यं, तथाप्येवं काव्यविशेषघटितलक्षणस्यैव प्रकृत उपयोगात्तदभिहितमिति च बोध्यम् । वृत्तौ 'अनेने'ति । एवं लक्षणप्रतिपादनेनेत्यर्थः । 'उपमादिभ्य' इत्यादि । तद्विषयेभ्य इत्यर्थः। 'विभक्तः' भिन्नः । कथं ध्वनेरुपमादिभ्यो विभक्तविषयत्वमित्यत आह—**गुणे**त्यादि । वाच्यवाचकाश्रयत्वात्तद्भावोपजीवित्वम् । उक्तार्थोपपादनाय 'विशेषेण सिनोति बध्नाति स्वसम्बन्धिनं पदार्थमि'ति व्युत्पत्तिमभिप्रेत्य विषयशब्दस्यार्थमाह— **अनन्यत्र भाव** इति । अन्यत्र सद्भावस्याभाव इत्यर्थः । **विषयशब्दार्थः** विशेषणविधया विषयशब्दप्रतिपाद्यः । 'ध्वनेर्विषय' इत्यस्य यस्मादन्यत्र ध्वनिव्यवहारस्य सद्भावो नास्ति, स इत्यर्थ इति भावः । लक्षणप्रतिपादनेनैव प्रथमाभाववादिमतं निराकृतमित्यभिप्रायेण वृत्तिकृतो 'यदप्युक्तमि'त्यादिना द्वितीयाभाववादिमतदूषणाभिधानमिति प्रदर्शयितुमाह—**एवमि**त्यादि। **एवमि**ति । निर्दोषलक्षणकथनमुखेन ध्वनेः सद्भावस्य समर्थितत्वेनेत्यर्थः । **इती**ति । उपसंहारोक्तमेतदित्यर्थः । ध्वनिर्नाम काव्यप्रकारो न काव्यशब्दवाच्यः प्रसिद्धप्रस्थानातिक्रामित्वादिति परमतस्य प्रसिद्धप्रस्थानातिक्रामित्वादित्यनेन लक्षणकाराप्रसिद्धत्वं लक्ष्याप्रसिद्धत्वं वा विवक्षितमिति विकल्पमभिप्रेत्य यत इत्यादिना दूषणमभिहितमिति व्याचष्टे—**लक्षणे**त्यादि । विरुद्धत्वं साधयति—**तत एवे**ति । लक्षणकाराप्रसिद्धत्वादेव । काव्यविशेषेषु ध्वनिलक्षणानुगमनेन काव्यशब्दवाच्येष्वपि लक्षणकाराप्रसिद्धत्वहेतोर्वर्तनाद्विरुद्धो हेतुरित्यर्थः ।

माणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम् । ततोऽन्यच्चित्रमेवेत्यग्रे दर्शयिष्यामः । यदप्युक्तम्—'कामनीयकमनतिवर्तमानस्य तस्योक्तालङ्कारादिप्रकारेष्वन्तर्भावः' इति, तदप्यसमीचीनम्; वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः, वाच्यवाचकचारुत्वहेतवो हि तस्याङ्गभूताः, स त्वाङ्गिरूप एवेति प्रतिपादयिष्यमाणत्वात् ।

परिकरश्लोकश्चात्र—

> व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः ।
> वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः ॥

लोचनम्

मसिद्धो हेतुः । यच्च नृत्तगीतादिकल्पं, तत्काव्यस्य न किञ्चित् । **चित्रमिति** । विस्मयकृद्वृत्तादिवशात्[1], न तु सहृदयाभिलषणीयचमत्कारसाररसनिःष्पन्दमयमित्यर्थः । काव्यानुकारित्वाद्वा चित्रम्, आलेखमात्रत्वाद्वा, कलामात्रत्वाद्वा । **अग्र** इति ।

> प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थितम् ।
> द्विधा काव्यं ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥

इति तृतीयोद्द्योते[2] वक्ष्यति। परिकरार्थं कारिकार्थस्याधिकावापं कर्तुं श्लोकः **परिकर**-

बालप्रिया

गुणादिव्यतिरिक्तस्य तस्य नृत्तादिप्रायत्वमेवेति यदुक्तं तदपि निराकरोति—**यच्चे**त्यादि । **काव्यस्येति**। ध्वनिलक्षणलक्षितस्येत्यर्थः। **न किञ्चिदिति** । उपहास्यतामावहतीत्यर्थः । वृत्तौ 'सहृदयहृदयाह्लादकारी'ति ध्वनिगुणीभूतव्यंग्ययोर्ग्रहणमित्यभिप्रायेण 'ततोऽन्यच्चित्रमे'वेत्यत्र चित्रपदं व्याचष्टे—**विस्मयकृदि**ति । वृत्तादीत्यादिपदेन यमकोपमादिपरिग्रहः । विवक्षितं व्यवच्छेद्यमाह—**न त्वि**त्यादि । गौणो वा काव्यस्य चित्रपदेन व्यवहार इत्याह—**काव्ये**त्यादि । **काव्येति** । ध्वनिकाव्येत्यर्थः । विष्ण्वाद्यनुकारित्वमालेख्यमात्रत्वं कलारूपत्वं च लोकप्रसिद्धचित्राणामस्तीति तद्योगात्काव्ये चित्रशब्दप्रवृत्तिरित्यर्थः । वाकारस्समुच्चये । वृत्तौ 'प्रस्थान' इति । अलङ्कारादावित्यर्थः । 'वाच्ये' त्यादि । अलङ्कारादय इत्यर्थः । 'तस्य' ध्वनेः । 'सः' ध्वनिः। 'प्रतिपादयिष्यमाणत्वात्' वक्ष्यमाणत्वात् । परिकरस्य सापेक्षत्वात्कस्येत्यपेक्षायामाह-**कारिकार्थस्ये**ति । परिकरार्थमित्यस्य व्याख्यानम्-**अधिकावापं कर्तुमि**-

१. वृत्त्यादिवशादिति पाठः । तत्र वृत्तय उपनागरिकाद्याः ।

२. ध्वन्या., ३. ४२.

ननु यत्र प्रतीयमानस्यार्थस्य वैशद्येनाप्रतीतिः स नाम मा भूद्ध्वने-र्विषयः । यत्र तु प्रतीतिरस्ति, यथा—समासोक्त्याक्षेपानुक्तनिमित्तविशेषो-क्तिपर्यायोक्तापह्नुतिदीपकसङ्करालङ्कारादौ, तत्र ध्वनेरन्तर्भावो भविष्यती-त्यादि निराकर्तुमभिहितम्—'उपसर्जनीकृतस्वार्थौ' इति । अर्थो गुणीकृतात्मा, गुणीकृताभिधेयः शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनिरिति । तेषु कथं तस्यान्तर्भावः । व्यङ्ग्यप्राधान्ये हि ध्वनिः । न चैतत्समासो

लोचनम्

**श्लोकः** । **यत्रे**त्यलङ्कारे । **वैशद्येने**ति । चारुतया स्फुटतया चेत्यर्थः । **अभिहितमि**ति भूतप्रयोग आदौ व्यङ्क्त इत्यस्य व्याख्यातत्वात् । **गुणीकृतात्मे**ति । आत्मेत्यनेन स्वशब्दस्यार्थो व्याख्यातः । **न चैत**दिति । व्यङ्ग्यस्य प्राधान्यम् । प्राधान्यं च यद्यपि ज्ञप्तौ न चकास्ति; 'बुद्धौ तत्त्वावभासिन्यां' इति नयेनाखण्डचर्वणाविश्रान्तेः, तथापि विवेचकैर्जीवितान्वेषणे क्रियमाणे यदा व्यङ्ग्योऽर्थः पुनरपि वाच्यमेवानुप्राणय-न्नास्ते तदा तदुपकरणत्वादेव तस्यालङ्कारता । ततो वाच्यादेव तदुपस्कृताच्चमत्कार-लाभ इति । यद्यपि पर्यन्ते रसध्वनिरस्ति, तथापि मध्यकक्षानिविष्टोऽसौ व्यङ्ग्योऽर्थो

बालप्रिया

ति । कारिकायामनुक्तस्याधिकस्यापेक्षितस्यार्थस्यावापः प्रक्षेपः तं कर्तुमित्यर्थः । **अलङ्कार** इति । उपमास्वभावोक्त्यादावित्यर्थः । आहेत्यनुक्त्वा 'अभिहितमि' त्यु-क्तेर्बीजमाह—**अभिहित**मित्यादिना । पूर्वोक्तमनुस्मारयति—**आत्मे**त्यादि । ध्वनि-गुणीभूतव्यंग्ययोर्द्वयोरपि प्रतीतिदशायां प्राधान्यप्रतीत्यभावस्य तुल्यत्वात् प्राधान्यं तुल्यमित्याशंक्याभिप्रायप्रकटनेन परिहरति—**प्राधान्यं चे**त्यादि । **प्राधान्यं** व्यं-ग्यस्य प्राधान्यम् । **अखण्डे**ति । खण्डो गुणप्राधान्यादिलक्षणो भेदः, तद्रहितोऽखण्ड-स्तादृशस्य वाक्यार्थीभूतस्य रसादिव्यंग्यस्य चर्वणायां विश्रान्तेः सहृदयमनसां विश्रा-न्तेरित्यर्थः । **विवेचकैः** सहृदयैः । अखण्डचर्वणानन्तरमित्यर्थात् । **जीवितान्वेषणे क्रियमाण** इत्युभयसाधारणम् । **यदे**त्यादि । यः पूर्वं वाच्यादुत्तीर्णस्तद्व्यंग्यत्वात्स कक्ष्यान्तरङ्गतोऽपि पुनः पूर्वभाविनीं वाच्यकक्ष्यां प्रविश्य वाच्यमेवानुप्राणयन्यदा आ-स्ते इत्यर्थः । 'तदालङ्कारते'ति सम्बन्धः । अवधार्यत इति शेषः । **तदुपकरणत्वा**-दिति । तस्य वाच्यस्य उपकरणत्वादङ्गत्वादित्यर्थः । व्यंग्यं विना तच्चारुत्वासिद्धेरिति भावः । **एवे**ति । नान्यथेत्यर्थः । **तस्य** व्यंग्यस्य । अस्त्वेवं किमत इत्यत्राह—**तत** इत्यादि । **ततः** तस्यालङ्कारत्वात् । **तदुपस्कृतात्** व्यंग्येनालङ्कृतात् । **चम-त्कारलाभ** इति । यदा पुनर्व्यंग्योऽर्थो वाच्येनोपस्कृतः काव्यमनुप्राणयन्नास्ते तदा तस्माच्चमत्कारलाभ इत्यनेनार्थात् सिध्यति । स्वयमङ्गस्य सत्यङ्गिनि किमित्यङ्गान्तरे पर्यवसानमित्याशङ्क्य समाधत्ते—**यद्यपी**त्यादि । **मध्यकक्षे**ति । समासोक्त्यादिषु

क्त्यादिष्वस्ति । समासोक्तौ तावत्—

> उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
> यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते समारोपितनायि-

लोचनम्

न रसोन्मुखीभवति; स्वातन्त्र्येणापि तु वाच्यमेवार्थं संस्कर्तुं धावतीति गुणीभूतव्यङ्ग्य-तोक्ता । **समासोक्ताविति** ।

> यत्रोक्तौ[1] गम्यतेऽन्योऽर्थस्तत्समानैर्विशेषणैः ।
> सा समसोक्तिरुदिता संक्षिप्तार्थतया बुधैः ॥

इत्यत्र समासोक्तेर्लक्षणस्वरूपं हेतुर्नाम तन्निर्वचनमिति पादचतुष्टयेन क्रमादुक्तम् । **उपोढो रागः** सान्ध्योऽरुणिमा प्रेम च येन । **विलोलास्तारका** ज्योतींषि नेत्रत्रिभागाश्च यत्र । **तथेति** । झटित्येव प्रेमरभसेन च । **गृहीत**माभासितं परिचुम्बितुमाक्रान्तं च । **निशाया मुखं** प्रारम्भो वदनकोकनदं चेति । **यथेति** । झटिति ग्रहणेन प्रेमरभसेन च । **तिमिरं चांशुकाश्च** सूक्ष्मांशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलं, तिमिरांशुकं नीलजालिका नवोढाप्रौढवधूचिता । रागाद्रक्तत्वात् सन्ध्याकृतादनन्तरं प्रेमरूपाच्च

बालप्रिया

प्रथमावाच्यस्य द्वितीया वस्तुव्यंग्यस्य तृतीया रसध्वनेश्च कक्षेति स्थितिः । **स्वातन्त्र्येणेति** । वाच्यं विनेत्यर्थः । **यत्रोक्ताविति** । भामहोक्तमिदम् । लक्षणवाक्यं तात्पर्यतो व्याचष्टे—**लक्षण**मित्यादि । **लक्षणस्वरूपमिति** । स्वरूपलक्षणमित्यर्थः । 'लक्षणं स्वरूपमि'ति च पाठः । अत्र निशाशशिवृत्तान्तः प्राकरणिकत्वाद्वाच्यो नायकवृत्तान्तस्त्वप्राकरणिकत्वाद्व्यंग्य इत्यभिप्रेत्य समानविशेषणत्वं विवृणोति—**उपोढ** इत्यादिना । ज्योतिषां विलोलत्वं प्रतीत्या । **नेत्रत्रिभागा** इति । नेत्रत्रिभागनिरीक्षणानीत्यर्थः । तथा गृहीतमित्येतत्प्रकृतानुगुणतया व्याचष्टे—**झटित्येवे**त्यादि । **आक्रान्तमिति** । तथैव चुम्बनस्य रसावहत्वात् । यथोक्तम्–"वामो हि काम" इति । एकरूपत्वार्थं यथाशब्दं व्याचष्टे—**झटिती**त्यादि । तिमिरांशुकमित्यत्र रूपकभ्रमं व्यावर्तयति—**तिमिरं** चेत्यादि । अल्पार्थे क इत्यभिप्रायेणांशुकपदं व्याचष्टे—**सूक्ष्मांशव** इति । अर्थाच्छशिनः । तिमिरांशुकमिति द्वन्द्वैकवद्भावः । फलितमाह—**रश्मीति** । **शबलं** चित्रम् । **नीलजालिकेति** । नीलवर्णपट्टवसनस्य कामशास्त्रप्रसिद्धं नाम । तस्यात्रौचित्यादुक्तिरित्याह—**नवोढे**त्यादि । प्रकृते तिमिरांशुकगलनं प्रति रागस्याहेतुत्वात् पूरयति–**अनन्तर**मिति । पुर इत्यस्य व्याख्यानम्–**पूर्वस्या**मित्यादि ।

१. भामह., २. ७९.

लोचनम्

हेतोः । **पुरोऽपि** पूर्वस्यां दिशि अग्रे च । **गलितं** प्रशान्तं पतितं च । रात्र्या करणभूतया समस्तं मिश्रितम् ; उपलक्षणत्वेन वा । **न लक्षितं** रात्रिप्रारम्भोऽसाविति न ज्ञातं, तिमिरसंवलितांशुदर्शने हि रात्रिमुखमिति लोकेन लक्ष्यते न तु स्फुट आलोके । नायिकापक्षे तु तयेति कर्तृपदम् । रात्रिपक्षे तु अपिशब्दो लक्षितमित्यस्यानन्तरः । अत्र च नायकेन पश्चाद्गतेन चुम्बनोपक्रमे पुरो नीलांशुकस्य गलनं पतनम् । यदि वा 'पुरोऽग्रे नायकेन तथा गृहीतं मुखमि'ति सम्बन्धः । तेनात्र व्यङ्ग्ये प्रतीतेऽपि न प्राधान्यम् । तथाहि नायकव्यवहारो निशाशशिनावेव शृङ्गारविभावरूपौ संस्कुर्वाणोऽलङ्कारतां भजते, ततस्तु वाच्याद्विभावीभूताद्रसनिःष्यन्दः । यस्तु व्याचष्टे—'तया निशयेति कर्तृपदं, न चाचेतनायाः कर्तृत्वमुपपन्नमिति शब्देनैवात्र नायकव्यवहार उन्नीतोऽभिधेय एव, न व्यङ्ग्य इत्यत एव समासोक्तिः' इति । स प्रकृतमेव ग्रन्थार्थमत्यजद्व्यङ्ग्येनानुगतमिति । एकदेशविवर्ति चेत्थं रूपकं स्यात्, 'राजहंसैरवीज्यन्त शरदैव सरोनृपाः' इतिवत्, न तु समासोक्तिः; तुल्यविशेषणाभावात् ।

बालप्रिया

तिमिरस्य सूक्ष्मांशूनां च सम्मिश्रणं प्रति रात्र्याः करणत्वसम्भवात्तयेति करणे तृतीयेत्याह—**करणभूतये**ति । तन्मिश्रणं प्रति रात्र्याः ज्ञापकत्वरूपोपलक्षणत्वसम्भवात् तयेत्युपलक्षणे तृतीया वेत्याह—**उपलक्षणत्वेन वे**ति । तस्या उपलक्षणत्वेन तया मिश्रितमिति सम्बन्धः । उपलक्षणेन वेति च पाठः । न लक्षितमित्येतदाकारं प्रदर्शयन् व्याचष्टे-**रात्री**त्यादि । **न ज्ञात**मिति । जनैरिति शेषः । लक्षितमिति भावे क्तः । गलितमित्यन्तं भिन्नं वाक्यम् । अत एव न लक्षितमिति हेतुहेतुमद्भावं बोधयितुमाह—**तिमिरे**त्यादि । **रात्रिपक्ष** इति । अनेनान्यत्र पुरोऽपीत्येव सम्बन्ध इति दर्शितम् । **अनन्तर** इति । तथा चापिशब्दो गलनालक्षणयोः समुच्चायक इत्यर्थः । कथं नीलाम्बरपुरोगलनमित्यतस्तदुपपादयति-**अत्र चे**त्यादि । चुम्बनौचित्यानुसारेणाह—**यदि वे**त्यादि । पुरश्शब्दस्य व्यवहितेन गृहीतमित्यनेनान्वय इति भावः । **तेने**ति । उक्तेनार्थद्वयेनेत्यर्थः । **व्यंग्ये** इति । नायकवृत्तान्तरूपव्यंग्ये इत्यर्थः । **अलङ्कारतां भजत** इत्यत्र हेतुगर्भं विशेषणम्—**निशे**त्यादि । **संस्कुर्वाणः** आरोपेणालङ्कुर्वाणः । एवं व्यंग्यस्य गुणीभूतत्वं प्रदर्श्य रसापेक्षया ध्वनित्वमप्यस्तीति दर्शयितुमाह—**तत** इत्यादि । **ततः** संस्कृतात् । **विभावीभूता**दिति । पूर्वं विभावभावमननुभवतः संस्करणानन्तरं प्राप्तविभावभावादित्यर्थः । **शब्देने**ति । निशाशशिशब्देनेत्यर्थः । **उन्नीतः** अनुमितः, कल्पितो वा । **अभिधेय एवे**ति । अभिधातिरिक्तव्यापाराभावादिति भावः । समासोक्तिरिति संज्ञाबलाच्चाभिधेयत्वनिश्चय इत्याह—**अत एवे**त्यादि । प्रत्याचष्टे—**स** इत्यादि । 'इति ग्रन्थार्थमि'ति सम्बन्धः । दूषणान्तरमाह—**एकदेशे**त्यादि । **इत्थमि**ति । नायकव्यवहारस्याभिधेयत्व इत्यर्थः । **इतिवदि**ति । यथाऽत्र सरो-

कानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात्। आक्षेपेऽपि व्यङ्ग्य-विशेषाक्षेपिणोऽपि वाच्यस्यैव चारुत्वं प्राधान्येन वाक्यार्थ आक्षेपोक्तिसामर्थ्यादेव ज्ञायते। तथाहि–तत्र शब्दोपारूढो विशेषाभिधानेच्छया प्रतिषेध-

लोचनम्

गम्यत इति चानेनाभिधाव्यापारनिरासादित्यलमवान्तरेण बहुना। नायिकाया नायके यो व्यवहारः स निशायां समारोपितः; नायिकायां नायकस्य यो व्यवहारः स शशिनि समारोपित इति व्याख्याने नैकशेषप्रसङ्गः। आक्षेप इति।

[1]प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः॥

तत्राद्यो यथा—

[2]अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते॥

बालप्रिया

नृपा इत्युक्त्यनुगुणतया राजहंसानां चामरत्वं शरदश्चामरग्राहिणीत्वं चार्थात् सिध्यति, तथा प्रकृते तिमिरांशुकपदानुगुणतया निशादेर्नायिकात्वादिकमत एकदेशविवर्तिरूपकं स्यादित्यर्थः। न तु समासोक्तिरित्यत्र हेतुमाह–तुल्येति। उक्तमुक्तिपदानुगुण्यं निराकरोति—**गम्यत** इत्यादि। **अनेनेति**। लक्षणवचनेनेत्यर्थः। उक्तिरिति तु प्रकृतविषयतयैवोपपद्यते यत्रोक्त इत्याद्यारम्भादिति भावः। **नायिकाया** इत्यादि। नायिकाया व्यवहारे नीलाम्बरगलनानवलोकनादिरूपो व्यापारः, नायकस्य तु वदनचुम्बनारम्भादिलक्षणः। **इति व्याख्यान** इति। एवमर्थस्य विवक्षितस्य व्याख्याने सतीत्यर्थः। **नैकशेषप्रसङ्ग** इति। नायिकानायकेत्यत्र "पुमांस्त्रिया"त्येकशेषप्रसङ्गो नेत्यर्थः। एवं समासोक्तौ व्यंग्योपस्कृतं वाच्यमेव प्रधानमतस्तत्र ध्वनिलक्षणस्य नातिव्याप्तिरिति प्रदर्श्याक्षेपेऽपि स एव प्रकार इत्याह वृत्तौ–'आक्षेपेऽपी' त्यादि। आक्षेपेऽपि 'वाच्यस्यैव चारुत्वं, प्राधान्येन ज्ञायत' इति सम्बन्धः। अत्र हेतुः 'वाक्यार्थे' इत्यादि। वाक्यार्थे विषये या आक्षेपोक्तिः, तस्याः सामर्थ्यादित्यर्थः। कथं तत्राक्षेपोक्तिरित्यत उक्तम्—'व्यंग्ये'ति। व्यंग्यो यो विशेषस्तदाक्षेपिणस्तदाकर्षित्वादित्यर्थः। 'शब्दोपारूढ' इति। शब्दवाच्य इत्यर्थः। लोचने भामहोक्ते तल्लक्षणाद्योदाहरणे दर्शयति—**प्रतिषेध** इति। **विशेषाभिधित्सया** व्यङ्ग्यभूतविशेषप्रतिपिपादयिषया। **यः इष्टस्य** वक्तुमिष्टस्य। **प्रतिषेध इव**

१. भामह., २. ६८. २. भामह., २. ६९.

लोचनम्

इति वक्ष्यमाणमरणविषयो निषेधात्माक्षेपः।तत्रेयदस्त्वित्येतदेवात्र म्रिये इत्याक्षिपत्सच्चारुत्वनिबन्धनमित्याक्षेप्येणाक्षेपकमलङ्कृतं सत्प्रधानम्। उक्तविषयस्तु यथा ममैव—

भो भोः किं किमकाण्ड एव पतितस्त्वं पान्थ कान्या गतिः
तत्तादृक्तृषितस्य मे खलमतिः सोऽयं जलं गूहते।
अस्थानोपनतामकालसुलभां तृष्णां प्रति क्रुध्य भोः
त्रैलोक्यप्रथितप्रभावमहिमा मार्गः पुनर्मारवः॥

बालप्रिया

प्रतिषेधाभासः इष्टत्वादेव। **सः आक्षेपः**। तस्य द्वैविध्यमाह—**वक्ष्यमाणेति**। अत्र वक्ष्यमाणविषये कथनस्यैव निषेधः। उक्तविषये तु क्वचिद्वस्तुनः, क्वचिद्वस्तुकथनस्येति बोध्यम्। **अहमिति**। प्रस्थानोन्मुखं प्रियतमं प्रति सोत्कण्ठायाः कस्याश्चिदुक्तिः। उत्सुकाऽहं त्वां क्षणमपि न ईक्षेय यदि, ततः तर्हि इयदेतावत् यदिपर्यन्तं वचनमेव अस्तु। अतः अन्येन ते अप्रियेणेति हेतुगर्भम्। **उक्तेन** वचनेन। किं न वक्ष्यामीत्यर्थः। अत्र लक्षणं योजयति—**इतीत्यादि**। **निषेधात्मेति**। किमुक्तेनेति कथननिषेधाभासात्मेत्यर्थः। अत्रापि वाच्यस्यैव प्राधान्यमिति दर्शयति—**तत्रे**त्यादि। **इत्येतदेव** इति वाच्यार्थ एव। **आक्षिपत्** व्यञ्जयत्। **आक्षेप्येण** मरणाध्यवसायरूपव्यङ्ग्येन। **आक्षेपक**मियदेवास्त्वित्यादिनोक्तम्।

**भो भो** इति। 'खलस्रुतिस्सेयमि'ति 'खलमतिस्सोऽयमि'ति च पाठः। अत्र पान्थमरुमार्गसम्बन्ध्यर्थो वाच्यः। प्रकृते दुष्प्रभुसेवावृत्तान्तस्तु व्यङ्ग्यः। भो भो इति वीप्सया बोधनीयं प्रत्यादरातिशयो द्योत्यते। **अकाण्डे**। अस्थान एव। **किं किं पतितः** अत्रागमनेन एतत्सेवनेन चाभिमतं फलं न सिध्यतीत्यर्थः। पान्थेत्यनेन सेवानभिज्ञत्वं द्योत्यते। चिरसेविना केनचिदेवमुक्ते पान्थः किञ्चित् कुपित आह—**कान्ये**त्यादि **खले**त्यन्तेन। हे खल! **तत्तादृग**तिशयेन **तृषितस्य** तृषा जलपिपासा धनलिप्सा च। **मे अन्यागति**राश्रयः **का** नैवेत्यर्थः। मार्गान्तरालाभादत्रागतः आश्रयणीयान्तरालाभादयं प्रभुराश्रितश्चेत्यर्थः। तच्छ्रुत्वाऽपर आह—**स्रुति**रित्यादि-**सा** त्वयाऽऽश्रिता। **इयं स्रुतिः** अयं मार्गः प्रभुश्च। **जलं** वारि धनं च। **गूहते** संवृणोति। कुतो वितरणसम्भावनेति भावः। 'खलमतिस्सोऽयमि'ति पाठे तु सोऽयमिति मारवमार्गं प्रभुं चोद्दिश्योक्तिः। गूहत इत्यन्तं पान्थस्यैव वचनमिति केचित्। खलेत्यनेन प्रकाशितं कोपमुपहसन् पर एवाह–**अस्थाने**त्यादि। **अकालसुलभां** यदा विषयस्य सुलभत्वं तदा तृष्णा न भवति, यदा पुनरसुलभत्वं तदा भवतीत्यकालसुलभत्वम्। **तृष्णां प्रति** तव तृष्णायै **क्रुध्य** न मां प्रतीति भावः। कथमस्थानोपनतत्वमित्यत्राह—**त्रैलोक्ये**त्यादि। **प्रभावमहिमा** अत्यन्तापकारित्वादिरत्यन्तलुब्धत्वादिश्च। **मारवः** मरुसम्बन्धी मार्गः, अथ च दुष्प्रभुः।

## लोचनम्

अत्र कश्चित्सेवकः प्राप्तः प्राप्तव्यमस्मात्किमिति न लभ इति प्रत्याशाविशस्यमानहृदयः केनचिदमुनाक्षेपेण प्रतिबोध्यते। तत्राक्षेपेण निषेधरूपेण वाच्यस्यैवासत्पुरुषसेवातद्वैफल्यतत्कृतोद्वेगात्मनः शान्तरसस्थायिभूतनिर्वेदविभावरूपतया चमत्कृतिदायित्वम्। वामनस्य तु 'उपमानाक्षेपः'[1] इत्याक्षेपलक्षणम्। उपमानस्य चन्द्रादेराक्षेपः; अस्मिन्सति किं त्वया कृत्यमिति। यथा—

तस्यास्तन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ यदि च तैः किं नाम नीलोत्पलैः।

## बालप्रिया

उक्तं व्यङ्ग्यमर्थमभिप्रेत्याह—**अत्रे**त्यादिना। 'कश्चित् सेवकः केनचित्प्रतिबोध्यत' इति सम्बन्धः। **प्राप्त** इत्यादिद्वयं सेवकविशेषणम्। **प्राप्तः** सेव्यं प्रभुं प्राप्तः। **प्राप्तव्यम्** धनादिकम्। **अस्मात्** प्रभोः। **किमिति**। कस्मात् कारणात्। **न लभे** इति वितर्कानन्तरजातया **प्रत्याशया** प्रतिक्षणोत्पन्नया आशया **विशस्यमानं हृदयं** यस्य स इति प्रतिबोधने हेतुः। **केनचित्** चिरसेविना केनापि कर्त्रा। **अमुना आक्षेपेण** असत्पुरुषसेवातद्वैफल्यादिरूपव्यंग्यविशेषप्रतिपिपादयिषया कृतेन किं किमकाण्ड एव पतित इति निषेधरूपेण। **प्रतिबोध्यत** इति। पूर्वमेव ज्ञातं प्रभोरत्यन्तलोभशीलत्वादिस्वभावं कारुण्यात्प्रतिबोध्यत इत्यर्थः। अत्रापि व्यंग्यस्य वाच्योपस्कारकत्वं दर्शयति—**तत्रे**त्यादि। **तत्र** उदाहरणे। **निषेधरूपेणेति**। किं किमिति पतनफलनिषेधरूपेणेत्यर्थः। आक्षेपेणेति तृतीयार्थो वैशिष्ट्यं वाच्यान्वयि, तत्सहितवाच्येत्यर्थः। **वाच्यस्यैवेति**। पान्थमरुमार्गादिवाच्यार्थ प्रत्येवेत्यर्थः। 'चमत्कृतिदायित्वमि'त्यनेन सम्बन्धः। कस्येत्यत्राह—**असदि**त्यादि। **असत्पुरुषः** दुष्प्रभुः। व्यंग्यस्येत्यर्थात्। अस्य व्यंग्यस्य वाच्यार्थचमत्कारसम्पादने हेतुमाह—**शान्ते**त्यादि। असत्पुरुषसेवावैफल्यं विभावः, तत्कृतोद्वेगोऽनुभावः। किं किमकाण्ड एव पतित इतीष्टपतनफलनिषेधरूपाक्षेपेणाक्षेप्यं यदसत्पुरुषसेवावैफल्यादि तेनालङ्कृतमाक्षेपकं तद्वाच्यमेव प्रधानमिति भावः। "प्राणा येन समर्पिता"इत्यादिवदत्राप्रस्तुतप्रशंसाप्यस्तीति तत्सङ्कीर्णोऽयमाक्षेप इत्यपि बोध्यम्। 'वामनस्येति लक्षणमि'त्यनेन सम्बन्धः। आक्षेपशब्दार्थं दर्शयति—**अस्मिन्नि**त्यादि। **अस्मिन्** उपमेयत्वाभिमते मुखादौ। **त्वया** मुखाद्युपमानेन चन्द्रादिना। **कृत्यं** फलम्।

**तस्या** इति। तदित्यनुभूतार्थकं दृशावित्यनेनापि विपरिणामेन योज्यम्। **सौम्यं** मधुरदर्शनमत एव सुभगं च। **किं** किं फलम्। **दृशाविति**। स्त इति शेषः। **यदी**ति सिद्धानुवादे। **तैः** प्रसिद्धैः। **तत्र** तस्मिन्। **ह्रीति**। अहो कष्टमित्यर्थः।

---

[1] वा. सू., ४. ३. २७.

रूपो य आक्षेपः स एव व्यङ्ग्यविशेषमाक्षिपन्मुख्यं काव्यशरीरम्। चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा। यथा—

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः।

लोचनम्

किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे
ही धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः॥

अत्र व्यङ्ग्योऽप्युपमार्थो वाच्यस्यैवोपस्कुरुते। किं तेन कृत्यमिति त्वपहस्तनारूप आक्षेपो वाच्य एव चमत्कारकारणम्। यदि वोपमानस्याक्षेपः सामर्थ्यादाकर्षणम्। यथा—

ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार॥

इत्यत्रेर्ष्याकलुषितनायकान्तरमुपमानमाक्षिप्तमपि वाच्यार्थमेवालङ्करोतीत्येषा तु समासोक्तिरेव। तदाह—**चारुत्वोत्कर्षे**ति। अत्रैव प्रसिद्धं दृष्टान्तमाह—**अनुरागवती**ति। तेनाक्षेपप्रमेयसमर्थनमेवापरिसमाप्तमिति मन्तव्यम्। तत्रोदाहरणत्वेन

बालप्रिया

**पुन**रिति। पुनरुक्तानामनुपादेयानां निष्फलानां वस्तूनां पार्वणचन्द्रादीनां रचनायां सृष्टौ विषये ये आरम्भा व्यापाराः तेषु। **अपूर्वः** अन्यत्राऽदृष्टः। **ग्रहः** अभिसन्धिविशेषः। अत्रापि व्यंग्यस्य गुणीभावं दर्शयति—**अत्रे**त्यादि। **उपमार्थः** चन्द्रादिसादृश्यरूपार्थः। **वाच्यस्यैवोपस्कुरुते** वाच्यार्थमेवालङ्करोति। अत्र हेतुमाह—**किमि**त्यादि। 'इति वाच्य आक्षेप एव चमत्कारकारणमि'ति सम्बन्धः। **अपहस्तनारूपः** निरसनरूपः। "उपमानाक्षेप" इति सूत्रमन्यथा व्याचष्टे—**यदि वे**त्यादि। **सामर्थ्याद**र्थसामर्थ्यात्। **आकर्षणं** व्यञ्जनम्। **ऐन्द्रमि**ति। पयोधरो मेघः स्तनश्च। **प्रसादयन्ती**त्यादि। शरत्काले हि चन्द्रस्य प्रसादातिशयो रवितापाधिक्यं च। अत्र लक्षणं योजयति—**अत्रे**त्यादि। **ईर्ष्ये**ति। ईर्ष्यया अक्षान्त्या कलुषितं यन्नायकान्तरं तद्रूपमुपमानमित्यर्थः। **आक्षिप्त**मिति। व्यञ्जितमित्यर्थः। नायिकाव्यञ्जनस्याप्युपलक्षणमिदम्। नायिकापक्षे नखक्षतस्थतया श्रुतमप्युपमानत्वमैन्द्रे धनुषि योजनीयमिन्द्रचापाभं नखक्षतं दधानेत्यर्थः। **एषे**त्यादि। वामनमते आक्षेपोदाहरणत्वेनोक्तं इदं भामहमते समासोक्त्युदाहरणमेवेत्यर्थः। **तदाहे**ति। वाच्यस्यैव प्राधान्यं न व्यंग्यस्येत्यस्मिन्नुक्तार्थे हेतुमाहेत्यर्थः। **अत्रैवे**ति। चारुत्वोत्कर्षकृतं प्राधान्यमित्यस्मिन्नर्थ एवेत्यर्थः। एवकारोऽलङ्कारोदाहरणत्वशङ्काशमनार्थः।

**अनुरागवती**ति। अनुरागो रक्तिमा प्रेमविशेषश्च। तत्पुरस्सरः तस्याः पुरस्सरः पूर्वकाले सम्मुखं च सन्निति द्वयोरर्थयोरध्यवसायेनैक्यं बोध्यमत एवाहो इत्यादेरुपपत्तिः। नायकपक्षे तु सम्मुखं वर्तमान इत्यर्थः। **तेने**ति। दृष्टान्तोक्तितया

अहो दैवगतिः कीदृक्तथापि न समागमः ॥

अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैव प्राधान्यविवक्षा ।

यथा च दीपकापह्नुत्यादौ व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि प्राधान्ये-

### लोचनम्

समासोक्तिश्लोकः पठितः । **अहो दैवगतिरिति** । गुरुपारतन्त्र्यादिनिमित्तोऽसमागम इत्यर्थः । **तस्यैवेति** । वाच्यस्यैवेति यावत् । वामनाभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोः युक्त्येदमेकमेवोदाहरणं व्यतरद्ग्रन्थकृत् । एषापि समासोक्तिर्वास्तु आक्षेपो वा, किमनेनास्माकम् । सर्वथालङ्कारेषु व्यङ्ग्यं वाच्ये गुणीभवतीति नः साध्यमित्यत्राशयोऽत्र ग्रन्थेऽस्मद्गुरुभिर्निरूपितः ।

एवं प्राधान्यविवक्षायां दृष्टान्तमुक्त्वा व्यपदेशोऽपि प्राधान्यकृत एव भवतीत्यत्र दृष्टान्तं स्वपरप्रसिद्धमाह—**यथा चेति** । **उपमाया इति** । उपमानोपमेयभावस्येत्यर्थः । तयेत्युपमया । दीपके हि 'आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते'[1] इति लक्षणम् ।

मणिः शाणोल्लीढः समरविजयी हेतिदलितः
कलाशेषश्चन्द्रः सुरतमृदिता बालललना ।
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥

### बालप्रिया

अलङ्कारोदाहरणत्वाभावेनेत्यर्थः । अपरिसमाप्तमेवेति योजना । **तत्रेति** । आक्षेपसमर्थन इत्यर्थः । नायकयोरसमागमे गम्यं हेतुं दर्शयति—**गुर्वित्यादि** । 'अनुरागे'त्याद्युदाहरणप्रदर्शनाभिप्रायमाह—**वामनेत्यादि** । **वामनाभिप्रायेण** उपमानप्रत्यायनपक्षरूपेण । **इदमिति** । अनुरागेत्यादिकमित्यर्थः । **अत्र ग्रन्थ** इति । चारुत्वेत्यादिप्राधान्यविवक्षेत्यन्तग्रन्थ इत्यर्थः ।

**दीपके हीति** । 'इत्यत्र दीपनकृतमेव चारुत्वमि'त्यन्वयः । दीपके हीत्यस्य स्थाने 'तथाही'ति च पाठः । भामहोक्तलक्षणमन्यत्तदुदाहरणञ्च दर्शयति—**आदीत्यादि** । अत्राद्यादयश्शब्दा वाक्यविषयाः । तत्रान्त्यदीपकमुदाहरति—**मणिरिति** ।

1. भामह., २. २५.

लोचनम्

इत्यत्र दीपनकृतमेव चारुत्वम् । 'अपह्नुतिरभीष्टस्य किञ्चिदन्तर्गतोपमा'[1] इति । तत्रापह्नुत्यैव शोभा । यथा—

नेयं[2] विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥ इति ।

एवमाक्षेपं विचार्योद्देशक्रमेणैव प्रमेयान्तरमाह—**अनुक्तनिमित्तायामिति** ।

एकदेशस्य[3] विगमे या गुणान्तरसंस्तुतिः ।
विशेषप्रथनायासौ विशेषोक्तिरिति स्मृता ॥

यथा—

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥

इयं चाचिन्त्यनिमित्तेति नास्यां व्यङ्ग्यस्य सद्भावः । उक्तनिमित्तायामपि वस्तुस्वभावमात्रत्वे पर्यवसानमिति तत्रापि न व्यङ्ग्यसद्भावशङ्का । यथा—

कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥

बालप्रिया

श्लोकोऽयं कुवलयानन्देऽप्युदाहृतः । **दीपनकृतमेवेति** । दीपनं नामानेकत्रैकधर्मान्वयः । एवकारेण व्यङ्ग्याया उपमाया व्यवच्छेदः । अपह्नुतेर्भामहीये लक्षणोदाहरणे दर्शयति—**अपह्नुतिरित्यादि** । अत्रापह्नुतिपदस्यावृत्तिर्बोध्या । **अभीष्टस्य** वर्ण्यत्वेनाभिमतस्य । **किञ्चिदन्तर्गता** व्यङ्ग्या उपमा यस्यास्सा । **अपह्नुतिः** निषेधः । अपह्नुतिः तन्नामालङ्कारः । **अपह्नुत्येति** । अपह्नवेनेति च पाठः । **शोभा** चारुत्वम् । **नेयमिति** । मुहुर्विरौतीत्यन्वयः । 'मदेन मुखरा आकृष्यमाणस्ये'ति च बिम्बप्रतिबिम्बतयोक्तिः । 'अनुक्तनिमित्तायामि'त्यादिग्रन्थस्य पूर्वग्रन्थेन सम्बन्धं दर्शयन्नवतारयति—**एवमित्यादि** । **उद्देशेति** । समासोक्त्याक्षेपेत्यादिपूर्वोक्तेरयर्थः । 'अनुक्तनिमित्ताया'मिति कथनस्य फलं वक्तुमुपक्रममाण आह—**एकेत्यादि** । एकेत्यादिलक्षणं भामहीयम् । **एकदेशस्य** तनुमत्त्वादेः कारणस्य । **गुणान्तरस्य** बलवत्त्वादिरूपकार्यस्य । **संस्तुतिः** कथनम् । **विशेषप्रथनाय** कस्यचिदतिशयस्य ख्यापनाय । **स** इति । **सः** प्रसिद्धः । अपिशब्दः शम्भुनेत्यत्रापि योज्यः । बलस्य तन्वाश्रयत्वात्तनुविगमे बलविगमो न्याय्यः । इह तु तनुविगमेऽपि बलसद्भाव उक्तः । तत्र च यत्किञ्चिन्निमित्तं भवेत्, परन्तु तदचिन्त्यमित्याह—**इयञ्चेति** । **वस्तुस्वभावमात्रत्वे पर्यवसानमिति** । नार्थान्तरव्यञ्जकत्वमित्यर्थः ।

**कर्पूर** इति । अवार्येत्यादिर्निमित्तोक्तिः । **तेनेति** । यस्मादुक्ते प्रकारद्वये व्यङ्ग्यसद्भावो

१. भामह., ३. २१. २. भामह., ३. २२. ३. भामह., ३. २३.

नाविवक्षितत्वान्न तया व्यपदेशस्तद्वदत्रापि द्रष्टव्यम्। अनुक्तनिमित्तायामपि विशेषोक्तौ—

आहूतोऽपि सहायैः ओमित्युक्त्वा विमुक्तनिद्रोऽपि।
गन्तुमना अपि पथिकः सङ्कोचं नैव शिथिलयति॥

इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात्प्रतीतिमात्रम्। न तु तत्प्रतीति-

लोचनम्

तेन प्रकारद्वयमवधीर्य तृतीयं प्रकारमाशङ्कते—**अनुक्तनिमित्तायामपी**ति। **व्यङ्ग्यस्ये**ति। शीतकृता खल्वार्तिरत्र निमित्तमिति भट्टोद्भटः, तदभिप्रायेणाह—**न त्वत्र काचिच्चारुत्वनिष्पत्ति**रिति। यत्तु रसिकैरपि निमित्तं कल्पितम्—'कान्तासमागमे गमनादपि लघुतरमुपायं स्वप्नं मन्यमानो निद्रागमबुद्ध्या सङ्कोचं नात्यजत्' इति तदपि निमित्तं चारुत्वहेतुतया नालङ्कारविद्भिः कल्पितम्, अपि तु विशेषोक्तिभाग एव न शिथिलयतीत्येवम्भूतोऽभिव्यज्यमाननिमित्तोपस्कृतश्चारुत्वहेतुः। अन्यथा तु विशेषोक्तिरेवेयं न भवेत्। एवमभिप्रायद्वयमपि साधारणोक्त्या ग्रन्थकृन्न्यरूपयन्न त्वौद्भटेनैवाभिप्रायेण ग्रन्थो व्यवस्थित इति मन्तव्यम्। **पर्यायोक्तेऽपी**ति।

पर्यायोक्तं[1] यदन्येन प्रकारेणाभिधीयते।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना॥

इति लक्षणम्। यथा—

शत्रुच्छेददृढेच्छस्य मुनेरुत्पथगामिनः।
रामस्यानेन धनुषा देशिता धर्मदेशना॥ इति।

बालप्रिया

नाऽस्ति, तस्मादित्यर्थः। **अत्र निमित्त**मिति। सङ्कोचाशिथिलने गम्यं निमित्तमित्यर्थः। **लघुतर**मिति। सङ्कोचापरित्यागलभ्यत्वान्निद्रागमस्येति भावः। **तदपि निमित्त**मिति। रसिकैः कल्पितं निद्रागमबुद्धिरूपं निमित्तमित्यर्थः। **अपि त्वि**त्यादि। 'न शिथिलयतीत्येवंभूतो विशेषोक्तिभाग एवे'ति योजना। **अभिव्यज्यमाननिमित्ते**ति। पूर्वोक्तनिमित्तेत्यर्थः। **अन्यथा त्वि**ति। व्यज्यमाननिमित्तोपस्काररूपविशेषविरहे त्वित्यर्थः। **अभिप्रायद्वय**मिति। उद्भटरसिकाभिप्रायद्वयमित्यर्थः। **साधारणोक्त्या** व्यङ्ग्यस्येत्याद्युक्त्या। भट्टोद्भटोक्तं लक्षणमाह—**पर्यायोक्त**मिति। तदिति शेषः। पर्यायशब्दार्थं दर्शयति—**अन्येने**ति। तमेव स्फुटयति—**वाच्ये**ति। **शत्रुच्छेद** इति। मुनेश्शत्रुसद्भावो नोचितः, तत्र तदुच्छेदेच्छा ततोऽप्यनुचिता, तस्या द्रढिमा अत्यन्तानुचितः; अत एवाह—**उत्पथे**ति। **रामस्य** भार्गवस्य। **अनेन** भीष्मेण कर्त्रा **धनुषा** करणेन। **देशिता** कृता। **धर्मदेशना** धर्मोपदेशः। अत्रापि वाच्यमेव प्रधा-

१. भामह., ३. ८.

निमित्ता काचिच्चारुत्वनिष्पत्तिरिति न प्राधान्यम्। पर्यायोक्तेऽपि यदि प्राधान्येन व्यङ्ग्यत्वं तद्भवतु नाम तस्य ध्वनावन्तर्भावः। न तु ध्वनेस्तत्रान्तर्भावः। तस्य महाविषयत्वेनाङ्गित्वेन च प्रतिपादयिष्यमाणत्वात्।

लोचनम्

अत्र भीष्मस्य भार्गवप्रभावाभिभावी प्रभाव इति यद्यपि प्रतीयते, तथापि तत्सहायेन देशिता धर्मदेशनेत्यभिधीयमानेनैव काव्यार्थोऽलंकृतः। अत एव पर्यायेण प्रकारान्तरेणावगमात्मना व्यङ्ग्येनोपलक्षितं सद्यदभिधीयते तदभिधीयमानमुक्तमेव सत्पर्यायोक्तमित्यभिधीयत इति लक्षणपदम्, पर्यायोक्तमिति लक्ष्यपदम्, अर्थालङ्कारत्वं सामान्यलक्षणं चेति सर्वं युज्यते। यदि त्वभिधीयत इत्यस्य बलाद्व्याख्यानमभिधीयते प्रतीयते प्रधानतयेति, उदाहरणं च 'भम धम्मिअ' इत्यादि, तदालङ्कारत्वमेव दूरे सम्पन्नमात्मतायां पर्यवसानात्। तदा चालङ्कारमध्ये गणना न कार्या। भेदान्तराणि चास्य वक्तव्यानि। तदाह—**यदि प्राधान्येने**ति। **ध्वनावि**ति। आत्मन्य-

बालप्रिया

नमिति दर्शयति-**अत्रे**त्यादि। **प्रतीयत** इति। व्यज्यत इत्यर्थः। **तत्सहायेने**ति। तेन प्रतीयमानार्थेनोपस्कृतेनेत्यर्थः। **अभिधीयमानेनैव** वाच्यार्थेनैव। **काव्यार्थः** वीररसः। **अत एवे**ति। 'अत एव इति सर्वं युज्यत' इति सम्बन्धः। व्यङ्ग्यस्य प्राधान्ये सर्वमेतदनुपपन्नं भवेदतो वाच्यस्यैव प्राधान्यमभ्युपेयमिति भावः। 'पर्यायोक्तं यदन्येन प्रकारेणाभिधीयत' इत्येतावन्मात्रं भामहोक्तं लक्षणम्; तत्रान्येन प्रकारेणेत्यस्य विवरणं 'पर्यायेणेत्याद्युपलक्षित'मित्यन्तम्। पर्यायशब्दार्थ एवान्येन प्रकारेणेत्यनेनोक्त इत्यावेदयितुमत्र **पर्याये**णेत्युक्तम्। अत एव तस्य व्याख्यानम्—**प्रकारान्तरे**णेति। कोऽसौ प्रकार इत्यत्राह—**अवगमात्मने**ति। अस्यैव विवरणम्—**व्यङ्ग्येने**ति। तृतीयाया अर्थमाह—**उपलक्षित**मिति। 'यदभिधीयते तदभिधीयमानं पार्यायोक्तमित्यभिधीयते' इति सम्बन्धः। 'अभिधीयमानमि'त्यस्य व्याख्यानम्—**उक्तमेव सदि**ति। **इति लक्षणपद**मिति। इत्यर्थकं लक्षणवाक्यमित्यर्थः। अनेन लक्षणवाक्येनैव व्यङ्ग्यानुगतस्य वाच्यस्य प्राधान्यं गम्यत इति भावः। **इति लक्ष्यपद**मिति। अन्वर्थेनानेनापि पूर्वोक्तं गम्यत इति भावः। **अर्थालङ्कारत्वं सामान्यलक्षण**मिति। व्यङ्ग्यस्य प्राधान्येऽलङ्कार्यत्वप्राप्त्यालङ्कारत्वभङ्गस्स्यादिति भावः। **सामान्यलक्षणं** सामान्यधर्मः। पक्षान्तरमाशङ्कते-**यदि** त्विति। **बला**दिति। शब्दपीडनेनेत्यर्थः। **प्रतीयते प्रधानतये**ति। अभीत्याभिमुख्ये। तच्च प्राधान्यनिबन्धनमिति भावः। अस्मिन् पक्षे ऽभिमतं न सिद्ध्येदित्याह—**तदे**त्यादि। ननु मा भूदलङ्कारत्वमित्यत्राह—**तदे**ति। न केवलमस्य प्रसिद्धस्वभावपरित्यागः, अप्रसिद्धावान्तरभेदकल्पनापि स्यादित्याह-**भेदे**त्यादि। प्रधानव्यङ्ग्यानां

न पुनः पर्यायोक्ते भामहोदाहृतसदृशे व्यङ्ग्यस्यैव प्राधान्यम्। वाच्यस्य तत्रोपसर्जनीभावेनाविवक्षितत्वात्। अपह्नुतिदीपकयोः पुनर्वाच्यस्य

लोचनम्

न्तर्भावादात्मैवासौ नालङ्कारस्स्यादित्यर्थः। तत्रेति। यादृशोऽलङ्कारत्वेन विवक्षितस्तादृशे ध्वनिर्नान्तर्भवति, न तादृगस्माभिर्ध्वनिरुक्तः। ध्वनिर्हि महाविषयः सर्वत्र भावाद्व्यापकः समस्तप्रतिष्ठास्थानत्वाच्चाङ्गी। न चालङ्कारो व्यापकोऽन्यालङ्कारवत्। न चाङ्गी, अलङ्कार्यतन्त्रत्वात्। अथ व्यापकत्वाङ्गित्वे तस्योपगम्येते, त्यज्यते चालङ्कारता, तर्ह्यस्मन्नय एवायमवलम्ब्यते केवलं मात्सर्यग्रहात्पर्यायोक्तवाचेति भावः। न चेयदपि प्राक्तनैर्दृष्टमपि त्वस्माभिरेवोन्मीलितमिति दर्शयति—**न पुनरिति**। भामहस्य यादृक्तदीयं रूपमभिमतं तादृगुदाहरणेन दर्शितम्। तत्रापि नैव व्यङ्ग्यस्य प्राधान्यं चारुत्वाहेतुत्वात्। तेन तदनुसारितया तत्सदृशं यदुदाहरणान्तरमपि कल्प्यते तत्र नैव व्यङ्ग्यस्य प्राधान्यमिति सङ्गतिः।

यदि तु तदुक्तमुदाहरणमनादृत्य 'भम धम्मिअ' इत्याद्युदाह्रियते, तदस्मच्छिष्यतैव। केवलं तु नयमनवलम्ब्यापश्रवणेनात्मसंस्कार इत्यनार्यचेष्टितम्। यदाहुरैतिहासिकाः—'अवज्ञयाप्यवच्छाद्य शृण्वन्नरकमृच्छति' इति। भामहेन ह्युदाहृतम्—

'गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः।
विप्रा न भुञ्जते' इति[1]।

बालप्रिया

बहुविधत्वादिति भावः। वृत्तौ ध्वन्यन्तर्भावमात्रमुक्तं, तस्यानलङ्कारत्वप्रसङ्गपर्यवसायितामाह—**आत्मनीति**। **यादृश** इति। उपसर्जनीभूतव्यङ्ग्यार्थ इत्यर्थः। अनन्तर्भावे हेतुमाह—**नेत्यादि**। **समस्तेति**। गुणादीत्यर्थः। **अन्यालङ्कारवदिति**। लोकप्रसिद्धकटकादिवदित्यर्थः। **अथेत्यादि**। पर्यायोक्तमित्ययमलङ्कारः व्यापकश्चाङ्गी चेत्युपगम्यत इति चेदित्यर्थः। **तर्हीति**। मात्सर्यग्रहणात्केवलं पर्यायोक्तवाचा अयमस्मन्नय एवावलम्ब्यत इति योजना। **इयदपीति**। व्यङ्ग्यस्य प्राधान्यमपीत्यर्थः। **इति दर्शयतीति**। 'न पुनरि'त्यादिग्रन्थेनोक्तमर्थं दर्शयतीत्यर्थः। **तत्रापीति**। भामहोदाहरणेऽपीत्यर्थः।

पक्षान्तरमाशङ्क्य परिहरति—**यदि त्वित्यादि**। **केवलन्तु नयमनवलम्ब्यापश्रवणेनेति**। यथाविधि गुरूपसदनपूर्वकं गुरुमुखादेव शास्त्रार्थग्रहणमकृत्वा श्रवणाभासेनेत्यर्थः। **अवज्ञयेति**। विद्यायां गुरौ चेति शेषः। **अवच्छाद्य** आत्मापह्नवं कृत्वा। **ऋच्छति** प्राप्नोति। किं तद्भामहोदाहरणमित्यत्राह—**भामहेनेति**। **गृहेष्विति**। 'अधीतिनः विप्राः यदन्नं न भुञ्जते वयं गृहेष्वध्वसु वा तदन्नं न

1. भामह., ३. ९.

प्राधान्यं व्यङ्ग्यस्य चानुयायित्वं प्रसिद्धमेव। सङ्करालङ्कारेऽपि यदालं·

लोचनम्

एतद्धि भगवद्वासुदेववचनं पर्यायेण रसदानं निषेधति। यत्स एवाह—'तच्च रसदाननिवृत्तये'[1] इति। न चास्य रसदाननिषेधस्य व्यङ्ग्यस्य किञ्चिच्चारुत्वमस्ति येन प्राधान्यं शङ्क्येत। अपि तु तद्व्यङ्ग्योपोद्बलितं विप्रभोजनेन विना यन्नभोजनं तदेवोक्तप्रकारेण पर्यायोक्तं सत्प्राकरणिकं भोजनार्थमलङ्करुते। न ह्यस्य निर्विषं भोजनं भवत्विति विवक्षितमिति पर्यायोक्तमलङ्कार एवेति चिरन्तनानामभिमत इति तात्पर्यम्। **अपह्नुतिदीपकयो**रिति। एतत्पूर्वमेव निर्णीतम्। अत एवाह—**प्रसिद्ध**मिति। प्रतीतं प्रसाधितं प्रामाणिकं चेत्यर्थः। पूर्वं चैतदुपमादिव्यपदेशभाजनमेव तद्यथा न भवतीत्यमुया छायया दृष्टान्ततयोक्तमप्युद्देशक्रमपूरणाय ग्रन्थशय्यां योजयितुं पुनरप्युक्तं 'व्यङ्ग्यप्राधान्याभावान्न ध्वनिरि'ति। छायान्तरेण वस्तु पुनरेकमेवोपमाया एव व्यङ्ग्यत्वेन ध्वनित्वाशङ्कनात्। यत्तु विवरणकृत्—दीपकस्य सर्वत्रोपमान्वयो नास्तीति बहुनोदाहरणप्रपञ्चेन विचारितवांस्तदनुपयोगि निस्सारं सुप्रतिक्षेपं च।

मदो जनयति प्रीतिं सानङ्गं मानभङ्गनम्।

बालप्रिया

भुञ्ज्महे' इत्यन्वयः। **वचन**मिति। चैद्यं प्रतीति शेषः। **पर्याये**णेति। अवगमात्मना प्रकारान्तरेणेत्यर्थः। **रसदानं निषेधती**ति। विषदाननिवृत्तिं बोधयतीत्यर्थः। चैद्यसङ्कल्पितमन्नयोजितविषदानं मे मा भवत्विति, भोजनं निर्विषं भवत्विति वा भगवतोऽभिप्रायस्सहृदयानां व्यङ्ग्यो भवतीत्यर्थः। 'चारुत्वं नास्ती'ति सम्बन्धः। वाच्यस्यैव चारुत्वमिति भावः। **तद्व्यङ्ग्ये**ति। उक्तव्यङ्ग्येत्यर्थः। **तदेव** वाच्यन्तदेव। **उक्तप्रकारे**णेति। अवगमात्मना व्यङ्ग्येनोपलक्षितत्वेनेत्यर्थः। **प्राकरणिकं भोजनार्थ**मिति। प्रकरणसिद्धमधीतिभुक्तशिष्टमन्नं भुञ्ज्महे इत्येवंभूतमर्थमित्यर्थः। व्यङ्ग्यस्याविक्षितत्वेन चाप्राधान्यमित्याह—**न ह्यस्ये**ति। **अस्य** वासुदेवस्य। **न विवक्षितं** चैद्यं प्रति न बुबोधयिषितम्। उपसंहरति—**इती**ति। प्रसिद्धपदं त्रिधा व्याचष्टे—**प्रतीत**मित्यादि। दीपकापह्नुत्यादाविति पूर्वोक्तस्यैवात्रकथनेन पौनरुक्त्यमित्याशङ्कायां स्वरूपैक्येऽपि प्रकारभेदान्न पौनरुक्त्यमित्याह—**पूर्व**मित्यादि। **इत्यमुया छाय**येति। इत्यनेन प्रकारेणेत्यर्थः। 'व्यङ्ग्यप्राधान्याभावान्न ध्वनिरिति पुनरप्युक्तमि'ति सम्बन्धः। **वस्त्वि**ति। व्यङ्ग्यत्वेऽप्युपमाया अप्राधान्यरूपं वस्त्वित्यर्थः। उपमान्वयप्रदर्शनेन सुप्रतिक्षेपत्वमाह—**मद** इत्यादि। **मदः** विशिष्टविषयनिषेवाज्जनितो हर्षः। **प्रीतिं** विषयाभिषङ्गम्। **मानः** चित्तसमुन्नतिः, तद्**भञ्जन**मित्य-

१. 'श्रृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इति कोशः।

२. भामह., ३. २७.

लोचनम्

स प्रियासङ्गमोत्कण्ठां सासह्यां मनसः शुचम् ॥ इति ।

अत्राप्युत्तरोत्तरजन्यत्वेऽप्युपमानोपमेयभावस्य सुकल्पत्वात् । न हि क्रमिकाणां नोपमानोपमेयभावः । तथा हि—

राम इव दशरथोऽभूद्दशरथ इव रघुरजोऽपि रघुसदृशः ।
अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥

इति न न भवति । तस्मात्क्रमिकत्वं समं वा आकरणिकत्वमुपमां निरुणद्धीति कोऽयं त्रास इत्यलं गर्दभीदोहानुवर्तनेन । सङ्करालङ्कारेऽपीति ।

विरुद्धालंक्रियोल्लेखे समं तद्वृत्त्यसम्भवे ।
एकस्य च ग्रहे न्यायदोषाभावे च सङ्करः[1] ॥

इति लक्षणादेकः प्रकारः । यथा ममैव—

शशिवदनासित[2]सरसिजनयना सितकुन्ददशनपङ्क्तिरियम् ।
गगनजलस्थलसम्भवहृद्याकारा कृता विधिना ॥ इति ।

अत्र शशी वदनमस्याः तद्वद्वा वदनमस्या इति रूपकोपमोल्लेखाद्युगपद्द्वयासम्भवादेकतरपक्षत्यागग्रहणे प्रमाणाभावात्सङ्कर इति व्यङ्ग्यवाच्यताया एवानिश्चयात्का ध्वनिसम्भावना । योऽपि द्वितीयः[3] प्रकारः—शब्दार्थालङ्काराणामेकत्रभाव इति तत्रापि प्रतीयमानस्य का शङ्का । यथा—स्मर स्मरमिव प्रियं रमयसे यमालिङ्गनात् इति ।

बालप्रिया

नङ्गविशेषणम् । **उत्तरे**ति । उत्तरोत्तरस्य पूर्वपूर्वजन्यत्वेऽपीत्यर्थः । अनेन क्रमिकत्वमुक्तम् । **उपमाने**ति । मनोविकारजनकत्वेन तेषां साम्यस्य कल्पयितुं शक्यत्वादित्यर्थः । क्रमिकाणामुपमानोपमेयभावं दर्शयति—**राम इवे**ति । अत्र गुणविशेषवत्वेन साम्यं बोध्यम् । **न न भवती**ति । भवत्येवेत्यर्थः । सोपहासमुपसंहरति—**तस्मादि**त्यादि । सङ्करश्चतुर्विधः—सन्देहसङ्करादिभेदादिति; तेषां लक्षणानि भट्टोद्भटमतानुरोधेन दर्शयति—**विरुद्धे**ति । विरुद्धयोरलङ्क्रिययोः उल्लेखः उल्लासः तस्मिन् सति । **समं** युगपत् । **तद्वृत्त्यसम्भव** इति । तयोर्वर्तनस्यासम्भव इत्यर्थः । **एकस्य ग्रहे** तयोरेकस्यान्यत्यागेन ग्रहणे । **न्यायः** साधकं मानम् । **दोषः** बाधकम् । **शशी**ति । 'शशिवदने'त्यादि विशेषणत्रयं क्रमेण 'गगने'त्यादेरुपपादकम् । **एके**ति । एकतरस्य पक्षस्य त्यागे ग्रहणे चेत्यर्थः । **इती**ति हेतौ । **व्यङ्ग्ये**त्यादि । को व्यङ्ग्यः को वाच्य इत्यनिश्चयाद्व्यङ्ग्यप्राधान्यकृतध्वनित्वसम्भावनापि

१. सन्देहसङ्कर इत्यर्थः ।

२. 'असितसरसिजनयने'ति पदच्छेदः 'इन्दीवरेण नयनं' इति महाकविकालिदासोक्तेः ।

३. एकवाचकानुप्रवेशरूपः । वाचकत्वं चात्र बोधकत्वम् ।

लोचनम्

अत्रैव यमकमुपमा च। तृतीयः प्रकारः—यत्रैकत्र वाक्यांशेऽनेकोऽर्थालङ्कारस्तत्रापि द्वयोः साम्यात्कस्य व्यङ्ग्यता। यथा—

तुल्योदयावसानत्वाद्गतेऽस्तं[1] प्रति भास्वति।
वासाय वासरः क्लान्तो विशतीव तमोगुहाम्॥ इति।

अत्र हि स्वामिविपत्तिसमुचितव्रतग्रहणहेवाकिकुलपुत्रकरूपणमेकदेशविवर्तिरूपकं दर्शयति। उत्प्रेक्षा चेवशब्देनोक्ता। तदिदं प्रकारद्वयमुक्तम्—

शब्दार्थवर्त्यलङ्कारा वाक्य एकत्र वर्तिनः।
सङ्करश्चैकवाक्यांशप्रवेशाद्वाभिधीयते॥ इति च।

चतुर्थस्तु प्रकारः यत्रानुग्राह्यानुग्राहकभावोऽलङ्काराणाम्। यथा—

प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः॥

अत्र मृगाङ्गनावलोकनेन तदवलोकनस्योपमा यद्यपि व्यङ्ग्या, तथापि वाच्यस्य सा सन्देहालङ्कारस्याभ्युत्थानकारिणीत्वेनानुग्राहकत्वाद्गुणीभूता, अनुग्राह्यत्वेन हि सन्देहे पर्यवसानम्[2]। यथोक्तम्—

परस्परोपकारेण यत्रालङ्कृतयः स्थिताः।
स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि सङ्करः॥

बालप्रिया

केत्यर्थः। एकवाक्यवर्तनरूपं सङ्करं दर्शयित्वा, एकवाक्यांशसमावेशरूपं सङ्करं दर्शयति—**यत्रे**त्यादि। **साम्याद्**िति। वाच्यत्वेन सादृश्यादित्यर्थः। **स्वामी**ति। स्वामिनो विपत्तौ सत्यां समुचितं यद्व्रतग्रहणं तत्र हेवाकी उद्युक्तः यः कुलपुत्रकः तद्रूपणं वासरविषयकं कर्म। तमोगुहामित्येकदेशविवर्तिरूपकं कर्तृ। भास्वतस्स्वामित्वमतस्तद्गमनस्य विपत्तित्वं गुहानिवासस्य व्रतग्रहणत्वं तत्प्रवेशस्य तदर्थव्यापारत्वञ्च तमोगुहामिति शाब्देन रूपकेण गम्यत इति भावः। उक्तयोर्भेदयोस्सम्मतिमाह—**तदिदम्**इत्यादि। अनया कारिकया उक्तयोर्भेदयोर्लक्षणं प्रदर्शितम्। वृत्तिग्रन्थानुरोधेन वाच्यव्यङ्ग्ययोरनुग्राह्यानुग्राहकभावापन्नं सङ्करमुदाहरति—**प्रवाते**ति। **तये**ति। श्रीपार्वत्येत्यर्थः। नन्वनुग्राहकत्वेऽपि कुतो गुणीभाव इत्यत आह—**अनुग्राह्यत्वेने**ति। सन्देहस्येति शेषः। **पर्यवसान**मिति। अनुग्राहिकाया व्यङ्ग्योपमाया इति शेषः।

---

१. भामह., ३. ४८.

२. तथाच सन्देहोपपादकत्वादुपमाया अङ्गत्वं, उपमया जनितायां चमत्कृतौ सन्देहेन साह्यकरणात् तस्यापि तदङ्गत्वमिति परस्परोपकारकरणात् परस्परमनुग्राह्यानुग्राहकभाव इत्यर्थः। अत एवोक्तम्—'परस्परोपकारेणे'त्यादि।

**कारोऽलङ्कारान्तरच्छायामनुगृह्णाति, तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम्। अलङ्कारद्वयसम्भावनायां तु वाच्यव्यङ्ग्ययोः समं प्राधान्यम्। अथ वाच्योपसर्जनीभावेन व्यङ्ग्यस्य तत्रावस्थानं तदा**

लोचनम्

तदाह—**यदालङ्कार** इत्यादि। एवं चतुर्थेऽपि प्रकारे ध्वनिता निराकृता। मध्यमयोस्तु व्यङ्ग्यसम्भावनैव नास्तीत्युक्तम्। आद्ये तु प्रकारे 'शशिवदने'त्याद्युदाहृते कथञ्चिदस्ति सम्भावनेत्याशङ्क्य निराकरोति—**अलङ्कारद्वयेति**। **सममिति**। द्वयोरप्यान्दोल्यमानत्वादिति भावः। ननु यत्र व्यङ्ग्यमेव प्राधान्येन भाति तत्र किं कर्तव्यम्। यथा—

होइ ण गुणाणुराओ खलाणँ णवरं पसिद्धिसरणाणम्।
किर पहिणुसइ ससिमणं चन्दे पिआमुहे दिट्ठे॥

अत्रार्थान्तरन्यासस्तावद्वाच्यत्वेनाभाति, व्यतिरेकापह्नुती[1] तु व्यङ्ग्यत्वेन प्रधानतयेत्यभिप्रायेणाशङ्कते—**अथेति**। तत्रोत्तरम्—**तदा सोऽपीति**। सङ्करालङ्कार

बालप्रिया

अस्मिंश्चतुर्थे भेदे ध्वन्यभावपरतया वृत्तिग्रन्थमवतारयति—**तदाहेति**। **आन्दोल्यमानत्वादिति**। वाच्यत्वव्यङ्ग्यत्वाभ्यां सन्दिह्यमानत्वादित्यर्थः। **नन्वित्यादि**। **यत्रेति**। यादृशे सङ्करालङ्कार इत्यर्थः। **होइ** इति।

भवति न गुणानुरागः खलानां केवलं प्रसिद्धिशरणानाम्।
किल प्रस्नौति शशिमणिः चन्द्रे न प्रियामुखे दृष्टे॥ इति च्छाया।

**गुणानुरागः** परैर्वर्ण्यमानेष्वपि केषाञ्चिद्गुणेषु प्रीतिः। **न भवतीत्यत्र** हेतुमाह—**प्रसिद्धीति**। वस्तुतत्त्वावमर्शरहितानामिति भावः। उक्तं सामान्यं विशेषेण समर्थयते—**किलेत्यादि**। 'शशिमणिः चन्द्रे दृष्टे प्रस्नौति किल; प्रियामुखे दृष्टे न प्रस्नौती'त्यन्वयः। यदि शशिमणेर्गुणानुरागस्स्यात्तदा प्रियामुखदर्शने कथं न निःष्यन्देतेति भावः। **व्यतिरेकेति**। चन्द्रापेक्षया प्रियामुखस्याधिकगुणवत्त्वव्यञ्जनाद्व्यतिरेकः; अयं न चन्द्रः प्रियामुखमेव चन्द्र इत्यर्थस्य ख्यापनादपह्नुतिश्चेति भावः। **व्यङ्ग्यत्वेनेत्यादि**। व्यङ्ग्यत्वेन प्रधानतया च भात इत्यर्थः। सङ्करोक्तेरेव ध्वनित्व-

---

१. उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम्।
व्यतिरेकं तमिच्छन्ति विशेषापादनाद्यथा॥ भामह., २. ७५.
अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा।
भूतार्थापह्नवादस्याः क्रियते चाभिधा यथा॥ भामह., ३. २१.
इति तयोर्लक्षणमवसेयम्।

**सोऽपि ध्वनिविषयोऽस्तु, न तु स एव ध्वनिरिति वक्तुं शक्यम् । पर्या-योक्तनिर्दिष्टन्यायात् । अपि च सङ्करालङ्कारेऽपि च क्वचित् सङ्करोक्तिरेव**

लोचनम्

एवायं न भवति, अपि त्वलङ्कारध्वनिनामायं ध्वनेर्द्वितीयो भेदः । यच्च पर्यायोक्ते निरूपितं तत्सर्वमत्राप्यनुसरणीयम् । अथ सर्वेषु सङ्करप्रभेदेषु व्यङ्ग्यसम्भावनानिरास-प्रकारं साधारणमाह—**अपि चेति** । 'क्वचिदपि सङ्करालङ्कारे चे'ति सम्बन्धः, सर्व-भेदभिन्न इत्यर्थः । सङ्कीर्णता हि मिश्रत्वं लोलीभावः, तत्र कथमेकस्य प्राधान्यं क्षीर-जलवत् ।

अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ।
अप्रस्तुतप्रशंसा सा त्रिविधा परिकीर्त्तिता ॥[1]

अप्रस्तुतस्य वर्णनं प्रस्तुताक्षेपिण इत्यर्थः । स चाक्षेपस्त्रिविधो भवति—सामा-न्यविशेषभावात्, निमित्तनिमित्तिभावात्, सारूप्याच्च । तत्र प्रथमे प्रकारद्वये प्रस्तु-ताप्रस्तुतयोस्तुल्यमेव प्राधान्यमिति प्रतिज्ञां करोति–**अप्रस्तुतेत्यादिना प्राधान्यमि-त्यन्तेन** । तत्र सामान्यविशेषभावेऽपि द्वयी गतिः—सामान्यमप्राकरणिकं शब्देनो-च्यते, गम्यते तु प्राकरणिको विशेषः स एकः प्रकारः । यथा—

अहो संसारनैर्घृण्यमहो दौरात्म्यमापदाम् ।
अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः ॥

अत्र हि दैवप्राधान्यं सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितं सत्प्रकृते वस्तुनि क्वापि विनष्टे विशेषात्मनि पर्यवस्यति । तत्रापि विशेषांशस्य सामान्येन व्याप्तत्वाद्व्यङ्ग्य-विशेषवद्वाच्यसामान्यस्यापि प्राधान्यम्, न हि सामान्यविशेषयोर्युगपत्प्राधान्यं विरु-ध्यते । यदा तु विशेषोऽप्राकरणिकः प्राकरणिकं सामान्यमाक्षिपति तदा द्वितीयः

बालप्रिया

बुद्धिनिवर्तकत्वं वृत्तावुक्तं, तत्कथमित्यत्राह—**सङ्कीर्णतेति** । 'मिश्रत्वमि'त्यस्य विवर-णम्—**लोलीभाव** इति । आत्यन्तिकस्संश्लेष इत्यर्थः । **अधिकारादि**ति भामही-यमिदम् । **अधिकारः** प्रस्तुतत्वम् । सारार्थं व्याचष्टे–**अप्रस्तुतस्य वर्णनमि**ति। स्तुतिशब्दार्थकथनं वर्णनमिति । **द्वयी गतिरि**ति । प्रकारद्वयमित्यर्थः । **स** इति । सामान्याद्विशेषप्रतीतिरूप इत्यर्थः । **दैवप्राधान्यमि**ति । 'दैवस्वातन्त्र्यमि'ति च पाठः । **सर्वत्र सामान्यरूप**मिति । संसारनैर्घृण्यादावनुगतमित्यर्थः । सर्वस्य तदा-यत्तस्थितित्वादिति भावः । **क्वापी**ति । प्रेयसीपुत्रादिरूप इत्यर्थः । अत्र व्यङ्ग्यवा-च्ययोस्समप्राधान्यं दर्शयति—**तत्रापी**त्यादि । ननु व्यङ्ग्यस्य विशेषस्यास्तु प्राधान्यं, वाच्यस्य सामान्यस्य तत्कथं स्यादित्यत्राह—**विशेषांशस्ये**ति । **प्राधान्यमि**ति ।

1. भामह., ३. २९.

ध्वनिसम्भावनां निराकरोति। अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्तनिमित्तिभावाद्वा अभिधीयमानस्याप्रस्तुतस्य प्रतीयमानेन प्रस्तुतेनाभिसम्बन्धः तदाभिधीयमानप्रतीयमानयोः सममेव प्राधान्यम्। यदा तावत्सामान्यस्याप्रस्तुतस्याभिधीयमानस्य प्राकरणिकेन विशेषेण प्रतीयमानेन सम्बन्धस्तदा विशेषप्रतीतौ सत्यामपि प्राधान्येन तत्सामान्येनाविनाभावात्सामान्यस्यापि प्राधान्यम्। यदापि विशेषस्य सामान्यनिष्ठत्वं तदापि सामान्यस्य प्राधान्ये सामान्ये सर्वविशेषाणामन्तर्भावाद्विशेष-

लोचनम्

प्रकारः। यथा—

> एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं पाथसो
> यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि।
> अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-
> स्तत्रोड्डीय गतो हहेत्यनुदिनं निद्राति नान्तः शुचा॥

अत्रास्थाने महत्त्वसम्भावनं सामान्यं प्रस्तुतम्, प्रस्तुतं तु जलबिन्दौ मणित्वसम्भावनं विशेषरूपं वाच्यम्। तत्रापि सामान्यविशेषयोर्युगपत्प्राधान्ये न विरोध इत्युक्तम्। एवमेकः प्रकारो द्विभेदोऽपि विचारितः, **यदा तावदि**त्यादिना **विशेषस्यापि प्राधान्य**मित्यन्तेन। एतमेव न्यायं निमित्तनैमित्तिकभावेऽतिदिशंस्तस्यापि द्विप्रकारतां

बालप्रिया

विशेषप्राधान्यनान्तरीयकत्वं सामान्यप्राधान्यस्येति भावः। **न हि विरुध्यत** इति। यथा 'रक्तं पटं वये'त्यादौ द्वयोस्त्रयाणां वा विधिरिति भावः। **एतदि**ति। **मुखादि**ति। आरम्भत इत्यर्थः। प्रथमतस्सम्भूतमिति यावत्। 'एतद्वक्ष्यमाणं शृणु' इति सम्बन्धः। मुक्तामणिरित्यमंस्त यत् एतत्तस्य जडस्य कियत् वक्ष्यमाणापेक्षया अत्यल्पमेवेत्यर्थः। सादृश्यनिमित्तकस्तद्भ्रमस्य सम्भवाज्जलकणे मुक्तामणिभ्रमो भवेदिति भावः। **शृण्वि**ति। **अस्मात्** पूर्वोक्तात्। अन्यदपि त्वं शृणु; किं तदित्यत्राह—**अङ्गुली**ति। यद्वा—मुखादिति कस्यचित् प्रतारकस्य वदनादित्यर्थः। शृण्वन् इति छेदः। **यदि**ति। यस्मादित्यर्थः। **अस्मादपी**ति। अधिकमस्तीति शेषः। तदाह—**अङ्गुली**ति। स जड इत्यत्राप्यनुषज्यते। जातमुक्तामणिभ्रमो जड इत्यर्थः। **तत्रे**ति। तस्मिञ्जलकण इत्यर्थः। 'कुत्राप्युड्डीये'ति पाठे तु तस्मिन्निति शेषो बोध्यः। **शनैः** मुक्तामणिबुध्या मन्दम्। **आदीयमाने** अङ्गुल्यग्रस्य लघुक्रियया अल्पचालनेन प्रविलयिनि अङ्गुलावेव लग्न इत्यर्थस्तथा सति। **उड्डीये**ति। अयमिति शेषः। तस्यादर्शनान्ममायं मुक्तामणिः खमुत्पत्य गत इति मत्वा अन्तःशुचा न निद्रातीत्यर्थः।

स्यापि प्राधान्यम् । निमित्तनिमित्तिभावे चायमेव न्यायः । यदा तु सारू-

लोचनम्

दर्शयति—**निमित्ते**ति । कदाचिन्निमित्तमप्रस्तुतं सदभिधीयमानं नैमित्तिकं प्रस्तुतमाक्षिपति । यथा—

ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च ।
ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः ॥

अत्राप्रस्तुतं सुहृद्बान्धवरूपत्वं निमित्तं सज्जनासक्त्या वर्णयति नैमित्तिकीं श्रद्धेयवचनतां प्रस्तुतामात्मनोऽभिव्यङ्क्तुम् ; तत्र नैमित्तिकप्रतीतावपि निमित्तप्रतीतिरेव प्रधानीभवत्यनुप्राणकत्वेनेति व्यङ्ग्यव्यञ्जकयोः प्राधान्यम् । कदाचित्तु नैमित्तिकमप्रस्तुतं वर्ण्यमानं सत्प्रस्तुतं निमित्तं व्यनक्ति । यथा सेतौ—

सग्गं अपारिजाअं कोत्थुहलच्छिरहिअं महुमहस्स उरम् ।
सुमरामि महणपुरओ अमुद्धअन्दं च हरजडापब्भारम् ॥

अत्र जाम्बवान् कौस्तुभलक्ष्मीविरहितहरिवक्षःस्मरणादिकमप्रस्तुतनैमित्तिकं वर्णयति प्रस्तुतं वृद्धसेवाचिरजीवित्वव्यवहारकौशलादिनिमित्तभूतं मन्त्रितायामुपादेयमभिव्यङ्क्तुम् । तत्र निमित्तप्रतीतावपि नैमित्तिकं वाच्यभूतम् ; प्रत्युत तन्निमित्तानुप्राणितत्वेनोद्धुरकन्धरीकरोत्यात्मानमिति समप्रधानतैव वाच्यव्यङ्ग्ययोः । एवं द्वौ प्रकारौ प्रत्येकं द्विविधौ विचार्य तृतीयः प्रकारः परीक्ष्यते सारूप्यलक्षणः । तत्रापि द्वौ प्रकारौ—अप्रस्तुतात्कदाचिद्वाच्याच्चमत्कारः, व्यङ्ग्यं तु तन्मुखप्रेक्षम् । यथास्मदुपाध्यायभट्टेन्दुराजस्य—

प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः
स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यामपि ।
तस्यास्य स्मितमात्रकेण जनयन् प्राणापहारक्रियां
भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥

बालप्रिया

**अत्रास्थान** इति । जडानामिति शेषः । **ये** इति । **अपरः** उक्तविपरीतवृत्तिः । **निमित्तं** श्रद्धेयवचनतानिमित्तम् । **सज्जनासक्त्ये**ति । सज्जनबहुमत्येत्यर्थः । **नैमित्तिके**ति । श्रद्धेयवचनतेत्यर्थः । **निमित्तप्रतीतिरेवे**ति । न हि वक्तुस्तथाविधबान्धवत्वादिप्रतीतिं विना श्रद्धेयवचनत्वं प्रतीतिपथमवतरेदिति भावः । **सग्गमिति**।

स्वर्गमपारिजातं कौस्तुभलक्ष्मीरहितं मधुमथनस्योरः ।
स्मरामि मथनात्पुरतः असुग्धचन्द्रं च हरजटाप्राग्भारम् ॥ इति छाया ।

वृद्धेत्यादित्रयं प्रस्तुतमित्यस्य विशेषणम् । **उद्धुरकन्धरीकरो**तीति । प्रधानीकरोतीत्यर्थः । **तन्मुखप्रेक्ष**मिति । तथा च अप्रधानमिति भावः । **प्राणा** इति ।

लोचनम्

अत्र यद्यपि सारूप्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते, तथाप्यप्रस्तुतस्यैव वेतालवृत्तान्तस्य चमत्कारकारित्वम् । न ह्यचेतनोपालम्भवदसम्भाव्यमानोऽयमर्थो न च न हृद्य इति वाच्यस्यात्र प्रधानता । यदि पुनरचेतनादिनात्यन्तासम्भाव्यमानतदर्थविशेषणेनाप्रस्तुतेन वर्णितेन प्रस्तुतमाक्षिप्यमाणं चमत्कारकारि तदा वस्तुध्वनिरसौ । यथा ममैव—

> भावव्रात हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्
> भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य संक्रीडसे ।
> स त्वामाह जडं ततः सहृदयम्मन्यत्वदुःशिक्षितो
> मन्येऽमुष्य जडात्मता स्तुतिपदं त्वत्साम्यसम्भावनात् ॥

कश्चिन्महापुरुषो वीतरागोऽपि सरागवदिति न्यायेन गाढविवेकालोकतिरस्कृततिमिरप्रतानोऽपि लोकमध्ये स्वात्मानं प्रच्छादयँल्लोकं च वाचालयन्नात्मन्यप्रतिभासमेवाङ्गीकुर्वंस्तेनैव लोकेन मूर्खोऽयमिति यदवज्ञायते तदा तदीयं लोकोत्तरं चरितं प्रस्तुतं

बालप्रिया

'त्वमुत्पादित' इति 'सपर्या पुर' इति च पाठः । **सारूप्यवशेने**ति । प्राणसमर्पणाद्युपकर्तरि अपकर्तृत्वरूपसादृश्यबलेनेत्यर्थः । **प्रस्तुतस्यैवे**ति । वाच्यस्येति शेषः । अत्र हेतुमाह—**न ही**त्यादि । **न च न हृद्य** इति । हृद्य एवेत्यर्थः । **यदी**त्यादि । 'अचेतनादिना आक्षिप्यमाणमि'ति योजना । अचेतनादिनेत्यस्य विशेषणानि—**अत्यन्ते**त्यादीनि । अत्यन्तमसम्भाव्यमानानि **तदर्थस्य** अप्रस्तुतार्थस्य विशेषणानि यत्र तेन । **वस्तुध्वनिरसा**विति । नायमप्रस्तुतप्रशंसालङ्कार इति भावः ।

**भावे**ति । भावानां चन्द्रोद्यानादिपदार्थानां व्रातः सार्थः हे भाव व्रात । त्वं तथा संक्रीडसे यदिति सम्बन्धः । ततः एवं संक्रीडनाद्धेतोः । **सहृदयम्मन्यत्वेन** सहृदयोऽहमित्यभिमानेन दुःशिक्षितः दुर्ललितः । **सः** जनः । **त्वां** जडमाह । परन्तु **अमुष्य** एवंवदतो जनस्य । **या जडात्मता** जडोऽसीत्युच्यमानता **सा त्वत्साम्यसम्भावनात्** त्वत्साम्यापाताद्धेतोः । 'अमुष्य स्तुतिपदं मन्ये' इति सम्बन्धः । अत्रादौ प्रस्तुतं व्यङ्ग्यमर्थं दर्शयति—**कश्चिदि**त्यादि **प्रकाश्यत** इत्यन्तेन । 'न्यायेने'त्यस्य 'प्रच्छादयन्नि'त्यादिना सम्बन्धः । यथोक्तम्—

> "ज्ञाततत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् ।
> ज्ञाततत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवदि"ति ॥

**गाढे**ति । गाढो यो विवेक एवालोकः तेन तिरस्कृतं तिमिरप्रतानं मोहान्धकारसमूहो यस्य सः । **वाचालयन्नि**ति । आत्मावमानगर्भिता बह्वीर्वाचः प्रवर्तयन्नित्यर्थः । **आत्मनि** स्वस्मिन् । **अप्रतिभासं** जनैरारोपितमवबोधम् । अथ

**प्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः सम्बन्धस्तदाप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तःपातः । इतरथा**

व्यङ्ग्यतया प्राधान्येन प्रकाश्यते । जडोऽयमिति ह्युद्यानेन्दूदयादिर्भावो लोकेनावज्ञायते, स च प्रत्युत कस्यचिद्विरहिण औत्सुक्यचिन्तादूयमानमानसतामन्यस्य प्रहर्षपरवशतां करोतीति हठादेव लोकं यथेच्छं विकारकारणाभिर्नर्तयति । न च तस्य हृदयं केनापि ज्ञायते कीदृगयमिति, प्रत्युत महागम्भीरोऽतिविदग्धः सुष्ठुगर्वहीनोऽतिशयेन क्रीडाचतुरः स यदि लोकेन जड इति तत एव कारणात्प्रत्युत वैदग्ध्यसम्भावननिमित्तात्सम्भावितः, आत्मा च यत एव कारणात्प्रत्युत जाड्येन सम्भाव्यस्तत एव सहृदयः सम्भावितस्तदस्य लोकस्य जडोऽसीति यद्युच्यते तदा जाड्यमेवंविधस्य भावव्रातस्याविदग्धस्य प्रसिद्धमिति सा प्रत्युत स्तुतिरिति । जडादपि पापीयानयं लोक इति ध्वन्यते । तदाह—**यदा त्विति । इतरथा त्विति** । इतरथैव पुनरलंकारान्तरत्वमलङ्कारविशेषत्वं न व्यङ्ग्यस्य कथंचिदपि प्राधान्य इति भावः । उद्देशे यदादिग्रहणं कृतं समासोक्तीत्यत्र द्वन्द्वे तेन व्याजस्तुतिप्रभृतिरलङ्कारवर्गोऽपि सम्भाव्यमानव्यङ्ग्या-

**बालप्रिया**

वाच्यार्थं दर्शयति—**जडोऽयमित्यादि स्तुतिरि**त्यन्तेन । 'इति ह्यवज्ञायत' इति सम्बन्धः । **लोकेन** कर्त्रा । **स च** उद्यानादिर्भावश्च । **प्रत्युते**ति । अजड एव न, किन्तु विदग्धस्वभावोऽपीत्यर्थः । **अन्यस्ये**ति । प्रियतमामिलितस्येत्यर्थः । हठादाक्रम्येत्यस्य व्याख्यानम्—**यथेच्छं विकारकारणाभि**रिति । विकाराणामौत्सुक्यहर्षादीनां कारणाभिः प्रवर्तनाभिः । आत्महृदयं प्रच्छाद्येत्यस्य व्याख्यानम्—**न चे**त्यादि । प्रत्युतेत्यस्यैव विवरणम्—**महागम्भीर** इत्यादि । स इत्यस्य अत्रापि सम्बन्धः । उत्तरार्धं व्याचष्टे—**स यदी**त्यादि । **सः** उक्तगुणविशिष्टो भावव्रातः । जड इतीत्यस्य सम्भावित इत्यनेनान्वयः । तत इत्यस्य व्याख्यानम्—**तत एव कारणादि**ति । उक्तप्रकारकसंक्रीडनरूपादित्यर्थः । कारणादित्यस्य विशेषणम्—**प्रत्युत वैदग्ध्ये**त्यादि । सहृदयेत्यादेर्व्याख्यानम्—**आत्मा चे**त्यादि । **तदि**ति । तर्हि इत्यर्थः । 'अस्य लोकस्य सा स्तुतिरि'ति सम्बन्धः । का स्तुतिरित्यत्राह—**जडोऽसी**ति । हे जन एवं वदंस्त्वं जडोऽसीति केनचिदुच्यते चेत्तद्वचनं स्तुतिरेवेत्यर्थः । कुत एतदित्यत आह—**तदे**त्यादि । **तदा** तद्वचनकाले । **जाड्यमेवंविधस्ये**त्यादि । अयमर्थः—अजडस्य सतो जडत्वप्रसिध्युपजीविनी हि जनसम्बन्धिजडत्वोक्तिः । तथा सति तत्तुल्ययोगक्षेमतया जनस्याप्यजडत्वसम्भवाज्जनं प्रति जडोऽसीत्युक्तिर्वास्तवी स्तुतिरेव पर्यवस्येदिति । एवमप्रस्तुतं वाच्यार्थं व्याख्याय पार्यन्तिकमर्थं प्रदर्शयति—**जडादपी**ति । **तदाहे**ति । यदेतत्सारूप्येण प्रतीयमानस्य प्राधान्ये ध्वनित्वमुक्तं तदाहेत्यर्थः । एवकारो भिन्नक्रम इति दर्शयति—**इतरथैवे**ति । तुशब्दार्थकथनं

त्वलङ्कारान्तरमेव । तदयमत्र सङ्क्षेपः—

लोचनम्

नुवेशः सम्भावितः। तत्र सर्वत्र साधारणमुत्तरं दातुमुपक्रमते—**तदयमत्रेति** । किंयद्वा प्रतिपदं लिख्यतामिति भावः। तत्र व्याजस्तुतिर्यथा—

किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥

अत्र व्यङ्ग्यं स्तुत्यात्मकं यत्तेन वाच्यमेवोपस्क्रियते । यत्तूदाहृतं केनचित्—

आसीन्नाथ पितामही तव मही जाता ततोऽनन्तरं
माता सम्प्रति साम्बुराशिरशना जाया कुलोद्भूतये ।
पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा
युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥

इति, तदस्माकं ग्राम्यं प्रतिभात्यत्यन्तासभ्यस्मृतिहेतुत्वात्। का चानेन स्तुतिः कृता? त्वं वंशक्रमेण राजेति हि कियदिदम्? इत्येवंप्राया व्याजस्तुतिः सहृदयगोष्ठीषु निन्दितेत्युपेक्ष्यैव ।

यस्य विकारः प्रभवन्नप्रतिबन्धस्तु हेतुना येन ।
गमयति तमभिप्रायं तत्प्रतिबन्धं च भावोऽसौ ॥ इति ।

अत्रापि वाच्यप्राधान्ये भावालङ्कारता । यस्य चित्तवृत्तिविशेषस्य सम्बन्धी वा-

बालप्रिया

पुनरिति । 'अलङ्कारान्तराङ्गत्वमि'त्यत्रान्यथाप्रतिपत्तिः स्यादित्यतो विवृणोति—**अलङ्कारविशेषत्वमिति** । **इति भाव** इति । अप्रस्तुतवर्णनस्थले यत्र वाच्यस्य अप्रस्तुतार्थस्य चमत्कारकारित्वं व्यङ्ग्यं, प्रस्तुतं तु तदङ्गं तत्रैवाप्रस्तुतप्रशंसालङ्कारः । यत्र तु प्रस्तुतस्य व्यङ्ग्यस्य प्राधान्यं तत्र वस्तुध्वनिरेव नालङ्कार इति ग्रन्थकाराशय इत्यर्थः । **स्तुत्यात्मकमिति** । भवतः कीर्तिर्विश्वं व्याप्नोति इत्युत्तमश्लोकत्वरूपगुणकीर्तनमित्यर्थः । **आसीदिति** । **स्नुषा** पुत्रभार्या । **अत्यन्तासभ्येति** । पितामह्या मातृत्वोक्तावेवाङ्कुरिता तावदसभ्यस्मृतिस्तस्या जायात्वस्नुषात्ववर्णनेन सुतरामभिव्यक्तेत्याशयेनोक्तमत्यन्तासभ्येति । वाच्येऽर्थे दोषमुक्त्वा व्यङ्ग्येऽपि तमाह—**का चेति** । **कियदिदमिति** । राजान्तरादुत्कर्षविशेषाप्रतीतेरिति भावः । 'व्याजस्तुतिप्रभृतिरि'ति पूर्वोक्तप्रभृतिपदार्थं भावालङ्कारं रुद्रटोक्तमाह—**यस्येति** । 'यस्य विकारस्तु अप्रतिबन्धः प्रभवन् येन हेतुना तमभिप्रायं तत्प्रतिबन्धं च गमयति असौ भाव इत्यन्वयः । अत्रापि द्वैविध्यमस्तीत्याशयेनाह—**अत्रापीत्यादि** । लक्षणवाक्यं व्याचष्टे—**यस्येत्यादि** । **चित्तवृत्तिविशेषस्य** अनुरागादेः **सम्बन्धी** जन्यः । अप्रतिबन्ध इत्यस्य व्या-

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।
समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः ॥
व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥

लोचनम्

रव्यापारादिर्विकारोऽप्रतिबन्धो नियतः प्रभवंस्तं चित्तवृत्तिविशेषरूपमभिप्रायं येन हेतुना गमयति स हेतुर्यथेष्टोपभोग्यत्वादिलक्षणोऽर्थो भावालङ्कारः । यथा—

एकाकिनी यदबला तरुणी तथाहमस्मिन्गृहे गृहपतिश्च गतो विदेशम् ।
कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥

अत्र व्यङ्ग्यमेकैकत्र पदार्थे उपस्कारकारीति वाच्यं प्रधानम् । व्यङ्ग्यप्राधान्ये तु न काचिदलङ्कारतेति निरूपितमित्यलं बहुना ।

**यत्रे**ति काव्ये । **अलङ्कृतय** इति । अलङ्कृतित्वादेव च वाच्योपस्कारकत्वम् । **प्रतिभामात्र** इति । यत्रोपमादौ श्लिष्टार्थप्रतीतिः । **वाच्यार्थानुगम** इति । वाच्ये-नार्थेनानुगमः समं प्राधान्यमप्रस्तुतप्रशंसायामिवेत्यर्थः । **न प्रतीयत** इति । स्फुट-

बालप्रिया

ख्यानम्—**नियत** इति । **येन हेतुने**ति । वाक्यप्रतिपाद्येनेति शेषः । 'येन प्रतिबद्धेन' इति पाठे तु प्रतिबद्धेनेत्यस्योक्त एवार्थः । **स हेतुरि**ति । कस्यचिच्चित्तवृत्तिविशेषस्य अनुभावो व्यापारादिर्व्यङ्ग्यहेतुद्वारा तच्चित्तवृत्तिविशेषस्य गमकः स हेतुरित्यर्थः । वक्ष्यमाणोदाहरणाभिप्रायेण तद्धेतुं दर्शयति—**यथेष्टे**त्यादि । अहं त्वया यथेष्टमुपभो-क्तव्या न किञ्चित्प्रतिबन्धकमिति नायिकामनोगतादिरर्थ इत्यर्थः । **एकाकिनी**ति । **तथे**ति समुच्चये । **तदि**ति । यदहमेवंविधास्मि गृहपतिर्गतश्च तदित्यर्थः । नन्व-स्ति खलु तव श्वश्रूस्तां याच इत्यत्राह-**इयमि**त्यादि । **अत्र व्यङ्ग्यमि**ति । एकाकि-न्यादिपदव्यङ्ग्यमात्मनो भोग्यकामुकान्तरराहित्यादिकमित्यर्थः । वाक्येन चात्मनो निमन्त्रणयथेच्छोपभोग्यत्वं द्योत्यते । नन्वेतद्व्यङ्ग्यमत्र प्रधानमेवेत्यतः साधारण्येनाह-**व्यङ्ग्यप्राधान्य** इत्यादि । तत्प्रतिबन्धं च गमयतीत्याद्युदाहरणं रुद्रटग्रन्थादवगन्त-व्यम् । व्यङ्ग्यस्येत्यादयस्त्रयः परिकरश्लोकाः ।

'यत्राप्राधान्यमि'त्यत्र यत्रेति पदं व्याचष्टे—**काव्य** इति । अप्राधान्ये हेतुर्वा-च्यमात्रानुयायित्वं, तत्र हेतुर्वाच्यार्थोपस्कारकत्वं, तच्चालङ्कृतिपदेन दर्शितमित्याह—**अलङ्कृतित्वादेवे**ति । 'व्यङ्ग्यस्य प्रतिभामात्र' इत्येतत्सोदाहरणं विवृणोति—**यत्रे**त्यादि । **श्लिष्टा** अस्पष्टा । **अर्थप्रतीतिः** व्यङ्ग्यप्रतीतिः । 'वाच्यमात्रानु-यायिन' इत्यनेन पौनरुक्त्यं परिहर्तुं व्याचष्टे—**वाच्येने**त्यादि । 'न प्रतीयत'

तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥

तस्मान्न ध्वनेरन्यत्रान्तर्भावः । इतश्च नान्तर्भावः ; यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः । तस्य पुनरङ्गानि—अलङ्कारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते । न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः । अपृ-

लोचनम्

तया प्राधान्यं न चकास्ति, अपि तु बलात्कल्प्यते, तथापि हृदये नानुप्रविशति । यथा—'देआ पसिअणिआतासु' इत्यत्रान्यकृतासु व्याख्यासु । तेन चतुर्षु प्रकारेषु न ध्वनिव्यवहारः सद्भावेऽपि व्यङ्ग्यस्य[1] अप्राधान्ये श्लिष्टप्रतीतौ वाच्येन समप्राधान्येऽस्फुटे प्राधान्ये च । क्व तर्ह्यसावित्याह—**तत्परावेवेति** । सङ्करेणालङ्कारानुप्रवेशसम्भावनया उज्झित इत्यर्थः । सङ्करालङ्कारेणेति त्वसत्, अन्यालङ्कारोपलक्षणत्वे हि क्लिष्टं स्यात् । **इतश्चेति** । न केवलमन्योन्यविरुद्धवाच्यवाचकभावव्यङ्ग्यव्यञ्जकभावसमाश्रयत्वान्न तादात्म्यमलङ्काराणां ध्वनेश्च यावत्स्वामिभृत्यवदङ्गिरूपाङ्गरूपयोर्विरोधादित्यर्थः । **अवयव** इति । एकैक इत्यर्थः । तदाह—**पृथग्भूत** इति । अथ पृथग्भूतस्तथा मा भूत्, समुदायमध्यनिपतितस्तर्ह्यस्तु तथेत्याशङ्क्याह—**अपृथग्भावे** त्विति । तदापि न स

बालप्रिया

इत्यस्य व्याख्यानम्—**स्फुटतया न चकास्तीति** । **बलात्कल्प्यत** इति । तच्च युक्तिपर्यालोचनया परीक्षादशायामाहरणम् । **नानुप्रविशतीति** । युक्त्यनुसन्धानाभावे विलयादिति भावः । अस्योदाहरणमाह—**यथेत्यादि** । **देआ** इति । 'प्रार्थये तावत्प्रसीदे'त्यादिः पूर्वोदाहृता गाथा । 'न ध्वनिरि'त्यस्य विवरणम्—**न ध्वनिव्यवहार** इति । **सद्भावेऽपीति** । ध्वनेरिति शेषः । 'चतुर्षु प्रकारेषु' इत्युक्तस्य विवरणम्—**व्यङ्ग्यस्याप्राधान्य** इत्यादि । 'सङ्कर' इत्यस्य व्याख्यानम्—**अलङ्कारानुप्रवेशेत्यादि** । समासोक्त्याद्यनुप्रवेशशङ्कया पूर्वोक्तयेत्यर्थः । यथाश्रुतार्थं निषेधति—**सङ्करालङ्कारेणेत्यादि** । वृत्ताावितश्चेत्यत्र इतः वक्ष्यमाणद्धेतोरित्यर्थं मनसिकृत्य व्याचष्टे—**न केवलमित्यादि** । **न तादात्म्यमिति** । ऐक्याभाव इत्यर्थः । **अङ्गीत्यादि** । अङ्गित्वाङ्गत्वयोरित्यर्थः । नन्ववयवातिरिक्तावयविनोऽनुपलम्भान्न चावयव एवावयवीति तन्निषेधोऽनुपपन्न इति शङ्कामवयव इत्येकवचनार्थस्य विवक्षितत्वं दर्शयन् परिहरति—**एकैक** इति । 'पृथग्भूत' इति चोक्तार्थकमेवेत्याह—**तदाहेति** । **अथ पृथग्भूत** इति । अवयव इति शेषः । **तथा** अवयवी । **समुदायमध्यपतितः** समुदायोपहितस्वरूपः । **तथास्तु** अवयवी भवतु । वृत्तौ 'तदङ्गत्वमि'ति । अवय-

१. व्यङ्ग्यस्येति सद्भावेत्यनेनापि मध्यमणिन्यायेन सम्बध्यते ।

थभावे तु तदङ्गत्वं तस्य । न तु तत्त्वमेव । यत्रापि वा तत्त्वं तत्रापि ध्वनेर्महाविषयत्वान्न तन्निष्ठत्वमेव । 'सूरिभिः कथित' इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथञ्चित्प्रवृत्तेति प्रतिपाद्यते । प्रथमे हि विद्वांसो वैया-

लोचनम्

एक एव समुदायः, अन्येषामपि समुदायिनां तत्र भावात्; तत्समुदायिमध्ये च प्रतीयमानमप्यस्ति, न च तदलङ्काररूपं, प्रधानत्वादेव । यत्त्वलङ्काररूपं तदप्रधानत्वान्न ध्वनिः । तदाह—**न तु तत्त्वमेवे**ति । नन्वलङ्कार एव कश्चित्त्वया प्रधानताभिषेकं दत्त्वा ध्वनिरित्यात्मेति चोक्त इत्याशङ्क्याह—**यत्रापि** वेति । न हि समासोक्त्यादीनामन्यतम एवासौ तथास्माभिः कृतः, तद्विविक्तत्वेऽपि तस्य भावात्, समासोक्त्याद्यलङ्कारस्वरूपस्य समस्तस्याभावेऽपि तस्य दर्शितत्वात् 'अत्ता एत्थ' इति 'कस्स वा ण' इत्यादि; तदाह-**न[1] तन्निष्ठत्वमे**वेति । **विद्वदुपज्ञे**ति । विद्वद्भ्य उपज्ञा प्रथम उपक्रमो यस्या उक्तेरिति बहुव्रीहिः । तेन 'उपज्ञोपक्रमं[2]' इति तत्पुरुषाश्रयं नपुंसकत्वं

बालप्रिया

व्यङ्ग्यत्वमित्यर्थः । 'तस्ये'ति । अवयवस्येत्यर्थः । 'तत्वमि'ति अवयवित्वमित्यर्थः । भावमाह लोचने—**तदापी**त्यादि । **तदापि** समुदायमध्यपतनदशायामपि । **सः** समुदायिरूपावयवः । **एक एव न समुदायः** न समुदायरूपावयवी । अत्र हेतुमाह—**अन्येषामपी**ति । **तत्र भावादि**ति । समुदाये सत्त्वादित्यर्थः । **नन्वि**त्यादि। **कश्चिदि**ति । समासोक्त्याद्यन्यतम इत्यर्थः । वृत्तौ 'यत्रापी'त्यादि । 'यत्र' पर्यायोक्तादौ 'भ्रम धार्मिके'त्यादौ पर्यायोक्तत्वपक्षे, 'भवति न गुणानुराग' इत्यादिसङ्करालङ्कारे च । 'तत्वमि'ति । अवयवित्वमित्यर्थः; प्राधान्यमिति यावत् । 'तन्निष्ठत्वमि'ति । तदवयविनिष्ठत्वमित्यर्थः; तदलङ्कारनिष्ठत्वमिति यावत् । ध्वनेर्महाविषयत्वान्न तन्निष्ठत्वमेवेति यदुक्तं तद्विवृणोति लोचने—**न ही**त्यादि । समासोक्तौ ध्वनिरन्तर्भवतीति परमताभ्युपगमेन **समासो**क्तीति । आदिपदेन पर्यायोक्तादीनां ग्रहणम् । **असौ** अलङ्कारः । **तथा** ध्वनित्वेनात्मत्वेन च । **तद्विविक्तत्वेऽपि** समासोक्त्याद्यलङ्कारस्पर्शराहित्येऽपि । **तस्य** ध्वनेः । उक्तस्यैव विवरणम्—**समासोक्त्यादी**ति । **इत्यादी**ति । इत्यादावित्यर्थः । 'दर्शितत्वादि'त्यनेन सम्बन्धः । 'विद्वदुपज्ञे'ति प्रयोगस्य साधुत्वस-

१. 'न तन्निष्ठत्वमेवे'त्यनन्तरं 'तस्मिन्निष्ठा पर्यवसानं यस्येति तन्न भवति, महाविषयत्वात् । व्यापकत्वादित्यर्थः । घटो घट एव न भवति, किन्तु तत्कर्परेऽपि । तत्रापि न भवति, किन्तु घटेऽपीत्यनेन व्यापकोऽयमित्युक्तं भवति, महाविषयत्वात्' इत्यधिकः पाठः क्वचिदुपलभ्यते । सोऽपि प्रकृतानुगुण इत्येव प्रतिभाति ।

२. 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति ( पा. सू., २. ४. २१ ) समग्रं सूत्रम् ।

करणाः, व्याकरणमूलत्वात्सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनि-रिति व्यवहरन्ति। तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थ-

लोचनम्

निरवकाशम्। **श्रूयमाणेष्विति**। श्रोत्रशष्कुलीं सन्तानेनागता अन्त्याः शब्दाः श्रूयन्त इति प्रक्रियायां शब्दजाः शब्दाः श्रूयमाणा इत्युक्तम्। तेषां घण्टानुरणनरूपत्वं तावदस्ति; ते च ध्वनिशब्देनोक्ताः। यथाह भगवान् भर्तृहरिः—

> यः संयोगवियोगाभ्यां करणैरुपजन्यते।
>
> स स्फोटः शब्दजाश्शब्दा ध्वनयोऽन्यैरुदाहृताः॥ इति।

एवं घण्टादिनिर्ह्लादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः। तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्यस्फोटाभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः। यथाह भगवान् स एव—

> प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा।

बालप्रिया

ष्पादनायाह—**विद्वद्भ्य** इत्यादि। अथ व्यङ्ग्यार्थशब्दतदर्थव्यञ्जनानां चतुर्णां ध्वनिशब्दवाच्यत्वं विद्वत्प्रसिद्धिवशात्साधयिष्यन्नादौ व्यङ्ग्यार्थस्य ध्वनिशब्दवाच्यत्वसिध्यनुगुणतया व्याचष्टे—**श्रोत्रे**त्यादि। **श्रोत्रशष्कुलीं** शष्कुलीसमानश्रोत्रदेशावच्छिन्नाकाशम्। **सन्तानेनेति**। वीचीसन्तानन्यायेनेत्यर्थः। **प्रक्रियायामिति**। वैशेषिकादिप्रक्रियायामित्यर्थः। **शब्दजाश्शब्दा** इति। अन्त्या इति भावः। **तेषामिति**। श्रूयमाणानामन्त्यानां शब्दजशब्दानामित्यर्थः। **घण्टेति**। पूर्वशब्दजन्यत्वेन साम्यादिति भावः। **य इति**। उत्पत्तिपक्षे स्फोटध्वन्योः भेदप्रकटनपरोऽयं श्लोकः। संयोगवियोगाभ्यां करणानां स्थानैस्सह यस्संयोगो वियोगश्च ताभ्याम्। **करणैरिति** कर्तरि तृतीया। जिह्वाग्रादिभिरित्यर्थः। स्पष्टमिदं प्रातिशाख्ये। **सः स्फोट** इति प्रथममुत्पद्यमानः शब्दः स्फोट इत्यर्थः। **शब्दजाः शब्दा** इति। श्रूयमाणा इति भावः। **अन्यैरिति**। उत्पत्तिवादिभिरित्यर्थः। यथोक्तं वृत्तिकृता—'अनित्यपक्षे स्थानकरणप्राप्तिविभागपूर्वकं प्रथममेभिर्निर्वृत्तो यश्शब्दः स स्फोट उच्यत' इत्यादि। **घण्टादीति**। घण्टादेर्निर्ह्लादः अनुरणनं तत्स्थानीयस्तत्तुल्य इति व्यङ्ग्यस्य ध्वनिपदेन व्यवहार्यत्वे हेतुः। नन्वेवं व्यङ्ग्यविशेषस्यैव ध्वनिव्यवहार्यत्वं भवेन्न तु रसादेस्तस्यानुरणनरूपत्वविरहादित्यत आह—**अनुरणने**ति। एतदुपलक्षणमिति भावः।

अथ वाचकस्य शब्दस्य वाच्यस्यार्थस्य च ध्वनिव्यवहार्यत्वं प्रसाधयति—**तथे**त्यादि। **नादशब्दवाच्या** इति। नादशब्देन वैयाकरणैर्व्यवहृता इत्यर्थः। **अन्त्येति**। पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृता या अन्त्यवर्णबुद्धिः तया निर्ग्राह्यः नितरां व्यक्तरूपेण ग्राह्यो यः स्फोटः तस्याभिव्यञ्जका इत्यर्थः। **त इति**। ते वर्णा इत्यर्थः। **प्रत्ययैरिति**। **अनुपाख्येयैः** इदमित्थमिति व्याख्यातुमशक्यैः। **ग्रहणा-**

लोचनम्

ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥ इति ।

तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ । किञ्च वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु । यथोक्तम्—

अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः ।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥ इति ।

तेषु तावत्स्वेव श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणव्यापारादभ्यधिकः स ध्वनिरुक्तः । यदाह स एव—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ इति ।

अस्माभिरपि प्रसिद्धेभ्यः शब्दव्यापारेभ्योऽभिधातात्पर्यलक्षणारूपेभ्योऽतिरिक्तो व्यापारो ध्वनिरित्युक्तः । एवं चतुष्कमपि ध्वनिः । तद्योगाच्च समस्तमपि काव्यं

बालप्रिया

**नुगुणैः** व्यक्तरूपस्फोटग्रहणानुकूलैः । **ध्वनिप्रकाशिते शब्दे** विषये उत्पन्नैः अन्तरालवर्तिभिः **प्रत्ययैः** स्फोटविषयकाव्यक्तप्रत्ययैः । **स्वरूपं** स्फोटस्वरूपम् । **अवधार्यते** व्यक्तं ज्ञायते । यथोक्तं भाष्ये "व्यक्तरूपग्रहणानुगुणा ह्यनुपाख्येयाकारा बहव उपायभूताः प्रत्यया ध्वनिभिः प्रकाश्यमाने शब्दे उत्पद्यमानाश्शब्दस्वरूपावग्रहे हेतवो भवन्ति"इति। **तेनेति** । व्यञ्जकानां ध्वनिशब्देन तैर्व्यवहृतत्वादित्यर्थः। अथ व्यापारस्य व्यञ्जनस्यापि ध्वनिशब्दव्यवहार्यत्वं प्रसाधयितुमाह—**किञ्चेति** । **तावन्मात्रपरिमाणेष्विति** । यादृशोऽयं श्रोत्रेन्द्रियेण गृह्यते तादृशपरिमाणविशिष्टेष्वित्यर्थः । अपिशब्दः समुच्चये, 'श्रूयमाणेष्वि'त्यनेनास्य सम्बन्धः। वर्णेषु स्वरूपतः परिमाणविशेषवत्तया स्थितेषु तेषु तथाविधेष्वेवाखण्डतया श्रोत्रेन्द्रियविषयतां गतेषु च सत्सु इत्यर्थः। अस्य संवादश्लोकगर्भितस्य 'वक्तुर्योऽन्य' इत्यादिग्रन्थेन सम्बन्धः । **अल्पीयसेति** । अल्पीयसा यत्नेनाप्युच्चारितं शब्दम् । **मतिः** कर्त्री । **नैव गृह्णाति** । यदि वा, सकलं वर्णं स्फुटं गृह्णाति वा; न तु किञ्चिद्ग्रहणाग्रहणे सम्भवतो वर्णस्य निरवयवत्वादिति भावः । अनेन 'तावत्स्वेव श्रूयमाणेष्वि'त्युक्तमुपपादितम् । **स इति** । तथाविधव्यापार इत्यर्थः। **शब्दस्येति** । श्लोकोऽयं मञ्जूषायामित्थं व्याख्यातः—शब्दस्य स्फोटस्य अभिव्यक्तेरूर्ध्वं वैकृता ध्वनयो जायन्ते इति शेषः। ते तु **वृत्तिभेदे** द्रुतादिवृत्तिभेदे । **समुपोहन्ते** तत्र कारणं भवन्ति । स्फोटस्तु तैर्न भिद्यत इत्यर्थः । वैकृतत्वं चैषामालस्यादिकृतत्वादिति । 'वृत्तिभेदमि'ति पाठे 'समुपोहन्त' इत्यस्य जनयन्तीत्यर्थः । **चतुष्कमिति** । व्यङ्ग्यादिचतुष्टयमित्यर्थः । **ध्वनिः** ध्वनिशब्दव्यवहार्यः । **समस्तमपि काव्यं** व्यङ्ग्यवाच्यवाचकव्यापारसमुदायात्मकं काव्यमपि। **तेनेति** । ध्व-

दर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद्ध्वनिरित्युक्तः। न चैवंविधस्य ध्वनेर्वक्ष्यमाणप्रभेदतद्भेदसङ्कलनया महाविषयस्य यत्प्रकाशनं तदप्रसिद्धालङ्कारविशेषमात्रप्रतिपादनेन

लोचनम्

ध्वनिः। तेन व्यतिरेकाव्यतिरेकव्यपदेशोऽपि न न युक्तः। **वाच्यवाचकसंमिश्र** इति। वाच्यवाचकसहितः संमिश्र इति मध्यमपदलोपी समासः[1]। 'गामश्वं पुरुषं पशुम्' इतिवत्समुच्चयोऽत्र चकारेण विनापि। तेन वाच्योऽपि ध्वनिः वाचकोऽपि शब्दो ध्वनिः, द्वयोरपि व्यञ्जकत्वं ध्वनतीति कृत्वा। संमिश्र्यते विभावानुभावसंवलनयेति व्यङ्ग्योऽपि ध्वनिः, ध्वन्यत इति कृत्वा। शब्दनं शब्दः शब्दव्यापारः, न चासावभिधादिरूपः, अपि त्वात्मभूतः, सोऽपि ध्वननं ध्वनिः। काव्यमिति व्यपदेश्यश्च योऽर्थः सोऽपि ध्वनिः, उक्तप्रकारध्वनिचतुष्टयमयत्वात्। अतएव साधारणहेतुमाह—**व्यञ्जकत्वसाम्या**दिति। व्यङ्ग्यव्यञ्जकभावः सर्वेषु पक्षेषु सामान्यरूपः साधारण इत्यर्थः। यत्पुनरेतदुक्तं 'वाग्विकल्पानामानन्त्यात्' इत्यादि, तत्परिहरति—**न चैवं विधस्ये**ति। वक्ष्यमाणः प्रभेदो यथा—मुख्ये द्वे रूपे। तद्भेदा यथा—अर्थान्तरसंक्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्य इत्यविवक्षितवाच्यस्य, असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्य इति विवक्षितान्यपरवाच्यस्येति। तत्राप्यवान्तरभेदाः। **महाविषय**-

बालप्रिया

निशब्दवाच्यतत्समुदायात्मकत्वेनैव काव्यस्य ध्वनित्वलाभेन हेतुनेत्यर्थः। **व्यतिरेके**त्यादि। 'काव्यस्यात्मा ध्वनिरि'त्यादौ भेदव्यपदेशः काव्यविशेषः, स ध्वनिरित्यादावभेदव्यपदेशश्चेत्यर्थः। **न न युक्त** इति। युक्त एवेत्यर्थः। व्यङ्ग्यादीनां पञ्चानां यद्ध्वनिव्यवहार्यत्वमुक्तं, तदनुगुणतया वाच्येत्यादिग्रन्थं व्याचष्टे—**वाच्यवाच**केत्यादि। **इति मध्यमे**ति। तथाच वाच्यश्च वाचकश्च सम्मिश्रश्चेत्यर्थ इति भावः। **विनापी**ति। तथा च शब्दात्मा काव्यमिति व्यपदेश्यश्चेत्यर्थ इति भावः। उक्तव्याख्यानस्य फलमाह—**तेने**त्यादि। **ध्वनतीति** कृत्वेति। व्यञ्जयतीति हेतोरित्यर्थः। ध्वनिरिति कर्तरि प्रत्यय इति भावः। सम्मिश्रपदेन व्यङ्ग्यार्थो विवक्षित इत्याह—**सम्मिश्र्यत** इत्यादि। **विभावे**ति। विभावानुभावाभ्यां संवलनया सम्बन्धेनेत्यर्थः। **ध्वन्यत इति कृत्वे**ति। कर्मणि प्रत्यय इति भावः। 'शब्दात्मे'ति पदं व्याचष्टे—**शब्दनमि**त्यादि। **ध्वननं ध्वनिरि**ति। अस्मिन्नर्थे ध्वनिरिति भावे प्रत्यय इति भावः। **अत एवे**ति। यस्मादुक्तानां पञ्चानामर्थानां ध्वनित्वमत्र ग्रन्थेऽभिधित्सितं, तस्मादेव साधारणस्य हेतोरभिधानादित्यर्थः। हेतोः साधारण्यलाभाय व्यञ्जकत्वपदं व्यङ्ग्यव्य-

१. 'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्' इति वार्तिकात्। अत्रोत्तरपदं पूर्वपदघटकोत्तरपदपरम्, व्याख्यानात्।

**तुल्यमिति तद्भावितचेतसां युक्त एव संरम्भः । न च तेषु कथञ्चिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम् । तदेवं ध्वनेस्तावदभाववादिनः प्रत्युक्ताः अस्ति ध्वनिः । स चासावविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति**

लोचनम्

**स्येति**—अशेषलक्ष्यव्यापिन इत्यर्थः । विशेषग्रहणेनाव्यापकत्वमाह । मात्रशब्देनाङ्गित्वाभावम् । तत्र ध्वनिस्वरूपे भावितं प्रणिहितं चेतो येषां तेन वा चमत्काररूपेण भावितमधिवासितमत एव मुकुलितलोचनत्वादिविकारकारणं चेतो येषामिति । **अभाववादिन** इति । अवान्तरप्रकारत्रयभिन्ना अपीत्यर्थः ।

तेषां प्रत्युक्तौ फलमाह—**अस्तीति** । उदाहरणपृष्ठे भाक्तत्वं सुशङ्कं सुपरिहरं च भवतीत्यभिप्रायेणोदाहरणदानावकाशार्थं भाक्तत्वालक्षणीयत्वे प्रथमं परिहरणयोग्येऽप्यप्रतिसमाधाय भविष्यदुद्द्योतानुवादानुसारेण वृत्तिकृदेव प्रभेदनिरूपणं करोति—**स चेति** । पञ्चधापि ध्वनिशब्दार्थे येन यत्र यतो यस्य यस्मै इति बहुव्रीह्यर्थाश्रयेण यथोचितं सामानाधिकरण्यं सुयोज्यम् । वाच्येऽर्थे तु ध्वनौ वाच्यशब्देन स्वात्मा तेनाविवक्षितोऽप्रधानीकृतः स्वात्मा येनेत्यविवक्षितवाच्यो व्यञ्जकोऽर्थः । एवं विवक्षिता-

बालप्रिया

ञ्जकभावपरमित्याशयेन व्याचष्टे—**व्यङ्ग्येति** । सामान्यरूपो व्यङ्ग्यव्यञ्जकभावः साधारणस्समान इति योजना । 'तदप्रसिद्धालङ्कारविशेषमात्रे'त्यत्रत्यविशेषमात्रग्रहणयोः फलमाह—**विशेषग्रहणेनेत्यादि** । अलङ्कारस्येति शेषः । मात्रशब्दो लेशार्थक इत्याशयेनाह—**अङ्गित्वाभावमिति** । आहेत्यनुषज्यते । प्रकारान्तरेणाह-**तेन वेति** । **तेन** ध्वनिना कर्त्रा ।

ननु क्रमप्राप्तं भाक्तत्वादिपक्षमप्रतिसमाधाय वृत्तिकृता 'स चे'त्यादिना ध्वनिभेदप्रदर्शनमनुचितमित्यत आह—**उदाहरणपृष्ठ** इत्यादि । अविवक्षितवाच्यादिध्वनेरुदाहरणे प्रदर्शिते तत्र लक्षणायास्समुन्मेषाद्भक्तिरेव ध्वनिरिति शङ्का सुसंपादा, परस्परभेदसंपादकस्य रूपभेदादेः स्पष्टत्वात्तत्परिहारश्च सुकर इत्यभिप्रायेणेत्यर्थः । **भविष्यदुद्योतानुवादानुसारेणेति** । अत्रानुक्तावविवक्षितवाच्यो य इति द्वितीयोद्योतादावनुवादोऽनुपपन्नः स्यादतः स्वयमेव कारिकाकारस्थाने स्थितत्वेत्यर्थः । ननु पञ्चानां ध्वनिशब्दार्थानां मध्ये कमर्थमभिप्रेत्याविवक्षितवाच्यो ध्वनिरित्यादिसामानाधिकरण्यनिर्देश इत्यत आह—**पञ्चधापीत्यादि** । **पञ्चधा** वाचकादिस्वरूपे । तत्र वाचकः शब्दो ध्वनिपदार्थ इति पक्षे आविवक्षितः वाच्यो येन शब्देन । **यत्र** यस्मिन् शब्दे । **यतः** यस्माच्छब्दात् । **यस्मै** यदर्थत्वेन । **यस्य** यत्सम्बन्धित्वेन स तथोक्त इति बहुव्रीहिर्बोध्यः । एवं व्यङ्ग्यव्यञ्जनकाव्यानामन्यपदार्थत्वेऽपि बोध्यम् । वाच्यो ध्वनिशब्दार्थ इति पक्षे विशेषमाह—**वाच्येऽर्थ** इति । **स्वात्मेति** । उच्यत इति

**द्विविधः सामान्येन ।**

**तत्राद्यस्योदाहरणम्—**

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥**

लोचनम्

न्यपरवाच्येऽपि । यदि वा कर्मधारयेणार्थपक्षे अविवक्षितश्चासौ वाच्यश्चेति । विवक्षितान्यपरश्चासौ वाच्यश्चेति । तत्रार्थः कदाचिदनुपपद्यमानत्वादिना निमित्तेनाविवक्षितो भवति । कदाचिदुपपद्यमान इति कृत्वा विवक्षित एव, व्यङ्ग्यपर्यन्तां तु प्रतीतिं स्वसौभाग्यमहिम्ना करोति । अत एवार्थोऽत्र प्राधान्येन व्यञ्जकः, पूर्वत्र शब्दः । ननु च विवक्षा चान्यपरत्वं चेति विरुद्धम् । अन्यपरत्वेनैव[1] विवक्षणात्को विरोधः ? **सामान्येनेति** । वस्त्वलङ्कारसात्मना हि त्रिभेदोऽपि ध्वनिरुभाभ्यामेवाभ्यां सङ्गृहीत इति भावः । ननु तन्नामपृष्ठे एतन्नामनिवेशनस्य किं फलम् ? उच्यते—अनेन हि नामद्वयेन ध्वननात्मनि व्यापारे पूर्वप्रसिद्धाभिधातात्पर्यलक्षणात्मकव्यापारत्रितयावगतार्थप्रतीतिः प्रतिपत्तृगतायाः प्रयोक्त्रभिप्रायरूपायाश्च विवक्षायाः सहकारित्वमुक्तमिति ध्वनिस्वरूपमेव नामभ्यामेव प्रोज्जीवितम् ।

**सुवर्णपुष्पामिति** । सुवर्णानि पुष्प्यतीति सुवर्णपुष्पा[2], एतच्च वाक्यमेवा-

बालप्रिया

शेषः । अविवक्षितपदस्य यथाश्रुतार्थाभिप्रायेणाह—**यदि वेत्यादि** । वाच्यस्याविवक्षितत्वादिकमुपपादयति—**तत्रार्थ** इत्यादि । आदिपदेनानुपयोगित्वं गृह्यते । **उपपद्यमान** इति । अर्थ इत्यनुषज्यते । **व्यङ्ग्यपर्यन्तां** व्यङ्ग्यप्रतीतिपर्यन्ताम् । **प्रतीतिं** स्वगोचरां प्रतीतिम् । शङ्कते—**नन्विति** । **विरुद्धमिति** । विवक्षितत्वे अन्यपरत्वसम्भवादिति भावः । उत्तरमाह—**अन्येत्यादि** । **को विरोध** इति । प्रधानतया विवक्षितत्वस्यैवान्यपरत्वोपमर्दकत्वादिति भावः । पृच्छति—**नन्विति** । **तन्नामपृष्ठे** तस्य ध्वनिनाम्नः पृष्ठे पश्चात् । **एतन्नामेति** । अविवक्षितवाच्यादिनामेत्यर्थः । अस्ति ध्वनिः स चेत्यादिश्च निर्देशः किमर्थ इत्यर्थः । अत्रोत्तरमाह—**उच्यत** इत्यादि । अयमर्थः—ध्वननव्यापारसम्बन्धो हि पञ्चानां ध्वनिशब्दवाच्यत्वे निबन्धनम् । तत्र च व्यापारे

१. अयं ग्रन्थः व्यक्तिविवेककृत्पूर्वपक्षसमाधानपर इति भाति ।

२. अर्थप्रदर्शनमात्रमेतत्; न त्वेष विग्रहः । तथा सति 'कर्मण्यण्' इत्यणि 'टिड्ढाणञ्' इत्यादिना ङीबापत्तेः । सुवर्णमेव पुष्पं यस्या इति तु विग्रहः । त्रय इति शूरत्वप्रख्यातविद्यत्वसेवाभिज्ञत्वगुणत्रयान्यतमयुक्ताः । शूरश्चेत्यादिचकारत्रयमेकैकस्यान्यनैरपेक्ष्यं द्योतयति । लक्षणया त्रय एव पुरुषाः सुलभसमृद्धिसम्भारभाजनानि भवन्तीति प्रत्याय्यते । अन्यत्सुगमम् ।

द्वितीयस्यापि—

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥

लोचनम्

सम्भवत्स्वार्थमिति कृत्वाविवक्षितवाच्यम् । तत एव पदार्थमभिधायान्वयं च तात्पर्यशक्त्यावगमय्यैव बाधकवशेन तमुपहत्य सादृश्यात्सुलभसमृद्धिसम्भारभाजनतां लक्षयति । तल्लक्षणाप्रयोजनं शूरकृतविद्यसेवकानां प्राशस्त्यमशब्दवाच्यत्वेन गोप्यमानं सनायिकाकुचकलशयुगलमिव महार्घतामुपयद्ध्वन्यत इति । शब्दोऽत्र प्रधानतया व्यञ्जकः, अर्थस्तु तत्सहकारितयेति चत्वारो व्यापाराः ।

शिखरिणीति । न हि निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वतादय इमां सिद्धिं विदध्युः । दिव्यकल्पसहस्रादिश्चात्र परिमितः कालः । न चैवंविधोत्तमफलजनकत्वेन पञ्चाग्निप्रभृ-

बालप्रिया

शब्दार्थोभयकर्तृके अभिधादित्रयजन्यप्रतिपत्तृगतार्थप्रतीतेः प्रयोक्तृगतविवक्षायाश्च सहकारित्वमस्तीत्यतस्तस्यापि प्रतिपिपादयिषयैतन्नामद्वयं विहितं न प्रभेदमात्रप्रतिपिपादयिषया, तत्राविवक्षितवाच्यस्य ध्वनेर्लक्षणामूलत्वात्तन्नाम्ना प्रतिपत्तृगततत्प्रतीतेः विवक्षितान्यपरवाच्यनाम्ना विवक्षायाश्च सहकारित्वं दर्शितमिति तन्नामभ्यां ध्वनिस्वरूपमेव प्रोज्जीवितमिति । **बाधकवशेन तमुपहत्येति** । तं अन्वयमित्यर्थः । उपहननं बाधनम् । **सादृश्यादि**ति निमित्तोक्तिः । **लक्षयतीति** । सुवर्णपुष्पामित्येतल्लक्षणया बोधयतीत्यर्थः । 'तल्लक्षणाप्रयोजनं प्राशस्त्यं ध्वन्यत' इति सम्बन्धः । **माहार्घतां** चारुत्वम् । **उपयत्** प्राप्नुवत् । **अत्रेति** । अविवक्षितवाच्यध्वनावित्यर्थः । **चत्वार** इति । अभिधायाश्चत्वार इत्यर्थः । सुवर्णेत्यादिपद्यव्याख्यास्मदीयकुवलयानन्दव्याख्याने द्रष्टव्या ।

**शिखरिणीति** । अत्र नामेत्यन्तस्य कियच्चिरमित्यस्य किमभिधानमित्यस्य च ध्वनिं क्रमेणाह—**न ही**त्यादिना । **इमामिति** । तरुण्याधरपाटलिमलाभसुभगम्भावुकबिम्बफलदशनात्मिकामित्यर्थः । **अत्रेति** । ईदृश्याः सिद्धेः प्राप्तावित्यर्थः । **एवं विधेति** । यथोक्तबिम्बफलदशनात्मकेत्यर्थः । 'त्वदधरारुणमम्बुरुहाक्षि यदि'त्यायनिर्दिश्य तवाधरेत्यादिनिर्देशे बीजमाह—**तवे**त्यादि । तवेतिपदं भिन्नं पृथक्

१. नायिकेति । मरहट्टनायिकेत्यर्थः । मरहट्टेति महाराष्ट्रस्य संज्ञा । उक्तं चात्राभियुक्तैः—

नान्ध्रीपयोधर इवातितरां प्रगाढः नो गूर्जरीस्तन इवातितरां निगूढः ।
अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः ॥ इति ।

लोचनम्

स्यपि तपः श्रुतम् । तवेति[1] भिन्नं पदम् । समासेन विगलिततया प्रतीयेत, तव दशतीत्यभिप्रायेण । तेन यदाहुः—'वृत्तानुरोधात्त्वदधरपाटलमिति न कृतम्' इति, तदसदेव; दशतीत्यास्वादयति अविच्छिन्नप्रबन्धतया, न त्वौदरिकवत्परं भुङ्क्ते; अपि तु रसज्ञोऽत्रेति तत्प्राप्तिवदेव रसज्ञताप्यस्य तपःप्रभावादेवेति । शुकशावक इति तारुण्यादुचितकाललाभोऽपि तपस एवेति । अनुरागिणश्च प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्य-

बालप्रिया

कृतम् । कुत इत्यत आह—**समास** इति । 'समासे विगलिततया प्रतीयेत न प्रतीयतामि'ति क्वचित् ग्रन्थे पाठः । **समासे** युष्मत्पदस्याधरपदेन समासे सति । युष्मदर्थ इति शेषः । **विगलिततया** अधःस्थिततया अप्रधानतयेति यावत् । **प्रतीयेत** समासार्थघटकाधरोपसर्जनत्वेन प्रतीतिविषयो भवेत् । **न प्रतीयतां** तथा प्रतीतिर्मा भवतु । क्वचिद्ग्रन्थे 'न प्रतीयतामि'त्यंशस्य न पाठः । समास इत्यस्य स्थाने समासेनेति पाठश्च दृश्यते । समासेन हेतुनेत्यर्थादस्मिन् पाठेऽप्युक्त एवार्थः । यद्वा समासे न इति पदद्वयं समासे सति । **विगलिततया** पृथक्तया न प्रतीयेतेत्यर्थः । ननु प्राधान्येन प्रतीतये व्यस्ततयोक्तिरावश्यकीत्यायातम् । सा किमर्थेत्यत्राह—**तवे**त्यादि । तवेत्यस्य दशनक्रिययाप्यन्वयाभिप्रायेणेत्यर्थः । भिन्नमित्यनेन सम्बन्धः । अयम्भावः—यथा 'अरुणया पिङ्गाक्ष्ये'त्यादौ वैदिकवाक्ये गवाद्यन्वितस्यारुण्यादेस्साध्यतादिसम्बन्धेन क्रयणादौ । यथा वा 'धनवान् सुखी'त्यादिलौकिकवाक्ये मतुबाद्यर्थान्वितस्य धनादेः प्रयोज्यत्वादिसम्बन्धेन सुखादौ चान्वयः, तथात्राधरान्वितस्य त्वत्सम्बन्धित्वस्य प्रयोज्यत्वसम्बन्धेन बिम्बफलकर्मकदशनेऽप्यन्वयः । यतः शुकशावकोऽयं त्वदधरारुण्यलाभसुभगम्भावुकं बिम्बफलं त्वत्सम्बन्धितया दशति, त्वामेव प्रधानतयोद्दिश्य दशतीत्यर्थो विवक्षितः । अतस्तवेति व्यस्ततया निर्दिष्टमिति । **अविच्छिन्ने**त्यादि । आस्वादयतीत्यनेन सम्बन्धः । निरवशेषेणोपभोगे सति हि प्रबन्धविच्छेदो भवेत्तथा नेत्यर्थः । **औदरिकव**दिति । स हि रसास्वादवार्तानभिज्ञो निरवशेषमेव भोज्यद्रव्यं भुङ्क्ते । **अत्रे**ति । रसास्वादनक्रियायामित्यर्थः । **तत्प्राप्तिवत्** तथाविधबिम्बफलप्राप्तिवत् । **उचिते**ति । उचिते काले लाभः बिम्बफलतदास्वादलाभः **तपस** एव तपोरूपहेतोरेव । इतीत्यस्यापि व्यङ्ग्यमित्यनेनान्वयः । **प्रच्छन्ने**ति ।

१. अत्राधरपदार्थे त्वत्पदार्थसम्बोध्यमाननायिकासम्बन्धः प्राधान्येन विधेयतया बुबोधयिषितः । तादृशनायिकासम्बन्धितया प्रतीयमानस्याधरस्यास्वादनेनैव शुके धन्यधन्यतायाः सिद्धिः । समासे च सति अधरपदार्थविशेषणतया स्थितस्य युष्मच्छब्दार्थस्य प्राधान्येन विधेयतया बोधनं न स्यात् । समासोपसर्जनीभूते तादृशसामर्थ्याभावात् इति 'तवेति भिन्नं पदमि'त्यादिग्रन्थेन विधेयाविमर्शदोषोऽत्र नास्तीति निर्गलितोऽर्थः प्रतिपाद्यत इति ।

लोचनम्

चाटुविरचनात्मकविभावोद्दीपनं व्यङ्ग्यम् ।

अत्र च त्रय एव व्यापाराः—अभिधा तात्पर्यं ध्वननं चेति । मुख्यार्थबाधाद्यभावे मध्यमकक्ष्यायां लक्षणायास्तृतीयस्या अभावात् । यदि वाकस्मिकविशिष्टप्रश्नार्थानुपपत्ते- र्मुख्यार्थबाधायां सादृश्याल्लक्षणा भवतु मध्ये । तस्यास्तु प्रयोजनं ध्वन्यमानमेव, तत्तु- र्यकक्ष्यानिवेशि, केवलं पूर्वत्र लक्षणैव प्रधानं ध्वननव्यापारे सहकारि । इह त्वभिधा- तात्पर्यशक्ती । वाक्यार्थसौन्दर्यादेव व्यङ्ग्यप्रतिपत्तेः केवलं लेशेन लक्षणाव्यापारोप- योगोऽप्यस्तीत्युक्तम् । असंलक्ष्यक्रमव्यङ्ग्ये तु लक्षणासमुन्मेषमात्रमपि नास्ति । असं- लक्ष्यत्वादेव क्रमस्येति वक्ष्यामः । तेन द्वितीयेऽपि भेदे चत्वार एव व्यापाराः ॥१३॥

अत एवोभयोदाहरणपृष्ठ एव भाक्तमाहुरित्यनुभाष्य दूषयति । अयं भावः— भक्तिश्च ध्वनिश्चेति किं पर्यायवत्तादूप्यम् ? अथ पृथिवीत्वमिव पृथिव्या अन्यतो व्या वर्तकधर्मरूपतया लक्षणम् ? उत काक इव देवदत्तगृहस्य सम्भवमात्रादुपलक्षणम् ? तत्र

बालप्रिया

प्रच्छन्नो यः स्वाभिप्रायोऽधरास्वादलिप्सात्मकः, तस्य ख्यापनार्थं यद्वैदग्ध्येन औचित्या- परित्यागेन चाटुविरचनं उक्तरूपं तदात्मकं तद्द्वारकं विभावस्य रत्यालम्बनभूतस्य तरुणीलक्षणस्य उद्दीपनं स्वाभिप्रायानुगुणतया अभिलाषोत्पादनमित्यर्थः । **व्यङ्ग्य- मिति** । अस्मिन् श्लोके प्राधान्येन व्यङ्ग्यमित्यर्थः । **यदि वा** अथवा । **आकस्मि- केति** । **आकस्मिकः** असम्भावितः इत्यनुपपत्तौ हेतुः । **विशिष्टः** शुककर्तृकतप- श्चरणदेशादिरूपश्च यः प्रश्नार्थः तस्यानुपपत्तेरित्यर्थः । **सादृश्याल्लक्षणेति** । असौ शुकशावक इत्यनेन कामुकः कश्चिद्युवा अधरपाटलं बिम्बफलं दशतीत्यनेनाधरास्वाद- नादिकञ्च सादृश्याल्लक्ष्यत इति भावः । **ध्वन्यमानमेव तदिति** । **तत्** प्रच्छन्नेत्या- दिपूर्वोक्तम् । उक्तयोर्विशेषमाह—**केवलमित्यादि** । **पूर्वत्र** सुवर्णेत्याद्युदाहरणे । प्रधानमित्यनेनेतरयोर्लेशतस्सहकारित्वमस्तीति दर्शितम् । **इहेति** । शिखरिणीत्यादा- वित्यर्थः । **शक्तीति** । प्रधाने इति विपरिणामेनानुषङ्गः । अत्र हेतुमाह—**वाक्यार्थेति** । एतावता लक्षणाया नाकिञ्चित्करत्वमित्याह—**लेशेनेत्यादि** । **इत्युक्तमिति** । 'यदिवे' त्यादिग्रन्थेनोक्तमित्यर्थः । नन्वेवंरीत्या विवक्षितान्यपरवाच्ये सर्वत्रापि किं लक्षणास्ति ? नेत्याह—**असंलक्ष्येति** । **असंलक्ष्यत्वादेवेति** । क्रमस्यासंलक्षणे मुख्यार्थबाधादि- स्फुरणस्य लक्षणाहेतोरसम्भवादिति भावः । यदिवेति प्रस्तुतं पक्षमुपसंहरति— **तेनेति** ॥ १३ ॥

**अत एवेति** । यस्मात् द्वितीयेऽपि प्रभेदे शिखरिणीत्यादौ क्वचिच्चत्वारो व्यापाराः तस्मादेवेत्यर्थः । तत्र भक्तिरूपाया लक्षणाया अभावे भक्तेर्ध्वनित्वशङ्कापरिहारयोस्तदान- न्तर्यं तत्तदश्लिष्टं स्यादिति भावः । 'भक्त्या बिभर्ती'त्यादेः 'सा तु स्यादुपलक्षण'मित्यन्त- ग्रन्थस्य भावं प्रदर्शयन्नवतारयति—**अयं भाव** इत्यादि । **इतीति** । इत्यनयोरित्यर्थः ।

यदप्युक्तं भक्तिर्ध्वनिरिति, तत्प्रतिसमाधीयते—

**भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः**

अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकत्वं बिभर्ति भिन्नरूपत्वात् । वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण प्रकाशनं यत्र व्यङ्ग्यप्राधान्ये स ध्वनिः । उपचारमात्रं तु भक्तिः ।

### लोचनम्

प्रथमं पक्षं निराकरोति—

**भक्त्या बिभर्तीति**। उक्तप्रकार इति पञ्चस्वर्थेषु योज्यम्—शब्देऽर्थे व्यापारे व्यङ्ग्ये समुदाये च । रूपभेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—**वाच्येति** । **तात्पर्येण** विश्रान्तिधामतया प्रयोजनत्वेनेति यावत् । **प्रकाशनं** द्योतनमित्यर्थः। **उपचारमात्रमिति** । उपचारो गुणवृत्तिर्लक्षणा। उपचरणमतिशयितो व्यवहार इत्यर्थः । **मात्रशब्देनेदमाह**—यत्र लक्षणाव्यापारात्तृतीयादन्यश्चतुर्थः प्रयोजनद्योतनात्मा व्यापारो वस्तुस्थित्या सम्भवन्नप्यनुपयुज्यमानत्वेनानाद्रियमाणत्वादसत्कल्पः । 'यमर्थमधिकृत्य' इति

### बालप्रिया

**पर्यायवदिति** । इन्द्रः शक्र इत्यादिपर्यायशब्दवाच्ययोरिवेत्यर्थः। **ताद्रूप्यमैक्यम्** । **पृथिवीत्वमिवेत्यादि**। यथा पृथिवीत्वं पृथिव्या जलादिव्यावर्तकधर्मरूपत्वेन लक्षणं, तथा भक्तिः किं ध्वनेर्लक्षणमित्यर्थः । **उतेत्यादि** । काकवद्देवदत्तगृहमित्यत्र यथा **काकसम्भवमात्रात्** कदाचित्सत्त्वमात्रेण देवदत्तगृहस्योपलक्षणं, तथा भक्तिः किं ध्वनेरुपलक्षणमित्यर्थः। 'अयं ध्वनिः भक्त्यैकत्वमैक्यन्न बिभर्ती'ति कारिकायामन्वयः। शब्द इत्यादिसप्तम्यन्तपञ्चकस्य 'अर्थेष्वि'त्यनेन सम्बन्धः । 'तात्पर्येणे'त्येतद्व्याचष्टे—**विश्रान्तीति** । गुणवृत्तौ लक्षणायाञ्च कथमुपचारशब्दप्रवृत्तिरित्यत आह—**उपचरणमिति** । यस्मिन्नर्थे यस्य शब्दस्य व्यवहारः प्रसिद्धः, तमतिलङ्घ्य तत्सम्बद्धेऽन्यस्मिन्नर्थे तस्य शब्दस्य व्यवहारोऽतिशयितो व्यवहारः । 'उपचारमात्रमि'ति मात्रशब्दप्रयोजनमाह—**मात्रशब्देनेत्यादि** । **यत्रेति**। परिम्लानमित्याद्युदाहरणेष्वित्यर्थः। **प्रयोजनेत्यादि** । तत्र हि वदतीत्यस्य सादृश्यान्निमित्ताद्गमयतीत्यर्थे लक्षणा, तस्याः प्रयोजनं सन्तापस्य स्फुटतया प्रतिपत्तिरिति ध्वननव्यापारो मुख्यवृत्तिपरित्यागान्यथानुपपत्तिरूपया वस्तुस्थित्या सम्भवन्नपीत्यर्थः। **अनुपयुज्यमानत्वेनेत्यादि** । तत्प्रयोजनस्य चारुत्वविशेषाभावादिति भावः। ननु प्रयोजनविषयत्वादेव तस्यादियमाणत्वमवश्यम्भावीति कथमसत्कल्पत्वमिति शङ्कायां तद्व्यापारविषयस्य न मुख्यं प्रयोजनत्वं तल्लक्षणासमन्वयात्, किन्त्वमुख्यमेवेति प्रदर्शयितुं न्यायसूत्रकारोक्तं मुख्यप्रयोजनलक्षणमाह—**यमिति** । 'यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनं' इति सूत्रम् ।

मा चैतत्स्याद्भक्तिर्लक्षणं ध्वनेरित्याह—

**अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ॥ १४ ॥**

नैव भक्त्या ध्वनिर्लक्ष्यते। कथम्? अतिव्याप्तेरव्याप्तेश्च। तत्रातिव्याप्तिर्ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सम्भवात्। यत्र हि व्यङ्ग्यकृतं महत्सौष्ठवं नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्य-

लोचनम्

हि प्रयोजनलक्षणम्। तत्रापि लक्षणास्तीति कथं ध्वननं लक्षणा चेत्येकं तत्त्वं स्यात्। द्वितीयं पक्षं दूषयति—**अतिव्याप्तेरिति**। असाविति ध्वनिः। तयेति भक्त्या। ननु ध्वननमवश्यम्भावीति कथं तद्व्यतिरिक्तोऽस्ति विषय इत्याह—**महत्सौष्ठवमिति**। अत एव प्रयोजनस्यानादरणीयत्वाद्व्यञ्जकत्वेन न कृत्यं किञ्चिदिति भावः। महद्ग्रहणेन गुणमात्रं तद्भवति। यथोक्तम्—'समाधिरन्यधर्मस्य क्वाप्यारोपो विवक्षित' इति दर्शयति। ननु प्रयोजनाभावे कथं तथा व्यवहार इत्याह—**प्रसिद्ध्यनुरोधेति**। परम्परया तथैव प्रयोगात्।

बालप्रिया

**तत्रापीति**। तादृशोदाहरणेष्वपीत्यर्थः। **लक्षणास्तीति**। अयं भावः—यदि भक्तिर्ध्वनिश्चैकं तत्त्वं स्यात्तदा ह्युदाहृते विषये ध्वनिसद्भावो लक्षणाया अभावो वा स्यात्। न चैतदुभयमपि। तेन लक्षणात्मिकाया भक्तेर्ध्वनिविविक्तस्वरूपत्वनिश्चयान्नैकत्वशङ्कावकाश इतीममर्थन्दर्शयितुं मात्रग्रहणमिति। **द्वितीयं पक्षमिति**। 'भक्तिर्ध्वनेर्लक्षणमि'ति पक्षमित्यर्थः। वृत्तौ 'मा चैतदि'त्यादेः भक्तिर्ध्वनिश्चैकं तत्वमित्येतन्मास्तु। भक्तिर्ध्वनेर्लक्षणमस्त्विति शङ्कायामाहेत्यर्थः। 'यत्र ही'त्यादिग्रन्थमवतारयति—**नन्वित्यादि**। **ध्वननमवश्यम्भावीति**। लक्षणायामिति शेषः। तात्पर्यमाह—**अत एवेत्यादि**। **अत एव** महतः सौष्ठवस्याभावादेव। **व्यञ्जकत्वेन** व्यञ्जनव्यापारेण। **न कृत्यं किञ्चिदिति**। व्यञ्जनस्य सद्भावमात्रन्न ध्वनिव्यवहारे प्रयोजकं, किन्तु चारुत्वातिशयशालित्वमेव। तच्चात्र नास्तीति न ध्वनिव्यवहारविषयत्वमिति भावः। **गुणमात्रमिति**। बन्धस्य कश्चन गुण एवेत्यर्थः। **तदिति**। व्यञ्जकत्वमित्यर्थः। 'भवती'ति 'दर्शयती'त्यन्वयः। महत्पदेन व्यङ्ग्यकृतकिञ्चित्सौष्ठवस्य प्रदर्शनादिति भावः। **समाधिरिति**। समाधिस्तन्नामा गुणः। अन्यस्याप्रस्तुतस्य यो धर्मस्तस्य। **क्वापि** प्रस्तुते वस्तुनि। 'कुमुदानि निमीलन्ती'त्यादीन्यस्योदाहरणानि। 'प्रसिद्ध्यनुरोधे'त्यत्र प्रकृष्टा सिद्धिः प्रसिद्धिः, सिद्धिर्नाम व्यवहारस्य प्रयोगमार्गाधिरोहः, तस्य प्रकर्षश्चाविच्छिन्नपारम्पर्यागतत्वमित्याशयेन प्रसिद्धिपदार्थमाह—**परम्परयेति**।

बहाराः कवयो दृश्यन्ते । यथा—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

तथा—

चुम्बिज्जइ असहुत्तं अवरुन्धिज्जइ सहस्सहुत्तम्मि ।
विरमिअ पुणो रमिज्जइ पिओ जणो णत्थि पुनरुत्तम् ॥
( शतकृत्वोऽवरुध्यते सहस्रकृत्वः चुम्ब्यते ।
विरम्य पुना रम्यते प्रियो जनो नास्ति पुनरुक्तम् ॥
इति च्छाया )

तथा—

कुविआओ पसन्नाओ ओरण्णमुहीओ विहसमाणाओ ।
जह गहिओ तह हिअअं हरन्ति उच्छिन्तमहिलाओ ॥

लोचनम्

वयं तु ब्रूमः—प्रसिद्धिर्या प्रयोजनस्यानिगूढतेत्यर्थः । उत्तानेनापि रूपेण तत्प्रयोजनं चकासन्निगूढतां निधानवदपेक्षत इति भावः । वदतीत्युपचारे हि स्फुटीकरणप्रतिपत्तिः प्रयोजनम् । यद्यगूढं स्वशब्देनोच्येत, किमचारुत्वं स्यात्? गूढतया वर्णने वा किं

बालप्रिया

परमतरीत्या प्रसिद्धिशब्दं व्याख्यातुमुपक्रमते—**वयन्त्विति** । **प्रसिद्धिः** प्रयोजनस्य प्रकर्षेण प्रकटतया सिद्धिः प्रतीतिः ; ध्वननातिरिक्तव्यापारविषयत्वयोग्यतया स्फुटतरावभासमानत्वमिति यावत् । **तदनुरोधेन** तद्विपरीतध्वननव्यापारविषयत्वानर्हतया तदनुरोधेनैव । प्रवर्तितो व्यवहारो यैरित्यर्थमभिप्रेत्य व्याचष्टे—**प्रसिद्धिर्येति** । प्रयोजनस्य अनिगूढता प्रकटता या, सात्र प्रसिद्धिशब्दार्थः ; न तु पूर्वोक्त इति भावः ।

ननु ध्वनिस्थलेऽपि प्रयोजनस्य स्फुटावभासमानत्वादनिगूढत्वं समानमिति शङ्कायां विशेषमाह—**उत्तानेनेत्यादि** । तत् **प्रयोजनं** ध्वनिस्थलीयं प्रयोजनम् । **उत्तानेन** स्फुटावभासमानेन । 'रूपेण चकासदपी'ति योजना । प्रकाशमानमपीत्यर्थः । **निगूढतां** नितरां स्फुटव्यवहारदशानाविर्भाविचारुत्वसम्पादिनीं गोप्यमानतामित्यर्थः । **निधानवत्** निधिवत् अपेक्षते । 'वदती'त्यादौ च नैवमित्याह—**वदतीत्यादि** । **स्फुटीत्यादि** । 'तद्रूपं प्रयोजनमगूढं सत् स्वशब्देनोच्येत यदी'त्यन्वयः । स्फुटं तत्सन्तापं गमयतीत्यादि निर्दिश्येत यदीत्यर्थः । **गूढतया वर्णने** वेति । 'कृशाङ्ग्यास्सन्तापं

तथा—

अज्जाएँ पहारो णवलदाए दिण्णो पिएण थणवट्टे ।
मिउओ वि दूसहो व्विअ जाओ हिअए सवत्तीणम् ॥

( भार्यायाः प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे ।
मृदुकोऽपि दुःसह इव जातो हृदये सपत्नीनाम् ॥

इति च्छाया )

लोचनम्

चारुत्वमधिकं जातम् ? अनेनैवाशयेन वक्ष्यति—यत उक्त्यन्तरेणाशक्यं यदिति । अवरुन्धिज्जइ आलिङ्ग्यते । पुनरुक्तमित्यनुपादेयता लक्ष्यते, उक्तार्थस्यासम्भवात् ।

कुपिताः प्रसन्ना अवरुदितवदना विहसन्त्यः ।
यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः ॥

अत्र ग्रहणेनोपादेयता लक्ष्यते । हरणेन तत्परतन्त्रतापत्तिः ।

तथा-अज्जेति । कनिष्ठभार्यायाः स्तनपृष्ठे नवलतया कान्तेनोचितक्रीडायोगेन मृदुकोऽपि प्रहारो दत्तः सपत्नीनां सौभाग्यसूचकं तत्क्रीडासंविभागमप्राप्तानां हृदये

बालप्रिया

वदती'त्यादिवर्णन इत्यर्थः । **किमिति** उभयत्र निषेधे । गूढतया वर्णनमात्रं न ध्वनिव्यवहारे प्रयोजकं, किन्तु स्वशब्दवाच्यावस्थानुद्भिन्नचारुत्वान्तरकारि गूढतया वर्णनमेव, यथा 'सुवर्णपुष्पामि'त्यादौ। 'वदती'त्यादौ तु गूढत्वेनागूढत्वेन वा वर्णनेऽपि चारुत्वविशेषस्य कस्यचिदनुपलम्भात्तद्वैपरीत्यमिति भावः । उक्तमर्थं वक्ष्यमाणकारिकया संवादयति—**अनेनैवेति** । **परिम्लानमिति** । रत्नावल्यां नायकस्योक्तिः । **उभयतः** द्वयोर्भागयोः । **तनोः** कृशस्य । व्यस्तो वैविध्येन क्षिप्तो न्यासस्सन्निवेशो यस्य । श्लथयोर्भुजलतयोः क्षेपा शय्याप्रान्तेषु निपातनानि वलनानि विवर्तनानि च । पीनेत्यादिहेतुः म्लानिमादिकार्यदर्शनेनानुमायोक्तः । अत्र शयनस्याचेतनस्य मुख्यार्थवचनकर्तृत्वान्वयानुपपत्त्या मुख्यार्थबाधेन ज्ञापनं सादृश्याल्लक्ष्यते, स्फुटीकरणप्रतिपत्तिश्च प्रयोजनमुक्तम् । **चुम्ब्यत** इति । नायिकयेति शेषः । प्रियो जनः शतकृत्वश्चुम्ब्यत इत्यान्वयः । **नास्ति पुनरुक्तमिति** । चुम्बनादेः पुनरुक्तत्वन्नास्तीत्यर्थः । अत्र चुम्बनादौ पुनर्वचनरूपमुख्यार्थस्य बाधाल्लक्षणेत्याह—**पुनरुक्तमित्यादि** । **उक्तार्थ**स्येति । वचनरूपार्थस्येत्यर्थः । अत्र प्रयोजनमधिकफलशालित्वरूपं, तच्च पूर्ववन्नादरास्पदमिति बोध्यम् ।

**कुपिता** इति । 'गृहीता' इत्यत्र पुरुषेणेति शेषः । अत्र 'गृहीता हरन्ती'त्यनयोर्मुख्यार्थयोरुपादानहरणयोरसम्भवादाह—**ग्रहणेनेत्यादि** । अत्रात्मसात्करणमत्यन्तं वैवश्यञ्च क्रमेण लक्षणयोः प्रयोजनम् । तदपि पूर्ववन्न श्लाघ्यम् । **उचितेति** ।

तथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

इत्यत्रेक्षुपक्षेऽनुभवतिशब्दः । न चैवंविधः कदाचिदपि ध्वनेर्विषयः ।

लोचनम्

दुःसहो जातः, मृदुकत्वादेव । अन्यस्य दत्तो मृदुः प्रहारोऽन्यस्य च सम्पद्यते । दुस्सहश्च मृदुरपीति चित्रम् । दानेनात्र फलवत्त्वं लक्ष्यते ।

**तथा—परार्थेति** । यद्यपि प्रस्तुतमहापुरुषापेक्षयानुभवतिशब्दो मुख्य एव, तथाप्यप्रस्तुते इक्षौ प्रशस्यमाने पीडाया अनुभवनेनासम्भवता पीडावत्त्वं लक्ष्यते ; तच्च पीड्यमानत्वे पर्यवस्यति । नन्वस्त्यत्र प्रयोजनं तत्किमिति न ध्वन्यत इत्य। शङ्कयाह—**न चैवंविध इति** ॥ १४ ॥

बालप्रिया

उचितो यः क्रीडायोगः क्रीडाप्रसङ्गः, यद्वा—उचितायां क्रीडायां यो योगः सम्भवेत्तेन हेतुना । दत्त इति सम्बन्धः । 'सपत्नीनां दुस्सहो जात' इत्यत्र गम्यं हेतुं विशेषण-द्वारा दर्शयति—सौभाग्येत्याद्यप्राप्तानामित्यन्तेन । सौभाग्यसूचकत्वे हेतुन्दर्शय-ति—**मृदुकत्वादेवेति** । मृदुकोऽपीत्यपिशब्दसूचितं विरोधं विशदयति—**अन्यस्ये-त्यादि** । एकस्य दत्तोऽन्यस्य सम्पद्यत इत्येकः, मृदोस्दुस्सहतया मृदुरपि दुस्सह इत्य-न्यश्च विरोध इत्यर्थः । अत्र मुख्यार्थस्य दानस्य बाधात्प्रहारो दत्त इत्यत्र दानेन दान-साध्यं फलवत्त्वं लक्ष्यत इत्याह—**दानेनेत्यादि** । **फलवत्त्वमिति**। कनिष्ठभार्यायाश्चरि-तार्थत्वमित्यर्थः । प्रयोजनञ्च प्रहारस्य सुखोपभोग्यत्वम् । तच्च नादरास्पदम् ।

**परार्थे** इति । इक्षुः परार्थे पीड्यते । महापुरुषश्च परार्थे पीडामनुभवति। इक्षुर्भ-ज्यमानोऽपि माधुर्यवान्। पुरुषोऽपि परुषीकरणे सत्यपि अनुकूलस्वभाव एव। **विकारो** गुडादिः कोपादिश्च । **वृद्धिः** परिपोषोऽभ्युदयश्च । अक्षेत्रमूषरभूमिरनुचितस्थानञ्च । अत्रेक्षुपक्षे 'अनुभवतिशब्द' इति वृत्युक्तं लाक्षणिकत्वमुपपादयति—**यद्यपीत्या-दिना** । **अनुभवनेनासम्भवतेति** । अनुभवनं हि ज्ञानं मुख्यार्थभूतं तच्चेक्षोरचेत-नत्वादसम्भवदित्यर्थः । **तच्च** पीडावत्त्वञ्च । **पीड्यमानत्व इति**। मर्द्यमानत्व इत्यर्थः । प्रयोजनञ्च कष्टावस्थत्वन्तदपि नादरास्पदम् । **नन्वित्यादि** । **ध्वन्यत इति** । ध्वनि-व्यवहारविषय इत्यर्थः । वृत्तौ 'एवंविध' इति । ईदृशमनादरपदं प्रयोजनमित्यर्थः । '**ध्वनेर्विषयः**' ध्वनिव्यवहारस्य विषयः ॥ १४ ॥

यतः—

उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन् ।
शब्दो व्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयीभवेत् ॥ १५ ॥

अत्र चोदाहृते विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः । किञ्च—

रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ॥ १६ ॥

तेषु चोपचरितशब्दवृत्तिरस्तीति । तथाविधे च विषये क्वाचित्सम्भव-

लोचनम्

**यत उक्त्यन्तरेणेति** । उक्त्यन्तरेण ध्वन्यतिरिक्तेन स्फुटेन शब्दार्थव्यापारविशेषेणेत्यर्थः । शब्द इति पञ्चस्वर्थेषु योज्यम् । **ध्वन्युक्तेर्विषयीभवेदिति**—ध्वनिशब्देनोच्यत इत्यर्थः । **उदाहृत** इति । वदतीत्यादौ ॥ १५ ॥

एवं यत्र प्रयोजनं सदपि नादरास्पदं तत्र को ध्वननव्यापार इत्युक्त्वा यत्र मूलत[1] एव प्रयोजनं नास्ति, भवति चोपचारस्तत्रापि को ध्वननव्यापार इत्याह—**किञ्चेति** । लावण्याद्या ये शब्दाः स्वविषयाल्लवणरसयुक्तत्वादेः स्वार्थादन्यत्र हृद्यत्वादौ रूढाः

बालप्रिया

'उक्त्यन्तरेणे'त्यत्र उक्तिशब्दो व्यापारवाची, अन्तरशब्दश्च ध्वन्यपेक्षयान्यवाचीत्याह—**ध्वन्यतिरिक्तेनेत्यादि** । **स्फुटेन** व्यवहारभूमिषु प्रसिद्धेन । 'शब्दो व्यञ्जकता'मित्यत्रत्यशब्दपदार्थमाह—**पञ्चस्विति** । शब्द्यते अभिधीयत इति वाच्यः, शब्द्यतेऽनेनेति वाचकः, शब्द्यते व्यज्यत इति व्यङ्ग्यः, शब्दनमिति व्यापारः । उक्तचतुष्टयचयत्वात्समुदायश्चात्र शब्दपदार्थ इत्यर्थः । उदाहृते विषय इत्यस्य विवरणम्—**वदतीत्यादाविति** ॥ १५ ॥

**मूलत एवेत्यादि** । ध्वनौ तावत् प्रयोजनं तस्यादरास्पदत्वञ्चेति द्वयमपेक्षितं, तयोर्मूलभूतं प्रयोजनमेव नास्तीत्यर्थः । स्वविषयशब्देन स्वमुख्यार्थो विवक्षित इत्याह—**लवणेत्यादि** । रूढत्वोक्तिः प्रयोजनाभावप्रकटनार्थेत्याह—**रूढत्वादेवेति** । व्यवधानमन्तरेण स्वार्थसमर्पकत्वं हि रूढत्वं, तदिह मुख्यार्थबाधतद्योगप्रयोजनत्रयसान्निध्यापेक्षणरूपव्यवधानशून्यत्वं रूढशब्देन दर्शितमिति प्रयोजनराहित्यमत्र व्यव-

१. मूलमेव मूलतः—'आद्यादित्वात्प्रथमान्तात्तसिः' । आश्रयभूतमित्यर्थः । तथा च यत्र आदरास्पदत्वादेराश्रयभूतं प्रयोजनमेव नास्ति, तत्र निरूढलक्षणास्थले ध्वनिव्यवहारस्य का शङ्कापीति भावः ।

अपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते । न तथाविधशब्दमुखेन ।

लोचनम्

रूढत्वादेव त्रितयसन्निध्यपेक्षणव्यवधानशून्याः[1] । यदाह—

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।

इति । ते तस्मिन् स्वविषयादन्यत्र प्रयुक्ता अपि न ध्वनेः पदं भवन्ति; न तत्र ध्वनिव्यवहारः । उपचरिता शब्दस्य वृत्तिर्गौणी; लाक्षणिकी चेत्यर्थः । आदिग्रहणेनानुलोम्यं प्रातिकूल्यं सब्रह्मचारीत्येवमादयः शब्दा लाक्षणिका गृह्यन्ते । लोम्नामनुगतमनुलोमं मर्दनम् । कूलस्य प्रतिपक्षतया स्थितं स्रोतः प्रतिकूलम् । तुल्यगुरुः सब्रह्मचारी इति मुख्यो विषयः । अन्यः पुनरुपचरित एव । न चात्र प्रयोजनं किञ्चिदुद्दिश्य लक्षणा प्रवृत्तेति न तद्विषयो ध्वननव्यवहारः ।

ननु 'देवडिति लुणाहि पल्लत्तम्मिगमिज्वालवणुज्वलं गुमरिफोल्लपरण्य' (१) इत्यादौ लावण्यादिशब्दसन्निधानेऽस्ति प्रतीयमानाभिव्यक्तिः; सत्यम्, सा तु न लावण्यशब्दात् । अपि तु समग्रवाक्यार्थप्रतीत्यनन्तरं ध्वननव्यापारादेव । अत्र हि प्रियतमामुखस्यैव समस्ताशाप्रकाशकत्वं ध्वन्यत इत्यलं बहुना । तदाह—**प्रकारान्तरेणेति** । व्यञ्जकत्वेनैव । न तूपचरितलावण्यादिशब्दप्रयोगादित्यर्थः ॥ १६ ॥

एवं यत्र यत्र भक्तिस्तत्र तत्र ध्वनिरिति तावन्नास्ति । तेन यदि ध्वनेर्भक्तिर्लक्षणं

बालप्रिया

तिष्ठत एवेत्यर्थः । **निरूढा** इति । काश्चिल्लक्षणाः । **सामर्थ्यात्** नियमेन प्रयोगसामर्थ्यात् अभिधानवद्भवन्ति । 'प्रयुक्ता' इत्यादिकारिकांशमनुषङ्गेण व्याचष्टे—**ते तस्मिन्नित्यादि** । 'तेषु चोपचरितशब्दवृत्ति'रिति ग्रन्थं व्याचष्टे—**उपचरितेत्यादि** । 'लावण्याद्या' इत्यत्रादिपदार्थमाह—**आदीत्यादि** । **अन्य** इति । अनुरोधी विरोधी तुल्य इति लोकप्रसिद्धोऽर्थ इत्यर्थः ।

'तथाविध' इत्यादि 'मुखेने'त्यन्तं वृत्तिग्रन्थं शङ्कासमाधानाभ्यां विवृणोति—**नन्वित्यादि** । पुस्तके दृश्यमानाया 'देवडि'त्यादिगाथाया ग्रन्थेषु तत्र तत्राक्षरभेदा दृश्यन्ते । अतश्चास्याः स्वरूपं छायां च निश्चेतुं न शक्नोमि । सहृदया निश्चिन्वन्तु । 'प्रियतमामुखस्यैवे'ति 'प्रियतमस्यैवे' ति च पाठः । **व्यञ्जकत्वेनैवेति** । अर्थगतव्यञ्जनव्यापारेणैवेत्यर्थः । 'न तथाविधे'त्यादिकं व्याचष्टे—**न तूपचरितेति** ॥ १६ ॥

'अपिचे'त्यादिग्रन्थमवतारयिष्यन्नुक्तमनुवदति—**एवमित्यादि** । **तेनेति** । उ-

१. मुख्यार्थबाधमुख्यार्थयोगप्रयोजनप्रतिपत्तिव्यवधानशून्या इत्यर्थः । वस्तुतस्तु—निरूढलक्षणास्थलेऽपि मुख्यार्थबाधमुख्यार्थयोगावपेक्ष्येते एव, प्रयोजनमात्रं नापेक्ष्यते । अन्यथा लक्षणोत्थितिरेव कथं स्यात् । अभिधातो भेदश्च कोऽवतिष्ठेत । अत एव निरूढोदाहरणे 'कर्मणि कुशल' इत्यादौ 'कुशग्रहणाद्ययोगात्' इत्यादिकाव्यप्रकाशग्रन्थोऽपि सङ्गच्छते इति ।

अपि च—

**मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।**
**यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥ १७ ॥**

लोचनम्

तदा भक्तिसन्निधौ सर्वत्र ध्वनिव्यवहारः स्यादित्यतिव्याप्तिः । अभ्युपगम्यापि ब्रूमः—भवतु यत्र यत्र भक्तिस्तत्र तत्र ध्वनिः । तथापि यद्विषयो लक्षणाव्यापारो न तद्विषयो ध्वननव्यापारः । न[1] च भिन्नविषययोर्धर्मधर्मिभावः, धर्म एव च लक्षणमित्युच्यते । तत्र लक्षणा तावदमुख्यार्थविषयो व्यापारः । ध्वननं च प्रयोजनविषयम् । न च तद्विषयोऽपि द्वितीयो लक्षणाव्यापारो युक्तः, लक्षणासामग्र्यभावादित्यभिप्रायेणाह—**अपि चे**त्यादि । मुख्यां वृत्तिमभिधाव्यापारं परित्यज्य परिसमाप्य गुणवृत्त्या लक्षणारूपयार्थस्यामुख्यस्य दर्शनं प्रत्यायना, सा यत्फलं कर्मभूतं प्रयोजनरूपमुद्दिश्य क्रियते, तत्र

बालप्रिया

रूव्याप्त्यभावेनेत्यर्थः । **इत्यतिव्याप्तिरि**ति । एवंरूपातिप्रसङ्ग इत्यर्थः । उक्तेति शेषः । वदतीत्यादौ लावण्यादिशब्दे च भक्तेस्सत्वेऽपि ध्वन्यभावस्य दर्शितत्वादित्यर्थः । किमभ्युपगम्यते, किमुच्यत इत्यत्र क्रमेणोभयमाह—**भवत्वि**त्यादि । भिन्न विषयकत्वमुपपादयति—**तत्रे**त्यादि । **अमुख्ये**ति । अमुख्यार्थो गङ्गादिशब्दस्य तीरादिः । **प्रयोजने**ति । गङ्गादिगतशैत्यपावनत्वादीत्यर्थः । **तद्विषयोऽपी**ति । प्रयोजनविषयकोऽपीत्यर्थः । **लक्षणासामग्री**ति । बाधादीत्यर्थः । नन्वभिधामन्तरेण लक्षणावृत्तेरसम्भवात्तत्परित्यागः कथमित्यतः परित्यज्येति पदं प्रकृतानुगुणतया व्याचष्टे—**परिसमाप्ये**ति । न तदवधारणमिह तत्परित्यागः, किन्तु तद्गोचरार्थाङ्गीकारपूर्वकं तदतिलङ्घनरूपमेव तद्द्वारकमर्थान्तरबोधनार्थं धावनमित्यर्थः । फलमित्यत्र द्वितीयार्थमाह—**कर्मे**ति । फलपदार्थमाह—**प्रयोजनरूपमि**ति । क्रियत इति शेषपूरणम् ।

१. **न च भिन्नविषय इति** । यत्र यत्र भक्तिस्तत्र तत्र ध्वनिरिति व्याप्तौ रूढ्यनादरास्पदप्रयोजनस्थले भक्तेर्ध्वन्यभाववद्वृत्तित्वेन व्यभिचारः प्राक्प्रतिपादितः । इदानीं तादृशीं व्याप्तिमभ्युपगम्यापि तयोर्लक्ष्यलक्षणभाव एव न सम्भवतीति प्रतिपादयति । **तथा हि**—यो हि यद्वृत्तिर्भवति स तल्लक्षणमित्युच्यत इति 'धर्म एव च लक्षणमित्युच्यत' इति ग्रन्थेनाभिधाय, भक्तिध्वन्योर्विभिन्नविषयकत्वाद्धर्मधर्मिभावो न सम्भवतीति 'न च भिन्नविषययोर्धर्मधर्मिभावः' इत्यनेनोपपादयति । तथा च 'गङ्गायां घोष' इत्यादौ विषयतासम्बन्धेन भक्तेः तीरं, ध्वनेश्च शैत्यपावनत्वादिकमधिकरणमित्येकविषयघटितस्वविषयविषयकत्वरूपपरम्परासम्बन्धेन भक्तेः ध्वन्यवृत्तित्वान्न तल्लक्षणत्वमित्यभिप्रायः ।

**तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये यदि**

लोचनम्

प्रयोजने तावद्द्वितीयो व्यापारः। न चासौ लक्षणैव; यतः स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिरवबोधनशक्तिर्यस्य शब्दस्य तदीयो व्यापारो लक्षणा। न च प्रयोजनमवगमयतः शब्दस्य बाधकयोगः। तथाभावे तत्रापि निमित्तान्तरस्य प्रयोजनान्तरस्य चान्वेषणेनानवस्थानात्। तेनायं[1] लक्षणलक्षणाया न विषय इति भावः। दर्शनमिति ण्यन्तो निर्देशः। **कर्तव्य** इति। अवगमयितव्य इत्यर्थः। अमुख्य-

बालप्रिया

'तत्रे'त्यस्य व्याख्यानं—**प्रयोजन** इति। **तावदि**ति सम्प्रतिपत्तौ। **द्वितीय** इति। अमुख्यार्थविषयव्यापारादन्य इत्यर्थः। **व्यापार** इति। अवश्यमभ्युपेय इति शेषः। तर्हि तद्विषयोऽपि लक्षणाव्यापारोऽभ्युपेयतामित्यत्राह—**न चे**ति। **असा**विति। द्वितीयो व्यापार इत्यर्थः। 'न च लक्षणैवे'त्यत्र हेतुत्वेन कारिकान्त्यपादं पातयति—**यत** इति। तथा च 'नैव स्खलद्गति'रित्यनेन लक्षणाया अभावः प्रतिपाद्यत इति भावः। **बाधके**ति। बाधकप्रमाणव्यापारेणेत्यर्थः। **विधुरीक्रियमाणा** कुण्ठीक्रियमाणा। **अवबोधने**ति। स्वार्थबोधनेत्यर्थः। **तदीय** इति। तथाविधशब्दसम्बन्धीत्यर्थः। भवत्वेवं ततः किमत आह—**न चे**ति। **अवगमयत** इति। अवगमनकाल इति भावः। **शब्दस्ये**ति। तटाद्यर्थवृत्तेर्गङ्गादिशब्दस्येत्यर्थः। **बाधकयोग** इति। घोषादिपदान्तरार्थान्वयायोग्यार्थकत्वरूपबाधितार्थकत्वमित्यर्थः। अभ्युपगम्याप्याह—**तथे**ति। **तथा भावे** बाधकयोगे सति। **तत्रापी**ति। प्रयोजने बोध्येऽपीत्यर्थः। **निमित्ते**ति। सम्बन्धरूपनिमित्तेत्यर्थः। **अन्वेषणेनानवस्थानादि**ति। 'न च बाधकयोग' इत्यनेनास्य सम्बन्धः। लक्षितेन तीरादिना लक्षणया प्रयोजनरूपार्थः प्रत्याय्यत इति केचित्; तन्मतन्निराकरोति–**तेने**त्यादि। **तेन** बाधकयोगाभावेन। **अयमि**ति। प्रयोजनरूपार्थ इत्यर्थः। **न विषय** इति। किन्त्वन्य एव तद्विषय इति भावः।

यथा—"आ हन्त किमिदं तन्वि नेत्रयोः श्रावणस्तव।
शरत्कपोले ग्रीष्मोऽङ्गे शिशिरो मुखपङ्कजे" ॥ इति।

अत्र श्रावणादिपदेन वर्षत्वादिकं लक्ष्यते, तेनाश्रुपातादिकञ्च। अतो लक्षितलक्षणाप्रयोजनमत्रोत्कण्ठातिशयः। तत्र श्रवणादिपदेनाश्रुपातादिरेव लक्ष्यत इत्यतो लक्षितलक्षणाया अभावादयन्न तद्विषय इत्यर्थ इति केचित्। 'दर्शनं प्रत्यायने'ति यद्व्याख्यातन्तदुपपादयति–**दर्शन**मिति। **अवगमयितव्य** इत्यर्थ इति। 'चारु-

---

१. तेनायमिति। तेन = स्खलद्गतित्वाभावेन। अयं = शैत्यपावनत्वादिरूपप्रयोजनात्मकः, लक्षणलक्षणाया न विषयः = लक्षणलक्षणाप्रयोज्यविषयतावान्नेत्यर्थः। अपि तु तीरादिरेव। अर्थात् 'गङ्गायां घोष' इत्यादौ लक्ष्यार्थस्य शक्यार्थसंवलितत्वेन

**शब्दस्यामुख्यता तदा तस्य प्रयोगे दुष्टतैव स्यात् । न चैवम्;**

लोचनम्

तेति । बाधकेन विधुरीकृततेत्यर्थः । **तस्येति** शब्दस्य । **दुष्टतैवेति** । प्रयोजनावगमस्य सुखसम्पत्तये हि स शब्दः प्रयुज्यते तस्मिन्नमुख्यार्थे । यदि च 'सिंहो वटुः' इति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य तर्हि तत्प्रतीतिं नैव कुर्यादिति किमर्थं तस्य प्रयोगः । उपचारेण करिष्यतीति चेत्तत्रापि प्रयोजनान्तरमन्वेष्यं तत्राप्युपचार इत्यनवस्था । अथ न तत्र स्खलद्गतित्वं, तर्हि प्रयोजनेऽवगमयितव्ये न लक्षणाख्यो व्यापारः तत्सामग्र्यभावात् । न च नास्ति व्यापारः । न चासावभिधा, समयस्य तत्राभावात् । यद्व्यापारान्तरमभिधालक्षणातिरिक्तं स ध्वननव्यापारः । न

बालप्रिया

त्वातिशयविशिष्टार्थलक्षणे प्रयोजने' इति पाठमभिप्रेत्यैवं व्याख्यातम् । 'चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षण' इति पाठे तु कर्तव्य इत्यस्योत्पादयितव्ये इत्येवार्थः । प्रयोजने, बोध्ये स्खलद्गतित्वस्य निषेधान्नामुख्यतापदेन तदेव विवक्षितमित्याह—**बाधकेने**त्यादि । ननूक्तरूपामुख्यत्वाभ्युपगमः कथं दुष्टत्वापादकः । दुष्टत्वं हि व्याकरणसंस्काराहित्यादिरूपमिति शङ्कायां प्रतिपिपादयिषितार्थप्रतीत्यजनकत्वेन वैयर्थ्यम्; तदत्र वविक्षितमित्याह—**प्रयोजने**त्यादि । **प्रयोजनावगमस्य** शौर्यातिशयादेर्बोधस्य । **सुखसम्पत्तये** सुखेन जननाय । **स शब्दः** सिंहादिर्लक्षकशब्दः । **तस्मिन्नमुख्यार्थे** इति । वट्वाद्यर्थ इत्यर्थः । किमतस्तत्राह—**यदि चेति** । **शौर्ये**ति । यथा वटौ तथा शौर्यातिशयेऽपीत्यर्थः । **तत्प्रतीतिं** शौर्यातिशयप्रतीतिम् । **किमर्थमिति** । तत्प्रयोगस्य वैयर्थ्यापात इत्यर्थः । अथ प्रयोजने ध्वननव्यापारं व्यवस्थापयिष्यन् उक्तमेवार्थं शङ्कापरिहाराभ्यां प्रदर्शयन्नाह—**उपचारे**णेत्यादि । 'करिष्यती'त्यत्र 'तत्प्रतीतिं तस्य प्रयोग' इति चानुषज्यते । **तत्रापीति** । शौर्यातिशयेऽपि लक्ष्ये सतीत्यर्थः । **प्रयोजनान्तरमन्विष्यमिति** । लक्षणायाः प्रयोजननियतत्वेनान्यत्प्रयोजनं किञ्चिदेषितव्यमित्यर्थः । **तत्रापीति** । तस्मिन् प्रयोजनेऽपि उपचारे पूर्ववदङ्गीकार्ये तत्राप्यन्यदेवं तत्राप्यन्यदित्यनवस्था मूलक्षयकारिणी स्यादित्यर्थः । अतः स्खलद्गतित्वाभ्युपगमो न युक्त इति भावः । ननु मा भूत्स्खलिद्गतित्वं, तथापि लक्षणाया अभावः कुत इत्यत आह—**अथे**त्यादि । व्यञ्जनां परिशेषयितुमाह—न **चे**त्यादि । **समयस्येति** । सङ्केतस्येत्यर्थः । वक्ष्यमाणं वाचकत्वाश्रयेण गुणवृत्तेरवस्थानमुपपादयिष्यन्नभिधाशेषत्वं लक्षणायास्तावदुपपादयति—**तेने**त्यादि । **तेन** यतः स्खलद्गतेश्शब्दस्य व्यापारो लक्षणा, ततो हेतोः । **अभिधापुच्छभूतैव** 'लक्षणे'त्यनेनास्य सम्बन्धः ।

---

उपादानलक्षणाया अभावात्तीरादौ लक्षणलक्षणैव; सापि तत्रैव, न शैत्यादौ, हेतोरभावात् इति तात्पर्यम् ।

तस्मात्–

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥ १८ ॥

तस्मादन्यो ध्वनिरन्या च गुणवृत्तिः । अव्याप्तिरप्यस्य लक्षणस्य ।

लोचनम्

चैवमिति । न च प्रयोगे दुष्टता काचित्, प्रयोजनस्याविघ्नेनैव प्रतीतेः । तेनाभिधैव मुख्येऽर्थे बाधकेन प्रविवित्सुर्निरुध्यमाना सती अचरितार्थत्वादन्यत्र प्रसरति । अत एव अमुख्योऽस्यायमर्थ इति व्यवहारः । तथैव चामुख्यतया सङ्केतग्रहणमपि तत्रास्तीत्यभिधापुच्छभूतैव लक्षणा ॥ १७ ॥

उपसंहरति—तस्मादिति । यतोऽभिधापुच्छभूतैव लक्षणा, ततो हेतोर्वाचकत्वमभिधाव्यापारमाश्रिता तद्बाधनेनोत्थानात्तत्पुच्छभूतत्वाच्च गुणवृत्तिः गौणलाक्षणिकप्रकार इत्यर्थः । सा कथं ध्वनेर्व्यञ्जनात्मनो लक्षणं स्यात् ? भिन्नविषयत्वादिति । एतदुपसंहरति—तस्मादिति । यतोऽतिव्याप्तिरुक्ता तत्प्रसङ्गेन च भिन्नविषयत्वं तस्मादित्यर्थः । एवम् 'अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया' इति कारिकागतातिव्याप्तिं व्याख्यायाव्याप्तिं व्याचष्टे—अव्याप्तिरप्यस्येति । अस्य गुणवृत्तिरूप-

बालप्रिया

कथमित्यत्र अभिधैवेत्यादि । 'अभिधैवान्यत्र प्रसरती'त्यन्वयः । अभिधा गङ्गादिपदनिष्ठमभिधायकत्वन्तद्विशिष्टं गङ्गादिपदं वा । अन्यत्र मुख्यार्थप्रवाहादेरन्यस्मिंस्तीरादौ । अन्यत्र प्रसरणे हेतुः—अचरितार्थत्वादिति । पर्यवसितविशिष्टार्थप्रतीतिरूपस्वकार्यानुपधायकत्वादित्यर्थः । अत्रापि हेतुमाह—मुख्येऽर्थे इत्यादि । 'मुख्ये अर्थे प्रविवित्सुः बाधकेन निरुध्यमाने'ति सम्बन्धः । बाधकेनेत्यनन्तरं विधुरीकृतेति च क्वचित् ग्रन्थे पाठः । अत एव उक्तादेव हेतोः । अमुख्योऽस्येति । यथा प्रवाहादिकमुद्दिश्य गङ्गादिशब्दस्यायं मुख्यार्थ इति व्यवहारः, तथा तीरादिकमुद्दिश्यायममुख्यार्थ इति च व्यवहारोऽस्तीत्यर्थः । तथा च द्वयोरर्थत्वं तुल्यं मुख्यत्वामुख्यत्वकृत एव भेद इति भावः । सङ्केतग्रहणमपि समानमित्याह—तथैवेत्यादि । यथा मुख्येऽर्थे सङ्केतग्रहणन्तथैव । सङ्केतेति । न हि शब्दस्य यः कश्चिदेवामुख्योऽर्थः किन्त्वयमर्थोऽस्य शब्दस्यामुख्य इति नियत एवेत्यतस्तथाविधोपदेशरूपस्य । अयमर्थोऽस्माच्छब्दाद्बोद्धव्य इति इच्छारूपस्य वा सङ्केतस्य ग्रहणमपीत्यर्थः । विस्तृतमिदं काव्यप्रकाशसङ्केते ॥ १७ ॥

उपसंहरति—तस्मादितीति । तस्मादित्युपसंहरतीति च पाठः । तस्मादित्यस्य कारिकया सम्बन्धं दर्शयंस्तत्पदं व्याचष्टे—यत इत्यादि । वाचकत्वाश्रितत्वं तन्निबन्धनत्वादिरूपं इति दर्शयति–तदित्यादि । गुणवृत्तिरित्यस्य व्याख्यानम्–गौणो-

न हि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः, अन्ये च बहवः प्रकारा भक्त्या व्याप्यन्ते; तस्माद्भक्तिरलक्षणम् ।

**लोचनम्**

स्येत्यर्थः । यत्र यत्र ध्वनिस्तत्र तत्र यदि भक्तिर्भवेन्न स्यादव्याप्तिः । न चैवम्; अविवक्षितवाच्येऽस्ति भक्तिः 'सुवर्णपुष्पां' इत्यादौ । 'शिखरिणि' इत्यादौ तु सा कथम् । ननु लक्षणा तावद्गौणमपि व्याप्नोति । केवलं शब्दस्तमर्थं लक्षयित्वा तेनैव सह सामानाधिकरण्यं भजते—'सिंहो बटुः' इति । अर्थो वार्थान्तरं लक्षयित्वा स्ववाचकेन तद्वाचकं समानाधिकरणं करोति । शब्दार्थौ वा युगपत्तं लक्षयित्वा अन्याभ्यामेव शब्दार्थाभ्यां मिश्रीभवत इत्येवं लाक्षणिकाद्गौणस्य भेदः । यदाह—'गौणे[1] शब्द-

**बालप्रिया**

त्यादि । वृत्तौ 'न हि व्याप्यन्त' इत्यन्वयः । तत्तात्पर्यं विवृणोति—**यत्रे**त्यादि । **'शिखरिणी'त्यादा**विति । विवक्षितान्यपरवाच्य इति शेषः । **सा कथमिति** । भक्तिर्नास्तीत्यर्थः । तथा चाव्याप्तिरिति भावः । अथ गौणस्थलेऽपि लक्षणायाः प्रसराद्विवक्षितान्यपरवाच्योदाहरणत्वेन प्रदर्शिते 'शिखरिणी'त्यादौ सा प्रवर्तत एवेति तत्र तदभावाभिधानमसङ्गतमिति पूर्वपक्षमभ्युपेत्य तदनुरोधेनापि विवक्षितान्यपरवाच्येत्यादिग्रन्थं व्याख्यास्यन् शिष्यव्युत्पादनार्थं तत्पूर्वपक्षमुपक्षिपति—**नन्वि**त्यादि । **गौणमपि** 'सिंहो वटु'रित्यादिस्थलमपि । **व्याप्नोतीति** । लक्षणासामग्रीसत्वादिति भावः । नन्वेवं गौणस्य लाक्षणिकाद्भेदः कुत इत्यत आह—'केवलमि'त्यादिना 'भेद' इत्यन्तेन । **शब्दः** सिंहादिशब्दः । **तमर्थं** वट्वाद्यर्थम् । **तेनैव** वट्वाद्यर्थवाचकवट्वादिशब्देनैव । **सामानाधिकरण्यं भजते** समानाधिकरणो भवति । शब्दयोस्सामानाधिकरण्यन्नाम भिन्नभिन्नरूपेणैकार्थप्रतिपादकत्वम् । लाक्षणिकात् गौणस्यायं विशेष इति भावः । एवमुत्तरत्रापि ज्ञेयम् । **अर्थो वेति** । **अर्थः** सिंहादिपदार्थः । **अर्थान्तरं** वट्वाद्यात्मकम् । **स्ववाचकेन** सिंहादिपदेन । **तद्वाचकं** वट्वादिशब्दम् । **शब्दार्थौ वेति** । **शब्दार्थौ** सिंहादिशब्दस्तदर्थश्च । **तं** वट्वाद्यर्थम् । **अन्याभ्यां** वट्वादिशब्दतदर्थाभ्याम् । 'ताभ्यामि'ति पाठेऽप्ययमेवार्थः । **मिश्रीभवत इति** । मिश्रीभवनं नाम शब्दयोरेकधर्मिबोधकत्वमर्थयोस्त्वभेदेनान्वयित्वम् । उक्तार्थोपष्टम्भकमाह—**गौण** इत्यादि । **गौणे** गौणस्थले । **शब्दप्रयोगः** लक्ष्यवाचकपदप्रयोगः । यथा

---

१. अयं ग्रन्थो मतान्तरपरतया नेयः । प्रकाशकृता तु लक्षणायामपि 'आयुर्घृतं' 'स्थूणा इन्द्रः' इत्यादौ लक्ष्यार्थवाचकशब्दः प्रयुक्तः । दर्पणादावप्येवं दृश्यते । अत एव सारोपासाध्यवसानाभेदौ लक्षणायामपि भवत एव ।

लोचनम्

प्रयोगः, न लक्षणायाम्' इति, तत्रापि लक्षणास्त्येवेति सर्वत्र सैव व्यापिका । सा च पञ्चविधा । तद्यथा—अभिधेयेन संयोगात् ; द्विरेफशब्दस्य हि योऽभिधेयो भ्रमरशब्दः द्वौ रेफौ यस्येति कृत्वा तेन भ्रमरशब्देन यस्य संयोगः सम्बन्धः षट्पदलक्षणस्यार्थस्य सोऽर्थो द्विरेफशब्देन लक्ष्यते, अभिधेयसम्बन्धं व्याख्यातरूपं निमित्तीकृत्य । सामीप्यात् 'गङ्गायां घोषः' । समवायादिति सम्बन्धादित्यर्थः, 'यष्टीः प्रवेशय' इति यथा । वैपरीत्यात् यथा—शत्रुमुद्दिश्य कश्चिद्ब्रवीति—'किमिवोपकृतं न तेन मम' इति । क्रियायोगादिति कार्यकारणभावादित्यर्थः । यथा—अन्नापहारिणि व्यवहारः प्राणानयं हरति इति । एवमनया लक्षणया पञ्चविधया विश्वमेव व्याप्तम् । तथाहि—'शिखरिणि'

बालप्रिया

सिंहो वटुरित्यादौ वट्वादिशब्दप्रयोगः । **न लक्षणायामि**ति । लक्षणास्थले लक्ष्यवाचकपदप्रयोगो नेत्यर्थः । यथा 'गङ्गायां घोष' इत्यादौ न तीरादिवाचकपदप्रयोगः । फलितमाह—**इति तत्रापी**ति । इतीत्यस्याहेति पूर्वेणापि सम्बन्धः । **तत्रापि** गौणस्थलेऽपि । **सैव** लक्षणैव ।

"अभिधेयेन संयोगात्सामीप्यात्समवायतः ।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा स्मृता" ॥

इति वचनं खण्डशः उपादाय व्याचष्टे—**अभिधेयेनेत्यादि** । अत्र संयोगपदेन वाच्यवाचकभावरूपस्सम्बन्धः,[1] समवायपदेन तदितर आधाराधेयभावरूपस्सारूप्यादिश्च विवक्षितः । "अभिधेयेन सामीप्यात्सारूप्यादि"ति चात्र पाठोऽस्ति । स एव भाक्तमाहुरित्यत्र पूर्वं प्रदर्शितः । **तेने**ति । द्विरेफशब्दाभिधेयभूतेनेत्यर्थः । 'यस्यार्थस्ये'त्यन्वयः । संयोग इत्यस्य व्याख्यानम्—**सम्बन्ध** इति । वाच्यवाचकभावात्मकस्सम्बन्ध इत्यर्थः । 'निमित्तीकृत्य लक्ष्यत' इति सम्बन्धः । **सम्बन्धादि**ति । आधाराधेयभावरूपसम्बन्धादित्यर्थः । **किमिवोपकृतमि**ति । अत्रापकारो लक्ष्यत इति भावः । यथा काव्यप्रकाशे "उपकृतं बहुनामे"त्यादि । **प्राणानि**ति । प्राणशब्देनान्नं लक्ष्यत इति भावः । **विश्वमेवे**ति । अमुख्यव्यवहारभूमिपतितं सर्वमेवेत्यर्थः । **तथाही**ति । तथाचेत्यर्थः । नन्वित्यादिना लक्षणास्तीत्यन्तेनोक्तं पूर्वपक्षमभ्युपगमेन

१. वृत्तौ एकार्थीभावात्मकं शक्त्यन्तरं वैयाकरणा अभ्युपगच्छन्ति । तन्मतमाश्रित्येदम् । न्यायनये तु द्विरेफशब्दस्य रेफद्वयमात्रमभिधेयम् । लक्षणा तु द्विरेफशब्दस्य स्ववाच्यरेफद्वयघटितभ्रमरपदवाच्यत्वसम्बन्धेन भ्रमररूपेऽर्थे । अत एवास्याः लक्षितलक्षणेति व्यवहारः शास्त्रेषु दृश्यते ।

२. प्रतियोग्यनुयोग्युभयवृत्तिधर्मं संसर्गत्वेनाङ्गीकुर्वतां वैयाकरणानां मतमवलम्ब्यैतत् । प्राचीना नैयायिकाः प्रतियोगिवृत्तिधर्ममेव, नवीनाश्चानुयोगिवृत्तिधर्ममेव, संसर्गत्वेनाभ्युपयन्ति । प्रपञ्चश्चास्य व्युत्पत्तिवादादौ द्रष्टव्यः ।

लोचनम्

इत्यत्राकस्मिकप्रश्नविशेषादिबाधकानुप्रवेशे सादृश्याल्लक्षणास्त्येव । नन्वत्राङ्गीकृतैव मध्ये लक्षणा, कथं तर्ह्युक्तं विवक्षितान्यपरेति ? तद्भेदोऽत्र मुख्योऽसंलक्ष्यक्रमात्मा विवक्षितः । तद्भेदशब्देन च रसभावतदाभासतत्प्रशमभेदास्तदवान्तरभेदाश्च, न च तेषु लक्षणाया उपपत्तिः । तथाहि-विभावानुभावप्रतिपादके काव्ये मुख्येऽर्थे तावद्बाधकानुप्रवेशोऽप्यसम्भाव्य इति को लक्षणावकाशः ?

ननु किं बाधया, इयदेव लक्षणास्वरूपम्—'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इति । इह चाभिधेयानां विभावानुभावादीनामविनाभूता रसादय इति लक्ष्यन्ते, विभावानुभावयोः कारणकार्यरूपत्वात्, व्यभिचारिणां च तत्सहकारित्वादिति चेत्—मैवम्; धूमशब्दाद्धूमे प्रतिपन्ने ह्यग्निस्मृतिरपि लक्षणाकृतैव स्यात्, ततोऽग्नेः शीतापनोदस्मृतिरित्यादिरपर्यवसितः शब्दार्थः स्यात् । धूमशब्दस्य स्वार्थविश्रान्तत्वान्न तावति व्यापार इति चेत्, आयातं तर्हि मुख्यार्थबाधो लक्षणाया जीवितमिति, सति तस्मि-

बालप्रिया

परिहरति—**नन्वत्राङ्गीकृतेति** । 'शिखरिणी'त्यादौ लक्षणाङ्गीकारः पूर्वं प्रदर्शित एवेत्यर्थः । पृच्छति—**कथन्तर्हीति** । वृत्तौ 'विवक्षितान्यपरे'त्युक्तं कथं सङ्गच्छत इत्यर्थः । लक्षणायां सत्यां वाच्यस्य विवक्षितत्वासम्भवादिति भावः । उत्तरमाह—**तद्भेद इति** । वृत्तौ विवक्षितान्यपरवाच्यशब्देन तदवान्तरभेदो मुख्योऽसंलक्ष्यक्रमो विवक्षित इत्यर्थः । **तद्भेदशब्देनेति** । वृत्तौ 'तद्भेदप्रकारा' इत्यत्र तद्भेदशब्देनेत्यर्थः । **तदवान्तरभेदाश्चेति** । शृङ्गारहास्यादयश्चेत्यर्थः । अत्रापि लक्षणा किन्न स्यादत आह—**न चेति** । अनुपपत्तिं विवृणोति—**तथाहीति** । बाधकानुप्रवेशोऽपीत्यपिशब्दः प्रयोजनस्य समुच्चायकः ।

शङ्कते—**नन्विति** । **किं बाधयेति** । अस्ति वा नास्ति वेति चिन्तितया मुख्यार्थबाधया किं फलमित्यर्थः । **इयदेवेति** । वक्ष्यमाणमेवेत्यर्थः । **अभीति** । अभिधेयेनाविनाभूतस्य केनापि सम्बन्धेन सम्बद्धस्य प्रतीतिर्ज्ञानं तद्धेतुर्वा । **इतीति** । इति भट्टवार्तिकोक्तमित्यर्थः । प्रकृते सङ्गमयति—**इहेत्यादि**। इह असंलक्ष्यक्रमव्यङ्ग्ये ध्वनौ । 'रसादयः अविनाभूता इति हेतोर्लक्ष्यन्त' इति सम्बन्धः । अविनाभावमुपपादयति—**विभावेत्यादि** । **कारणेत्यादि** । रसं प्रतीति शेषः । समाधत्ते—**मैवमिति** । मुख्यार्थबाधैव लक्षणाबीजमिति दर्शयिष्यन्नादावतिप्रसङ्गमाह—**धूमशब्दादित्यादि** । **अग्नीत्यादि** । अग्नेर्धूमाविनाभूतत्वादिति भावः । **शब्दार्थ** इति धूमशब्दार्थ इत्यर्थः । उक्तातिप्रसङ्गं पूर्वपक्षी परिहरति—**धूमशब्दस्येत्यादि** । **स्वार्थेति** । **स्वार्थे** धूमत्वे तद्विशिष्टे वा । **विश्रान्तत्वात्** पर्यवसितबोधनव्यापारत्वात् । **तावति** अग्न्याद्यर्थे । तर्हि जितमिति सिद्धान्त्याह—**आयातमित्यादि** । **जीवि-**

लोचनम्

न्स्वार्थविश्रान्त्यभावात्। न च विभावादिप्रतिपादने बाधकं किञ्चिदस्ति।

नन्वेवं धूमावगमनानन्तराग्निस्मरणवद्विभावादिप्रतिपत्त्यनन्तरं रत्यादिचित्तवृत्तिप्रतिपत्तिरिति शब्दव्यापार एवात्र नास्ति। इदं तावदयं प्रतीतिस्वरूपज्ञो मीमांसकः प्रष्टव्यः—किमत्र परचित्तवृत्तिमात्रे प्रतिपत्तिरेव रसप्रतिपत्तिरभिमता भवतः? न चैवं भ्रमितव्यम्; एवं हि लोकगतचित्तवृत्त्यनुमानमात्रमिति का रसता? यस्त्वलौकिकचमत्कारात्मा रसास्वादः काव्यगतविभावादिचर्वणाप्राणो नासौ स्मरणानुमानादिसाम्येन खिलीकारपात्रीकर्तव्यः। किं तु लौकिकेन कार्यकारणानुमानादिना संस्कृतहृदयो विभावादिकं प्रतिपद्यमान एव न ताटस्थ्येन प्रतिपद्यते, अपि तु हृदयसंवादापरपर्यायसहृ-

बालप्रिया

तमिति। बीजमित्यर्थः। 'बीजं जीवितमि' च पाठः। कुत इत्यत्राह—**सतीत्यादि**। **तस्मिन्निति**। मुख्यार्थबाध इत्यर्थः। समानेऽपि स्वार्थाभिधानसामर्थ्ये धूमशब्दस्स्वार्थे विश्राम्यति। 'गङ्गायां घोष' इत्यत्र गङ्गाशब्दो नेत्यत्र मुख्यार्थबाध एव हेतुरतस्स एव लक्षणाबीजमित्यर्थः। तर्हीहापि मुख्यार्थबाधो लक्षणा च स्यात्, नेत्याह–**न चेति**।

प्रसङ्गादनिष्टमाशङ्कते—**नन्वेवमित्यादि**। विभावादिप्रतीत्यनन्तरभाविनो रत्यादिप्रतीतिर्धूमादिप्रतीतिजन्याग्न्यादिस्मृतिसमानैवेति सा शब्दव्यापारजन्या न भवति दूरे तस्या व्यञ्जनाजन्यत्वमित्यर्थः। विमता रत्यादिप्रतीतिर्न शाब्दी, शब्दजन्यार्थप्रतीतिजन्यत्वात्, धूमशब्दजनितार्थप्रतीतिजन्याग्न्यादिस्मृतिवदिति प्रयोगः। किमत्र परकीयरत्यादिचित्तवृत्तिप्रतीतेः शब्दव्यापाराजन्यत्वं सिषाधयिषितं? किं वा रसप्रतीतेः? आद्ये सिद्धसाधनम्; द्वितीये रसप्रतीतेरितरप्रतीतिवैलक्षण्येन दृष्टान्ताभावो दोष इत्याशयेन सोपहासं पृच्छन्नाह—**इदमित्यादि**। प्रश्नं विवृणोति–**किमित्यादि**। **अत्रेति**। काव्य इत्यर्थः। **न चेति**। एवं भ्रमो न कर्तव्य इत्यर्थः। कुत इत्यत्राह—**एवं हीत्यादि**। **एवं** लौकिकचित्तवृत्तिप्रतीतेरेव रसत्वाङ्गीकारे सति। मात्रमित्यनन्तरं रसप्रतीतिरिति शेषः। **का रसतेति**। रसनीयतानिमित्तको हि रसशब्दव्यवहारः। न चानुमितिरूपायाः प्रतीतेः रसनीयत्वमस्ति वह्न्याद्यनुमितिष्वनुपलम्भादित्यर्थः। का तर्हि रसप्रतीतिरित्यत आह—**यस्त्वित्यादि**। अलौकिकेत्यनेन लौकिकसुखास्वादो व्यावर्त्यते। अलौकिकत्वे हेतुं दर्शयंस्तस्य कारणमाह—**काव्येति**। **नासाविति**। **असौ** रसास्वादः। स्मरणानुमानसाम्येनेत्यस्य खिलीकारेऽन्वयः। **लौकिकेनेति** लोके भवतेत्यर्थः। **कार्येति**। कार्यं वह्न्यादेर्धूमादि, रत्यादिचित्तवृत्तेः कटाक्षादि। कारणं वह्न्यादि, रत्यादि च कार्येण यत् कारणस्यानुमानं, आदिपदेनार्थापत्तेस्सङ्ग्रहः। तेन संस्कृतहृदय इत्यनेन तत्संस्कारोऽपि प्रतिपत्तुः रसप्रतीतावुपयोगीति दर्शितम्। **विभावादिकमिति**। प्रमदादिकमित्यर्थः। **प्रतिपद्यमान** एवेति। काव्यान्नाट्याद्वेति शेषः। **ताटस्थ्येनेति**। अन्यदीयत्वेनेत्यर्थः। न प्रतिपद्यत इत्यत्रापि विभावादिकमित्यस्य सम्बन्धः। कथन्तर्हि तत्प्रतीतिरित्यत आह—**अपि त्वित्यादि**। **हृदयेति**।

लोचनम्

दयत्वपरवशीकृततया पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मरणादिसरणिमनारुह्यैव तन्मयीभवनोचितचर्वणाप्राणतया। न चासौ चर्वणा प्रमाणान्तरतो जाता पूर्वं, येनेदानीं स्मृतिः स्यात्। न चाधुना कुतश्चित्प्रमाणान्तरादुत्पन्ना, अलौकिके प्रत्यक्षाद्यव्यापारात्। अत एवालौकिक एव विभावादिव्यवहारः। यदाह[1]—'विभावो विज्ञानार्थः लोके कारणमेवाभिधीयते न विभावः। अनुभावोऽप्यलौकिक एव। 'यदयमनुभावयति वागङ्गसत्वकृतोऽभिनयस्तस्मादनुभाव' इति। तच्चित्तवृत्तितन्मयीभवनमेव ह्यनुभवनम्। लोके तु कार्यमेवोच्यते नानुभावः। अत एव परकीया न चित्तवृत्तिर्गम्यत इत्यभिप्रायेण 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रे स्थायिग्रहणं न कृतम्। तत्प्रत्युत शल्यभूतं स्यात्। स्थायिनस्तु रसीभाव औचित्यादुच्यते, तद्धि

बालप्रिया

हृदयस्य संवादः सम्मतिः, तदपरपर्यायं यत्सहृदयत्वं तत्परवशीकृततया तद्बलादित्यर्थः। **पूर्णीति**। पूर्णीभविष्यन् यो रसास्वादस्तस्य कल्पतरोश्चतुर्वर्गोपायव्युत्पत्तिफलिष्यतोऽङ्कुरीभावेन हेतुनेत्यर्थः। **अनुमानेति**। अनुमितिस्मृत्याद्युपायं व्याप्तिज्ञानादिकमनालम्ब्यैवेत्यर्थः। **तन्मयीति**। सहृदयानां यत्तत्तच्चित्तवृत्तितन्मयीभवनं तस्योचिता या चर्वणा अर्थाद्विभावादेः तत्प्राणतया तदुपयोगित्वेनेत्यर्थः। साधारण्येनेति यावत्। विभावादिकं प्रतिपद्यत इत्यनुषङ्गः। विभावादीनां साधारण्येन प्रतीतावेव रसचर्वणेत्यन्यत्र स्पष्टम्। स्मृत्यादिरूपत्वन्निराकरोति—**न चेत्यादि**। **अत एवेति**। रसप्रतीतेरलौकिकत्वादेव तत्कारणेष्वलौकिको विभावादिव्यवहार इत्यर्थः। **यदाहेति**। मुनिरिति शेषः। **विभावो विज्ञानार्थ** इति। विशिष्टतया भाव्यन्ते ज्ञायन्ते स्थायिव्यभिचारिणोऽनेनेति विभावः प्रमदोद्यानादिः। न खल्वनुभावादेव चित्तवृत्तेर्विशिष्य ज्ञानं जायते, बाष्पादेरनुभावस्यानेकहेतुजन्यत्वसम्भवादित्यर्थः। **लोक** इत्यादि। चित्तवृत्तिहेतुषु लोके कारणमित्येव व्यवहारो न तु विभाव इतीत्यर्थः। **यदयमिति**। अयमभिनय इत्यन्वयः। **अनुभावयतीति**। स्थायिव्यभिचारिण इति शेषः। अनुभाव इतीत्यनन्तरमुच्यत इति शेषः। सामाजिकसहृदयगततत्तच्चित्तवृत्तेर्विभावनादिना विभावादिव्यपदेश इति च रसगङ्गाधरादावुक्तम्। अत्रानुभवनं लौकिकानुभवनाद्विलक्षणमित्याह—**तच्चित्तवृत्तीति**। न परकीयचित्तवृत्त्यवगममात्रमिहानुभवनं, किन्तु तासां चित्तवृत्तीनां स्थाय्यादिरूपाणां सम्बन्धि यत्सामाजिकानां तन्मयीभवनं, तत्तच्चित्तवृत्तिभावनया तत्सजातीयस्वीयचित्तवृत्तेरुद्बोधनेनानुभवनं तदेवेत्यर्थः। उक्तार्थे प्रमाणमाह—**अत एवेत्यादि**। **अत एव** यस्मादनुभवनमुक्तरूपमेव न परकीयचित्तवृत्त्यनुमितिमात्रं तस्माद्धेतोरेवेत्यर्थः। **न परकीयेत्यादि**। किन्तु स्वीया चित्तवृत्तिरेव सामाजिकैस्तदानुभूयत इत्यर्थः। **न कृतमिति**। कस्येत्याकाङ्क्षाशान्तये सूत्रे स्थायिन

1. भरतनाट्य.,

लोचनम्

भावानुभावोचितचित्तवृत्तिसंस्कारसुन्दरचर्वणोदयात् । हृदयसंवादोपयोगिलोकचित्तवृत्तिपरिज्ञानावस्थायामुद्यानपुलकादिभिः स्थायिभूतरत्याद्यवगमाच्च । व्यभिचारी तु चित्तवृत्त्यात्मत्वेऽपि मुख्यचित्तवृत्तिपरवश एव चर्व्यत इति विभावानुभावमध्ये गणितः । अत एव रस्यमानताया एषैव निष्पत्तिः, यत्प्रबन्धप्रवृत्तबन्धुसमागमादिकारणोदितहर्षादिलौकिकचित्तवृत्तिन्यग्भावेन चर्वणारूपत्वम् । अतश्चर्वणात्राभिव्यञ्जनमेव, न तु ज्ञापनम्, प्रमाणव्यापारवत् । नाप्युत्पादनम्, हेतुव्यापारवत् ।

बालप्रिया

इति षष्ठ्यन्तस्थायिग्रहणे कर्तव्येऽप्यनुभावग्रहणेनैव स्थायिप्रतीतिर्भवतीति तत्र कृतमित्यर्थः । यद्यत्र स्थायिग्रहणं क्रियेत, तर्हि तद्विरुद्धञ्च स्यादित्याह—**तद्धि**त्यादि । **तत्** स्थायिग्रहणकरणम् । **शल्येति** । परकीयचित्तवृत्त्यवगमो रस इत्यर्थप्रतीतिकारित्वेनानिष्टजनकञ्च भवेदित्यर्थः । नन्वेवं 'स्थायी रसो भवती'त्यादि तत्र तत्र सूत्रकारादिवचनं कथं घटेतेत्यत आह—**स्थायिनस्त्वि**ति । तत्तन्नायकादिगतस्थायिनस्त्वित्यर्थः । औचित्यमेव स्पष्टयति—**तद्धि**ति । तस्य परगतस्थायिनः सम्बन्धिनो ये विभावानुभावाः तदुचितायाश्चित्तवृत्तेस्सहृदयात्मनि यस्संस्कारस्तस्योद्बोधेन सुन्दरचर्वणाया उदयादित्यर्थः । उक्तञ्च काव्यानुशासनव्याख्याने 'औचित्यात्तु तत्स्थायिगतत्वेन कारणादितया प्रसिद्धानामधुना चर्वणोपयोगितया विभावादित्वालम्बनादि'ति । स्थायिनो रसत्वव्यपदेशे निमित्तान्तरञ्चास्तीत्याह—**हृदयेति** । रसचर्वणा हि हृदयसंवादपुरस्सरी हृदयसंवादे च निदानं, लोकचित्तवृत्तिपरिज्ञानं तद्विरहितस्य हृदयसंवादानुदयात् । तस्याञ्चावस्थायां प्रमदादिभिः कारणैः पुलकादिभिः कार्यैश्च भूयो भूयोऽवधृतस्वकारणव्याप्तिकैः स्थायिनो रत्यादेरवगमो भवति, तस्माच्चेत्यर्थः । ननु चित्तवृत्तित्वाविशेषात्स्थायीव व्यभिचार्यपि सूत्रे ग्रहणं नार्हतीत्यत आह—**व्यभिचारी** त्विति । व्यभिचारिणः स्थायिचित्तवृत्तिं प्रति गुणत्वेन विभावादिप्रायत्वात्तन्मध्ये स निर्दिष्ट इत्यर्थः । प्रसङ्गात्सूत्रोक्तां रसनिष्पत्तिं विवृणोति—**अत एवे**त्यादि । **रस्यमानताया एषैव निष्पत्तिरि**ति । **एषा** सूत्रोक्ता निष्पत्तिः । रस्यमानताया निष्पत्तिरेवेत्यर्थः । यथोक्तमभिनवभारत्यां "कथन्तर्हि सूत्रे निष्पत्तिरिति नेयं रसस्यापि तु तद्विषयरसनायाः तन्निष्पत्त्या यदि तदेकायत्तजीवितस्य रसस्य निष्पत्तिरुच्यते, तदा न किञ्चिदत्र दोषः" इति । का नामैषा रस्यमानतेत्यतस्तत्स्वरूपमाह—**यदि**त्यादि । **प्रबन्धेति** । प्रबन्धेन प्रवृत्तं यद्बन्धुसमागमादिकारणं तेनोदिता या हर्षादिलौकिकचित्तवृत्तिः तस्या न्यग्भावेन अधःकरणेन तद्व्यतिरेकेणेति यावत् । चर्वणायास्स्वरूपमाह—**अतश्चे**त्यादि । अतः लौकिकचित्तवृत्तिवैलक्षण्येनालौकिकत्वात् । **अत्र चर्वणा** रसविषयचर्वणा । एवकारव्यावर्त्यं दर्शयति—**न त्वि**त्यादि । यथा प्रमाणानामिन्द्रियादीनां ज्ञापनं व्यापारः, यथा वा दण्डचक्रादीनामुत्पादनं व्यापारस्तथा

लोचनम्

ननु यदि नेयं ज्ञप्तिर्न वा निष्पत्तिः, तर्हि किमेतत् ? न त्वयमसावलौकिको रसः। ननु विभावादिरत्र किं ज्ञापको हेतुः, उत कारकः? न ज्ञापको न कारकः; अपि तु चर्वणोपयोगी। ननु क्वैतद्दृष्टमन्यत्र। यत एव न दृष्टं तत एवालौकिकमित्युक्तम्। नन्वेवं रसोऽप्रमाणं स्यात्; अस्तु, किं ततः ? तच्चर्वणात एव प्रीतिव्युत्पत्तिसिद्धेः किमन्यदर्थनीयम्। नन्वप्रमाणकमेतत; न, स्वसंवेदनसिद्धत्वात्। ज्ञानविशेषस्यैव चर्वणात्मत्वात् इत्यलं बहुना। अतश्च रसोऽयमलौकिकः। येन ललितपरुषानुप्रासस्यार्थाभिधानानुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वम्; का तत्र लक्षणायाः शङ्कापि ? काव्यात्मकशब्दनिष्पीडनेनैव तच्चर्वणा दृश्यते। दृश्यते हि तदेव काव्यं पुनः पुनः

बालप्रिया

विभावादीनां न ज्ञापनं न वा उत्पादनं व्यापार इत्यर्थः।

शङ्कते—**नन्वित्यादि**। पूर्वोक्तेन इयं रसचर्वणा न ज्ञप्तिरूपा, नापि निष्पत्तिरूपेत्यायातं, तर्हि किंस्वरूपेत्यर्थः। **एतदिति**। रसचर्वणारूपमित्यर्थः। उत्तरमाह—**नन्वयमित्यादि**। ज्ञप्त्युत्पत्त्योरयत्वमलौकिकत्वाद्रसस्य भूषणं भवतीति भावः। ननु ज्ञापकत्वस्य कारकत्वस्य वा अभावे विभावादीनां रसप्रतीत्यर्थमुपादानं व्यर्थं, तद्भावे च रसस्य नालौकिकत्वमिति चोदयति—**नन्वित्यादि**। हेतोः कारकत्वज्ञापकत्वान्यतरनियमो हि लौकिकः, विभावादेस्तु तदभावेऽपि चर्वणोपयोगित्वान्नानर्थक्यमित्याशयेन परिहरति—**न ज्ञापक** इत्यादि। तदुपरि शङ्कते—**नन्विति**। समाधत्ते—**यत** इति। पुनरपि शङ्कते—**नन्विति**। **एवमिति**। रसस्यालौकिकत्वे सतीत्यर्थः। **रसोऽप्रमाणं स्यादिति**। अप्रमाणत्वे च शुभाशुभप्राप्तिपरिहारोपायव्युत्पादकत्वन्न भवेदिति भावः। अप्रमाणत्वापातेऽपि कार्यकारित्वमस्तीत्याह–**अस्त्विति**। **प्रीतिव्युत्पत्तीति**। प्रीतिश्च व्युत्पत्तिश्च तयोः, यद्वा–प्रीतिपूर्विका व्युत्पत्तिः तस्याः सिद्धेरित्यर्थः। नन्वेवमलौकिकत्वे रसस्य तत्साधकं प्रमाणं नास्तीति शङ्कते—**नन्विति**। समाधत्ते—**नेति**। ननु रसस्य विशिष्टचर्वणारूपत्वाभ्युपगमात् कथं स्वसंवेदनसिद्धिरपीत्याशङ्कायामाह—**ज्ञानविशेषस्येति**। यथोक्तमभिनवभारत्यां—"रसना च बोधरूपैव, किन्तु बोधान्तरेभ्यो विलक्षणैव, उपायानां विभावादीनां लौकिकवैलक्षण्यादि" ति। पुनरपि रसस्यालौकिकत्वं साधयति—**अतश्चे**त्यादि। वाचकशब्दैकगम्यत्वे हि रसस्य वाच्यार्थवल्लौकिकत्वं कथञ्चिच्छक्यशङ्कमनुप्रासादिनापि वाचकत्वशून्येन व्यङ्ग्यत्वमस्त्येव। न चानुप्रासव्यङ्ग्यं वस्तु लोके दृष्टचरमतोऽपि रसस्यालौकिकत्वं सिद्धमित्यर्थः। एवं रसस्यालौकिकत्वं प्रसाध्य प्रस्तुतमनुसन्दधान आह—**के**त्यादि। **तत्रेति**। अनुप्रासेनापि व्यङ्ग्ये रस इत्यर्थः। **का लक्षणेति**। अभिधाया एवाभावे तत्पृष्ठवर्तिन्या लक्षणायाः प्रसङ्ग एव नास्तीत्यर्थः। शब्दस्वरूपस्यैवाभिधाव्यापारानपेक्षस्य रसव्यञ्जकत्वेऽनुभवं प्रमाणयति—**काव्यात्मके**त्यादि। काव्यात्मकोऽनुप्रासा-

लोचनम्

पठ्यमानश्चर्व्यमाणश्च सहृदयो लोकः, न तु काव्यस्य; तत्र 'उपादायापि ये हेया' इति न्यायेन कृतप्रतीतिकस्यानुपयोग एवेति शब्दस्यापीह ध्वननव्यापारः । अत एवालक्ष्यक्रमता । यत्तु वाक्यभेदः स्यादिति केनचिदुक्तम्, तदनभिज्ञतया । शास्त्रं हि सकृदुच्चारितं समयबलेनार्थं प्रतिपादयद्युगपद्विरुद्धानेकसमयस्मृत्ययोगात्कथमर्थद्वयं प्रत्याययेत् । अविरुद्धत्वे वा तावानेको वाक्यार्थः स्यात् । क्रमेणापि विरम्यव्यापारायोगः । पुनरुच्चारितेऽपि वाक्ये स एव, समयप्रकरणादेस्तादवस्थ्यात् । प्रकरणसमयप्राप्यार्थे-

बालप्रिया

दिविशिष्टो यः शब्दः तस्य निष्पीडनेन आम्रेडनेन । **तच्चर्वणा** रसचर्वणा । उक्तं विवृणोति—**दृश्यत** इति । यदेव काव्यं पठितश्चर्वितश्च तदेव पुनः पुनः पठ्यते चर्व्यते चेत्यर्थः । **न त्विति** । कृतप्रतीतिकस्य **काव्यस्य** काव्यशब्दस्य, **तत्र** रसचर्वणायाम् । **अनुपयोग एव न** त्विति । उपयोगः अस्त्येवेत्यर्थः । **कृतप्रतीतिकस्य** अनुपयोगित्वे युक्तिप्रदर्शक उपेत्यादिन्यायः ।

"उपादायापि ये हेयास्तानुपायान् प्रचक्षते ।
उपायानां हि नियमो नावश्यमवतिष्ठते ॥

इति न्यायेनेत्यर्थः । सोऽयं न्यायोऽत्र न प्रवर्तत इति भावः । फलितमाह—**इतीत्यादि** । व्यङ्ग्यस्य यदलक्ष्यक्रमत्वमुक्तं तदप्युक्तार्थे गमकमित्याह—**अत एवेति** । **अत एव** शब्दस्वरूपस्यैवार्थाभिधानानपेक्षतया व्यञ्जकत्वादेव । यद्यर्थप्रतीतिव्यवधानापेक्षयैव शब्दस्य व्यञ्जकत्वं भवेत्तदावश्यं क्रमो लक्ष्येतेति भावः । **वाक्यभेदः स्यादिति** । काव्यस्य वाच्यव्यङ्ग्यार्थद्वयबोधकत्वादिति भावः । तदनभिज्ञतयेत्युक्तमुपपादयति—**शास्त्रमित्यादि** । **शास्त्रं** काव्यव्यतिरिक्तं वाक्यम् । **समयेति** । तत्तदर्थे तत्तत्पदस्य यस्समयः सङ्केतः तद्बलेन तत्तत्सङ्केतग्रहणसहकारेणेत्यर्थः । अर्थं प्रतिपादयदिति हेतुगर्भम् । **युगपत्** एकदा । **विरुद्धेति** । विरुद्धार्थविषयकत्वेन विरुद्धौ । यद्वा—विरुद्धयोरर्थयोः यावनेकसमयौ तयोः स्मृतेरयोगादसम्भवादित्यर्थः । यत्रार्थे प्रकरणादिकं तेनान्यार्थसमयस्मृतेः प्रतिबन्धादिति भावः । **अर्थद्वयं** विरुद्धार्थद्वयम् । **कथं प्रत्याययेत्** न बोधयेत् । **अविरुद्धत्व** इति । साक्षादेकक्रियान्वयित्वेन वा परस्परसम्बन्धित्वे सतीत्यर्थः । अर्थद्वयस्येति विपरिणामेनानुषङ्गः । अस्योदाहरणम्—"श्वेतो धावति, सर्वदो माधवः पाया"दित्यादिकं बोध्यम् । **तावानिति** । यावान् बुध्यते तावानित्यर्थः । **वाक्यार्थ एकः स्यात्** वाक्यार्थे भेदो नाङ्गीक्रियत इति भावः । **क्रमेणेति** । शास्त्रं कथमर्थद्वयं प्रत्याययेदित्यनुषङ्गः । अत्र हेत्वन्तरं चाह—**विरम्येति** । विरम्य यो व्यापारः शब्दस्य तदयोगो यतः, तस्मादित्यर्थः । **स एवेति** । यो वाक्यार्थो बुद्धः स इत्यर्थः । एवकारः पौनर्वचनिकः । अत्र हेतुमा-

लोचनम्

तिरस्कारेणार्थान्तरप्रत्यायकत्वे नियमाभाव इति तेन "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति श्रुतौ खादेच्छ्वमांसमित्येष नार्थ इत्यत्र का प्रमेति प्रसज्यते । तत्रापि न काचिदियत्तेत्यनाश्वासता इत्येवं वाक्यभेदो दूषणम् । इह तु विभावाद्येव प्रतिपाद्यमानं चर्वणाविषयतोन्मुखमिति समयाद्युपयोगाभावः । न च नियुक्तोऽहमत्र करवाणि, कृतार्थोऽहमिति शास्त्रीयप्रतीतिसदृशमदः । तत्रोत्तरकर्तव्यौन्मुख्येन लौकिकत्वात् । इह तु विभावादिचर्वणाद्भुतपुष्पवत्तत्कालसारैवोदिता न तु पूर्वापरकालानुबन्धिनीति लौकिकादास्वादाद्योगिविषयाच्चान्य एवायं रसास्वादः । अत एव 'शिखरिणि' इत्यादावपि

बालप्रिया

**द—समयप्रकरणादे**रिति । समयादिरिति पाठे **स एव** येन पूर्वमर्थो बुद्धः स इत्यर्थः । समयादिरित्यादिपदेन प्रकरणादेस्सङ्ग्रहः । अत्र हेतुमाह—**प्रकरणादे**रिति । प्रकरणसमयादेरित्यर्थः । ननु समयाद्यपेक्षा मास्त्वित्यत्राह—**प्रकरणे**त्यादि । शास्त्रस्येति शेषः । **नियमाभाव इती**ति । अर्थबोधने नियमाभाव इत्येतत्स्यादित्यर्थः । **तेन** नियमाभावेन । **का प्रमा** किं प्रमाणम् । **इति प्रसज्यत** इति । तत्तत्पदसमयप्रकरणाद्यपेक्षां विना वाक्यस्यार्थप्रत्यायकत्वोपगमे अग्निहोत्रमित्यादिवाक्यस्य श्वमांसखादनविधित्वापत्तिरित्यर्थः । **तत्रापी**ति । अर्थान्तरेऽपीत्यर्थः । **इयत्ता** व्यवस्था । नियततेति च पाठः । इतीति हेतौ । **अनाश्वासता** अनिश्चितार्थकत्वेनाबोधकता । उपसंहरति—**इत्येव**मित्यादि । काव्यव्यतिरिक्तं लौकिकं वैदिकं च वाक्यं समयप्रकरणादिसहकृतं युगपत्क्रमेण वा एकमर्थमेव प्रतिपादयतीत्यतोऽनेकार्थबोधकत्वेन वाक्यभेदो नैव भवति । समयप्रकरणाद्यपेक्षां विना वाक्यस्यार्थबोधकत्वाङ्गीकारे चाव्यवस्थितार्थकत्वेनाबोधकत्वरूपाप्रामाण्यं स्यादित्येवं वाक्यभेदो दोष इति सारार्थः । काव्ये विशेषमाह—**इह त्वि**त्यादि । **विभावाद्येवे**ति । एवकारेण रसादिव्यङ्ग्यव्यवच्छेदः । **प्रतिपाद्यमान**मिति । समयप्रकरणादिसहकृतेन काव्यवाक्येन बोध्यमानमित्यर्थः । **चर्वणे**ति । रसादिचर्वणेत्यर्थः । **समये**त्यादि । रसादिकं प्रतीति शेषः । काव्ये विभावाद्यर्थबोधे एव समयप्रकरणादेरुपयोगः, विभावादिबोधानन्तरं च विभावादेरेव नियामकान्नियतरसादिव्यङ्ग्यप्रतीतिः । अतश्च तां प्रति समयादेरनपेक्षणेऽपि नाव्यवस्थितार्थकत्वेन दोष इति भावः । प्रसङ्गादाह—**न चे**त्यादि । बोधावस्थायामत्र कर्मणि नियुक्तोऽहमिति, अनुष्ठानदशायां करवाणीति, तदुत्तरकाले तु कृतार्थोऽस्मीति च प्रतीतिः शास्त्रतो जायते । काव्यजन्यप्रतीतिस्तु तत्तुल्या नेत्यर्थः । कुत इत्यत्राह—**तत्रे**त्यादि । **तत्र** शास्त्रजन्यप्रतीतौ । **उत्तरे**ति । उत्तरकाले यत् कर्तव्यं तत्रौन्मुख्येन । **इह तु** काव्ये त्वित्यर्थः । **अद्भुतपुष्पवत्** इन्द्रजालादिदर्शितपुष्पेण तुल्यम् । **उदिता** उत्पन्ना । **विभावादिचर्वणा** रसप्रतीतिः । **तत्कालः** वर्तमानकाल एव सारो यस्याः सैव । एवकारव्यावर्त्यमाह—**न त्वि**ति । ननु लौकिकप्रतीतेरन्यत्वं योगिज्ञानस्याप्यस्ति इत्यत आह—**योगी**ति । **अत एवे**ति । यतो रसास्वा-

**कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।**

सा पुनर्भक्तिर्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदि नामोपलक्षण-

लोचनम्

मुख्यार्थबाधादिक्रममनपेक्ष्यैव सहृदया वक्त्रभिप्रायं चाटुप्रीत्यात्मकं संवेदयन्ते । अत एव ग्रन्थकारः सामान्येन विवक्षितान्यपरवाच्ये ध्वनौ भक्तेरभावमभ्यधात् । अस्माभिस्तु दुर्दुरूढं प्रत्याययितुमुक्तम्—भवत्वत्र लक्षणा, अलक्ष्यक्रमे तु कुपितोऽपि किं करिष्यसीति । यदि तु न कुप्यते 'सुवर्णपुष्पां' इत्यादावविवक्षितवाच्येऽपि मुख्यार्थबाधादिलक्षणासामग्रीमनपेक्ष्यैव व्यङ्ग्यार्थविश्रान्तिरित्यलं बहुना । उपसंहरति—**तस्माद्भक्तिरि**ति ॥ १८ ॥

ननु मा भूद्ध्वनिरिति भक्तिरिति चैकं रूपम् । मा च भूद्भक्तिर्ध्वनेर्लक्षणम् । उपलक्षणं तु भविष्यति; यत्र ध्वनिर्भवति, तत्र भक्तिरप्यस्तीति भक्त्युपलक्षितो ध्वनिः । न तावदेतत्सर्वत्रास्ति, इयता च किं परस्य सिद्धं ? किं वा नः त्रुटितं ? इति तदाह—**कस्यचिदि**त्यादि । ननु भक्तिस्तावच्चिरन्तनैरुक्ता, तदुपलक्षणमुखेन च ध्वनिमपि

बालप्रिया

दस्य उक्तविधमनितरसाधारणं सौभाग्यं तत एवेत्यर्थः । **संवेदयन्त** इति । जानन्तीत्यर्थः । अत एवादौ तथा व्याख्यातमिति भावः । अत्र ग्रन्थकृद्वचनं संवादयति—**अत एवे**त्यादि । तर्हि कुतो भवतैव लक्षणामभ्युपेत्य व्याख्यातमित्यत आह—**अस्माभिस्त्विति** । **दुर्दुरूढमिति** । नास्तिकमयवाग्ग्रहग्रस्तमित्यर्थः । इत्युक्तमिति सम्बन्धः । ननु कस्य नाम कोपस्तत्त्वं कथ्यतामित्यत्राह—**यदि त्विति** । **व्यङ्ग्यार्थविश्रान्तिरिति** । अभिमतविषयेऽपि लक्षणाया न प्रभविष्णुतेति भावः ॥ १८ ॥

अथोपलक्षणपक्षस्यापि प्रतिक्षेपाय तच्छङ्कां वृत्तानुवादपूर्वकमुद्भावयति—**नन्वि**त्यादिना **भक्त्युपलक्षितो ध्वनिरि**त्यन्तेन । कथमुपलक्षणं भविष्यतीत्यत्राह—**यत्रे**त्यादि । यथा काकादिर्गृहादेर्न स्वरूपं, नापि लक्षणं, किन्तु कदाचित्सम्भवमात्राद्व्यावृत्तिप्रतिपत्तिहेतुस्तथा भक्तिरपीत्यर्थः । अस्योत्तरत्वेन कारिकामवतारयति—**न तावदि**त्यादि । **तावदिति** सम्प्रतिपत्तौ । **एतदिति** । उपलक्षणमित्यर्थः । उपलक्षणं वस्तु सर्वत्र न भवतीति सम्प्रतिपन्नमित्यर्थः । **इयता चेति** । भक्तेरुपलक्षणत्वमात्रेण चेत्यर्थः । त्रुटितं छिन्नम् । 'यदि चे'त्यादिग्रन्थमवतारयति—**नन्वि**त्यादि । **किं तल्लक्षणेनेति** । ध्वनिलक्षणकरणं निष्फलं लक्षणफलस्येतरव्यावृत्ततया ध्वनिज्ञानस्योपलक्षणभूतया भक्त्यैव सम्भवादित्यर्थः । तदभिधेत्यादिसमाधानग्रन्थस्य भावार्थं विवृणोति—**अभिधाने**त्यादि । **अभिधानाभिधेयभाव** इति । काव्येन सहेति शेषः । तावता किमत आह—**ततश्चे**ति । **अभिधावृत्ते**

तया सम्भाव्येत; यदि च गुणवृत्त्यैव ध्वनिर्लक्ष्यत इत्युच्यते तदभिधाव्यापारेण तदितरोऽलङ्कारवर्गः समग्र एव लक्ष्यत इति प्रत्येकमलङ्काराणां लक्षणकरणवैयर्थ्यप्रसङ्गः। किं च

**लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥ १९ ॥**

कृतेऽपि वा पूर्वमेवान्यैर्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः; यस्माद्ध्वनिरस्तीति नः पक्षः। स च प्रागेव संसिद्ध इत्ययत्नसम्पन्नसमीहितार्थाः संवृत्ताः स्मः। येऽपि सहृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिषु-

लोचनम्

समग्रभेदं लक्षयिष्यन्ति ज्ञास्यन्ति च। किं तल्लक्षणेनेत्याशङ्क्याह—**यदि चेति**। अभिधानाभिधेयभावो ह्यलङ्काराणां व्यापकः; ततश्चाभिधावृत्ते वैयाकरणमीमांसकैर्निरूपिते कुत्रेदानीमलङ्कारकाराणां व्यापारः। तथा हेतुबलात्कार्यं जायत इति तार्किकैरुक्ते किमिदानीमीश्वरप्रभृतीनां कर्तॄणां ज्ञातॄणां वा कृत्यमपूर्वं स्यादिति सर्वो निरारम्भः स्यात्। तदाह—**लक्षणकरणवैयर्थ्यप्रसङ्ग** इति। मा भूद्वाऽपूर्वोन्मीलनं पूर्वोन्मीलितमेवास्माभिः सम्यङ्निरूपितं, तथापि को दोष इत्यभिप्रायेणाह—**किं चे**त्यादि। **प्रागेवेति**। अस्मत्प्रयत्नादिति शेषः। एवं त्रिप्रकारमभाववादं, भक्त्यन्तर्भूततां च निराकुर्वता अलक्षणीयत्वमेतन्मध्ये निराकृतमेव। अत एव मूलकारिका साक्षात्तन्निराकरणार्था न श्रूयते। वृत्तिकृत्तु निराकृतमपि प्रमेयशय्यापूरणाय कण्ठेन

बालप्रिया

अभिधाव्यापारे। **अलङ्कारकाराणामिति**। अलङ्कारग्रन्थकर्तॄणामित्यर्थः। **कुत्रेदानीं व्यापार** इति। अभिधानाभिधेयभावस्य समस्तालङ्कारव्यापकत्वात्तस्य चाभिधाव्यापारजीवितत्वात्तन्निरूपणे कृते सत्यलङ्कारनिरूपणं तद्ग्रन्थकाराणां निष्फलमेव भवेदित्यर्थः। अनिष्टान्तरमप्युद्घाटयति—**तथे**त्यादि। 'किमपूर्वं स्यादि'ति सम्बन्धः। इतीति हेतौ। **सर्वो निरारम्भः स्यादि**ति। **सर्वः** ईश्वरप्रभृतिः कर्तृज्ञातृवर्गः। व्याख्यातमर्थं ग्रन्थेन सङ्गमयति—**तदाहेति**। **लक्षणकरणवैयर्थ्यप्रसङ्ग** इति। लक्षणं च करणं च लक्षणकरणे, तयोः तन्निरूपणयोः वैयर्थ्यस्य प्रसङ्ग इत्यर्थः। किञ्चेत्यादिग्रन्थमवतारयति—**मे**त्यादि। 'अपूर्वोन्मीलनं मा भूदि'त्यन्वयः। ननु कारिकाकारेण इतरपक्ष इवालक्षणीयत्वपक्षः किमिति न प्रतिक्षिप्त इति शङ्कां परिहरन् 'येऽपी'त्यादिग्रन्थमवतारयति—**एवमित्यादि**। **निराकृतमेवेति**। ध्वनिप्रदर्शनमुखेन हि पक्षान्तरनिराकरणमत्र कृतं; न च तस्यालक्षणीयत्वे तत्सम्भवति इति तन्निराकरणनान्तरीयकत्वेनालक्षणीयत्वपक्षोऽपि निराकृत इत्यर्थः। ननु तर्हि किमिति वृत्तिकृता तत्पक्षोऽनूद्य निराकृत इत्यत आह—**वृत्तिकृदिति**। **प्रमेयशय्येति**। प्रमेयस्य शय्या सन्नि-

**स्तेऽपि न परीक्ष्य वादिनः। यत उक्तया नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि यद्यनाख्येयत्वं तत्सर्वेषामेव वस्तूनां तत्प्रसक्तम्। यदि पुनर्ध्वनेरतिशयोक्त्यानया काव्यान्तरातिशायि तैः स्व-**

**लोचनम्**

तत्पक्षमनूद्य निराकरोति—**येऽपीत्या**दिना। उक्तया नीत्या 'यत्रार्थः शब्दो वा' इति सामान्यलक्षणं प्रतिपादितम्। वक्ष्यमाणया तु नीत्या विशेषलक्षणं भविष्यति 'अर्थान्तरे सङ्क्रमितं' इत्यादिना। तत्र प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम्। द्वितीयोद्द्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्। तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्द्योते मूलविभागमवोचत्—'स च द्विविधः' इति। **सर्वेषामिति**। लौकिकानां शास्त्रीयाणां चेत्यर्थः। **अतिशयोक्त्येति**। यथा 'तान्यक्षराणि हृदये किमपि स्फुरन्ति' इतिवदतिशयोक्त्यानाख्येयतोक्ता सारूपतां प्रतिपादयितुमिति दर्शितमिति शिवम्॥ १९॥

**बालप्रिया**

वेशविशेषः तस्याः पूरणाय। अनाख्येयत्वपक्षस्यापि स्वयमनिराकरणे तत्पूरणं न भवेदिति भावः। उक्तया नीत्येत्यादौ यथासंख्येन सम्बन्ध इत्याशयेनोपपादयति—**यत्रार्थ** इत्यादि। **विशेषलक्षणमि**ति। विशेषलक्षणकथनमित्यर्थः। वृत्तौ 'स च द्विविध' इत्यादिना विशेषलक्षणकथनं कारिकाकाराशयानुसारेणेत्याह—**तत्र प्रथमोद्योत** इत्यादि। **तत्र** सामान्यविशेषलक्षणयोर्मध्ये। 'इति मूलविभागमवोचदि'त्यन्वयः। अथ यदिदं ध्वनेरनाख्येयत्वमुक्तं तन्नासत्वान्नाप्यसाधुत्वात्, किन्त्वतिशयितत्वादिति चेत्तर्हि तदभिधानं युक्तमेवेत्याह वृत्तौ—'यदि पुनरि'त्यादि। '**काव्यान्तरातिशायी**'ति। गुणीभूतव्यङ्ग्यचित्रातिशायीत्यर्थः। '**स्वरूपमि**'ति। सारतारूपं स्वरूपमित्यर्थः। 'तै'रिति। पूर्वपक्षिभिरित्यर्थः। 'तदि'ति। तर्हीत्यर्थः। 'तेऽपी'त्यादि। तेषामभिधानमस्मदभिमतत्वाद्युक्तमेवेत्यर्थः। अत्र तेऽपीत्यपिशब्देन स्वस्यापि सर्वत्र युक्ताभिधायित्वं ग्रन्थकृता सूचितमिति च बोध्यम्। वृत्तिस्थं 'अतिशयोक्त्या' इति पदं व्याख्यास्यन्नादावतिशयोक्तेरुदाहरणमाह—**यथा तानी**त्यादि।

"निद्रार्धमीलितदृशो मदमन्थराणि नाप्यर्थवन्ति न च यानि निरर्थकानि।

अद्यापि मे मृगदृशो मधुराणि तस्याः" इत्याद्यपादत्रयम्। अतिशयोक्त्यानयेत्यस्य व्याख्यानं—**अतिशयोक्त्यानाख्येयतोक्त्येति**। पूरयति—**सारूपतां प्रतिपादयितु**मिति। अनेन काव्यान्तरातिशायिरूपमित्यत्रत्यरूपपदार्थः सारूपत्वमिति दर्शितम्। प्रतिपादयितुमित्यनन्तरमुक्तयेति शेषः। सर्वस्यापि परमशिवस्वरूपत्वाभिसन्धानेनोपसंहरति—**इति शिवमिति**। इतीत्यनेन स्वव्याख्यानपरामर्शः। किञ्च शिवमितीश्वरनिर्देशरूपं परमं मङ्गलम्।

रूपमाख्यायते तत्तेऽपि युक्ताभिधायिन एव ॥

### लोचनम्

किं लोचनं विनालोको भाति चन्द्रिकयापि हि ।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥
यदुन्मीलनशक्त्यैव विश्वमुन्मीलति क्षणात् ।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम् ॥

**इति श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तोन्मीलिते सहृदयालोकलोचने ध्वनिसङ्केते प्रथम उद्द्योतः ॥**

### बालप्रिया

स्वव्याख्याने श्रोतृजनप्रवृत्त्यर्थमाह—**किमि**त्यादि । **लोचनं** लोचनाख्यमेतद्व्याख्यानम् । **आलोकः** काव्यालोकग्रन्थः । **चन्द्रिकया** अन्यकृतया चन्द्रिकाख्यव्याख्यया । **अपि किं भाति** न भातीत्यर्थः । हीति प्रसिद्धेऽवधारणे वा । अथ च **लोचनं** नेत्रं विना । **लोकः** भुवनम् । **चन्द्रिकया** ज्योत्स्नया, **अपि किं भाति** किं स्फुरति न प्रत्यक्षविषयो भवतीत्यप्रस्तुतार्थः तत्साम्यं चात्र ध्वन्यते । **तेने**ति । तस्माद्धेतोरित्यर्थः । अथोद्योतान्तेऽप्यनुष्ठितं मङ्गलं निबध्नाति—**यदि**ति । यस्याः शक्तेः उन्मीलनयुक्त्या स्पन्दनयोगेनैव । **विश्वं** सर्वं वस्तु। **क्षणादुन्मीलति** प्रकाशते । क्षणादित्यनेनानन्यापेक्षत्वं द्योत्यते । **स्वात्मनि** स्वस्वरूपे । यद्वा—ब्रह्मचैतन्य एवायतने स्थाने **विश्रान्तां** स्थिताम् । **प्रतिभां** ज्ञानात्मिकाम्। **शिवां** शिवाख्याम्। **तां** शक्तिमहं **वन्दे** । अथ च यस्याः प्रतिभायाः उन्मीलनयुक्त्या प्रकाशयोगेन । विश्वम् क्षणादुन्मीलति नवनवतया भाति स्वात्मन्येवायतने विश्रान्तां वासनारूपेणावस्थिताम् , शिवां रसावेशवैशद्यसुभगाम् , तां प्रतिभां कवीनां प्रज्ञाम् , वन्दे इत्याद्यर्थोऽपि बोध्य इति सर्वं शिवम् ॥ १९ ॥

प्रौढं क्व लोचनं मन्दः क्वाहं तेन मया कृता ।
पूर्वव्याख्यादृशाप्येषा टिप्पणी शोध्यतां बुधैः ॥

**इति सहृदयतिलकपण्डितराज श्रीरामषारकविरचितायां लोचनटिप्पण्यां प्रथमोद्द्योतः ॥**

* श्रीरस्तु *

# द्वितीय उद्द्योतः

एवमविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वेन ध्वनिर्द्विप्रकारः प्रकाशितः । तत्राविवक्षितवाच्यस्य प्रभेदप्रतिपादनायेदमुच्यते—

अर्थान्तरे सङ्क्रामितमत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥ १ ॥

---

लोचनम्

## द्वितीय उद्द्योतः

या स्मर्यमाणा श्रेयांसि सूते ध्वंसयते रुजः ।
तामभीष्टफलोदारकल्पवल्लीं स्तुवे शिवाम् ॥

वृत्तिकारः सङ्गतिमुद्द्योतस्य कुर्वाण उपक्रमते—**एवमित्यादि**। **प्रकाशित** इति । मया वृत्तिकारेण सतेति भावः । न चैतन्मयोत्सूत्रमुक्तम्, अपि तु कारिकाकाराभिप्रायेणेत्याह—**तत्रेति** । तत्र द्विप्रकारप्रकाशने वृत्तिकारकृते यन्निमित्तं बीजभूतमिति

बालप्रिया

## द्वितीय उद्द्योतः

लोचनस्योत्तरस्यातो न व्याख्या प्रप्यतेऽत्र तत् ।
यथामतीषद्व्याख्यामि प्रसीदन्त्वत्र मे बुधाः ॥

येति । **या** शिवा । जनैः **स्मर्यमाणा** सती, तेषां **श्रेयांसि सूते** जनयति । **रुजः** व्यापदः । **अभीष्टेति** । अभीष्टानां फलानाम**ुदारा** दात्री । यद्वा—अभीष्टानि फलानि यस्यां सा उदारा महती च **कल्पवल्ली** तामिति रूपकम् । "उदारो दातृमहतो"रित्यमरः । **सङ्गतिमुद्द्योतस्येति** । प्रथमोद्योतेन द्वितीयोद्योतस्य सङ्गतिमित्यर्थः । उक्तेन सह वक्ष्यमाणस्य सङ्गतिमिति यावत् । सा चात्र प्रसङ्गरूपा बोध्या । **कुर्वाणः** सम्पादयन् । **उपक्रमते** वक्तुमारभते । सूत्रकारेणाप्रकाशितत्वादाह—**मयेत्यादि** । 'तत्रे'त्यादिग्रन्थमवतारयति—**न चेत्यादि** । **एतदिति** । द्विप्रकारत्वमित्यर्थः । **उत्सूत्रं** सूत्रमुल्लङ्घ्य सूत्रकारानभिप्रेतमिति यावत् । 'तत्रे'ति तत्पदमुक्तद्विप्रकारप्रकाशनक्रियापरामर्शकमित्यभिप्रेत्य व्याचष्टे—**द्विप्रकारप्रकाशन** इति । **निमित्तमिति** । त्रलर्थकथनं पूरितं वा । अस्यैव विवरणम्—**बीजभूतमिति** । 'उच्यत' इत्यनेनास्यान्वयः । **इति सम्बन्ध** इति । एवं पूर्वापरयोस्सङ्गतिरित्यर्थः । अन्यथा व्याचष्टे—**यदि वेत्यादि** । **पूर्वशेषः** पूर्वान्वयि । प्रथमोद्योतान्ते वृत्ति-

लोचनम्

सम्बन्धः। यदि वा–तत्रेति पूर्वशेषः । तत्र प्रथमोद्द्योते वृत्तिकारेण प्रकाशितः अविवक्षितवाच्यस्य यः प्रभेदोऽवान्तरप्रकारस्तत्प्रतिपादनायेदमुच्यते । तदवान्तरभेदप्रतिपादनद्वारेणैव चानुवादद्वारेणाविवक्षितवाच्यस्य यः प्रभेदो विवक्षितान्यपरवाच्यात्प्रभिन्नत्वं तत्प्रतिपादनायेदमुच्यते । भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि सम्मतमेवेति भावः । सङ्क्रमितमिति णिचा व्यञ्जनाव्यापारे यः सहकारिवर्गस्तस्यायं प्रभाव इत्युक्तं तिरस्कृतशब्देन च । येन वाच्येनाविवक्षितेन सताऽविवक्षितावाच्यो ध्वनिर्व्यपदिश्यते तद्वाच्यं द्विधेति सम्बन्धः । योऽर्थ उपपद्यमनोऽपि तावतैवानुपयोगाद्धर्मान्तरसंवलनयान्यतामिव गतो लक्ष्यमाणोऽनुगतधर्मी सूत्रन्यायेनास्ते स रूपा-

बालप्रिया

कारेण "इति प्रथमोद्योत" इत्युक्तत्वादत्र पक्षे तत्रेति तत्पदेन तस्य परामर्श इत्याह—**प्रथमोद्योत** इति । अस्य पूर्वेण सहान्वयं दर्शयितुमाह—**वृत्तिकारेण प्रकाशित** इति । अत्र पक्षे अत इति शेषो बोध्यः । 'अविवक्षिते'त्यादिग्रन्थं व्याचष्टे–**अविवक्षितवाच्यस्ये**त्यादि । **अवान्तरप्रकारः** अवान्तरधर्मः । **इदमिति** । 'अर्थान्तर' इत्यादि'मत'मित्यन्तं सूत्रमित्यर्थः । 'अथासंलक्ष्यक्रमोद्योत' इत्यादिना वक्ष्यमाणेनापि सङ्गतिं सम्पादयितुमन्यथापि व्याचष्टे–**तदवान्तरे**त्यादि । 'अर्थान्तरे सङ्क्रमितमि' त्यादिना यत्तदवान्तरभेदप्रतिपादनं **तद्वारेणैव** तत्पूर्वकमेव । अविवक्षितवाच्यस्य ध्वनेरिति योऽनुवादस्तद्वारेण । अस्योच्यत इत्यनेन सम्बन्धः। **अविवक्षितवाच्यस्ये**ति । तदनुयोगिक इत्यर्थः । वक्ष्यमाणं मनसि कृत्य '**विवक्षितान्यपरवाच्या**दित्युक्तम् । **प्रभिन्नत्वमन्यो**न्याभावः । **तत्प्रतिपादनाय** तस्य ज्ञापनाय । **इदमिति** । अविवक्षितवाच्यमित्यर्थः । फलितमाह—**भवती**त्यादि । **मूलतो द्विभेदत्व**मादिमं द्वैविध्यम् । 'णिचे'त्यस्य 'उक्त'मित्यनेन सम्बन्धः । य इति । लक्षणावक्तृविवक्षादिरित्यर्थः । **अयं** सङ्क्रमणम् । तस्य **प्रभावः** तेन प्रयुक्तः । स एव प्रयोजककर्तेति भावः । **उक्तं** बोधितम् । **तिरस्कृतशब्देन चे**ति । इत्युक्तमित्यनेनास्य सम्बन्धः। '**अविवक्षिते**'त्यादिकं विवृणोति—**येने**त्यादि । **वाच्येने**ति । तत्तत्पदवाच्यजात्यादिधर्मविशिष्टधर्मिणेत्यर्थः । 'अर्थान्तरे सङ्क्रमितमि'त्यादिकं विवृणोति–**योऽर्थ** इत्यादि । **योऽर्थः** रामोऽस्मीत्यादौ रामादिरूपोऽर्थः । **उपपद्यमानोऽपि** वाच्यजात्यादिप्रकारेणान्वययोग्योऽपि । **अनुपयोगा**दिति । विशेषानाधायकत्वेन पुनरुक्तत्वेन वा उपयोगाभावादित्यर्थः । **धर्मान्तरसंवलनया** वाच्यधर्मातिरिक्तधर्मवत्त्वेन । **लक्ष्यमाणः** लक्षणया प्रतीयमानः । अत एवान्यतां गत इव । यद्वा—**धर्मान्तरसंवलनया** वाच्यधर्मातिरिक्तधर्मप्रकारकप्रतीतिविषयत्वेन हेतुना अन्यतां गत इव **लक्ष्यमाणः** प्रतीयमानः । **अनुगतधर्मी** सन् लक्ष्यमाणधर्माणां तत्र तत्र भिन्नत्वेऽपि व्यक्तिरूपो धर्मी अनुस्यूत एवेति भावः । **सूत्रन्यायेने**ति । यथा पुष्पादिष्वेकं सूत्र-

तथाविधाभ्यां च ताभ्यां व्यङ्ग्यस्यैव विशेषः ।

तत्रार्थान्तरसङ्क्रमितवाच्यो यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।

लोचनम्

न्तरपरिणत उक्तः । यस्त्वनुपपद्यमान उपायतामात्रेणार्थान्तरप्रतिपत्तिं कृत्वा पलायत इव स तिरस्कृत इति। ननु व्यङ्ग्यात्मनो यदा ध्वनेर्भेदो निरूप्यते तदा वाच्यस्य द्विधेति भेदकथनं न सङ्गतमित्याशङ्क्याह—तथाविधाभ्यां चेति । चो यस्मादर्थे । व्यञ्जकवैचित्र्याद्धि युक्तं व्यङ्ग्यवैचित्र्यमिति भावः । व्यञ्जके त्वर्थे यदि ध्वनिशब्दस्तदा न कश्चिद्दोष इति भावः ।

भेदप्रतिपादकेनैवान्वर्थनाम्ना लक्षणमपि सिद्धमित्यभिप्रायेणोदाहरणमेवाह—**अर्थान्तरसङ्क्रमितवाच्यो यथे**ति। अत्र श्लोके रामशब्द इति सङ्गतिः । स्निग्धया जलसम्बन्धसरसया श्यामलया द्रविडवनितोचितासितवर्णया कान्त्या चाकचक्येन लिप्तमाच्छुरितं वियन्नभो यैः। वेल्लन्त्यो विजृम्भमाणास्तथा चलन्त्यः परभागवशात्प्रहर्ष-

बालप्रिया

मनुस्यूतन्तथेत्यर्थः । **रूपान्तरपरिणत** इति अर्थान्तरे सङ्क्रमितमित्यस्यैव विवरणम् । **यस्त्वि**ति । 'निश्वासान्ध' इत्यादावन्धादिपदार्थ इत्यर्थः । **अनुपपद्यमानः** अन्वयायोग्यः । **उपायतामात्रे**णेति । मुख्यार्थसम्बन्धस्य लक्षणानिमित्तत्वादिति भावः । **तिरस्कृत** इति । उक्त इत्यनुषङ्गः । **नन्वि**ति । **व्यङ्ग्यात्मनो ध्वनेः** ध्वनिपदार्थस्य व्यङ्ग्यस्य । **यदा** यदि । 'वाच्यस्य भेदकथनमि'ति सम्बन्धः। वृत्तौ 'तथाविधाभ्यामि'ति । अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृताभ्यामित्यर्थः । 'ताभ्यां' वाच्याभ्याम् । 'विशेषः' भेदः । विशेष इत्यस्यानन्तरं 'इति व्यङ्ग्यप्रकाशनपरस्य ध्वनेरेवायं प्रकारः' इति पाठः क्वाचित्कः । लोचने भावमाह—**व्यञ्जके**त्यादि । वैचित्र्यं वैलक्षण्यम्, कारिकामात्रं योजयितुमाह—**व्यञ्जके त्वर्थ** इत्यादि । ध्वनिशब्दार्थः व्यञ्जकश्चेदित्यर्थः । स चार्थो वा शब्दो वा। तत्राद्यपक्षे अविवक्षितवाच्यस्येत्यस्य अविवक्षितः अप्रधानीकृतो वाच्यस्स्वात्मा येन स इति प्रथमोद्योतोक्तार्थो बोध्यः । **दोष** इति । अवतारिकोक्तदोष इत्यर्थः ।

**चाकचक्येने**ति । प्रभातारल्येनेत्यर्थः । **विजृम्भमाणाः** उत्साहशालिन्यः । **परभागवशा**दिति । मेघानां श्यामत्वाद्बलाकानां सितत्वाच्चेति भावः । **प्रहर्षे**ति । मेघसंसर्गलाभजनितप्रहर्षेत्यर्थः । 'घना' इत्यस्य विवरणम्—**मेघा** इति । 'घना' इत्यनेन निबिडत्वञ्च गम्यते । 'वेल्लद्बलाका' इत्यनेन सम्भोगस्मारकत्वञ्च । अत एव आह—**पयन्नभ** इत्यादि । 'शीकरिण' इत्यस्य विवरणम्—**सूक्ष्मे**-

**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥**

### लोचनम्

वशाच्च बलाकाः सितपक्षिविशेषा येषु त एवंविधा मेघाः । एवं नभस्तावद्दुरालोकं वर्तते । दिशोऽपि दुःसहाः । यतः सूक्ष्मजलकणोद्गारिणो वाता इति मन्दमन्दत्वमेषाम-नियतदिगागमनं च बहुवचनेन सूचितम् । तर्हि गुहासु क्वचित्प्रविश्यास्यतामित्यत आह—**पयोदानां** ये **सुहृदस्तेषु च** सत्सु ये शोभनहृदया मयूरास्तेषामानन्देन हर्षेण कलाः षड्जसंवादिन्यो मधुराः केकाः शब्दविशेषाः ताश्च सर्वं पयोदवृत्तान्तं दुस्सहं स्मारयन्ति; स्वयं च दुस्सहा इति भावः । एवमुद्दीपनविभावोद्बोधितविप्रलम्भः परस्प-राधिष्ठानत्वाद्रतेः विभावानां साधारणतामभिमन्यमानः इत एव प्रभृति प्रियतमां हृदये निधायैव स्वात्मवृत्तान्तं तावदाह—**कामं सन्त्विति** । दृढमिति सातिशयम् । **कठोर-हृदय** इति । रामशब्दार्थध्वनिविशेषावकाशदानाय कठोरहृदयपदम् । यथा 'तद्गेहं' इत्युक्तेऽपि 'नतभित्ति' इति । अन्यथा रामपदं दशरथकुलोद्भवत्वकौसल्यास्नेहपात्रत्व-बाल्यचरितजानकीलाभादिधर्मान्तरपरिणतमर्थं कथं न ध्वनेदिति । **अस्मीति** । स

### बालप्रिया

त्यादि । **इतीति** । शीकरिण इति शीकरसम्बन्धप्रतिपादनेन हेतुनेत्यर्थः । **मन्दम-न्दत्वमित्यस्य** 'सूचितमि'त्यनेन सम्बन्धः । बहुवचनव्यङ्ग्यं दर्शयति—**एषामिति** । **सुहृद** इति । बन्धव इत्यर्थः । अर्थान्तरञ्चाह—**तेष्विति** । **शोभनहृदया** इति । अत एवानन्द इति भावः । कलत्वस्यानन्दहेतुकत्वात्तद्विशिष्टकेकानामानन्दहेतुकत्व-मिति दर्शयन्नाह—**हर्षेण कला** इति । **एवमित्यादि** । पूर्वोक्तैरुद्दीपनविभावै-रुद्बोधितः विप्रलम्भः वियोगकालावच्छिन्ना रतिर्यस्य सः । **परस्परेत्यादि** । स्त्रीपुं-सयोर्जीवितसर्वस्वाभिमानात्मिकाया रतेः परस्परसम्बन्धित्वादित्यर्थः । **विभावानां** सजलजलधरादीनाम् । साधारण्यं प्रियतमासाधारण्यम् । **अभिमन्यमान** इति । निरूपयन्नित्यर्थः । **इत** इति । काममित्यादित इत्यर्थः । **तावदिति** । प्रथ-ममित्यर्थः । **कामं सन्त्विति** । यथेष्टं भवन्तु इत्यर्थः । **रामशब्दार्थेति** । रामशब्देनार्थविशेषाणां व्यञ्जने सहकारीत्यर्थः । **तद्गेहमिति** । पद्यमिदं तृती-योद्योते उदाहरिष्यते । **अन्यथेति** । कठोरहृदय इत्यस्याभाव इत्यर्थः । **बाल्य-चरितेति** । विद्याभ्यासताटकावधादीत्यर्थः । आदिपदेन परशुरामजयादिकं गृह्यते । लाभादि यद्धर्मान्तरं तेन परिणतं तत्प्रकारकप्रतीतिविषयम् । **कथं न ध्वनेदिति** । तथाच कठोरहृदयपदन्तदर्थानुगुणानामेव धर्माणां रामशब्देन व्यञ्जने सहकारितया निर्दिष्टमिति भावः । 'सर्वं सहे'इत्यस्य यद्यद्दुःखमापतति तत्सर्वं सहेत्यर्थः । 'वैदेही'

इत्यत्र रामशब्दः। अनेन हि व्यङ्ग्यधर्मान्तरपरिणतः सञ्ज्ञी प्रत्याय्यते, न संज्ञिमात्रम्।

लोचनम्

एवाहं भवामीत्यर्थः। भविष्यतीति क्रियासामान्यम्। तेन किं करिष्यतीत्यर्थः। अथ च भवनमेवास्या असम्भाव्यमिति। उक्तप्रकारेण हृदयनिहितां प्रियां स्मरणशब्दविकल्पपरम्परया प्रत्यक्षीभावितां हृदयस्फोटनोन्मुखीं ससंभ्रममाह—**हहा** हेति। देवीति। युक्तं तव धैर्यमित्यर्थः। **अनेने**ति। रामशब्देनानुपयुज्यमानार्थेनेति भावः। व्यङ्ग्यं धर्मान्तरं प्रयोजनरूपं राज्यनिर्वासनाद्यसङ्ख्येयम्। तच्चासङ्ख्यत्वादभिधाव्यापारेणाशक्यसमर्पणम्। क्रमेणार्प्यमाणमप्येकधीविषयभावाभावान्न चित्रचर्वणापदमिति न चारुत्वातिशयकृत्। प्रतीयमानं तु तदसङ्ख्यमनुद्भिन्नविशेषत्वेनैव किं किं रूपं न सहत इति चित्रपानकरसापूपगुडमोदकस्थानीयविचित्रचर्वणापदं भवति। यथोक्तम्—'उक्त्य-

बालप्रिया

त्यनेन च दुःखासहिष्णुत्वं व्यज्यते। **क्रियासामान्य**मिति। बोधयतीति शेषः। मुख्यार्थोऽपि विवक्षित इत्याह—**अथ चे**ति। चतुर्थपादमवतारयति—**उक्ते**त्यादि। **स्मरणे**ति। जलधराद्युद्दीपकानां प्रियतमासाधारणत्वस्मरणम्। शब्दः वैदेहीति शब्दः, तज्जनितबोध इति यावत्। 'विकल्पः कथं भविष्यती'ति वितर्कः। तेषां **परम्परये**त्यर्थः। **हा हा** हेति त्रयो निपाताः खेदातिशये। 'देवी'त्यनेन व्यङ्ग्यमाह—**युक्त**मिति। देव्याः कृताभिषेकायाः राजतुल्यत्वादिति भावः। 'अनेने'ति पदं व्याचष्टे—**रामशब्देनानुपयुज्यमानार्थेने**ति। सर्वसहत्वादिप्रकृतार्थानुपयुक्तार्थकरामपदेनेत्यर्थः। 'व्यङ्ग्ये' त्यादिग्रन्थं व्याचष्टे—**व्यङ्ग्य**मित्यादि। **प्रयोजने**ति। लक्षणाप्रयोजनेत्यर्थः। तदत्र किमित्यत आह—**राज्ये**ति। राज्यभ्रंशादित्यर्थः। आदिपदेन वनवासपितृजायावियोगादिकं दुःखकारि सर्वं गृह्यते। अस्य व्यङ्ग्यत्वं व्यवस्थापयिष्यन्नाह—**तच्चे**त्यादि। **तत्** प्रयोजनम्। **अभिधे**त्यादि। युगपदभिधातुमशक्यमित्यर्थः। **क्रमेणे**ति। तदिति अभिधाव्यापारेणेति चानुषज्यते। **एकधी**ति। एकबोधविषयत्वाभावादित्यर्थः। **प्रतीयमान**मिति। व्यज्यमानमित्यर्थः। तुशब्दो विशेषे। **तदसङ्ख्य**मिति। असङ्ख्यत्वविशिष्टं प्रयोजनमित्यर्थः। **अनुद्भिन्ने**ति। अनुद्भिन्नः अस्पष्टः विशेषः पार्थक्यं परस्परभेद इति यावत्, यत्र तत्त्वेनैव तद्विशिष्टमेव। पानकरसाद्यास्वादे कर्पूराद्यंशा यथा पार्थक्येन नानुभूयन्ते, किन्तु परस्परसंवलितत्वेनैव प्रयोजनप्रतीतौ तथा राज्यनिर्वासनादयो धर्मा इत्यर्थः। **किं किमि**ति। नानारूपं सहत इत्यर्थः। प्रतिपत्तृप्रतिभादिवशेन नानाविधं भातीति यावत्। **इती**ति हेतौ। **चित्रे**त्यादि। चित्रेति पानकरसादीनां त्रयाणां विशेषणं नानारसेत्यर्थः। गुडोपस्कृतं मोदकं **गुडमोदकं तत्स्थानीया** तच्चर्वणातुल्या या **विचित्रा** विलक्षणा **चर्वणा** रामगतत्वेन तत्तद्धर्मावगाहिनी प्रतीतिः, तस्याः **पदं** विषय

यथा च ममैव विषमबाणलीलायाम्—

ताला जाअन्ति गुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणानुग्गहिआइँ होन्ति कमलाइँ कमलाइं ॥
( तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ इति च्छाया ।
इत्यत्र द्वितीयः कमलशब्दः ।

लोचनम्

न्तरेणाशक्यं यत्' इति । एष एव सर्वत्र प्रयोजनस्य प्रतीयमानत्वेनोत्कर्षहेतुर्मन्तव्यः । मात्रग्रहणेन संज्ञी नात्र तिरस्कृत इत्याह—**यथा** चेत्यादि । **ताला** तदा । **जाला** यदा । **घेप्पन्ति** गृह्यन्ते । अर्थान्तरन्यासमाह—**रविकिरणे**ति । **कमलशब्द** इति । लक्ष्मीपात्रत्वादिधर्मान्तरशतचित्रतापरिणतं संज्ञिनमाहेत्यर्थः । तेन शुद्धेऽर्थे मुख्ये बाधानिमित्तं तत्रार्थे तद्धर्मसमवायः । तेन निमित्तेन रामशब्दो धर्मान्तरपरिणतमर्थं

बालप्रिया

इत्यर्थः । प्रयोजनजातस्य अभिधातुमशक्यत्वं यदुक्तं तत्रोपष्टम्भकमाह—**यथोक्त**मित्यादि । **एष एवे**ति । विचित्रचर्वणापदत्वमेवेत्यर्थः । प्रयोजनस्येत्युत्कर्षान्वयि । **मात्रग्रहणे**नेति । 'न संज्ञिमात्रमि'ति वृत्तिस्थमात्रशब्देनेत्यर्थः । आहेत्यनेनास्य सम्बन्धः । **संज्ञी नात्र तिरस्कृत** इति । राज्यनिर्वासनादिधर्मवत्वेन रामस्यैव संज्ञिनः प्रतीतेरिति भावः । **आहे**ति । वृत्तिकारो बोधयतीत्यर्थः । अत्र रामपदलक्ष्यतावच्छेदकं रामपदवाच्यत्वं सामान्यतो दुःखपात्रत्वं वा बोध्यम् । **तदे**ति । पदार्था इति शेषः । तदा **गुणाः** अतिशयाधायको धर्मो गुणस्तद्वन्तः सन्तः । **जायन्ते** भवन्ति । कदेत्यत्राह–**यदे**ति । **ते** गुणवन्तः पदार्थाः । **गृह्यन्ते** श्लाघ्यन्ते । अस्य सामान्यस्य समर्थकमुत्तरार्धमित्याशयेनाह–**अर्थान्तरन्यासमाहे**ति । **रवी**ति । रविणा किरणानुगृहीतानि करस्पृष्टानि, अथ चाभिनन्दितानि **कमलानि** पद्मानि । **कमलानि** कमलत्वेन ज्ञायमानानि भवन्तीत्यर्थः । अत्र व्यङ्ग्यं दर्शयति—**लक्ष्मी**त्यादि । **लक्ष्मीपात्रत्वं** कान्त्याश्रयत्वम् । आदिपदेन विकसितत्वसौरभादिशालित्वं गृह्यते । लक्ष्मीपात्रत्वादि **यद्धर्मान्तरशतं** तस्य **चित्रता** चित्रताविशिष्टं तदिति यावत् । तेन **परिणत**मित्यर्थः । **संज्ञिनं** कमलम् । **आह** व्यञ्जयति । केचिदत्र रामपदं राज्यनिर्वासनादिधर्मवत्वेन लक्षयन्निर्वेदादीन्व्यञ्जयति । एवं कमलशब्देऽपि बोध्यमित्याहुस्तन्मतं दूषयितुमुपन्यस्यति–**तेने**त्यादि । **तेने**ति । वक्ष्यमाणहेतुनेत्यर्थः । 'अप्रातीतिकमि'त्यनेनास्य सम्बन्धः । **शुद्धेऽर्थे मुख्य** इति । केवले रामपदमुख्यार्थ इत्यर्थः । **बाधे**ति । प्रकृतानुपयोगात्मकबाधेत्यर्थः । **तत्रार्थे** इति । रामपदमुख्यार्थधर्मिणीत्यर्थः । **तद्धर्मसमवाय** इति । विवक्षितराज्यनिर्वासनादि धर्मसम्बन्ध इत्यर्थः । अनेनाधाराधेयभावरूपमुख्यार्थसम्बन्धः प्रदर्शितः । उभयत्रास्तीति शेषः । **धर्मान्तर**-

लोचनम्

लक्षयति । व्यङ्ग्यान्यसाधारणान्यशब्दवाच्यानि धर्मान्तराणि । एवं कमलशब्दः । गुणशब्दस्तु संज्ञिमात्रमाहेति । तत्र यद्बलात्कैश्चिदारोपितं तदप्रातीतिकम् । अनुपयोगबाधितो ह्यर्थोऽस्य ध्वनेर्विषयो लक्षणा मूलं ह्यस्य ।

यत्तु हृदयदर्पण उक्तम्—'हहा हेति संरम्भार्थोऽयं चमत्कारः' इति । तत्रापि संरम्भः आवेगो विप्रलम्भव्यभिचारीति रसध्वनिस्तावदुपगतः । न च रामशब्दाभिव्यक्तार्थसाहायकेन विना संरम्भोल्लासोऽपि । अहं सहे तस्याः किं वर्तेत इत्येवमात्मा हि संरम्भः । कमलपदे च कः संरम्भ इत्यास्तां तावत् । अनुपयोगात्मिका च मुख्यार्थबाधात्रास्तीति लक्षणामूलत्वादविवक्षितवाच्यभेदतास्योपपन्नैव शुद्धार्थस्याविवक्षणात् ।

बालप्रिया

**परिणतमर्थमिति** । राज्यनिर्वासनादिधर्मवत्त्वेन रामव्यक्तिरूपार्थमित्यर्थः । तर्हि किं व्यङ्ग्यमित्यत्राह—**व्यङ्ग्यानीत्यादि** । **अशब्दवाच्यानि** शब्देनाभिधातुमशक्यानि । **धर्मान्तराणि** निर्वेदग्लानिमोहादयोऽन्ये धर्माः । **एवं कमलशब्द** इति । द्वितीयः कमलशब्दो लक्ष्मीपात्रत्वादिपरिणतमर्थं लक्षयति, व्यङ्ग्यन्तु मनोहरत्वादीत्यर्थः । जायन्ते **गुणा** इत्यत्र गुणशब्दस्यावृत्तिः, द्वीतीयो गुणशब्दः उत्कृष्टत्वादिधर्मान्तरपरिणतमर्थं लक्षयतीत्याद्याशङ्कां परिहर्तुमाह—**गुणशब्द** इत्यादि । **संज्ञिमात्रमिति** । मुख्यार्थमात्रमित्यर्थः । न तु धर्मान्तरपरिणतमर्थमिति मात्रशब्दार्थः । **तत्रेति** । पूर्वोक्तोदाहरणयोरित्यर्थः । **बलात्** बुद्धिसामर्थ्यात् । **आरोपितमिति** । आरोप्योक्तमित्यर्थः । **तदिति** । तदुक्तमित्यर्थः । **अप्रातीतिकमिति** । सहृदयप्रतीत्यसिद्धमित्यर्थः । अत्र हेतुमाह—**अनुपयोगे**त्यादि । **अनुपयोगबाधितः** अनुपयोगात्मकबाधाधीनः । **हीति** हेतौ । **अर्थः** भवदुक्तो राज्यनिर्वासनाद्यर्थः । **अस्य ध्वनेर्विषय** इति । अविवक्षितवाच्यस्थलीयध्वनिव्यापारस्य विषय इत्यर्थः । न तु लक्षणाया विषय इति भावः । लक्षणया ह्यर्थस्यैकधर्मप्रकारेणैव प्रतीतिर्न त्वनेकधर्मप्रकारेण । परन्त्वत्र लक्षणा सहकारिणीत्याह—**लक्षणे**त्यादि ।

**यत्त्वि**त्यादि । **हहेत्या**दि । हहाहेत्यनेन गम्यो यस्संरम्भः तस्यार्थः कार्यभूत इत्यर्थः । तत्रपीत्यनुवादः, उक्तार्थेऽपीत्यर्थः । संरम्भ इत्यस्य विवरणम्—**आवेग** इति । **रसध्वनिरि**त्यादि । तवानभिमतो रसध्वनिरादावभ्युगतो भवतीत्यर्थः । इत्थं च पूर्वोक्तार्थध्वनेरभ्युपगमोऽप्यापतित इत्याह—**न चे**त्यादि । **रामशब्दाभिव्यक्तार्थेति** । राज्यनिर्वासनाद्यर्थेत्यर्थः । उक्तार्थे हेतुमाह—**अहं सहे** इत्यादि । अहं सर्वं सहे इत्यर्थस्योपोद्बलको हि रामशब्दाभिव्यक्तार्थ इति भावः । उक्तोदाहरणयोः मुख्यार्थबाधां स्वयं विवृण्वन्नविवक्षितवाच्यभेदत्वमुपपादयति—**अनुपयोगात्मिका चे**त्यादि । मुख्यार्थस्य पदार्थान्तरान्वयानुपपत्तिज्ञानमिव प्रकृतानुपयुक्तत्वज्ञानमपि लक्षणाबीजमतोऽनुपयुक्तत्वज्ञानरूपोऽपि मुख्यार्थबाधापदार्थ इत्यर्थः । **अत्रेति** । उक्तोदाहरणयोरित्यर्थः । **शुद्धार्थस्येति** । वाच्यजात्यादिविशिष्टव्यक्तिरूपार्थस्येत्यर्थः । **तस्या-**

अत्यन्ततिरस्कृतवाच्यो यथादिकवेर्वाल्मीकेः—

रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ इति ।

अत्रान्धशब्दः ।

लोचनम्

न च तिरस्कृतत्वं धर्मिरूपेण, तस्यापि तावत्यनुगमात् । अत एव च परिणतवाच्योयुक्त्या व्यवहृतम् । आदिकवेरिति ध्वनेर्लक्ष्यप्रसिद्धतामाह—रवीति । हेमन्तवर्णने पञ्चवट्यां रामस्योक्तिरियम् । अन्ध इति चोपहतदृष्टिः । जात्यन्धस्यापि गर्भे दृष्ट्युपघातात् । अन्धोऽयं पुरोऽपि न पश्यतीत्यत्र तिरस्कारोऽन्धार्थस्य न त्वत्यन्तम् । इह त्वादर्शस्यान्धत्वमारोप्यमाणमपि न सह्यमिति । अन्धशब्दोऽत्र पदार्थस्फुटीकरणाशक्तत्वं नष्टदृष्टिगतं निमित्तीकृत्यादर्शे लक्षणया प्रतिपादयति । असाधारणविच्छायत्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्ति । भट्टनायकेन तु यदुक्तम्—'इवशब्दयोगाद्गौणताप्यत्र न काचित्' इति, तच्छ्लोकार्थमपरामृश्य । आदर्शचन्द्रमसोर्हि सादृश्यमिवशब्दो द्योतयति । निःश्वासान्ध इति चादर्शविशेषणम् । इवशब्दस्यान्धार्थेन योजने आदर्शश्चन्द्रमा इत्युदाहरणं भवेत् । योजनं चैतदिवशब्दस्य क्लिष्टम् ।

बालप्रिया

पीति । व्यक्तिरूपार्थस्यापीत्यर्थः । तावत्यनुगमादिति । लक्ष्ये व्यङ्ग्ये चार्थे अनुप्रवेशादित्यर्थः । अन्ध इति । अन्धपदमुख्यार्थ इत्यर्थः । ननु उपहतत्वं जननात्परतो यत्किञ्चित्कारणेन भवति, तथाच जात्यन्धे कथमन्धव्यवहार इत्यत आह—जात्यन्धस्यापीति । प्रकृतोदाहरणे अन्धपदवाच्यस्यात्यन्ततिरस्कृतत्वं विशदयितुमन्यत्र तदभावं दर्शयति—अन्ध इत्यादि । अन्ध इति च दृष्टेरुपहतत्वमारोप्योपचारेणोक्तिः । अत्र हेतुः—पुरोऽपीत्यादि । अन्धार्थस्येति । अन्धपदमुख्यार्थस्येत्यर्थः । इह त्विति । प्रकृतोदाहरणे इत्यर्थः । न सह्यमिति । आदर्शस्य दृष्टेरेवाभावादिति भावः। पदार्थेत्यादि । तद्रूपं सादृश्यमित्यर्थः । इदमेवात्र लक्ष्यतावच्छेदकम् । नष्टदृष्टीति। उपहतदृष्टीत्यर्थः । आदर्शं प्रतिपादयतीति । पदार्थस्फुटीकरणाशक्तत्वेन रूपेणादर्शं बोधयतीत्यर्थः । अन्धार्थेन योजन इति । निश्वासान्ध इवेति योजन इत्यर्थः । इत्युदाहरणं भवेदिति । एवं योजनीयं भवेदित्यर्थः । भवत्वित्यत्राह—योजनं चैतदिति । निश्वासान्ध इव य आदर्शस्तद्रूपश्चन्द्रमा इति योजनं चेत्यर्थः । क्लिष्टमिति । अर्थस्य क्लिष्टत्वादिति भावः । इवशब्दस्योभयत्र सम्बन्धोऽस्त्विति शङ्कां परिहरन् आह—न चेति । स इवेति । आदर्श इवेत्यर्थः । न युक्तेत्यत्र हेतुमुपहासगर्भ-

गअणं च मत्तमेहं धाराललिअज्जुणाइं अ वणाइं ।
णिरहङ्कारमिअङ्का हरन्ति नीलाओ वि णिसाओ ॥

लोचनम्

न च निःश्वासेनान्ध इवादर्शः स इव चन्द्र इति कल्पना युक्ता । जैमिनीयसूत्रे ह्येवं योज्यते न काव्येऽपीत्यलम् । गअणमिति ।

गगनं च मत्तमेघं धाराललितार्जुनानि च वनानि ।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः ॥

इति च्छाया । चशब्दोऽपिशब्दार्थे । गगनं मत्तमेघमपि न केवलं तारकितम् । धाराललितार्जुनवृक्षाण्यपि वनानि न केवलं मलयमारुतान्दोलितसहकाराणि । निरहङ्कारमृगाङ्का नीला अपि निशा न केवलं सितकरकरधवलिताः । हरन्ति उत्सुकयन्तीत्यर्थः । मत्तशब्देन सर्वथैवेहासम्भवत्स्वार्थेन बाधितमद्योपयोगक्षीबात्मकमुख्यार्थेन सादृश्यान्मेघाल्लक्षयताऽसमञ्जसकारित्वदुर्निवारत्वादिधर्मसहस्रं ध्वन्यते । निरहङ्कारशब्देनापि चन्द्रं लक्षयता तत्पारतन्त्र्यविच्छायत्वोज्जिगमिषारूपजिगीषात्यागप्रभृतिः ॥ १ ॥

अविवक्षितवाच्यस्य प्रभिन्नत्वमिति यदुक्तं तत्कुतः ? न हि स्वरूपादेव भेदो भवतीत्याशङ्क्य विवक्षितवाच्यादेवास्य भेदो भवति, विवक्षा तदभावयोर्विरोधादित्यभिप्रा-

बालप्रिया

माह—जैमिनीयेति । गगनं चेति वर्षावर्णनम् । च शब्द इति । गगनञ्चार्जुनानि चेत्युभयत्र चशब्द इत्यर्थः । गगनं मत्तमेघमपीति अपिशब्दगम्यमर्थमाह—नेत्यादि । एवमुपर्यपि बोध्यम् । वाच्यस्यात्यन्ततिरस्कृतत्वमुपपादयति—मत्तशब्देनेत्यादि । बाधितेति । अन्वयानुपपत्तिरूपबाधाविशिष्टेत्यर्थः । सादृश्यादिति । सादृश्यात्मकमुख्यार्थसम्बन्धान्निमित्तादित्यर्थः । सादृश्यं मर्यादोल्लङ्घनादिना । असमञ्जसेति । अनुचितेत्यर्थः । निरहङ्कारशब्देनापीति । प्रतिषेधस्य प्रसक्तिपूर्वकत्वान्निरहङ्कारशब्दो ह्यहङ्कारस्वरूपयोग्ये चेतनविशेषे एव स्वरसतः प्रयुज्यत इत्यतोऽत्र मुख्यार्थस्यान्वयानुपपत्तिरूपबाधा बोध्या । लक्षयतेति । सादृश्यादित्यनुषज्यते । तच्च मालिन्यादिना । तदित्यादि । तत्पदेन निरहङ्कारपरामर्शः तद्गतपारतन्त्र्यादीत्यर्थः । उज्जिगमिषा उन्नतीच्छा, तद्रूपा या जिगीषा उत्कर्षेच्छा तस्यागप्रभृतिरित्यर्थः ॥ १ ॥

सूत्रवृत्तिकृतोरैक्यमभिप्रेत्यावतारयति—अविवक्षितवाच्यस्येत्यादि । उक्तमिति । 'प्रभेदप्रतिपादनाये'ति पूर्वग्रन्थेनाक्तमित्यर्थः । तदिति । प्रभिन्नत्वमित्यर्थः । कुत इति । कस्मात्प्रतियोगिन इत्यर्थः । न हि स्वरूपादेव भेदो भवतीति । स्वस्मादेव भेदो न भवतीत्यर्थः । अस्येति । अविवक्षितवाच्यस्येत्यर्थः । विवक्षेत्यादि । विवक्षितत्वाविवक्षितत्वयोरेकत्रासम्भवादित्यर्थः । ननु विवक्षितान्यपराभिधे-

अत्र मत्तनिरहङ्कारशब्दौ ।

असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ २ ॥

मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा । स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया प्रकाशते, कश्चित्क्रमेणेति द्विधा मतः ।

लोचनम्

थैणाह—असंलक्ष्येति । सम्यङ् न लक्षयितुं शक्यः क्रमो यस्य तादृश उद्द्योत उद्द्योतनव्यापारोऽस्येति बहुव्रीहिः । ध्वनिशब्दसांनिध्याद्विवक्षिताभिधेयत्वेनान्यपरत्वमत्राक्षिप्तमिति स्वकण्ठेन नोक्तम् । ध्वनेरिति । व्यङ्ग्यस्येत्यर्थः । आत्मेति । पूर्वश्लोकेन व्यङ्ग्यस्य वाच्यमुखेन भेद उक्तः । इदानीं तु द्योतनव्यापारमुखेन द्योत्यस्य स्वात्मनिष्ठ एवेत्यर्थः । व्यङ्ग्यस्य ध्वनेर्द्योतने स्वात्मनि कः क्रम इत्याशङ्क्याह—वाच्यार्थापेक्षयेति । वाच्योऽर्थो विभावादिः ॥ २ ॥

तत्रेति । तयोर्मध्यादित्यर्थः । यो रसादिरर्थः स एवाक्रमो ध्वनेरात्मा न त्वक्रम एव सः । क्रमत्वमपि हि तस्य कदाचिद्भवति । तदा चार्थशक्त्युद्भवानुस्वानरूपभेदतेति वक्ष्यते । आत्मशब्दः स्वभाववचनः प्रकारमाह । तेन रसादिर्योऽर्थः स ध्वनेरक्रमो नामभेदः । असंलक्ष्यक्रम इति यावत् । ननु किं सर्वदैव रसादिरर्थो ध्वनेः प्रकारः ? नेत्याह; किं तु यदाङ्गित्वेन प्रधानत्वेनावभासमानः । एतच्च सामान्यलक्षणे 'गुणीकृत-

बालप्रिया

यस्येति कुतो नोक्तमित्यत आह—ध्वनिशब्देत्यादि । विवक्षिताभिधेत्वेनेति । विवक्षिताभिधेयत्वोक्त्येत्यर्थः । अत्रेति । अभिधेये इत्यर्थः । आक्षिप्तमिति । दर्शितमित्यर्थः । विशेषमाह—पूर्वश्लोकेनेत्यादि । इदानीमिति । अस्मिन् श्लोके इत्यर्थः । स्वात्मनिष्ठ एवेति । 'भेद उक्त' इत्यस्यानुषङ्गः । वृत्तौ 'ध्वनेरात्मे'त्यस्य विवरणम्–'मुख्यातये'त्यादि । वाच्यार्थेत्यादिकमवतारयति—व्यङ्ग्यस्येत्यादि ॥ २ ॥

रसेत्यादिकारिकायामङ्गिभावेन भासमानो रसभावादिः अक्रमो ध्वनेरात्मा व्यवस्थित इत्यन्वयो वक्तव्यः । तथा च तथाविधरसभावादिसामान्यमसंलक्ष्यक्रम इत्यर्थः सिध्यति । स चार्थो बाधितः, क्वचिद्भावादेः संलक्ष्यक्रमत्वस्याप्यङ्गीकृतत्वादतो विवक्षितमर्थं व्याचष्टे—यो रसादिरित्यादि । अक्रमः असंलक्ष्यक्रमः । न त्वक्रम एव स इति । रसभावादिरक्रम एव भवतीति तु नैवेत्यर्थः । कुत इत्यत्राह—क्रमेति । संलक्ष्यक्रमत्वमपीत्यर्थः । 'क्रमवत्त्वमि'ति च पाठः । तस्य भावादेः । वक्ष्यत इति । "एवंवादिनि देवर्षावि"त्याद्युदाहरणपूर्वकं वक्ष्यत इत्यर्थः । अङ्गिभावेन भासमान इत्यस्य विवरणम्–अङ्गित्वेनेत्यादि । एतदुक्तेः पौनरुक्त्यमाशङ्कते–एतच्चेत्यादि ।

तत्र

**रसभावतदाभासतत्प्रशान्त्यादिरक्रमः ।**
**ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ ३ ॥**

**लोचनम्**

स्वार्थाविर्त्यत्र यद्यपि निरूपितम्, तथापि रसवदाद्यलङ्कारप्रकाशनावकाशदानायानूदितम्। स च रसादिर्ध्वनिर्व्यवस्थित एव; न हि तच्छून्यं काव्यं किञ्चिदस्ति। यद्यपि च रसेनैव सर्वं जीवति काव्यम्, तथापि तस्य रसस्यैकघनचमत्कारात्मनोऽपि कुतश्चिदंशात्प्रयोजकीभूतादधिकोऽसौ चमत्कारो भवति। तत्र यदा कश्चिदुद्रिक्तावस्थां प्रतिपन्नो व्यभिचारी चमत्कारातिशयप्रयोजको भवति, तदा भावध्वनिः। यथा—

> तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
> स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
> तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोववर्तिनीं
> सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः॥

अत्र हि विप्रलम्भरससद्भावेऽपीयति वितर्काख्यव्यभिचारिचमत्क्रियाप्रयुक्त आस्वादातिशयः। व्यभिचारिण उदयस्थित्यपायत्रिधर्मकाः। यदाह—'विविधमाभिमुख्येन चरन्तीति व्यभिचारिणः' इति। तत्रोदयावस्थाप्रयुक्तः कदाचित्। यथा—

> याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया
> निर्ध्यातं परिवर्तनं पुनरपि प्रारब्धुमङ्गीकृतम्।

**बालप्रिया**

परिहरति—**तथापीत्यादि**। **रसवदादीति**। अङ्गिभावेन भासमान इत्युक्तावङ्गभावेन भाने कः प्रकार इति जिज्ञासायाः सम्भवादिति भावः। व्यवस्थित इति पदं व्याचष्टे—**स चेत्यादि**। **व्यवस्थित** इति। सर्वत्र काव्ये स्थित इत्यर्थः। भावेत्यादिना निर्दिष्टं भावादिध्वनिं शङ्कापूर्वकं व्यवस्थापयति—**यद्यपीत्यादि**। **तस्येति**। काव्यजीवितस्येत्यर्थः। 'रसस्य अंशादि'ति सम्बन्धः। रसाङ्गभूतादित्यर्थः।

**तिष्ठेदिति**। विक्रमोर्वशीये पुरूरवसो वचनम्। **सा** उर्वशी। **कोपवशाद्**धेतोः। **प्रभावेण**ान्तर्धानकरणविद्यया **पिहिता** अन्तर्हिता। **तिष्ठेदि**ति सम्भावनायां लिङ्। 'एतन्न युक्तं यत' इति शेषोऽत्र बोध्यः। एवमुत्तरत्रापि। **स्वर्गाय** स्वर्गं गन्तुम्। **विबुधद्विषः** असुराः। **अगोचरम्** अविषयत्वम्। **विधिः** प्रकारः। **यदा**हेति। विविधमित्यनेन त्रिप्रकारत्वमपि दर्शितमिति भावः। **उदयावस्थाप्रयुक्त** इति। उदयौन्मुख्यप्रयुक्त इत्यर्थः।

**यात** इति। **शय्यामनुप्राप्तया** प्रियेण सह शयानया **तन्वङ्ग्या**। **गोत्रस्य** नाम्नो **विपर्यये** वनितान्तरनाम्नीत्यर्थः। **श्रुतिपथं याते** श्रुते सति। **परिवर्तनं निर्ध्यातं** चिन्तितम्। **प्रारब्धुमिति**। परिवर्तनमित्यस्यानुषङ्गः। तदित्य-

लोचनम्

भूयस्तत्प्रकृतं कृतं च शिथिलक्षिप्तैकदोर्लेखया
तन्वङ्ग्या न तु पारितः स्तनभरः क्रष्टुं प्रियस्योरसः ॥

अत्र हि प्रणयकोपस्योज्जिगमिषयैव यदवस्थानं न तु पारित इत्युदयावकाशनिराकरणात्तदेवास्वादजीवितम् । स्थितिः पुनरुदाहृता—'तिष्ठेत्कोपवशात्' इत्यादिना । क्वचित्तु व्यभिचारिणः प्रशमावस्थया प्रयुक्तश्चमत्कारः । यथोदाहृतं प्राक् 'एकस्मिन् शयने पराङ्मुखतया' इति । अयं तत्प्रशम इत्युक्तः । अत्र चेर्ष्याविप्रलम्भस्य रसस्यापि प्रशम इति शक्यं योजयितुम् । क्वचित्तु व्यभिचारिणः सन्धिरेव चर्वणास्पदम् । यथा—

ओसुरु सुम्ठि आइं मुहु चुम्बिउ जेण ।
अमिअरसघोण्टाणं पडिजाणिउ तेण ॥

इत्यत्र श्रुत्युक्ते तु कोपे कोपकषायगद्गदमन्दरुदितायाः येन मुखं चुम्बितं तेनामृतरसनिगरणविश्रान्तिपरम्पराणां तृप्तिर्ज्ञातेति कोपप्रसादसन्धिश्चमत्कारस्थानम् ।

बालप्रिया

स्यापकर्षो वा । **पुनरपि** पुनस्तु । **प्रारब्धुमङ्गीकृतं** चिकीर्षितम् । **भूयः तत्** परिवर्तनम् । **प्रकृतं** प्रयत्नविषयीकृतम् । **कृतं चेति** । भूयस्तदित्यनयोरनुषङ्गः । **शिथिलक्षिप्तैकदोर्लेखया** पूर्वं शिथिला शिथिलीकृता पश्चादन्यत्र क्षिप्ता च एकदोर्लेखा यया तथा सत्या । **भूयः तत्** परिवर्तनम् । **कृतं च** अनुष्ठितं च । जानातीच्छति यतते चेष्टते इति क्रमोऽत्र प्रदर्शितः । **न त्विति** । तुशब्दो विशेषे । 'स्तनभरः प्रियस्य उरसः क्रष्टुं न पारित' इति सम्बन्धः । प्रतीहारेन्दुराजेन काव्यालङ्कारसङ्ग्रहव्याख्याने श्लोकोऽयं व्याख्यातः । **उज्जिगमिषयेव** । उदयौन्मुख्यावस्थयैव । एवकारार्थं विवृणोति—**न त्वित्यादि** । **इत्युक्त** इति । पूर्वैरिति शेषः । स्वाभिप्रायमाह—**अत्रेत्यादि** । **ओसुरु** इति ।

ईर्ष्याश्रुशोभितायाः मुखं चुम्बितं येन ।
अमृतरसनिगरणानां तृप्तिर्ज्ञाता तेन ॥

इति छायेति प्रतिभाति । निगरणानां भक्षणानां करणरूपार्थे षष्ठी । यथा "नाग्निः तृप्यति काष्ठाना"मित्यादि । **इत्यत्र श्रुत्युक्ते** इति । ईर्ष्याशब्देनोक्तेऽपीत्यर्थः । 'अमृते'त्यादेर्विवरणम्—**अमृतरसे**त्यादि । अमृतमेव **रसविश्रान्तिः** रसविश्रमस्थानं तस्य । यद्वा—अमृतरसस्य विश्रान्तिपूर्वकाणि निगरणानि विश्रम्य विश्रम्य निगरणानि । ज्ञातेत्यन्तेन वाच्यार्थकथनम् । **कोपप्रसादसन्धिरि**ति । नायिकागतो ध्वन्यमान इति शेषः ।

लोचनम्

क्वचिद्व्यभिचार्यन्तरशबलतैव विश्रान्तिपदम्। यथा—

> क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
> दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम्।
> किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
> चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥

अत्र हि वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने परस्परं बाध्यबाधकभावेन द्वन्द्वशो भवन्ती, पर्यन्ते तु चिन्ताया एव प्रधानतां ददती परमास्वादस्थानम्। एवमन्यदप्युत्प्रेक्ष्यम्। एतानि चोदयसन्धिशबलत्वादिकानि कारिकायामादिग्रहणेन गृहीतानि।

नन्वेवं विभावानुभावमुखेनाप्यधिकश्चमत्कारो दृश्यत इति विभावध्वनिरनुभावध्वनिश्च वक्तव्यः। नैवम्; विभावानुभावौ तावत्स्वशब्दवाच्यावेव। तच्चर्वणापि चित्तवृत्तिष्वेव पर्यवस्यतीति रसभावेभ्यो नाधिकं चर्वणीयम्। यदा तु विभावानुभावावपि व्यङ्ग्यौ भवतस्तदा वस्तुध्वनिरपि किं न सह्यते। यदा तु विभावाभासाद्रत्याभासो·

बालप्रिया

**क्वाकार्यमिति।** देवयानीमभिलषतो ययातेरियमुक्तिः। **अकार्यं** ब्राह्मणकन्यकासक्तिरूपम्। क्वद्वयेन द्वयोः सहानवस्थानप्रतीतिः। तेनात्यन्तानौचित्यं व्यज्यते। अत्र वितर्कः। **भूयोऽपी**त्यादि। अत्रौत्सुक्यम्। **दोषाणां** प्रमादादीनाम्। **प्रशमाय** आत्यन्तिकनाशाय। **श्रुतं** शास्त्रश्रवणम्। अत्र मतिः। **अहो** इत्यादि। **कान्तं** मनोहरं मुखं तस्याः मुखम्। अत्र स्मृतिः। **अपकल्मषाः** अपगतं कल्मषं दुश्चरितं येभ्यस्ते। **कृते** सुचरिते **धीर्ये**षाम्। यद्वा—कृता शिक्षिता धीर्येषां ते पण्डिताः। **किं वक्ष्यन्ति।** अत्र शङ्का। **स्वप्नेऽपि** अदृष्टाश्रुतपूर्वघटकेऽपि **सा दुर्लभा।** अत्राभिमताप्राप्तिप्रयुक्तं दैन्यम्। **चेत** इत्यादि। अत्र धृतिः। **क** इत्यादि। **धन्यः** नाहमिव मन्दभाग्यः। **धास्यति** पास्यति। अत्र चिन्ता च व्यज्यते। तदाह—**अत्र ही**त्यादि। **वितर्कौत्सुक्ये** इत्यादि। क्वाकार्यमित्याद्येकैकपादस्थवाक्याभ्यां क्रमेण व्यज्यमाने इति भावः। **परस्परं बाध्ये**ति। वितर्कादिरौत्सुक्यादिना बाध्यत इत्यर्थः। 'भवन्ती ददती'ति च द्विवचनम्। **चिन्ताया** इति। अन्त्यवाक्येन व्यज्यमानाया इति भावः।

प्रसङ्गाच्छङ्कते—**नन्वि**ति। समाधत्ते—**नैव**मिति। **स्वशब्दवाच्यावेव** स्वशब्देनाभिधातुं शक्यावेव। **चित्तवृत्तिष्वेवे**ति। रत्यादिचित्तवृत्तिचर्वणास्वेवेत्यर्थः। **किं न सह्यत** इति। इष्ट एवेति भावः। 'तदाभासे'ति निर्दिष्टमाभासं निरूपयति—**यदा त्वि**त्यादि। **विभावानुभावावि**ति। रसगङ्गाधरादौ विस्तृतमेतत्। **विभावाभासा**दिति। विभावस्याभासेऽनुभावोऽप्याभासो भवति। शङ्कते—

लोचनम्

दयस्तदा विभावानुभावाचर्वणाभास इति रसाभासस्य विषयः । यथा रावणकाव्याकर्णने शृङ्गाराभासः । यद्यपि 'शृङ्गारानुकृतिर्या तु स हास्यः' इति मुनिना निरूपितं तथाप्यौत्तरकालिकं तत्र हास्यरसत्वम् ।

दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं
चेतः कालकलामपि प्रकुरुते नावस्थितिं तां विना ।

इत्यत्र तु न हास्यचर्वणावसरः । ननु नात्र रतिः स्थायिभावोऽस्ति । परस्परास्थाबन्धाभावात् केनैतदुक्तं रतिरिति । रत्याभासो हि सः । अतश्चाभासता येनास्य सीता मय्युपेक्षिका द्विष्टा वेति प्रतिपत्तिर्हृदयं न स्पृशत्येव । तत्स्पर्शे हि तस्याप्यभिलाषो विलीयेत । न च मयीयमनुरक्तेत्यपि निश्चयेन कृतं, कामकृतान्मोहात् । अत एव तदाभासत्वं वस्तुतस्तत्र स्थाप्यते शुक्तौ रजताभासवत् । एतच्च शृङ्गारानुकृति-

बालप्रिया

**यद्यपीति । मुनिना निरूपित**मिति । तथा च तत्र हास्यो रसो वक्तुं न्याय इति भावः । **औत्तरकालिक**मिति । शृङ्गारचर्वणोत्तरकालभवमित्यर्थः । तच्चर्वणोत्तरमयमननुरक्तां कामयत इति रावणाभिलाषायालम्बितस्य हासस्य सहृदयानामुद्बोधादिति भावः ।

**दूरे**ति । 'एतैराकुलितस्य विक्षतरतेरङ्गैरनङ्गातुरैः सम्पद्येत कथं तदाप्तिसुखमित्येतन्न वेद्मि स्फुटमि'त्युत्तरार्धम् । 'प्रकुरुत' इत्यत्र 'प्रसहत इति च पाठः । दूराकर्षणं मोहश्च तत्कारी यो मन्त्रः तस्मिन्निवेत्युपमा । तया दूराकर्षकत्वादेरव्यभिचारो द्योत्यते । **तन्नाम्नि** सीतानाम्नि । अनङ्गातुरैः एतैः अङ्गैः । आकुलितस्य विह्वलीकृतस्य विक्षता नष्टा रतिः विषयान्तरेषु रुचिर्यस्य तस्य । अरतिमापन्नस्येति यावत् । मे इत्यनुषज्यते । **न हास्येति** । आदाविति शेषः । किन्तु शृङ्गाराभासचर्वणैवेति भावः । **केनेति** । रतिरित्येतत् केनोक्तमित्यन्वयः । अत्र प्रतीयमाना रतिरभिलाषरूपा चित्तवृत्तिरेव, न तु स्थायिभाव इति भावः । **रत्याभासो हि स** इति । **सः** रावणगताभिलाषरूपा चित्तवृत्तिः । **रत्याभासः** स्थायिभूतरतित्वेनाभासमानः । **अतश्चेति** । वक्ष्यमाणहेतुनेत्यर्थः । **अस्य** रावणस्य **मयि** विषये । **उपेक्षिका** उपेक्षावती । **द्विष्टा** द्वेषवती । **तत्स्पर्शे** तथाविधप्रतीतिस्पर्शे । **तस्य** रावणस्य । **न चेति** । कृतमिति निषेधवाची निपातः । इयं मय्यनुरक्तेति निश्चयस्याभावश्च नेत्यर्थः । तन्निश्चयश्चास्तीति यावत् । अत्र हेतुमाह—**कामे**त्यादि । 'निश्चयेन कृत्य'मिति च पाठः । तत्पक्षे 'न च कृत्यमि'त्यन्वयः । **इति निश्चयेन** न च प्रयोजनमित्यर्थः । तन्निश्चयो ह्यभिलाषजननेऽनुपयोगीति भावः । अत्र पक्षे 'कामकृतान्मोहादि'त्यस्य न स्पृशत्येवेत्यनेनान्वयो बोध्यः । **अत एव** उक्ताद्धेतोरेव । **तदाभासत्वं** रत्याभासत्वं । **तत्र** अभिलाषरूपायां रावणचित्तवृत्तौ । **स्थाप्यत** इति । प्रतिपत्तृभिरिति शेषः । **शृङ्गारानुकृतिशब्दं प्रयुञ्जान** इति । शृ-

लोचनम्

शब्दं प्रयुञ्जानो मुनिरपि सूचितवान् । अनुकृतिरमुख्यता आभास इति श्लोकोऽर्थः । अत एवाभिलाषे एकतरनिष्ठेऽपि शृङ्गारशब्देन तत्र तत्र व्यवहारस्तदाभासतया मन्तव्यः । शृङ्गारेण वीरादीनामप्याभासरूपतोपलक्षितैव । एवं रसध्वनेरेवामी भावध्वनिप्रभृतयो निष्यन्दा आस्वादे प्रधानं प्रयोजकमेवमंशं विभज्य पृथग्व्यवस्थाप्यते । यथा गन्धयुक्तिज्ञैरेकरससम्मूर्च्छितामोदोपभोगेऽपि शुद्धमांस्यादिप्रयुक्तमिदं सौरभमिति । रसध्वनिस्तु स एव योऽत्र मुख्यतया विभावानुभावव्यभिचारिसंयोजनोदितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशचर्वणाप्रयुक्त एवास्वादप्रकर्षः । यथा—

> कृच्छ्रेणोरुयुगं[1] व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
> मध्येऽस्यास्त्रिवलीतरङ्गविषमे निःष्पन्दतामागता ।
> मद्दृष्टिस्तृषितेव सम्प्रति शनैरारुह्य तुङ्गौ स्तनौ
> साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥

अत्र हि नायिकाकारानुवर्ण्यमानस्वात्मप्रतिकृतिपवित्रितचित्रफलकावलोकनाद्रस-

वालप्रिया

ङ्गारानुकृतिर्या तु स हास्य इति प्रयुञ्जान इत्यर्थः । **इति श्लोकोऽर्थ** इति । अनुकृत्यादिशब्दाः पर्याया इत्यर्थः । **शृङ्गारेणे**ति । शृङ्गारानुकृतिरिति मुनिवचनस्थशृङ्गारशब्देनेत्यर्थः । **वीरादीनामि**ति । तेषां गुर्वाद्यालम्बनत्वे ह्याभासता । उपसंहरति—**एवमित्यादि** । कथं तर्हि पृथग्व्यवहार इत्यत आह—**आस्वाद** इति । 'प्रधानं प्रयोजकमंशमेवं विभज्ये' त्यन्वयः । **पृथग्व्यवस्थाप्यत** इति । **पृथक्** रसध्वनित्वभावध्वनित्वादिभिन्नरूपेण । अत्र दृष्टान्तमाह—**यथेति** । **गन्धयुक्तिः** गन्धद्रव्ययोजना । **एके**ति । **एकरसः** एकास्वादः यः **सम्मूर्च्छितस्य** व्याप्तस्य **आमोदस्य उपभोगः** तस्मिन्नपि । मांसीगन्धद्रव्यविशेषः । इतीति पृथग्व्यवस्थाप्यत इत्यस्यानुषङ्गः । **विभावेति** । विभावादीनां त्रयाणां संयोजनेन तच्चर्वणया उदिता उत्पन्ना स्थायिप्रतिपत्तिः यस्य ।

**कृच्छ्रेणे**ति । रत्नावल्यां राज्ञो विदूषकं प्रतीयमुक्तिः । अस्या इत्यस्योरुयुगमित्यादिभिः पञ्चभिः सम्बन्धः । **त्रिवल्येव तरङ्गः** तरङ्गतुल्या त्रिवली वा तेन **विषमे** निम्नोन्नते । **तृषितेव** तृषितत्वादिव । **जललवाः** अश्रुकणाः । **तत्प्रस्यन्दिनी**ति । तथा लिखिते इति बोध्यम् । अत्रोरुयुगस्य नितम्बस्य चातिविशालत्वं मध्यस्य तनुत्वं स्तनयोर्महत्वं च गम्यत इति सौन्दर्यातिशयो जललवेत्यादिना नायिकाया विरहदुःखातिशयश्च व्यज्यते । कस्याश्चिदरण्यभ्रमणवृत्तान्तस्य चात्र समाधिः । **नायिकेति** । नायिकाकारेण लिखितनायिकाप्रतिकृत्या हेतुना अनुवर्ण्यमानं नर्मसचिवं प्रति मुहुर्वर्ण्यमानं स्वात्मप्रतिकृत्या लिखितनायकप्रतिकृत्या पवित्रितं च, यद्वा—नायिकाकारेण

---

१ रत्ना., २. ४.

रसादिरर्थो हि सहेव वाच्येनावभासते । स चाङ्गित्वेनावभासमानो ध्वनेरात्मा ।

इदानीं रसवदलङ्कारादलक्ष्यक्रमद्योतनात्मनो ध्वनेर्विभक्तो विषय इति प्रदर्श्यते—

**वाच्यवाचकचारुत्वहेतुनां विविधात्मनाम् ।**
**रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥ ४ ॥**

लोचनम्

राजस्य परस्परास्थाबन्धरूपो रतिस्थायिभावो विभावानुभावसंयोजनवशेन चर्वणारूढ इति । तदलं बहुना। स्थितमेतत्–रसादिरर्थोऽङ्गित्वेन भासमानोऽसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रकार इति । **सहेवेति** । इवशब्देनासंलक्ष्यता विद्यमानत्वेऽपि क्रमस्य व्याख्याता । **वाच्येनेति** । विभावानुभावादिना ॥ ३ ॥

नन्वङ्गित्वेनावभासमान इत्युच्यते ; तत्राङ्गत्वमपि किमस्ति रसादेर्येन तन्निराकरणायैतद्विशेषणमित्यभिप्रायेणोपक्रमते—**इदानीमित्यादिना** । अङ्गत्वमस्ति रसादीनां रसवत्प्रेयऊर्जस्विसमाहितालङ्काररूपतायामिति भावः । अनया च भङ्ग्या रसवदादिष्वलङ्कारेषु रसादिध्वनेर्नान्तर्भाव इति सूचयति । पूर्वं हि समासोक्त्यादिषु वस्तुध्वनेर्नान्तर्भाव इति दर्शितम् । वाच्यं च वाचकं च तच्चारुत्वहेतवश्चेति द्वन्द्वः । वृत्तावपि शब्दाश्चालङ्काराश्चार्थाश्चालङ्काराश्चेति द्वन्द्वः । **मत** इति । पूर्वमेवैतदुक्तमित्यर्थः । **ननूक्तं भट्टनायकेन**—"रसो यदा परगततया प्रतीयते तर्हि ताटस्थ्यमेव स्यात् । न च

बालप्रिया

कर्त्रा अनुवर्ण्यमाना दृश्यमाना, 'निर्वर्ण्यमाने'ति पाठः साधिष्ठः, या स्वात्मप्रतिकृतिस्तया पवित्रितं यच्चित्रफलकं तदवलोकनादित्यर्थः । प्रबुद्ध इति शेषः । **चर्वणारूढ** इति । सहृदयचर्वणास्पदमित्यर्थः ॥ ३ ॥

वाच्येत्यादिकारिकायां 'शब्दालङ्कारा' इत्यादिवृत्तौ चार्थान्तरभ्रमः स्यादित्यतो विवक्षितमर्थं व्याचष्टे—**वाच्यञ्चेत्यादि** । प्रसङ्गाद्रसस्वरूपं व्यवस्थापयिष्यन्नादौ परमतान्युपन्यस्यति–**ननूक्तमित्यादि** । नन्विति शङ्काद्योतकं भट्टनायकाद्युक्तानां पूर्वपक्षत्वमगवमयति । कथमुक्तमित्यत्राह–'रस' इत्याद्य 'प्रधानमेवे'त्यन्तेन । **रस** इति । रत्यादिरूपः शृङ्गारादिरस इत्यर्थः । **यदेति** यदीत्यर्थे । **परेति** । सहृदयादन्येत्यर्थः । **ताटस्थ्यमिति** । सहृदयासम्बन्धित्वमित्यर्थः । ताटस्थ्ये सति स्वरसनीयत्वं न भवेदिति भावः । **न चेत्यादि** । 'असौ स्वगतत्वेन न च प्रतीयत' इति सम्बन्धः तत्प्रत्यायकाभावादिति भावः । स्वगतत्वेन प्रतीत्यभ्युपगमे बाधकञ्चाह—**स्वात्मेत्या-**

लोचनम्

स्वगतत्वेन रामादिचरितमयात्काव्यादसौ प्रतीयते । स्वात्मगतत्वेन च प्रतीतौ स्वात्मनि रसस्योत्पत्तिरेवाभ्युपगता स्यात् । सा चायुक्ता सीतायाः । सामाजिकं प्रत्यविभावत्वात् । कान्तात्वं साधारणं वासनाविकासहेतुर्विभावतायां प्रयोजकमिति चेत्—देवतावर्णनादौ तदपि कथम् । न च स्वकान्तास्मरणं मध्ये संवेद्यते । अलोकसामान्यानां च रामादीनां ये समुद्रसेतुबन्धादयो विभावास्ते कथं साधारण्यं भजेयुः । न चोत्साहादिमान् रामः स्मर्यते, अननुभूतत्वात् । शब्दादपि तत्प्रतिपत्तौ न रसो-

बालप्रिया

दि । **स्वात्मगतत्वेन** सहृदयात्मगतत्वेन । **स्वात्मनी**त्यादि । प्रतिपत्तुः स्वचित्तवृत्तेरेव प्रत्यक्षरूपा प्रतीतिर्भवति, तथा च तच्चित्तवृत्तेरुत्पत्तिरावश्यकी । विषयं विना प्रत्यक्षायोगादिति भावः । ननु रस उत्पद्यतामित्यत्राह–**सा चे**त्यादि । **सा च** स्वात्मनि रसोत्पत्तिश्च । पूर्वं रामादीति निर्देशात् **सीताया** इत्युक्तम् । सीतादेरित्यर्थः । **सामाजिकमि**ति । सहृदयमित्यर्थः । शङ्कते—**कान्तात्वमि**त्यादि । **साधारणं** सीतासाधारणम् । **वासनेति** । वासनायाः सहृदयगतरत्यादिवासनायाः यो विकास उद्बोधः तस्य हेतुर्यो विभावः तस्य भावस्तत्ता तस्यां वासनाविकासहेतुतारूपायां विभावतायामित्यर्थः । हेतुरिति पाठे हेतुः सन्निति योजना । **प्रयोजकमि**ति । तथा च सीतायाः मानुषीत्वेन सीतादौ सहृदयानां कान्तात्वसंवेदनं भवतीति भावः । प्रतिवक्ति—**देवते**त्यादि । **तदपि** कान्तात्वसंवेदनमपि । **कथमि**ति । देवतास्वमात्रादेर्नायिकात्वेन वर्णनस्थले देवतादावाराध्यत्वज्ञानेन प्रतिबन्धात्तत्र काम्यत्वरूपकान्तात्वसंवेदनं भवतीत्यर्थः । ननु काव्यादितः सीतादिज्ञाने जाते सहृदयानां स्वकान्तास्मरणं जायते, तेन च तद्वासनोद्बोध इत्यत आह—**न चे**त्यादि । **न संवेद्यते** सहृदयैर्न चानुभूयते । वीररसविषयेऽप्याह—**लोके**त्यादि । **अलोकसामान्यानां** लोकसाधारणभिन्नाम् । **विभावाः** सहृदयगतोत्साहविभावाः । **साधारण्यं** सर्वसाधारणत्वम् । **कथं भजेयुरि**ति । समुद्रसेतुबन्धनादौ उत्साहहेतुः स्वकृतिसाध्यत्वबुद्धिर्हृदयसंवादो वा सहृदयानां नोत्पद्येतेति भावः । रामादिगतोत्साहादिस्थायिज्ञानमपि सहृदयानां रसोद्बोधे हेतुस्तदपि दुर्घटमित्याह—**न चे**त्यादिना । ननु काव्यादनुभवरूपा तत्प्रतीतिर्भवतीत्यत्राह—**शब्दादि**त्यादि । **तत्प्रतीतौ** रामादिगतोत्साहप्रतीतौ । सत्यामपीति योजना । **न रसोपजनः** सहृदयानां न रसोत्पत्तिः । अत्र दृष्टान्तमाह—

१. प्रयोजकं अवच्छेदकमित्यर्थः । कान्तात्वेन वासनाविकासत्वेन कार्यकारणभावोऽनुभवसिद्ध इति भावः ।

२. कथमिति । कान्तात्वं नायिकात्वम् । प्रतिबन्धकाभावसहकृतं तज्ज्ञानं वासनाविकासं जनयेत् । अत्राराध्यत्वपूज्यत्वादिबुद्धेः प्रतिबन्धिकायाः सत्त्वेन न तं जनयितुं प्रभवतीति तात्पर्यम् ।

लोचनम्

पजनः। प्रत्यक्षादिव नायकमिथुनप्रतिपत्तौ। उत्पत्तिपक्षे च करुणस्योत्पादाद्दुःखित्वे करुणप्रेक्षासु पुनरप्रवृत्तिः स्यात्। तन्न उत्पत्तिरपि, नाप्यभिव्यक्तिः, शक्तिरूपस्य हि शृङ्गारस्याभिव्यक्तौ विषयार्जनतारतम्यप्रवृत्तिः स्यात्। तत्रापि किं स्वगतोऽभिव्यज्यते रसः परगतो वेति पूर्ववदेव दोषः। तेन न प्रतीयते नोत्पद्यते नाभिव्यज्यते काव्येन रसः। किं त्वन्यशब्दवैलक्षण्यं काव्यात्मनः शब्दस्य त्र्यंशताप्रसादात्[1]। तत्राभिधायकत्वं वाच्यविषयम्, भावकत्वं रसादिविषयम्, भोगकृत्त्वं सहृदयविषयमिति त्रयोंऽशभूता व्यापाराः। तत्राभिधाभागो यदि शुद्धः स्यात्तत्तन्त्रादिभ्यः[2] शास्त्रन्यायेभ्यः श्लेषाद्यलङ्काराणां को भेदः? वृत्तिभेदवैचित्र्यं चाकिञ्चित्करम्। श्रुतिदुष्टादिव-

बालप्रिया

**प्रत्यक्षादि**त्यादि। प्रतिपत्ताविवेति सम्बन्धः दूषणान्तरमाह—**उत्पत्तिपक्षे** इत्यादि। सहृदयानामिति शेषः। **करुणप्रेक्षासु** करुणरसप्रधाननाट्येषु। **त**दिति। तस्मादित्यर्थः। **नाप्यभिव्यक्ति**रिति। **रस**स्येति शेषः। तस्य प्रागसिद्धत्वादिति भावः। पूर्वसिद्धमेव हि घटादिकं प्रदीपादिनाभिव्यज्यते। ननु रत्यादिरूपो रसः सूक्ष्मरूपेण सहृदयानामात्मनि वर्तत इत्यतः सिद्ध एवेत्यत्राह—**शक्ती**त्यादि। **शक्तिरूपस्य** वासनात्मकसूक्ष्मरूपेण स्थितस्य। **शृङ्गारस्य** रतेः। शृङ्गारपदं वीरादेरुपलक्षकम्। **अभिव्यक्तौ** सहृदयहृदयेऽभिव्यक्त्यङ्गीकारे। **विषये**ति। **विषयो** रत्यादिविषयः कान्तादिः अभिव्यक्त्युपाय इति यावत्। तस्य **अर्जने** सम्पादने **तारतम्यप्रवृत्तिः** तरतमभावेन प्रवृत्तिः **स्या**दिति। यथा अन्धकारस्थघटादेरधिकाधिकाभिव्यक्त्यै तदुपायभूतालोकस्याधिकाधिकस्यार्जने जनानां प्रवृत्तिस्तथा वासनात्मतया अन्तःस्थितस्य रत्यादेरधिकाधिकाभिव्यक्त्यै तदुपायभूतस्य विभावादेरधिकाधिकस्यानुभवरूपार्जने सहृदयानां प्रवृत्तिः प्रसज्येतेत्यर्थः। अधिकाधिकविषयानुभवे वासनाया झटित्यभिव्यक्तिसम्भवादिति भावः। दूषणान्तरमाह—**तत्रापी**त्यादि। **तत्रापि** अभिव्यक्तिपक्षेऽपि। उपसंहरति—**तेने**त्यादि। **न प्रतीयत** इत्यादि। सहृदयात्मनीति शेषः। स्वमतमाह—**किन्त्वि**त्यादि। **अन्यशब्दे**ति। शास्त्रीयादिशब्देत्यर्थः। **शते**ति। त्रयोंऽशा यस्य तस्य भावस्तत्ता, तस्याः प्रसादात्सम्बन्धादित्यर्थः। त्र्यंशतां दर्शयति—**तत्रे**त्यादि। **वाच्ये**ति। वाच्योऽर्थो विषयो यस्य तत्, वाच्यार्थसम्बन्धीत्यर्थः। **रसादी**ति। रसो रत्यादिः, आदिपदेन विभावादेर्ग्रहणम्। भावकत्वभोगकृत्त्वयोः स्वरूपं दर्शयिष्यंस्तदङ्गीकारे युक्तिं तावदाह—**तत्रे**त्यादि। **अभिधाभागः** अभिधायकत्वांशः। **शुद्धः** इतरव्यापारानालिङ्गितः। **तत्** तर्हि। **तन्त्रादिभ्य** इति। तन्त्रं नामानेकार्थबोधेच्छया पदस्यैकस्य सकृदुच्चारणम्। **को भेद** इति। शास्त्रे

१. त्र्यंशतेति। इदं शब्दरूपश्रव्यकाव्याभिप्रायेण दृश्यरूपे नाट्ये तु शब्दाभावेनाभिधायकत्वाभावात्।

२. आदिपदादेकशेषादेर्ग्रहणम्।

लोचनम्

जनं च किमर्थम्? तेन रसभावनाख्यो द्वितीयो व्यापारः; यद्वशादभिधा विलक्षणैव। तच्चैतद्भावकत्वं नाम रसान् प्रति यत्काव्यस्य तद्विभावादीनां साधारणत्वापादनं नाम। भाविते च रसे तस्य भोगः योऽनुभवस्मरणप्रतिपत्तिभ्यो विलक्षण एव द्रुतिविस्तरविकासात्मा रजस्तमोवैचित्र्यानुविद्धसत्त्वमयनिजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणः परब्रह्मास्वादसविधः। स एव च प्रधानभूतोंऽशः सिद्धरूप इति। व्युत्पत्तिर्नामाप्रधानमेवे'ति।

बालप्रिया

"हलन्त्यमि"ति पाणिनीयसूत्रादाविव "सर्वदो माधव" इत्यादिश्लेषस्थलेऽपि तन्त्रादिनानेकार्थबोधसम्भवादुभयोर्भेदो न स्यादित्यर्थः। वृत्तीति। वृत्तिभेदाः उपनागरिकाद्याः। तेषां वैचित्र्यं च अकिञ्चित्करमिति। काव्ये अभिधामात्रस्वीकारे व्यर्थमित्यर्थः। किमर्थमिति। निष्फलमित्यर्थः। तेनेति। उक्तहेतुनेत्यर्थः। रसभावनेति। रत्यादिभावनेत्यर्थः। द्वितीय इति। अभिधानन्तरभावीत्यर्थः। यद्वशादिति। भावकत्वव्यापाररूपप्रयोजकादित्यर्थः। विलक्षणैवेति। शास्त्रीयादिशब्दगताभिधातो विजातीयैवेत्यर्थः। तच्चेत्यादि। रसान् प्रति एतद्भावकत्वं नाम तदिति सम्बन्धः। काव्यस्येति। नाट्यस्याप्युपलक्षणम्। तद्विभावादीनामिति। तस्य रत्यादिरूपरसस्य विभावादित्रयाणां चेत्यर्थः। साधारणत्वापादनमिति। साधारणीकरणमित्यर्थः। सामान्येनोपस्थापकत्वमिति यावत्। भाविते उक्तभावनाविषयीकृते। रसे रामादिगतरत्यादौ। तस्येति। भावितस्य रत्यादेरित्यर्थः। भोग इति। साक्षात्कारविशेष इत्यर्थः। सहृदयानां भवतीति शेषः। तथाच भावनोपनीतो रामादिगतरत्यादिः स्थायी सहृदयैर्भुज्यमानो रसः रत्यादेः साधारण्येन प्रतीत्या च न ताटस्थ्यादिदोष इति भावः। भोगस्वरूपमाह—य इत्यादि। अनुभवेति। अनुभवस्मरणरूपाः याः प्रतीपत्तयो लौकिक्यः प्रतीतयस्ताभ्य इत्यर्थः। 'द्रुतिविस्तारविकासात्मे'त्यत्र हेतुमाह—रज इत्यादि। वैचित्र्यानुविद्धेति पाठः। "रजस्तमोनुवेधवैचित्र्यबलादि" त्यभिनवभारत्यामुक्तेः। रजस्तमसोर्वैचित्र्येण विशेषेण अनुविद्धं यत्सत्त्वं तन्मयी। प्राचुर्यार्थे मयट्। निजचित्स्वभावा स्वात्मचैतन्यरूपा च या निर्वृतिः लोकोत्तरानन्दः, तस्यां विश्रान्तिः विगलितवेद्यान्तरतया स्थितिः तल्लक्षण इत्यर्थः। अत्र रजसो गुणस्यानुवेधेन द्रुतिः तमसो विस्तारः सत्वस्य विकास इति विवेकः। उक्तं हि काव्यप्रकाशसङ्केते—"यदा हि रजसो गुणस्य द्रुतिः तमसो विस्तारः सत्वस्य विकासः तदा भोगः स्वरूपं लभत" इति। उक्तरीत्या भोगस्यात्मानन्दविषयकत्वादाह—परेति। स एवेति। उक्तविधभोग एवेत्यर्थः। सिद्धरूप इति। चिदानन्दरूपस्यात्मनः सिद्धरूपत्वादिति भावः। व्युत्पत्तिरिति। प्रतिपत्तॄणां

## लोचनम्

अत्रोच्यते—रसस्वरूप एव तावद्विप्रतिपत्तयः प्रतिवादिनाम्। तथाहि-पूर्वावस्थायां यः स्थायी स एव व्यभिचारिसम्पातादिना प्राप्तपरिपोषोऽनुकार्यगत एव रसः। नाट्ये तु प्रयुज्यमानत्वान्नाट्यरस इति केचित्। प्रवाहधर्मिण्यां चित्तवृत्तौ चित्तवृत्तेः चित्तवृत्त्यन्तरेण कः परिपोषार्थः? विस्मयशोकक्रोधादेश्च क्रमेण तावन्न परिपोष इति नानुकार्ये रसः। अनुकर्तरि च तद्भावे लयाद्यननुसरणं स्यात्। सामाजिकगते वा

## बालप्रिया

चतुर्वर्गोपायव्युत्पत्तिरित्यर्थः। इतीति। इति भट्टनायकोक्तमिति सम्बन्धः।

**रसस्वरूप एवेति।** रसपदार्थ एवेत्यर्थः। विभिन्नाः प्रतिपत्तयो **विप्रतिपत्तयः** विभिन्नानि मतानि। **तथाहीति**। नाट्यस्थले विप्रतिपत्तीरादौ विवृणुत इत्यर्थः। तत्र ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, कटाक्षादिभिरनुभावैः प्रतीतियोग्यः कृतः, उत्कण्ठादिभिर्व्यभिचारिभिः परिपोषितो रामादावनुकार्ये रसः, नटे तु रामादिरूपतानुसन्धानवशादारोप्यमाणस्सामाजिकानां चमत्कारकारीति भट्टलोल्लटादिमतमादौ दर्शयति—**पूर्वेत्यादि**। **पूर्वावस्थायामिति**। अप्राप्तपरिपोषावस्थायामित्यर्थः। **यः स्थायीति**। स्थायित्वेन व्यपदिश्यमानो यो रत्यादिरित्यर्थः। 'स एव प्राप्तपरिपोषो रस' इति सम्बन्धः। रसः रसपदार्थः। स **चानुकार्यगत** एवेति। अनुकार्यरामादावेवोत्पद्यमानो वर्तत इत्यर्थः। अनेनानुकर्तरि तदारोप इति दर्शितम्। तस्मान्नाट्यरसा इति भरतोक्तनाट्यरसशब्दार्थमाह—**नाट्य** इत्यादि। नाट्यस्य नाट्यसम्बन्धी वा रसो नाट्यरस इति व्युत्पत्तिरिति भावः। मतमिदं दूषयित्वा प्रकारान्तरेण वदतां श्रीशङ्कुकादीनां मतं दर्शयति—**प्रवाहेत्यादि**। **चित्तवृत्तौ** रत्यादिचित्तवृत्तौ। **प्रवाहधर्मिण्यां** तत्तत्कारणवशेन पुनः पुनरुत्पद्यमानायां नश्यन्त्यां च सत्यामिति हेतुगर्भम्। **चित्तवृत्तेः** रत्यादिस्थायिचित्तवृत्तेः। **चित्तवृत्त्यन्तरेण** उत्कण्ठादिव्यभिचारिणा। **परिपोषार्थः क** इति। परिपोषरूपं फलं न भवतीत्यर्थः। अतो व्यभिचारिभिः परिपोषस्य कथनमनुपपन्नमिति भावः। विपर्ययश्चास्तीत्याह—**विस्मयेत्यादि**। **क्रमेण** कालक्रमेण। **न परिपोष** इति। किन्त्वपचय एवेति भावः। यथोक्तं काव्यप्रकाशसङ्केते—"इष्टवियोगजो महान् शोकः क्रमेण शाम्यति, न तु दृढीभवति क्रोधोत्साहरतयश्च निजनिजकारणोद्भूता अपि कालवशादमर्षस्थैर्यसेवाविपर्ययेऽपचीयन्त" इति। **इतीति** हेतौ। **नानुकार्ये रस** इति। अनुकार्यरामादिगतो रस इत्युक्तपक्षो न युक्त इत्यर्थः। तर्हि अनुकर्तृगतोऽस्त्वित्यत्राह—**अनुकर्तरीत्यादि**। **अनुकर्तरि** नटे। तद्भावे रससत्वे सति। **लयादीति**। लयो नाम नृत्तगीतवाद्यानामेकतानतारूपं साम्यं रसस्य नटे सिद्धत्वेन तदुपयोगिलयाद्यनुसरणं न स्यादित्यर्थः। तर्हि सामाजिकतोऽस्त्वित्यत्राह—

लोचनम्

कश्चमत्कारः ? प्रत्युत करुणादौ दुःखप्राप्तिः । तस्मान्नायं पक्षः । कस्तर्हि ? इहान-न्त्यान्नियतस्यानुकारो न शक्यः, निष्प्रयोजनश्च विशिष्टताप्रतीतौ ताटस्थ्येन व्युत्प-त्त्यभावात् ।

तस्मादनियतावस्थात्मकं स्थायिनमुद्दिश्य विभावानुभावव्यभिचारिभिः संयुज्यमा-नैरयं रामः सुखीति स्मृतिविलक्षणा स्थायिनि प्रतीतिगोचरतयास्वादरूपा प्रतिपत्तिरनु-कर्त्रालम्बना नाट्यैकगामिनी रसः । स च न व्यतिरिक्तमाधारमपेक्षते । किं त्वनुका-र्याभिन्नाभिमते नर्तके आस्वादयिता सामाजिक इत्येतावन्मात्रमदः । तेन नाट्य एव

बालप्रिया

**सामाजिके**त्यादि । तद्भावे इत्यनुषज्यते । **कश्चमत्कार** इति । रामादेरिव सामा-जिकस्यापि रत्यादिरूपरसोत्पत्तौ चमत्कारो न जायेतेति भावः । **दुःखप्राप्ति**रिति । स्यादिति शेषः । **नायं पक्ष** इति । उक्तः पक्षो न युक्त इत्यर्थः । **कस्तर्ही**ति । पक्ष इत्यनुषज्यते । प्रश्नस्योत्तरं वक्तुमुपक्रममाण आह—**इहे**त्यादि । **आनन्त्या**-दिति । तत्तद्गतस्य रत्यादिभावस्य मन्दतममन्दतरमन्दमध्यमत्वादिभेदेनासंख्यत्वा-दित्यर्थः । **नियतस्ये**ति । निश्चितैकावस्थाविशिष्टस्येत्यर्थः । स्थायिन इति शेषः । **अनुकारो न शक्य** इति । स्थायिन आनन्त्यान्नियतैकावस्थत्वेन ज्ञातुमशक्यत्वादिति भावः । कथञ्चित्तत्सम्भवेऽप्याह—**निष्प्रयोजनश्चे**त्यादि । अनुकार इत्यनुषज्यते । निष्प्रयोजनत्वे हेतुमाह—**विशिष्टते**त्यादि । स्थायिनो रामादिव्यक्तिविशेषवृत्तित्ववै-शिष्ट्यमवबुध्य नटेन तदनुकारे क्रियमाणे तथैव सामाजिकानां प्रतीत्या तस्य तटस्थ-त्वेन चतुर्वर्गोपायव्युत्पत्तेरनुदयादित्यर्थः । अनेन स्थाय्यनुकारो रस इति पक्षोऽप्य-युक्त इति दर्शितम् ।

स्वमतमाह—**तस्मा**दित्यादि । 'स्थायिनमुद्दिश्य संयुज्यमानै'रिति सम्बन्धः । स्थायिप्रतीतिमुद्दिश्य नटेन प्रयुज्यमानैरित्यर्थः । **विभावे**ति । तैर्लिङ्गैरित्यर्थः । प्रति-पत्तिरित्यनेनास्य सम्बन्धः । **अयं रामः सुखी**ति । रामोऽयं सीताविषयकरतिमा-नित्यर्थः । सामाजिकानां चित्रतुरगन्यायेन नटे रामादिबुद्धिर्जायते । इतीत्यस्य प्रति-पत्तिरित्यनेन सम्बन्धः । **स्थायिनि प्रतीतिगोचरतये**ति । स्थायिनः प्रतीतिविष-यत्वेन हेतुनेत्यर्थः । वस्तुसौन्दर्यादिति भावः । **आस्वादरूपे**ति । चमत्कारिचर्वणा-रूपेत्यर्थः । **प्रतिपत्ति**रिति । सामाजिकानामनुमितिरित्यर्थः । **अनुकर्त्रालम्बने**ति । अयमित्यनेन नटस्य विषयीकरणादनुकर्तृविषयिकेत्यर्थः । **स चे**ति । तथाविधस्था-यिप्रतीतिरूपो रसश्चेत्यर्थः । **व्यतिरिक्त**मिति । वक्ष्यमाणादन्यमित्यर्थः । **अनुका-र्याभिन्नाभिमते** अनुकार्यरामाद्यभेदेन गृहीते । **नर्तक** इति । अस्तीति शेषः । तथा-विधप्रतीतिरूपरसस्य नर्तकविशेष्यकत्वान्नर्तके विशेष्यतासम्बन्धेन सत्वात्स एवाश्रय इत्यर्थः । **आस्वादयिता** आस्वादरूपप्रतीतेः समवायेनाश्रयः । **नाट्य एवे**ति ।

लोचनम्

रसः, नानुकार्यादिष्विति केचित् ।

अन्ये तु—अनुकर्तरि यः स्थाय्यवभासोऽभिनयादिसामग्र्यादिकृतो भित्ताविव हरितालादिना अश्वावभासः, स एव लोकातीततयास्वादापरसंज्ञया प्रतीत्या रस्यमानो रस इति नाट्याद्रसा नाट्यरसाः । अपरे पुनर्विभावानुभावमात्रमेव विशिष्टसामग्र्या समर्प्यमाणं तद्विभावनीयानुभावनीयस्थायिरूपचित्तवृत्त्युचितवासनानुषक्तं स्वनिर्वृतिचर्वणाविशिष्टमेव रसः । तन्नाट्यमेव रसाः । अन्ये तु शुद्धं विभावम्, अपरे शुद्धमनुभावम्, केचित्तु स्थायिमात्रम्, इतरे व्यभिचारिणम्, अन्ये तत्संयोगम्, एकेऽनुकार्यम्, केचन सकलमेव समुदायं रसमाहुरित्यलं बहुना ।

काव्येऽपि च लोकनाट्यधर्मिस्थानीयेन स्वभावोक्तिवक्रोक्तिप्रकारद्वयेनालौकिकप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव रसवार्ता । अस्तु वात्र नाट्याद्विचित्ररूपा रसप्रतीतिः; उपायवैलक्षण्यादियमेव तावदत्र सरणिः । एवं स्थिते प्रथमपक्ष

बालप्रिया

नाट्ये इति छेदः । रसस्योक्तरीत्या नटाश्रयकत्वेन नाट्याश्रयकत्वमित्यर्थः ।

रामादिगतस्थायिनोऽनुकारे नटे स्थाय्यवभासो मिथ्याज्ञानरूपः सामाजिकानां जायते, स एव चमत्कारकारी रस इति केचित्तन्मतमाह—**अन्य** इत्यादि । 'अश्वावभास इवे'त्यन्वयः । **स एवे**ति । अवभासमानः स्थाय्येवेत्यर्थः । **रस्यमान** इति । विषयीक्रियमाण इत्यर्थः । **नाट्याद्रसा** इति । स्थाय्यवभासस्य नाट्यहेतुकत्वादिति भावः । मतान्तरमाह—**अपर** इत्यादि । **विभावानुभावमात्रमेवे**ति । रस इत्यनेनास्य सम्बन्धः । कथमित्यत्राह—**विशिष्टे**त्यादि । **विशिष्टसामग्र्या** भावकत्वविशिष्टया नाट्यादिसामग्र्या । **समर्प्यमाणमि**ति । सामाजिकेष्विति शेषः । **तदि**ति । ताभ्यां विभवानुभवाभ्यां क्रमाद्विभावनीया अनुभावनीया च या रत्यादिस्थायिरूपचित्तवृत्त्युचिता वासना सामाजिकगता तदनुषक्तं तत्सम्बद्धम् । **स्वे**ति । स्वस्य सामाजिकस्य निर्वृतिरूपा या चर्वणा तद्विशिष्टं तद्विषयभूतम् । **नाट्यमे**वेति । विभवानुभवयोर्नटनयोग्यत्वरूपनाट्यत्वादिति भावः । 'शुद्धं विभावमि'त्यादौ सर्वत्र रसमाहुरित्यस्य सम्बन्धो बोध्यः ।

**लोके**त्यादि । "स्वभावाभिनयोपेतं न नास्त्रीपुरुषाश्रयं नाट्यं लोकधर्मि" "स्वरालङ्कारसंयुक्तमस्वस्थपुरुषाश्रयं नाट्यं नाट्यधर्मि" तत्स्थानीयेन तत्तुल्येन । **स्वभावे**ति । वक्रोक्तिशब्दार्थः पूर्वमुक्तः । **द्वयेने**ति तृतीयार्थो वैशिष्ट्यं शब्देऽन्वेति । द्वयेनेत्यलौकिकत्वे हेतुर्वा। **अलौकिके**ति । अलौकिको लौकिकशब्दव्यतिरिक्तः प्रसन्नो मधुर ओजस्वी च यः शब्दः, तेन समर्प्यमाणानां विभावादीनां योगादित्यर्थः। **इयमेवे**ति । उक्तप्रकारैवेत्यर्थः । **रसवार्ता** रसपदार्थः तत्प्रतीतिर्वा । **अस्तु वात्रे**ति । **अत्र** काव्ये । **विचित्ररूपा** विजातीया । अत्र हेतुमाह—**उपाये**ति । **इयमि**ति । वक्ष्यमा-

लोचनम्

एवैतानि दूषणानि, प्रतीतेः स्वपरगतत्वादिविकल्पनेन । सर्वपक्षेषु च प्रतीतिरपरिहार्या रसस्य । अप्रतीतं हि पिशाचवदव्यवहार्यं स्यात् । किं तु यथा प्रतीतिमात्रत्वेनाविशिष्टत्वेऽपि प्रात्यक्षिकी आनुमानिकी आगमोत्था प्रतिभानकृता योगिप्रत्यक्षजा च प्रतीतिरुपायवैलक्षण्यादन्यैव, तद्वदियमपि प्रतीतिश्चर्वणास्वादनभोगापरनामा भवतु । तन्निदानभूताया हृदयसंवादाद्युपकृताया विभावादिसामग्र्या लोकोत्तररूपत्वात् । रसाः प्रतीयन्त इति ओदनं पचतीतिवद्व्यवहारः, प्रतीयमान एव हि रसः । प्रतीतिरेव विशिष्टा रसना । सा च नाट्ये लौकिकानुमानप्रतीतेर्विलक्षणा; तां च प्रमुखे उपायतया सन्दधाना । एवं काव्ये अन्यशाब्दप्रतीतेर्विलक्षणा, तां च प्रमुखे उपायतयापेक्षमाणा ।

तस्मादनुत्थानोपहतः पूर्वपक्षः । रामादिचरितं तु न सर्वस्य हृदयसंवादीति महत्साहसम् । चित्रवासनाविशिष्टत्वाच्चेतसः । यदाह—"तासामनादित्वं आशिषो नित्यत्वा-

बालप्रिया

णरूपेत्यर्थः । **अत्र** काव्ये । **प्रथमपक्ष** इति । भट्टलोल्लटोक्तोत्पत्तिपक्ष इत्यर्थः । विकल्पनेन दूषणानीति सम्बन्धः । **सर्वे**ति । सहृदयानां रसप्रतीतिः सर्वपक्षेऽप्यपरिहार्येत्यर्थः । विपक्षे बाधकमाह—**अप्रतीत**मित्यादि । **अप्रतीतं** विशिष्याज्ञातं वस्तु । **अव्यवहार्यम्** व्यवहारायोग्यम् । अत्र दृष्टान्तः—**पिशाचव**दिति । पिशाचो हि विशिष्याज्ञातत्वेनात्रायं पिशाच इत्यादि लोकव्यवहारानर्हः । **किन्त्वि**ति । रसप्रतीतेः विशेषोऽस्तीत्यर्थः । **प्रतीती**त्यादि । प्रतीतित्वरूपसामान्यधर्मेणाविशेषेऽपीत्यर्थः । **आगमोत्थे**ति । शब्दजन्येत्यर्थः । **अन्यैवे**ति । परस्परभिन्नैवेत्यर्थः । **तद्वदि**त्यादि । रसप्रतीतिरपि ताभ्यो भिन्नैवेत्यर्थः । तत्पर्यायानाह—**चर्वणे**ति । **भवत्वि**त्यभ्युपगमे । **ओदन**मित्यादि । पक्वस्तण्डुलो ओदनपदार्थ इति तद्व्यवहारो यथा औपचारिकः, तथेत्यर्थः । उक्तार्थे हेतुमाह—**प्रतीयमान एवे**ति । प्रतीतिविषयताविशिष्ट एवेत्यर्थः । **विशिष्टे**ति । विभावादिविशिष्टस्थायिविषयिकेत्यर्थः । **सा च नाट्य** इति । नाट्यजन्या रसप्रतीतिश्चेत्यर्थः । **लौकिके**ति । लौकिकी या अनुमानेन प्रतीतिः धूमादिलिङ्गकवह्न्याद्यनुमितिः, तद्विलक्षणेत्यर्थः । **तां** लौकिकानुमानप्रतीतिम् । **प्रमुखे** आदौ । **सन्दधाना** अपेक्षमाणा । **एवं काव्य** इति । सा चेत्यनुषज्यते । **अन्यशाब्दप्रतीतेः** । लौकिकवैदिकादिशब्दजन्यप्रतीतेः । **ता**मिति । अन्यशाब्दप्रतीतिमित्यर्थः । **उपायतया अपेक्षमाणे**ति । लौकिकानुमानशब्दप्रमाणव्युत्पन्नसहृदयस्यैव सहृदयस्य रसप्रतीतिर्भवतीति भावः ।

अथ भट्टनायकोक्तं खण्डयति—**तस्मा**दित्यादि । **पूर्वपक्षः** रसो न प्रतीयत इत्याद्युक्तः । अलोकसामान्यानामित्याद्युक्तं मनसिकृत्याह—**रामादी**ति । **इतीति** ।

१. योगसू., ४, ९; १०.

**लोचनम्**

त् । जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्" इति । तेन प्रतीतिस्तावद्रसस्य सिद्धा । सा च रसनारूपा प्रतीतिरुत्पद्यते । वाच्यवाचकयोस्तत्राभिधादिविविक्तो व्यञ्जनात्मा ध्वननव्यापार एव । भोगीकरणव्यापारश्च काव्यस्य रसविषयो ध्वननात्मैव, नान्यत्किञ्चित् । भावकत्वमपि समुचितगुणालङ्कारपरिग्रहात्मकमस्माभिरेव वितत्य वक्ष्यते । किमेतदपूर्वम् ? काव्यं च रसान् प्रति भावकमिति यदुच्यते,

**बालप्रिया**

इत्युक्तमित्यर्थः । **चित्रे**ति । नानाविधेत्यर्थः । तथाच लोकोत्तरचरितेष्वपि सहृदयानां हृदयसंवादो भवत्येवेति भावः । **यदाहे**ति । योगसूत्रकार इति शेषः । 'जाती'त्यादिसूत्रानन्तरं 'तासामि'त्यादिसूत्रपाठो दृश्यते । जातीत्यादिसूत्रे वासनानामिति पदस्यानुषङ्गः । भोजराजेन सूत्रद्वयमिदमित्थं विवृतम्—इह नानायोनिषु भ्रमतां संसारिणां काञ्चिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन पुनस्तामेव योनिं प्रतिपद्यते, तदा तस्यां पूर्वानुभूतायां योनौ तथाविधशरीरादिव्यञ्जकापेक्षया या वासनाः प्रकटीभूता आसंस्तास्तथाविधव्यञ्जकाभावात्तिरोहिताः पुनस्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति । जातिदेशकालव्यवधानेऽपि तासां स्वानुरूपस्मृत्यादिफलसाधने आनन्तर्यं नैरन्तर्यं कुतः ? स्मृतिसंस्कारयोरेकरूपत्वात् । तथा ह्यनुष्ठीयमानकर्मणश्चित्तसत्वे वासनारूपः संस्कारः समुत्पद्यते । स च स्वर्गनरकादीनां फलानामङ्कुरीभावः, कर्मणां वा यागादीनां शक्तिरूपतयावस्थानं, कर्तुर्वा तथाविधभोग्यभोक्तृत्वरूपं सामर्थ्यं, संस्कारात्स्मृतिः स्मृतेश्च सुखदुःखोपभोगः, तदनुभवाच्च पुनरपि संस्कारस्मृत्यादयः । भवत्वानन्तर्यं कार्यकारणभावश्च वासनानां; यदा तु प्रथममेवानुभवः प्रवर्तते, तदा किं वासनानिमित्त उत निर्निमित्त इति शङ्कां व्यपनेतुमाह—'तासां' वासनानां 'अनादित्व' मस्ति, कुतः ? 'आशिषो नित्यत्वात्' सेयमाशीर्महामोहरूपा सदैव सुखसाधनानि मे भूयासुर्मा कदाचन तैर्मे वियोगोऽभूदिति यः सङ्कल्पविशेषो वासनानां कारणं तस्याः नित्यत्वादित्यर्थः । एतदुक्तं भवति—कारणस्य सन्निहितत्वादनुभवसंस्कारादीनां कार्याणां प्रवृत्तिः केन वार्यत इति । **तेने**ति । पूर्वोक्तहेतुनेत्यर्थः । **सा चे**त्यादि । रसनारूपा रसप्रतीतिः सहृदयानामुत्पद्यत इत्यर्थः । **वाच्यवाचकयो**रिति । काव्यस्येत्यर्थः । **तत्र** रसप्रतीतौ । **व्यञ्जनात्मा** व्यञ्जकत्वरूपः । **भोगी**ति । भट्टनायकोक्तो भोगकृत्वव्यापारश्चेत्यर्थः । भावकत्वमिति यदुक्तं तदप्यस्मदभ्युपगतमेव, परन्तु गुणालङ्कारशालित्वमेव तत्; यतस्तेनैव काव्यं सहृदयानां रसभावकं रसचर्वणोत्पादकमित्याह—**भावकत्वमपी**ति । काव्यस्येत्यनुषङ्गः । **समुचिते**ति । तत्तद्रसादिसमुचितगुणालङ्कारशालित्वमित्यर्थः । **किमेतदपूर्वमि**ति । एवदपूर्वं नेत्यर्थः । किञ्च भावकत्वस्वीकारे रसो नोत्पद्यत इति भवदीयप्रतिज्ञाया भङ्गोऽप्यापतति इत्याह—**काव्यं चे**त्यादि । 'भावकमित्युच्यते यदि'ति सम्बन्धः । **तत्रे**ति । तद्वचने सतीत्यर्थः ।

लोचनम्

तत्र भवतैव भावनादुत्पत्तिपक्ष एव प्रत्युज्जीवितः। न च काव्यशब्दानां केवलानां भावकत्वम्, अर्थापरिज्ञाने तदभावात्। न च केवलानामर्थानाम्, शब्दान्तरेणार्प्यमाणत्वे तदयोगात्। द्वयोस्तु भावकत्वमस्माभिरेवोक्तम्। 'यत्रार्थः शब्दो वा तमर्थं व्यङ्क्तः' इत्यत्र। तस्माद्व्यञ्जकत्वाख्येन व्यापारेण गुणालङ्कारौचित्यादिकयेतिकर्तव्यतया काव्यं भावकं रसान् भावयति, इति त्र्यंशायामपि भावनायां करणांशे ध्वननमेव निपतति। भोगोऽपि न काव्यशब्देन क्रियते, अपि तु घनमोहान्ध्यसङ्कटतानिवृत्तिद्वारेणास्वादापरनाम्नि अलौकिके द्रुतिविस्तरविकासात्मनि भोगे कर्तव्ये लोकोत्तरे ध्वननव्यापार एव मूर्धाभिषिक्तः। तच्चेदं भोगकृत्त्वं रसस्य ध्वननीयत्वे सिद्धे दैवसिद्धम्।

बालप्रिया

'भवतैव प्रत्युज्जीवित' इत्यन्वयः। अत्र हेतुः—**भावनादिति**। काव्यस्य रसोत्पादकत्वाङ्गीकारादित्यर्थः। **शब्दान्तरेणेति**। लौकिकवाक्येनेत्यर्थः। शब्दार्थमयं काव्यं गुणालङ्कारसाहित्येन सहृदयानां रसचर्वणां जनयतीत्याह—**तस्माद्व्यञ्जकत्वाख्येने**त्यादि। यागादिर्धर्मो यजेतेत्यादिवैदिकवाक्येन स्वर्गादिकमुद्दिश्य पुरुषं प्रति विधीयते। तथाहि—यजेतेत्यत्रास्त्यंशद्वयम्—यजिधातुः प्रत्ययश्च। प्रत्ययेऽप्यस्त्यंशद्वयमाख्यातत्वं लिङ्त्वं च। उभाभ्यामप्यंशाभ्यां भावनैवोच्यते। भावना नाम भवितुर्भवनानुकूलो व्यापारः। सा चार्थी शाब्दीति द्विविधा। आर्थी तु प्रयोजनेच्छाजनितक्रियाविषयकव्यापाररूपा आख्यातत्वेन रूपेणोच्यते। सा ह्यंशत्रयमपेक्षते—साध्यं साधनमितिकर्तव्यतां च। किं केन कथं भावयेदिति। तत्र साध्याकाङ्क्षायां स्वर्गादिकमिष्टं साध्यत्वेन। साधनाकाङ्क्षायां धात्वर्थो यागादिः करणत्वेन, इतिकर्तव्यताकाङ्क्षायां प्रयाजादिक्रियाकलापश्च इतिकर्तव्यतात्वेन तस्यां भावनायामन्वेतीति मीमांसकाः प्राहुः। तथा च यजेतेत्यादिवैदिकवाक्यं स्वर्गमुद्दिश्य पुरुषं प्रति विधायकत्वेन यथा भावकं यागेन करणेन प्रयाजादीतिकर्तव्यतया स्वर्गार्थिनः स्वर्गं भावयति, तथा काव्यं भावकं व्यञ्जकत्वव्यापारेण करणेन गुणालङ्कारौचित्यादिरूपया इतिकर्तव्यतया सहृदयस्य रसं भावयतीत्यर्थः। इतिशब्दः प्रकारवाची, कर्तव्यता नाम क्रिया। कर्तव्यतायाः प्रकार इतिकर्तव्यता, उपकारकमिति यावदिति बोध्यम्। **त्र्यंशायामिति**। साध्याद्यंशत्रयवत्यामित्यर्थः। **भावनायामिति**। रसभावनायामित्यर्थः। **करणांशे** साधनांशे। कारणांशे इति च पाठः। **भोगोऽपीत्यादि**। 'न क्रियते' इति सम्बन्धः। नञि काकुः। क्रियत एवेत्यर्थः। न न क्रियत इति वा पाठः। विशेषमाह—**अपि त्वित्यादि**। 'अपि तु भोगे कर्तव्ये लोकोत्तरो ध्वननव्यापार एव मूर्धाभिषिक्त' इति सम्बन्धः। **घनेति**। घनं निबिडं यन्मोहरूपमान्ध्यमज्ञानं तेन या सङ्कटता आनन्दांशस्यावृतत्वं तस्या निवृत्तिर्भञ्जनं तद्द्वारेणेत्यर्थः। **अलौकिके** लौकिकसुखानुभवविलक्षणे। **भोग** इति। भग्नानन्दांशावरणकविभावादिसंवलितरत्यादिस्थाय्यवच्छिन्नात्मचैतन्यसाक्षात्कार इत्यर्थः। **कर्तव्ये** जननीये।

**रसभावतदाभासतत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया विभिन्नरूपा व्यवस्थितास्तत्र काव्ये ध्वनिरिति व्यपदेशः ।**

लोचनम्

रस्यमानतोदितचमत्कारानतिरिक्तत्वाद्भोगस्येति । सत्त्वादीनां चाङ्गाङ्गिभाववैचित्र्यस्यानन्त्याद्द्रुत्यादित्वेनास्वादगणना न युक्ता । परब्रह्मास्वादसब्रह्मचारित्वं चास्त्वस्य रसास्वादस्य । व्युत्पादनं च शासनप्रतिपादनाभ्यां शास्त्रेतिहासकृताभ्यां विलक्षणम् । यथा रामस्तथाऽहमित्युपमानातिरिक्तां रसास्वादोपायस्वप्रतिभाविजृम्भारूपां व्युत्पत्तिमन्ते करोतीति कमुपालभामहे । तस्मात्स्थितमेतत्—अभिव्यज्यन्ते रसाः प्रतीत्यैव च रस्यन्त इति । तत्राभिव्यक्तिः प्रधानतया भवत्वन्यथा वा । प्रधानत्वे ध्वनिः, अन्यथा रसाद्यलङ्काराः । तदाह—**मुख्यमर्थ**मिति । **व्यवस्थिता** इति । पूर्वोक्तयुक्तिभिर्विभागेन व्यवस्थापितत्वादिति भावः ॥ ४ ॥

बालप्रिया

**मूर्धाभिषिक्तः** प्रधानहेतुः । काव्यं तु तदाश्रयतया सहकारीति भावः । **तच्चेद्**मिति । भवदुक्तमित्यर्थः । **रस्ये**ति । रस्यमानतया हेतुना उदितो यश्चमत्कारः चमत्कारात्मकः साक्षात्कारः तदनतिरिक्तत्वात्तदभिन्नत्वादित्यर्थः । द्रुतिविस्तारेत्यादिपूर्वोक्तं मनसि कृत्याह—**सत्वादीना**मित्यादि । **अङ्गाङ्गिभावे**ति । न्यूनाधिकतेत्यर्थः । **आनन्त्यादि**ति । असंख्यत्वादित्यर्थः । **द्रुत्यादित्वेने**ति । द्रुतित्वादिरूपेणेत्यर्थः । **न युक्ते**ति । कारणस्यानन्त्यात्कार्यभूतचित्तवृत्तीनामपि आनन्त्यसम्भवादिति भावः । भट्टनायकोक्तं कञ्चिदंशमभ्युपगच्छति-**परे**ति । व्युत्पत्तिर्नामाप्रधानमिति तदुक्तं मनसिकृत्याह—**व्युत्पादनं चे**त्यादि । काव्यस्येति शेषः । **शासने**ति । शास्त्रेण शासनमितिहासेन प्रतिपादनं ताभ्यां विलक्षणमित्यर्थः । वैलक्षण्यं दर्शयन्नाह—**यथे**त्यादि । अहमित्यस्यानन्तरं वर्तेय इति शेषः । रामेणेव मयानुष्ठातव्यमित्यर्थः । **इती**त्यादि । इति यदुपमानमित्याकारिका या उपमितिः सादृश्यधीः शास्त्रेतिहासाभ्यां क्रियमाणा तदतिरिक्तामित्यर्थः । उक्तोपमितिमात्रं न, किन्तु ततोऽधिकामिति यावत् । **रसे**ति । रसास्वादोपायभूता स्वस्य प्रतिपत्तुः या प्रतिभा तस्या विजृम्भो विकासस्तद्रूपामित्यर्थः । **करोती**ति । काव्यमिति शेषः । पुनः पुनः काव्यपरिशीलने हि रसास्वादोपायस्वप्रतिभाविकासो भवति । **अन्ते करोती**त्यनेनादावुक्तोपमितिरूपां व्युत्पत्तिं च करोतीति ज्ञाप्यते । उपसंहरति—**तस्मादि**त्यादि । इत्येतत्स्थितमिति सम्बन्धः । **अभिव्यज्यन्ते रसा** इति । अभिव्यक्तिविषयताविशिष्टस्थायिनो रसपदार्था इत्यर्थः । अभिव्यक्तिर्घटप्रदीपन्यायेनेति वक्ष्यते । **प्रतीत्ये**त्यादि । प्रतीतिरूपैव रसनेत्यर्थः । **तत्राभिव्यक्तिः प्रधानतया भवत्वन्यथा वे**ति । **अन्यथा** अप्रधानतया । अप्रधानतया वा इति च पाठः ॥ ४ ॥

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ ५ ॥**

यद्यपि रसवदलङ्कारस्यान्यैर्दर्शितो विषयस्तथापि यस्मिन् काव्ये प्रधानतयान्योऽर्थो वाक्यार्थीभूतस्तस्य चाङ्गभूता ये रसादयस्ते रसादेरलङ्कारस्य विषया इति मामकीनः पक्षः । तद्यथा चाटुषु प्रेयोलङ्कारस्य वाक्या-

लोचनम्

**अन्यत्रे**ति । रसस्वरूपे वस्तुमात्रेऽलङ्कारतायोग्ये वा । **मे मतिरि**त्यन्यपक्षं दूष्यत्वेन हृदि निधायाभीष्टत्वात्स्वपक्षं पूर्वं दर्शयति—**तथापी**ति । स हि परदर्शितो विषयो भाविनीत्या नोपपन्न इति भावः । **यस्मिन् काव्ये** इति स्पष्टत्वेनासङ्गतं वाक्यमित्थं योजनीयम्—यस्मिन् काव्ये ते पूर्वोक्ता रसादयोऽङ्गभूता वाक्यार्थीभूतश्चान्योऽर्थः, चशब्दस्तुशब्दस्यार्थे; तस्य काव्यस्य सम्बन्धिनो ये रसादयोऽङ्गभूतास्ते रसादेरलङ्कारस्य रसवदाद्यलङ्कारशब्दस्य विषयाः; स एवालङ्कारशब्दवाच्यो भवति योऽङ्गभूतः, न त्वन्य इति यावत् । अत्रोदाहरणमाह—**तद्यथे**ति । तदित्यङ्गत्वम् । यथात्र वक्ष्यमाणोदाहरणे, तथान्यत्रापीत्यर्थः । भामहाभिप्रायेण चाटुषु प्रेयोलङ्कारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्त इतीदमेकं वाक्यम् । भामहेन हि गुरुदेवनृपतिपुत्रविषयप्री-

बालप्रिया

कारिकायामन्यत्रेत्यस्य रसादिभ्योऽन्यस्मिन्नित्यर्थः । तथाविधो वाक्यार्थस्त्रिविधो भवतीत्याह—**रसस्वरूप** इत्यादि । **अलङ्कारतायोग्य** इति । उपमादावित्यर्थः । उपमादेः प्राधान्येन ध्वन्यमानत्वेऽलङ्कारत्वाभावाद्योग्य इत्युक्तम् । **मे मतिरिती**ति । मे मतिरित्यनेनेत्यर्थः । **अन्यपक्ष**मिति । वक्ष्यमाणं पक्षान्तरमित्यर्थः । **तथापी**ति । इदं प्रतीकधारणम् । भावार्थमाह—**स ही**त्यादि । **असङ्गत**मिति । तस्य चाङ्गभूता इत्यत्र तत्पदेन काव्यस्यैव परामृश्यतया यथाश्रुते तदर्थस्य तन्निरूपिताङ्गत्वस्य रसादावसम्भवेनासङ्गतार्थकमित्यर्थः । **ते** इत्यादि । ते **रसादयोऽङ्गभूता** इत्यस्य पूर्ववाक्येऽपि सम्बन्ध इति भावः । ते इत्यस्य व्याख्यानम्—**पूर्वोक्ता** इति । रसभावेत्यादिकारिकानिर्दिष्टा इत्यर्थः । **अन्यः** रसादिभ्योऽन्यः । **च शब्द** इति । 'तस्य चे'ति च शब्द इत्यर्थः । तस्येत्यस्य व्याख्या—**काव्यस्ये**ति । 'सम्बन्धिन' इति षष्ठ्यर्थकथनम् । तथाच तस्येति षष्ठ्यन्तार्थस्य काव्यसम्बन्धित्वस्य रसादावन्वयान्नासङ्गतार्थकत्वमिति भावः । **अङ्गभूता** इति । वाक्यार्थस्यान्यस्याङ्गभूता इत्यर्थः । रसादेरित्यस्य विवरणम्—**रसवदादी**ति । फलितमाह—**स एवे**त्यादि । चाटुष्वित्यादिग्रन्थं व्याख्यातुमुपक्रमते—**भामहे**त्यादि । चाटुष्वित्यादि दृश्यन्त इत्यन्तमेकं वाक्यमिति च पाठः । विवृणोति—**भामहेने**त्यादि । **गुर्वि**ति । गुर्वादिविषयिका या प्रीतिर्भक्तिवात्सल्यादिपदवाच्या, तस्याः स्ववाचकेन विभावादिद्वारेण वा वर्णनमित्यर्थः ।

लोचनम्

तिवर्णनं प्रेयोलङ्कार इत्युक्तम् । तत्र प्रेयानलङ्कारो यत्र स प्रेयोलङ्कारोऽलङ्करणीय इहोक्तः । न त्वलङ्कारस्य वाक्यार्थत्वं युक्तम् । यदिवा वाक्यार्थत्वं प्रधानत्वम् । चमत्कारकारितेति यावत् । उद्भटमतानुसारिणस्तु भङ्क्त्वा व्याचक्षते—**चाटुषु** चाटुविषये वाक्यर्थत्वे चाटूनां वाक्यार्थत्वे प्रेयोलङ्कारस्यापि विषय इति पूर्वेण सम्बन्धः । उद्भटमते हि भावालङ्कार एव प्रेय इत्युक्तः, प्रेम्णा भावानामुपलक्षणात् । न केवलं रसवदलङ्कारस्य विषयः यावत्प्रेयःप्रभृतेरपीत्यपिशब्दार्थः । रसवच्छब्देन प्रेयःशब्देन च सर्वे एव रसवदाद्यलङ्कारा उपलक्षिताः, तदेवाह—**रसादयोऽङ्गभूता दृश्यन्त** इति उक्तविषय इति शेषः ।

बालप्रिया

**इत्युक्तमि**ति ।

> "प्रेयोगृहागतं कृष्णमवादीद्विदुरो यथा ।
> अद्य या मम गोविन्द जाता त्वयि गृहागते ॥
> कालेनैषा भवेत्प्रीतिः तवैवागमनात्पुनः" ॥

इति ग्रन्थेन दर्शितमित्यर्थः । **तत्र** तद्वचने सती । चाटुस्थले 'किं हास्येने'त्यादौ वर्ण्यमाननरपतिप्रभावादेरेव वाक्यार्थता न तु प्रेयोरूपालङ्कारस्येत्यतः तत्पदं बहुव्रीहित्वाश्रयेण व्याचष्टे—**प्रेयानि**त्यादि । **इहे**ति । चाटुष्वित्यादिवाक्य इत्यर्थः । **वाक्यार्थत्वं** मुख्यतया वाक्यप्रतिपाद्यत्वम् । प्रेयानलङ्कारः प्रेयोलङ्कार इति यथाश्रुतार्थाभिप्रायेणाह—**यदि वे**ति । प्रधानत्वमेव विवृणोति—**चमदि**ति । अहो नरपतेः प्रभावो येनैवं दुर्दशां रिपुस्त्रीजनोऽनुभवतीति प्रभावालम्बितायाः प्रीतेः रिपुस्त्रीजनवृत्तान्तविषयकत्वाच्चमत्कारित्वं बोध्यम् । **भङ्क्त्वे**ति । वाक्यं भित्वेत्यर्थः । व्याख्यानं दर्शयति—**चाटुष्वि**त्यादि । **वाक्यार्थत्वे** वाक्यप्रतिपाद्यत्वे । फलितमाह—**चाटूनां वाक्यार्थत्व** इति । चाटुर्नाम श्लाघ्यमानोऽर्थो वर्ण्यमाननरपतिप्रभावादिः । अपि शब्दो भिन्नक्रम इत्याह—**प्रेयोलङ्कारस्यापी**ति । प्रेयोरूपालङ्कारस्यापीत्यर्थः । कुत्रास्य सम्बन्ध इत्यत आह—**विषय** इत्यादि । एकवचनान्ततयानुषक्तविषयपदेन सम्बन्ध इत्यर्थः । चाटुरिति शेषः, चाटुकाव्यमित्यर्थः । **प्रेय इत्युक्त** इति । प्रेयोलङ्कारत्वेनोक्त इत्यर्थः । प्रेयस्वीत्युक्त इति च पाठः । अत्र हेतुमाह—**प्रेम्णे**त्यादि । **प्रेम्णा** प्रेयश्शब्दार्थघटकरतिरूपप्रेम्णा । **उपलक्षणा**दिति । यथोक्तमुद्भटेन—

> "रत्यादिकानां भावानामनुभावादिसूचनैः ।
> यत्काव्यं बध्यते सद्भिः तत्प्रेयस्वदुदाहृत"मिति ॥

रत्यादिकानामित्यादिशब्देनान्येषां स्थायिनां व्यभिचारिणां सात्विकानां च, अनुभावादीत्यादिशब्देन विभावव्यभिचारिस्वशब्दानां च ग्रहणमत्र भावानामलङ्कारतेति च तद्व्याख्याता प्रतीहारेन्दुराजः । प्रेयोलङ्कारस्यापीत्यपिशब्दार्थमाह—**न केवलमि**त्यादि । **रसवच्छब्देने**ति । यद्यपि रसवदलङ्कारस्येति पूर्ववृत्तिग्रन्थस्थरसवच्छब्देने-

र्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते।

स च रसादिरलङ्कारः शुद्धः सङ्कीर्णो वा। तत्राद्यो यथा—

किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं
केयं निष्करुण प्रवासरुचिता केनासि दूरीकृतः।
स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः॥

इत्यत्र करुणरसस्य शुद्धस्याङ्गभावात्स्पष्टमेव रसवदलङ्कारत्वम्। एवमेवंविधे विषये रसान्तराणां स्पष्ट एवाङ्गभावः।

लोचनम्

**शुद्ध इति**। रसान्तरेणाङ्गभूतेनालङ्कारान्तरेण वा न मिश्रः, आमिश्रस्तु सङ्कीर्णः। स्वप्नस्यानुभूतसदृशत्वेन भवनमिति हसन्नेव प्रियतमः स्वप्नेऽवलोकितः, । **न मे प्रयास्यसि पुनरिति**। इदानीं त्वां विदितशठभावं बाहुपाशबन्धान्न मोक्ष्यामि। अत एव **रिक्तबाहुवलय** इति। स्वीकृतस्य चोपालम्भो युक्त इत्याह—**केयं निष्करुणेति**। **केनासीति**। गोत्रस्खलनादावपि न मया कदाचित्खेदितोऽसि। **स्वप्नान्तेषु** स्वप्नायितेषु सुप्तप्रलपितेषु पुनःपुनरुद्भूततया बहुष्विति वदन्युष्माकं सम्बन्धी रिपुस्त्रीजनः

बालप्रिया

त्यर्थः। **प्रेयश्शब्देनेति**। प्रेयोलङ्कारस्यापीत्यपिशब्दसहितप्रेयश्शब्देन चेत्यर्थः। **रसाद्यलङ्कारा** इति। रसवदाद्यलङ्कारा इति च पाठः। **तदेवेति**। उक्ताभिप्रायादेवेत्यर्थः। पूरयति—**उक्तविषय** इति। चाटुस्थल इत्यर्थः। गुर्वादिविषयकप्रीतिवर्णनमेव प्रेयोलङ्कारः, चाटुस्थले तस्य प्राधान्येऽपि रसादयस्तत्प्रीतेस्तद्विषयनरपतिप्रभावादेर्वा अङ्गभूताश्चेति भामहमतानुरोधेन पङ्क्त्यर्थः। रतिहासादितत्तद्भाववर्णनं भावालङ्कारः, स एव प्रेयोलङ्कारः; चाटुस्थले 'किं हास्येने'त्यादौ चाटुवाक्यार्थः, तत्र रसवदलङ्कारः भावालङ्कारश्च स्त इत्युद्भटमतानुरोधेन पङ्क्त्यर्थ इति सारार्थः।

वृत्तौ 'स चे'त्यादि। 'अलङ्कारः स रसादिरि'ति योजना। चशब्दो वाक्यालङ्कारे। वेति। वा शब्दः समुच्चये। 'उदाहरति किमिति' इति पाठः क्वचिन्नास्ति। स्वप्ने दृष्टं प्रियतमं प्रत्याह—किमित्यादि। **हास्येन किमिति**। हासेन साध्यमिदानीं नास्तीत्यर्थः। हासवत्त्वेन दर्शनस्योपपत्तिमाह—**स्वप्नस्येत्यादि**। **न मे** इत्यादि। त्वमितः परं मत्तो न यास्यसीत्यर्थः। अस्य भावमाह—**इदानीमित्यादि**। विदितः शठभावो यस्य तम्। "गूढविप्रियकृच्छठ" इति दशरूपके। उक्तार्थे गमकमाह—**अत एवेति**। **स्वीकृतस्येति**। स्वीयजनस्येत्यर्थः, कर्मणि षष्ठी। 'इयं प्रवासरुचिता के'ति सम्बन्धः। केति। अनुचितेत्यर्थः। केनेत्यादेर्भावमाह—**गोत्रेत्यादि**।

लोचनम्

प्रियतमे विशेषेणासक्तः कण्ठग्रहो येन तादृश एव सन् बुद्ध्वा शून्यवलयाकारीकृतबाहुपाशः सन् तारं मुक्तकण्ठं रोदितीति । अत्र शोकस्थायिभावेन स्वप्नदर्शनोद्दीपितेन करुणरसेन चर्व्यमाणेन सुन्दरीभूतो नरपतिप्रभावो भातीति करुणः शुद्ध एवालङ्कारः । न हि त्वया रिपवो हता इति यादृगनलङ्कृतोऽयं वाक्यार्थस्तादृगयम्, अपि तु सुन्दरतरीभूतोऽत्र वाक्यार्थः, सौन्दर्यं च करुणरसकृतमेवेति । चन्द्रादिना वस्तुना यथा वस्त्वन्तरं वदनाद्यलङ्क्रियते तदुपमितत्वेन चारुतयावभासात्, तथा रसेनापि वस्तु वा रसान्तरं वोपस्कृतं सुन्दरं भाति इति रसस्यापि वस्तुन इवालङ्कारत्वे को विरोधः ?

ननु रसेन किं कुर्वता प्रकृतोऽर्थोऽलङ्क्रियते । तर्हि उपमयापि किं कुर्वत्यालङ्क्रियेत । ननु तयोपमीयते प्रस्तुतोऽर्थः । रसेनापि तर्हि सरसीक्रियते सोऽर्थ इति स्वसंवेद्यमेतत् । तेन यत्केचिदचूचुदन्—'अत्र रसेन विभावादीनां मध्ये किमलङ्क्रियते' इति तदनभ्युपगमपराहतम्; प्रस्तुतार्थस्यालङ्कार्यत्वेनाभिधानात् । अस्यार्थस्य भूयसा लक्ष्ये

बालप्रिया

बहुष्विति बहुवचनार्थविवरणम् । 'वः' इत्यस्य व्याख्यानम्—**युष्माकं सम्बन्धी**ति । 'इत्यत्र करुणरसस्य शुद्धस्याङ्गभावादि'ति वृत्तावुक्तं विवृणोति—**अत्रे**त्यादिना । 'अत्र नरपतिप्रभावः तथाविधेन करुणरसेन सुन्दरीभूतो भाती'ति सम्बन्धः । **चर्व्यमाणे**नेति । सहृदयचर्वणाविषयेणेत्यर्थः । **अलङ्कार** इति । वर्णनीयनरपतिप्रभावरूपवाक्यार्थोपस्कारकत्वेनालङ्कार इत्यर्थः । उक्तमुपपादयति—**न ही**त्यादि । 'इत्ययमनलङ्कृतो वाक्यार्थो यादृक्, अयं तादृङ्न ही'त्यन्वयः । **सौन्दर्यं चे**ति । वाक्यार्थसौन्दर्यं चेत्यर्थः । करुणरसकृतमेवेत्युक्तं सदृष्टान्तमुपपादयति—**चन्द्रादि**नेत्यादिना **को विरोध** इत्यन्तेन । **अलङ्क्रियत** इति । "तामिन्दुसुन्दरमुखी"मित्यादिकाव्ये इति शेषः ।

शङ्कते—**नन्वि**ति । प्रतिबन्द्याह—**तर्ही**ति । उत्तरमाह—**नन्वि**ति । समानमुत्तरमाह—**रसेनापी**ति । **सरसीक्रियते** रसवान् क्रियते । **स्वसंवेद्यं** सहृदयानुभवसिद्धम् । **तेने**ति । वक्ष्यमाणहेतुनेत्यर्थः । **तदि**ति । चोद्यमित्यर्थः । **अनभ्युपगमे**ति । विभावादीनामलङ्कार्यत्वानभ्युपगमेन हेतुना पराकृतमित्यर्थः । तर्हि कोऽलङ्कार्य इत्यत्राह—**प्रस्तुतार्थस्ये**त्यादि । **प्रस्तुतार्थस्य** विवक्षितस्य प्रकृतार्थस्य । 'किं हास्येने'त्यादौ वर्णितेन रिपुस्त्रीजनवृत्तान्तेन तद्धेतुभूतप्रियतमविनाशप्रत्यायनद्वारा नरपतिप्रभावः प्रत्याय्यत इति स एव प्रस्तुतार्थः । एवमन्यत्राप्यवधेयम् । **अभिधानादि**ति । वृत्तिकारेण प्रदर्शनादित्यर्थः ।

---

१. 'किं हास्येने'ति पद्ये प्रधानतया ध्वन्यमानायां रतौ स्वसंविधानेनाभिव्यक्तः करुणरसोऽङ्गभावाद्रसवदलङ्कार इति आलोककृताऽभिहितम्, समर्थितञ्च लोचनकृता । केचनाभिदधते—यथा कटककुण्डलादयोऽङ्गोपस्करणद्वारा अङ्गिनमात्मनमुपस्कुर्वन्तो

सङ्कीर्णो रसादिरङ्गभूतो यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।

**लोचनम्**

सद्भाव इति दर्शयति—**एवमिति** । यत्र राजादेः प्रभावख्यापनं तादृश इत्यर्थः ।

**क्षिप्त इति** । कामिपक्षेऽनादृतः, इतरत्र धुतः । अवधूत इति न प्रतीप्सितः

**बालप्रिया**

क्षिप्त इत्याद्यमरुकस्थम् । सः त्रिपुरदाहकालीनः । **शाम्भवः** शम्भुसम्बन्धी ।

लोकेऽलङ्कृतिव्यपदेशभाजां भवन्ति, तथाऽनुप्रासोपमादयो वाच्यवाचकरूपाङ्गोपस्कारद्वाराऽङ्गिभूतरसमुपस्कुर्वाणा एव शास्त्रेऽलङ्कारतया व्यवह्रियन्त इति रसादीनां साक्षादुपकारकत्वेन वाच्यवाचकाङ्गद्वारोपस्कारकत्वाभावेन तेषामलङ्कारव्यवहारो निर्युक्तिक एवेति ।

अन्ये त्वाचक्षते—चिरन्तनव्यवहारानुरोधेन रसोपकारकत्वमात्रात् गुणीभूतरसेषु भाक्तोऽलङ्कारव्यवहारः कथञ्चिदभ्युपगन्तव्य इति ।

अपरे ब्रुवते—रसोपकारकत्वमात्रेण मुख्यमलङ्कारत्वं, तच्च रसादिष्वप्यस्त्येव । रूपकोपमादिषु अजागलस्तनन्यायेन मुधैव वाच्याद्युपधानाभिधानम् इति ।

काव्यप्रकाशकृद्भिरपि 'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्' इत्यलङ्कारलक्षणमभ्यधायि । एतन्मतेऽलङ्कारविशिष्टशब्दार्थज्ञानत्वेन चमत्कारत्वेन कार्यकारणभावः फलति । तथा च परिष्कुर्वन्त्यलङ्कारलक्षणम्—समवायसम्बन्धावच्छिन्नचमत्कृतित्वावच्छिन्नजन्यतानिरूपितसमवायसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नजनकतानिरूपितविषयित्वसम्बन्धावच्छिन्नशब्दार्थान्यतरनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्त्वमलङ्कारत्वमिति । व्यङ्ग्यविशिष्टशब्दार्थज्ञानत्वेन चमत्कारत्वेन कार्यकारणभावाभ्युपगमात् व्यङ्ग्यभिन्नेत्यपि लक्षणे निवेशयन्ति । चमत्कारत्वावच्छिन्नं प्रति रसविशिष्टशब्दार्थज्ञानत्वेन कार्यकारणभावाभ्युपगमे प्रमाणाभावात् रसज्ञानत्वेनैव च तत्स्वीकारात् व्यङ्ग्ये रसभिन्नत्वविशेषणदानं नात्युचितम् । प्रकाशे पञ्चमोल्लासे 'कश्चिद् ब्रूयादि' त्येवमुक्त्या रसादीनामलङ्कारत्वे स्वानभिसन्धिः सुस्पष्टमुदीरितः । सुधासागरमनीषाकारैः पण्डितभीमसेननरसिंहठक्कुरादिभिश्च तत्रत्यो ग्रन्थ इत्थमेव व्याख्यातः । गुणीभूतरसस्थले तादृशरसविशिष्टशब्दार्थज्ञानत्वेन चमत्कारत्वेन कार्यकारणभावोऽस्ति प्रधानीभूतरसस्थले च तादृशरसविशिष्टशब्दार्थज्ञानत्वेन चमत्कारं प्रत्यसौ नास्तीति निर्युक्तिकं कः श्रद्दधीत । रसोपकारकत्वमात्रेणालङ्कारत्वव्यवहारो गुणेष्वपि अतिव्याप्नुवन् कथङ्कारं निराकार्य इति गुणीभूतरसादीनां गुणीभूतव्यङ्ग्यत्वमेव नालङ्कारत्वम् इति काव्यप्रकाशादिप्रामाणिकनिबन्धरहस्यमप्यत्रानुसन्धेयम् ।

आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे ईर्ष्याविप्रलम्भस्य श्लेषसहितस्याङ्गभाव इति, एवंविध एव रसवदाद्यलङ्कारस्य न्याय्यो विषयः। अत एव चेर्ष्याविप्रलम्भकरुणयोरङ्गत्वेन व्यवस्थानात्समावेशो न दोषः।

लोचनम्

प्रत्यालिङ्गनेन, इतरत्र सर्वाङ्गधूननेन विशरारूकृतः। साश्रुत्वमेकत्रेर्ष्यया अन्यत्र निष्प्रत्याशतया। कामीवेत्यनेनोपमानेन श्लेषानुगृहीतेनेर्ष्याविप्रलम्भो य आकृष्टस्तस्य श्लेषोपमासहितस्याङ्गत्वम्, न केवलस्य। यद्यप्यत्र करुणो रसो वास्तवोऽप्यस्ति तथापि स तच्चारुत्वप्रतीत्यै न व्याप्रियत इत्यनेनाभिप्रायेण श्लेषसहितस्येत्येतावदेवावोचत्, न तु करुणसहितस्येत्यपि। एतमर्थमपूर्वतयोत्प्रेक्षितं द्रढीकर्तुमाह—एवं विधएवेति। अत एवेति। यतोऽत्र विप्रलम्भस्यालङ्कारत्वं न तु वाक्यार्थता, अतो हेतोरित्यर्थः। न दोष इति। यदि ह्यन्यतरस्य रसस्य प्राधान्यमभविष्यन्न द्वितीयो रसः समाविशेत्। रतिस्थायिभावत्वेन तु सापेक्षभावो विप्रलम्भः, स च शोकस्थायिभावत्वेन निरपेक्षभावस्य करुणस्य विरुद्ध एव। एवमलङ्कारशब्दप्रसङ्गेन समावेशं प्र-

बालप्रिया

'शराग्निः वः दुरितं दहत्वि'ति सम्बन्धः। स कः? य आर्द्रः तत्कालभवः अपराधो यस्य सः। कामीव हस्तावलग्नः सन्। साश्रुणी नेत्रोत्पले यासां ताभिः। त्रिपुरयुवतिभिः क्षिप्त इत्याद्यन्वयः। तत्र क्षिप्तपदार्थमाह—कामीत्यादि। इतरत्रेति। शराग्निपक्षे इत्यर्थः। वृत्त्युक्तमेवाङ्गभावं स्वयं दर्शयति—कामीवेत्यादि। आकृष्टः स्फुटं व्यञ्जितः। तस्य ईर्ष्याविप्रलम्भस्य। 'श्लेषसहितस्ये'त्यस्य विवरणम्—श्लेषेत्यादि। अङ्गत्वमिति। त्रिपुररिपुप्रभावातिशयरूपवाक्यार्थं प्रत्यङ्गत्वमित्यर्थः। न केवलस्येति। तस्याङ्गत्वमित्यनयोरनुषङ्गः। करुणो रसोऽप्यस्तीति। तथा च तत्सहितस्येत्यपि वक्तव्यमिति भावः। स इति। करुण इत्यर्थः। तच्चारुत्वप्रतीत्यै विप्रलम्भचारुत्वप्रतीत्यै। न व्याप्रियत इति। करुणस्यात्र विप्रलम्भाङ्गत्वं नास्तीति भावः। 'अत एवे'त्येतद्व्याचष्टे—यत इत्यादि। वाक्यार्थतेति। अलङ्कार्यत्वेन प्राधान्यमित्यर्थः। अन्यतरस्य रसस्येति। विप्रलम्भकरुणयोरेकस्येत्यर्थः। प्राधान्यं समप्राधान्यम्। द्वितीय इति। तयोरेकस्मादपर इत्यर्थः। न समाविशेदिति। एकत्र काव्ये इति शेषः। अत्र हेतुमाह—रतीत्यादि। विषयोऽयं तृतीयोद्योते वक्ष्यते। 'रसे'त्यादिकारिका परिकरश्लोकः। तत्र सर्वासामलङ्कृतीनामित्यस्य

यत्र हि रसस्य वाक्यार्थीभावस्तत्र कथमलङ्कारत्वम्? अलङ्कारो हि चारुत्वहेतुः प्रसिद्धः; न त्वसावात्मैवात्मनश्चारुत्वहेतुः।

तथा चायमत्र संक्षेपः—

रसभावादितात्पर्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्॥

लोचनम्

साध्य एवंविध एवेति यदुक्तं तत्रैवकारस्याभिप्रायं व्याचष्टे—**यत्र हीति**। सर्वासामुपमादीनाम्।

अयं भावः—उपमादीनामलङ्कारत्वे यादृशी वार्ता तादृश्येव रसादीनाम्। तदवश्यमन्येनालङ्कार्येण भवितव्यम्। तच्च यद्यपि वस्तुमात्रमपि भवति, तथापि तस्य पुनरपि विभावादिरूपतापर्यवसानाद्रसादितात्पर्यमेवेति सर्वत्र रसध्वनेरेवात्मभावः। तदुक्तं **रसभावादितात्पर्यमिति। तस्येति**। प्रधानस्यात्मभूतस्य। एतदुक्तं भवति—उपमया यद्यपि वाच्योऽर्थोऽलङ्क्रियते, तथापि तस्य तदेवालङ्करणं यद्व्यङ्ग्यार्थाभिव्यञ्जनसामर्थ्याधानमिति वस्तुतो ध्वन्यात्मैवालङ्कार्यः। कटककेयूरादिभिरपि हि शरीरसमवायिभिश्चेतन आत्मैव तत्तच्चित्तवृत्तिविशेषौचित्यसूचनात्मतयालङ्क्रियते। तथाहि—अचेतनं

बालप्रिया

रसवदादीनामलङ्कृतीनामित्यर्थभ्रमः स्यादतो व्याख्याति—**उपमादीनामित्यादि**। उपमादीनां रसवदादीनां चेत्यर्थः।

'रसभावे'त्यादिकमवतारयिष्यन्नाह—**अयं भाव इत्यादि। यादृशी वार्तेति**। यो हेतुरित्यर्थः। स चान्योपस्कारः। **तच्चेति**। अलङ्कार्यं चेत्यर्थः। **वस्तुमात्रमिति**। यथा 'किं हास्येने'त्यादौ नरपतिप्रभावादि। **तस्येति**। वस्तुन इत्यर्थः। **रसध्वनेरिति**। रसभावादिध्वनेरित्यर्थः। 'किं हास्येने'त्यादौ वर्णनीयराजविषयकरतिभावो हि वक्तृगतस्तत्प्रभावविभावितः प्रधानभूतः। **उपमयेति**। उपमादिनेत्यर्थः। **तस्येति**। वाच्यार्थस्येत्यर्थः। **व्यङ्ग्यार्थेति**। रसादीत्यर्थः। वर्ण्यमानास्तत्तद्वाच्यार्था उपमाद्यलङ्कारैराहितातिशयाः कवितन्निबद्धान्यतरगतचित्तवृत्तिविशेषं स्फुटं व्यञ्जयन्ति क्वचिदर्थान्तरञ्चेति व्यङ्ग्याभिव्यञ्जनसामर्थ्याधानं वाच्यार्थस्योपमादिकर्तृकमलङ्करणमित्यर्थः। **ध्वन्यात्मेति**। ध्वनिरूप आत्मेत्यर्थः। उक्तार्थे लौकिकं दृष्टान्तं दर्शयति—**कटकेत्यादि। आत्मैव** न शरीरम्। कथमात्मालङ्क्रियत इत्यत आह—**तत्तदिति**। तत्तदात्मगता रागित्वादयो ये चित्तवृत्तिविशेषाः, तेषां यदौचित्यं तत्सूचनात्मतया तत्सूचनस्वभावकतया। तत्तदलङ्कारा ह्यस्येयं चित्तवृत्तिरुचितेति सूचयन्ति; यथा युवजनशरीरगता हारकटककुण्डलादयः तद्रागित्वस्यौचित्यं यतिशरीरगता दण्डकषायवस्त्रादयस्तद्वैराग्यस्यौचित्यं चेति तत्सूचकत्वेनेत्यर्थः। उक्तमुपपाद-

तस्माद्यत्र रसादयो वाक्यार्थीभूताः स सर्वः न रसादेरलङ्कारस्य विषयः; स ध्वनेः प्रभेदः, तस्योपमादयोऽलङ्काराः। यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थीभावे रसादिभिश्चारुत्वनिष्पत्तिः क्रियते, स रसादेरलङ्कारताया विषयः।

एवं ध्वनेरुपमादीनां रसवदलङ्कारस्य च विभक्तविषयता भवति। यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषय इत्युच्यते

लोचनम्

शवशरीरं कुण्डलाद्युपेतमपि न भाति, अलङ्कार्यस्याभावात्। यतिशरीरं कटकादियुक्तं हास्यावहं भवति, अलङ्कार्यस्यानौचित्यात्। न हि देहस्य किञ्चिदनौचित्यमिति वस्तुत आत्मैवालङ्कार्यः, अहमलङ्कृत इत्यभिमानात्। **रसादेरलङ्कारताया** इति व्यधिकरणषष्ठ्यौ, रसादेर्याऽलङ्कारता तस्याः स एव विषयः। एतदनुसारेणैव पूर्वत्रापि वाक्ये योज्यम्, रसादिकर्तृकस्यालङ्करणक्रियात्मनो विषय इति। **एवमि**ति। अस्मदुक्तेन विषयविभागेनेत्यर्थः। **उपमादीना**मिति। यत्र रसस्यालङ्कार्यता रसान्तरं चाङ्गभूतं नास्ति तत्र शुद्धा एवोपमादयः। तेन संसृष्ट्या नोपमादीनां विषयापहार इति भावः। **रसवदलङ्कारस्य** चेति। अनेन भावाद्यलङ्कारा अपि प्रेयस्व्यूर्जस्विसमाहिता गृह्य-

बालप्रिया

यति—**तथाही**त्यादि। **अलङ्कार्यस्याभावा**दिति। शवशरीस्याचेतनत्वादिति भावः। अनेन चेतन एवालङ्क्रियत इत्युक्तमुपपादितम्। **यतिशरीर**मित्यादि। कटकादयो हि रागित्वस्यौचित्यं सूचयन्ति। यतेरात्मनश्च रागित्वमनुचितमित्यतो यतिशरीरगताः कटकादयो हास्यावहा इत्यर्थः। तत्तच्चेतनशरीरगतैः कटककुण्डलादिभिः सूच्यस्य रागित्वादिचित्तवृत्तिविशेषस्य तत्तच्चेतनोचितत्वे तेषामलङ्कारता, अन्यथा हास्यावहतेति भावः। अनुभवरूपप्रमाणमप्याह—**अहमि**त्यादि। **व्यधिकरणषष्ठ्यावि**ति। न तु समानाधिकरणे तत्पदे इति भावः। व्याचष्टे—**रसादे**रिति। रसादिनिष्ठा या अलङ्कारता अलङ्क्रियाकर्तृत्वं रसादिकर्तृकालङ्क्रियेति यावत्। स एव तस्या विषय इति सम्बन्धः। स इति वृत्तिस्थस्यानुवादः, यत्रेत्यस्य प्रतिनिर्देशः तत्काव्यमित्यर्थः। **विषयः** आश्रयः। **पूर्वत्रे**ति। स सर्वो न रसादेरलङ्कारस्य विषय इति वाक्य इत्यर्थः। योजनामाह—**रसादी**ति। अस्मिन्वाक्येऽपि 'स' इति यत्रेत्यस्य प्रतिनिर्देशः। उपमादीनां रसवदादिविविक्तं विषयं दर्शयति—**यत्रे**त्यादि। **संसृष्ट्येति**। रसवदादिसंसृष्ट्येत्यर्थः। भावाद्यलङ्कारा इत्यस्यैव विवरणम्—**प्रेयस्व्यूर्जस्विसमाहिता** इति। समाहितादय इति च पाठः। भावस्यापराङ्गत्वे भावालङ्कारः, स एव प्रेयस्वी प्रेयानिति चोच्यते। रसाभासभावाभासयोरपराङ्गत्वे ऊर्जस्वी।

लोचनम्

न्ते । तत्र भावालङ्कारस्य शुद्धस्योदाहरणं यथा—

तव शतपत्रपत्रमृदुताम्रतलश्चरणश्चलकलहंसनूपुरकलध्वनिना मुखरः ।
महिषमहासुरस्य शिरसि प्रसभं निहितः कनकमहामहीध्रगुरुतां कथमम्ब गतः ॥

इत्यत्र देवीस्तोत्रे वाक्यार्थीभूते वितर्कविस्मयादिभावस्य चारुत्वहेतुतेति तस्याङ्गत्वाद्भावालङ्कारस्य विषयः । रसाभासस्यालङ्कारता यथा ममैव स्तोत्रे—

समस्तगुणसम्पदः सममलङ्क्रियाणां गणै-
र्भवन्ति यदि भूषणं तव तथापि नो शोभसे ।
शिवं हृदयवल्लभं यदि यथा तथा रञ्जयेः
तदेव ननु वाणि ते भवति सर्वलोकोत्तरम् ॥

अत्र हि परमेशस्तुतिमात्रं वाचः परमोपादेयमिति वाक्यार्थे शृङ्गाराभासश्चारुत्वहेतुः श्लेषसहितः । न ह्ययं पूर्णः शृङ्गारो नायिकाया निर्गुणत्वे निरलङ्कारत्वे च भवति ।

बालप्रिया

भावशान्तेरपराङ्गत्वे समाहित इति विवेकः । **शुद्धस्येति** । अलङ्कारान्तरेण अमिश्रस्येत्यर्थः ।

**तवेति** । हे अम्ब ! तव । **शतेत्यादि** । शतपत्रं पद्मं, तस्य पत्रमिव मृदु ताम्रं च तलमधोभागो यस्य सः । चलकलहंसतुल्यो नूपुरः तस्य ध्वनिना मुखरः सशब्दः । चरणः महिषाख्यस्य महासुरस्य । शिरसि प्रसभं, निहितः सन् । कनकमयो महांश्च यो महीध्रः पर्वतः सुमेरुः तस्य । कनकमयत्वोक्त्या गौरवाधिक्यं द्योत्यते । गुरुतां कथं गत इति सम्बन्धः । गुरुत्वप्राप्तिः महिषशिरोनिष्पीडनेन निश्चितेति भावः । **देवीस्तोत्र** इति । स्तूयमाने देवीप्रभावे तद्विषयकरतिभावे वेत्यर्थः । **वितर्केति** । कथंपदेन वितर्कादिकं गम्यते । यद्यप्यत्र वितर्कादेः शतपत्रेत्याद्युक्तोपमासंसृष्टत्वाच्छुद्धत्वं दुर्घटं, तथापि मृदुताम्रतल इत्येतावन्मात्रोक्तावपि वितर्कादेः सम्भवादुपमायास्तदङ्गत्वाभावात्तदसङ्कीर्णत्वरूपं शुद्धत्वं सुघटम् ।

**समस्तेति** । नायिकात्वमारोप्य स्ववाचं प्रत्युक्तिरियम् । ननु वाणि ! समस्तानां गुणानां माधुर्यादीनामथ च सौन्दर्यादीनां सम्पदः । अलङ्क्रियाणामनुप्रासोपमादीनामथ च कटकादीनाम् । गणैः समं सह । तव भूषणं भवन्ति यदि यद्यपि, तथापि त्वं नो शोभसे । तर्हि कथं शोभा भवतीत्यत्राह— **शिवमित्यादि** । त्वं हृदयवल्लभं सर्वेषामात्मत्वेन प्रियम् । शिवं परमेश्वरमथ च मङ्गलाकारं प्रियतमम् । **यथा तथा** यथा कयापि विधया । गुणालङ्कारसाहित्येनान्यथा वेत्यर्थः । **रञ्जयेः** गुणप्रतिपादनेन प्रसादयेः, अथ चानुरञ्जयेः । **यदि** तर्हि **तदेव** तदनुरञ्जनमेव । **ते सर्वलोकोत्तरं भूषणं** भवतीत्यर्थः । अत्र प्रतीयमानस्य शृङ्गारस्याभासत्वं वक्तृणोति—**न हीत्यादि** । **हि** यतः । नायिकाया निर्गुणत्वे निरलङ्कारत्वे च सति शृङ्गारः पूर्णो **न** भवति, अतोऽयं

तद्रूपमादीनां प्रविरलविषयता निर्विषयता वाभिहिता स्यात् । यस्मादचेतनवस्तुवृत्ते वाक्यार्थीभूते पुनश्चेतनवस्तुवृत्तान्तयोजनया यथाकथञ्चिद्भवितव्यम् । अथ सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो नासौ रसवदलङ्कारस्य विषय इत्युच्यते । तत् महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्व-

### लोचनम्

'उत्तमयुवप्रकृतिरुज्ज्वलवेषात्मकः' इति चाभिधानात् । भावाभासाङ्गता यथा—

स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु ।
लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु ॥

अत्र रौद्रप्रकृतीनामनुचितस्त्रासो भगवत्प्रभावकारणकृत इति भावाभासः । एवं तत्प्रशमस्याङ्गत्वमुदाहार्यम् । मे मतिरित्यनेन यत्परमतं सूचितं तद्दूषणमुपन्यस्यति—यदीत्यादिना । परस्य चायमाशयः—अचेतनानां चित्तवृत्तिरूपरसाद्यसम्भवात्तद्वर्णने रसवदलङ्कारस्यानाशङ्क्यत्वात्तद्विभक्त एवोपमादीनां विषय इति । एतद्दूषयति—तर्हीति । तस्माद्वचनाद्धेतोरित्यर्थः । नन्वचेतनवर्णनं विषय इत्युक्तमित्याशङ्क्य हेतुमाह—**यस्मादिति** । यथाकथञ्चिदिति विभावादिरूपतया । **तस्यामिति** । चेतनवृत्तान्तयोजनायाम् । **नीरसत्वमिति** । यत्र हि रसस्तत्रावश्यं रसवदलङ्कार इति परमतम् । ततो न रसवदलङ्कारश्चेन्नूनं तत्र रसो नास्तीति परमताभिप्रायान्नीरसत्वमुक्तम् । न त्वस्माकं रसवदलङ्काराभावे नीरसत्वम् , अपि तु ध्वन्यात्मभूतरसा-

### बालप्रिया

पूर्णो नेत्यर्थः । किन्त्वाभास इति भावः । **उत्तमयुवेति** । युवा च युवती च युवानावित्येकशेषोऽत्र बोध्यः । प्रकृते 'यथा तथा रञ्जये'रित्यनेन प्रतीयमाननायिकाया निर्गुणत्वादिकं दर्शितम् ।

**स** इति । **सः** भगवान् श्रीकृष्णः । **यस्येति** कर्तुः शेषत्वविवक्षया षष्ठी । **तत्तुल्येति** । भगवद्वर्णतुल्येत्यर्थः । **स्वेत्यादि** । दृश्यमानेष्विति शेषः । **इति भावाभास** इति । तत्रासस्य भगवत्प्रभावविभावितायां रतौ गुणीभावाद्भावाभास ऊर्जस्व्यलङ्कार इत्यर्थः । यदि त्वित्यादिग्रन्थेन गम्यमर्थमाह—**परस्येत्यादि** । **तद्वर्णन** इति । अचेतनवर्णन इत्यर्थः । **तदिति** । तद्वर्णनमित्यर्थः । **विभक्त** इति । रसवदलङ्कारविविक्त इत्यर्थः । तदेवेति योजना । वृत्तौ शङ्कते—'अथे'ति । 'तस्यामि'ति । चेतनवस्तुवृत्तान्तयोजनायामित्यर्थः । 'असा'विति । यत्रेत्यस्य प्रतिनिर्देशः । 'तन्महत'इति । 'तत्' तर्हि । 'महतः' भूयसः । नीरसत्वमभिहितं स्यादिति न स्वमतानुरोधेन, किन्तु परमतानुरोधेनेत्याह लोचने—**यत्र हीत्यादि** । **रस** इति । प्रधानवाक्यार्थ इति शेषः । **परेति** । भामहोद्भटादिमतमित्यर्थः । **अस्माकमिति** । मत इति

मभिहितं स्यात् । यथा—

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो
नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥

यथा वा—

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ।

लोचनम्

भावे, तादृक्च रसोऽत्रास्त्येव ।

तरङ्गेति। तरङ्गा एव भ्रूभङ्गा यस्याः । **विकर्षन्ती** विलम्बमानं बलादाक्षिपन्ती । **वसनमं**शुकम् । प्रियतमावलम्बननिषेधायेति भावः । बहुशो यत्स्खलितं येऽपराधा-स्तानभिसन्धाय हृदयेनैकीकृत्यासहमाना मानिनीत्यर्थः । अथ च मद्वियोगपश्चात्तापा-सहिष्णुस्तापशान्तये नदीभावं गतेति ।

तन्वीति । वियोगकृशाप्यनुतप्ता चाभरणानि त्यजति । **स्वकालो** वसन्तग्रीष्मप्रा-

बालप्रिया

शेषः। **तादृगिति**। ध्वन्यात्मभूत इत्यर्थः । **अत्रेति** । वक्ष्यमाणोदाहरणेष्वित्यर्थः ।

**तरङ्गेति**। 'असहना' सेयमुर्वशी । 'नदीरूपेण' नदीभावेनेति च पाठः । 'परिणता ध्रुव'मित्युत्प्रेक्षायाम् । इयं न नदी, किन्तु सा इति सम्भावयामीत्यर्थः । उक्तमुपपाद-यति—**तरङ्गेत्यादि** । तरङ्गादौ भ्रूभङ्गत्वाद्यारोपाद्रूपकम् । वसनमिवेत्युपमा । **संरम्भेण** कोपावेगेन शिथिलं शिथिलबन्धम् । 'यथे'ति । यत इत्यथः। तत इति शेषः। '**आविद्धं**' कुटिलम् । यद्वा यथाविद्धमित्येकं पदम् । कौटिल्यमनतिक्रम्येत्यर्थः । 'स्खलितमभि-सन्धाये'ति । नदीपक्षे शिलादिस्खलनं प्राप्येत्यर्थः । लोचने—**तरङ्गा इत्यादि** । एवं क्षुभितविहगश्रेणिरेव रशना यस्या इति बोध्यम् । **अपराधा इति** । ममेति शेषः । **मानिनीति** । कोपवतीत्यर्थः । **असहिष्णुरिति** । असहिष्णुत्वादिवेत्यर्थः ।

**तन्वीति** । अस्मात्पूर्वमियमिति वर्तते । '**इयं**' लता। '**चण्डी**' अतिकोपना । अत एव पादपतितं मामवधूय तिरस्कृत्य स्थिता । अत एव जातानुतापा । '**सा**' उर्वशी इव लक्ष्यते । एतदङ्गमुत्प्रेक्षात्रयं तन्वीत्यादिनोच्यते । तन्वीत्युभयसाधारणम् । इयं लता । मेघजालैरार्द्राः पल्लवा यस्यां तस्य भावः तत्ता, तया हेतुना । **अश्रुभिः** धौतः अधरो यस्याः सा इव । स्वकालविरहाद्विश्रान्तपुष्पोद्गमा इयमाभरणैः **शून्यैव** । नायिकाया आभरणत्यागमुपपादयति—**वियोगेति** । वियोगकार्श्यादनुतापाच्चेत्यर्थः ।

चिन्ता मौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥

यथा वा—

तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र कलिन्दशैलतनयातीरे लतावेश्मनाम् ।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः ॥

लोचनम्

यः । उपायचिन्तनार्थं मौनं, किमिति पादपतितमपि दयितमवधूतवत्यहमिति च चिन्तया मौनम् । **चण्डी** कोपना । एतौ श्लोकौ नदीलतावर्णनपरौ तात्पर्येण पुरूरवस उन्मादाक्रान्तस्योक्तिरूपौ ।

**तेषामिति** । हे भद्र ! तेषामिति ये ममैव हृदये स्थितास्तेषाम् । गोपवधूनां गोपीनां ये विलाससुहृदो नर्मसचिवास्तेषाम् । प्रच्छन्नानुरागिणीनां हि नान्यो नर्मसुहृद्भवति । राधायाश्च सातिशयं प्रेमस्थानमित्याह—राधासम्भोगानां ये साक्षाद्द्रष्टारः, कलिन्दशैलतनया यमुना तस्यास्तीरे लतागृहाणां क्षेमं कुशलमिति काक्वा प्रश्नः । एवं तं पृष्ट्वा गोपदर्शनप्रबुद्धसंस्कार आलम्बनोद्दीपनविभावस्मरणात्प्रबुद्धरतिभावमात्मगतमौत्सुक्यगर्भमाह द्वारकायतो भगवान् कृष्णः—स्मरतल्पस्य मदनशय्यायाः कल्पनार्थं मृदु सुकुमारं कृत्वा यश्छेदस्त्रोटनं स एवोपयोगः साफल्यम् । अथ च स्मरतल्पे यत्कल्पनं क्लृप्तिः स एव मृदुः सुकुमार उत्कृष्टश्छेदोपयोगस्त्रोटनफलं तस्मिन्विच्छिन्ने । मय्यनासीने का स्मरतल्पकल्पनेति भावः । अत एव परस्परानुरागनिश्चयगर्भमेवाह—**ते जाने** इति । वाक्यार्थस्यात्र कर्मत्वम् । **अधुना**

बालप्रिया

'मधुकृतां' भृङ्गाणां 'शब्दैर्विना' शब्दानामभावेन । इयं चिन्ता मौनमाश्रितेवेति । अत्र नायिकाया मौनं द्वेधा व्याचष्टे—**उपायेत्यादि** । उपायस्सङ्गमोपायः ।

**तेषामिति** । तेषामित्यनुभूतार्थकमित्याह—**य** इत्यादि । **गोपेति** । गोपदर्शनेन प्रबुद्धा उद्बुद्धाः संस्काराः लतावेश्माद्यनुभवजनिताः संस्कारा यस्य सः । प्रबुद्धेत्यादि त्रयमाहेतिक्रियाविशेषणम् । 'प्रबुद्धरतिभाव' इति च पाठः । रतिभावः गोपीविषयकः । **कल्पनार्थमिति** । निर्माणार्थमित्यर्थः । **मृदुकृत्वेति** । मृदुत्वाद्धेतोरित्यर्थः । अर्थान्तरं चाह—**अथ चेति** । **स्मरतल्प** इति । उत्तरीयादिकृत इति भावः । **क्लृप्तिरिति** । विकिरणमित्यर्थः । सुकुमार इत्यस्यैव विवरणम्—**उत्कृष्ट** इति । विच्छिन्नत्वमुपपादयति—**मयीति** । **अत एव** कथितोपयोगविच्छेदादेव । **परस्परेति** । स्वस्य गोपीनां च यः

इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपि चेतनवस्तुवृत्तान्तयोजनास्त्येव। अथ यत्र चेतनवस्तुवृत्तान्तयोजनास्ति तत्र रसादिरलङ्कारः। तदेवं सत्युपमादयो निर्विषयाः प्रविरलविषया वा स्युः। यस्मान्नास्त्येवासावचेतनवस्तुवृत्तान्तो यत्र चेतनवस्तुवृत्तान्तयोजना नास्त्यन्ततो विभाव-

लोचनम्

**जरठीभवन्तीति**। मयि तु सन्निहितेऽनवरतकथितोपयोगान्नेमे जराजीर्णताखिलीकारं कदाचिदवाप्नुवन्तीति भावः। विगलन्ती नीला त्विड्येषामित्यनेन कतिपयकालप्रोषितस्याप्यौत्सुक्यनिर्भरत्वं ध्वनितम्। एवमात्मगतेयमुक्तिर्यदि वा गाधं प्रत्येव संप्रधारणोक्तिः। बहुभिरुदाहरणैर्महतो भूयसः प्रबन्धस्येति यदुक्तं तत्सूचितम्। **अथेत्यादि**। नीरसत्वमत्र मा भूदित्यभिप्रायेणेति शेषः। ननु यत्र चेतनवृत्तस्य सर्वथा नानुप्रवेशः स उपमादेर्विषयो भविष्यतीत्याशङ्क्याह—**यस्मा**दित्यादि। **अन्तत** इति। स्तम्भपुलकाद्यचेतनमपि वर्ण्यमानमनुभावत्वाच्चेतनमाक्षिपत्येव तावत्, किमत्रोच्यते। अतिजडोऽपि चन्द्रोद्यानप्रभृतिः स्वविश्रान्तोऽपि वर्ण्यमानोऽवश्यं चित्तवृत्तिविभावतां स्य-

बालप्रिया

परस्परालम्बनोऽनुरागः तन्निश्चयगर्भमेवेत्यर्थः। तन्निश्चयाभावे वक्ष्यमाणमनुपपन्नं भवेत् गोपीनां पुरुषान्तररमणे तदुपयोगसम्भवादिति भावः। ते इत्यस्य लतावेश्मसम्बन्धिन इत्यर्थः। जरठीभवन्ति जीर्णीभवन्तीत्यनेन गम्यमाह—**मयी**त्यादि। **अनवरते**ति। अनवरतो यः कथितोपयोगः पूर्वोक्तोपयोगः तस्य योगात्। **नेम** इति। **इमे** पल्लवाः। **जरे**ति। जराजीर्णतया यः खिलीकारः वैवर्ण्यादिरूपस्तम्। **विगल**दिति शतृप्रत्ययेन गम्यमाह—**कतिपये**ति। **प्रोषितस्ये**ति। भगवत इति शेषः। **औत्सुक्ये**ति। औत्सुक्यमुत्कण्ठा दिदृक्षा वा। उदाहरणत्रयप्रदर्शनफलमाह—**बहुभिरित्यादि**। **बहुभिः** त्रिभिः। उदाहरणैः तत्सूचितमिति सम्बन्धः। **महत** इति वृत्तिस्थस्यानुवादः। तस्य व्याख्यानम्—**भूयस** इति। वृत्तावथेत्यस्य यदीत्यर्थः। तत्र रसादिरलङ्कारो यदीति योजना। अत्राभिप्रायं पूरणेन दर्शयति—**नीरसत्व**मिति। यस्मादित्यादिग्रन्थमवतारयति—**नन्वि**ति। 'यत्रान्ततो विभावत्वेन चेतनवस्तुवृत्तान्तयोजना नास्ति असावचेतनवस्तुवृत्तान्तो नास्ती'ति वृत्तावन्वयः। अन्ततो विभावत्वेन योजनेति वृत्तावुक्तं, तदभिप्रायमाह—**स्तम्भे**त्यादि। वर्ण्यमानमचेतनमपि स्तम्भपुलकादीति योजना। **चेतनमाक्षिपत्येव** चित्तवृत्तिविशेषगमकत्वेन चेतनगमकं भवत्येव। **तावदि**ति सम्प्रतिपत्तौ। **किमत्रोच्यत** इति। अनुभावस्य भावगमकतायाः प्रसिद्धत्वादत्र न किञ्चिद्वक्तव्यमित्यर्थः। विभावत्वेन योजनां विवृणोति—**अतिजड** इत्यादि। 'वर्ण्यमानः स्वविश्रान्तोऽपि चन्द्रोद्यानप्रभृतिरि'ति सम्बन्धः। **स्वविश्रान्तः** वाच्यार्थबोधेन स्वस्मिन् पर्यवसितः। **चित्ते**ति। चित्त-

त्वेन। तस्मादङ्गत्वेन च रसादीनामलङ्कारता। यः पुनरङ्गी रसो भावो वा सर्वाकारमलङ्कार्यः स ध्वनेरात्मेति।

किञ्च—

तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्॥ ६॥

ये तमर्थं रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते ते गुणाः शौर्यादिवत्। वाच्यवाचकलक्षणान्यङ्गानि ये पुनस्तदाश्रितास्तेऽलङ्कारा मन्तव्याः कटकादिवत्।

लोचनम्

कृत्वा काव्येऽनाख्येय एव स्यात्; शास्त्रेतिहासयोरपि वा। एवं परमतं दूषयित्वा स्वमतमेव प्रत्याम्नायेनोपसंहरति—तस्मादिति। यतः परोक्तो विषयविभागो न युक्त इत्यर्थः। भावो वेति वाग्रहणात्तदाभासतत्प्रशमादयः। सर्वाकारमिति क्रियाविशेषणम्। तेन सर्वप्रकारमित्यर्थः। अलङ्कार्य इति। अत एव नालङ्कार इति भावः॥५॥

अलङ्कार्यव्यतिरिक्तश्चालङ्कारोऽभ्युपगन्तव्यः, लोके तथा सिद्धत्वात्, यथा गुणिव्यतिरिक्तो गुणः। गुणालङ्कारव्यवहारश्च गुणिन्यलङ्कार्ये च सति युक्तः। स चास्मत्पक्ष एवोपपन्न इत्यभिप्रायद्वयेनाह—किञ्चेत्यादि। न केवलमेतावद्युक्तिजातं रसस्याङ्गित्वे, यावदन्यदपीति समुच्चयार्थः। कारिकाप्यभिप्रायद्वयेनैव योज्या। केवलं प्रथमाभिप्राये प्रथमं कारिकार्धं दृष्टान्ताभिप्रायेण व्याख्येयम्। एवं वृत्तिग्रन्थोऽपि योज्यः॥६॥

बालप्रिया

वृत्तिविशेषस्य उद्दीपनविभावतामित्यर्थः। शास्त्रेति। अनाख्येय इत्यनुषज्यते। न हि तदस्ति वस्तु यन्न किञ्चित्तत्तद्वृत्तिविशेषमुद्बोधयतीति भावः। प्रत्याम्नायेन उक्तस्यैव पुनः कथनेन। आम्नायपदेन वेदवदस्य प्रामाण्यं द्योत्यते। वाग्रहणादिति। गृह्यन्त इति शेषः। अलङ्कार्य इत्युक्त्या गम्यमाह—अत एवेति॥ ५॥

'किञ्चे'त्यादिग्रन्थमवतारयति—अलङ्कार्येत्यादि। अभिप्रायान्तरं चाह—गुणेति। स चेति। गुणालङ्कारव्यवहारश्चेत्यर्थः। किञ्चेत्यस्यार्थमाह—नेत्यादि। युक्तिजातं युक्तिसमूहः। अभिप्रायद्वयेनेति। उक्तेनेति भावः। योजनां दर्शयति—केवलमित्यादि। प्रथमाभिप्राय इति। अलङ्कार्यव्यतिरिक्तश्चालङ्कारोऽभ्युपगन्तव्य इत्यभिप्राय इत्यर्थः। प्रथमं कारिकार्धमिति। तमर्थमित्याद्यर्धमित्यर्थः। दृष्टान्तेति। यथा गुणिव्यतिरिक्तो गुण इति दृष्टान्तेत्यर्थः। द्वितीयाभिप्रायस्तु पूर्वोत्तरार्धाभ्यां गम्य इति भावः। वृत्तौ तमर्थमित्यस्य विवरणं—'रसादिलक्षणमि'ति। 'अङ्गिनं सन्त'मिति तद्विशेषणमङ्गीभूतमित्यर्थः। शौर्यादिवदिति दृष्टान्तो गम्यः। 'तदाश्रिता' इति। अङ्गाश्रिता इत्यर्थः॥ ६॥

तथा च—

**शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।**
**तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ ७ ॥**

लोचनम्

ननु शब्दार्थयोर्माधुर्यादयो गुणाः[1], तत्कथमुक्तं रसादिकमङ्गिनं गुणा आश्रिता इत्याशङ्क्याह—**तथा च** इत्यादि । तेन वक्ष्यमाणेन बुद्धिस्थेन परिहारप्रकारेणोपपद्यते चैतदित्यर्थः । **शृङ्गार एवे**ति । मधुर इत्यत्र हेतुमाह—**परः प्रह्लादन** इति । रतौ हि समस्तदेवतिर्यङ्नरादिजातिष्वविच्छिन्नैव वासनाऽस्त इति न कश्चित्तत्र तादृग्यो न हृदयसंवादमयः, यतेरपि हि तच्चमत्कारोऽस्त्येव । अत एव मधुर इत्युक्तम् । मधुरो हि शर्करादिरसो विवेकिनोऽविवेकिनो वा स्वस्थस्यातुरस्य वा झटिति रसनानिपतितस्तावदभिलषणीय एव भवति । **तन्मयमि**ति । स शृङ्गार आत्मत्वेन प्रकृतो यत्र व्यङ्ग्यतया । **काव्यमि**ति शब्दार्थावित्यर्थः[2] । **प्रतितिष्ठती**ति । प्रतिष्ठां गच्छतीति यावत् ।

बालप्रिया

'तथाचे'त्यादिग्रन्थमवतारयति—**नन्वि**त्यादि । **शब्दार्थयोरि**त्यादि । तथैव प्राचीनैरुक्तत्वादिति भावः । तथाचेत्येतत्प्रकृतानुगुण्येन व्याचष्टे—**तेने**त्यादि । कारिकां व्याचष्टे—**मधुर** इत्यादि । **मधुरः** माधुर्याख्यगुणविशिष्टः । **हेतुमि**ति । ज्ञापकमित्यर्थः । परप्रह्लादनत्वमुपपादयति—**रतावि**त्यादि । **रतौ** जायमानायामिति शेषः । **वासने**ति । संस्कारापरपर्याया सूक्ष्मावस्थेत्यर्थः । **इती**ति हेतौ । **ने**त्यादि । **तत्र** रतौ । **हृदयसंवादमयः** प्राचुर्येण हृदयसंवादशाली । यस्तत्र हृदयसंवादमयो न तादृक्कश्चिन्नेत्यन्वयः । सर्वेषां रतौ हृदयसंवादो भवतीत्यर्थः । **तच्चमत्कार** इति । रतौ हृदयसंवाद इत्यर्थः । अवतारिकोक्तं योजयति—**अत** इत्यादि । उक्तं दृष्टान्तेन विशदयति—**मधुरो ही**त्यादि । कारिकायां मधुर इत्यादिना अयमर्थोऽपि दृष्टान्तविधया विवक्षित इति भावः । **विवेकिनोऽविवेकिनो वे**ति । सर्वस्यैवेत्यर्थः । **अभिलषणीय एवे**ति । प्रह्लादन एवेति भावः । तन्मयमित्यत्र "तत्प्रकृतवचने मयडि"ति सूत्रेण मयडिति व्याचष्टे—**स** इत्यादि । आत्मत्वेनेत्यस्योपपादकं—**व्यङ्ग्यतये**ति ।

---

१. श्लेषः प्रसादस्समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इम एव दशगुणा विभिन्नाकारेण शब्दार्थनिष्ठा भामहप्रभृतिभिरुक्ताः । तदाह—लोचनकारः 'शब्दार्थयो'रित्यादिना ।

२ अत एव काव्यप्रकाशकृतोऽपि 'शब्दार्थौ काव्यमि'ति प्राहुः ।

लोचनम्

एतदुक्तं भवति—वस्तुतो माधुर्यं नाम शृङ्गारादे रसस्यैव गुणः । तन्मधुररसाभि-

बालप्रिया

कारिकाभावार्थमाह—**एतदुक्तमि**त्यादि । शृङ्गारादेरित्यादिपदेन करुणस्य सङ्ग्रहः । **तदि**ति। माधुर्यमित्यर्थः। **उपचरितं** साक्षात्सम्बन्धेनारोपितम् । फलितमाह—**मधु-**

१. इदमत्र विभावनीयम्—प्राचीनाः श्लेषादीन् दश शब्दगुणान्, तानेव च तावतो लक्षणभेदेन भिन्नानर्थगुणांश्चिजगदुः । श्रीभोजराजस्तु भूयसो गुणभेदान् वर्णयाम्बभूव । श्रीमदानन्दवर्धनाचार्याभिनवगुप्तमम्मटविश्वनाथप्रभृतयो धीमन्तो माधुर्यौजःप्रसादाभिधान् रसमात्रनिष्ठान् त्रीनेव गुणान् निर्णिर्णिरे । तथाहि तेषां मतम्—सहृदयानां नवरसचर्वणाजन्याः तिस्रो दशा भवन्ति—द्रुतिर्विस्तारो विकासश्चेति । द्रुतिर्नाम सहृदयानुभवसाक्षिकस्सुकुमारो लोचनसलिलपुलकाद्यनुभावितशौर्यक्रोधाद्युद्भावितदीप्तत्वविस्मयहासादिजनितविक्षेपाननुविद्धचित्तवृत्तिविशेषः । स च शृङ्गारकरुणशान्तेभ्यो जायते । विस्तारो नाम द्रुतिविरोधिनी दीप्त्यपरपर्याया जिगीषात्यन्तत्यागेच्छावधावधिकप्रयासादिकारिणी काचन वृत्तिरन्तः करणस्य । सा च वीररौद्रबीभत्सेभ्यस्सम्भवति । एवं विकासोऽपि हास्याद्भुतभयानकेभ्यो जायमानश्चेतोवृत्तिविशेष एव, यत्र हास्ये वदनस्य, अद्भुते लोचनस्य, भयानके गमनस्य विकासरूपोऽनुभावः समनुभूयते । स च विकासः शृङ्गारविभावप्रभवे हास्ये द्रुत्या, वीरादिप्रभवे च तस्मिन् विस्तारेण च सम्मिश्रो भवति । भयानकाद्भुतयोरपि विकासे वीरबीभत्सशृङ्गारविभावादिप्रभवतया द्रुत्या विस्तारेण चानुविद्धता । प्रसादस्थले च सर्वेषामेषामाधिक्यमनुभूयत इति वृत्तित्रयरूपकार्यवैजात्यनियामकतया कारणत्रयं कल्प्यते । कार्यवैजात्यं हि कारणवैजात्याधीनमेव इति त्रय एव माधुर्यौजःप्रसादाभिधाना अवस्थात्रयहेतुभूता गुणाः प्रामाणिककोटिमाटीकन्त इति ।

नव्यास्त्वत्र प्रत्यवतिष्ठन्ते—अस्य गुणत्रयस्य रसमात्रधर्मत्वे न दृढतरं प्रमाणमस्ति । यतः, प्रत्यक्षं न शक्नोत्यत्र पदमाधातुम् । दहनगतस्योष्णस्पर्शस्य तत्कार्यस्य भस्मीकरणप्रभृतेः पार्थक्येनोपलम्भस्येव रसवृत्तिगुणानां तत्कार्यभूतानां द्रुत्यादिचेतोवृत्तीनां विभिन्नतया उपलम्भाभावात् । नाप्यनुमानं प्रभवति तत्समर्थयितुम्, शृङ्गारत्वादितत्तद्वैयधिकरणधर्मेणैव रसानां हेतुत्वे बाधकाभावेन तत्तद्गुणवैशिष्ट्येन हेतुतामभ्युपगम्य हेतुतावच्छेदकतया माधुर्याद्यङ्गीकारे गौरवप्रसङ्गात् । माधुर्यादिगुणवत्त्वेन द्रुत्यादिचित्तवृत्तीः प्रति एककार्यकारणभावे लाघवप्रदर्शनन्तु व्यामोहमात्रम्, तथा कार्यकारणभावानभ्युपगमात् । प्रत्युत तत्तदतिशयितद्रुत्यादिचित्तवृत्तीः प्रति तत्तद्विशेषरूपेण रसानां कार्यकारणभावस्वीकारस्यैव प्राच्यैरुच्यमानत्वात् । अपि चात्मनो निर्गुणत्वस्य सर्वप्रमाणमौलिभूतवेदान्तैः प्रतिपादिततया आत्मभूतरसगुणत्वं माधुर्यादीनां कथमिव नोपहासास्पदम् ? तदुपाधिभूतरत्यादीनामिमे गुणा इत्यपि न साम्प्र-

शृङ्गार एव रसान्तरापेक्षया मधुरः प्रह्लादहेतुत्वात् । तत्प्रकाशनपरशब्दार्थतया काव्यस्य स माधुर्यलक्षणो गुणः । श्रव्यत्वं पुनरोजसोऽपि साधारणमिति ।

शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥ ८ ॥

लोचनम्

व्यञ्जकयोः शब्दार्थयोरुपचरितं मधुरशृङ्गाररसाभिव्यक्तिसमर्थता शब्दार्थयोर्माधुर्यमिति हि लक्षणम् । तस्माद्युक्तमुक्तं 'तमर्थमि'त्यादि । कारिकार्थं वृत्त्याह—**शृङ्गार** इति । ननु 'श्रव्यं[1] नातिसमस्तार्थशब्दं मधुरमिष्यते' इति माधुर्यस्य लक्षणम् । नेत्याह—**श्रव्यत्वमिति** । सर्वं लक्षणमुपलक्षितम् । **ओजसोऽपीति** । 'यो यः शस्त्रं' इत्यत्र हि श्रव्यत्वमसमस्तत्वं चास्त्येवेति भावः ॥ ७ ॥

सम्भोगशृङ्गारान्मधुरतरो विप्रलम्भः, ततोऽपि मधुरतमः करुण इति तदभिव्यञ्जनकौशलं शब्दार्थयोर्मधुरतरत्वं मधुरतमत्वं चेत्यभिप्रायेणाह–**शृङ्गार** इत्यादि । **करुणे चेति** चशब्दः क्रममाह । **प्रकर्षवदिति** । उत्तरोत्तरं तरतमयोगेनेति भावः । **आर्द्रतामिति** । सहृदयस्य चेतः स्वाभाविकमनाविष्टत्वात्मकं काठिन्यं क्रोधादिदीप्तरूपत्वं

बालप्रिया

रेत्यादि । **शृङ्गारेति** । शृङ्गारादीत्यर्थः । **लक्षणमिति** । स्वरूपमित्यर्थः । अनेन 'तत्प्रकाशने'त्यादि वृत्त्यर्थो दर्शितः । वृत्तौ 'रसान्तरापेक्षया प्रह्लादहेतुत्वादि'ति सम्बन्धः । लोचने—**नन्वित्यादि** । **नातिसमस्तार्थशब्दं मधुरमिति** । काव्यमिति शेषः । **इतीति** । इति भामहोक्तमित्यर्थः । **लक्षणमिति** । श्रव्यत्वादिघटितलक्षणमित्यर्थः । एतदन्तः शङ्काग्रन्थः । **नेत्याहेति** । उक्तमतिव्याप्त्या लक्षणं न भवतीत्याहेत्यर्थः । **सर्वमिति** । श्रव्यमित्यादिनोक्तं सर्वमित्यर्थः । **ओजस** इति । ओजस्विनः काव्यस्येत्यर्थः । तदुदाहृत्यातिव्याप्तिं दर्शयति–**यो य** इत्यादि । पद्यमिदं वृत्तावुदाहरिष्यते ॥ ७ ॥

अवतारयति—**सम्भोगेत्यादि** । **इतीति** हेतौ । **तदभीत्यादि** । तत्पदेन मधुरतरस्य मधुरतमस्य च रसस्य परामर्शः । **क्रममाहेति** । तथा च क्रमेण प्रकर्षवदित्यर्थः । तमेवाह—**उत्तरोत्तरमिति** । आर्द्रतामितीत्येतद्व्याचष्टे—**सहृदयस्येत्यादि** । 'चेतस्त्यजती'ति सम्बन्धः । **स्वाभाविकं काठिन्यमिति** । यथोक्तं भक्तिरसायने—"चित्तद्रव्यं तु कठिनं स्वभावादि"ति । **क्रोधादीति** । क्रोधाद्याहितं दीप्तत्वमि-

---

तम्, प्रमाणाभावात् गुणे गुणान्तरानङ्गीकाराच्च । 'शृङ्गारो मधुर' इत्यादिव्यवहारस्तु तत्तद्वृत्तिविशेषप्रयोजकतया कथञ्चिदुपपादनीय इत्यलं भूम्ना । १. भामह., २,२,३.

विप्रलम्भशृङ्गारकरुणयोस्तु माधुर्यमेव प्रकर्षवत्। सहृदयहृदयावर्जनातिशयनिमित्तत्वादिति।

**रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः।**
**तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥ ९॥**

रौद्रादयो हि रसाः परां दीप्तिमुज्ज्वलतां जनयन्तीति लक्षणया त

**लोचनम्**

विस्मयहासादिरागित्वं च त्यजतीत्यर्थः। **अधिकमिति**। क्रमेणेत्याशयः। तेन करुणेऽपि सर्वथैव चित्तं द्रवतीत्युक्तं भवति। ननु करुणेऽपि यदि मधुरिमास्ति, तर्हि पूर्वकारिकायां शृङ्गार एवेत्येवकारः किमर्थः। उच्यते—नानेन रसान्तरं व्यवच्छिद्यते; अपि त्वात्मभूतस्य रसस्यैव परमार्थतो गुणा माधुर्यादयः, उपचारेण तु शब्दार्थयोरित्येवकारेण द्योत्यते। वृत्त्यर्थमाह—**विप्रलम्भेति**॥ ८॥

**रौद्रेत्यादि**। आदिशब्दः प्रकारे। तेन वीराद्भुतयोरपि[1] ग्रहणम्। दीप्तिः प्रतिपत्तुर्हृदये विकासविस्तारप्रज्वलनस्वभावा। सा च मुख्यतया ओजश्शब्दवाच्या।

**बालप्रिया**

त्यर्थः। **विस्मयेति**। रागित्वं रूषितत्वं विस्मयहासाद्याहितं विक्षेपमित्यर्थः। **त्यजतीति**। तथा चार्द्रता नाम चित्तस्य शृङ्गारादिचर्वणाजन्यः काठिन्यादिपरित्यागः, तेन द्रुत्याख्यो वृत्तिविशेषो वेति भावः। स्पष्टमिदं काव्यप्रदीपोद्योते। **क्रमेणेति**। आर्द्रतायाः क्रमेणाधिक्यमिति भावः। **सर्वथैव** अत्यधिकमेव। **किमर्थ** इति। किंशब्दः प्रश्ने। कः अर्थो यस्य सः। अन्ययोगव्यवच्छेदरूपार्थस्य बाधादिति भावः। प्रतिवक्ति—**उच्यत** इत्यादि। एवकारश्शब्दतदर्थव्यवच्छेदपर इति भावः। वृत्तौ 'प्रकर्षवदेवे'ति योजना॥ ८॥

**प्रकार** इति। सादृश्य इत्यर्थः, न तु प्राथम्ये। रौद्रानन्तरं वीरादेरेव पाठ इत्यत्रानियमादिति भावः। **वीराद्भुतयोरिति**। यद्यत्रादिपदेनाद्भुतं गृह्यते, तदा तस्य दीप्तिजनकत्वेन 'क्रोधादिदीप्तरूपत्वं विस्मयहासादी'ति पूर्वग्रन्थे क्रोधादीत्यादिपदेन विस्मयस्य ग्राह्यत्वात्पुनर्विस्मयेत्युक्तिरसङ्गता स्यादतोऽत्र वीरबीभत्सयोरिति पाठेन भाव्यम्। उत्तरत्र "हास्यभयानकबीभत्सशान्तेष्वि"त्यत्र "बीभत्सेऽप्येवमि"त्यत्र च बीभत्सपदस्थाने अद्भुतपदं च पठनीयं, तथा सति काव्यप्रकाशादिसंवादोऽपि भवति। तत्र शान्ते माधुर्यमात्रकथनं मतान्तराभिप्रायेण योज्यमिति प्रतिभाति। **विकासेति**। विकासरूपो यो विस्तारः तद्रूपं यत्प्रज्वलनं तत्स्वभावा तत्स्वरूपा दीप्तिर्नाम तथाविधा

---

१. अत्राद्भुतपदेन वीरविभावप्रभवस्यैवाद्भुतस्य ग्रहणे न काचिच्छङ्कोदेतीति निपुणं निभालनीयम्।

एव दीप्तिरित्युच्यते । तत्प्रकाशनपरः शब्दो दीर्घसमासरचनालङ्कृतं वाक्यम् ।

लोचनम्

तदास्वादमया रौद्राद्याः, तया दीप्त्या आस्वादविशेषात्मिकया कार्यरूपया लक्ष्यन्ते रसान्तरात्पृथक्तया । तेन कारणे कार्योपचाराद्रौद्रादिरेवौजःशब्दवाच्यः । ततो लक्षितलक्षणया तत्प्रकाशनपरः शब्दो दीर्घसमासरचनवाक्यरूपोऽपि दीप्तिरित्युच्यते । यथा

बालप्रिया

काचिच्चित्तवृत्तिरित्यर्थः । **सा चेत्यादि** । "ओजो दीप्ता" वित्यमरः । **तदास्वादमया** इति । दीप्तिरूपचित्तवृत्तिजनका इत्यर्थः । **आस्वादविशेषात्मिकयेति** । चित्तवृत्तिविशेषरूपयेत्यर्थः । **कार्यरूपयेति** । रौद्रादिरसचर्वणाजन्ययेत्यर्थः । **लक्ष्यन्त इति** । ज्ञायन्त इत्यर्थः । पूरयति—**रसेति** । **पृथक्तया** भिन्नत्वेन । 'कारणे कार्योपचारादेव रौद्रादिरोजःशब्दवाच्य' इति योजना । एवकारोऽप्यर्थको वा । ओजस्विकाव्यमित्यादिव्यवहारस्थमोजःपदं लक्षणया रौद्राद्यर्थकमित्यर्थः । अनेन रौद्रादय इत्यादिवृत्तिग्रन्थो विवृतः । वृत्तौ 'लक्षणयैवे'ति योजना । दीप्तिरित्युच्यन्त इत्यत्र दीप्तिशब्द ओजःपदोपलक्षकः । **तत्प्रकाशनेति** । रौद्रादिप्रकाशनेत्यर्थः । कारिकोत्तरार्धव्याख्यारूपमेतदादिवृत्तिग्रन्थं विवृणोति—**तत** इत्यादि । लक्षणया दीप्तिरित्युच्यत इति पदानामनुषङ्गं मनसिकृत्याह—**लक्षितलक्षणयेत्यादि** । लक्षितेनार्थेन लक्षणा लक्षितलक्षणेति केचित् । शक्यार्थस्य परम्परासम्बन्धो लक्षितलक्षणेत्यपरे । तत्प्रकाशनपरः शब्द इत्यस्यैव विवरणं दीर्घेत्यादीति स्फुटीकर्तुमाह—**दीर्घेति** । दीप्तिरित्युच्यत इति

१. ननु विशेष्यवाचकपदसमानवचनकत्वमाख्यातस्येत्यस्ति नियमः । अत एव प्रकृतिविकृतिभावस्थले 'वृक्षः पञ्च नौका भवन्ती'ति, उभयार्थाभेदारोपस्थले च 'एको द्वौ ज्ञायत' इत्यादयः प्रयोगास्सङ्गच्छन्ते । अत एव च व्युत्पत्तिवादे गदाधरभट्टाचार्यैः

'विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।
अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरस्थितम्' ॥

इति नैषधीयपद्ये निजायशोयुगरूपविशेष्यवाचकपदसमानवचनकत्वाभावात् 'अमानी'ति पदेऽसाधुत्वमाशङ्क्य समाहितम् । अयशोद्वयस्य वास्तवत्वेन चिकुरभागद्वयस्यैव राज्ञ आरोप्यमाणत्वेनाख्यातार्थविशेष्यत्वान्वयविशेष्यत्वेनायशोयुगस्यैव विवक्षितत्वात्' इति ग्रन्थेन । अत्र चायशोयुगत्वेन तस्याज्ञाततया प्रक्षालनाभावेऽपि राज्ञोऽसामर्थ्यं नागूरितं भवतीत्यपरमनुकूलम् । तथा च 'त एव दीप्तिरित्युच्यते' इत्यत्र 'उच्यत' इत्याख्यातस्य विशेष्यवाचकतत्[illegible]कत्वाभावात् कथं नासाधुत्वमिति चेत्—अत्रोच्यते ; अत्र हि '[illegible]' शब्देन[illegible]र्थ एव वचधात्वर्थनिरूपितकर्मताश्रय इति तस्य साधु[illegible]न्यस्य [illegible]त्वात्तथाविधेऽपि स्थल एकवचनस्य साधुत्वं 'एकवचनं द्विवद्द्विवचनबहुवचने' इति सौत्रन्यासं कुर्वाणैर्महाभाष्यकारैस्सुस्पष्टमुद्घोषितम् इति ।

यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावबद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥

लोचनम्

'चञ्चदि'त्यादि । तत्प्रकाशनपरश्चार्थः प्रसन्नैर्गमकैर्वाचकैरभिधीयमानः समासानपेक्ष्यपि दीप्तिरित्युच्यते । यथा–'यो यः' इत्यादि । **चञ्च**दिति । चञ्चद्भ्यां वेगादावर्तमानाभ्यां भुजाभ्यां भ्रमिता येयं चण्डा दारुणा गदा तया योऽभितः सर्वत ऊर्वोर्घातस्तेन सम्यक् चूर्णितं पुनरनुत्थानोपहतं कृतमूरुयुगलं युगपदेवोरुद्वयं यस्य तं सुयोधनमनादृत्यैव स्त्यानेनाश्यानतया न तु कालान्तरशुष्कतयावबद्धं हस्ताभ्यामविगलद्रूपमत्यन्तमाभ्यन्तरतया घनं न तु रसमात्रस्वभावं यच्छोणितं रुधिरं तेन शोणौ लोहितौ पाणी यस्य सः । अत एव स भीमः कातरत्रासदायी । **तवे**ति । यस्यास्तत्तदपमानजातं कृतं देव्यनुचितमपि तस्यास्तव कचानुत्तंसयिष्यत्युत्तंसवतः करिष्यति, वेणीत्वमपहरन् करविच्युतशोणितशकलैर्लोहितकुसुमापीडेनेव योजयिष्यतीत्युत्प्रेक्षा । देवीत्यनेन कुलकलत्रखिलीकारस्मरणकारिणा क्रोधस्यैवोद्दीपनविभावत्वं कृतमिति नात्र श्रृङ्गारशङ्का कर्तव्या । सुयोधनस्य चानादरणं द्वितीयगदाघातदानाद्यनुद्यमः । स च सञ्चूर्णितोरुत्वादेव । स्त्यानग्रहणेन द्रौपदीमन्युप्रक्षालने त्वरा सूचिता । समासेन च सन्ततवेगवहनस्वभावात्

बालप्रिया

दीप्तिपदमोजःपदोपलक्षकम् । 'प्रसन्नै'रित्यस्य व्याख्यानम्-**गमकै**रिति । झटित्यर्थबोधकैरित्यर्थः । सुयोधनस्येति "षष्ठी चानादर" इत्यनेन षष्ठीत्याह—**सुयोधनमनादृत्ये**ति । स्त्यानेनेत्यस्य विवरणम्—**आश्यानत**येति । घनीभावेनेत्यर्थः । **न त्वि**त्यादि । कालान्तरशुष्कतयाप्यवबद्धं भवति तथा नेत्यर्थः । अवबद्धमित्यस्य व्याख्यानम्—**हस्ताभ्या**मित्यादि । **अत्यन्त**मित्यादि । अत्यन्ताभ्यन्तरत्वमत्र घनत्वमित्यर्थः । **कातरे**ति । **कातरो** भीरुः । देव्यनुचितमप्यवमानजातमित्यन्वयः । देव्याः कृताभिषेकाया अनुचितं देव्यनुचितम् । **उत्तंसवत** इति । **उत्तंसः** शेखरः । **करे**ति । कराद्विच्युतैः गलितैः शोणितशकलैः रक्तशकलैः । **लोहितकुसुमे**ति । रक्तपुष्पेत्यर्थः । उत्प्रेक्षेति सूचितेत्यस्यापकर्षः । **कुले**ति । खिलीकारोऽपकारो सुयोधनप्रेरितदुश्शासनकर्तृककेशाकर्षणादिः । **त्वरे**ति । भीमसेनत्वरेत्यर्थः । **सूचिते**ति । स्त्यानावस्थायामेव उत्तंसीकरणोद्यमादिति भावः । अत्र समास ओजोव्यञ्जक इति दर्शयति—**समासेने**त्यादि । **समासेन चञ्च**दित्यादिना । **सन्ततवेगे**त्यादि । समा-

तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनः प्रसन्नवाचकाभिधेयः। यथा—

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥

इत्यादौ द्वयोरोजस्त्वम्।

लोचनम्

तावत्येव मध्ये विश्रान्तिमलभमाना चूर्णितोरुद्वयसुयोधनानादरणपर्यन्ता प्रतीतिरेकत्वे· नैव भवतीत्यौद्धत्यस्य परं परिपोषिका। अन्ये तु सुयोधनस्य सम्बन्धि यत्स्त्याना· वबद्धं घनं शोणितं तेन शोणपाणिरिति व्याचक्षते।

य इति। स्वभुजयोर्गुरुर्मदो यस्य चमूनां मध्येऽर्जुनादिरित्यर्थः। पाञ्चा· लराजपुत्रेण धृष्टद्युम्नेन द्रोणस्य व्यापादनात्तत्कुलं प्रत्यधिकः क्रोधावेशोऽश्वत्थाम्नः। तत्कर्मसाक्षीति कर्णप्रभृतिः। रणे सङ्ग्रामे कर्तव्ये यो मयि मद्विषये प्रतीपं चरति स· मरविघ्नमाचरति। यद्वा मयि चरति सति सङ्ग्रामे यः प्रतीपं प्रतिकूलं कृत्वास्ते स एवं विधो यदि सकलजगदन्तको भवति तस्याप्यहमन्तकः किमुतान्यस्य मनुष्यस्य देवस्य

बालप्रिया

सत्य द्रुतं ससंहितमुच्चरितत्वेनाविच्छिन्नवेगशालित्वादित्यर्थः। **तावत्येवेति**। प्रतीतिवि· शेषणं वेगवत्येवेत्यर्थः। **चूर्णितेत्यादि**। गदाभ्रमणप्रभृति तदनादरणपर्यन्तार्थविषयि· केत्यर्थः। **प्रतीतिरिति**। सहृदयप्रतीतिरित्यर्थः। **एकत्वे व भवतीति**। एकैव भव· तीत्यर्थः। एकघन इव भातीति च पाठः। **औद्धत्यस्येति**। वक्तृगतधीरोद्धतत्वस्ये· त्यर्थः। भीमगतक्रोधस्येति यावत्। केचित्तु सुयोधनस्येति शेषे षष्ठी, शोणितमित्यने· नास्य सम्बन्ध इत्याहुः, तन्मतमाह—**अन्ये त्विति**।

चरतीति लडन्तमिति कृत्वा व्याचष्टे—**आचरतीति**। करोतीत्यर्थः। तत्स· प्तम्यन्तशत्रन्तमिति कृत्वाह—**यद्वेति**। तस्यापीत्यपिशब्दार्थमाह—**किमुते· त्यादि**। वृत्तावनपेक्षितदीर्घसमासरचनः प्रसन्नवाचकाभिधेयोऽर्थश्च तत्प्रकाशनपर

१. 'क्रुद्धस्य राजमातङ्गास्तस्यैवामी तुरङ्गमाः' इत्यादाविवात्रापि एकदेशान्वयोऽ· नुचितः। 'चैत्रस्य गुरुकुलं' 'मैत्रस्य दासभार्ये'तिवत् शोणितस्यापि कथञ्चित् नित्य· साकाङ्क्षत्वमङ्गीकृत्य यद्ययं समाधीयते, तदा सम्बन्धषष्ठ्या न कश्चन चमत्कारकृदर्थः प्रतीयत इत्यन्येषां मतेऽरुचिबीजम्।

**समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति ।**
**स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥ १० ॥**

### लोचनम्

वा । अत्र पृथग्भूतैरेव क्रमाद्विमृश्यमानैरर्थैः पदात्पदं क्रोधः परां धारामाश्रित इत्यसमस्ततैव दीप्तिनिबन्धनम् । एवं माधुर्यदीप्ती परस्परप्रतिद्वन्द्विततया स्थिते शृङ्गारादिरौद्रादिगते इति प्रदर्शयता तत्समावेशवैचित्र्यं हास्यभयानकबीभत्सशान्तेषु दर्शितम् । हास्यस्य शृङ्गाराङ्गतया माधुर्यं प्रकृष्टं विकासधर्मतया चौजोऽपि प्रकृष्टमिति साम्यं द्वयोः । भयानकस्य मग्नचित्तवृत्तिस्वभावत्वेऽपि विभावस्य दीप्ततया ओजः प्रकृष्टं माधुर्यमल्पम् । बीभत्सेऽप्येवम् । शान्ते तु विभाववैचित्र्यात्कदाचिदोजः प्रकृष्टं कदाचिन्माधुर्यमिति विभागः ॥ ९ ॥

**समर्पकत्वं** सम्यगर्पकत्वं हृदयसंवादेन प्रतिपत्तॄन् प्रति स्वात्मावेशेन व्यापारकत्वं झटिति शुष्ककाष्ठाग्निदृष्टान्तेन । अकलुषोदकदृष्टान्तेन च तदकालुष्यं प्रसन्नत्वं

### बालप्रिया

इति योजना । एतदुदाहरणे योजयति—**अत्रे**त्यादि । **पृथग्भूतै**रिति । भिन्नभिन्नपदबोध्यैरित्यर्थः । **क्रमा**दिति । क्रमेण क्रमेणेत्यर्थः, विरम्य विरम्येति यावत् । **विमृश्यमानैरर्थै**रिति । वक्त्रा तत्तत्प्रकारेण विचार्यमाणैरर्थैरित्यर्थः । **क्रोध** इति । वक्तृगतक्रोध इत्यर्थः । **धारा**मिति । कोटिमित्यर्थः । दीप्तिमिति पाठे प्रकाशमित्यर्थः । **आश्रित** इति । सहृदयानां भातीति शेषः । **असमस्तते**ति । पदानां समासाभावोऽल्पसमासश्चेत्यर्थः । **दीप्तिनिबन्धन**मिति । ओजोव्यञ्जकमित्यर्थः । प्रसङ्गादाह—**एव**मित्यादि । **माधुर्यदीप्ती** इति । माधुर्यौजसी इत्यर्थः । **परस्परे**ति । मिथोविरोधितयेत्यर्थः । **शृङ्गारादी**ति । यथासंख्यं बोध्यम् । **तत्समावेशे**ति । माधुर्यौजस्समावेशेत्यर्थः । उक्तमुपपादयति—**हास्यस्ये**त्यादि । **शृङ्गाराङ्गतये**ति । शृङ्गारविभावादिप्रभवत्वस्य विकासधर्मतयेति वीरादिप्रभवत्वस्य च उपलक्षणम् ॥ ९ ॥

**समर्पकत्व**मित्यादि । काव्यस्य सर्वरसान् प्रति सर्वरसानाम् । समर्पकत्वं तु यत् प्रतिपत्तृहृदये सर्वरसकर्मकं झटिति यदर्पणं व्यापनरूपं तत्कर्तृत्वं तु यदिति यावत् । सः सर्वसाधारणी क्रिया वर्तनरूपा यस्य सः । प्रसादो गुणो ज्ञेय' इति कारिकार्थः । एतमर्थं विवृणोति—**समर्पकत्व**मित्यादि । हृदयसंवादेनेत्यावेशे हेतुः । **प्रतिपत्तॄ**निति । तद्धृदयानीत्यर्थः । **स्वात्मे**ति । स्वस्वरूपेत्यर्थः । सर्वरसानामित्यस्यात्रापकर्षः । झटिति व्यापकत्वमिति सम्बन्धः । अत्र दृष्टान्तमाह—**शुष्के**त्यादि । यथा शुष्ककाष्ठमग्निः, यथा वा **अकलुषं** स्वच्छं वस्त्रादि उदकं झटिति व्याप्नोति तथेत्यर्थः । **तदकालुष्य**मिति । झटिति स्वात्मावेशेन व्यापकत्वरूपं स्वच्छत्वमित्यर्थः ।

**प्रसादस्तु स्वच्छता शब्दार्थयोः । स च सर्वरससाधारणो गुणः सर्वरचनासाधारणश्च व्यङ्ग्यार्थापेक्षयैव मुख्यतया व्यवस्थितो मन्तव्यः ।**

### लोचनम्

नाम सर्वरसानां गुणः । उपचारात्तु तथाविधे व्यङ्ग्येऽर्थे यच्छब्दार्थयोः समर्पकत्वं तदपि प्रसादः । तमेव व्याचष्टे—**प्रसादे**ति । ननु रसगतो गुणस्तत्कथं शब्दार्थयोः स्वच्छतेत्याशङ्क्याह—**स चे**ति । चशब्दोऽवधारणे । सर्वरससाधारण एव गुणः । स एव च गुण एवंविधः । सर्वा येयं रचना शब्दगता चार्थगता च समस्ता चासमस्ता च तत्र साधारणः । **मुख्यत**येति । अर्थस्य तावत्समर्पकत्वं व्यङ्ग्यं प्रत्येव सम्भवति नान्यथा । शब्दस्यापि स्ववाच्यार्पकत्वं नाम कियदलौकिकं येन गुणः स्यादिति भावः । एवं माधुर्यौजःप्रसादा एव त्रयो गुणा उपपन्ना भामहाभिप्रायेण । ते च प्रतिपत्त्रास्वादमया मुख्यतया तत आस्वाद्ये उपचरिता रसे ततस्तद्व्यञ्जकयोः शब्दार्थयोरिति तात्पर्यम् ॥ १० ॥

### बालप्रिया

नन्वेवं प्रसादो गुणः काव्यनिष्ठत्वेन कथमुक्त इत्यत आह—**उपचारा**दित्यादि । **तथाविधे** रसरूपे । **व्यङ्ग्येऽर्थ** इति । तद्विषयकमित्यर्थः । **समर्पकत्वं** झटित्यर्पकत्वम् । **तदि**ति । झटिति रसादिव्यङ्ग्यार्पकत्वमित्यर्थः । **अपी**ति समुच्चये । **गुण** इति । प्रसाद इत्यर्थः । **कथमि**ति । शब्दार्थयोः स्वच्छत्वं कथं प्रसादो भवतीत्यर्थः । सः सर्वरससाधारण एव गुणः, स एव सर्वरससाधारणो गुण इति द्वेधावधारणमत्रेत्याह—**सर्वे**त्यादि । अत्राद्येनैवकारेण शब्दार्थसाधारण्यस्य, द्वितीयेन माधुर्यौजसोश्च व्यवच्छेदः । **गुण एवंविध** इति । सर्वरससाधारणो गुण इत्यर्थः । सर्वरचनेत्यादिकं व्याचष्टे—**सर्वे**त्यादि । वृत्तौ 'व्यङ्ग्यार्थे'त्यादि । स इत्यनुषङ्गः । एतदुपपादयति—**अर्थस्ये**त्यादि । अर्थस्य वाच्यार्थस्य । **तावदि**त्यादि । वाच्यार्थगतं व्यङ्ग्यसमर्पकत्वं नाम कियदलौकिकमिति भावः । **भाव** इति । शब्दार्थयोस्तत्तदर्पकत्वं न गुणः, किन्तु रसस्यैव स्वात्मावेशेन झटिति सहृदयहृदयव्यापकत्वमतो मुख्यतया रसनिष्ठ एव प्रसादाख्यो गुणः, उपचारात्तु सशब्दार्थयोरपीति भावार्थः । उपसंहरति—**एवमि**त्यदि । **भामहे**ति । "माधुर्यमभिवाञ्छन्त" इत्यादिभामहवचनानुरोधेनेत्यर्थः । **ते चे**त्यादि । ते माधुर्यौजःप्रसादा गुणाः । **प्रतिपत्त्रास्वादमया** इति । प्रतिपत्तुर्यें द्रुतिदीप्तिप्रसादात्मकचित्तवृत्तिविशेषरूपास्वादाः मुख्यतया तत्स्वरूपा इत्यर्थः । ते च चित्तस्था इति भावः । **तत** इत्यादि । तत्तदास्वादाः तत्तद्रसचर्वणाजन्या इत्यास्वाद्ये तत्तद्रसे ते उपचरिता इत्यर्थः । **तत** इत्यादि ।। उपचरिता इत्यस्यानुषङ्गः । शब्दार्थयोस्तत्तद्रसचर्वणाप्रयोजकत्वादिति भावः ॥ १० ॥

श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥ ११ ॥

अनित्या दोषाश्च ये श्रुतिदुष्टादयः सूचितास्तेऽपि न वाच्ये अर्थमात्रे, न च व्यङ्ग्ये शृङ्गारव्यतिरेकिणि शृङ्गारे वा ध्वनेरनात्मभूते । किं तर्हि ? ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते हेया इत्युदाहृताः । अन्यथा हि तेषामनित्यदोषतैव न स्यात् । एवमयमसंलक्ष्यक्रमद्योतो ध्वनेरात्मा प्रदर्शितः सामान्येन ।

लोचनम्

एवमस्मत्पक्ष एव गुणालङ्कारव्यवहारो विभागेनोपपद्यत इति प्रदर्श्य नित्यानित्यदोषविभागोऽप्यस्मत्पक्ष एव सङ्गच्छत इति दर्शयितुमाह—**श्रुतिदुष्टादय** इत्यादि । वान्तादयोऽसभ्यस्मृतिहेतवः[१] श्रुतिदुष्टाः/अर्थदुष्टा वाक्यार्थबलादश्लीलार्थप्रतिपत्तिकारिणः । यथा—'छिन्द्रान्वेषी महांस्तब्धो घातायैवोपसर्पति' इति । कल्पनादुष्टास्तु द्वयोः पदयोः कल्पनया । यथा 'कुरु रुचिम्' इत्यत्र क्रमव्यत्यासे । श्रुतिकष्टस्तु अधाक्षीत् अक्षोत्सीत् तृणेढि इत्यादि । शृङ्गार इत्युचितरसोपलक्षणार्थम् । वीरशान्ताद्भुतादावपि तेषां वर्जनात् । **सूचिता** इति । न त्वेषां विषयविभागप्रदर्शनेनानित्यत्वं

बालप्रिया

"श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि ।
श्रुतिकष्टं तथैवाहुर्वाचां दोषं चतुर्विधम्" ॥

इत्यादिना भामहोक्तान् श्रुतिदुष्टादिदोषान् सोदाहरणान् दर्शयति—**वान्तादयोऽसभ्येत्यादि** । 'श्रुतिदुष्टाः असभ्यस्मृतिहेतवो वान्तादय' इति सम्बन्धः । **श्रुतिदुष्टाः** श्रुतिदुष्टत्वरूपदोषवन्तः । एवमुत्तरत्रापि बोध्यम् । **कारिण** इति । शब्दा इति शेषः । **छिद्रेति** राजवर्णनम् । परस्य छिद्रान्वेषी । **स्तब्धः** अचञ्चलः । **घाताय** परेषां विनाशनाय । अत्र पुरुषशेफरूपाश्लीलार्थस्य प्रतीतिर्भवति । **कल्पनयेति** । भवन्तीति शेषः । **क्रमव्यत्यास** इति । रुचिङ्कुरु इति परिवर्तन इत्यर्थः । चिङ्कुर्नाम योन्यन्तर्वर्त्यङ्कुरः । **अधाक्षीदित्यादि** तिङन्तम् । **शृङ्गार इतीति** । ध्वन्यात्मन्येव शृङ्गार इत्यत्रत्यं शृङ्गारपदमित्यर्थः । भावं विवृणोति—**न त्वित्यादि** । **भिन्नवृत्तादिदोषेभ्यः विविक्तं** व्यत्यस्तम् अनित्यत्वम् । **एषां** श्रुतिदुष्टादीनाम् । **विषयविभागप्रदर्शनेन** विषयविभागं प्रदर्श्य, न तु प्रदर्शितमिति

१. वीरेऽश्लीलादीनामेव वर्जनेऽभिप्रायः । वीरस्य तु ओजोगुणवत्त्वेन श्रुतिकटोरस्तद्व्यञ्जकत्वेनानुकूल्यमेवेति बोध्यम् ।

तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये ।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ॥ १२ ॥

अङ्गितया व्यङ्ग्यो रसादिर्विवक्षितान्यपरवाच्यस्य ध्वनेरेक आत्मा य उक्तस्तस्याङ्गानां वाच्यवाचकानुपातिनामलङ्काराणां ये प्रभेदा निरवधयो ये च स्वगतास्तस्याङ्गिनोऽर्थस्य रसभावतदाभासतत्प्रशमलक्षणा विभावानुभावव्यभिचारिप्रतिपादनसहिता अनन्ताः स्वाश्रयापेक्षया निः-

लोचनम्

भिन्नवृत्तादिदोषेभ्यो विविक्तं प्रदर्शितम् । नापि गुणेभ्यो व्यतिरिक्तत्वम् । बीभत्सहास्यरौद्रादौ त्वेषामस्माभिरुपगमात् शृङ्गारादौ च वर्जनादनित्यत्वं च दोषत्वं च समर्थितमेवेति भावः ॥ ११ ॥

**अङ्गानामित्यलङ्काराणाम् । स्वगता** इति । आत्मगताः सम्भोगविप्रलम्भाद्या आत्मीयगता विभावादिगतास्तेषां लोष्टप्रस्तारेणाङ्गाङ्गिभावे का गणनेति भावः । **स्वाश्रयः** स्त्रीपुंसप्रकृत्यौचित्यादिः । परस्परं प्रेम्णा दर्शनमित्युपलक्षणं सम्भाषणादे-

बालप्रिया

सम्बन्धः । भिन्नवृत्तादिदोषा इव श्रुतिदुष्टादिदोषा अपि भामहादिभिरुक्ताः, न त्वेषामनित्यत्वमुक्तमित्यर्थः । **नाऽपि गुणेभ्यो व्यतिरिक्तत्वमिति** । एषामगुणत्वमपि नोक्तमित्यर्थः । **समर्थितमेवेति** । ध्वन्यात्मन्येवेत्यादिग्रन्थेन साधितमित्यर्थः । वृत्तौ 'शृङ्गारे वे'त्यादौ 'न चे'त्यस्यानुषङ्गः । 'हेया इत्युदाहृता' इत्यस्य 'तेऽपि न वाच्येऽर्थमात्रे' इत्यादिवाक्यत्रयेणापि सम्बन्धश्च बोध्यः ॥ ११ ॥

**अलङ्कारणा**मिति । अलङ्काराणां रसाद्यङ्गत्वमेवमुपपादितं काव्यप्रदीपोद्योते "रमणीया अप्यर्थास्तुच्छशब्देनाभिधीयमाना न तथा चमत्काराय इत्यनुप्रासादयः शब्दद्वारेण रसाद्युपकारकाः, उपमादयश्च रसाद्यभिव्यञ्जकविभावाद्यर्थोत्कर्षाधानद्वारेण रसाद्युपस्कारका अलङ्कारैराहितातिशयाश्वास्वादातिशयं जनयन्ति । अनुभूयते हि निरलङ्कारात्सालङ्कारे कश्चनातिशयः । अलङ्कारा हि विभावाद्युत्कर्षयन्तो बहुधोद्दीपनाः क्वचिदनुभावा अपि यथा नायकादिकृतनायिकादिवर्णन इत्यप्याहुरि"ति । 'स्वगता' इत्यत्र स्वपदमात्मपरमात्मीयपरं चेति व्याचष्टे—**आत्मगता** इत्यादि । आत्मगता इत्यस्यैव विवरणम्—**सम्भोगे**त्यादि । **आत्मीयगता** इत्यस्य **विभावादी**ति च । **तेषा**मिति । भेदानामित्यर्थः । **लोष्टप्रस्तारे**णेति । प्रस्तारो नाम वृत्तविशेषस्वरूपज्ञापकः प्रक्रियाभेदः । "पादे सर्वगुरा"वित्यादिना वृत्तरत्नाकरे लक्षितः, तद्रीत्या भेदानां गणनमशक्यमित्यर्थः । 'स्वाश्रयापेक्षये'त्यत्र स्वाश्रयपदं व्याचष्टे—**स्त्री**ति । स्त्रीपुंसरूपे ये प्रकृती तदौचित्यादीत्यर्थः । परस्परप्रेमदर्शनमित्येतद्व्याचष्टे—**परस्प-**

सीमानो विशेषास्तेषामन्योन्यसम्बन्धपरिकल्पने क्रियमाणे कस्यचिदन्यतमस्यापि रसस्य प्रकाराः परिसङ्ख्यातुं न शक्यन्ते किमुत सर्वेषाम्। तथा हि शृङ्गारस्याङ्गिनस्तावदाद्यौ द्वौ भेदौ—सम्भोगो विप्रलम्भश्च। सम्भोगस्य च परस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः प्रकाराः। विप्रल-

लोचनम्

रपि। सुरतं चातुःषष्टिकमालिङ्गनादि। विहरणमुद्यानगमनम्। आदिग्रहणेन जलक्रीडापानकचन्द्रोदयक्रीडादि। अभिलाषविप्रलम्भो द्वयोरप्यन्योन्यजीवितसर्वस्वाभिमानात्मिकायां रतावुत्पन्नायामपि कुतश्चिद्धेतोरप्राप्तसमागमत्वे मन्तव्यः। यथा 'सुखयतीति किमुच्यत' इत्यतः प्रभृति वत्सराजरत्नावल्योः, न तु पूर्वं रत्नावल्याः। तदा हि

बालप्रिया

रमिति। 'विप्रलम्भस्यापी'त्यादिग्रन्थं विवृणोति—**अभिलाषविप्रलम्भ** इत्यादि। **सुखयतीति किमुच्यत** इति। इदं रत्नावलीनाटिकायां विदूषकं प्रति वत्सराजस्य वचनम्। **न तु पूर्वं रत्नावल्या** इति। इत्यत इत्यस्यानुषङ्गः। एतद्वचनात्पूर्वं रत्नावल्या अभिलाषविप्रलम्भो नैवेत्यर्थः। एतद्वचनश्रवणेनैव राज्ञः स्वस्मिन्ननुरागस्य रत्नावल्या निश्चयादिति भावः। एतमेव हेतुं दर्शयन्नाह—तदेत्यादि। **तदा** पूर्वकाले।

---

१. 'आलिङ्गनचुम्बननखच्छेद्यदशनच्छेद्यसंवेशनसीत्कृतपुरुषायितौपरिष्टकानामष्टानामष्टधा विकल्पभेदादष्टावष्टकाश्चतुष्षष्टिरिति बाभ्रवीयाः' इति (२. २. ४) कामसूत्रम्। तत्रालिङ्गनमसम्प्रयोगकालिकं सम्प्रयोगकालिकञ्चेति द्विविधं सत् प्रत्येकं क्रमेण चतुर्विधम्—स्पृष्टकं, विद्धकं, उद्धृष्टकं, पीडितकम्; लतावेष्टितकं, वृक्षाधिरूढकं, क्षीरनीरञ्चेति। ललाटालककपोलनयनवक्षःस्तनोष्ठान्तर्मुखेषु अष्टसु स्थानेषु चुम्बनमष्टविधम्। आच्छुरितकमर्धचन्द्रो मण्डलं रेखा व्याघ्रनखं मयूरपदकं शशप्लुतकमुत्पलपत्त्रकमिति नखच्छेद्यमष्टविकल्पम्। गूढकमुच्छूनकं बिन्दुर्बिन्दुमाला प्रवालमणिर्मणिमाला खण्डाभ्रकं वराहचर्वितकमिति दशनच्छेद्यमष्टप्रकारम्। उत्फुल्लकं, विजृम्भितकं, इन्द्राणिकं, सम्पुटकं, पीडितकं, वेष्टितकं, वाडवकं, समपृष्ठं चेति संवेशनमष्टविधम्। हिङ्कारस्तनितकूजितरुदितसूत्कृतदूत्कृतफूत्कृतविरुतभेदेन सीत्कृतमष्टविधम्। उपसृप्तकं, मन्थनं, हुलोऽवमर्दनं, पीडितकं, निर्घातो, वाराहघातो, वृषाघातः, चटकविलसितञ्चेति पुरुषायितमष्टविधम्। निमितं, पार्श्वतो दष्टं, बहिस्सन्दंशः अन्तस्सन्दंशः, चुम्बितकं, परिमृष्टकं, आम्रचूषितकं, सङ्गर इत्यौपरिष्टकमष्टविधम्। एवं चतुष्षष्टिभेदभिन्नं सुरतं भवति। एतेषां लक्षणं कामसूत्रस्य द्वितीयाधिकरणे सविस्तरं निरूपितं तत एवावगन्तव्यम्, विस्तरभयान्नेह लिख्यते।

म्भस्याप्यभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः । तेषां च प्रत्येकं विभावानुभावव्यभिचारिभेदः । तेषां च देशकालाद्याश्रयावस्थाभेद इति स्वगतभेदापेक्षयैकस्य तस्यापरिमेयत्वम्, किं पुनरङ्गप्रभेदकल्पनायाम् । ते ह्यङ्गप्रभेदाः प्रत्येकमङ्गिप्रभेदसम्बन्धपरिकल्पने क्रियमाणे सत्यानन्त्यमेवोपयान्ति ।

लोचनम्

रत्यभावे कामावस्थामात्रं तत् । ईर्ष्याविप्रलम्भः प्रणयखण्डनादिना खण्डितया[1] सह । विरहविप्रलम्भः पुनः खण्डितया प्रसाद्यमानयापि प्रसादमगृह्णन्त्या ततः पश्चात्तापपरीतत्वेन विरहोत्कण्ठितया सह मन्तव्यः । प्रवासविप्रलम्भः प्रोषितभर्तृकया सहेति विभागः । आदिग्रहणाच्छापादिकृतः, विप्रलम्भ इव च विप्रलम्भः । वञ्चनायां ह्यभिलषितो विषयो न लभ्यते; एवमत्र । तेषां चेति । एकत्र सम्भोगादीनामपरत्र विभावादीनाम् । आश्रयो मलयादिः मारुतादीनां विभावानामिति यदुच्यते तद्देशशब्देन गतार्थम् । तस्मादाश्रयः कारणम् । यथा ममैव—

> दयितया ग्रथिता स्रगियं मया हृदयधामनि नित्यनियोजिता ।
> गलति शुष्कतयापि सुधारसं विरहदाहरुजां परिहारकम् ॥

तस्येति शृङ्गारस्य । अङ्गिनां रसादीनां प्रभेदैस्तत्सम्बन्धकल्पनेत्यर्थः ।

बालप्रिया

**रत्यभाव** इति निमित्ते सप्तमी । रतेरभावेन हेतुनेत्यर्थः । निश्चितपरस्पराधिष्ठाना हि रतिः शृङ्गारस्थायी । **कामावस्थामात्रं तदि**ति । रत्नावलीगता रतिः अभिलाषरूपैवेत्यर्थः । **प्रणयेति** । **प्रणयः** स्नेहः प्रार्थना वा । **खण्डितयेति** । खण्डितया सहेति सम्बन्धः । **प्रसाद्यमानये**त्यादि खण्डिताविशेषणम् । उक्तानामभिलाषादीनां वञ्चनार्थकविप्रलम्भपदेन व्यवहारमुपपादयति—**विप्रलम्भ इवेति** । विप्रलम्भशब्दो गौण इति भावः । द्वयोः साम्यमाह—**वञ्चनायामि**त्यादि । **एवमत्रेति** । तथा अभिलाषादावित्यर्थः । वृत्तौ 'तेषां च प्रत्येकमि'ति 'तेषां च देशे'त्युभयत्र स्थिते तेषामिति पदे क्रमेण विवृणोति—**एकत्रे**त्यादि । देशकालाश्रयावस्थाभेद इत्यत्राश्रयपदस्य केषाञ्चिद्व्याख्यानं न युक्तमित्याह—**आश्रय** इत्यादि । **तदि**त्यादि । तथार्थे सति पौनरुक्त्यं स्यादित्यर्थः । **दयितयेति** । शुष्कतयापीति च पाठः । हृदयतापातिशयेन शुष्कत्वम् । **सुधारसं गलति** स्रावयतीत्यतिशयोक्तिः । अत्रोद्दीपकत्वेन

---

१. 'पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता' ॥
इति खण्डिताया लक्षणम् ।

२. कलहान्तरितयेत्यर्थः । तल्लक्षणं यथा—'चाटुकारमपि प्राणनाथं रोषादपास्य या पश्चात्तापमवाप्नोति कलहान्तरिता तु सा' इति ।

दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम् ।
बुद्धिरासादितालोका सर्वत्रैव भविष्यति ॥ १३ ॥

दिङ्मात्रकथनेन हि व्युत्पन्नानां सहृदयानामेकत्रापि रसभेदे सहालङ्कारैरङ्गाङ्गिभावपरिज्ञानादासादितालोका बुद्धिः सर्वत्रैव भविष्यति ।

तत्र—

शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान् ।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥ १४ ॥

अङ्गिनो हि शृङ्गारस्य ये उक्ताः प्रभेदास्तेषु सर्वेष्वेकप्रकारानुबन्धितया प्रबन्धेन प्रवृत्तोऽनुप्रासो न व्यञ्जकः । अङ्गिन इत्यनेनाङ्गभूतस्य शृङ्गारस्यैकरूपानुबन्ध्यनुप्रासनिबन्धने कामचारमाह ।

ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।

लोचनम्

येनेति । दिङ्मात्रोक्तेनेत्यर्थः । सचेतसामिति । महाकवित्वं सहृदयत्वं च प्रेप्सूनामिति भावः । सर्वत्रेति । सर्वेषु रसादिष्वासादित आलोकोऽवगमः सम्यग्व्युत्पत्तिर्ययेति सम्बन्धः ॥ १३ ॥

तत्रेति । वक्तव्ये दिङ्मात्रे सतीत्यर्थः । यत्नादिति । यत्नतः क्रियमाणत्वादिति हेत्वर्थोऽभिप्रेतः । एकरूपं त्वनुबन्धं त्यक्त्वा विचित्रोऽनुप्रासो निबध्यमानो न दोषायेत्येकरूपग्रहणम् ॥ १४ ॥

यमकादीत्यादिशब्दः[2] प्रकारवाची । दुष्करं मुरजचक्रबन्धादि । शब्दभङ्गेन

बालप्रिया

विरहपीडाहेतुभूताया अपि स्रजो दयिताग्रथनरूपकारणविशेषाद्विरहपीडापरिहारकसुधारसस्रावकत्वमुक्तमिति कारणकृतो भेदः ॥ १२ ॥

कारिकां व्याचष्टे—येनेत्यादि । सचेतसामित्यनेन प्रकृते विवक्षितमाह—महेत्यादि । येनेत्यस्य विवरणं वृत्तौ—'दिङ्मात्रकथनेने'ति । अस्यैव विवरणमुपपादकं वा 'व्युत्पन्नानामि'त्यादि 'परिज्ञानादि'त्यन्तम् ॥ १३ ॥

हेत्वर्थ इति । यत्नतः क्रियमाणत्वमप्रकाशकत्वे हेतुरिति भावः । 'एकरूपानुबन्धवानि'त्यत्रैकरूपग्रहणस्य फलमाह—एकेत्यादि ॥ १४ ॥

१. व्युत्पत्तिश्च प्रकृतवक्तृसमवेततात्पर्यविषयार्थगोचरो दृढतरस्संस्कारः ।
२. 'आदिशब्दन्तु मेधावी चतुर्ष्वर्थेषु भाषते ।
प्रकारे च व्यवस्थायां समीपेऽवयवे तथा' ॥ इत्यभियुक्ताः ।

**शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥ १५ ॥**

ध्वनेरात्मभूतः शृङ्गारस्तात्पर्येण वाच्यवाचकाभ्यां प्रकाश्यमानस्तस्मिन्यमकादीनां यमकप्रकाराणां निबन्धनं दुष्करशब्दभङ्गश्लेषादीनां शक्तावपि प्रमादित्वम्। 'प्रमादित्वा'मित्यनेनैतद्दर्श्यते—काकतालीयेन कदाचित्कस्यचिदेकस्य यमकादेर्निष्पत्तावपि भूम्नालङ्कारान्तरवद्रसाङ्गत्वेन निबन्धो न कर्तव्य इति। 'विप्रलम्भे विशेषत' इत्यनेन विप्रलम्भे सौकुमार्यातिशयः ख्याप्यते। तस्मिन्द्योत्ये यमकादेरङ्गस्य निबन्धो नियमान्न कर्तव्य इति।

अत्र युक्तिरभिधीयते—

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥ १६ ॥**

लोचनम्

श्लेष इति। अर्थश्लेषो न दोषाय 'रक्तस्त्वं' इत्यादौ; शब्दभङ्गोऽपि क्लिष्ट एव दुष्टः, न त्वशोकादौ ॥ १५ ॥

युक्तिरिति। सर्वव्यापकं वस्त्वित्यर्थः। रसेति। रससमवधानेन विभावादिघ-

बालप्रिया

वृत्तौ 'यमकादीनामि'त्यस्य व्याख्यानं 'यमकप्रकाराणामि'ति। अस्योपपत्तिमाह—**आदिशब्द** इति। यमकप्रकाराणामित्यस्यैव विवरणम्—'दुष्करे'त्यादि। तद्व्याचष्टे—**दुष्करमित्यादि**। शब्दभङ्गश्लेषेत्युक्तेः फलमाह—**अर्थश्लेष** इति। अभङ्गश्लेष इत्यर्थः। अभङ्गश्लेषोऽर्थश्लेषश्च प्राचां मते एक एवेति स्फुटं काव्यप्रदीपादौ। **रक्तस्त्वमिति**। अत्र रक्तशिलीमुखादिपदेऽर्थश्लेषः। **न त्वशोकादाविति**। अशोकादिपदे शब्दभङ्गो न दुष्ट इत्यर्थः। अशोकपदं रूढ्या वृक्षविशेषं शब्दभङ्गेन नास्ति शोको यस्येति योगव्युत्पत्त्या शोकरहितं च वक्तीति भावः। वृत्तौ—'शक्तावपि प्रमादित्वमि'ति। "अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवे"रिति वक्ष्यमाणत्वेन दोषतिरोधायकशक्तौ सत्यामपि कवेः प्रमादित्वस्य ज्ञापकं भवतीत्यर्थः। 'काकतालीयेने'त्यादि। भूम्ना यमकादिनिबन्धनस्यैव प्रमादित्वज्ञापकत्वेनाकर्तव्यत्वात्कदाचित्कस्यचिदेकस्य यमकादेर्निष्पत्तिर्न दोषावहेति भावः ॥ १५ ॥

यथाश्रुतयुक्तिपदार्थस्यात्र बोधात्तत्पदं व्याचष्टे—**सर्वेत्यादि**। 'रसे'ति 'ध्वनावि'ति च सामान्योक्तेः तात्पर्यं दर्शयन् कारिकां व्याचष्टे—**रसेत्यादि**। रसाक्षिप्ततयेत्यादेरर्थतो विवरणम्—**रससमवधानेनेत्यादि**। **तन्नान्तरीयकतयेति**। तत्पदेन विभावादिघटना परामृश्यते तन्निष्पादकयत्ननिष्पाद्यत्वेनेत्यर्थः। **यमिति**।

निष्पत्तावाश्चर्यभूतोऽपि यस्यालङ्कारस्य रसाक्षिप्ततयैव बन्धः शक्य-

लोचनम्

टनामेव कुर्वंस्तन्नान्तरीयकतया यमासादयति स एवात्रालङ्कारो रसमार्गे, नान्यः। तेन वीराद्भुतादिरसेष्वपि यमकादि कवेः प्रतिपत्तुश्च रसविघ्नकार्येव सर्वत्र। गड्डुरिकाप्रवाहोपहतसहृदयधुराधिरोहणविहीनलोकावर्जनाभिप्रायेण तु मया शृङ्गारे विप्रलम्भे च विशेषत इत्युक्तमिति भावः। तथा च 'रसेऽङ्गत्वं तस्मादेषां न विद्यते' इति सामान्येन वक्ष्यति। **निष्पत्ता**विति। प्रतिभानुग्रहात्स्वयमेव सम्पत्तौ निष्पादनानपेक्षायामित्यर्थः। **आश्चर्यभूत** इति। कथमेष निबद्ध इत्यद्भुतस्थानम्। करकिसलयन्यस्तवदना श्वासतान्ताधरा प्रवर्तमानबाष्पभरनिरुद्धकण्ठी अविच्छिन्नरुदितवल्गत्कुचतटा रोषमपरित्यजन्ती चाद्यक्त्या यावत्प्रसाद्यते तावदीर्ष्याविप्रलम्भगतानुभावचर्वणावहितचेतस एव वक्तुः श्लेषरूपकव्यतिरेकाद्या अयत्ननिष्पन्नाश्चर्वयितुरपि न रसचर्वणाविघ्नमा-

बालप्रिया

यमलङ्कारमित्यर्थः। 'स एवात्र रसमार्गेऽलङ्कार' इति सम्बन्धः। ध्वनावित्यस्य विवरणम्—**अत्र रसमार्ग** इति। अलक्ष्यक्रमे रससामान्य इत्यर्थः। **तेने**ति। ध्वनाविति सामान्यनिर्देशेनेत्यर्थः। **वीरे**त्यादि। तत्काव्येष्वित्यर्थः। 'यमकादिरसविघ्नकार्ये वे'ति योजना। सर्वत्रेत्यस्य वीरेत्यादिना सम्बन्धः। नन्वेवं पूर्वोक्तं विरुद्धयेतेत्यत आह—**गड्डुरिके**ति। गड्डुरं मेषमनुधावतीति गड्डुरिका मेषानुगन्त्री मेषपङ्क्तिः, तत्साम्याद्गतानुगतिकतेत्यर्थः। तस्याः प्रवाहेण अविच्छेदेन उपहताः नष्टविवेकाः तथा सहृदयधुराधिरोहणेन विहीनाश्च ये लोकाः जनास्तदावर्जनाभिप्रायेणेत्यर्थः। **मये**ति। मूलकृतेत्यर्थः। **भावः** मूलकृदभिप्रायः। उक्तार्थे उपष्टम्भकमाह—**तथाचे**ति। **सम्पत्तौ** उत्पत्तौ। स्वयमेवेत्यस्यैव विवरणम्—**निष्पादने**त्यादि। तन्निष्पत्त्यनुकूलयत्नान्तरानपेक्षायामित्यर्थः। 'कपोल' इत्यादेः सारार्थं विवृण्वन्नलङ्कारान् दर्शयति—**करे**त्यादि। **श्वासे**ति। श्वासेन तान्तः म्लानोऽधरो यस्याः सा। **अविच्छिन्ने**ति। विच्छिन्नविच्छिन्नेति च पाठः। **प्रसाद्यत** इति। वक्त्रा नायकेन प्रणयकुपिता नायिकेति शेषः। **ईर्ष्ये**त्यादि। अनुभावो निश्वासादिः तस्य चर्वणा पुनः पुनरनुसन्धानम्। **वक्तु**रिति। कविनिबद्धनायकस्य कवेश्चैवेयं विवक्षित्वोक्तिः। 'अयत्ननिष्पन्ना' इत्यनेनास्य सम्बन्धः। **श्लेषे**त्यादि। अधररस इत्यत्र रसशब्दस्यास्वाद्यमाधुर्योभयार्थकत्वात्तत्र श्लेषः। यद्वा श्लोकेऽस्मिन्नर्थश्लेषः। यतः, मन्युः प्रिय इति रूपकं, कपोल इत्याद्यर्थस्तत्साधकः, करतलनिरोधादिना मर्दनादिक्रियां प्रति प्रयोजककर्तृत्वं मन्युप्रियोभयसाधारणम्। 'निपीत' इत्यन्तर्भावितण्यर्थकम्। 'बाष्प' इत्यस्य बाष्पात्मा मन्युरित्यर्थश्च। वयन्तु न प्रिया इति व्यतिरेकः। आद्यपदेनानुप्रासो गृह्यते। **चर्वयितु**रिति। सहृदयस्येत्यर्थः। न आदधतीति सम्बन्धः। **लक्षणं** नाम लक्ष्यतावच्छेदकव्यापकः तद्व्याप्यश्च धर्मः।

क्रियो भवेत्सोऽस्मिन्नलक्ष्यक्रमव्यङ्ग्ये ध्वनावलङ्कारो मतः। तस्यैव रसाङ्गत्वं मुख्यमित्यर्थः।

यथा—

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः।
मुहुः कण्ठे लग्नस्तरलयति बाष्पस्तनतटीं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम्॥

रसाङ्गत्वे च तस्य लक्षणमपृथग्यत्ननिर्वर्त्यत्वमिति यो रसं बन्धुमध्यवसितस्य कवेरलङ्कारस्तां वासनामत्यूह्य यत्नान्तरमास्थितस्य निष्पद्यते स न रसाङ्गमिति। यमके च प्रबन्धेन बुद्धिपूर्वकं क्रियमाणे नियमेनैव यत्नान्तरपरिग्रह आपतति शब्दविशेषान्वेषणरूपः। अलङ्कारान्तरेष्वपि तत्तुल्यमिति चेत्—नैवम्; अलङ्कारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रससमा-

लोचनम्

दधतीति। लक्षणमिति। व्यापकमित्यर्थः। 'प्रबन्धेन क्रियमाण' इति सम्बन्धः। अत एव बुद्धिपूर्वकत्वमवश्यम्भावीति बुद्धिपूर्वकशब्द उपात्तः। रससमवधानादन्यो यत्नो यत्नान्तरम्। निरूप्यमाणानि सन्ति दुर्घटनानि। बुद्धिपूर्वं चिकीर्षितान्यपि कर्तुमशक्यानीत्यर्थः। तथा निरूप्यमाणे दुर्घटनानि कथमेतानि रचितानीत्येवं विस्मयावहा-

बालप्रिया

प्रकृते तत्पदेन व्यापकमात्रं विवक्षितमित्याह—व्यापकमित्यर्थ इति। ज्ञापकमित्यर्थ इति पाठेन भाव्यमिति केचित्। अपृथग्यत्ननिर्वर्त्यत्वमलङ्कारस्य रसाङ्गत्वव्यापकमिति 'रसाङ्गत्व' इत्यादि वृत्त्यर्थ इति भावः। उक्तमर्थं साधयितुं व्यतिरेकं दर्शयति वृत्तौ-'यो रसमि'त्यादि। योऽलङ्कारो निष्पद्यत इत्यन्वयः। 'तां वासना' मि'ति। रसबन्धाध्यवसायवासनामित्यर्थः। 'अत्यूह्य' अतिलङ्घ्य परित्यज्येति यावत्। 'आस्थितस्य' आश्रितवतः। कवेरित्यनेनास्य सम्बन्धः। 'स न रसाङ्गमि'ति। तस्मिन्नलङ्कारे रसाङ्गत्वं नास्तीत्यर्थः। यमकादिनिबन्धे यत्नान्तरमावश्यकमित्याह—'यमक' इत्यादि। 'प्रबन्धेन' अविच्छेदेन। अस्य 'बुद्धिपूर्वकमि'त्यनेनान्वयभ्रमः स्यादतोऽन्वयं दर्शयति लोचने—क्रियमाण इति। यत्नान्तरपरिग्रह इत्यत्र यत्नान्तरपदं विवृणोति—रसेत्यादि। रससमवधानात् रसनिष्पादकात्। निरूप्यमाणदुर्घटनानीत्येतत्प्रकृतानुगुण्येन द्वेधा व्याचष्टे—निरूप्यमाणानीत्यादि। कर्तुम-

हितचेतसः प्रतिभानवतः कवेरहम्पूर्विकया परापतन्ति । यथा कादम्बर्यां कादम्बरीदर्शनावसरे । यथा च मायारामशिरोदर्शनेन विह्वलायां सीतादेव्यां [1]सेतौ । युक्तं चैतत्, यतो रसा वाच्यविशेषैरेवाक्षेप्तव्याः । तत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्यविशेषा एव रूपकादयोऽलङ्काराः । तस्मान्न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ । यमकदुष्करमार्गेषु तु तत्स्थितमेव । यत्तु रसवन्ति कानिचिद्यमकादीनि दृश्यन्ते, तत्र रसादीनामङ्गता यमकादीनां त्वङ्गितैव । रसाभासे चाङ्गत्वमप्यविरुद्धम् । अङ्गितया तु व्यङ्ग्ये रसे नाङ्गत्वं पृथक्प्रयत्ननिर्वर्त्यत्वाद्यमकादेः ।

अस्यैवार्थस्य सङ्ग्रहश्लोकाः—

रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित् ।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥
यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते ।
शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते ॥
रसाभासाङ्गभावस्तु यमकादेर्न वार्यते ।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते ॥

लोचनम्

नीत्यर्थः । अहम्पूर्वः अग्र्य इत्यर्थः । अहमादावहमादौ प्रवर्त इत्यर्थः । अहम्पूर्व इत्यस्य भावोऽहम्पूर्विका । अहमिति निपातो विभक्तिप्रतिरूपकोऽस्मदर्थवृत्तिः । एतदिति । अहंपूर्विकया परापतनमित्यर्थः । कानिचिदिति । कालिदासादिकृतानीत्यर्थः । शक्तस्यापि पृथग्यत्नो जायत इति सम्बन्धः । एषामिति । यमकादीनाम् । 'ध्वन्यात्मभूते शृङ्गारे इति यदुक्तं तत् प्राधान्येनार्धश्लोकेन सङ्गृह्णीते ध्वन्यात्मभूत इति॥ १६॥

बालप्रिया

शक्यानीत्यत्र कवेरिति, विस्मयावहानीत्यत्र सहृदयस्येति च शेषः । अहम्पूर्विकयेत्येतद्व्याचष्टे—अहमित्यादि । पूर्व इत्यस्य व्याख्या अग्र्य इति । पर्यवसितमाह—अहमादावित्यादि । वृत्तौ 'तत्प्रतिपादकैश्च शब्दै'रिति । आक्षेप्तव्या इत्यनेनास्य सम्बन्धः । 'तत्प्रकाशिन' इति । अत्र तत्पदेन शब्दस्य परामर्शः । 'तेषामि'ति । रूपकादीनामित्यर्थः । 'तदि'ति । बहिरङ्गत्वमित्यर्थः । 'रसाभावे चाङ्गत्व'मिति । यमकादीनामित्यनुषङ्गः । उक्तानर्थान् वृत्तिकारः श्लोकैः सङ्गृह्णाति—'रसवन्ती'त्यादि । 'महाकवेरेकेन प्रयत्नेनैव तथाविधानि वस्तूनि निर्वर्त्यन्ते' इत्यन्वयः । लोचनेऽन्वयं दर्शयति—शक्तस्यापीति ॥ १६ ॥

1. सेतौ सेतुबन्धकाव्य इत्यर्थः ।

इदानीं ध्वन्यात्मभूतस्य शृङ्गारस्य व्यञ्जकोऽलङ्कारवर्ग आख्यायते—

ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥ १७ ॥

अलङ्कारो हि बाह्यालङ्कारसाम्यादङ्गिनश्चारुत्वहेतुरुच्यते। वाच्यालङ्कारवर्गश्च रूपकादिर्यावानुक्तो वक्ष्यते च कैश्चित्, अलङ्काराणामनन्तत्वात्।

स सर्वोऽपि यदि समीक्ष्य विनिवेश्यते तदलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिनः सर्वस्यैव चारुत्वहेतुर्निष्पद्यते।

एषा चास्य विनिवेशने समीक्षा—

विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥ १८ ॥
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।

लोचनम्

**इदानीमिति**। हेयवर्ग उक्तः, उपादेयवर्गस्तु वक्तव्य इति भावः। **व्यञ्जक इति**। यश्च यथा चेत्यध्याहारः। **यथार्थतामिति**। चारुत्वहेतुतामित्यर्थः। **उक्त इति**। भामहादिभिरलङ्कारलक्षणकारैः। वक्ष्यते चेत्यत्र हेतुमाह—**अलङ्काराणामनन्तत्वादिति**। प्रतिभानन्त्यात् अन्यैरपि भाविभिः कैश्चिदित्यर्थः ॥ १७ ॥

**समीक्ष्येति**। समीक्ष्येत्यनेन शब्देन कारिकायामुक्तेति भावः। श्लोकपादेषु चतुर्षु श्लोकार्धे चाङ्गत्वसाधनमिदम्; रूपकादिरिति प्रत्येकं सम्बन्धः। यमलङ्कारं तदङ्गतया विवक्षति नाङ्गित्वेन, यमवसरे गृह्णाति, यमवसरे त्यजति, यं नात्यन्तं निर्वोढुमिच्छति, यं यत्नादङ्गत्वेन प्रत्यवेक्षते, स एवमुपनिबध्यमानो रसाभिव्यक्तिहेतुर्भवतीति विततं महावाक्यम्। तन्महावाक्यमध्ये चोदाहरणावकाशमुदाहरणस्वरूपं तद्योजनं तत्समर्थनं च निरूपयितुं ग्रन्थान्तरमिति वृत्तिग्रन्थस्य सम्बन्धः।

बालप्रिया

**यश्चेति**। योऽलङ्कारो यथा व्यञ्जकः, तथा आख्यायत इत्यर्थ इति भावः। 'यथार्थतामि'त्यस्यान्वर्थतामित्यर्थं दर्शयति—**चारुत्वेति**। अलङ्काराणामनन्तत्वात्कैश्चिदित्यस्य विवरणम्—**प्रतिभानन्त्यादन्यैरित्यादि** ॥ १७ ॥

'एषा समीक्षे'ति वृत्तावुक्तं, समीक्षायाः कोऽत्र प्रस्ताव इत्यत आह लोचने—**समीक्ष्येत्यादि**। **समीक्ष्येत्यनेनेति**। 'समीक्ष्य विनिवेशित' इत्यत्र समीक्ष्यशब्देनेत्यर्थः। कारिकाद्वयसारार्थकथनपूर्वकं पूर्वापरग्रन्थसम्बन्धं दर्शयति—**यमलङ्कारमि**-

रूपकादिरलङ्कारवर्गस्याङ्गत्वसाधनम् ॥ १९ ॥

रसबन्धेष्वत्यादृतमनाः कविर्यमलङ्कारं तदङ्गतया विवक्षति । यथा—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥

अत्र हि भ्रमरस्वभावोक्तिरलङ्कारो रसानुगुणः ।

लोचनम्

**चलापाङ्गा**मिति । हे मधुकर, वयमेवंविधाभिलाषचाटुप्रवणा अपि तत्त्वान्वेषणाद्वस्तुवृत्तेऽन्विष्यमाणे हता आयासमात्रपात्रीभूता जाताः । त्वं **खल्विति** निपातेनायत्नसिद्धं तवैव चरितार्थत्वमिति शकुन्तलां प्रत्यभिलाषिणो दुष्यन्तस्येयमुक्तिः । तथाहि-कथमेतदीयकटाक्षगोचरा भूयास्म, कथमेषास्मदभिप्रायव्यञ्जकं रहोवचनमाकर्ण्यात् ,कथं नु हठादनिच्छन्त्या अपि परिचुम्बनं विधेयास्मेति यदस्माकं मनोराज्यपदवीमधिशेते तत्तवायत्नसिद्धम् । भ्रमरो हि नीलोत्पलधिया तदाशङ्काकरीं दृष्टिं पुनःपुनः स्पृशति । श्रवणावकाशपर्यन्तत्वाच्च नेत्रयोरुत्पलशङ्कानपगमात्तत्रैव दन्ध्वन्यमान आस्ते । सहजसौकुमार्यत्रासकातरायाश्च रतिनिधानभूतं विकसितारविन्दकुवलयामोदमधुरमधरं पिबतीति भ्रमरस्वभावोक्तिरलङ्कारोऽङ्गतामेव प्रकृतरसस्योपगतः । अन्ये तु भ्रमरस्वभावे

बालप्रिया

त्यादि । **चलापाङ्गा**मिति । श्लोकोऽयमस्माभिः शाकुन्तलव्याख्यायां सविस्तरं व्याख्यातः । वयमित्यनेन गम्यमर्थमाह—**एवमि**त्यादि । एवंविधाः वक्ष्यमाणाः अभिलाषा येषां ते । चाटौ चाटुवचने प्रवणास्तत्पराश्च । **अयत्ने**त्यादि व्यङ्ग्यार्थकथनम् । 'कथमि'त्यादि 'सिद्धमि'त्यन्तं दुष्यन्तवचनरूपेण निर्दिष्टम् । **भ्रमरो ही**त्यादिव्याख्यातुर्वचनम् । **तत्रैव** श्रवणावकाशे एव । **दन्ध्वन्यमान** इति । अतिशयेन ध्वनिं कुर्वन्नित्यर्थः । 'भ्रमरस्वभावोक्ति'रित्यादिग्रन्थमर्थतो व्याचष्टे—**इति भ्रमरस्वभावोक्ति**रित्यादि । समासोक्तिव्यतिरेकयोः सत्वेऽप्यत्र स्वभावोक्तेः पुरस्फूर्तिकत्वात्तन्मात्रमुक्तम् । **प्रकृतरसस्ये**ति । विप्रलम्भस्येत्यर्थः । **अङ्गतामेवोपगत** इति ।

१. 'चलापाङ्गं दृष्टः स्पृशसि' इत्यपि पाठ उपलभ्यते । सोऽपि साधीयान् । अत एव 'वेपथुमतीं इत्यस्य शकुन्तलया सहान्वयोऽपि स्वारसिकस्सम्पद्यते ।

२. भ्रमरं प्रतीति शेषः । 'शकुन्तलां प्रती'त्यस्य 'अभिलाषिण' इत्यनेनैवान्वयः । शकुन्तलामभिलषत इत्यर्थः ।

३. अभिलाषविप्रलम्भस्येत्यर्थः

'नाङ्गित्वेने'ति न प्राधान्येन। कदाचिद्रसादितात्पर्येण विवक्षितोऽपि ह्यलङ्कारः कश्चिदङ्गित्वेन विवक्षितो दृश्यते। यथा—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्॥

अत्र हि पर्यायोक्तस्याङ्गित्वेन विवक्षा रसादितात्पर्ये सत्यपीति।

लोचनम्

उक्तिर्यस्येति भ्रमरस्वभावोक्तिरत्र रूपकव्यतिरेक इत्याहुः।

**चक्राभिघात** एव प्रसभाज्ञा अलङ्घनीयो नियोगस्तया यो राहुदयितानां रतोत्सवं चुम्बनमात्रशेषं चकार। यत आलिङ्गनमुद्दामं प्रधानं येषु विलासेषु तैर्वन्ध्यः शून्योऽसौ रतोत्सवः। अत्राह कश्चित्—'पर्यायोक्तमेवात्र कवेः प्राधान्येन विवक्षितं, न तु रसादि। तत्कथमुच्यते रसादितात्पर्ये सत्यपी'ति। मैवम्; वासुदेवप्रतापो ह्यत्र विवक्षितः। स चात्र चारुत्वहेतुतया न चकास्ति, अपि तु पर्यायोक्तमेव। यद्यपि चात्र काव्ये न काचिद्दोषाशङ्का, तथापि दृष्टान्तवदेतत्—यत्प्रकृतस्य पोषणीयस्य स्वरूपतिरस्कारकोऽङ्गभूतोऽप्यलङ्कारः सम्पद्यते। ततश्च क्वचिदनौचित्यमागच्छती-

बालप्रिया

तथाविधभ्रमरचेष्टायाः कामोद्दीपकत्वादिति भावः। **रूपकेति**। रूपकसहितो व्यतिरेको रूपकव्यतिरेकः, भ्रमरे नायकत्वारोपाद्रूपकं, चतुर्थपादे व्यतिरेकश्च। वस्तुतोऽत्र न रूपकं, किन्तु समासोक्तिरित्याशयेनास्वरससूचनाय **अन्य** इति। वृत्तौ 'अङ्गित्वेने'त्यस्य विवरणम्—'प्राधान्येने'ति। 'कदाचिदि'ति। क्वचित्काव्ये इत्यर्थः।

लोचने—**चक्रेत्यादि**। चक्रेणाभिघातः अभितो हननं स एव। **न तु रसादीति**। 'प्राधान्येन विवक्षितमि'त्यस्यानुषङ्गः। **रसादितात्पर्ये सत्यपीति** वृत्तिग्रन्थानुवादः। प्रतिवक्ति—**मैवमित्यादि**। **विवक्षित** इति। प्राधान्येनेति शेषः। तथाचात्र वीररसे तात्पर्यमस्तीति भावः। विशेषमाह—**स चेति**। **अपि तु पर्यायोक्तमेवेति**। चारुत्वहेतुतया चकास्तीत्यस्यानुषङ्गः। शङ्कते—**यद्यपीत्यादि**। **न कदाचिद्दोषाशङ्केति**। चमत्कारविघातकं किमपि न शङ्कनीयमित्यर्थः। तथा च पर्यायोक्तस्य प्राधान्येऽपि न क्षतिरिति भावः। समाधत्ते—**तथापीत्यादि**। **दृष्टान्तवदिति**। दृष्टान्तेन तुल्यमित्यर्थः। **एतदिति**। चक्रेत्याद्युदाहरणमित्यर्थः। भावं विवृणोति—**यदित्यादि**। 'अङ्गभूतोऽप्यलङ्कारः पोषणीयस्य प्रकृतस्य स्वरूपतिरस्कारकस्सम्पद्यते यदि'ति सम्बन्धः। क्वचिदिति शेषः। तत्र दृष्टान्तः प्रकृतश्लोक इति भावः। ततः किमत आह—**ततश्चेति**। **क्वचिदनौचित्यमिति**। अस्योदाहरणं "त्रस्तः स्रग्दामशोभा"मित्यादिकं काव्यानुशासनादावुक्तम्। उपष्टम्भकमाह—

अङ्गत्वेन विवक्षितमपि यमवसरे गृह्णाति नानवसरे । अवसरे गृहीतिर्यथा—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥

लोचनम्

त्ययं ग्रन्थकृत आशयः । तथा च ग्रन्थकार एवमग्रे दर्शयिष्यति । महात्मनां दूषणोद्घोषणमात्मन एव दूषणमिति नेदं दूषणोदाहरणं दत्तम् ।

उद्दामा उद्गताः कलिका यस्याः । उत्कलिकाश्च रुहरुहिकाः । क्षणात्तस्मिन्नेवावसरे प्रारब्धा जृम्भा विकासो यया । जृम्भा च मन्मथकृतोऽङ्गमर्दः । श्वसनोद्गमैर्वसन्तमारुतोल्लासैरात्मनो लतालक्षणस्यायासमायासनमान्दोलनयत्नमातन्वतीम् । निःश्वासपरम्पराभिश्चात्मन आयासं हृदयस्थितं सन्तापमातन्वतीं प्रकटीकुर्वाणाम् । सह मदनाख्येन वृक्षविशेषेण मदनेन कामेन च । अत्रोपमाश्लेषः ईर्ष्याविप्रलम्भस्य भाविनो मार्गपरिशोधकत्वेन स्थितस्तच्चर्वणाभिमुख्यं कुर्वन्नवसरे रसस्य प्रमुखीभावदशायां पुरःसरायमाणो गृहीत इति भावः । अभिनयोऽप्यत्र प्राकरणिके प्रतिपदम् । अप्राकर-

बालप्रिया

**तथा चे**ति । कथं दर्शयिष्यतीत्यत्राह—**महात्मनामि**त्यादि **दत्तमि**त्यन्तम् ।

**उद्दामे**ति । रत्नावलीनाटिकास्थमिदम् । स्वपरिगृहीतां नवमालिकालतां दोहदविशेषेण पुष्पितामवगतवतो वत्सराजस्य नर्मसचिवं प्रति वचनम् । 'अहमद्य इमामुद्यानलतामन्यां नारीमिव पश्यन् देव्या मुखं कोपविपाटलद्युति करिष्यामी'त्यन्वयः । मयि अन्यनारीमिव पुष्पितां मदीयलतां पश्यति, तत्पश्यन्त्या स्वपरिगृहीतमाधवीलतायाः पुष्पोद्गमाभावेन जनितकोपाया वासवदत्ताया मुखमाताम्रद्युति यथा भविष्यति तथा करिष्यामीत्यर्थः । ध्रुवमिति निश्चये । उत्तरार्धस्य स्पष्टार्थकत्वं मन्यमानः पूर्वार्धं व्याचष्टे—**उद्दामा** इत्यादि । **उद्दामाः** उद्भटाः, यद्वा बह्वयः । नारीपक्षे व्याचष्टे—**उत्कलिकाश्चे**ति । **रुहरुहिकाः** उत्कण्ठाः । **आयासनमि**त्यस्यैव विवरणम्—**आन्दोलने**ति । वृत्तौ 'इत्यत्रोपमाश्लेषस्ये'त्युक्तं विवृणोति—**अत्रे**त्यादि । उपमासहितः श्लेष उपमाश्लेषः । **ईर्ष्ये**ति । वासवदत्तागतेर्ष्येत्यर्थः । **भाविन** इति । द्वितीयाङ्कावसाने वर्णयिष्यमाणस्येत्यर्थः । **मार्गे**त्यादि । व्यञ्जकत्वेनेत्यर्थः । **तच्चर्वणे**ति । सहृदयानामिति शेषः । 'अवसर' इत्यस्य व्याख्यानम्—**रसस्ये**त्यादि । रसस्य रसचर्वणायाः । **पुरःसरायमाणः** पुरस्सरतुल्यः । नटशिक्षार्थमाह—**अभिनय** इत्यादि । **अप्राकरणिक** इति । नारीरूपाप्रकृतार्थ इत्यर्थः ।

इत्यत्र उपमा श्लेषस्य ।

गृहीतमपि च यमवसरे त्यजति तद्रसानुगुणतयालङ्कारान्तरापेक्षया । यथा—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि ।
कान्तापादतलाहतिस्तव[1] मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥

लोचनम्

णिके तु वाक्यार्थाभिनयेनोपाङ्गादिना । न तु सर्वथा नाभिनय इत्यलमवान्तरेण । ध्रुवशब्दश्च भावीर्ष्यावकाशप्रदानजीवितम् ।

रक्तो लोहितः । अहमपि रक्तः प्रबुद्धानुरागः । तत्र च प्रबोधको विभावस्तदीयपल्लवराग इति मन्तव्यम् । एवं प्रतिपादमाद्योऽर्थो विभावत्वेन व्याख्येयः । अत एव हेतुश्लेषोऽयम् । सहोक्त्युपमाहेत्वलङ्काराणां हि भूयसा श्लेषानुग्राहकत्वम् । अनेनैवा-

बालप्रिया

**उपाङ्गादिनेति** । अभिनय इत्यनुषज्यते ।

**प्रबुद्धानुराग** इति । प्रियाया गुणैरनुरक्तोऽहमुद्बुद्धानुराग इति तन्त्रादिना अर्थ इति भावः । कः प्रबोधक इत्यत्र व्याख्यातामाह—**तत्र** चेत्यादि । **विभाव** इति । उद्दीपनविभाव इत्यर्थः । **तदीयेति** । अशोकसम्बन्धीत्यर्थः । **प्रतिपादमिति** । द्वितीये तृतीये च पाद इत्यर्थः । **विभावत्वेनेति** । उद्दीपनविभावत्वेनेत्यर्थः । **व्याख्येय** इति । यतस्त्वां स्मरधनुर्मुक्ताः त्यक्तान्यपुष्पाः, शिलीमुखाः भ्रमरा आयान्ति, ततो मामपि तथा स्मरधनुर्मुक्ताः कामचापान्निर्गताः शिलीमुखाः शरा आयान्ति । 'कान्ते'त्यादि । यद्यप्यत्र कान्तापादतलेनाहतिः तव मुदे पुष्पविकासाय भवति, तद्वत्तथा कान्तापादतलाहतिः रतबन्धविशेषः मम मुदे सन्तोषाय भवतीति यथाश्रुतार्थः, तथापि स्वकान्तापादतलाहननेनाशोकस्य पुष्पविकासे सति नायकस्य सन्तोषो भवतीति यतस्तव मुदे ततो ममापि मुदे इति हेतुत्वेन व्याख्येय इति भावः ।

---

१. स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलस्सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् ।
मन्दारो नर्मवाक्यात् पटु मधुहसनाच्चम्पको वक्त्रवाता-
च्चूतो गीतान्नमेरुर्विकसति च पुरोनर्तनात्कर्णिकारः ॥

इति श्लोकोऽत्रानुसन्धेयः ॥

अत्र हि प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो रसविशेषं पुष्णाति। नात्रालङ्कारद्वयसन्निपातः, किं तर्हि? अलङ्कारान्तरमेव श्लेषव्यतिरेकलक्षणं नरसिंहवदिति चेत्—न; तस्य प्रकारान्तरेण व्यवस्थापनात्। यत्र हि श्लेषविषय एव शब्दे प्रकारान्तरेण व्यतिरेकप्रतीतिर्जायते स तस्य विषयः। यथा—'स हरिर्नाम्ना देवः सहरिर्वरतुरगनिवहेन' इ-

लोचनम्

भिप्रायेण भामहो न्यरूपयत्—'तत्सहोक्त्युपमाहेतुनिर्देशात्रिविधम्'[1] इत्युक्त्या, न त्वन्यालङ्कारानुग्रहनिराचिकीर्षया। रसविशेषमिति विप्रलम्भम्। सशोकशब्देन व्यतिरेकमानयता शोकसहभूतानां निर्वेदचिन्तादीनां व्यभिचारिणां विप्रलम्भपरिपोषकाणामवकाशो दत्तः। किं तर्हीति। सङ्करालङ्कार एक एवायम्; तत्र किं त्यक्तं किं वा गृहीतमिति परस्याभिप्रायः। तस्येति सङ्करस्य। एकत्र हि विषयेऽलङ्कारद्वयप्रतिभोल्लासः सङ्करः। सहरिशब्द एको विषयः। सः हरिः, यदि वा सह हरिभिः सह-

बालप्रिया

हेतुश्लेष इति। हेत्वलङ्कारसहितः श्लेष इत्यर्थः। उक्तमुपपादयति—सहोक्तीत्यादि। अनेनैवेति। भूयसा श्लेषानुग्राहकत्वाभिप्रायेणैवेत्यर्थः। इत्युक्त्या न्यरूपयदित्यन्वयः। तत्सहोक्तीति। तत् श्लिष्टं वचः। 'अनेनै'वेत्येवकारव्यवच्छेद्यमाह—न त्वित्यादि। प्रकृतरसानुगुणालङ्कारान्तरविवक्षया गृहीतपूर्वस्यालङ्कारस्य त्यागः प्रकृतरसाङ्गं भवतीति प्रकृते व्यतिरेकस्य विप्रलम्भपोषकत्वं विवृणोति—सशोकशब्देनेत्यादि। व्यतिरेकमानयतेति। वक्तुरशोकाद्व्यतिरेकं दर्शयतेत्यर्थः। अवकाशो दत्त इति। स्थितिर्दर्शितेत्यर्थः। वृत्तौ 'श्लेष' इति। श्लेषोपमेत्यर्थः। 'नात्रे'त्यादिः 'चेदि'त्यन्तः शङ्काग्रन्थः। तत्र किं तर्हीत्यादेः भावमाह—सङ्करेत्यादि। सङ्करेति। एकवाक्यानुप्रवेशसङ्करेत्यर्थः। वृत्तौ समाधत्ते—'ने'त्यादि। प्रकारान्तरेण व्यवस्थापनमेव दर्शयति—'यत्रे'त्यादि। भावं व्याचष्टे—एकत्रेत्यादि। अलङ्कारेति। अलङ्कारद्वयस्य या प्रतिभा प्रतीतिस्तस्या उल्लासः उदय इत्यर्थः। सङ्करः एकवाक्यानुप्रवेशसङ्करः। स हरिरिति राजवर्णनम्। 'यद्यप्यनुपमचरितस्तथापि तव नाच्युतस्तुलां लभते' इति पूर्वार्धम्। अत्रैकविषयकत्वं दर्शयति—स हरीत्यादि। विषय इति। श्लेषव्यतिरेकयोरिति शेषः। सहरिर्नाम्नेत्यत्र स हरिरिति पदद्वयमित्याह—सः हरिरिति। सः अच्युतः। नाम्ना हरिः हरिनामक इत्यर्थः। अश्ववाचिनो हरिशब्दस्य सहशब्देन समास इत्याशयेन द्वितीयं सहरिशब्दं व्याचष्टे-यदि वेत्यादि। यदि वेति। अथ चेत्यर्थः, अव्ययानामनेकार्थत्वात्। यद्वा—यदि वेत्यपपाठः। हरिभिः अश्वैः। निवहेनेति हेतौ अभेदे वा तृतीया। अन्त्यपादे

१. भामह., २. ३. ४.

त्यादौ । अत्र ह्यन्य एव शब्दः श्लेषस्य विषयोऽन्यश्च व्यतिरेकस्य । यदि चैवंविधे विषयेऽलङ्कारान्तरत्वकल्पना क्रियते तत्संसृष्टेर्विषयापहार एव स्यात् । श्लेषमुखेनैवात्र व्यतिरेकस्यात्मलाभ इति नायं संसृष्टेर्विषय इति चेत्—न ; व्यतिरेकस्य प्रकारान्तरेणापि दर्शनात् । यथा—

नो कल्पापायवायोरदयरयदलत्क्ष्माधारस्यापि शम्या

## लोचनम्

रिरिति । **अत्र हीति** । हिशब्दस्तुशब्दस्यार्थे, 'रक्तस्त्व'मित्यत्रेत्यर्थः । **अन्य इति** रक्त इत्यादिः । अन्यश्च अशोकसशोकादिः । नन्वेकं वाक्यात्मकं विषयमाश्रित्यैकविषयत्वादस्तु सङ्कर इत्याशङ्क्याह—**यदीति** । एवंविधे वाक्यलक्षणे विषये विषय इत्येकत्वं विवक्षितं बोध्यम् । एकवाक्यापेक्षया यद्येकविषयत्वमुच्यते तत्र क्वचित्संसृष्टिः स्यात् , सङ्करेण व्याप्तत्वात् । ननूपमागर्भो व्यतिरेकः; उपमा च श्लेषमुखेनैवायातेति श्लेषोऽत्र व्यतिरेकस्यानुग्राहक इति सङ्करस्यैवैष विषयः । यत्र त्वनुग्राह्यानुग्राहकभावो नास्ति तत्रैकवाक्यगामित्वेऽपि संसृष्टिरेव; तदेतदाह—**श्लेषेति** । श्लेषबलानीतोपमामुखेनेत्यर्थः । एतत्परिहरति—**नेति** । अयं भावः—किं सर्वत्रोपमायाः स्वशब्देनाभिधाने व्यतिरेको भवत्युत गम्यमानत्वे । तत्राद्यं पक्षं दूषयति—**प्रकारान्तरेणेति** । उपमाभिधानेन विनापीत्यर्थः ।

**शम्या** शमयितुं शक्येत्यर्थः । दीपवर्तिस्तु वायुमात्रेण शमयितुं शक्यते ।

## बालप्रिया

त्वमिति शेषः । **देव** इति द्वयोर्विशेषणम् । यद्यप्यत्र सहरिः सहरिरिति द्वे उपात्ते, तथापि तयोरेकानुपूर्वीकत्वेनैकविषयकत्वमिति भावः । वृत्तिगतान्यपदे व्याचष्टे—**रक्तेत्यादि** । **वाक्यलक्षणे** वाक्यात्मके । एकत्वविवक्षायाः फलं दर्शयंस्तदित्यादिवृत्त्यर्थं विवृणोति—**एकवाक्येत्यादि** । **सङ्करस्यैवैष विषय** इति । **सङ्करस्य** अनुग्राह्यानुग्राहकभावेन सङ्करस्य । संसृष्टेश्च नास्ति विषयापहार इत्याह—**यत्रेत्यादि** । **तदेतदाहेति** । तामिमां शङ्कां दर्शयतीत्यर्थः । नेत्यादिपरिहारग्रन्थस्य भावं दर्शयति—**अयमित्यादि** । **किमिति** प्रश्ने । **गम्यमानत्वे** व्यङ्ग्यत्वे । **उपमाभिधानेन** उपमावाचकेन ।

**नो कल्पेति** । सूर्यशतकस्थम् । उष्णत्विषः सूर्यस्यैव । निखिलद्वीपदीपस्य दीप्तिरेव अन्यरूपा, सा प्रसिद्धा एव वर्तिः वः सुखयत्विति सम्बन्धः । अन्यरूपेत्यनेन दर्शितं दीप्तिवैधर्म्यं नो कल्पेत्यादिना कथ्यते । अदयरयेन प्रौढवेगेन दलन् क्ष्माधरो यस्य । वायोरिति कर्तरि षष्ठी । गाढमुद्गीर्णो

गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥
अत्र हि साम्यप्रपञ्चप्रतिपादनं विनैव व्यतिरेको दर्शितः । नात्र

लोचनम्

तम एव कज्जलं तेन । **न नो रहिता** अपि तु रहितैव । दीपवर्तिस्तु तमसापि युक्ता भवति । अत्यन्तमप्रकटत्वात्कज्जलेन चोपरिचरेण । **पतङ्गादर्कात्**। दीपवर्तिः पुनः शलभाद्ध्वंसते नोत्पद्यते । **साम्येति** । साम्यस्योपमायाः प्रपञ्चेन प्रबन्धेन यत्प्रतिपादनं स्वशब्देन तेन विनापीत्यर्थः । एतदुक्तं भवति—प्रतीयमानैवोपमा व्यतिरेकस्यानुग्राहिणी भवन्ती नाभिधानं स्वकण्ठेनापेक्षते । तस्माच्च श्लेषोपमा व्यतिरेकस्यानुग्राहित्वेनोपात्ता । ननु यद्यप्यन्यत्र नैवं, तथापीह तत्प्रावण्येनैव सोपात्ता; तदप्रावण्ये स्वयं चारुत्वहेतुत्वाभावादिति श्लेषोपमात्र पृथगलङ्कारभावमेव न भजते । तदाह—**नात्रेति** । एतदसिद्धं स्वसंवेदनबाधितत्वादिति हृदये गृहीत्वा **स्वसंवेदनम-**

बालप्रिया

आविर्भाविता उज्वला श्रीर्यया सा । गम्यं वर्तेः वैधर्म्यं दर्शयति—**दीपवर्तिरित्यादि** । तमश्च कजलं च तमःकज्जलमित्यर्थाभिप्रायेणाह—**तमसापीत्यादि** । उपरिचरेण कज्जलेन च युक्तेत्यन्वयः । द्वाभ्यां युक्तत्वे ज्ञापकम् । **अत्यन्तमप्रकटत्वादिति** । पतङ्गात्प्राप्तोत्पत्तिः पतङ्गान्मोषं पुनर्नोपगतेत्यत्र वर्तिगतं वैधर्म्यमाह—**शलभादिति** । 'पतङ्गौ सूर्यशलभावि'त्यमरः । एवं दीपवर्तिरहनि मन्दश्रीरिति च बोध्यम् । स्वशब्देन प्रतिपादनमिति सम्बन्धः । भावमाह—**एतदित्यादि** । **अनुग्राहिणीति** । व्यतिरेकस्योपमागर्भत्वादिति भावः । **स्वकण्ठेन** स्वशब्देन । **उपात्ता** स्वशब्देनाभिहिता । **नन्वित्यादि** । **अन्यत्रेति** । 'नोकल्पापाये'त्यादावित्यर्थः । **इहेति** । 'रक्तस्त्वमि'त्यादावित्यर्थः । **तत्प्रावण्येन** व्यतिरेकपरत्वेन, व्यतिरेकानुग्राहकत्वेनेति यावत् । **सा** श्लेषोपमा, उपमाहेतुः श्लेष इति यावत् । **स्वयमिति** । **तस्या इति** शेषः । तस्याः स्वयमेवेत्यर्थः । **इतीति** हेतौ । **अत्र** 'रक्तस्त्वमि'त्यादौ । **पृथगि-**त्यादि । पृथगलङ्कारभावं न भजत एवेत्यन्वयः । किन्तु व्यतिरेकेण सहानुग्राह्यानुग्राहकभावं भजते इति भावः । **तदाहेति** । नात्रेत्यादिग्रन्थेन तदाशङ्कां दर्शयतीत्यर्थः । वृत्तौ—'अत्र श्लेषस्य व्यतिरेकाङ्गत्वेनैव विवक्षितत्वात् श्लेषमात्राच्चारुत्वप्रतीतिर्नास्ति इति न स्वतोऽलङ्कारता इत्यपि न वाच्यमि'त्यन्वयः । श्लेषस्येत्यस्य न स्वतोऽलङ्कारतेत्यनेनापि सम्बन्धः । स्वत इत्यस्य पृथगित्यर्थः । लोचने—**एतदित्यादि** । एतत् शङ्कितम् । **स्वसंवेदनेति** । स्वानुभवेत्यर्थः । **परं** पूर्वपक्षिणम् । निरुत्तरीकरोती-

श्लेषमात्राच्चारुत्वप्रतीतिरस्तीति श्लेषस्य व्यतिरेकाङ्गत्वेनैव विवक्षितत्वात् न स्वतोऽलङ्कारतेत्यपि न वाच्यम्। यत एवंविधे विषये साम्यमात्रादपि सुप्रतिपादिताच्चारुत्वं दृश्यत एव। यथा—

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः।
अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयो-
स्तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः॥

इत्यादौ।

लोचनम्

पह्नुवानं परं श्लेषं विनोपमामात्रेण चारुत्वसम्पन्नमुदाहरणान्तरं दर्शयन्निरुत्तरीकरोति—यत इत्यादिना। उदाहरणश्लोके तृतीयान्तपदेषु तुल्यशब्दोऽभिसम्बन्धनीयः। अन्यत्सर्वं 'रक्तस्त्वं' इतिवद्योज्यम्।

बालप्रिया

त्यनेन सम्बन्धः। कथमित्यत्राह—श्लेषमित्यादि। श्लेषं विना उपमामात्रेणेति। मात्रपदार्थविवरणं श्लेषं विनेति। श्लेषरहितोपमागर्भव्यतिरेकेणेति यावत्। वृत्तौ—'एवमि'त्यादि। 'एवंविधे विषये' व्यतिरेकविषये। 'साम्यमात्रादि'ति। मात्रशब्देन श्लेषव्यवच्छेदः साम्यशब्दस्योपमागर्भव्यतिरेकोऽर्थः। 'आक्रन्दा' इत्यादिस्थले श्लेषं विना उपमागर्भव्यतिरेकेणैव चारुत्वस्य दर्शना'द्रक्तस्त्व'मित्यादावपि श्लेषस्य व्यतिरेकानुग्राहकत्वं विना पृथगलङ्कारत्वं भवत्येवेति परिहारग्रन्थाभिप्रायः। अनेन प्रबन्धप्रवृत्तोऽपीत्यादि पूर्वोक्तं निर्व्यूढम्। तुल्यशब्द इति। मे आक्रन्दाः तव स्तनितैः तैस्तुल्या इत्यादि सम्बन्धनीयमित्यर्थः। श्रोतृजनमनःक्षोभकारित्वादिना तुल्यत्वम्। तस्याविच्छेदो विरहः तस्माद्भवन्तीति तथा। शोका एव शिखिनोऽग्नयः। 'अन्तरि'त्यादि। अत्र मुखशशिनोस्तुल्यत्वं गम्यम्। 'वृत्तिरि'त्यादि। उक्तप्रकारेणावयोर्धर्मौ तुल्यावेवेत्यर्थः। 'तदि'ति। अस्मद्धर्मयोस्तुल्यत्वेनावयोस्तुल्यत्वादित्यर्थः। अत एवाह—'सखे' इति। अनेन दहनमनुचितमनुकूलाचरणमेव युक्तमिति, 'जलधरे'त्यनेन सन्तापहरणसामर्थ्यं च द्योत्यते। अनिशं दग्धुं पीडयितुमेव, न तु कदाचित्सुखयितुमपि। 'किं' कुतः। 'उद्यतः' अयमुद्यमो न युक्तः, अहन्तु नैवंविध इति भावः। अत्र बन्धुजनपीडाकारित्वेन जलधरस्य स्वस्माद्व्यतिरेक उक्तः, साम्यं चादावुक्तम्। श्लेषश्च नास्तीति बोध्यम्। योज्यमिति। स्तनितादिकमाक्रन्दनादिहेतुतयापि योजनीयमित्यर्थः। वृत्तौ—'आक्षिप्तमि'ति। उक्तमित्यर्थः। 'रसपुष्ट्यै परमनिर्व्यूढश्चे'त्यन्वयः।

रसनिर्वहणैकतानहृदयो यं च नात्यन्तं निर्वोढुमिच्छति । यथा—

कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निन्हुतिपरः प्रेयान्रुदत्या हसन् ॥

अत्र हि रूपकमाक्षिप्तमनिर्व्यूढं च परं रसपुष्टये ।
निर्वोढुमिष्टमपि यं यत्नादङ्गत्वेन प्रत्यवेक्षते यथा—

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं

लोचनम्

एवं ग्रहणत्यागौ समर्थ्य 'नातिनिर्वहणैषिता' इति भागं व्याचष्टे—**रसेति**। चकारः समीक्षाप्रकारसमुच्चयार्थः। बाहुलतिकायाः बन्धनीयपाशत्वेन रूपणं यदि निर्वाहयेत्, दयिता व्याधवधूः वासगृहं कारागारपञ्जरादीति परमनौचित्यं स्यात्। **सखीनां पुर** इति। भवत्योऽनवरतं ब्रुवते नायमेवं करोतीति तत्पश्यन्त्विदानीमिति भावः। स्खलन्ती कोपावेशेन कला मधुरा च गीर्यस्याः सा। कासौ गीरित्याह—**भूयो नैवमि**त्येवंरूपा। एवमिति यदुक्तं तत्किमित्याह—**दुश्चेष्टितं** नखपदादि **संसूच्य** अङ्गुल्यादिनिर्देशेन। **हन्यत एवेति**। न तु संख्यादिकृतोऽनुनयोऽनुरुध्यते। यतोऽसौ हसनं निमित्तीकृत्य निह्नुतिपरः प्रियतमश्च तदीयं व्यलीकं का सोढुं समर्थेति।

**निर्वोढुमिति**। निःशेषेण परिसमापयितुमित्यर्थः। **श्यामासु** सुगन्धिप्रियङ्गुल-

बालप्रिया

एतद्विवृणोति लोचने—**बाह्वित्यादि**। इति निर्वाहयेद्यदीति सम्बन्धः। दयितादीनां व्याधवधूत्वादिरूपणस्य कथनेन बाहुलतिकायाः पाशत्वरूपणं कविर्निर्वाहयेद्यदीत्यर्थः। तदेति शेषः। **परमनौचित्यं स्यादि**ति। तथा च रसभङ्गः स्यादिति भावः। **न करोतीति** ब्रुवत इत्यनेन सम्बन्धः। **इति भाव** इति। सखीनां **पुरो** नयने नायिकाभिप्राय इत्यर्थः। सखीनां पुरो नीत्वेत्यनेनोक्ताभिप्रायो गम्यत इत्यर्थः। दुश्चेष्टितमित्यस्य व्याख्यानम्—**नखपदादी**ति। 'निर्देशेन संसूच्ये'त्यन्वयः। एवकारार्थमाह—**न त्वित्यादि**। निह्नुतीत्यादिकमुक्तार्थे हेतुगर्भमित्याशयेन व्याचष्टे—**यत** इत्यादि। भावार्थमाह—**तदीयमित्यादि**। **तदीयं** प्रियतमसम्बन्धि। अतो हन्यत एवेति भावः। श्लोकोऽयममरुशतकस्थः।

'श्यामास्वि'त्यादिश्लोको मेघसन्देशस्थः। श्यामानां विशिष्योक्तौ बीजभूतमङ्गसा-

गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥

इत्यादौ ।

स एवमुपनिबध्यमानोऽलङ्कारो रसाभिव्यक्तिहेतुः कवेर्भवति । उक्तप्रकारातिक्रमे तु नियमेनैव रसभङ्गहेतुः सम्पद्यते । लक्ष्यं च तथाविधं महाकविप्रबन्धेष्वपि दृश्यते बहुशः । तत्तु सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषोद्घोषणमात्मन एव दूषणं भवतीति न विभज्य दर्शितम् । किं तु रूपकादेरलङ्कारवर्गस्य येयं व्यञ्जकत्वे रसादिविषये लक्षणदिग्दर्शिता तामनुसरन् स्वयं चान्यल्लक्षणमुत्प्रेक्षमाणो यद्यलक्ष्यक्रमप्रतिभमनन्तरो-

लोचनम्

तासु पाण्डिम्ना तनिम्ना कण्टकितत्वेन च योगात् । **शशिनीति** पाण्डुरत्वात् । **उत्पश्यामीति** यत्नेनोत्प्रेक्षे । जीवितसन्धारणायेत्यर्थः । **हन्तेति** कष्टम्, एकस्थसादृश्याभावे हि दोलायमानोऽहं सर्वत्र स्थितो न कुत्रचिदेकस्य धृतिं लभ इति भाव । **भीर्विति** । यो हि कातरहृदयो भवति नासौ सर्वस्वमेकस्थं धारयतीत्यर्थः । अत्र ह्युत्प्रेक्षायास्तद्भावाध्यारोपरूपाया अनुप्राणकं सादृश्यं यथोपक्रान्तं, तथा निर्वाहितमपि विप्रलम्भरसपोषकमेव जातम् । तत्तु लक्ष्यं न दर्शितमिति सम्बन्धः । प्रत्युदाहरणे ह्यदर्शितेऽप्युदाहरणानुशीलनदिशा कृतकृत्यतेति दर्शयति—**किं त्विति** । **अन्यल्लक्षणमिति** । परीक्षाप्रकारमित्यर्थः । तद्यथावसरे त्यक्तस्यापि पुनर्ग्रहणमित्यादि । यथा ममैव—

शीतांशोरमृतच्छटा यदि कराः कस्मान्मनो मे भृशं

बालप्रिया

धर्म्यं गम्यं दर्शयति—**पाण्डिम्नेत्यादि** । कण्टकितत्वं तीक्ष्णाग्रावयवविशेषवत्त्वं रोमहर्षवत्त्वं च । हन्तेति विषादार्थकमित्याह—**कष्टमेकस्थेत्यादि** । 'भीरु' इति सम्बुध्या द्योत्यमर्थमाह—यो हीत्यादि । **न धारयति** नावस्थापयति अन्यापहरणशङ्कयेति भावः । **तद्भावेति** । अतस्मिंस्तत्तादात्म्याहार्यसम्भावनारूपाया इत्यर्थः । अत्र च श्यामादावङ्गादितादात्म्यसम्भावना बोध्या । **अनुप्राणकमिति** । अङ्गमित्यर्थः । **सादृश्यमिति** । गम्यमिति शेषः । **तथेति** । अङ्गसादृश्यस्य उपक्रान्तस्य उपसंहारादिति भावः । **निर्वाहितमिति** । उत्प्रेक्षानिर्वहणद्वारा निर्वाहितमित्यर्थः । वृत्तावुपसंहरति—'स एव' मित्यादि । 'तथाविधमि'ति । उक्तप्रकारातिक्रान्तमित्यर्थः ।

**शीतांशोरिति** । विरहिण उक्तिः । 'शीतांशोः कराः' किरणाः अमृतच्छटाः, यदीति सिद्धानुवादे । यथा—"स्रगियं यदि जीवितापहे"त्यादौ । 'कस्मात्' कुतः । मे मनः

क्रमेनं ध्वनेरात्मानमुपनिबध्नाति सुकविः समाहितचेतास्तदा तस्यात्मलाभो भवति महीयानिति ।

**क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः ।**
**शब्दार्थशक्तिमूलत्वात्सोऽपि द्वेधा व्यवस्थितः ॥ २० ॥**

लोचनम्

संप्लुष्यन्त्यथ कालकूटपटलीसंवाससन्दूषिताः ।
किं प्राणान्न हरन्त्युत प्रियतमासञ्जल्पमन्त्राक्षरै-[1]
रक्ष्यन्ते किमु मोहमेमि हहहा नो वेद्मि केयं गतिः ॥

इत्यत्र हि रूपकसन्देहनिदर्शनास्त्यक्त्वा पुनरुपात्ता रसपरिपोषायेत्यलम्॥१८,१९॥

एवं विवक्षितान्यपरवाच्यध्वनेः प्रथमं भेदमलक्ष्यक्रमं विचार्य द्वितीयं भेदं विभ-

बालप्रिया

मूर्शं सम्प्लुष्यन्ति सन्तापयन्ति । अमृतच्छटात्मकत्वेन सम्प्लोषकत्वायोगादिति भावः । अस्योपपत्तिं सन्दिहान आह—**अथे**त्यादि । अथेति विकल्पे । करा इत्यनुषज्यते । कालकूटानां पटल्या समूहेन यः संवासः द्वयोरेकोत्पन्नत्वात्सहवासः संसर्ग इति या-वत्, तेन सन्दूषिताः सन्तापकत्वादिस्वीयदोषविशिष्टाः कृताः । तर्हि ते किं कुतः प्राणान्न हरन्ति ? प्राणापहारकत्वस्यापि तत्स्वभावत्वादिति भावः । प्राणहरणाभावे हेतु-माशङ्कमान आह—**उते**त्यादि । उतेति विकल्पे । प्रियतमायाः सञ्जल्पेषु यानि मन्त्रा-क्षराणि विषापहारीणि तैः । रक्ष्यन्ते प्राणा इति विपरिणामेनानुषङ्गः । अत्राप्यनुपपत्तिं मन्यमान आह—**किं त्वि**त्यादि । किमु कुतः । **रूपके**ति । करा अमृतच्छटा इति रूपकं, कालकूटेत्यादौ सन्देहः, प्रियतमासञ्जल्पेषु मन्त्राक्षरारोपान्निदर्शना । **त्यक्त्वे**-त्यादि । शीतांशोः कराः अमृतच्छटा इति रूपकस्य कस्मादित्यादिना त्यागः । अथेत्यादिना पुनरुपादानं, तथा सन्दूषितत्वसन्देहस्य 'किं प्राणानि'त्यादिना त्यागः, उतेत्यादिना पुनरुपादानमेवं प्रियतमेत्यादि निदर्शनायाः, मोहं मूर्च्छामेमि प्राप्नोमी-त्यनेन त्यागः । इयं गतिरवस्था पदार्थस्वभावः । का नो वेद्मि न जानामीत्यनेन पुनरुपादानं च प्रत्याख्यत इति भावः । यद्वा सम्प्लुष्यन्तीत्यन्तेन रूपकस्याऽहरन्ती-त्यन्तेन सन्देहस्य, एमीत्यन्तेन निदर्शनायाश्च त्यागः । नो वेद्मीत्यादिना तेषामु-पादानं चेति बोध्यम् ॥ १८–१९ ॥

**हेतुत्वेनोपात्त** इति । यतः क्रमेण भाति, अतोऽनुस्वानसन्निभ इत्यर्थ इति

१. प्रियतमासञ्जल्पा एव मन्त्राक्षराणि इति निदर्शना । रूपकं तु न, विषयस्य सञ्जल्पस्य विषयिविशेषणतया प्रतिबिम्बभूतस्य मन्त्रस्य बिम्बभूतया प्रियतमया वि-शिष्टत्वात् । स्पष्टीकृतमिदं कुवलयानन्दादौ ।

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेः संलक्ष्यक्रमव्यङ्ग्यत्वादनुरणनप्रख्यो य आत्मा सोऽपि शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विप्रकारः ।

ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानीं श्लेषस्य विषय एवापहृतः स्यात्, नापहृत इत्याह—

आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥ २१ ॥

यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितम् । वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः । यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।

लोचनम्

क्तुमाह—क्रमेणेत्यादि । प्रथमपादोऽनुवादभागो हेतुत्वेनोपात्तः । घण्टाया अनुरणनमभिघातजशब्दापेक्षया क्रमेणैव भाति । सोऽपीति । न केवलं मूलतो ध्वनिर्द्विविधः । नापि केवलं विवक्षितान्यपरवाच्यो द्विविधः । अयमपि द्विविध एवेत्यपिशब्दार्थः ॥२०॥

कारिकागतं हिशब्दं व्याचष्टे—यस्मादिति । अलङ्कारशब्दस्य व्यवच्छेद्यं दर्शयति—न वस्तुमात्रमिति । वस्तुद्वये चेति । चशब्दस्तुशब्दस्यार्थे । येनेति । येन ध्वस्तं बालक्रीडायामनः शकटम् । अभवेनाजेन सता । बलिनो दानवान्यो जयति तादृग्येन कायो वपुः पुरामृतहरणकाले स्त्रीत्वं प्रापितः । यश्चोद्वृत्तं समदं कालियाख्यं भुजङ्गं हतवान् । रवे शब्दे लयो यस्य । 'अकारो विष्णुः' इत्युक्तेः । यश्चागं गोवर्धनपर्वतं गां च भूमिं पातालगतामधारयत् । यस्य च नाम स्तुत्यमृषय आहुः किं तत् ? शशिनं मथ्नातीति क्विप् राहुः, तस्य शिरोहरो

बालप्रिया

भावः । अनुस्वानपदार्थं विवृण्वंस्तद्भानस्य क्रमिकत्वं दर्शयन्ति—घण्टाया इत्यादि । विवक्षितान्यपरवाच्य इत्यस्य स्थाने 'अविवक्षितवाच्य' इति च पाठः । अपिशब्दार्थः 'सोऽपी'त्यपि शब्दगम्यः ॥ २० ॥

'न वस्तुमात्र'मिति कारिकास्थैवकारव्यवच्छेद्यमिति भ्रमः स्यादतो व्याचष्टे—अलङ्कारशब्दस्येति । एवकारव्यवच्छेद्यमुपरि वक्ष्यति । येनेत्यत्रादौ विष्णुपक्षे व्याचष्टे—बालक्रीडायामित्यादि । 'तादृक्कायो येन स्त्रीत्वं प्रापित' इत्याद्यन्वयः । लय इति । तादात्म्यमित्यर्थः । शब्दात्मक इति यावत् । तत्र प्रमाणमाह—अकार

यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥

नन्वलङ्कारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं भट्टोद्भटेन, तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्येदमुक्तं 'आक्षिप्त' इति । तदयमर्थः—यत्र शब्दशक्त्या साक्षादलङ्कारान्तरं वाच्यं सत्प्रतिभासते स सर्वः श्लेषविषयः । यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः । शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभा यथा—

तस्या विनापि हारेण निसर्गादेव हारिणौ ।
जनयामासतुः कस्य विस्मयं न पयोधरौ ॥

अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः साक्षाद्विरोधालङ्कारश्च प्रतिभासत इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयः, न त्वनुस्वा·

### लोचनम्

मूर्धोपहारक इति । स त्वां माधवो विष्णुः सर्वदः पायात् । कीदृक् ? अन्धकनाम्नां जनानां येन क्षयो निवासो द्वारकायां कृतः । यदि वा मौसले इषीकाभिस्तेषां क्षयो विनाशो येन कृतः । द्वितीयोऽर्थः—येन ध्वस्तकामेन सता बलिजितो विष्णोः सम्बन्धी कायः पुरा त्रिपुरनिर्दहनावसरेऽस्त्रीकृतः शरत्वं नीतः । उद्वृत्ता भुजङ्गा एव हारा वलयाश्च यस्य, मन्दाकिनीं च योऽधारयत्, यस्य च ऋषयः शशिमच्चन्द्रयुक्तं शिर आहुः, हर इति च यस्य नाम स्तुत्यमाहुः, स भगवान्स्वयमेवान्धकासुरस्य विनाशकारी त्वां सर्वदा सर्वकालमुमाया धवो वल्लभः पायादिति । अत्र वस्तुमात्रं द्वितीयं प्रतीतं नालङ्कार इति श्लेषस्यैव विषयः । आक्षिप्तशब्दस्य कारिकागतस्य व्यवच्छेद्यं दर्शयितुं चोद्येनोपक्रमते—**नन्वलङ्कारे**त्यादिना ।

**तस्या विनापी**ति । अपिशब्दोऽयं विरोधमाचक्षाणोऽर्थद्वयेऽप्यभिधाशक्ति

### बालप्रिया

इति । शेषं स्पष्टम् । **वस्तुमात्र**मित्यादि । माधवस्योमाधवस्य च स्तोतव्यत्वेन प्रकृतत्वात्तयोः साम्यं न विवक्षितमिति भावः । वृत्तौ 'साक्षादलङ्कारान्तरं वाच्य'मिति । अलङ्कारान्तरमलङ्कारविशेषः । वाच्यमभिधेयमिति तदर्थः ।

**अपिशब्दोऽय**मिति । हारेण विनापीत्यपिशब्द इत्यर्थः । **विरोधं** हारतदभावयोरेकत्र वृत्तिस्वरूपम् । **आचक्षाणः** बोधयन् । **अर्थद्वये** वक्ष्यमाणे । **अभिधाशक्तिं** हारि-

नोपमव्यङ्ग्यस्य ध्वनेः । अलक्ष्यक्रमव्यङ्ग्यस्य तु ध्वनेर्वाच्येन श्लेषेण विरोधेन वा व्यञ्जितस्य विषय एव । यथा ममैव—

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः ।
बिभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दध-
त्स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥

अत्र वाच्यतयैव व्यतिरेकच्छायानुग्राही श्लेषः प्रतीयते । यथा च—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

लोचनम्

नियच्छति हरतो हृदयमवश्यमिति हारिणौ । हारो विद्यते ययोस्तौ हारिणाविति । अत एव विस्मयशब्दोऽस्यैवार्थस्योपोद्बलकः । अपिशब्दाभावे तु न तत एवार्थद्वयस्याभिधा स्यात्, स्वसौन्दर्यादेव स्तनयोर्विस्मयहेतुत्वोपपत्तेः । विस्मयाख्यो भाव इति दृष्टान्ताभिप्रायेणोपात्तम् । यथा विस्मयः शब्देन प्रतिभाति विस्मय इत्यनेन शब्देन तथा विरोधोऽपि प्रतिभात्यपीत्यनेन शब्देन । ननु किं सर्वथात्र धनिर्नास्तीत्याशङ्क्याह—**अलक्ष्येति** । **विरोधेन** वेति । वाग्रहणेन श्लेषविरोधसङ्करालङ्कारोऽयमिति दर्शयति , अनुग्रहयोगादेकतरस्यागग्रहणनिमित्ताभावो हि वाशब्देन सूच्यते । सुदर्शनं चक्रं करे यस्य । व्यतिरेकपक्षे सुदर्शनौ श्लाघ्यौ करावेव यस्य । चरणारविन्दस्य ललितं त्रिभुवनाक्रमणक्रीडनम् । चन्द्ररूपं चक्षुर्धारयन् । **वाच्यतयै**वेति । स्वतनोरधिकामिति शब्देन व्यतिरेकस्योक्तत्वात् ।

बालप्रिया

नूशब्दस्याभिधात्मिकां शक्तिम् । अर्थद्वयमाह—**हरत** इत्यादि । 'इत्यर्थद्वये' इति सम्बन्धः । **अत एव** अपिशब्दप्रयोगादेव । **विस्मयशब्दः** द्वितीयान्तविस्मयशब्दः । **उपोद्बलकः** बोधे सहकारी । एकत्र विरुद्धार्थबोधे हि विस्मयः । उक्तमुपपादयति—**अपिशब्दाभावे** त्विति । तत एवार्थद्वयस्याभिधा न स्यादित्यन्वयः । **तत एव** विस्मयशब्दादेव । **अभिधा** अभिधानम् । कुत इत्यत्राह—**स्वे**वेति । वृत्तौ—'विस्मयाख्यो भावः प्रतिभासत' इति किमर्थमुक्तमित्यत्राह—**दृष्टान्ते**ति । शब्देन प्रतिभातीत्युक्तस्यैव विवरणम्—**विस्मय** इत्यादि । प्रतिभातीत्यस्यानुषङ्गः । **दर्शयती**त्यत्र हेतुमाह—**अनुग्रहयोगा**दिति । विरोधश्लेषयोरनुग्राह्यानुग्राहकभावादित्यर्थः । **एके**ति । एकतरस्य त्यागे ग्रहणे वा यन्निमित्तं तदभाव इत्यर्थः । वाच्यतयैवेत्यस्य व्यतिरेक इत्यनेनापि सम्बन्धो विवक्षित इत्याह—**स्वतनोरधिकामि**तीति ।

यथा वा—

चमहिअमाणसकञ्चणपङ्कअणिम्महिअपरिमला जस्स ।
अखण्डिअदाणपसारा बाहुप्पलिहा व्विअ गइन्दा ॥
( खण्डितमानसकाञ्चनपङ्कजनिर्मथितपरिमला यस्य ।
अखण्डितदानप्रसरा बाहुपरिघा इव गजेन्द्राः ॥ इति छाया )

अत्र रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते ।

स चाक्षिप्तोऽलङ्कारो यत्र पुनः शब्दान्तरेणाभिहितस्वरूपस्तत्र न

लोचनम्

भुजगशब्दार्थपर्यालोचनाबलादेव विषशब्दो जलमभिधायापि न विरन्तुमुत्सहते, अपि तु द्वितीयमर्थं हालाहललक्षणमाह । तदभिधानेन विनाभिधाया एवासमाप्तत्वात् । अग्निप्रभृतीनां तु मरणान्तानां साधारण एवार्थः । निराशीकृतत्वेन खण्डितानि यानि मानसानि शत्रुहृदयानि तान्येव काञ्चनपङ्कजानि । ससारत्वात् तैर्हेतुभूतैः । **णिम्महिअपरिमला** इति । प्रसृतप्रतापसारा अखण्डितविरणप्रसरा बाहुपरिघा एव यस्य गजेन्द्रा इति । गजेन्द्रशब्दवशाच्चमहिअशब्दः परिमलशब्दो दानशब्दश्च त्रोटनसौरभमदलक्षणानर्थान्प्रतिपाद्यापि न परिसमाप्ताभिधाव्यापारा भवन्तीत्युक्तरूपं द्वितीयमप्यर्थमभिदधत्येव ।

एवमाक्षिप्तशब्दस्य व्यवच्छेद्यं प्रदर्श्यैवकारस्य व्यवच्छेद्यं दर्शयितुमाह—**स** चेति । उभयार्थप्रतिपादनशक्तशब्दप्रयोगे, यत्र तावदेकतरविषयनियमनकारणम-

बालप्रिया

श्लेषमुपपादयति—**भुजगे**त्यादि । बलादेवेत्यस्य न विरन्तुमुत्सहते, अपि त्वाहेत्यनेन सम्बन्धः । कुत इत्यत्राह—**तदभी**ति । **साधारण एवे**ति । तथा च तदंशेऽर्थश्लेष इति भावः । **निराशीकृतत्वेने**ति । आशात्र जयविषयिका बोध्या । काञ्चनपद्मत्वरूपणे गम्यं हेतुं दर्शयति—**ससारत्वादि**ति । यथा कुमारसम्भवे "ध्रुवं वपुः काञ्चनपद्मनिर्मित"मित्यादि । 'निर्मथितपरिमला' इत्यनेन लक्ष्यस्यार्थस्य विवरणम्—**प्रसृते**त्यादि । **प्रसृतः** दिक्षु व्याप्तः प्रतापसारो येषां ते । एवंभूताः यस्य बाहुपरिघाः गजेन्द्रा एवेति सम्बन्धः । गजेन्द्रे विशेषणानि योजयति—**गजे**त्यादि । **शब्दश्चे**ति । क्रमेणेति शेषः । **उक्तरूपमि**ति । पूर्वोक्तमित्यर्थः । **अभिदधत्येवे**ति । तस्यार्थस्यापि प्राकरणिकत्वादिति भावः । वृत्तौ 'अत्र रूपके'ति । अत्रेत्यस्य उक्तयोः श्लोकयोरित्यर्थः ।

प्रतिपत्तिसौकर्यायोक्तवक्ष्यमाणग्रन्थभावार्थं दर्शयति—**उभयार्थे**त्यादि । **इति तात्पर्यमि**त्यन्तेन । उभयोरर्थयोः प्रतिपादने अभिधाने शक्तः समर्थो यः शब्दः तस्य प्रयोगे सति । **एके**ति । द्वयोरर्थयोरेकतरस्मिन् विषये यन्नियमनं निय-

शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिव्यवहारः। तत्र वक्रोक्त्यादिवाच्या-

### लोचनम्

भिधाया नास्ति, यथा—'येन ध्वस्तमनोभवेन' इति। यत्र वा प्रत्युत द्वितीयाभिधाव्या-पारसद्भावावेदकं[1] प्रमाणमस्ति, यथा—'तस्या विना' इत्यादौ, तत्र तावत्सर्वथा 'चमहिअ' इत्यन्ते। सोऽर्थोऽभिधेय एवेति स्फुटमदः। यत्राप्यभिधाया एकत्र नियमहेतुः प्रकरणा-दिर्विद्यते तेन द्वितीयस्मिन्नर्थे नाभिधा सङ्क्रामति, तत्र द्वितीयोऽर्थोऽसावाक्षिप्त इत्यु-च्यते; तत्रापि यदि पुनस्तादृक्छब्दो विद्यते येनासौ नियामकः प्रकरणादिरपहृतशक्तिकः सम्पाद्यते। अत एव साभिधाशक्तिर्बाधितापि सती प्रतिप्रसूतेव तत्रापि न ध्वनेर्विषय इति तात्पर्यम्। चशब्दोऽपिशब्दार्थे भिन्नक्रमः आक्षिप्तोऽप्याक्षिप्ततया झटिति सम्भा-वयितुमारब्धोऽपीत्यर्थः। न त्वसावाक्षिप्तः, किं तु शब्दान्तरेणान्येनाभिधायाः प्रतिप्र-सवनादभिहितस्वरूपः सम्पन्नः। पुनर्ग्रहणेन प्रतिप्रसवं व्याख्यातं सूचयति। तेनैव-क्कार आक्षिप्ताभा ' निराकरोतीत्यर्थः।

### बालप्रिया

न्त्रणमभिधायाः इत्यस्यानेन सम्बन्धः, तस्य कारणं संयोगादि। इतीति। इत्यादा-वित्यर्थः। यत्रेत्यनेन सम्बन्धः। **द्वितीयाभिधेति**। द्वितीयार्थाभिधेत्यर्थः। **तस्या विना इत्यादौ चमहिअ इत्यन्त** इति। तस्या विनापीत्याद्युदाहरणचतुष्टय इत्यर्थः। **तत्रेति**। येनेत्यादौ तस्या इत्यादिचतुष्टये चेत्यर्थः। **तावदिति** सम्प्रतिपत्तौ। **सोऽर्थ** इति द्वितीयोऽर्थ इत्यर्थः। तत्रापीत्यादि। **तादृगिति** येनेत्यस्य प्रतिनिर्देशः। **येनेति**। येन शब्देनेत्यर्थः। **अपहृतशक्तिकः** प्रतिहतनियमनसामर्थ्यकः। **साभिधाशक्तिः** द्वितीयार्थाभिधानशक्तिः **बाधितापि** बोधाननुकूलाकृतापि **प्रतिप्रसूता** पुनर्बोधा-नुकूला कृता। **एवेति**। इवेति च पाठः। **च शब्द** इति । स चेत्यत्रत्यचशब्द इत्यर्थः। **भिन्नक्रम** इति। आक्षिप्तपदोत्तरं योज्य इत्यर्थः। आक्षिप्तोऽपीत्यस्य विवरणम्—**आक्षिप्ततये**त्यादि। सम्भावनार्थकापिशब्देन गम्यमर्थमाह—**न त्वित्या-दि**। वृत्तौ '**सोऽलङ्कार**' इत्यस्य श्लेष इत्यर्थः। द्वितीयोऽर्थ इति यावत्। 'शब्दान्त-रेणे'त्यादेर्विवरणम्—**शब्दे**त्यादि। **शब्दान्तरेण** शब्दविशेषेण। ननु श्लेषस्य शब्दा-न्तरेण सलेशादिपदेनाभिधानं न सम्भवति इत्यत आह—**अभिधाया** इत्यादि। **अ-भिधायाः** द्वितीयार्थाभिधायाः। **पुनर्ग्रहणेनेति**। 'यत्र पुन'रित्यत्रत्यपुनःशब्देनेत्य-र्थः। **व्याख्यात**मिति। पूर्वोक्तमित्यर्थः। फलितमाह—**तेनेति**। '**वक्रोक्त्या**'दीति। इमामेव वक्रोक्तिं विवृतोक्तिरिति कुवलयानन्दकाराः प्राहुः।

---

१. द्वितीयार्थनिरूपितद्वितीयेत्यर्थः, 'प्रत्यर्थं शब्दाभिनिवेश' इति भाष्यात्। अर्थ-भेदेन शक्तिभेद इति तदर्थः।

लङ्कारव्यवहार एव । यथा—

> दृष्ट्या केशव गोपरागहृतया किञ्चिन्न दृष्टं मया
> तेनैव स्खलितास्मि नाथ पतितां किं नाम नालम्बसे ।
> एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति·
> गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥

**लोचनम्**

हे **केशव**, गोधूलिहृतया दृष्ट्या न किञ्चिद्दृष्टं मया तेन कारणेन स्खलितास्मि मार्गे । तां पतितां सतीं मां किं नाम कः खलु हेतुर्यन्नालम्बसे हस्तेन । यतस्त्वमेवै· कोऽतिशयेन बलवान्निम्नोन्नतेषु सर्वेषामबलानां बालवृद्धाङ्गनादीनां खिन्नमनसां गन्तुमशक्नुवतां गतिरालम्बनाभ्युपाय इत्येवंविधेऽर्थे यद्यप्येते प्रकरणेन नियन्त्रिता- भिधाशक्तयः शब्दास्तथापि द्वितीयेऽर्थे व्याख्यास्यमानेऽभिधाशक्तिर्निरुद्धा सती सले- शमित्यनेन प्रत्युज्जीविता । अत्र सलेशं ससूचनमित्यर्थः, अल्पीभवनं हि सूचनमेव । हे केशव ! गोप स्वामिन् ! रागहृतया दृष्ट्येति । केशवगेन उपरागेण हृतया दृष्ट्येति वा सम्बन्धः । स्खलितास्मि खण्डितचरित्रा जातास्मि । पतितामिति भर्तृभावं मां प्रति । एक इत्यसाधारणसौभाग्यशाली त्वमेव । यतः सर्वासामबलानां मदनविधुर- मनसामीर्ष्याकालुष्यनिरासेन सेव्यमानः सन् गतिः जीवितरक्षोपाय इत्यर्थः । एवं श्लेषा·

**बालप्रिया**

परागपदव्याख्यानं—**धूलीति** । मार्गे स्खलितास्मीति सम्बन्धः । एकशब्दो मुख्यार्थक इत्याशयेनाह—**अतिशयेन बलवानिति** । विषमेष्वित्यस्य व्याख्यानम्—**निम्नोन्नतेष्वि·** ति । खिन्नमनसामित्यस्य भावार्थविवरणम्—**गन्तुमित्यादि** । 'एते शब्दा' इति सम्बन्धः। केशवगोपरागादिशब्दा इत्यर्थः । 'प्रकरणेने'त्यस्य 'नियन्त्रिते'त्यनेन निरुद्धे'त्यनेन च सम्बन्धः । **अभिधाशक्तिरिति** । एतेषामिति शेषः । **प्रत्युज्जीविता** प्रतिप्रसा- विता । प्रत्युजीवनं विवृणोति—**अत्रेत्यादि** । सलेशमित्यस्य ससूचनमित्यर्थः ।कथं लभ्यत इत्यत्राह—**अल्पीति** । द्वितीयमर्थं व्याचष्टे—**हे केशवेत्यादि** । केशव गोप इति सम्बोधनद्वयमिति भावः । **स्वामिन्निति** 'नाथे'त्यस्य विवरणम् । प्रकारान्तरेण आह—**केशवगेनेत्यादि** । **केशवगेन** केशवविषयकेण **उपरागेण** अनुरागेण । पत्युर्भावः पतिता तामित्याह—**भर्तृभावमिति** । 'अत्रान्तर' इत्यादिगद्यं हर्षचरिते द्वितीयोच्छ्वासे स्थितम् । **मासद्वयमिति** । चैत्रवैशाखात्मकमासद्वयमित्यर्थः । धव· लान्यट्टानि येन स चासौ हासश्च धवलाट्टहासः, फुल्लाः विकसिताः मल्लिकाः फुल्लमल्लिकाः फुल्लमल्लिकानां धवलाट्टहासो यत्र स इति व्यधिकरणो बहुव्रीहिरिति व्याचष्टे—

**एवञ्जातीयकः सर्व एव भवतु कामं वाच्यश्लेषस्य विषयः । यत्र तु सामर्थ्याक्षिप्तं सदलङ्कारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः । यथा—**

**'अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः' ।**

**यथा च—**

**उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।**
**पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥**

लोचनम्

लङ्कारस्य विषयमवस्थाप्य ध्वनेराह—**यत्र त्विति** । कुसुमसमयात्मकं यद्युगं मासद्वयं तदुपसंहरन् । धवलानि हृद्यान्यट्टान्यापणा येन तादृक् फुल्लमल्लिकानां हासो विकासः सितिमा यत्र । फुल्लमल्लिका एव धवलाट्टहासोऽस्येति तु व्याख्याने 'जलदभुजगजं' इत्येतत्तुल्यमेतत्स्यात् । महांश्चासौ दिनदैर्घ्यदुरतिवाहतायोगात्कालः समयः । अत्र ऋतुवर्णनप्रस्तावनियन्त्रिताभिधाशक्तयः, अत एव 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' इति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दा एतमेवार्थमभिधाय कृतकृत्या एव । तदनन्तरमर्थावगतिर्ध्वननव्यापारादेव शब्दशक्तिमूलात् ।

अत्र केचिन्मन्यन्ते—'यत एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधान्तरं दृष्टं ततस्त-

बालप्रिया

**धवलानीत्यादि** । हास इत्यस्य व्यख्यानं—**विकास** इति । तस्यैव विवरणं—**सितिमेति** । सितस्य भावः सितिमा । यथाश्रुतार्थपरित्यागे बीजमाह—**फुल्लेति** । **इत्येतत्तुल्यमेतत्स्यादिति** । तथाचाभिमतध्वन्युदाहरणं न भवेदिति भावः । महत्वोपपादकं—**दिनेत्यादि** । दिनदैर्घ्यं दुरतिवाहता च तयोर्योगादित्यर्थः । 'सामर्थ्याक्षिप्तं' सहकारिभूतेनार्थसामर्थ्येन व्यञ्जितं सत् । 'अलङ्कारान्तरं' अलङ्कारविशेषः । 'शब्दशक्त्या प्रकाशते' प्राधान्येन शब्दशक्त्या भासत इत्यादिवृत्त्युक्तमुपपादयति—**अत्रेत्यादि** । ऋतुवर्णनरूपः ऋतुवर्णनस्य वा यः प्रस्तावः तेन नियन्त्रिताः तत्तदर्थेषु नियमिताः अभिधाशक्तयो येषां ते । **अत एव** प्रकरणादेव । इति **न्यायमिति** । यथोक्तं "योगाद्रूढेर्बलीयस्त्व"मिति । **एतमेवार्थमिति** । पूर्वोक्तार्थमित्यर्थः । **तदनन्तरमर्थावगतिरिति** । कृतादियुगसमयमुपसंहरन् मल्लिकाधवलमट्टहासं कुर्वन् भयङ्करो महाकालः महान् जगत्संहर्तृदेवताविशेष इत्याद्यर्थबोध इत्यर्थः ।

अत्र मतभेदान्दर्शयति—**अत्र केचिदित्यादि** । **एतेषामिति** । महाकालादी-

लोचनम्

थाविधेऽर्थान्तरे दृष्टतदभिधाशक्तेरेव प्रतिपत्तुर्नियन्त्रिताभिधाशक्तिकेभ्य एतेभ्यः प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं व्यङ्ग्यत्वं चेत्यविरुद्धम्' इति ।

अन्ये तु—'साभिधैव द्वितीया अर्थसामर्थ्यं ग्रीष्मस्य भीषणदेवताविशेषसादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते ततो ध्वननव्यापाररूपोच्यते' इति ।

एके तु—'शब्दश्लेषे तावद्भेदे सति शब्दस्य, अर्थश्लेषेऽपि शक्तिभेदाच्छब्दभेद इति दर्शने द्वितीयः शब्दस्तत्रानीयते । स च कदाचिदभिधाव्यापारात्, यथोभयोरुत्तरदानाय 'श्वेतो धावति' इति; प्रश्नोत्तरादौ वा तत्र वाच्यलङ्कारता । यत्र तु ध्वनन-

बालप्रिया

नामित्यर्थः । **अर्थान्तरे** जगत्संहर्तृदेवताविशेषाद्यर्थे । **दृष्टं** ज्ञातम् । **दृष्टेति** । दृष्टा ज्ञाता तदभिधाशक्तिर्येन तस्येत्यर्थः । **नियन्त्रितेति** । प्राकरणिकार्थे प्रकरणादिना नियमितेत्यर्थः । **एतेभ्यः** महाकालादिशब्देभ्यः । **प्रतिपत्तिः** अर्थान्तरप्रतीतिः । **इतीति** हेतौ । **व्यङ्ग्यत्वञ्चेति** । यतोऽर्थान्तरे गृहीततत्तच्छब्दाभिधाशक्तिकस्यैव प्रतिपत्तुस्तदर्थान्तरस्य प्रतीतिर्भवति, ततश्शब्दशक्तिमूलत्वं, यतश्च सा प्रतीतिरभिधाया विरम्यव्यापाराभावेन ध्वननव्यापारादेव, ततस्तदर्थस्य व्यङ्ग्यत्वञ्चेत्यर्थः । मतमिदं काव्यप्रकाशकाराद्यभ्युपगतम् ।

मतान्तरमाह—**अन्य इत्यादि** । **साभिधैव द्वितीयेति** । गृहीतपूर्वा द्वितीयार्थाभिधैवेत्यर्थः । ध्वननव्यापाररूपोच्यत इति सम्बन्धः । कुत इत्यत्राह—**अर्थे**त्यादि । **अर्थसामर्थ्य**मिति । सामर्थ्याक्षिप्तमिति ग्रन्थेनोक्तमर्थसामर्थ्यमित्यर्थः । तत् किमित्यत्राह—**ग्रीष्मस्ये**त्यादि । **भीषणेति** । युगोपसंहरणादिना यद्देवताविशेषसादृश्यं तदात्मकमित्यर्थः । **सहकारित्वेनेति** । तदर्थान्तरबोधन इति शेषः । **तत** इत्यादि । अभिधादयो व्यापारा ह्यर्थबोधानुकूलशक्तिविशेषात्मकाः । सहकारिभेदेन तेषां भेदः । सङ्केतग्रहणमात्रसहकारेण शब्दस्यार्थबोधनशक्तिरभिधा । सङ्केतग्रहणातिरिक्तार्थसामर्थ्यादिसहकारेणार्थबोधनशक्तिस्तु ध्वननमतोऽत्र सा ध्वननरूपोच्यत इति भावः ।

**एक इत्यादि** । **तावदिति** सम्प्रतिपत्तौ । शब्दस्य भेदे सतीति सम्बन्धः । भेदस्य सत्वादित्यर्थः । **शक्तिभेदादिति** । तत्तदर्थबोधानुकूलशक्तिभेदादित्यर्थः । अर्थभेदादिति यावत् । **तत्रेति** । शब्दश्लेषेऽर्थश्लेषे चेत्यर्थः । **आनीयत** इति । अनुसन्धानेनेति भावः । **सः** द्वितीयश्शब्दः । **कदाचिदिति** । यदार्थद्वयेऽपि प्रकरणादिकं तदेत्यर्थः । **अभिधाव्यापारादिति** । अर्थद्वयस्याभिधेयत्वावश्यम्भात्रादिति भावः । आनीयत इत्यनुषङ्गः । अत्रोदाहरणमाह–**यथे**त्यादि । **उभयोरिति** । क इतो धावति, किङ्गुणविशिष्टश्चेति द्वयोः प्रश्नयोरित्यर्थः । **श्वेत** इति । श्वा इतः श्वेतो धवलश्च । **प्रश्नोत्तरादौ** वेति ।

"यत्तु पर्यनुयोगस्य निर्भेदः क्रियते बुधैः ।
विदग्धगोष्ठ्यां वाक्यैर्वा तद्धि प्रश्नोत्तरं विदुः" ॥ इति लक्षणम् ।

लोचनम्

व्यापारादेव शब्द आनीतः, तत्र शब्दान्तरबलादपि तदर्थान्तरं प्रतिपन्नं प्रतीयमानमूलत्वात्प्रतीयमानमेव युक्तम्' इति ।

इतरे तु—'द्वितीयपक्षव्याख्याने यदर्थसामर्थ्यं तेन द्वितीयाभिधैव प्रतिप्रसूयते, ततश्च द्वितीयोऽर्थोऽभिधीयत एव न ध्वन्यते, तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा सा तावद्भात्येव, न चान्यतः शब्दादिति सा ध्वननव्यापारात् । तत्राभिधशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वात् । तस्यां च द्वितीया शब्दशक्तिर्मूलम् । तया विना रूपणाया अनुत्थानात् । अत एवालङ्कारध्वनिरयमिति युक्तम् । वक्ष्यते च 'असम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीत्' इत्यादि । पूर्वत्र तु सले-

बालप्रिया

यथा—"काहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन् किमुत्तरम् ।
कथमुक्तं न जानासि कदर्थयसि यत्सखे" ॥ इति ।

अत्र कदर्थयसीत्येतत् 'कथ' वर्णाभ्यामुक्तं दर्यसीत्युत्तरम् । आदिपदेन "येन ध्वस्ते"त्यादिसङ्ग्रहः । **वाच्ये**ति । श्लेषादिवाच्यालङ्कार इत्यर्थः । द्वयोरर्थयोः प्रकृतत्वादिति भावः । **यत्रे**ति । कुसुमसमयमित्यादावित्यर्थः । **ध्वननव्यापारादे**वेति । अभिधायाः प्रकृतार्थे नियमनेन व्यञ्जकत्वादेवेत्यर्थः । **शब्दान्तरबलादि**ति । शब्दान्तरस्याभिधाशक्तेरित्यर्थः । प्रतिपन्नमपीत्यन्वयः । **प्रतीये**ति । प्रतीयमानः ध्वननाद् गम्यमानः शब्दः मूलं यस्य तत्त्वादित्यर्थः । ध्वनिव्यापारमूलकत्वादिति यावत् । **प्रतीयमानमेव** व्यङ्ग्यमेव ।

**द्वितीयपक्षव्याख्याने** इति । 'अन्ये त्वि'त्याद्युक्तव्याख्यान इत्यर्थः । **तेने**ति । अर्थसामर्थ्येनेत्यर्थः । **द्वितीयाभिधे**ति । द्वितीयार्थाभिधेत्यर्थः । प्रतिपन्नस्य तस्य द्वितीयार्थस्येति सम्बन्धः । **रूपणे**ति । अभेदारोप इत्यर्थः । आरोप्यमाणाभेद इति यावत् । इदमुपमादेरुपलक्षणम् । **सा तावदि**ति । सा रूपणा । **न चे**त्यादि । भातीत्यनुषङ्गः । शब्दादन्यस्मान्न भातीत्यर्थः । किन्तु शब्दादेवेति भावः । **तत्रे**ति । रूपणायामित्यर्थः । **तस्यामि**ति । रूपणायामित्यर्थः । **अनुत्थानादि**ति । प्रतियोगिभूतस्य द्वितीयार्थस्याप्रतीत्यैति भावः । **अत एव** रूपणादिमात्रस्य व्यङ्ग्यत्वादेव । **अलङ्कारे**ति । रूपकादीत्यर्थः । **इति युक्तमि**ति । इति वचनं युज्यत इत्यर्थः । अन्यथा द्वितीयार्थस्य व्यङ्ग्यत्वेन वस्तुध्वनिव्यवहारोऽपि स्यादिति भावः । **वक्ष्यत** इति । वृत्ताविति शेषः । तत्र उपमानोपमेयभावः कल्पयितव्य इत्युक्त्या तदंशस्यैव व्यङ्ग्यत्वज्ञापनादिति भावः । शब्दशक्त्या प्रकाशमाने इति ग्रन्थोऽप्येतत्पक्षानुकूलः प्रसङ्गादाह—**पूर्वत्रे**त्यादि । पूर्वत्र "दृष्ट्या केशवे"त्यादौ । **निराकृते**ति । तत्र हि द्वितीयार्थ एव प्राधान्येन विवक्षितः, प्रथमार्थस्तु

यथा वा—

दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥

एषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्यासम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकार्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादित्यर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः । अन्येऽपि

लोचनम्

शपदेनैवासम्बद्धता निराकृता । 'येन ध्वस्त' इत्यत्रासम्बद्धता नैव भाति । 'तस्या विनापि' इत्यत्रापिशब्देन 'श्लाघ्या' इत्यत्राधिकशब्देन 'भ्रमिं' इत्यादौ च रूपकेणासम्बद्धता निराकृतेति तात्पर्यम् । **पयोभि**रिति पानीयैः क्षीरैश्च । **संहारो** ध्वंसः, एकत्र ढौकनं च । **गावो**[1] रश्मयः सुरभयश्च ।

**असम्बद्धार्थाभिधायित्व**मिति । असंवेद्यमानमेवेत्यर्थः । **उपमानोपमेय**-

बालप्रिया

तद्गोपनार्थतयेति भावः । अनेन तत्र रूपणादिकं नास्तीति चावेदितम् । **नैव भा**तीति। द्वयोरपि स्तुत्यतया प्रकृतत्वादिति भावः। 'तात्पर्य'मित्यन्तं 'इतरे त्वि'ति मतम् । एतन्मतानुरोधिनः कुवलयानन्दकारादयः। 'उन्नत' इति । प्रोल्लसन् हारो यत्र, प्रोल्लसन्ती धारा यत्र च सः। कालागरुणा स इव च मलीमसः नीलः पयोधरः स्तनः जलधरश्च । तस्याः कामिन्याः प्रावृषश्च। कं युवानं पथिकञ्च । 'दत्तानन्दा' इति सूर्यशतकस्थम् । समुचितसमये पूर्वमाकृष्टानि पश्चात्सृष्टानि तैः दीप्तांशोः सूर्यस्य पावनानां परमुत्कृष्टं वर्तमानाः । लोचने व्याख्येयानि पदानि व्याचष्टे—**पयोभिरि**त्यादि । रश्मिपक्षे **पानीयै**रिति सुरभिपक्षे **क्षीरै**रिति ।

वृत्तौ 'असम्बद्धार्थाभिधायित्व'मिति । प्रकृतार्थेनासम्बद्धो योऽर्थस्तदभिधायित्वमित्यर्थः । 'मा प्रसाङ्क्षीदि'ति । प्रसक्तिविषयो मा भूदित्यर्थः । अत्रेष्टापत्तिं परिहर्तुं भावमाह—**असंवेद्यमानमे**वेति । असम्बद्धार्थाभिधायित्वं सहृदयैरप्र-

१. गौर्नाऽऽदित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः ।
स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥
पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ॥ इति केशवः ।

चालङ्काराः शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये ध्वनौ सम्भवन्त्येव । तथा हि विरोधोऽपि शब्दशक्तिमूलानुस्वानरूपो दृश्यते । यथा स्थाण्वीश्वराख्यजनपदवर्णने भट्टबाणस्य—

'यत्र च मातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च धवलद्विजशुचिवदना मदिरामोदिश्वसनाश्च प्रमदाः' ।

अत्र हि वाच्यो विरोधस्तच्छायानुग्राही वा श्लेषोऽयमिति न शक्यं वक्तुम् । साक्षाच्छब्देन विरोधालङ्कारस्याप्रकाशितत्वात् । यत्र हि साक्षाच्छब्दावेदितो विरोधालङ्कारस्तत्र हि श्लिष्टोक्तौ वाच्यालङ्कारस्य विरोधस्य

लोचनम्

भाव इति । तेनोपमारूपेण व्यतिरेचननिह्नवादयो व्यापारमात्ररूपा एवात्रास्वादप्रतीतेः प्रधानं विश्रान्तिस्थानं, न तूपमेयादीति सर्वत्रालङ्कारध्वनौ मन्तव्यम् । **सामर्थ्या**दिति । ध्वननव्यापारादित्यर्थः ।

**मातङ्गे**ति । मातङ्गवद्गच्छन्ति तान् शबरांश्च गच्छन्तीति विरोधः । विभवेषु रताः विगतमहादेवे स्थाने च रताः । पद्मरागरत्नयुक्ताः पद्मसदृशलौहित्ययुक्ताश्च । धवलैर्द्विजैर्दन्तैः शुचि निर्मलं वदनं यासां धवलद्विजवदुत्कृष्टविप्रवच्छुचि वदनं च यासाम् । **यत्र ही**ति । यस्यां श्लेषोक्तौ काव्यरूपायां, तत्र यो विरोधः श्लेषो वेति सङ्करः तस्य विषयत्वम् । स विषयो भवतीत्यर्थः । कस्य ? **वाच्यालङ्कारस्य** वा-

बालप्रिया

तीयमानमेवेत्यर्थः । **अर्थः** भावार्थः । **तेने**ति । उपमात्मकोपमानोपमेयभावकल्पनस्य कथनात्तस्य उपलक्षणत्वाच्चेत्यर्थः । **उपमारूपणे**त्यादि । उपमारूपकादिध्वनिस्थले उपमितिरूपणादिप्रतीतिक्रिया एवेत्यर्थः । **मातङ्गवदि**ति । गजवदित्यर्थः । **शबरांश्चे**ति । चण्डालांश्चेत्यर्थः । **इति विरोध** इति । चण्डालगमनरूपार्थस्य सद्वृत्तरूपशीलेन विरोध इत्यर्थः। आद्येनार्थेन च तत्परिहारः। एवमुपर्यपि बोध्यम् । 'गौर्यः' गौरवर्णाः पार्वत्यश्च । 'श्यामाः' श्यामवर्णाः यौवनवत्यश्च । वृत्तौ—'साक्षाच्छब्देनाऽप्रकाशितत्वा'दिति । शीलवत्यश्चेत्यादौ चकाराणां समुच्चयार्थकत्वादिति भावः । **वेति सङ्कर** इति । विरोधस्य श्लेषस्य वेत्यत्र वाकारस्तत्सङ्करद्योतक इत्यर्थः । तस्य विषयत्वमित्यस्यैव विवरणम्—**स** इत्यादि । वाच्यालङ्कारस्येत्यस्य विषयत्वमित्यनेनान्वयमाकाङ्क्षापूर्वकं दर्शयति—**कस्ये**त्यादिना । वाच्यालङ्कारस्येत्यस्य यथाश्रुतार्थमाह—**वाच्यालङ्कृतेरि**ति । विवक्षितमाह—

श्लेषस्य वा विषयत्वम् । यथा तत्रैव—

'समवाय इव विरोधिनां पदार्थानाम् । तथाहि—सन्निहितबालान्धकारापि भास्वन्मूर्तिः' इत्यादौ ।

यथा वा ममैव—

सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् ।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ॥

अत्र हि शब्दशक्तिमूलानुस्वानरूपो विरोधः स्फुटमेव प्रतीयते ।

एवंविधो व्यतिरेकोऽपि दृश्यते । यथा ममैव—

खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो

लोचनम्

च्यालङ्कृतेः वाच्यालङ्कृतित्वस्येत्यर्थः । तत्रैव विरोधे श्लेषे वा वाच्यालङ्कारत्वं सुवचमिति यावत् । बालेषु केशेष्वन्धकारः कार्ष्ण्यं, बालः प्रत्यग्रश्चान्धकारस्तमः ।

ननु मातङ्गेत्यादावपि धर्मद्वये यश्चकारः स विरोधद्योतक एव । अन्यथा प्रतिधर्मं सर्वधर्मान्ते वा न क्वचिद्वा चकारः स्यात् यदि समुच्चयार्थः स्यादित्यभिप्रायेणोदाहरणान्तरमाह—यथेति । शरणं गृहमक्षयरूपमगृहं कथम् । यो न धीशः स कथं धियामीशः । यो हरिः कपिलः स कथं कृष्णः । चतुरः पराक्रमयुक्तो यस्यात्मा स कथं निष्क्रियः । अरीणामरयुक्तानां यो नाशयिता स कथं चक्रं बहुमानेन धारयति । **विरोध** इति । विरोधनमित्यर्थः । **प्रतीयत** इति । स्फुटं नोच्यते केनचिदिति भावः ।

बालप्रिया

**वाच्यालङ्कृतित्वस्येति** । तथा च विरोधश्लेषसङ्करस्य वाच्यालङ्कृतित्वनिरूपितं विषयत्वमिति वाक्यार्थः । विषयत्वमत्राश्रयत्वं बोध्यम् । फलितमाह—**तत्रैवे**त्यादि । **भास्वन्मूर्तिः** प्रकाशमानतनुः सूर्यमूर्तिश्च ।

सर्वेत्याद्युदाहरणान्तरमवतारयति—**नन्वि**त्यादि । **धर्मद्वये यश्चकार** इति । मातङ्गगामिन्यश्शीलवत्यश्च गौर्यो विभवरताश्चेत्यादौ धर्मद्वयवाचकान्ते यश्चकार इत्यर्थः । एवकारेण समुच्चयद्योतकत्वव्यवच्छेदः । उक्तार्थे हेतुमाह—**अन्यथे**त्यादि । **अन्यथा** विरोधद्योतकत्वाभावे तदेति शेषः । अन्यथा चकारो यदि समुच्चयार्थस्स्यात्तदा प्रतिधर्मं सर्वधर्मान्ते वा स्यात्, क्वचिद्वा न स्यादित्यन्वयः । सर्वधर्मान्त इत्यत्र सर्वशब्दान्त इति च पाठः । चकारस्यात्र समुच्चयार्थकत्वे "घटश्च पटश्च पुस्तकञ्चानय, घटं पटं पुस्तकञ्चानय, घटं पटं पुस्तकमानय इतिवत्प्रयोगस्स्यादित्यर्थः । **गृहमगृहमित्यादि** विरुद्धार्थकथनम् । **शरणं** रक्षितारम् । **अक्षयं** नाशरहितमित्याद्यविरुद्धार्था बोध्याः । **विरोधन**मिति । विरोधनक्रियेत्यर्थः । **स्फुट**मिति । निस्सन्देहमित्यर्थः । प्रतीयत इत्यस्य ध्वन्यत इत्यर्थं इत्याह—**नोच्यते केनचिदिति** ।

ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये ।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥

एवमन्येऽपि शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्यध्वनिप्रकाराः सन्ति ते सहृदयैः स्वयमनुसर्तव्याः । इह तु ग्रन्थविस्तरभयान्न तत्प्रपञ्चः कृतः ।

**अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः स प्रकाशते ।**
**यस्तात्पर्येण वस्त्वन्यद्व्यनक्त्युक्तिं विना स्वतः ॥२२॥**

लोचनम्

नखैरुद्भासन्ते येऽवश्यं खे गगने न उद्भासन्ते । उभये रश्म्यात्मानोऽङ्गुलीपार्ष्ण्याद्यवयविरूपाश्चेत्यर्थः ॥ २१ ॥

एवं शब्दशक्त्युद्भवं ध्वनिमुक्त्वार्थशक्त्युद्भवं दर्शयति—**अर्थेति** । **अन्य** इति शब्दशक्त्युद्भवात् । स्वतस्तात्पर्येणेत्यभिधाव्यापारनिराकरणपरमिदं पदं ध्वननव्यापारमाह न तु तात्पर्यशक्तिम् । सा हि वाच्यार्थप्रतीतावेवोपक्षीणेत्युक्तं प्राक् । अनेनै-

बालप्रिया

**खमिति** । खमाकाशम् । ये किरणाः लूनं विनाशितं तमस्तिमिरं पापञ्च यैस्ते । **ये वेति** । ये चरणाः । नखोद्भासिन इत्यस्य वाच्यं व्यङ्ग्यञ्चार्थमाह—**नखैरित्यादि** । ये किरणाः, सरोरुहाणां पद्मानां श्रियं कान्तिं पुष्णन्ति ये चरणाः । **क्षिप्तेति** । अधः कृतपद्मकान्तयः विनाशितपद्मकान्तयश्च ये किरणाः, क्षितिभृतां पर्वतानाम् मूर्धसु शृङ्गेषु शिरस्सु च ये चरणाः । अमराणां देवानाम् शिरांसि आक्रामन्ति प्रणामकाले स्पृशन्ति तेष्ववभासिनश्च । लोचने—**अङ्गुलीत्यादि** । चरणा इत्यर्थः । अत्र लूनतमस्त्वादिधर्मैः किरणतुल्यानां दिनपतेश्चरणानां गगनानुद्भासित्वादिभिः किरणेभ्यो व्यतिरेको ध्वनित इति बोध्यम् ॥ २१ ॥

'अर्थे'त्यादि कारिकायां 'अन्यः अर्थशक्त्युद्भवस्तु तत्र भवति, यत्र स अर्थः प्रकाशते, य उक्तिं विना स्वतस्तात्पर्येण अन्यद्वस्तु व्यनक्ती'त्यन्वयः । कस्मादन्य इत्यत्राह लोचने—**शब्देति** । स्वतस्तात्पर्येणेत्येतद्व्याचष्टे—**स्वत** इत्यादि । इतीदमिति सम्बन्धः । इदं पदमिति च पाठः । **सेति** । तात्पर्यशक्तिरित्यर्थः । **अनेनेत्यादि** । स्वतस्तात्पर्येणेत्यस्य विवरणं वृत्तौ–'स्वसामर्थ्यादि'तीति भावः । 'शब्दव्यापार'मिति । अभिधामित्यर्थः । वृत्तौ'लीले'त्यादि । इदमधोमुखत्वस्याप्युपलक्षणम् । 'प्रकाशयती'ति । अनुभावत्वाद्व्यञ्जयतीत्यर्थः । यदि लज्जात्मकव्यभिचारिप्रतीतिस्तर्ह्ययमलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषयो न तु वस्तुध्वनेरिति शङ्कते–'न चे'त्यादि । समाधत्ते–'यत' इत्यादि । नन्वत्र व्यभिचारिणो वाच्यत्वरूपसाक्षाच्छब्दनिवेदितत्वस्य कथनम्-

यत्रार्थः स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति शब्दव्यापारं विनैव सोऽर्थशक्त्युद्भवो नामानुस्वानोपमव्यङ्ग्यो ध्वनिः ।

यथा—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

अत्र हि लीलाकमलपत्रगणनमुपसर्जनीकृतस्वरूपं शब्दव्यापारं विनैवार्थान्तरं व्यभिचारिभावलक्षणं प्रकाशयति । न चायमलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषयः । यतो यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः, स तस्य केवलस्य मार्गः । यथा कुमारसम्भवे मधुप्रसङ्गे वसन्तपुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णनं मनोभवशरसन्धानपर्यन्तं शम्भोश्च परिवृत्तधैर्यस्य चेष्टाविशेषवर्णनादि साक्षाच्छब्दनिवेदि·

लोचनम्

वाशयेन वृत्तौ व्याचष्टे—**यत्रार्थः स्वसामर्थ्यादि**ति । स्वत इति शब्दः स्वशब्देन व्याख्यातः । उक्तिं विनेति व्याचष्टे—**शब्दव्यापारं विनैवे**ति । उदाहरति—**यथा एवमि**ति । अर्थान्तरमिति लज्जात्मकम् । **साक्षादि**ति । व्यभिचारिणां यत्रालक्ष्यक्रमतया व्यवधिवन्ध्यैव प्रतिपत्तिः स्वविभावादिबलात्तत्र साक्षाच्छब्दनिवेदितत्वं विवक्षितमिति न पूर्वापरविरोधः । पूर्वं ह्युक्तं व्यभिचारिणामपि भावत्वाच्च स्वशब्दतः प्रतिपत्तिरित्यादि विस्तरतः । एतदुक्तं भवति—यद्यपि रसभावादिरर्थो ध्वन्यमान एव भवति न वाच्यः कदाचिदपि, तथापि न सर्वोऽलक्ष्यक्रमस्य विषयः । यत्र हि विभावानुभावेभ्यः स्थायिगतेभ्यो व्यभिचारिगतेभ्यश्च पूर्णेभ्यो झटित्येव रस·

बालप्रिया

सङ्गतं, तस्य तदभावस्य पूर्वमुक्तत्वादित्यतस्साक्षाच्छब्दनिवेदितत्वं विवृणोति लोचने—**व्यभिचारिणामि**त्यादि । 'यत्र व्यभिचारिणां स्वस्वविभावादिबलादलक्ष्यक्रमतया व्यवधिवन्ध्यैव प्रतिपत्तिरि'त्यन्वयः । **व्यवधिवन्ध्या** अव्यवधाना । पूर्वोक्तं स्मारयति—**पूर्वमि**त्यादि । इत्यादि विस्तरतः पूर्वमुक्तं हीति सम्बन्धः । 'तस्मादयमन्यो ध्वनेः प्रकार' इत्यन्तवृत्तिग्रन्थस्य सारार्थमाह—**एतदुक्तमि**त्यादि । सर्वः अलक्ष्यक्रमस्य इतिच्छेदः । **स्थायिगतेभ्यः** स्थायिसम्बन्धिभ्यः । 'निर्वाणे'त्यादि कुमारसम्भवतृतीयसर्गस्थम् । इत्यादावित्यादिपदेन 'आवर्जिता किञ्चिदिवे'त्यादेः

१. विश्वनाथस्तु 'एवं वादिनी'ति पद्यं अवहित्थायामुदाहार्षीत् । उभयोरत्र सन्देह इति तु युक्तम् ।

तम् । इह तु सामर्थ्याक्षिप्तव्यभिचारिमुखेन रसप्रतीतिः । तस्मादयमन्यो ध्वनेः प्रकारः ।

लोचनम्

व्यक्तिस्तत्रास्त्वलक्ष्यक्रमः । यथा—

निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभिरदृश्यत स्थावरराजकन्या ॥

इत्यादौ सम्पूर्णालम्बनोद्दीपनविभावतायोग्यस्वभाववर्णनम् ।

प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥

इत्यनेन विभावतोपयोग उक्तः ।

हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

अत्र हि भगवत्याः प्रथममेव तत्प्रवणत्वात्तस्य चेदानीं तदुन्मुखीभूतत्वात्प्रणयिप्रियतया च पक्षपातस्य सूचितस्य गाढीभावाद्रत्यात्मनः स्थायिभावस्यौत्सुक्यावेगचापल्यहर्षादेश्च व्यभिचारिणः साधारणीभूतोऽनुभाववर्गः प्रकाशित इति विभावानुभावचर्वणैव व्यभिचारिचर्वणायां पर्यवस्यति । व्यभिचारिणां पारतन्त्र्यादेव स्रक्सूत्रकल्पस्थायिचर्वणाविश्रान्तेरलक्ष्यक्रमत्वम् । इह तु पद्मदलगणनमधोमुखत्वं चान्यथापि कुमारीणां सम्भाव्यत इति झटिति न लज्जायां विश्रमयति हृदयं, अपि तु प्राग्वृत्ततपश्चर्या-

बालप्रिया

परिग्रहः । **सम्पूर्णे**त्यादि । सम्पूर्णेति वर्णनविशेषणम् । आलम्बनमत्र देवी, उद्दीपनं सौन्दर्यवसन्तपुष्पाभरणादि । **विभावतोपयोग** इति । विभावताया उपयोग इत्यर्थः । **उक्त** इति । प्रतिग्रहीतुमित्यादिना सम्मोहनमित्यादिना च दर्शित इत्यर्थः। अत्र हीत्यस्यानुभाववर्गः प्रकाशित इत्यनेन सम्बन्धः ।**तत्प्रवणत्वा**दिति । हरासक्तत्वादित्यर्थः । **तस्ये**ति । हरस्येत्यर्थः । **तदुन्मुखी**ति । भगवत्युन्मुखीत्यर्थः । **प्रणयिप्रियतये**ति तद्धेतुकमालाग्रहणोपक्रमेणेत्यर्थः । सूचितस्येत्यनेनास्य सम्बन्धः । सूचितो यः पक्षपातः गाढीभावाद्रसात्मकस्थायिरूपः तस्य व्यभिचारिणश्च, योऽनुभाववर्ग इति सम्बन्धः। **अनुभावः** धैर्यपरिवृत्तिविलोचनव्यापरणादिरूपः । **इती**ति हेतौ । विभावानुभावचर्वणैवेत्येवकारेण कारणान्तरव्यवच्छेदः । **पारतन्त्र्या**दिति । स्थायिपरतन्त्रत्वादित्यर्थः । **स्रगि**ति । स्रक्स्थानीया व्यभिचारिणः, सूत्रस्थानीयः स्थयी । **इह त्वि**ति । 'एवं वादिनी'त्यादावित्यर्थः । **अन्यथापी**ति । लज्जातिरिक्तहेतुनापीत्यर्थः । **हृदयमि**ति । प्रतिपत्तुरिति शेषः । **तत्रे**ति । लज्जायामित्यर्थः । **क्रमव्यङ्ग्यतैवे**ति । लज्जाया इति शेषः । **प्रागि**ति । प्राग्वृत्तौ यस्तपश्चर्यादिवृत्तान्तो देव्याः तदनुस्मरणेन तद्द्वारेणेत्यर्थः । स्मारणेनेति वा पाठः । **तत्र** लज्जायाम् । **करोति** उत्पादयति । प्रति-

यत्र च शब्दव्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेनोपादीयते स नास्य ध्वनेर्विषयः । यथा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

अत्र लीलाकमलनिमीलनस्य व्यञ्जकत्वमुक्त्यैव निवेदितम् ।

लोचनम्

दिवृत्तान्तानुस्मरणेन तत्र प्रतिपत्तिं करोतीति क्रमव्यङ्ग्यतैव । रसस्त्वत्रापि दूरत एव व्यभिचारिस्वरूपे पर्यालोच्यमाने भातीति तदपेक्षयाऽलक्ष्यक्रमतैव । लज्जापेक्षया तु तत्र लक्ष्यक्रमत्वम् । अमुमेव भावमेवशब्दः केवलशब्दश्च सूचयति ।

'उक्तिं विने'ति यदुक्तं तद्व्यवच्छेद्यं दर्शयितुमुपक्रमते—**यत्र चेति** । चशब्दस्तु-शब्दस्यार्थे । **अस्येति** । अलक्ष्यक्रमस्तु तत्रापि स्यादेवेति भावः । उदाहरति—**सङ्केतेति** । **व्यञ्जकत्वमिति** । प्रदोषसमयं प्रतीति शेषः । **उक्त्यैवेति** । आद्यपादत्रयेणेत्यर्थः । यद्यपि चात्र शब्दान्तरसन्निधानेऽपि प्रदोषार्थं प्रति न कस्यचिदभिधाशक्तिः पदस्येति व्यञ्जकत्वं न विघटितं, तथापि शब्देनैवोक्तमयमर्थोऽर्थान्तरस्य व्यञ्जक इति ।

बालप्रिया

पत्युरिति शेषः । **क्रमव्यङ्ग्यतैवेति** । लज्जायास्संलक्ष्यक्रमव्यङ्ग्यत्वमेवेत्यर्थः । **रस इति** । शृङ्गार इत्यर्थः । **अत्रापि** 'एवंवादिनी'त्यादावपि । **दूरत एव** विलम्बेनैव । पर्यालोच्यमान इत्यनेन सम्बन्धः । लज्जारूपव्यभिचारिप्रतीतिर्विलम्बेनैव, तत्प्रतीतौ सत्याञ्च झटिति रसप्रतीतिरित्यर्थः । **तदपेक्षया** रसापेक्षया । अलक्ष्यक्रमतैवेत्येवकारेण लक्ष्यक्रमत्वव्यवच्छेदः । तर्हि कथमत्र लक्ष्यक्रमत्वमुक्तमित्यत आह—**लज्जेति** । **एवशब्दः केवलशब्दश्चेति** । 'अलक्ष्यक्रमव्यङ्ग्यस्यैवे'त्यत्रत्यैवशब्दः 'स तस्य केवलस्ये'त्यत्रत्यकेवलशब्दश्चेत्यर्थः । वृत्तौ 'अस्य ध्वने'रित्यस्य संलक्ष्यक्रमध्वनेरित्यर्थः । तदुक्तेः फलमाह—**अलक्ष्यक्रमस्त्विति** ।

**सङ्केतेति** । विटं सङ्केतकाले मनो यस्य तं तज्जिज्ञासुम् । अत एव हसद्भ्यां नेत्राभ्यामर्पितं सूचितं आकूतं सङ्केतकालजिज्ञासारूपाभिप्रायो येन तम्, ज्ञात्वेति सम्बन्धः । लोचने—**प्रदोषार्थं प्रति न कस्यचिदभिधाशक्तिः पदस्येति** । प्रदोषरूपार्थः केनापि पदेनाभिधया न प्रतिपाद्यत इत्यर्थः । **इतीति** हेतौ । **न विघटितमिति** । अतश्चात्र ध्वनिविषयत्वमेव युक्तमिति भावः । **शब्देनेति** । अयमर्थोऽर्थान्तरस्य व्यञ्जक इति शब्देनैवोक्तमित्यन्वयः । पद्मनिमीलनस्य प्रदोषसमयव्यञ्जकत्वमाद्यपादत्रयात्मकशब्देनैव प्रदर्शितमित्यर्थः । ततश्च तदपहस्तितमिति सम्बन्धः । **गोप्येति** । गोप्यमानतया उदितमुत्पन्नं यच्चारुत्वं तदात्मकमित्यर्थः । **प्राणितं**

तथा च—

**शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः।**
**यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः ॥२२॥**

शब्दशक्त्यार्थशक्त्या शब्दार्थशक्त्या वाक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनर्यत्र स्वोक्त्या प्रकाशीक्रियते सोऽस्मादनुस्वानोपमव्यङ्ग्याद्ध्वनेरन्य एवालङ्कारः। अलक्ष्यक्रमव्यङ्ग्यस्य वा ध्वनेः सति सम्भवे स तादृगन्योऽलङ्कारः।

लोचनम्

ततश्च ध्वनेर्यद्गोप्यमानतोदितचारुत्वात्मकं प्राणितं तदपहस्तितम्। यथा कश्चिदाह—'गम्भीरोऽहं न मे कृत्यं कोऽपि वेद न सूचितम्। किञ्चिद्ब्रवीमि' इति। तेन गाम्भीर्यसूचनार्थः प्रत्युत आविष्कृत एव। अत एवाह—**व्यञ्जकत्वमिति उक्त्यैवेति** च ॥ २२ ॥

प्रक्रान्तप्रकारद्वयोपसंहारं तृतीयप्रकारसूचनं चैकेनैव यत्नेन करोमीत्याशयेन साधारणमवतरणपदं प्रक्षिपति वृत्तिकृत्—**तथा चेति**। तेन चोक्तप्रकारद्वयेनायमपि तृतीयः प्रकारो मन्तव्य इत्यर्थः। शब्दश्चार्थश्च शब्दार्थौ चेत्येकशेषः। **सान्यैवेति**। न ध्वनिरसौ, अपि तु श्लेषादिरलङ्कार इत्यर्थः। अथवा ध्वनिशब्देनालक्ष्यक्रमः तस्या-

बालप्रिया

जीवितम्। दृष्टान्तमाह—**यथेत्यादि**। **गम्भीर** इति। गम्भीरो जनस्स्वकृत्यं वाचा न वदति, किन्तु कदाचित्सूचयतीति लोकस्थितिमभिप्रेत्य कस्यचिदुक्तिरियम्। अहं गम्भीरो न भवामि। अतः मे कृत्यं सूचितं सत् कोऽपि न वेद न जानाति। अतः किञ्चिद्ब्रवीमीत्यन्वयः। **तेनेति**। उक्तेन वाक्येनेत्यर्थः। **गाम्भीर्यसूचनार्थ** इति। गाम्भीर्यसूचको वदनविकाराद्यभावरूपोऽर्थ इत्यर्थः। **आविष्कृतः** प्रकाशितः। उक्ताभिप्रायेणैव वृत्तौ 'व्यञ्जकत्वमुक्त्यैव निवेदित' मित्युक्तं, न तु व्यङ्ग्यार्थः शब्दान्तरेण प्रदर्शित इतीत्याह—**अतएवेति** ॥ २२ ॥

'तथाचे'त्यस्य यथाश्रुतार्थे साङ्गत्याभावादवतारयन्विवृणोति—**प्रक्रान्तेत्यादि**। **प्रक्रान्तप्रकारद्वयेति**। शब्दशक्तिमूलार्थशक्तिमूलध्वनिद्वयेत्यर्थः। **तृतीयप्रकारेति**। शब्दार्थोभयशक्तिमूलध्वनिप्रकारेत्यर्थः। **इत्येकशेष** इति। शब्दश्चार्थश्च शब्दार्थौ शब्दार्थौ च शब्दार्थौ च शब्दार्थाः तेषां शक्तेत्यर्थात्त्रिविधोऽपि भेदस्सङ्गृहीत इति भावः। कारिकायां 'क्षिप्तोऽपी'ति पाठः। आक्षिप्त इतिच्छेदः। 'से'ति 'यत्रे'त्यस्य प्रतिनिर्देशः। तत्काव्यमित्यर्थः। यद्वा–तत्रेति शेषः। सेति व्यङ्ग्यार्थ इत्यर्थः। सान्येत्याद्यन्तपादो द्वेधा वृत्तौ विवृतः, तदनुरोधेनाद्यमर्थं विवृणोति लोचने—**न ध्वनिरि-**

तत्र शब्दशक्त्या यथा—

वत्से मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वप्रवृत्तं
कम्पः का वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढां पयोधिः ॥ ५ ॥

लोचनम्

लङ्कार्यस्याङ्गिनः स व्यङ्ग्योऽर्थोऽन्यो वाच्यमात्रालङ्कारापेक्षया द्वितीयो लोकोत्तरश्चालङ्कार इत्यर्थः । एवमेव वृत्तौ द्विधा व्याख्यास्यति । विषमत्तीति **विषादः** । **ऊर्ध्वप्रवृत्त**मग्निमित्यत्र चार्थो मन्तव्यः । **कः**पोऽपाम्पतिः **को** ब्रह्मा वा तव **गुरुः** । **बलभिदा** इन्द्रेण **जृम्भितेन** ऐश्वर्यमदमत्तेनेत्यर्थः । जृम्भितं च गात्रसंमर्दनात्मकं बलं भिनत्ति आयासकारित्वात् । **प्रत्याख्यान**मिति वचसैवात्र द्वितीयोऽर्थोऽभिधीयत इति निवेदितम् । **कारयित्वे**ति । सा हि कमला पुण्डरीकाक्षमेव हृदये निधायोत्थितेति स्वयमेव देवान्तराणां प्रत्याख्यानं करोति । स्वभावसुकुमारतया तु मन्दरान्दोलितजलधितरङ्गभङ्गपर्याकुलीकृतां तेन प्रतिबोधयता तत्समर्थाचरणमन्यत्र दोषोद्घाटनेन अत्र **याही**ति चाभिनयविशेषेण सकलगुणादरदर्शकेन कृतम् । अत एव **मन्थमूढा**मित्याह ।

बालप्रिया

त्यादि । **असौ** व्यङ्ग्यार्थः । द्वितीयं व्याचष्टे—**अथवे**त्यादि । पूर्वस्मिन् पक्षे ध्वनेरिति पञ्चम्यन्तं संलक्ष्यक्रमध्वनिपरमस्मिंस्तु षष्ठ्यन्तमसंलक्ष्यक्रमध्वनिपरमित्याह—**ध्वनिशब्देने**त्यादि । उक्त इति शेषः । तादृगन्य इति वृत्त्यनुरोधेनान्यपदं व्याचष्टे—**वाच्ये**त्यादि । तादृगित्यस्य विवरणम्—**लोकोत्तर** इति ।

**वत्से** इति । हे वत्से त्वं विषादं दुःखं मा गाः । ऊर्ध्वप्रवृत्तमुरुजवं श्वसनं दीर्घश्वासं सन्त्यज संवृण्विति च पाठः, गुरुः महानित्यादि यथाश्रुतार्थस्य स्पष्टत्वादर्थान्तरं विवृणोति—**विषमि**त्यादि । **विषाद** इति । शिव इत्यर्थः । ऊर्ध्वप्रवृत्तमित्यस्य विवरणम्—'अग्निमि'ति । **चार्थो मन्तव्य** इति । श्वसनमूर्ध्वप्रवृत्तञ्चेति समुच्चयो ज्ञातव्य इत्यर्थः । **गुरुः** पिता। बलभिदा जृम्भितेनेत्यस्य वाच्यार्थञ्च प्रसङ्गादाह—**जृम्भितञ्चे**त्यादि । द्वितीयार्थस्य स्वोक्त्याविष्करणं दर्शयति—**प्रत्याख्यान**मिति । **वचसैवे**ति । निवेदितमित्यनेनान्वयः । **द्वितीयोऽर्थ** इति । शिवादिपरित्यागरूपार्थ इत्यर्थः । **कारयित्वे**ति । णिजर्थोऽत्र तत्समर्थाचरणरूपो न स्वप्रवृत्तप्रवर्त्तनरूपः, तस्य रसाननुगुणत्वादित्याह—**सा ही**त्यादिना । सुकुमारतया पर्याकुलीकृतामिति सम्बन्धः । तामिति शेषः । प्रतिबोधयता तेन तत्समर्थाचरणं कृतमित्यन्वयः । **तेन** समुद्रेण । **अन्यत्रे**ति । शिवादिदेवेष्वित्यर्थः । **दोषोद्घाटनेने**ति । विषादादिपदैः विषभक्षणादिदोषाणां प्रकाशनेनेत्यर्थः । **अत्रे**ति । लोकोत्तरगुणविशिष्टे श्रीनारायणे इत्यर्थः ।

अर्थशक्त्या यथा—

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र ।
अस्मिन् पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥

उभयशक्त्या यथा—'दृष्टया केशवगोपरागहृतया' इत्यादौ ।

लोचनम्

इत्युक्तप्रकारेण भयनिवारणव्याजेन सुराणां प्रत्याख्यानं मन्थमूढां लक्ष्मीं कारयित्वा पयोधिर्यस्मै तामदात्स वो युष्माकं दुरितं दहत्विति सम्बन्धः ।

**अम्बेति** । अत्रैकैकस्य पदस्य व्यञ्जकत्वं सहृदयैः सुकल्प्यमिति स्वकण्ठेन नोक्तम् । व्याजशब्दोऽत्र स्वोक्तिः । एवमुपसंहारव्याजेन प्रकारद्वयं सोदाहरणं निरूप्य तृतीयं प्रकारमाह—**उभयेति** । शब्दशक्तिस्तावद्गोपरागादि शब्दश्लेषवशात् ।

बालप्रिया

**सकलेति** । भगवत्सम्बन्धिषु सकलगुणेषु य आदरः स्वस्य बहुमतिस्तद्दर्शकेनेत्यर्थः । **अत एवेति** । समर्थाचरणस्य णिजर्थत्वादेवेत्यर्थः । **मन्थमूढामिति** । तज्ज्ञापकमिति भावः । उत्तरार्धं व्याचष्टे—**इतीत्यादि** । **लक्ष्मीं कारयित्वेति** । "हृक्रोरन्यतरस्या" मित्यनेन कर्मसंज्ञा ।

सुरूपं कञ्चित्पान्थमवलोक्य प्रवृद्धमदना काचित्स्वैरिणी तमाह—**अम्बेति** । शेते इत्यस्योत्तरत्राप्यनुषङ्गः । परिणतवयसां वृद्धानाम् । निश्शेषैरगारकर्मभिस्स्वयमनुष्ठितैः गृहकर्मभिः यः श्रमस्तेन शिथिला अस्वस्था तनुर्यस्याः सा । 'अवसरे'ति । अवसरस्य तत्तत्स्थले मात्रादिशयनादिरूपस्य प्रस्तावस्य व्याहृतिरुक्तिः तस्य व्याजः सः पूर्वो यत्र तत्तथा । अत्रावयोर्यथाकामं रन्तुं शक्यं कोऽपि न जानीयात्, त्वद्दर्शनेन कामार्तां मां रमणेन प्रीणयेति वक्त्री बोधयतीति वक्तृवैशिष्ट्यादिज्ञानवतां सहृदयानां व्यज्यते । परन्तु व्यङ्ग्यार्थो यमवसरव्याहृतिव्याजपूर्वमिति व्याजशब्देन कविना आविष्कृतः । **सुकल्प्यमिति** । अम्बा तात इत्याभ्यां पित्रोर्नैसर्गिकवात्सल्यशालित्वेन तौ मम सर्वत्राप्यनुकूलावेवेति । तद्विशेषणाभ्यां निद्रापरवशत्वं परसाहाय्यं विना शयनादुत्थानाशक्तत्वमित्यादि, निश्शेषेत्यादिना दास्या गाढनिद्रितत्वम्, उक्तैर्हेतुभिस्तेषामनाशङ्कनीयत्वं, दासीत्यनेन स्वाज्ञावर्तित्वं, पापेत्यनेनाद्यावधिस रससम्भोगानुभवराहित्यम्, एकेत्यनेन पुरुषान्तरानुभोगाभावः, अत एव सम्भोगौत्सुक्यं, कतिपयेत्यादिना पत्युरचिरात्प्रत्यागमनमनाशङ्क्यमिति प्राणनाथइत्यनेन पतिविषयकानुरागाभाव इति च द्योत्यत इत्यूह्यमिति भावः । **इतीति** हेतौ । **स्वकण्ठेन नोक्तमिति** । स्वयं व्याख्या-

**प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।**
**अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥ २४ ॥**

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थ उक्तस्तस्यापि द्वौ प्रकारौ—कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीर एकः, स्वतस्सम्भवी च द्वितीयः ।

लोचनम्

अर्थशक्तिस्तु प्रकरणवशात् । यावदत्र राधारमणस्याखिलतरुणीजनच्छन्नानुरागगरिमास्पदत्वं न विदितं तावदर्थान्तरस्याप्रतीतेः, सलेशमिति चात्र स्वोक्तिः ॥ २३ ॥

एवमर्थशक्त्युद्भवस्य सामान्यलक्षणं कृतम् । श्लेषाद्यलङ्कारेभ्यश्चास्य विभक्तो विषय उक्तः । अधुनास्य प्रभेदनिरूपणं करोति—**प्रौढोक्ती**त्यादिना । योऽर्थान्तरस्य दीपको व्यञ्जकोऽर्थ उक्तः सोऽपि द्विविधः । न केवलमनुस्वानोपमो द्विविधः, यावत्तद्भेदो यो द्वितीयः सोऽपि व्यञ्जकार्थद्वैविध्यद्वारेण द्विविध इत्यपिशब्दस्यार्थः । प्रौढोक्तेरप्यवान्तरभेदमाह—**कवे**रिति । तेनैते त्रयो भेदा भवन्ति । प्रकर्षेण ऊढः सम्पादयितव्येन वस्तुना प्राप्तस्तत्कुशलः प्रौढः । उक्तिरपि समर्पयितव्यवस्त्वर्पणोचिता प्रौढेत्युच्यते ।

बालप्रिया

नेन न प्रदर्शितमित्यर्थः । अर्थशक्तिस्तु प्रकरणवशादित्युक्तमेव विवृणोति—**याव**दित्यादि ॥ २३ ॥

अर्थोऽपीत्यपिशब्दार्थमाह—**न केवल**मित्यादि । कवेरित्यादिकमवतारयति—**प्रौढोक्ते**रिति । **एते त्रयो भेदा** इति । कविप्रौढोक्तिमात्रसिद्धः, कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धः, स्वतस्सम्भवी चेति त्रयो भेदा इत्यर्थः । प्रौढपदव्युत्पत्तिमाह—**प्रकर्षे**णेत्यादि । ऊढ इत्यस्य व्याख्यानं–सम्पादेत्यादि । **त**दिति । तस्मादित्यर्थः । सम्पादयितव्यवस्तुप्राप्तेः कुशल एव सम्भवादिति यावत् । **प्रौढ** इति । प्रौढ इत्युच्यत इत्यर्थः । प्र ऊढ इति स्थिते "प्रादूहोढे"त्यादिना वृद्धिः । **समर्पयितव्ये**ति ।

१. अत्र केचित्—द्वौ भेदावेवोचितौ, कविनिबद्धवक्तृप्रौढोक्तिसिद्धस्य कविप्रौढोक्तिसिद्धभेदेन गतार्थत्वात् । अन्यथा तन्निबद्धनिबद्धादेः पृथक्सङ्कलनायामनवस्थाप्रसक्तेर्दुर्निवारत्वात् । तन्निबद्धनिबद्धादेः कविनिबद्धत्वेनानुगमे तु कवित्वेन प्रथमनिबद्धस्यापि अनुगमसम्भवात् पृथग्गणनाया निर्युक्तिकत्वात् इत्यभिदधते । वस्तुतस्तु जरठभाषणमपेक्ष्य शिशुशुकभाषण इव कविभाषणात् कविनिबद्धभाषणे चमत्काराधिक्योदयस्य सकलहृदयानुभवसिद्धत्वात् कवितन्निबद्धप्रौढोक्तिसिद्धभेदद्वयं समुचितम्, तन्निबद्धनिबद्धादेस्तु प्रणिधानविशेषप्रयोज्यप्रतिपत्तिकतया चमत्कृत्यनुदयात् नानवस्थादोषप्रसङ्गस्सम्भवति इत्याचार्याणामाशयः ।

कविप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा--

सज्जेहि सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स शरे॥

कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो यथोदाहृतमेव—'शिखरिणि' इत्यादि।

लोचनम्

सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्।
अभिनवसहकारमुखान्नवपल्लवपत्रलाननङ्गस्य शरान्॥

अत्र वसन्तश्चेतनोऽनङ्गस्य सखा सज्जयति केवलं न तावदर्पयतीत्येवंविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत उक्ता अतो ध्वन्यमानं मन्मथोन्माथस्यारम्भं क्रमेण गाढगाढीभविष्यन्तं व्यनक्ति। अन्यथा वसन्ते सपल्लवसहकारोद्गम इति वस्तुमात्रं न व्यञ्जकं स्यात्। एषा च कवेरेवोक्तिः प्रौढा। शिखरिणीति। अत्र लोहितं बिम्बफलं शुको दशतीति न व्यञ्जकता काचित्। यदा तु कविनिबद्धस्य साभिलाषस्य तरुणस्य वक्तुरित्थं प्रौढोक्तिस्तदा व्यञ्जकत्वम्।

बालप्रिया

सहृदयहृदयार्पणयोग्येत्यर्थः। वृत्तौ—'स्वतस्सम्भवी च द्वितीय' इति पाठः क्वाचित्कः।

**सज्जयतीति**। **सुरभिमासः** वसन्तसम्बन्धी मासः। युवतिजना एव लक्ष्याणि येषां तथाविधानि मुखान्यग्राणि येषां तान्। लक्षसहानिति पाठे तानि सहन्ते तेष्वेव प्रयोज्या इति यावत्तानित्यर्थः। **नवेति**। नवानि पल्लवाश्च पत्राणि च तानि लान्ति आददते इति तान्। **अभीति**। नूतनसहकारपुष्पादीनित्यर्थः। तानेव **अनङ्गस्य** शरान्। सजयति, न तावदर्पयतीत्यन्वयः। सज्जीकरणाद्यन्वयोपपत्त्यर्थमाह लोचने—**वसन्तश्चेतन** इति। वसन्तश्चेतनत्वेनाध्यस्त इति भावः। **सहेति**। सहकारस्योद्भेदः प्रकाशः तद्वतीत्यर्थः। सहकारपदं पुष्पान्तरोपलक्षणम्। **उक्तेति**। अभिहितेत्यर्थः। उक्त्या उक्तेति सम्बन्धः। **अतो ध्वन्यमानमित्यादि**। तथाविधानङ्गस्य शरान् सजयति केवलमित्यनेन मन्मथोन्माथनस्यारम्भः, न तावदर्पयतीत्यनेन भविष्यदर्पणव्यञ्जनद्वारा मन्मथोन्माथनस्य भावी गाढगाढीभावश्च द्योत्यत इत्यर्थः। **अन्यथेति**। उक्तप्रकारातिरिक्तप्रकारेणेत्यर्थः। तत्प्रकारमाह—**वसन्त** इत्यादि। **इतीति**। एतद्वचनप्रतिपाद्यमित्यर्थः। **नेत्यादि**। उक्तार्थव्यञ्जकं न भवेदित्यर्थः। **अत्रेत्यादि**। शुक इत्यस्य स्थाने अयं शुकपोतक इति च पाठः। **इतीत्यादि**। इतिवचनप्रतिपाद्यस्य काऽपि व्यञ्जकता नेत्यर्थः। **इत्थमिति**। शिखरिणीत्यादिरूपेत्यर्थः। **तदा**

यथा वा—

साअरविइण्णजोव्वणहत्थालम्बं समुण्णमन्तेहिम् ।
अब्भुट्ठाणं विअ मम्महस्स दिण्णं तुह थणेहिम् ॥

स्वतः सम्भवी य औचित्येन बहिरपि सम्भाव्यमानसद्भावो न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरः । यथोदाहृतम् 'एवंवादिनि' इत्यादि ।

यथा वा—

सिहिपिञ्छकण्णपूरा जाआ वाहस्स गव्विरी भमइ ।
मुत्ताफलरइअपसाहणाणँ मज्झे सवत्तीणम् ॥

लोचनम्

सादरवितीर्णयौवनहस्तालम्बं समुन्नमभ्याम् ।
अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम् ॥

स्तनौ तावदिह प्रधानभूतौ ततोऽपि गौरवितः कामस्ताभ्यामभ्युत्थानेनोपचर्यते । यौवनं चानयोः परिचारकभावेन स्थितमित्येवंविधेनोक्तिवैचित्र्येण त्वदीयस्तनावलोकनप्रवृद्धमन्मथावस्थः को न भवतीति भङ्ग्या स्वाभिप्रायध्वननं कृतम् । तव तारुण्येनोन्नतौ स्तनाविति हि वचनेन व्यञ्जकता । न केवलमिति । उक्तिवैचित्र्यं तावत्सर्वथोपयोगि भवतीति भावः ।

शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति ।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥

शिखिमात्रमारणमेव तदासक्तस्य कृत्यम् । अन्यासु त्वासक्तो हस्तिनोऽप्यमारय-

बालप्रिया

**व्यञ्जकत्वमिति** । व्यंग्यार्थाः प्रथमोद्योते प्रदर्शिताः । **सादरेति** । कृत्वेति पाठे तत्पूरितम् । सादरं वितीर्णो यौवनेन दत्तो यौवनहस्तालम्बो यत्र तद्यथा तथा । समुन्नमद्भ्यां तव स्तनाभ्यां मन्मथस्याप्युत्थानं दत्तमिवेत्यन्वयः । अत्र यौवनादिषु परिजनादिचेतनवृत्तान्तारोपात्समासोक्तिरुत्प्रेक्षाङ्गमित्याशयेन विवृणोति—**स्तनावि**त्यादि । **इति हीत्यादि** । इति वचने सति तत्प्रतिपाद्यस्य व्यञ्जकता न हीत्यर्थः। **न केवलमिति** । इदं प्रतीकधारणम् । स्वतःसम्भवीत्यनेन लोके सम्भाव्यमानोऽपीत्यर्थो विवक्षित इत्याशयेन वृत्तौ 'य' इत्यादिना विवृतं, तत्र न केवलमित्यादिना गम्यमर्थं दर्शयति—**उक्तिवैचित्र्यमित्यादि** । **उपयोगीति** । काव्य इति शेषः । उक्तिवैचित्र्याभावे भाव्यत्वं न भवतीति भावः । **शिखीति** । गाथेयं तृतीयोद्योते वृत्तिकृता उदाहृत्य व्याख्यास्यते । **जायेति** । नवपरिणीतेत्यर्थः । **प्रसाधनं** अलङ्कारः । **सपत्नीनामिति** । पूर्वपरिणीतानामित्यर्थः । **शिखीति** । शिखिनां समीपस्थत्वादिति

**अर्थशक्तेरलङ्कारो यत्राप्यन्यः प्रतीयते ।**

**अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥ २५ ॥**

**वाच्यालङ्कारव्यतिरिक्तो यत्रान्योऽलङ्कारोऽर्थसामर्थ्यात्प्रतीयमानोऽवभासते सोऽर्थशक्त्युद्भवो नामानुस्वानरूपव्यङ्ग्योऽन्यो ध्वनिः ।**

**तस्य प्रविरलविषयत्वमाशङ्क्येदमुच्यते—**

लोचनम्

दिति हि वचनेनोक्तमुत्तमसौभाग्यम् । रचितानि विविधभङ्गीभिः प्रसाधनानीति तासां सम्भोगव्यग्रिमाभावात्तद्विरचनशिल्पकौशलमेव परमिति दौर्भाग्यातिशय इदानीमिति प्रकाशितम् । गर्वश्च बाल्याविवेकादिनापि भवतीति नात्र स्वोक्तिसद्भावः शङ्क्यः । एष चार्थो यथा यथा वर्ण्यते आस्तां वा वर्णना, बहिरपि यदि प्रत्यक्षादिनावलोक्यते तथा तथा सौभाग्यातिशयं व्याधवध्वा द्योतयति ॥ २४ ॥

एवमर्थशक्त्युद्भवो द्विभेदो वस्तुमात्रस्य व्यञ्जनीयत्वे वस्तुध्वनिरूपतया निरूपितः। इदानीं तस्यैवालङ्काररूपे व्यञ्जनीयेऽलङ्कारध्वनित्वमपि भवतीत्याह—**अर्थे**त्यादि । न केवलं शब्दशक्तेरलङ्कारः प्रतीयते पूर्वोक्तनीत्या यावदर्थशक्तेरपि । यदि वा न केवलं यत्र वस्तुमात्रं प्रतीयते यावदलङ्कारोऽपीत्यपिशब्दार्थः । अन्यशब्दं व्याचष्टे—**वाच्येति** ॥ २५ ॥

**आशङ्क्येति** । शब्दशक्त्या श्लेषाद्यलङ्कारो भासत इति सम्भाव्यमेतत् । अर्थ-

बालप्रिया

भावः । **तदासक्तस्येति** । जायायामत्यासक्तस्य व्याधस्येत्यर्थः । **कृत्यमिति** । तद्विरहासहनादिति भावः । **अन्यास्विति** । सपत्नीष्वित्यर्थः । **हस्तिनोऽपीति** । दूरस्थानपीति भावः । **इति हि वचनेनेति** । उक्तवाक्यार्थेनेत्यर्थः । **उक्तं** व्यञ्जितम् । **उत्तमसौभाग्यमिति** । जायाया इति शेषः । मुक्ताफलेत्यादिव्यङ्ग्यं दर्शयति—**रचितानीत्यादि** । **इदानीमिति** । नवपरिणयनोत्तरकाल इत्यर्थः । ननु व्यङ्ग्यो जायायाः सौभाग्यातिशयो हि गर्वहेतुरित्यतस्सोऽर्थो गर्विणीत्यनेनाविष्कृत इत्यत आह—**गर्वश्चेति** । बाल्यनिमित्तकः अविवेकः बाल्याविवेकः । आदिपदेन सम्भवतो हेत्वन्तरस्य परिग्रहः । स्वतःसम्भवी य औचित्येन बहिरपि सम्भाव्यमानेत्याद्युक्तं योजयति—**एष चार्थ** इत्यादि ॥ २४ ॥

'अर्थे'त्यादिकारिकामवतारयति—**एवमित्यादि** । **तस्यैव** अर्थशक्त्युद्भवस्यैव । अलङ्कारध्वनित्वमित्यनेनास्य सम्बन्धः । **व्यञ्जनीये** अर्थेन व्यङ्ग्ये सति । यत्रापीत्यपिशब्दस्य अर्थशक्तेरपीति अलङ्कारोऽपीति योजनां विकल्पेन दर्शयन्नाह—**न केवलमित्यादि** ॥ २५ ॥

शङ्काबीजं दर्शयति—**शब्दशक्त्येत्यादि** । **पदेनेति** । कारिकास्थपदेनेत्यर्थः ।

**रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः ।**
**स सर्वो गम्यमानत्वं बिभ्रद्भूम्ना प्रदर्शितः ॥२६॥**

**अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलङ्कारः सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्रभवद्भिर्भट्टोद्भटादिभिः । तथा च ससन्देहादिषूपमारूपकातिशयोक्तीनां प्रकाशमानत्वं प्रदर्शितमित्यलङ्कारान्तरस्यालङ्कारान्तरे व्यङ्ग्यत्वं न यत्नप्रतिपाद्यम् ।**

लोचनम्

शक्त्या तु कोऽलङ्कारो भातीत्याशङ्काबीजम् । **सर्व** इति **प्रदर्शित** इति च पदेनासम्भावनात्र मिथ्यैवेत्याह ।

उपमानेन तत्त्वं च भेदं च वदतः पुनः ।
ससन्देहं वचः स्तुत्यै ससन्देहं विदुर्यथा ॥ इति ।
तस्याः पाणिरयं नु मारुतचलत्पत्राङ्गुलिः पल्लवः

इत्यादावुपमा रूपकं वा ध्वन्यते । अतिशयोक्तेश्च प्रायशः सर्वालङ्कारेषु ध्वन्यमानत्वम् । **अलङ्कारान्तरस्ये**ति । यत्रालङ्कारोऽप्यलङ्कारान्तरं ध्वनति तत्र वस्तुमात्रेणालङ्कारो ध्वन्यत इति कियदिदमसम्भाव्यमिति तात्पर्येणालङ्कारान्तरशब्दो वृत्तिकृता प्रयुक्तो न तु प्रकृतोपयोगी ; न ह्यलङ्कारेणालङ्कारो ध्वन्यत इति प्रकृतमदः, अर्थशक्त्युद्भवे ध्वनौ वस्त्विवालङ्कारोऽपि व्यङ्ग्य इत्येतावतः प्रकृतत्वात् । तथा चोप-

बालप्रिया

तथा च ससन्देहादिष्वित्यादिवृत्तिग्रन्थं विवृणोति—**उपमानेने**त्यादि । लक्षणमिदमुद्भटोक्तम् । **तत्त्वमि**ति । अभेदमित्यर्थः । **भेदं** वैधर्म्यमुपमेयस्येति शेषः । **वदतः** वर्णयतः कवेः । **इतो**ति । 'अलङ्कारान्तरच्छाया'मित्यादिकारिकया भेदानुपनिबन्धनघटितमपि लक्षितं तस्योपलक्षणमिदम् । **तस्या** इति । श्लोकस्यास्य सम्पूर्णस्यानवगमाद्यथाभातं व्याख्यायते—अयं तस्याः पाणिः पल्लवः नु इति योजना । नु इति संशये । उभयसाधारणम्—**मारुते**त्यादि । मारुतचलत्पत्राण्येवाङ्गुलयो यस्य सः । अङ्गुलीनां चलत्वमर्थात् सिध्यति । 'उपमारूपकातिशयोक्तीनां' इत्यत्रेतरेतरयोगो न विवक्षित इत्याशयेनाह—**उपमारूपकं** वेति । **अतिशयोक्तेश्चे**ति । एतत्तृतीयोद्योते वक्ष्यते । 'इत्यलङ्कारान्तरस्ये'त्यादिग्रन्थो यथाश्रुते प्रकृतासङ्गत इत्यतस्तद्भावार्थमाह—**यत्रे**त्यादि । **यत्र** काव्ये । यद्वा—यतः **तत्र** तत्काव्ये । यद्वा—ततः इतीदमित्यन्वयः । **कियदि**त्यादि । असम्भाव्यं नेत्यर्थः । **अलङ्कारान्तरशब्दः** सप्तम्यन्तालङ्कारान्तरशब्दः । 'न तु प्रकृतोपयोगी'त्यत्र हेतुमाह—**न ही**त्यादि । तर्हि किं

इयत्पुनरुच्यत एव—

अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥ २७ ॥

अलङ्कारान्तरेषु त्वनुरणनरूपालङ्कारप्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नासौ ध्वनेर्मार्गः । तथा च दीपकादावलङ्कारे उपमाया गम्यमानत्वेऽपि तत्परत्वेन चारुत्वस्याव्यवस्थानान्न ध्वनिव्यपदेशः ।

यथा—

चन्दमऊएहि णिसा णलिनी कमलेहि कुसुमगुच्छेहि लआ ।

लोचनम्

संहारग्रन्थे 'तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः' इत्यत्र श्लोके वृत्तिकृत् 'ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां' इत्युपक्रम्य 'तत्रेह प्रकरणाद्व्यङ्ग्यत्वेनेत्यवगन्तव्यम्' इति वक्ष्यति। अन्तरशब्दो वोभयत्रापि विशेषपर्यायः; वैषयिकी सप्तमी, न तु प्राग्व्याख्यायामिव निमित्तसप्तमी । तदयमर्थः-वाच्यालङ्कारविशेषविषये व्यङ्ग्यालङ्कारविशेषो भातीत्युद्भटादिभिरुक्तमेवेत्यर्थशक्त्यालङ्कारो व्यज्यत इति तैरुपगतमेव । केवलं तेऽलङ्कारलक्षणकारत्वाद्वाच्यालङ्कारविशेषविषयत्वेनाहुरिति भावः ॥ २६ ॥

ननु पूर्वैरेव यदीदमुक्तं किमर्थं तव यत्न इत्याशङ्क्याह—**इयदिति** । अस्माभिरिति वाक्यशेषः। पुनःशब्दस्तदुक्ताद्विशेषद्योतकः । **चन्दमऊ** इति । चन्द्रमयूखादीनां न निशादिना विना कोऽपि परभागलाभः।सज्जनानामपि काव्यकथां विना कीदृशी

बालप्रिया

प्रकृतमित्यत्राह—**अर्थेत्यादि** । अत्रोपष्टम्भकमाह—**तथाचेत्यादि** । **प्रकरणाद्व्यङ्ग्यत्वेनेति** । ध्वन्यङ्गतेत्यनेनास्य सम्बन्धः । अलङ्कारान्तरेण अलङ्कारान्तरस्य व्यङ्ग्यत्वमित्यस्य एकालङ्कारनिमित्तकमन्यालङ्कारस्य व्यङ्ग्यत्वमित्यर्थमभिसन्धाय भावार्थो विवृतः । अथार्थान्तराभिप्रायेण विवृणोति—**अन्तरशब्दो वेति** । **विशेषपर्यायः** विशेषवाची । **वैषयिकी** विषयरूपार्थवाचिका। **सप्तमीति** । 'अलङ्कारान्तर' इत्यत्रत्यसप्तमीत्यर्थः । फलितमाह—**तदित्यादि** । **वाच्येति** । वाच्यालङ्कारविशेषरूपो यो विषयस्तस्मिन्नित्यर्थः । वाच्यालङ्कारविशेषशालिनि काव्य इति यावत् । **भातीति** । यथा ससन्देहादावुपमादिः ॥ २६ ॥

**चन्द्रेत्यादि** । अत्र गुर्वीक्रियत इत्यस्य चन्द्रमयूखैर्निशेत्यादिभिः पञ्चभिः प्रत्येकं सम्बन्धः । अत्र निशया चन्द्रमयूखाः गुरवः क्रियन्ते इत्यादिविपरिणामेन पदानां सम्बन्धादर्थसामर्थ्याद्वा प्रतीयमानमर्थान्तरं दर्शयति—**चन्द्रेत्यादि** । **कीदृशीति** ।

हंसेहि सरअसोहा कव्वकहा सज्जनेहि करइ गरुई ॥
(चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता ।
हंसैश्शारदशोभा काव्यकथा सज्जनैः क्रियते गुर्वी ॥ इति छाया)

इत्यादिषूपमागर्भत्वेऽपि सति वाच्यालङ्कारमुखेनैव चारुत्वं व्यवतिष्ठते न व्यङ्ग्यालङ्कारतात्पर्येण । तस्मात्तत्र वाच्यालङ्कारमुखेनैव काव्यव्यपदेशो न्याय्यः । यत्र तु व्यङ्ग्यपरत्वेनैव वाच्यस्य व्यवस्थानं तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः ।

लोचनम्

साधुजनता । चन्द्रमयूखैश्च निशाया गुरुकीकरणं भास्वरत्वसेव्यत्वादि यत्क्रियते, कमलैर्नलिन्याः शोभापरिमललक्ष्म्यादि, कुसुमगुच्छैर्लताया अभिगम्यत्वमनोहरत्वादि, हंसैः शारदशोभायाः श्रुतिसुखकरत्वमनोहरत्वादि, तत्सर्वं काव्यकथायाः सज्जनैरित्येतावानयमर्थो गुरुः क्रियत इति दीपकबलाच्चकास्ति । कथाशब्द इदमाह—आसतां तावत्काव्यस्य केचन सूक्ष्मा विशेषाः, सज्जनैर्विना काव्यमित्येष शब्दोऽपि ध्वंसते । तेषु तु सत्स्वास्ते सुभगं काव्यशब्दव्यपदेशभागपि शब्दसन्दर्भमात्रम्; तथा तैः क्रियते यथादरणीयतां प्रतिपद्यत इति दीपकस्यैव प्राधान्यं नोपमायाः । एवं तु कारिकार्थमुदाहरणेन प्रदर्श्यास्या एव कारिकाया व्यवच्छेद्यबलेन योऽर्थोऽभिमतो यत्र तत्परत्वं स ध्वनेमार्ग इत्येवंरूपस्तं व्याचष्टे—**यत्र** त्विति । तत्र च वाच्यालङ्कारेण कदाचिद्व्यङ्ग्यमलङ्कारान्तरं, यदि वा वाच्यालङ्कारस्य सद्भावमात्रं न व्यञ्जकता, वाच्या-

बालप्रिया

न भवतीत्यर्थः । गुरुकीकरणं विवृणोति—**चन्द्रमयूखैश्चे**त्यादि । **यत्क्रियते** इति । तदिति शेषः । कमलैरित्यादिवाक्येष्वपि यत्क्रियत इत्यस्यानुषङ्गः । **तत्सर्व**मिति । काव्यकथान्वययोग्यं पूर्वोक्तं सेव्यत्वमनोहरत्वादिकमित्यर्थः । **सज्जनै**रिति । क्रियत इत्यस्यानुषङ्गः । **चकास्ती**ति । वाच्यतया प्रतीयत इत्यर्थः । कवितेत्यनुक्त्वा काव्यकथेत्युक्तेः फलमाह—**कथे**त्यादि । काव्यकथेत्यस्य कथ्यमानं काव्यमित्यर्थः । तत्र कथाशब्दो वक्ष्यमाणं द्योतयतीत्यर्थः । **सूक्ष्मा विशेषाः** ध्वनित्वादयः । **तेष्वि**ति । सज्जनेष्वित्यर्थः । शब्दसन्दर्भमात्रमपि काव्यशब्दव्यपदेशभाक् सुभगमास्त इत्यन्वयः । कुत इत्यत्राह—**तथे**त्यादि । 'इति दीपकस्ये'त्यादिना 'वाच्ये'त्यादिवृत्तिग्रन्थो विवृतः । **नोपमाया** इति । सज्जनेषु हंसादीनां काव्यकथायां निशादीनां च गम्यमानाया उपमाया न प्राधान्यमित्यर्थः । **व्यवच्छेद्यबलेने**ति । यत्र भासते तत्परत्वं नेत्याद्युक्तिसामर्थ्येनेत्यर्थः । **अभिमतः** विवक्षितः । यत्रेत्यादिना प्रदर्शितस्य विकल्पेन त्रैविध्यं भवतीति दर्शयति—**तत्र चे**त्यादि । **कदाचिदि**त्य-

यथा—

प्राप्तश्रीरेष कस्मात्पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

यथा वा ममैव—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मि-
न्स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ॥

लोचनम्

लङ्कारस्याभाव एव वेति त्रिधा विकल्पः । एतच्च यथायोगमुदाहरणेषु योज्यम् । उदाहरति—**प्राप्तेति** । कस्मिंश्चिदनन्तबलसमुदायवति नरपतौ समुद्रपरिसरवर्तिनि पूर्णचन्द्रोदयतदीयबलावगाहनादिना निमित्तेन पयोधेस्तावत्कम्पो जातः । सोऽनेन सन्देहेनोत्प्रेक्ष्यत इति ससन्देहोत्प्रेक्षयोः सङ्करात्सङ्करालङ्कारो वाच्यः । तेन च वासुदेवरू-

बालप्रिया

स्योत्तरवाक्ययोरपि सम्बन्धः । एषामुदाहरणानि स्फुटीभविष्यन्ति । **प्राप्तश्रीरिति** । एषः राजा, प्राप्ता श्रीः सम्पद्रमा च येन सः । अतः पुनरपि मयि तमनुभूतम् । मन्थखेदं मथनहेतुकं दुःखम् कस्मात् किमिति विदध्यात् कुर्यात् । अत्रादौ पुनरपीत्यादि सन्देहः, पश्चान्मथनफलभूतलक्ष्मीप्राप्तिबुद्ध्या कस्मादिति फलान्तरजिज्ञासा । एवमुपर्यपि बोध्यम् । अनलसमालस्यरहितं मनो यस्य तस्येति हेतुगर्भम् । अस्य राज्ञः पूर्वां निद्रामप्यहं नैव सम्भावयामि नैव संशये । **सेतुमिति** । एष मयीत्यनुषङ्गः । एषः यतः सकलद्वीपनाथैरनुयातः, अतः किमिति मयि भूयः सेतुं बध्नाति । त्वयि आयाते स्वसन्निधिमागते सति इति वितर्कान् पूर्वोक्तवाक्यैर्गम्यान् किं मथ्नीयादित्यादिसन्देहान् । दधत इव तद्धारणादिव पयोधेः कम्पः जलचाञ्चल्यमथ च वेपथुः आभातीत्यन्वयः । अत्र वाच्यं तद्व्यङ्ग्यं चालङ्कारं विवृणोति—**कस्मिंश्चिदि**त्यादि । **स** इति । कम्प इत्यर्थः । अत्र जलचाञ्चल्यस्य वेपथोश्चाभेदाध्यवसायो बोध्यः । **अनेन सन्देहेनेति** । वितर्कान् दधत इति वाक्यप्रतिपादितेन एषः किं मथ्नीयादिति सन्देहेन हेतुनेत्यर्थः । **उत्प्रेक्ष्यत** इति । कम्पेन कार्येण निमित्तेन उक्तसन्देहरूपो हेतुः पयोधावुत्प्रेक्ष्यते । यद्वा—जलचाञ्चल्यरूपः कम्पः उक्तसन्देहहेतुकवेपथुत्वेनोत्प्रेक्ष्यत इति भावः । **सङ्करादिति** । एकवाक्यानुप्रवेशसङ्करादित्यर्थः ।

इत्येवंविधे विषयेऽनुरणनरूपरूपकाश्रयेण काव्यचारुत्वव्यवस्थाना-द्रूपकध्वनिरिति व्यपदेशो न्याय्यः ।

उपमाध्वनिर्यथा—

वीराणं रमइ घुसिणरुणम्मि ण तदा पिआथणुच्छङ्गे ।
दिट्ठी रिउगअकुम्भत्थलम्मि जह बहलसिन्दूरे ॥

लोचनम्

पता तस्य नृपतेर्ध्वन्यते । यद्यपि चात्र व्यतिरेको भाति, तथापि स पूर्ववासुदेवस्वरूपात्, नाद्यतनात् । अद्यतनत्वे भगवतोऽपि प्राप्तश्रीकत्वेनानालस्येन सकलद्वीपाधिपति विजयित्वेन च वर्तमानत्वात् ।

न च सन्देहोत्प्रेक्षानुपपत्तिबलाद्रूपकस्याक्षेपः, येन वाच्यालङ्कारोपस्कारकत्वं व्यङ्ग्यस्य भवेत् । यो योऽसम्प्राप्तलक्ष्मीको निर्व्याजविजिगीषाक्रान्तः स स मां मथ्नीयादित्याद्यर्थसम्भावनात् । न च पुनरपीति पूर्वामिति भूय इति च शब्दैरयमाकृष्टोऽर्थः । पुनरर्थस्य भूयोर्थस्य च कर्तृभेदेऽपि समुद्रैक्यमात्रेणाप्युपपत्तेः । यथा पृथ्वी पूर्वं कार्तवीर्येण जिता पुनरपि जामदग्न्येनेति । पूर्वा निद्रा च सिद्धा राजपुत्राद्यवस्थायामपीति सिद्धं रूपकध्वनिरेवायमिति । शब्दव्यापारं विनैवार्थसौन्दर्यबलाद्रूपणाप्रति-

बालप्रिया

**तेन** सङ्करेण । **वासुदेवरूपतेति** । भगवद्वासुदेवाभेद इत्यर्थः । **व्यतिरेको भातीति** । प्राप्तश्रीकत्वादिना राज्ञो वासुदेवाद्व्यतिरेको भातीत्यर्थः । तथाच कथमभेदभानं भवतीति भावः । **सः** व्यतिरेकः । **पूर्ववासुदेवस्वरूपादिति** । पूर्वः मथनोद्युक्तो निद्रोन्मुखः सेतुबन्धनोद्युक्तश्च यो वासुदेवः तत्स्वरूपादित्यर्थः । **नाद्यतनादिति** । स भातीत्यनुषङ्गः । अत्र हेतुमाह—**अद्यतनत्व** इत्यादि । **वर्तमानत्वादिति** । विशिष्टत्वादित्यर्थः । तथाचैतद्वचनकालीनतथाविधवासुदेवाद्व्यतिरेको न भातीति तदभेदोऽत्र ध्वन्यत इति भावः ।

नन्वत्र निशि वासुदेवत्वप्रतीतिं विना पयोधेरुक्तवितर्को न घटन्त इत्यतस्तद्व्यङ्ग्यं तदुपपादकतया गुणीभूतमिति शङ्कां परिहरति—**न चेत्यादि** । **येनेति** । अनुपपत्तिमूलकाक्षेपेणेत्यर्थः । **वाच्यालङ्कारेति** । ससन्देहोत्प्रेक्षासङ्करेत्यर्थः । नाक्षेप इत्यत्र हेतुमाह—**यो य** इत्यादि । वासुदेव इव असम्प्राप्तलक्ष्मीको यो यो जनः, स स मां मथ्नीयात् । निर्व्याजविजिगीषाक्रान्तो यो यः, स स मयि सेतुं बध्नीयादित्यादिसंशयसम्भवादित्यर्थः । स्वोक्त्या व्यङ्ग्याविष्करणमाशङ्क्य परिहरति—**न चेत्यादि** । **अयमर्थ** इति । राज्ञो वासुदेवत्वमित्यर्थः । **इतीति** हेतौ । अयं रूपकध्वनिरेवेति सिद्धमित्यन्वयः । अत्र हेतुमाह—**शब्देति** । **शब्दव्यापारः** अभिधा । क्वचित् ग्रन्थे प्राप्तश्रीरित्यस्यानन्तरं यथा वा 'ज्योत्स्नापूरे'त्यादि पाठो दृश्यते, स

लोचनम्

पत्तेः। यथा च—

ज्योत्स्नापूरप्रसरधवले सैकतेऽस्मिन्सरय्वा
वादद्यूतं सुचिरमभवत्सिद्धयूनोः कयोश्चित्।
एकोऽवादीत्प्रथमनिहतं केशिनं कंसमन्यो
मत्वा तत्त्वं कथय भवता को हतस्तत्र पूर्वम्॥

इति केचिदुदाहरणमत्र पठन्ति, तदसत्; भवतेत्यनेन शब्दबलेनात्र त्वं वासुदेव इत्यर्थस्य स्फुटीकृतत्वात्।

लावण्यं संस्थानसुधिमा, कान्तिः प्रभा ताभ्यां परिपूरितानि संविभक्तानि हृद्यानि सम्पादितानि दिङ्मुखानि येन। अधुना कोपकालुष्यादनन्तरं प्रसादौन्मुख्येन। स्मेरे ईषद्विहसनशीले तरलायते प्रसादान्दोलनविकाससुन्दरे अक्षिणी यस्यास्तस्या आमन्त्रणम्। अथ चाधुना न एति, वृत्ते तु क्षणान्तरे क्षोभमगमत्। कोपकषायपाटलं स्मेरं च तव मुखं सन्ध्यारुणपूर्णशशधरमण्डलमेवेति भाव्यं क्षोभेण चलचित्ततया सहृदयस्य। न चैति तत्सुव्यक्तमन्वर्थतायं जलराशिर्जाड्यसञ्चयः। जलादयः शब्दा भावार्थप्रधाना

बालप्रिया

त्वपपाठ इत्याह—**यथाचेत्यादि**। **तदसदित्यत्र** हेतुमाह—**भवतेत्यादि**। **स्फुटीकृतत्वादिति**। भवच्छब्दार्थस्य वर्ण्यस्य राज्ञो हननकर्तृत्वोक्त्या तस्य वासुदेवाभेदो यतः स्फुटीकृतस्तस्मादित्यर्थः। तथाचात्र व्यङ्ग्यं गुणीभूतमिति भावः। पौनरुक्त्यपरिहाराय लावण्यपदेनात्र विवक्षितमर्थं व्याचष्टे—**संस्थानेति**। आकृतिसौन्दर्यमित्यर्थः। 'संविभक्तानी'त्यस्यैव विवरणं **हृद्यानीत्यादि**। **दिङ्मुखानीति**। दिशामारम्भदेशा इत्यर्थः। येषु मुखस्य स्वदृष्टिद्वारा सम्बन्धस्तानि दिङ्मुखानीति भावः। 'अधुने'त्यस्य 'स्मेरे' इत्यनेन सम्बन्ध इति व्याचष्टे—**कोपेत्यादि**। **प्रसादेति**। प्रसादेन यावान्दोलनविकासौ ताभ्यां सुन्दरे इत्यर्थः। व्यङ्ग्यानुगुणमर्थान्तरं चाह—**अथ चेत्यादि**। अधुनेत्यस्य न एति इत्यनेनापि सम्बन्ध इति भावः। अधुना नैतीत्यनेन गम्यमर्थान्तरं दर्शयति—**वृत्ते त्वित्यादि**। **वृत्ते** गते। **क्षणान्तरे** क्षणविशेषे, चन्द्रोदयकाले इति यावत्। **क्षोभमगमदिति**। पयोधिरिति शेषः। पयोधेः क्षोभो दृष्ट इति भावः। रूपकध्वनिं दर्शयति—**कोपेत्यादि**। **इतीति** हेतौ। तथाविधस्य मुखस्य तथाविधचन्द्रमण्डलाभिन्नत्वादित्यर्थः। तद्दर्शनादिति यावत्। **भाव्यमित्यादि**। सहृदयस्य मदनविकारात्मकचित्तचाञ्चल्यरूपेण क्षोभेण भाव्यमित्यर्थः। पयोधेस्तु सलिलोल्लासलक्षणः क्षोभः। द्वयोः क्षोभयोरत्राभेदाध्यवसायः। क्षोभपदस्य चित्तचाञ्चल्यमात्रार्थकत्वे तु मुखस्य सौन्दर्यातिशय एव ध्वनेत्र चन्द्राभेदः। अतश्चन्द्रोदयकार्यभूतसलिलोल्लासरूपक्षोभार्थकत्वमपि विवक्षितम्। **न चैतीति**। पयोधिः क्षोभमिति शेषः। **तदिति**। क्षोभप्राप्त्यभावादित्यर्थः। **जाड्यसञ्चय**

लोचनम्

इत्युक्तं प्राक्। अत्र च क्षोभो मदनविकारात्मा सहृदयस्य त्वन्मुखावलोकनेन भवतीतीयत्यभिधाया विश्रान्ततया रूपकं ध्वन्यमानमेव। वाच्यालङ्कारश्चात्र श्लेषः, स च न व्यञ्जकः। अनुरणनरूपं यद्रूपकमर्थशक्तिव्यङ्ग्यं तदाश्रयेणेह काव्यस्य चारुत्वं व्यवतिष्ठते। ततस्तेनैव व्यपदेश इति सम्बन्धः। तुल्ययोजनत्वादुपमाध्वन्युदाहरणयोर्लक्षणं स्वकण्ठेन न योजितम्।

वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे॥

प्रसाधितप्रियतमाश्वासनपरतया समनन्तरीभूतयुद्धत्वरितमनस्कतया च दोलायमानदृष्टित्वेऽपि युद्धे त्वरातिशय इति व्यतिरेको वाच्यालङ्कारः। तत्र तु येयं ध्वन्यमानोपमा प्रियाकुचकुड्मलाभ्यां सकलजनत्रासकरेष्वपि शात्रवेषु मर्दनोद्यतेषु राज-

बालप्रिया

इति। आश्रयाश्रयिणोरभेदाध्यवसायेनोक्तिः। मन्ये इत्यनेनास्य सम्बन्धः। निश्चिनोमीति तदर्थः। तथाविधे मुखे प्रकाशमाने क्षोभप्राप्त्यभावात्, जनैरुच्यमानं महज्जाड्यं पयोधेर्निश्चिनोमीत्यर्थः। अत्रापि जाड्यपदार्थस्यानाभिज्ञत्वस्य जलस्य चैक्याध्यवसायो बोध्यः। **भावार्थप्रधाना** इति। प्राधान्येन जाड्याद्यर्थवाचका इत्यर्थः। व्यङ्ग्यस्योक्तस्य वाच्यसिद्ध्यङ्गत्वं निराकुर्वन् ध्वनिं व्यवस्थापयति—**अत्र चे**त्यादि। **त्वन्मुखावलोकनेने**ति। सप्तम्यन्ततयाऽपि पाठः। **इयतीति**। तथाविधक्षोभप्राप्त्यभावात् पयोनिधिर्जडराशिरिति निश्चिनोमि इत्येतावत्यर्थे इत्यर्थः। **रूपक**मिति। नायिकामुखे पूर्णचन्द्राभेद इत्यर्थः। **श्लेष** इति। जडशब्दगतश्लेष इत्यर्थः। **न व्यञ्जक** इति तस्योक्तरूपकध्वनावनुपयोगादिति भावः। अनुरणनरूपरूपकेत्यादि व्याचष्टे—**अनुरणनरूपं यद्रूपक**मित्यादि। ननु वृत्तौ वीराणामित्युदाहरणयोरुपमाध्वनिः स्वशब्देन कुतो न योजित इत्यत आह—**तुल्ये**त्यादि। **स्वकण्ठेन** स्ववचनेन। **वीराणा**मिति। वीराणां दृष्टिर्यथा बहलसिन्दूरे रिपुगजकुम्भस्थले रमते, तथा घुसृणारुणे प्रियास्तनोत्सङ्गे न रमते इत्यन्वयः। घुसृणं कुङ्कुमम्। विवृणोति—**प्रसाधिते**त्यादि। **प्रसाधिता** अलङ्कृता। **समाश्वासनं** सम्भोगेनानन्दनम्। **समनन्तरीभूते**ति। प्रत्यासन्नेत्यर्थः। **डोलायमाना** चञ्चला। **इति व्यतिरेको वाच्यालङ्कार** इति। वीराणां दृष्टेः प्रियातनोत्सङ्गरमणापेक्षया रिपुगजकुम्भस्थलरमणेऽतिशयस्य प्रतिपादनात् सम्भोगत्वरापेक्षया युद्धे त्वरातिशयो गम्यत इति तस्य वाच्यायमानत्वात् वाच्यालङ्कारता। यद्वा—इति व्यतिरेक इत्यस्य इत्यर्थव्यञ्जको व्यतिरेक इत्यर्थः। स च पूर्वोक्तः। अत्रोपमाध्वनिं विवृणोति—**तत्र त्वि**त्यादि। **तत्र** तद्वृत्ते। **येय**मित्यादि—गजकुम्भस्थलेषु इत्यस्य उपमेत्यनेन सम्बन्धः। गजकुम्भस्थलानुयोगिका प्रियाकुचकुड्मलप्रतियोगिका ध्वन्यमाना येयमुपमेत्यर्थः। अस्याः प्राधान्यं विवृणोति—**सकले**त्यादि। एतानि कुम्भस्थलविशेषणानि वस्तुस्थितिकथन-

यथा वा ममैव विषमबाणलीलायामसुरपराक्रमणे कामदेवस्य—

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥
( तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥ इति छाया )

आक्षेपध्वनिर्यथा—

स वक्तुमखिलान् शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥

लोचनम्

कुम्भस्थलेषु तद्वशेन रतिमाददानानामिव बहुमान इति सैव वीरतातिशयचमत्कारं विधत्त इत्युपमायाः प्राधान्यम् । **असुरपराक्रमण** इति । त्रैलोक्यविजयो हि तत्रास्य वर्ण्यते । तेषामसुराणां पातालवासिनां यैः पुनः पुनरिन्द्रपुरावमर्दनादि किं किं न कृतं तद्धृदयमिति यत्तेभ्यस्तेभ्योऽतिदुष्करेभ्योऽप्यकम्पनीयव्यवसायं तच्च । श्रीसहोदराणामत एवानिर्वाच्योत्कर्षाणामित्यर्थः । तेषां रत्नानामा समन्ताद्धरणे एकरसं तत्परं यद्धृदयं तत्कुसुमबाणेन सुकुमारतरोपकरणसम्भारेण प्रियाणां बिम्बाधरे निवेशितम्, तदवलोकनपरिचुम्बनदर्शनमात्रकृतकृत्यताभिमानयोगि तेन कामदेवेन कृतम् । तेषां हृदयं यदत्यन्तं विजिगीषाज्वलनजाज्वल्यमानमभूदिति यावत् । अत्रातिश-

बालप्रिया

पराणि । **शात्रवेषु** शत्रुभूतेषु, शत्रुसम्बन्धिषु वा । अपिशब्दो रतिबहुमानोत्पत्तौ विरोधं द्योतयति । गजकुम्भस्थलेष्वित्यस्य रतिमित्यनेन बहुमान इत्यनेन च सम्बन्धः । **तद्वशेन** उपमावशेन । **रतिं** प्रीतिम् । **आददानां** बिभ्रताम् । **इवेति** प्रतीतौ । **बहुमान** इति । प्रियाकुचकुड्मलसादृश्येन गजकुम्भस्थलेषु प्रीतिं बिभ्रतां वीराणां तेषु बहुमतिरिवेत्यर्थः । रतिमाददानामनुरक्तानामिवेत्यर्थ इति वा । **इतीति** हेतौ । **सैव** उक्तोपमैव । **वीरतेति** । प्रतीयमानो यो भटानां वीर्यातिशयस्तस्य यश्चमत्कारः चमत्कारकारित्वं तमित्यर्थः । **विधत्ते** सम्पादयति । **इतीति** हेतौ । वीररसोपस्कारकत्वेनेत्यर्थः । **तत्रास्येति** । विषमबाणलीलायां कामस्येत्यर्थः । 'तेषा' मित्यस्यैव विवरणम्—**यैरित्यादि** । तदित्यस्य व्याख्यानं **यत्तेभ्य** इत्यादि । **अकम्पनीयेति** । अचालनीयेत्यर्थः । गम्यर्थकथनम्—**अनिर्वाच्येत्यादि** । **सुकुमारे**त्यादि च । 'बिम्बाधरे निवेशितमि'त्यस्य भावार्थमाह—**तदित्यादि** । **तेषां हृदयं यदित्यादिना** पूर्वार्धभावार्थकथनं तदिति शेषः । तत्तेन कामदेवेन तदवलोकनपरिचुम्बनदर्शनमात्रकृतकृत्यताभिमानयोगि कृतमिति सम्बन्धः । **अत्रातिशयोक्तिरिति** ।

अत्रातिशयोक्त्या हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपस्यासाधारणतद्विशेषप्रकाशनपरस्याक्षेपस्य प्रकाशनम् ।

अर्थान्तरन्यासध्वनिः शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्यश्च सम्भवति । तत्राद्यस्योदाहरणम्—

देव्वाएत्तम्मि फले किं कीरइ एत्तिअं पुणा भणिमो ।
कङ्किल्लपल्लवाः पल्लवाणँ अण्णाण ण सरिच्छा ॥

लोचनम्

योक्तिर्वाच्यालङ्कारः । प्रतीयमाना चोपमा । सकलरत्नसारतुल्यो बिम्बाधर इति हि तेषां बहुमानो वास्तव एव । अत एव न रूपकध्वनिः । रूपकस्यारोप्यमाणत्वेनावास्तवत्वात् । तेषामसुराणां वस्तुवृत्त्यैव सादृश्यं स्फुरति । तदेव च सादृश्यं चमत्कारहेतुः प्राधान्येन । **अतिशयोक्त्येति** । वाच्यालङ्काररूपयेत्यर्थः । अवर्णनीयताप्रतिपादनमेवाक्षेपस्य रूपमिष्टप्रतिषेधात्मकत्वात् । तस्य प्राधान्यं विशेषणद्वारेणाह—**असाधारणे**ति ।

**सम्भवती**त्यनेन प्रसङ्गाच्छब्दशक्तिमूलस्यात्र विचार इति दर्शयति ।

बालप्रिया

निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम् ।
भेदेऽनन्यत्वमन्यत्र नानात्वं यत्र बध्यते ॥
तथा सम्भाव्यमानार्थनिबन्धेऽतिशयोक्तिगीः ।

इत्यादिना तल्लक्षणमुक्तमुद्भटादिभिः । रत्नाहरणे एकरसं यद्धृदयं तद्बिम्बाधरे निवेशितमिति वस्तुतो भिन्नयोरन्तःकरणवृत्तिविशेषात्मकयोः हृदययोरैक्यमत्र प्रतिपादितमिति भेदे अभेदरूपातिशयोक्तिरित्यर्थः । निवेशनासम्बन्धेऽपि तत्सम्बन्धकथनात् सम्बन्धातिशयोक्तिर्वा । **प्रतीयमानेति** । ध्वन्यमानेत्यर्थः । उक्तं विवृणोति—**सकले**त्यादि । समुपादेयत्वादिना रत्नसारतुल्यत्वम् । **अत एव** वक्ष्यमाणादेव । **रूपकस्यारोप्यमाणत्वेनेति** । रत्नसाररूपोपमानाभेदस्य कल्पितत्वेनेत्यर्थः । रूपकस्योपचारत्वेनेति च पाठः । **सादृश्यमिति** । बिम्बाधरे रत्नसारसादृश्यमित्यर्थः । वृत्तौ 'अनतिशयोक्त्ये'त्युक्तं तद्विवृणोति—**वाच्ये**त्यादि । **वाच्यालङ्काररूपयेति** । 'योऽम्बुकुम्भैरि'त्यादिना सम्भाव्यमानार्थनिबन्धनादिति भावः । अवर्णनीयताप्रतिपादनमेवेत्यत्र हेतुमाह—**इष्टेति** । इष्टमत्र वर्णनीयत्वप्रतिपादनमिति भावः । 'असाधारणे'त्यादिकथनस्य फलं दर्शयति—**तस्ये**त्यादिविशेषणद्वारेण तस्य प्राधान्यमाहेत्यन्वयः । अत्र 'योऽम्बुकुम्भैरि'त्याद्यतिशयोक्त्या हयग्रीवगुणानामवर्णनीयत्वप्रतिपादनरूपाक्षेपो ध्वन्यते, तेन तद्गुणानामसाधारणो विशेषश्चेति भावः । वृत्तौ 'शब्दशक्ती'त्याद्युक्तौ का सङ्गतिरित्यत आह—**सम्भवती**त्यादि । **अत्रेति** ।

पदप्रकाशश्चायं ध्वनिरिति वाक्यस्यार्थान्तरतात्पर्येऽपि सति न विरोधः। द्वितीयस्योदाहरणं यथा—

हिअअट्ठाविअमण्णुं अवरुण्णमुहं हि मं पसाअन्त।
अवरद्धस्स वि ण हु दे पहुजाणअ रोसिउं सक्कम्॥
(हृदयस्थापितमन्युमपरोषमुखीमपि मां प्रसादयन्।
अपराद्धस्यापि न खलु ते बहुज्ञ रोषितुं शक्यम्॥ इति छाया)

लोचनम्

दैवायत्ते फले किं क्रियतामेतावत्पुनर्भणामः।
रक्ताशोकपल्लवाः पल्लवानामन्येषां न सदृशाः॥

अशोकस्य फलमाम्रादिवन्नास्ति, किं क्रियतां पल्लवास्त्वतीव हृद्या इतीयताभिधा समाप्तैव। अत्र फलशब्दस्य शक्तिवशात्समर्थकमस्य वस्तुनः पूर्वमेव प्रतीयते। लोकोत्तरजिगीषातदुपायप्रवृत्तस्यापि हि फलं सम्पल्लक्षणं दैवायत्तं कदाचिन्न भवेदपीत्येवंरूपं सामान्यात्मकम्। नन्वस्य सर्ववाक्यस्याप्रस्तुतप्रशंसा प्राधान्येन व्यङ्ग्या तत्कथमर्थान्तरन्यासस्य व्यङ्ग्यता, द्वयोर्युगपदेकत्र प्राधान्यायोगादित्याशङ्क्याह—**पदप्रकाशे**ति। सर्वो हि ध्वनिप्रपञ्चः पदप्रकाशो वाक्यप्रकाशश्चेति वक्ष्यते। तत्र

बालप्रिया

अर्थशक्तिमूलविचारे इत्यर्थः। **किं क्रियता**मित्यन्तस्य विवरणम्—**अशोकस्ये**त्यादि। उत्तरार्धविवरणम्—**पल्लवा** इत्यादि। **इयते**ति। उक्तार्थमात्रेणेत्यर्थः। ध्वनिं विवृणोति—**अत्रे**त्यादि। अत्र इत्येवंरूपं सामान्यात्मकं अस्य वस्तुनः समर्थकं फलशब्दस्य शक्तिवशात् पूर्वमेव प्रतीयत इत्यन्वयः। दैवायत्ते हि फले किं क्रियतामित्यत्र फलशब्दः प्रकरणवशात् सस्यरूपमर्थमभिधया वक्ति, ततश्चाशोकस्य फलं नास्तीति प्रस्तुतार्थो लभ्यते, पुनश्च फलशब्दशक्तिमूलध्वनिना सम्पदात्मकप्रयोजनरूपमर्थं बोधयति, ततश्च सर्वेषां सम्पदो दैवायत्ताः कदाचिन्न भवेयुरपीति सामान्यरूपोऽर्थः पूर्वोक्तप्रस्तुतार्थस्य समर्थको लभ्यत इत्यर्थः। पूर्वमेव प्रतीयते इत्यस्य दैवायत्ते हि फले इत्यस्य श्रवणकाल एव प्रतीयत इत्यर्थः। 'पदप्रकाश' इत्यादिग्रन्थमवतारयति—**नन्वि**त्यादि। **अप्रस्तुतप्रशंसे**ति। उपायप्रवृत्तस्यापि सम्पल्लक्षणं फलमलब्धवतः कस्यचिद्राजादेः गुणप्रशंसारूपः प्रस्तुतार्थ इत्यर्थः। **प्राधान्येन व्यङ्ग्ये**ति। अप्रस्तुतप्रशंसास्थले प्रस्तुतार्थो व्यङ्ग्यः, स क्वचित् प्रधानञ्चेति प्रथमोद्योते उक्तम्। **अर्थान्तरन्यासस्य व्यङ्ग्यते**ति। प्राधान्येनेत्यनुषज्यते। कुत इत्यत्राह—**द्वयो**रित्यादि। भावार्थमाह—**सर्वो** हीत्यादि। **वाक्ये त्वप्रस्तुतप्रशंसे**ति। प्राधान्येन व्यङ्ग्येति शेषः। नन्वेवं सति कथमत्र व्यवहार इत्यत

अत्र हि वाच्यविशेषेण सापराधस्यापि बहुज्ञस्य कोपः कर्तुमशक्य इति समर्थकं सामान्यमन्वितमन्यत्तात्पर्येण प्रकाशते ।

लोचनम्

फलपदेऽर्थान्तरन्यासध्वनिः प्राधान्येन । वाक्ये त्वप्रस्तुतप्रशंसा । तत्रापि पुनः फलपदोपात्तसामर्थ्यसमर्थकभावप्राधान्यमेव भातीत्यर्थान्तरन्यासध्वनिरेवायमिति भावः ।

हृदये स्थापितो न तु बहिः प्रकटितो मन्युर्यया । अत एवाप्रदर्शितरोषमुखीमपि मां प्रसादयन् हे बहुज्ञ, अपराद्धस्यापि तव न खलु रोषकरणं शक्यम् । अत्र बहुज्ञेत्यामन्त्रणार्थो विशेषे पर्यवसितः । अनन्तरं तु तदर्थपर्यालोचनायत्तसामान्यरूपं समर्थकं प्रतीयते तदेव चमत्कारकारि । सा हि खण्डिता सती वैदग्ध्यानुनीता तं प्रत्यसूयां दर्शयन्तीत्थमाह । यः कश्चिद्बहुज्ञो धूर्तः स एवं सापराधोऽपि स्वापराधावकाशमाच्छादयतीति मा त्वमात्मनि बहुमानं मिथ्या ग्रहीरिति । **अन्वितमिति** । विशेषे सामान्यस्य संबद्धत्वादिति भावः ।

बालप्रिया

आह—**तत्रापी**त्यादि । **फले**ति । फलपदोपात्तौ यौ सामर्थ्यसमर्थकावर्थौ तयोर्भावस्य प्राधान्यमित्यर्थः । **भाति** सहृदयानां स्फुरति । **अर्थान्तरे**त्यादि । 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेनार्थान्तरन्यासध्वनिव्यवहार एवात्रेति भावः ।

कस्याश्चिदन्तर्गतरोषाया अनाविष्कृतरोषचिह्नायाः कृतागसा वल्लभेन प्रसाद्यमानायाः तं प्रतिवचनम्—**हृदये**त्यादि । विवृणोति—**हृदये स्थापित** इत्यादि । **प्रसादयन्नि**ति सम्बुद्ध्यन्तम् । यद्वा—त्वमसीति शेषः । **न खलु रोषकरणं शक्यमिति** । मयेति शेषः । हे बहुज्ञ ! यतस्त्वं मां प्रसादयन्नसि, अतोऽपराद्धमपि त्वां प्रति रोषं कर्तुं न शक्नोमीत्यर्थः । 'बहुज्ञस्ये'ति । बहुज्ञं प्रतीत्यर्थः । 'अशक्य' इति । केनापि न शक्य इत्यर्थः । स्ववैदग्ध्येन स्वापराधस्य तेन प्रच्छादनादिति भावः । 'इती'ति । एवंरूपमित्यर्थः । 'समर्थकं समानमि'त्यस्य विशेषणम् 'अन्वितमन्यदि'ति च । 'तात्पर्येण प्रकाशत'इति । ध्वनतीत्यर्थः । वृत्त्युक्तमेवार्थं विवृणोति—**अत्रे**त्यादि । **विशेषे पर्यवसित** इति । नाहमपराधी नाहमन्यां चिन्तयामि, त्वदेकासक्ते मयि प्रसीदेत्याद्यमेकवचनाभिज्ञेति बहुज्ञपदप्रकृतार्थ इत्यर्थः । ध्वनिं दर्शयति—**अनन्तरमि**त्यादि । **सामान्यरूपं समर्थकमि**ति । तत्तु य इत्यादिना वक्ष्यते—**से**ति । प्रकृता नायिकेत्यर्थः । **खण्डिते**ति । "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिते"ति तल्लक्षणम् । **वैदग्ध्यानुनीता** स्ववैदग्ध्येन प्रसादिता, नायकेनेति शेषः । कथमाहेत्यत्राह—**य** इत्यादि । त्वमात्मनि मिथ्याबहुज्ञानं मा ग्रहीः, यतो बहुज्ञास्तु सापराधा अपि तत्तद्वचनेन स्वापराधावकाशमाच्छादयन्तीत्यर्थः । अन्वितमित्यनेन सामान्यविशेषभावरूपसम्बन्धो विवक्षित इति दर्शयति—**विशेष** इत्यादि । 'व्यति प्राप्ति'-

व्यतिरेकध्वनिरप्युभयरूपः सम्भवति । तत्राद्यस्योदाहरणं प्राक्प्रदर्शितमेव । द्वितीयस्योदाहरणं यथा—

जाएज्ज वणुद्देसे खुज्ज व्विअ पाअवो गडिअवत्तो ।
मा माणुसम्मि लोए ताएक्करसो दरिद्दो अ ॥
( जायेय वनोद्देशे कुब्ज एव पादपो गलितपत्रः ।
मा मानुषे लोके त्यागैकरसो दरिद्रश्च ॥ इति छाया )

अत्र हि त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनं त्रुटितपत्रकुब्जपादपजन्माभिनन्दनं च साक्षाच्छब्दवाच्यम् । तथाविधादपि पादपात्तादृशस्य पुंस उपमानोपमेयत्वप्रतीतिपूर्वकं शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति । उत्प्रेक्षाध्वनिर्यथा—

चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः ।
मूर्च्छयत्येष पथिकान्मधौ मलयमारुतः ॥

लोचनम्

**व्यतिरेकध्वनिरपीति** । अपिशब्देनार्थान्तरन्यासवदेव द्विप्रकारत्वमाह । **प्रागिति** । 'खं येऽत्युज्ज्वलयन्ति' इति । 'रक्तस्त्वं नवपल्लवैः' इति । जायेय, वनोद्देश एव वनस्यैकान्ते गहने यत्र स्फुटतरबहुवृक्षसम्पत्त्या प्रेक्षतेऽपि न कश्चित् । **कुब्ज** इति रूपघटनादावनुपयोगी । **गलितपत्र** इति । छायामपि न करोति तस्य का पुष्पफलवत्तेत्यभिप्रायः । तादृशोऽपि कदाचिदाङ्गारिकस्योपयोगी भवेदुलूकादीनां वा निवासायेति भावः । **मानुष** इति । सुलभार्थिजन इति भावः । **लोक** इति । यत्र लोक्यते सोऽर्थिभिस्तेन चार्थिजनो न च किंचिच्छक्यते कर्तुं तन्महद्वैशसमिति भावः । अत्र

बालप्रिया

त्येतद्विवृणोति—**खमित्यादि** । खं येऽत्युज्ज्वलयन्ति इति, इत्यस्यानन्तरं 'रक्तस्त्वं नवपल्लवै'रिति इति च पाठः क्वचित् दृश्यते, स प्रामादिकः । 'न तु रक्तस्त्वमि'त्यादिपाठो वा । कुब्ज एवेति छाया । वनोद्देश इत्यनेनैवकारस्य सम्बन्ध इत्याह—वनेत्यादि । वनोद्देश इत्यस्य विवरणम्—**वनस्येत्यादि** । गम्यमर्थमाह—**यत्रे**त्यादि । एवमुपर्यपि बोध्यम् । **रूपघटनेति** । प्रतिमाद्याकृतिनिर्माणेत्यर्थः । **गलितपत्र** इति । त्रुटितत्र इति च पाठः । **आङ्गारिकस्येति** । अङ्गारोपजीविन इत्यर्थः । अहं कुब्जः गलितपत्रः पादपः वनोद्देशे इव जायेय । त्यागैकरसो दरिद्रश्च मानुषे लोके मा जयेय इत्यन्वयः । वृत्तौ—'शब्दवाच्य'मित्यस्य 'प्रकाशयती'त्यनेनान्वयः ।

अत्र हि मधौ मलयमारुतस्य पथिकमूर्च्छाकारित्वं मन्मथोन्माथदायित्वेनैव । तत्तु चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वेनोत्प्रेक्षितमित्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादनुरणनरूपा लक्ष्यते । न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणासंबद्धतैवेति शक्यते वक्तुम् । गमकत्वा-

लोचनम्

वाच्यालङ्कारो न कश्चित् । उपमानेत्यनेन व्यतिरेकस्य मार्गपरिशुद्धिं करोति । **आधिक्यमिति** । व्यतिरेकमित्यर्थः । **उत्प्रेक्षितमिति** । विषवातेन हि मूर्छितो बृंहित उपचितो मोहं करोति । एकश्च मूर्च्छितः पथिकमध्येऽन्येषामपि धैर्यच्युतिं विदधन्मूर्च्छां करोतीतीत्युभयथोत्प्रेक्षा । नन्वत्र विशेषणमधिकीभवद्धेतुतयैव सङ्गच्छते । ततः किं ? न हि हेतुता परमार्थतः । तथापि तु हेतुता उत्प्रेक्ष्यत इति यत्किञ्चि-

बालप्रिया

**मार्गपरिशुद्धिं करोतीति** । किञ्चिद्धर्मेण सादृश्यात्मकस्योपमाङ्गोपमेयत्वस्य प्रतीतिर्हि व्यतिरेकप्रतीतेरङ्गमिति भावः । वृत्तौ—'चन्दने'ति । मलयाद्रिस्थचन्दनवृक्षेत्यर्थः । 'मधौ' वसन्ते । 'पथिके'त्यादि । विरहिजनमोहकारित्वमित्यर्थः । 'मन्मथे'ति । कामोद्दीपकत्वेन वस्तुदता हेतुनेत्यर्थः । 'तत्त्वि'ति । पथिकमूर्च्छाकारित्वन्त्वित्यर्थः । 'चन्दने'त्यादि । चन्दनासक्तभुजगनिश्वासानिलमूर्च्छितत्वेन हेतुना उत्प्रेक्षितमित्यर्थः । एतद्विवृणोति—**विषवातेनेत्यादि** । **विषवातेन** विषयुक्तवायुना । प्रकृते निःश्वासानिलस्य भुजगसम्बन्धितया विषसम्पर्को गम्यत इति भावः । "मूर्च्छामोहसमुच्छ्राययो"रिति धातुपाठः । तत्र समुच्छ्रायार्थाप्रायेण व्याचष्टे—**बृंहित** इति अस्यैव विवरणम्—**उपचित** इति । **मोहं करोतीति** । स्वसंसर्गेणान्यस्य मोहावस्थां । जनयतीत्यर्थः । गोपार्थाभिप्रायेण व्याचष्टे—**एकश्चेत्यादि** । एकपदार्थत्वेनात्र पथिकायमानो वायुर्ग्राह्यः । **धैर्यच्युतिं विदधदिति** । तद्द्वारेत्यर्थः । **मूर्च्छामिति** । मोहमित्यर्थः । **उभयथोत्प्रेक्षेति** विषवातोपचितत्वं मोहावस्थाप्राप्तिश्चेति ये तयोः मलयमारुतस्य पथिकमूर्च्छाकरणेहेतुत्वेनोत्प्रेक्षेत्यर्थः । वृत्तौ 'मूर्च्छितत्वेनोत्प्रेक्षित'मिति ग्रन्थस्य उक्तहेतूत्प्रेक्षापरत्वं शङ्कासमाधानाभ्यां दर्शयति—**नन्वित्यादि** । **विशेषणं** चन्दनेत्यादिविशेषणम् । **हेतुतयैवेति** । हेतुगर्भत्वेनैवेत्यर्थः । समाधत्ते—**तत** इत्यादि । **ततः किं** हेतुगर्भत्वे सत्यपि किम् । कुत इत्यत आह—**न ह्रीत्यादि** । तद्विशेषणस्य पथिकमूर्च्छाकारित्वे वस्तुतो हेतुत्वं नास्तीत्यर्थः । **तथाऽपि त्विति** । किं त्वित्यर्थः । **हेतुता उत्प्रेक्ष्यत** इति । उक्तयोर्द्वयोः हेतुत्वमुत्प्रेक्ष्यते इत्यर्थः । हेतुताऽपि इति च पाठः । तत्पक्षे मलयमारुते तयोर्द्वयोरुत्प्रेक्षाया अपिशब्देन समुच्चयः । चन्दनासक्तभुजगानां निश्वासानिलैः मूर्च्छितः सम्बद्ध इति स्वरूपकथनमात्रपरं तद्विशेषणमतो वाच्यार्थनिष्पत्तिर्बोध्या । वृत्तौ 'साक्षादनुक्ताऽपी'ति । इवादिपदेनाबोधिताऽ

दन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात् । यथा—

ईसाकलुसस्स वि तुह मुहस्स णं एस पुण्णिमाचन्दो ।
अज्ज सरिसत्तणं पाविऊण अङ्गे विअ ण माइ ॥
( ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः ।
अद्य सदृशत्वं प्राप्याङ्ग एव न माति ॥ इति छाया )

लोचनम्

देतत् । तदिति । तस्यैवादेरप्रयोगेऽपि तस्यार्थस्येत्युत्प्रेक्षारूपस्यावगतेः प्रतीतेर्दर्शनात् । एतदेवोदाहरति—यथेति । ईर्ष्याकलुषस्यापीषदरुणच्छायाकस्य । यदि तु प्रसन्नस्य मुखस्य सादृश्यमुद्वहेत्सर्वदा वा तत्किं कुर्यात्त्वन्मुखं त्वेतद्भवतीति मनोरथानामप्यपथमिदमित्यपिशब्दस्याभिप्रायः । अङ्गे स्वदेहे न मात्येव दश दिशः पूरयति यतः । अद्येयता कालेनैकं दिवसमात्रमित्यर्थः । अत्र पूर्णचन्द्रेण दिशां पूरणं स्वरससिद्धमेवमुत्प्रेक्ष्यते ।

ननु ननुशब्देन वितर्कोत्प्रेक्षारूपमाचक्षाणेनासम्बद्धता निराकृतेति सम्भावयमान

बालप्रिया

पीत्यर्थः । 'अनुरणनरूपा' संलक्ष्यक्रमव्यंग्या। 'लक्ष्यते' ज्ञायते । शङ्कते 'न चे'त्यादि 'एवंविधे विषये' इति चन्दनासक्तेत्यादिस्थल इत्यर्थः । 'असम्बद्धते'ति । उत्प्रेक्षायाः वाक्यासम्बद्धतेत्यर्थः । वाक्याप्रतिपाद्यतेति यावत् । समाधत्ते–'गमकत्वादि'ति । चन्दनेत्यादिविशेषणस्य प्रतिपत्तृप्रतिभादिसहकारेण बोधकत्वादित्यर्थः । अत्र प्रमाणमाह– 'अन्यत्रापी'त्यादि । 'तदप्रयोग' इत्यादिग्रन्थं विवृणोति—**तस्ये**त्यादि । **ईर्ष्ये**ति । कुपितां नायिकां प्रसादयितुमुक्तिः, ईर्ष्याकलुषस्येत्यस्य व्याख्यानम्—**ईषदि**त्यादि । अपिशब्दगम्यमाह—**यदि त्वि**त्यादि । उद्वहेत् कुर्यादित्युभयत्र चन्द्र इति शेषः । अद्येत्यनेन गम्यमाह—**सर्वदे**ति । **तत्तदा** किं **कुर्या**दिति । सन्तोषातिशयेन यद्यत् कुर्यात् तन्न जानामीत्यर्थः । **एतद्भवती**ति । चन्द्रीभवतीत्यर्थः । **अङ्ग एवे**ति छाया। एवकारस्य मातीत्यनेनान्वय इत्याह—**ने**त्यादि । अत्र गम्यं हेतुमाह—**दश दिशः पूरयति यत** इति । अद्येति पदं विवृणोति—**इयते**त्यादि । ध्वनिं दर्शयति—**अत्रे**त्यादि । **दिशां पूरण**मिति । अङ्गेन मात्येवेत्यनेन लब्धं स्वप्रभया दिशां पूरणमित्यर्थः । **स्वरससिद्धं** अस्वाभाविकम् । **एवमुत्प्रेक्ष्यते** इति । तव मुखस्य सदृशत्वं प्राप्येवेति मुखसादृश्यप्राप्तिहेतुकत्वेनोत्प्रेक्ष्यत इत्यर्थः ।

उदाहरणान्तरमवतारयति—**नन्वि**त्यादि । **ननुशब्देने**ति । गाथास्थननुशब्देनेत्यर्थः । सदृशत्वं प्राप्य नन्विति योजनेति भावः । 'त्रासे'त्यादि श्लोकं व्याचष्टे—**सर्वत** इत्यादि । **निकेतान् परित** इति । नानुबद्ध इति च सम्बन्धः । **अनुबद्धः**

यथा वा—

> त्रासाकुलः परिपतन् परितो निकेतान्
> पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
> तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-
> राकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥

शब्दार्थव्यवहारे च प्रसिद्धिरेव प्रमाणम् ।

श्लेषध्वनिर्यथा—

> रम्या इति प्राप्तवतीः पताकाः रागं विविक्ता इति वर्धयन्तीः ।
> यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥

अत्र वधूभिः सह वलभीरसेवन्तेति वाक्यार्थप्रतीतेरनन्तरं वध्व इव

**लोचनम्**

उदाहरणान्तरमाह–**यथा वे**ति । परितः सर्वतो निकेतान् परिपतन्नाक्रमन्न कैश्चिदपि चापपाणिभिरसौ मृगोऽनुबद्धस्तथापि न क्वचित्तस्थौ त्रासचापलयोगात्स्वाभाविकादेव । तत्र चोत्प्रेक्षा ध्वन्यते—अङ्गनाभिराकर्णपूर्णैर्नेत्रशरैर्हृता ईक्षणश्रीः सर्वस्वभूता यस्य यतोऽतो न तस्थौ । नन्वेतदप्यसम्बद्धमस्त्वित्याशङ्क्याह—**शब्दार्थे**ति । पताका ध्वजपटान् प्राप्तवन्त्यौ । रम्या इति हेतोः । पताकाः प्रसिद्धीः प्राप्तवतीः । किमाकाराः प्रसिद्धीः रम्या इत्येवमाकाराः । विविक्ता जनसङ्कुलत्वाभावादित्यतो हेतो रागं सम्भोगाभिलाषं वर्धयन्तीः । अन्ये तु रागं चित्रशोभामिति । तथा रागमनुरागं वर्धयन्तीः । यतो हेतोः विविक्ता विभक्ताङ्ग्यो लटभाः याः । नमन्ति वलीकानि छदिपर्यन्तभागा यासु । नमन्त्यो वल्यस्त्रिवलीलक्षणा यासाम् । सममिति सहेत्यर्थः । ननु समशब्दा-

**बालप्रिया**

अनुगतः, 'न तस्थावि'त्यत्र वास्तवो हेतुस्त्रासाकुल इत्यनेन दर्शित इत्याह—**त्रासे**त्यादि । आकर्णपूर्णैः कर्णपर्यन्तव्याप्तैः आकर्णकृष्टैश्च नेत्रशरैः नेत्राण्येव शरास्तैः, अतो न तस्थाविति । उक्ताद्धेतोरेव न स्थितवानित्यर्थः । तथाचात्र हेतूत्प्रेक्षाध्वनिरिति भावः । अत्राप्यङ्गनादृष्टि प्रशंसापरमाकर्णेत्यादिकं स्वरूपकथनमिति वाक्यार्थनिष्पत्तिरवसेया । **एतदपी**ति । उक्तोदाहरणमपीत्यर्थः । **असम्बद्ध**मिति । उत्प्रेक्षारूपार्थाबोधकमित्यर्थः । वृत्तौ 'शब्दे'ति । एवमस्यशब्दस्यार्थ इति व्यवहार इत्यर्थः । '**प्रसिद्धिरेव**' प्रतिपत्तॄणां प्रतीतिरेव । तथाचोक्तस्थले इवादिशब्दाभावेऽप्युत्प्रेक्षारूपार्थस्य सहृदयानां प्रतीतेरसम्बद्धत्वापादानं न युक्तमिति भावः । व्याचष्टे—**पताका** इत्यादि। अत्राद्योऽर्थो वलभीभिरन्वेति, द्वितीयस्तु वधूभिः । व्याख्यानान्तरमाह–**अन्य** इति । **लटभा** इति सुन्दर्य इत्यर्थः । **नन्वि**त्यादि । **समशब्दा**दिति ।

लोचनम्

तुल्यार्थोऽपि प्रतीतः। सत्यम्; सोऽपि श्लेषबलात्। श्लेषश्च नाभिधावृत्तेराक्षिप्तः, अपि त्वर्थसौन्दर्यबलादेवेति सर्वथा ध्वन्यमान एव श्लेषः। अत एव वध्व इव वलभ्य इत्यभिदधतापि वृत्तिकृतोपमाध्वनिरिति नोक्तम्। श्लेषस्यैवात्र मूलत्वात्। समा इति हि यदि स्पष्टं भवेत्तदोपमाया एव स्पष्टत्वाच्छ्लेषस्तदाक्षिप्तः स्यात्। सममिति निपातोऽञ्जसा सहार्थवृत्तिर्व्यञ्जकत्वबलेनैव क्रियाविशेषणत्वेन शब्दश्लेषतामेति। न च तेन विनाभिधाया अपरिपुष्टता काचित्। अत एव समाप्तायामेवाभिधायां सहृदयैरेव स द्वितीयोऽर्थोऽपृथक्प्रयत्नेनैवावगम्यः। यथोक्तं प्राक्—'शब्दार्थशासनज्ञानमात्रेणैव' इत्यादि। एतच्च सर्वोदाहरणेष्वनुसर्तव्यम्। 'पीनश्चैत्रो दिवा नात्ति' इत्यत्राभिधैवापर्यवसितेति सैव स्वार्थनिर्वाहायार्थान्तरं शब्दान्तरं वाकर्षतीत्यनुमानस्य श्रुतार्था-

बालप्रिया

सममिति शब्दादित्यर्थः। **तुल्यार्थोऽपीति**। अपिशब्देन पूर्वोक्तसहार्थस्य समुच्चयः। **सोऽपि** तुल्यरूपार्थोऽपि। **श्लेषबलादिति**। वध्वन्वय्यर्थान्तरसामर्थ्यादित्यर्थः। **श्लेषश्चेति**। अर्थान्तरं चेत्यर्थः। **अभिधावृत्तेः** अभिधाव्यापाराद्धेतोः। **नाक्षिप्तः** न प्रतीतः। पदानां वलभीपदसमानविभक्तिकत्वेनाभिधाया वलभ्यन्वय्यर्थे नियमनादिति भावः। **अत एवेति**। वक्ष्यमाणहेतोरेवेत्यर्थः। **समा इतीति**। सममित्यस्य स्थान इति शेषः। सममित्युक्तौ कुतो न स्पष्टत्वमत आह—**सममित्यादि**। **अञ्जसा** झटिति। **सहार्थवृत्तिः** साहित्यरूपार्थबोधकः। यूनां सवधूकानां सतां वलभीसेवनस्यार्थस्य प्रकृतत्वादिति भावः। **क्रियाविशेषणत्वेनेति**। सेवनक्रियायाः वर्तमाना इत्यध्याहृतक्रियाया वा विशेषणतयेत्यर्थः। **शब्दश्लेषतामेतीति**। तुल्यमित्यर्थान्तरं बोधयतीत्यर्थः। श्लेषध्वनिं स्थापयति–न **चेत्यादि**। **अपृथक्प्रयत्नेन** प्रयत्नान्तरं विना। प्रसङ्गादाह—**पीन** इत्यादि। **अपर्यवसितेति**। दिवाभोजनमकुर्वतः कुतः पीनत्वमित्याकाङ्क्षासत्त्वेन शान्ताकाङ्क्षस्य बोधस्याजननादिति भावः। **स्वार्थेति**। पीनत्वादिघटितस्वविषयार्थेत्यर्थः। **अर्थान्तरम्** रात्रिभोजनम्। **शब्दान्तरम्** रात्रौ भुङ्क्ते इति शब्दम्। **आकर्षति** अनुसन्धापयति। **अनुमाने**त्यादि। यथासंख्यमत्र बोध्यम्। यथासंख्यध्वनिं विवृणोति वृत्तौ—'अत्र ही'त्यादि। 'यथोद्देशं' उद्देशक्रममनतिलङ्घ्य। 'अनूद्देशे' पश्चान्निर्देशे सति। 'यच्चारुत्वम्' चारुत्वकारि यत् 'अनुरणनरूपं' संलक्ष्यक्रमं व्यङ्ग्यम्। 'मदने'ति। मदनविशेषणीभूतो योऽङ्कुरितादिशब्दः सञ्जातेषत्प्रादुर्भावादिः तदर्थः तद्गतं तदाश्रितम्। 'तदि'ति। चारुत्वकारि यथासंख्यात्मकं व्यङ्ग्यमित्यर्थः। तत्तु यथाश्रुतक्रमं संख्यासाम्यमेव। 'मदनसहकारयोरि'ति। कार्यकारणात्मकयोस्तयोरित्यर्थः। 'तुल्ये'ति। तुल्ययोगिता तुल्यकालसम्बन्धः तद्रूपो यः समुच्चयस्तल्लक्षणादित्यर्थः। 'वाच्यादि'ति। चकाराभ्यां बोध्यादित्यर्थः। 'अतिरिच्यमानमि'ति। उत्कृष्टमित्यर्थः। 'आलक्ष्यते' ज्ञा-

बलभ्य इति श्लेषप्रतीतिरशब्दाप्यर्थसामर्थ्यान्मुख्यत्वेन वर्तते ।

यथासङ्ख्यध्वनिर्यथा—

अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च सहकारः ।
अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च हृदि मदनः ॥

अत्र हि यथोद्देशमनूद्देशे यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरितादिशब्दगतं तन्मदनसहकारयोस्तुल्ययोगितासमुच्चयलक्षणाद्वाच्यादतिरिच्यमानमालक्ष्यते । एवमन्येऽप्यलङ्कारा यथायोगं

लोचनम्

पत्तेर्वा तार्किकमीमांसकयोर्न ध्वनिप्रसङ्ग इत्यलं बहुना। तदाह—अशब्दापीति । एवमन्येऽपीति । सर्वेषामेवार्थालङ्काराणां ध्वन्यमानता दृश्यते । यथा च दीपकध्वनिः—

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥

इत्यत्र बाधिष्टेति गोप्यमानादेव दीपकादत्यन्तस्नेहास्पदत्वप्रतिपत्त्या चारुत्वनिष्पत्तिः । अप्रस्तुतप्रशंसाध्वनिरपि—

ढुण्ढुल्लन्तो मरिहिसि कण्टअकलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥

प्रियतमेन साकमुद्याने विहरन्ती काचिन्नायिका भ्रमरमेवमाहेति भृङ्गस्याभिधायां

बालप्रिया

यते । 'अङ्कुरिते' इति सप्तम्यन्तपाठोऽपि पूर्वार्धे दृश्यते । लोचने—यथाचेति । तथा च इति च पाठः । इत्यत्रेत्यस्य दीपकध्वनिरित्यनेनापि सम्बन्धः । दीपकध्वनिं विवृणोति—बाधिष्ठेत्यादि । बाधिष्टेति दीपकादिति । माङर्थान्वितलुङन्तबाधत्यर्थरूपादनलाद्यनेकान्वयिधर्मादित्यर्थः । अत्यन्तेति । लतासहिते वृक्षे वक्तृगतनिरतिशयस्नेहास्पदत्वस्य प्रतीत्येत्यर्थः । चारुत्वनिष्पत्तिरिति । यतस्ततो दीपकध्वनिरिति सम्बन्धः । अत्र "यश्च निम्बं परशुने"त्यादाविव मा भवन्तमनल इत्यत्र धाक्षीदित्यस्य, पवनो वेत्यादौ भाङ्क्षीरित्यस्य, परशुर्वेत्यादौ भैत्सीदित्यस्य चाध्याहारेण वाच्यार्थनिष्पत्तिर्बोध्या। अप्रस्तुतप्रशंसाध्वनिरपीति । सादृश्यनिमित्तकाप्रस्तुतप्रशंसाध्वनिरपीत्यर्थः ।

ढुण्ढु इत्यादि । अन्वेषयन्मरिष्यसि कण्टककलितानि केतकीवनानि । मालतीकुसुमसदृशं भ्रमर भ्रमन्न प्राप्स्यसि ॥ इति छाया । विवृणोति—प्रियतमेनेत्यादि । भ्रमरमिति । केतक्यभिमुखं चरन्तं कञ्चिन्मधुपमित्यर्थः । आहेतीति । वक्तीत्यतो हेतोरित्यर्थः । भृङ्गस्येति । भृङ्गवृत्तान्तस्येत्यर्थः । अभिधायामभिधेयत्वे सति ।

### लोचनम्

प्रस्तुतत्वमेव । न चामन्त्रणादप्रस्तुतत्वावगतिः, प्रत्युतामन्त्रणं तस्या मौग्ध्यविजृम्भितमिति अभिधया तावन्नाप्रस्तुतप्रशंसा समाप्या । समाप्तायां पुनरभिधायां वाच्यार्थबलादन्यापदेशता ध्वन्यते । यत्सौभाग्याभिमानपूर्णा सुकुमारपरिमलमालतीकुसुमसदृशी कुलवधूर्निर्व्याजप्रेमपरतया कृतकवैदग्ध्यलब्धप्रसिद्ध्यतिशयानि शम्भलीकण्टकव्याप्तानि दूरामोदकेतकीवनस्थानीयानि वेश्याकुलानीतश्चेतश्च चञ्चूर्यमाणं प्रियतममुपालभते । अपह्नुतिध्वनिर्यथास्मदुपाध्यायभट्टेन्दुराजस्य—

> यः कालागुरुपत्रभङ्गरचनावासैकसारायते
> गौराङ्गीकुचकुम्भभूरिसुभगाभोगे सुधाधामनि ।

### बालप्रिया

प्रस्तुतत्वमेवेत्येवकारेणाप्रस्तुतत्वव्यवच्छेदः । शङ्कते—**न चेत्यादि** । **आमन्त्रणादिति** । भृङ्गस्येत्यनुषङ्गः । अनामन्त्रणीयस्य भ्रमरस्य सम्बोधनादित्यर्थः । **अप्रस्तुतत्वावगतिः** अप्रस्तुतत्वस्य बोधः । न चेत्यन्वयः । कुत इत्यत आह—**प्रत्युतेत्यादि** । **तस्याः** नायिकायाः यन्मौग्ध्यं मुग्धत्वं "मुग्धा नववयःकामे"त्यादि मुग्धालक्षणं, तस्य विजृम्भितं मौग्ध्यहेतुकमिति यावत् । **इतीति** हेतौ । **अभिधया तावदित्यादि** । भृङ्गवृत्तान्तस्य यद्यप्रस्तुतत्वं भवेत्तदा प्रियतमोपालम्भरूपार्थ एव वाक्यस्य विश्रान्त्या तस्याभिधया समाप्यत्वं भवेत्, प्रकृते भृङ्गवृत्तान्तस्यापि प्रस्तुतत्वसम्भवान्मुख्यत्तया विवक्षितः । प्रियतमोपालम्भरूपार्थोऽभिधया न समाप्य इत्यर्थः । **समाप्तायामित्यादि** । प्रकरणवशेन भृङ्गतदन्वय्यभिधेयार्थबोधे निष्पन्ने सतीत्यर्थः । **वाच्यार्थबलादिति** । वाच्यार्थसाम्यबलादित्यर्थः । **अन्यापदेशतेति** । अर्थान्तरमित्यर्थः । तदाह—**यदित्यादि** । **सुकुमारः** सुन्दरः मुग्धकुलवधूरिति च पाठः । **प्रेमेति** । प्रियतमविषयकप्रेमेत्यर्थः । **परतया** हेतुना उपालभते इति सम्बन्धः । **कृतकेति** । कृतकवैदग्ध्येन लब्धः प्रसिद्ध्यतिशयो यैः तानि । **शम्भलीति** । कण्टकतुल्याभिः कुट्टनीभिर्व्याप्तानीत्यर्थः । डाम्भिककण्टकेति च पाठः । **दूरेति** । दूरव्याप्तामोदानि यानि केतकीवनानि तत्तुल्यानीत्यर्थः । **चञ्चूर्यमाणमिति** । तत्सम्भोगाय मुहुश्चरन्तमित्यर्थः[1] ।

**य इति** । यः गौराङ्गीकुचकुम्भ इव भूरिः सुभगश्चाभोगो यस्य तस्मिन् । सुधाधामनि चन्द्रे कालागरुणा या पत्रभङ्गरचना रचितः पत्रभङ्ग इति यावत्, तद्रूपेण यो वासः; यद्वा–रचनाया आवासः आस्पदत्वं तेन एकेन सारायते । हे नताङ्गि सुन्दरि !

---

१. गर्हितं चरन्तमित्यर्थः, 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायां' ( पा. सू., ३. १. २४ ) इत्यनेन धात्वर्थगर्हायां यङ्विधानात् ।

लोचनम्

विच्छेदानलदीपितोत्कवनिताचेतोधिवासोद्भवं
सन्तापं विनिनीषुरेष विततैरङ्गैर्नताङ्गि स्मरः ॥

अत्र चन्द्रमण्डलमध्यवर्तिनो लक्ष्मणो वियोगाग्निनिरिचितवनिताहृदयोदितप्लोष-मलीमसच्छविमन्मथाकारतयापह्नवो ध्वन्यते। अत्रैव ससन्देहध्वनिः—यतश्चन्द्रवर्तिन-स्तस्य नामापि न गृहीतम्। अपि तु गौराङ्गीस्तनाभोगस्थानीये चन्द्रमसि कालागुरुपत्र-भङ्गविच्छित्त्यास्पदत्वेन यः सारतामुत्कृष्टतामाचरतीति तन्न जानीमः किमेतद्भवतीति ससन्देहोऽपि ध्वन्यते। पूर्वमनङ्गीकृतप्रणयामनुतप्तां विरहोत्कण्ठितां वल्लभागमन-प्रतीक्षापरत्वेन कृतप्रसाधनादिविधितया वासकसज्जीभूतां पूर्णचन्द्रोदयावसरे दूतीमु-खानीतः प्रियतमस्त्वदीयकुचकलशन्यस्तकालागुरुपत्रभङ्गरचना मन्मथोद्दीपनकारिणीति चाटुकं कुर्वाणश्चन्द्रवर्तिनी चेयं कुवलयदलश्यामलकान्तिरेवमेव करोतीति प्रतिवस्तूप-माध्वनिरपि। सुधाधामनीति चन्द्रपर्यायतयोपात्तमपि पदं सन्तापं विनिनीषुरित्यत्र हेतु-

बालप्रिया

**एष** इति। य इत्यस्य प्रतिनिर्देशः स इत्यर्थः। **विच्छेदः** प्रियतमविरह एवानलो-ऽग्निः, तेन दीपितानि यानि उत्कानामुत्कण्ठितानां वनितानां चेतांसि तदधिवासेन उद्भवो यस्य तम्। सन्तापं विनिनीषुः विनेतुं शमयितुमिच्छुरिति हेतुगर्भम्। वित-तैरिति। प्रसारितैरित्यर्थः। अङ्गैरुपलक्षितः स्मरः भवतीत्यन्वयः। ध्वनिं दर्शयति—**अत्रेत्यादिना**। **अपह्नव** इति। नायमङ्कः, किन्तु तथाविधो मन्मथ इत्यपह्नव इत्यर्थः। **यत इत्याद्याचरतीत्यन्तं** व्याख्यातृवचनम्। **तस्येति**। लक्ष्मण इत्यर्थः। **न गृही-तमिति**। विशेषतो न निर्दिष्टमित्यर्थः। **अपि त्वित्यादि**। गृहीतमित्यनुषज्यते। अपि तु इति गृहीतमिति सम्बन्धः। एवं निर्दिष्टमित्यर्थः। **गौराङ्गीत्यादि**। आभो-गविशिष्टगौराङ्गीस्तनतुल्येत्यर्थः। रचनावासेत्यस्य विवरणम्—**विच्छित्त्यास्पदत्वे-नेति**। **आचरतीति**। आवहतीत्यर्थः। फलितार्थकथनमेतत्। सारः उत्कृष्ट इवाच-रति सारो भवति इति वा विग्रहः। **तदिति**। तथा निर्देशादित्यर्थः। न जानीम इत्या-दि सन्देहाकारकथनम्। **इतीति**। उक्तानध्यवसायात्मकवक्तृनायकगतसंशयप्रतीतेरि-त्यर्थः। **ससन्देहः** ससन्देहालङ्कारः। **अपीति** समुच्चये। **पूर्वमित्यादि**। **प्रणयः** प्रियतमस्य प्रार्थना। **अनुतप्तामिति**। पश्चात्तापवतीमित्यर्थः। **भूतामिति**। नायि-कामिति शेषः। चाटुकं कुर्वाण इत्यनेनास्य सम्बन्धः। **त्वदीयेत्यादि** चाटुवचनम्। **एवमेव करोतीति**। मन्मथोद्दीपनकारिणीत्यर्थः। **इतिप्रतिवस्तूपमाध्वनिरिति**। त्वदीयकुचकलशन्यस्तकालागरुपत्रभङ्गरचनामन्मथोद्दीपनकारिणी चन्द्रवर्तिनीयं कुवल-यदलश्यामला कान्तिश्चैवमेव करोतीति वक्तृनायकचाटुवाक्यार्थस्य प्रतीत्या प्रतिवस्तू-पमाया ध्वनिरित्यर्थः। **हेतुतामिति**। सुधाधामत्वरूपयोगार्थस्येति शेषः। शोभा-भिः सह उद्दीपयति इति च पाठः।

लोचनम्

तामपि व्यनक्तीति हेत्वलङ्कारध्वनिरपि। त्वदीयकुचशोभा मृगाङ्कशोभा च सह मदनमुद्दीपयत इति सहोक्तिध्वनिरपि। 'त्वत्कुचसदृशश्चन्द्रश्चन्द्रसमस्त्वत्कुचाभोगः' इत्यर्थप्रतीतेरुपमेयोपमाध्वनिरपि। एवमन्येऽप्यत्र भेदाः शक्योत्प्रेक्षाः। महाकविवाचोऽस्याः कामधेनुत्वात्। यतः—

हेलापि कस्यचिदचिन्त्यफलप्रसूत्यै कस्यापि नालमणवेऽपि फलाय यत्नः।
दिग्दन्तिरोमचलनं धरणीं धुनोति खात्सम्पतन्नपि लतां चलयेन्न भृङ्गः॥

एषां तु भेदानां संसृष्टित्वं सङ्करत्वं च यथायोगं चिन्त्यम्। अतिशयोक्तिध्वनिर्यथा ममैव—

केलीकन्दलितस्य विभ्रममधोर्धुर्यं वपुस्ते दृशौ
भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः।
आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्मासवः
सत्यं सुन्दरि वेधसस्त्रिजगतीसारस्त्वमेकाकृतिः॥

अत्र हि मधुमासमदनासवानां त्रैलोक्ये सुभगतान्योन्यं परिपोषकत्वेन। ते तु

बालप्रिया

हेलेति। हेला लीला। यत्नः बुद्धिपूर्वको व्यापारः। वाक्यद्वये भवतीति शेषः। उक्तं सामान्यं विशेषेण समर्थयति—दिग्दन्तीत्यादि। दिग्दन्तिनोऽङ्गचलनमिति च पाठः। एषां त्वित्यादि। अपह्नवेन सहेतरेषां संसृष्टिः, ससन्देहप्रतिवस्तूपमोपमेयोपमानामेकवाक्यानुप्रवेशसङ्कर इत्यादिकं चिन्त्यमित्यर्थः।

केलीति। हे सुन्दरि! ते तव दृशौ केलीविलासिजनस्य क्रीडा तस्याः कन्दलं नवाङ्कुरः ईषदाविर्भाव इति यावत्। तदस्य सञ्जातमिति केलीकन्दलितः, तस्य अचिराविर्भूतस्येत्यर्थः। विभ्रमः स्त्रीणां शृङ्गारचेष्टा तत्कारी विभ्रमः शोभा, तच्छाली वा यो मधुर्वसन्तः तस्य धुरं कामोद्दीपनादिभारं वहतीति धुर्यम्। वपुः स्त इति शेषः। त्वदीयं नेत्रद्वितयमचिराविर्भूतस्य वसन्तस्य कामोद्दीपनादिकार्यकारि शरीरं भवतीत्यर्थः। तथा ते इदमित्याद्येकं पदम्। अयमनुभवैकगोचरो भ्रुवोर्नर्मकर्मणः लीलायाः क्रमः क्रमिकलीलाविशिष्टभ्रूयुग्ममित्यर्थः। भङ्गी रचनाविशेषः, तया हेतुना भङ्गुरं वक्रं, यद्वा—भङ्गीयुक्तं वक्रं च यत् कामस्य कार्मुकं क्रमिककर्मविशिष्टं धनुः तद्भवति। यद्वा—इदमिति भिन्नं पदं कार्मुकविशेषणं, क्रमिककर्मविशिष्टमिति तदर्थः। तथा ते वक्त्राम्बुजन्मनि मुखपद्मे य आसवः मद्यविशेषः। अत्रासवत्वेनाधररसस्याध्यवसायः। आपातेऽपि किञ्चिदास्वादेऽपि। विकाराणां सम्मोहानन्दादिरूपचित्तविकाराणां कारणं भवति। अहो इदमद्भुतम्। अतः त्वमेका वेधसः कृतिः सृष्टिः त्रिजगतीसारः त्रैलोक्यसारभूता भवति। सत्यं निश्चितम्। अत्र हीत्यस्य ध्वन्यत इत्यादिभिः सम्बन्धः। पोषकत्वेनेत्यन्तं हेतुवचनम्। ते इत्यादिव्यङ्ग्य-

योजनीयाः ।

एवमलङ्कारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां ख्यापयितुमिद-मुच्यते—

**शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम् ।**
**तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥ २८ ॥**

ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां व्यञ्जकत्वेन व्यङ्ग्यत्वेन च । तत्रेह प्रकरणाद्व्यङ्ग्यत्वेनेत्यवगन्तव्यम् । व्यङ्ग्यत्वेऽप्यलङ्काराणां प्रधान्यविव-

लोचनम्

त्वयि लोकोत्तरेण वपुषा सम्भूय स्थिता इत्यतिशयोक्तिर्ध्वन्यते । आपातेऽपि विकार-कारणमित्यास्वादपरम्पराक्रिययापि विना विकारात्मनः फलस्य सम्पत्तिरिति विभाव-नाध्वनिरपि । विभ्रममधोर्धुर्यमिति तुल्ययोगिताध्वनिरपि । एवं सर्वालङ्काराणां ध्वन्य-मानत्वमस्तीति मन्तव्यम् । न तु यथा कैश्चिन्नियतविषयीकृतम् । यथायोगमि-ति । क्वचिदलङ्कारः क्वचिद्वस्तु व्यञ्जकमित्यर्थो योजनीय इति ॥ २७ ॥

ननूक्तास्तावच्चिरन्तनैरलङ्कारास्तेषां तु भवता यदि व्यङ्ग्यत्वं प्रदर्शितं किमिय-तेत्याशङ्क्याह—**एव**मित्यादि । येषामलङ्काराणां वाच्यत्वेन शरीरीकरणं शरीरभूता-त्प्रस्तुतादर्थान्तरभूततया अशरीराणां कटकादिस्थानीयानां शरीरतापादनं व्यवस्थितं

बालप्रिया

कथनम् । ते मधुमदनासवाः । **लोकान्तरेण वपुषेति** । नेत्ररूपेण भ्रूरूपेणाधररस-रूपेण च शरीरेणेत्यर्थः । मदनधनुषो भ्रूरूपेण स्थित्या मदनस्य स्थितिः सिध्यतीति बोध्यम् । **इतीति** । इतिवक्तृकामुकवाक्यार्थप्रतीत्येत्यर्थः । **अतिशयोक्तिरिति** । नेत्रादौ वसन्ताद्यभेदप्रतीत्या भेदे अभेदरूपातिशयोक्तिरित्यर्थः । **तुल्ययोगितेति** । दृग्द्वयस्य मधोश्च साम्यविवक्षया दृशौ विभ्रममधोर्धुर्यं वपुरित्युक्त्या "न्यूनस्यापि विशि-ष्टेने"त्यादिना भामहादिलक्षिता तुल्ययोगितेत्यर्थः । 'एवमन्येऽप्यलङ्कारा' इति बहुवच-नलब्धमर्थमाह—**एवमि**त्यादि । गम्यं व्यवच्छेद्यमाह—**न त्वि**त्यादि । **न त्विति** । तथेति शेषः । **नियतेति** । नियतः नियमितः विषयः अलङ्कारविशेषरूपाश्रयो यस्य तत्कृतमित्यर्थः । ध्वन्यमानत्वमित्यनुषज्यते ॥ २७ ॥

**किमियतेति** । अलङ्काराणां व्यङ्ग्यत्वप्रदर्शनेन किं फलमित्यर्थः । **आहेति** । शरीरीत्यादिना तत्फलं दर्शयतीत्यर्थः । कारिकां व्याचष्टे—**येषामि**त्यादि । **वाच्य-त्वेनेति** हेतौ तृतीया । च्विप्रत्ययार्थं दर्शयन् व्याचष्टे—**शरीरभूतादि**त्यादि । **शरीरतापादनमिति** । शरीरत्वसम्पादनमित्यर्थः । व्यवस्थितत्वे गम्यं हेतुमाह—

क्षायामेव सत्यां ध्वनावन्तःपातः । इतरथा तु गुणीभूतव्यङ्ग्यत्वं प्रतिपादयिष्यते । अङ्गित्वेन व्यङ्ग्यतायामपि ।

अलङ्काराणां द्वयी गतिः—कदाचिद्वस्तुमात्रेण व्यज्यन्ते, कदाचिदलङ्कारेण । तत्र—

व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां

अत्र हेतुः—

काव्यवृत्तिस्तदाश्रया ॥ २९ ॥

लोचनम्

सुकवीनामयत्नसम्पाद्यतया । यदि वा वाच्यत्वे सति येषां शरीरतापादनमपि न व्यवस्थितं दुर्घटमिति यावत् । तेऽलङ्कारा ध्वनेर्व्यापारस्य काव्यस्य वाऽङ्गतां व्यङ्ग्यरूपतया गताः सन्तः परां दुर्लभां छायां कान्तिमात्मरूपतां यान्ति । एतदुक्तं भवति—सुकविर्विदग्धपुरन्ध्रीवद्भूषणं यद्यपि श्लिष्टं योजयति, तथापि शरीरतापत्तिरेवास्य कष्टसम्पाद्या कुङ्कुमपीतिकाया इव । आत्मतायास्तु का सम्भावनापि । एवम्भूता चेयं व्यङ्ग्यता या अप्रधानभूतापि वाच्यमात्रालङ्कारेभ्य उत्कर्षमलङ्काराणां वितरति । बालक्रीडायामपि राजत्वमिवेत्यमुमर्थं मनसि कृत्वाह—इतरथा त्विति ॥ २८ ॥

तत्रेति । द्वय्यां गतौ सत्याम् । अत्र हेतुरित्ययं वृत्तिग्रन्थः । काव्यस्य कवि-

बालप्रिया

सुकवीनामित्यादि । वाच्यत्वे इति सप्तम्यन्तम् । नेति पृथक् पदमित्यन्यथाऽपि व्याचष्टे—यदि वेत्यादि । 'ध्वन्यङ्गतामि'त्यत्र ध्वनिशब्दं द्वेधा व्याचष्टे-व्यापारस्येत्यादि । कथमङ्गत्वमित्यत्राह—व्यङ्ग्यतयेति । यदि वेत्युक्तव्याख्यानानुरोधेन भावार्थमाह—एतदुक्तमित्यादि । भूषणमिति । उपमादिकं कुङ्कुमादिकं चेत्यर्थः । श्लिष्टमिति । सक्तमित्यर्थः । अतिश्लिष्टमिति च पाठः । शरीरतापत्तिः शरीरत्वसम्पादनम् । अस्येति । उपमादेर्भूषणस्येत्यर्थः । कुङ्कुमेति । कुङ्कुमयुक्तानुलेपनविशेषः कुङ्कुमपीतिका तस्या इवेत्यर्थः । आत्मतायाः इति । आत्मत्वसम्पादनस्येत्यर्थः । अस्येत्यनुषङ्गः । का सम्भावनाऽपीति । आत्मत्वसम्पादनमतिकष्टसम्पाद्यमित्यर्थः । इतरथेत्यादिग्रन्थमवतारयति—एवंभूतेत्यादि । इयं व्यङ्ग्यता एवम्भूता चेत्यन्वयः । कथम्भूतेत्यत्राह–येत्यादि । राजत्वमिवेति । बालान्तरेभ्यो राजबालस्येति शेषः ॥ २८ ॥

वृत्तिग्रन्थ इति । न तु कारिकांश इति भावः । "काव्यवृत्तिस्तदा-

यस्मात्तत्र तथाविधव्यङ्ग्यालङ्कारपरत्वेनैव काव्यं प्रवृत्तम्। अन्यथा तु तद्वाक्यमात्रमेव स्यात्। तासामेवालङ्कृतीनाम्—

**अलङ्कारान्तरव्यङ्ग्यभावे**

पुनः,

**ध्वन्यङ्गता भवेत्।**

**चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते॥ ३०॥**

उक्तं ह्येतत्—'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा' इति। वस्तुमात्रव्यङ्ग्यत्वे चालङ्काराणामनन्तरोपदर्शितेभ्य एवोदाहरणेभ्यो विषय उन्नेयः। तदेवमर्थमात्रेणालङ्कारविशेषरूपेण वार्थेनार्थान्त-

लोचनम्

व्यापारस्य वृत्तिस्तदाश्रयालङ्कारप्रवणा यतः। **अन्यथेति**। यदि न तत्परत्वमित्यर्थः। तेन तत्र गुणीभूतव्यङ्ग्यता नैव शङ्क्येति तात्पर्यम्। तासामेवालङ्कृतीनामित्ययं पठिष्यमाणकारिकोपस्कारः। पुनरिति कारिकामध्य उपस्कारः। **ध्वन्यङ्गतेति**। ध्वनिभेदत्वमित्यर्थः। **व्यङ्ग्यप्राधान्यमिति**। अत्र हेतुः—**चारुत्वोत्कर्षत** इति। **यदीति**। तदप्राधान्ये तु वाच्यालङ्कार एव प्रधानमिति गुणीभूतव्यङ्ग्यतेति भावः। नन्वलङ्कारो वस्तुना व्यज्यते अलङ्कारान्तरेण च व्यज्यत इत्यत्रोदाहरणानि किमिति न दर्शितानीत्याशङ्क्याह—**वस्त्विति**। एतत्संक्षिप्योपसंहरति—**तदेवमिति**। व्यङ्ग्य-

बालप्रिया

श्रये'ति कारिकापाठाभिप्रायेण व्याचष्टे—**काव्यस्येत्यादि**। **कविव्यापारस्येति**। शब्दार्थरूपस्येत्यर्थः। **वृत्तिरिति**। स्थितिरित्यर्थः। सा अलङ्कृतिराश्रयो यस्या इत्यभिप्रायेण व्याचष्टे—**अलङ्कारेत्यादि**। **यदि न तत्परत्वमिति**। व्यङ्ग्यालङ्कारपरत्वं न भवति यदीत्यर्थः। वृत्तौ 'तद्वाक्यमात्रमेव स्यादि'ति। 'तत्' काव्यत्वेनाभिमतम्। 'वाक्यमात्रमेव' न तु काव्यात्मकमित्यर्थः। अतः तत्परत्वेन भाव्यं, तथाच ध्वन्यङ्गत्वमेवेति भावः। एतद्भावार्थं दर्शयति लोचने-**तेनेत्यादि**। तासामित्यस्यालङ्कारान्तरव्यङ्ग्यभाव इत्यनेनापि सम्बन्धः। तासामित्यस्यालङ्कृतीनामित्यर्थश्चेत्याशयेन वृत्तौ 'तासामेवालङ्कृतीनां' इत्युक्तमित्याह-**तासामेवेत्यादि**। **पठिष्येत्यादि**। वक्ष्यमाणकारिकयाऽपि सम्बन्धमासाद्य कासामित्याकाङ्क्षानिवर्तकत्वेनोपकारकारीत्यर्थः। प्रकृतानुगुण्येन व्याचष्टे-**ध्वनिभेदत्वमिति**। ध्वन्यवान्तरप्रकारत्वमित्यर्थः। **वाच्यालङ्कार एवेति**। दीपकादिरेवेत्यर्थः। कारिकायामलङ्कारान्तरव्यङ्ग्यभावे इत्यस्य अलङ्कारान्तरेण व्यङ्ग्यत्वे सतीत्यर्थः। तदेवमित्यादिग्रन्थस्य सारार्थमाह—**व्यङ्ग्यस्येत्यादि**।

रस्यालङ्कारस्य वा प्रकाशने चारुत्वोत्कर्षनिबन्धने सति प्राधान्येऽर्थशक्त्युद्भवानुरणरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः ।

एवं ध्वनेः प्रभेदान् प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते—

यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन भासते ।
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः ॥ ३१ ॥

द्विविधोऽपि प्रतीयमानः स्फुटोऽस्फुटश्च। तत्र य एव स्फुटः शब्दशक्त्यार्थशक्त्या वा प्रकाशते स एव ध्वनेर्मार्गो नेतरः । स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते सोऽस्यानुरणनरूपव्यङ्ग्यस्य ध्वनेरगोचरः । यथा—

कमलाअरा णँ मलिआ हंसा उड्डाविआ ण अ पिउच्छा ।

लोचनम्

स्य व्यञ्जकस्य च प्रत्येकं वस्त्वलङ्काररूपतया द्विप्रकारत्वाच्चतुर्विधोऽयमर्थशक्त्युद्भव इति तात्पर्यम् ॥ २९, ३० ॥

**एवमिति** । अविवक्षितवाच्यो विवक्षितान्यपरवाच्य इति द्वौ मूलभेदौ । आद्यस्य द्वौ भेदौ—अत्यन्ततिरस्कृतवाच्योऽर्थान्तरसंक्रमितवाच्यश्च । द्वितीयस्य द्वौ भेदौ—अलक्ष्यक्रमोऽनुरणनरूपश्च । प्रथमोऽनन्तभेदः । द्वितीयो द्विविधः—शब्दशक्तिमूलोऽर्थशक्तिमूलश्च । पश्चिमस्त्रिविधः—कविप्रौढोक्तिकृतशरीरः कविनिबद्धवक्तृप्रौढोक्तिकृतशरीरः स्वतस्सम्भवी च । ते च प्रत्येकं व्यङ्ग्यव्यञ्जकयोरुक्तभेदनयेन चतुर्धेति द्वादशविधोऽर्थशक्तिमूलः । आद्याश्चत्वारो भेदा इति षोडश मुख्यभेदाः । ते च पदवाक्यप्रकाश्यत्वेन प्रत्येकं द्विविधा वक्ष्यन्ते । अलक्ष्यक्रमस्य तु वर्णपदवाक्यसङ्घटनाप्रबन्धप्रकाश्यत्वेन पञ्चत्रिंशद्भेदाः । तदाभासेभ्यो ध्वन्याभासेभ्यो विवेको विभागः । अ-

बालप्रिया

सुबोधायोक्तान् वक्ष्यमाणांश्च ध्वनिप्रभेदान् सङ्कलय्याह—**अविवक्षितवाच्य** इत्यादिना **पञ्चत्रिंशद्भेदा** इत्यन्तेन । **उक्तभेदे**ति । वस्त्वलङ्कारभेदेत्यर्थः । **आद्याश्चत्वार** इति । अत्यन्ततिरस्कृतवाच्योऽर्थान्तरसङ्क्रमितवाच्योऽलक्ष्यक्रमव्यङ्ग्यः शब्दशक्तिमूलानुरणनरूपश्चेति चत्वार इत्यर्थः । **द्विविधा वक्ष्यन्त** इति । तथाच द्वात्रिंशदित्यर्थः। **वर्णे**त्यादि । अत्र पदवाक्यप्रकाशत्वेन भेदस्योक्तत्वादनेन वर्णसङ्घटनाप्रबन्धप्रकाश्यत्वेन यद्भेदत्रयं तदेव विवक्षितं, तथाच पञ्चत्रिंशद्भेदाः। **तदाभासेभ्य** इत्यादि । ध्वनेरित्यस्यात्रापि सम्बन्धो बोध्यः। **यत्रे**त्यादिपूर्वार्धस्य विवरणम् । **वृत्तौ** 'द्विविधोऽपी'त्यादि। प्रतीयमानः स्फुटः अस्फुटश्च द्विविधोऽपि भवतीत्य-

केण वि गामतडाए अब्भं उत्ताणअं फलिहम् ॥

अत्र हि प्रतीयमानस्य मुग्धवध्वा जलधरप्रतिबिम्बदर्शनस्य वाच्याङ्गत्वमेव । एवंविधे विषयेऽन्यत्रापि यत्र व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्षप्रतीत्या प्राधान्यमवसीयते, तत्र व्यङ्ग्यस्याङ्गत्वेन प्रतीतेर्ध्वनेरविषयत्वम् । यथा—

वाणीरकुडङ्गोड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहुए सीअन्ति अङ्गाइं ॥

एवंविधो हि विषयः प्रायेण गुणीभूतव्यङ्ग्यस्योदाहरणत्वेन निर्दे-

लोचनम्

स्येत्यात्मभूतस्य ध्वनेरसौ काव्यविशेषो न गोचरः ।

कमलाकरा न मलिता हंसा उड्डायिता न च सहसा । न विषय इत्यर्थः ।
केनापि ग्रामतडागेऽभ्रमुत्तानितं क्षिप्तम् ॥ इति च्छाया ।

अन्ये तु पिउच्छा पितृष्वसः इत्थमामन्त्र्यते । केनापि अतिनिपुणेन । वाच्याङ्गत्वमेवेति । वाच्येनैव हि विस्मयविभावरूपेण मुग्धिमातिशयः प्रतीयत इति वाच्यादेव चारुत्वसम्पत् । वाच्यं तु स्वात्मोपपत्तयेऽर्थान्तरं स्वोपकारवाञ्छया व्यनक्ति ।

वेतसलतागहनोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥ इति च्छाया ।

बालप्रिया

न्वयः । 'अपी'ति समुच्चये । 'स्फुट' इति । अस्फुटभिन्न इत्यर्थः । 'अस्फुट' इति 'यः प्रम्लिष्टत्वेन भासत' इत्यस्य विवरणम् । वाच्येत्याद्युत्तरार्धस्य विवरणम्—'स्फुटोऽपी'त्यादि । 'नास्यासा'वित्यादिचतुर्थपादस्य वृत्तिग्रन्थेनाप्रकाशितमर्थमाह लोचने—अस्येत्यादि । कस्याश्चिन्मुग्धायास्तटाके प्रतिबिम्बितमभ्रं दृष्ट्वा विस्मितायाः सखीजनं पितृष्वसारं वा प्रति कमलेत्यादिवचनम् । केनापि ग्रामतटाके अभ्रं मेघमण्डलम् उत्तानितमुत्तानं कृतं सत् अन्यथा यथोपरि तथा जलान्तर्दर्शनं न भवेत्, क्षिप्तं परन्तु । कमलाकराः न मलिनाः सञ्जातमलाः मलिना इति वा छाया । हंसाः सहसा उड्डायिताः उर्ध्वङ्गताः । न च इदमद्भुतमिति भावः । सहसेत्यस्य स्थाने पितृष्वस इति छायां केचित् पठन्तीत्याह—अन्य इत्यादि । केनापीत्यस्य विवरणम्—अतिनिपुणेनेति । वाच्याङ्गत्वं विवृणोति—वाच्येनैवेत्यादि । स्वात्मोपपत्तये स्वबोधविश्रान्तये । अर्थान्तरमिति । व्यङ्ग्यं मुग्धवध्वा जलधरप्रतिबिम्बस्य दर्शनमित्यर्थः । स्वोपकारवाञ्छया स्वोपकारं करोतीति वाञ्छयैव ।

वेतसेति । काव्यप्रकाशेऽप्युदाहृतेयं गाथा । गुणीभूतव्यङ्ग्यत्वमत्र विवृणोति—

क्ष्यते । यत्र तु प्रकरणादिप्रतिपत्त्या निर्धारितविशेषो वाच्योऽर्थः पुनः प्रतीयमानाङ्गत्वेनैवावभासते सोऽस्यैवानुरणनरूपव्यङ्ग्यस्य ध्वनेर्मार्गः । यथा—

उच्चिणसु पडिअ कुसुमं मा धुण सेहालिअं हलिअसुह्वे ।
अह दे विसमविरावो ससुरेण सुओ वलअसद्दो ॥

लोचनम्

अत्र दत्तसङ्केतचौर्यकामुकरतसमुचितस्थानप्राप्तिर्ध्वन्यमाना वाच्यमेवोपस्कुरुते । तथा हि गृहकर्मव्यापृताया इत्यन्यपराया अपि, वाध्वा इति सातिशयलज्जापारतन्त्र्यबद्धाया अपि, अङ्गानीत्येकमपि न तादृगङ्गं यद्गाम्भीर्यावहित्थवशेन संवरीतुं पारितम्, सीदन्तीत्यास्तां गृहकर्मसम्पादनं स्वात्मानमपि धर्तुं न प्रभवन्तीति । गृहकर्मयोगेन स्फुटं तथा लक्ष्यमाणानीति । अस्मादेव वाच्यात्सातिशयमदनपरवशताप्रतीतेश्चारुत्वसम्पत्तिः । यत्र त्विति । प्रकरणमादिर्यस्य शब्दान्तरसन्निधानसामर्थ्यलिङ्गादेस्तदवगमादेव यत्रार्थो निश्चितसमस्तस्वभावः । पुनर्वाच्यः पुनरपि स्वशब्देनोक्तोऽत एव स्वात्मावगतेः सम्पन्नपूर्वत्वादेव तावन्मात्रपर्यवसायी न भवति

बालप्रिया

अत्रेत्यादि । दत्तेति । दत्तसङ्केतो यश्चौर्यकामुको जारः तस्य रतसमुचितस्थाने वेतसलतागहने प्राप्तिः । ध्वन्यमानेति । शकुनिकोलाहलोक्त्या व्यज्यमानेत्यर्थः । अन्येत्यादि सातिशयेत्यादि च गम्यार्थकथनम् । ताभ्यां सर्वाङ्गसादोत्पत्तेः प्रतिबन्धकसद्भावो दर्शितः । गाम्भीर्येण यदवहित्थमाकारगोपनं तद्वशेन । न प्रभवन्तीति । अङ्गानीत्यस्यानुषङ्गः गृहकर्मव्यापृताया इत्यनेन गम्यमाह—गृहेत्यादि । तथेति । सादातिशयवत्त्वेनेत्यर्थः । गृहकर्मयोगे स्फुटं तथा न लक्ष्यमाणानीति सम्बन्धः । अतः कोलाहलश्रवणमेव सादातिशयजनकमिति भावः । योगे चेति पाठेऽलक्ष्यमाणानीति छेदः । अस्मादेव वाच्यादिति । तथाविधायास्तस्याः कोलाहलश्रवणकाल एव सन्तन्यमानताविशिष्टसर्वाङ्गसादरूपवाच्यार्थादेवेत्यर्थः । 'प्रकरणादी'त्यादिपदेन "संयोगो विप्रयोगश्चे"त्यादिना अभिधानियामकतया निर्दिष्टानां ग्रहणमित्याशयेन व्याचष्टे—प्रकरणमादिर्यस्येति । शब्दान्तरेत्यादि । तद्घटितसमुदायस्येत्यर्थः । तदवगमादेवेति । तदज्ञानादेवेत्यर्थः । यत्रेत्यस्य सम्बन्धं दर्शयन्निर्धारितेत्यादिकं व्याचष्टे—यत्रार्थ इत्यादि । निश्चितेति । निश्चयोऽत्र बोधयितव्यजनगतो वाक्यजन्यो ग्राह्यः । वाक्यजन्यबोधं प्रत्येव प्रकरणादिज्ञानस्य हेतुत्वात्, उपलक्षणं चेदमनुमानादिजन्यनिश्चयस्य । 'उच्चिन्वि'त्यादौ शेफालिकाधूननं न कर्तव्यं श्वशुरकोपाद्यनिष्टजनकत्वादिति वचनादिजन्यो बोधयितव्यनायिकादि॰तो निश्चयो ग्राह्यः । समस्तस्वभाव इति विशेषपदविवरणम् । पुनर्वाच्य इति हेतुगर्भमित्याह—अत एवेत्यादि । अत

अत्र ह्यविनयपतिना सह रममाणा सखी बहिःश्रुतवलयकलकलया

लोचनम्

तथाविधश्च प्रतीयमानस्याङ्गतामेतीति सोऽस्य ध्वनेर्विषय इत्यनेन व्यङ्ग्यतात्पर्यनिबन्धनं स्फुटं वदता व्यङ्ग्यगुणीभावे त्वेतद्विपरीतमेव निबन्धनं मन्तव्यमित्युक्तं भवति ।

उच्चिनु पतितं कुसुमं मा धुनीहि शेफालिकां हालिकस्नुषे ।

एष ते विषमविपाकः श्वशुरेण श्रुतो वलयशब्दः ॥ इति च्छाया ।

यतः श्वशुरः शेफालिकालतिकां प्रयत्नै रक्षंस्तस्या आकर्षणधूननादिना कुप्यति । तेनात्र विषमपरिपाकत्वं मन्तव्यम् । अन्यथा स्वोक्त्यैव व्यङ्ग्याक्षेपः स्यात् । अत्र च 'कस्स वा ण होइ रोसो' इत्येतदनुसारेण व्याख्या कर्तव्या । वाच्यार्थस्य प्रतिपत्तये लाभाय एतद्व्यङ्ग्यमपेक्षणीयम् । अन्यथा वाच्योऽर्थो न लभ्येत । स्वतस्सिद्धतया अवचनीय एव सोऽर्थः स्यादिति यावत् । नन्वेवं व्यङ्ग्यस्योपस्कारता प्रत्यु-

बालप्रिया

एवेत्यस्य विवरणम्—**स्वात्मेत्यादि** । **तावन्मात्रेति** । वाच्यार्थमात्रेत्यर्थः । प्रतीयमानाङ्गत्वेनेत्यादेर्विवरणम्—**प्रतीयमानस्येत्यादि** । **स इति** । तत्काव्यमित्यर्थः । भावार्थमाह—**अनेनेत्यादि** ।

उच्चिन्विति । **शेफालिकामिति** । "शेफालिका तु सुवहे"त्यमरः । हालिको हलकर्षकः तस्य स्नुषा पुत्रभार्या । धूननिषेधे हेतुमाह—**एष इत्यादि** । **एषः** मया श्रूयमाणः । ते वलयशब्दः । **श्वशुरेण श्रुतः** सन् **विषमविपाकः** विषमोऽनिष्टजनको विपाकः परिणामो यस्य सः । भवेदिति शेषः । विषमविपाक इत्युक्तेर्वक्ष्यमाणव्यङ्ग्याक्षेपकत्वशङ्कां परिहरति—**यत इत्यादिना** । **व्याख्या कर्तव्येति** । विषयभेदेन नानाविधं व्यङ्ग्यमवधातव्यमिति भावः । अत्र यत्किञ्चिद्व्यङ्ग्यस्य वाच्याङ्गत्वेऽपि व्यङ्ग्यान्तरमादाय ध्वनित्वमिति दर्शयति वृत्तौ–'अत्रे'त्यादिना । 'अविनयपतिना' जारेण । 'सखी'ति । नायिकेत्यर्थः । एतदपेक्षणीयं 'वाच्यार्थप्रतिपत्तये' इति ग्रन्थं विवृणोति—**वाच्यार्थस्येत्यादि** । **वाच्यार्थस्य** उच्चिन्वित्यादिगाथावाच्यार्थस्य । **लाभायेति** । निराकाङ्क्षाकबोधनिष्पत्तये । सफलबोधाय वेत्यर्थः । **एतदि-त्यस्य** विवरणम्—**एतद्व्यङ्ग्यमिति** । सखीकर्तृकनायिकाप्रतिबोधनरूपं व्यङ्ग्यमित्यर्थः । **अपेक्षणीयमिति** । सहकारितयाऽपेक्षणीयमित्यर्थः । बोधयितव्यनायिकायाः सखी मां प्रतिबोधयतीति, सहृदयानां तु रममाणनायिकायै सखी प्रतिबोधयतीति च ज्ञानं ज्ञायमानं तद्व्यङ्ग्यं वा वाच्यार्थलाभं प्रति सहकारीति यावत् । उक्तं व्यवस्थापयति—**अन्यथेत्यादि** । **अन्यथा** व्यङ्ग्यापेक्षाभावे । **न लभ्येतेति** । कुत इत्यत आह—**स्वत इत्यादि** । **स्वतस्सिद्धतया** नायिकादिभिः स्वतो ज्ञातत्वेन । **अवचनीय एवेति** । निष्फलत्वेनेति भावः । **सोऽर्थ इति** । शेफालिकां मा धुनीरित्यादयर्थ इत्यर्थः । **व्य ङ्ग्यस्येति** । उक्तव्यङ्ग्यस्येत्यर्थः । **पुनर्वाच्य इति** ग्रन्थो यथाव्याख्या-

सख्या प्रतिबोध्यते । एतदपेक्षणीयं वाच्यार्थप्रतिपत्तये । प्रतिपन्ने च वाच्येऽर्थे तस्याविनयप्रच्छादनतात्पर्येणाभिधीयमानत्वात्पुनर्व्यङ्ग्याङ्गत्वमेवेत्यस्मिन्ननुरणनरूपव्यङ्ग्यध्वनावन्तर्भावः ।

एवं विवक्षितवाच्यस्य ध्वनेस्तदाभासविवेके प्रस्तुते सत्यविवक्षितवाच्यस्यापि तं कर्तुमाह—

अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः ॥ ३२ ॥

लोचनम्

तोक्ता भवेदित्याशङ्क्याह—**प्रतिपन्ने** चेति । शब्देनोक्त इति यावत् ॥ ३१ ॥

**तदाभासविवेके प्रस्तुत** इति सप्तमी हेतौ । तदाभासविवेकप्रस्तावलक्षणात्प्रसङ्गादिति यावत् । कस्य तदाभास इत्यपेक्षायामाह—**विवक्षितवाच्यस्ये**ति । स्पष्टे तु व्याख्याने प्रस्तुत इत्यसङ्गतम् । परिसमाप्तौ हि विवक्षिताभिधेयस्य तदाभासविवेकः । न त्वधुना प्रस्तुतः । नाप्युत्तरकालमनुबध्नाति । **स्खलद्गतेरि**ति । गौणस्य लाक्षणिकस्य वा शब्दस्येत्यर्थः । अव्युत्पत्तिरनुप्रासादिनिबन्धनतात्पर्यप्रवृत्तिः । यथा—

प्रेङ्खत्प्रेमप्रबन्धप्रचुरपरिचये प्रौढसीमन्तिनीनां
चित्ताकाशावकाशे विहरति सततं यः स सौभाग्यभूमिः ।

अत्रानुप्रासरसिकतया प्रेङ्खदिति लाक्षणिकः, चित्ताकाश इति गौणः प्रयोगः कविना कृतोऽपि न ध्वन्यमानरूपसुन्दरप्रयोजनांशपर्यवसायी । अशक्तिर्वृत्तपरिपूर-

बालप्रिया

तत्तथा प्रतिपन्ने इत्येतद्व्याचष्टे—**शब्देनोक्ते** इति । वृत्तौ 'तस्ये'ति । वाच्यार्थस्येत्यर्थः । 'अविनये'त्यादि । अविनयस्य चौर्यसुरतस्य प्रच्छादनं वलयशब्दादिना प्रकाशनाभावः । तत्तात्पर्येणेत्यर्थः । 'व्यङ्ग्याङ्गत्वमि'ति । वलयशब्दं मा कार्षीरित्यादिव्यङ्ग्याङ्गत्वमित्यर्थः ॥ ३१ ॥

**तदाभास** इति । तदाभासविवेक इत्यर्थः । **स्पष्टे तु व्याख्यान** इत्यादि । प्रस्तुते इत्यस्य आरब्धे प्रकृते इति वा व्याख्याने सति तत्पदमसङ्गतं स्यादित्यर्थः । कुत इत्यत्राह–**परिसमाप्तौ** हीत्यादि । अव्युत्पत्तिपदेन तत्कार्यं विवक्षितमिति दर्शयति—**अनुप्रासा**दीति । अनुप्रासादिनिबन्धने यत्तात्पर्यं तेन काव्यप्रवृत्तिरित्यर्थः । **प्रेङ्खदि**ति । प्रेङ्खतश्चञ्चलस्य यथोक्तं "स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलमि"ति । प्रेम्णः प्रबन्धः प्रकर्षेण बन्धः स्थिरीकरणं तेन सह प्रचुरः परिचयो यस्य तस्मिन् । **लाक्षणिक** इति । अस्थिर इत्यर्थे इति शेषः । **गौण** इति । अप्रत्यक्षत्वादिना आकाशतुल्ये चित्ते इत्यर्थादिति भावः । अशक्तिपदं व्याचष्टे—**वृत्ते**त्यादि ।

स्खलद्गतेरुपचरितस्य शब्दस्याव्युत्पत्तेरशक्तेर्वा निबन्धो यः स च न ध्वनेर्विषयः । यतः—

**सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ।**
**यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम् ॥ ३३ ॥**

लोचनम्

णाद्यसामर्थ्यम् । यथा—

विषमकाण्डकुटुम्बकसञ्चयप्रवर वारिनिधौ पतता त्वया ।
चलतरङ्गविघूर्णितभाजने विचलतात्मनि कुड्यमये कृता ॥

अत्र प्रवरान्तमाद्यपदं चन्द्रमस्युपचरितम् । भाजनमित्याशये, कुड्यमय इति च विचले । अत्रैतत् कामपि कान्तिं न पुष्यति, ऋते वृत्तपूरणात् । स चेति । प्रथमोद्द्योते यः प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवय इत्यत्र 'वदति बिसिनीपत्रशयनम्' इत्यादि भाक्त उक्तः । स न केवलं ध्वनेर्न विषयो यावदयमन्योऽपीति चशब्दस्यार्थः। उक्तमेव ध्वनिस्वरूपं तदाभासविवेकहेतुतया कारिकाकारोऽनुवदतीत्यभिप्रायेण वृत्तिकृदुपस्कारं ददाति—यत इति । अवभासनमिति । भावानयने द्रव्यानयनमिति न्यायादवभासमानं व्यङ्ग्यम् । ध्वनिलक्षणं ध्वनेः स्वरूपं पूर्णम् , अवभासनं वा ज्ञानं तद्ध्वनेर्लक्षणं प्रमाणं, तच्च पूर्णं, पूर्णध्वनिस्वरूपनिवेदकत्वात् । अथ वा ज्ञानमेव

बालप्रिया

**विषमेति** । विषमः विषमसंख्याकः काण्डश्शरो यस्य तस्य कामदेवस्य, यः कुटुम्बकसञ्चयः तस्य प्रवरमुख्य हे चन्द्रेत्यर्थः । वारिनिधौ पतता पतितेन त्वया । कुरङ्गेति पाठे च लताकुरङ्गेण मृगेण विघूर्णितं भाजनं मध्यभागो यस्य तस्मिन्नित्यात्मविशेषणम् । तरङ्गेति पाठे वारिनिधिविशेषणम् । **कुड्यमये** अचञ्चले। **आत्मनि** स्वशरीरे । **विचलतेति** । चञ्चलतेत्यर्थः । **कृता** उत्पादिता । उपचरितमित्यस्य उत्तरवाक्ययोरपि सम्बन्धः । स चेति चकारः प्रथमोद्योतोक्तसमुच्चायक इत्याह—**प्रथमद्योतो** इत्यादि । **स** नेत्यादि । तन्मात्रं ध्वनेरविषयो नेत्यर्थः । **अन्योऽपीति** । अव्युत्पत्तेरित्याद्युक्तप्रकारोऽपीत्यर्थः । अवभासनमित्यादिकं व्याचष्टे—**भावेत्यादि** । अवभासनपदेन अवभासमानं व्यंग्यं लक्ष्यत इति भावः । पूर्णं स्वरूपमिति सम्बन्धः । नन्वेवं व्यंग्यस्याङ्गीभूतस्येत्यस्यान्वयो दुर्घट इत्यत आह—**अवभासनमित्यादि** । तत् स्फुटत्वेन ज्ञानम् । लक्ष्यते ज्ञायते अनेनेति व्युत्पत्त्यनुरोधेनाह—**प्रमाणमिति** । लक्षणपदस्य प्रमाणार्थकत्वं न स्वरसं, तत्पदमसाधारणधर्मार्थकमेवेत्याशयेनाह—**अथवे**त्यादि । लक्षणज्ञानयोः परिच्छेद्यपरिच्छेदकभावात्तयोरैक्यारोपेणात्र निर्देश इत्याह—

तच्चोदाहृतविषयमेव ॥

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके
द्वितीय उद्द्योतः ॥

लोचनम्

ध्वनिलक्षणम् , लक्षणस्य ज्ञानपरिच्छेद्यत्वात् । वृत्तावेवकारेण ततोऽन्यस्य चाभासरूपत्वमेवेति सूचयता तदाभासविवेकहेतुभावो यः प्रक्रान्तः स एव निर्वाहित इति शिवम् ॥

प्राज्यं प्रोल्लासमात्रं सद्भेदेनासूत्र्यते यया ।
वन्देऽभिनवगुप्तोऽहं पश्यन्तीं तामिदं जगत् ॥

इति श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तोन्मीलिते सहृदयालोकलोचने ध्वनिसङ्केते द्वितीय उद्द्योतः ॥

बालप्रिया

ज्ञानमेवेत्यादि । ज्ञानपरिच्छेद्यत्वादिति । लक्ष्यज्ञानेन निर्णेतव्यत्वादित्यर्थः । गवादिज्ञानेन हि गवादिलक्षणं परिच्छिद्यते । एवकारेणेति । उदाहृतविषयमेवेत्येवकारेणेत्यर्थः ।

प्राज्यमिति । यया मायारूपया परमेश्वर्या प्राज्यं प्रभूतम् इदं जगदिति प्रथमान्ततयाऽपकृष्यते । प्रोल्लासः प्रतीतिस्तन्मात्रम् सत् न तु वस्तुसदिति भावः । भेदेन ब्रह्मभिन्नत्वेन । यद्वा—सद्भेदेनेत्येकं पदम् सतो ब्रह्मणो भिन्नत्वेनेत्यर्थः । आसूत्र्यते प्रकाश्यते । इदं जगत्पश्यन्तीं तामभिनवगुप्तोऽहं वन्दे इति सम्बन्धः इति सर्वं शिवम् ।

इति श्रीसहृदयतिलकपण्डितराजरामषारकविरचितायां ध्वन्यालोकटिप्पण्यां बालप्रियायां द्वितीयोद्द्योतः समाप्तः ॥

## तृतीय उद्द्योतः

एवं व्यङ्ग्यमुखेनैव ध्वनेः प्रदर्शिते सप्रभेदे स्वरूपे पुनर्व्य-

लोचनम्

### तृतीय उद्द्योतः

स्मरामि स्मरसंहारलीलापाटवशालिनः ।
प्रसह्य शम्भोर्देहार्धं हरन्तीं परमेश्वरीम् ॥

उद्योतान्तरसङ्गतिं कर्तुमाह वृत्तिकारः—**एवमि**त्यादि । तत्र वाच्यमुखेन तावदविवक्षितवाच्यादयो भेदाः, वाच्यश्च यद्यपि व्यञ्जक एव । यथोक्तम्—'यत्रार्थः शब्दो वा' इति । ततश्च व्यञ्जकमुखेनापि भेद उक्तः, तथापि स वाच्योऽर्थो व्यङ्ग्यमुखेनैव भिद्यते । तथा ह्यविवक्षितो वाच्यो व्यङ्ग्येन न्यग्भावितः, विवक्षितान्यपरो वाच्य इति व्यङ्ग्यार्थप्रवण एवोच्यते इत्येवं मूलभेदयोरेव यथास्वमवान्तरभेदसहितयोर्व्यञ्जकरू-

बालप्रिया

### अथ तृतीयोद्योतटिप्पणी प्रारभ्यते

अथाहं प्रौढमुद्योतं तृतीयञ्च यथामति ।
किमपि व्याकरिष्यामि प्रसीदन्त्वत्र मे बुधाः ॥

**स्मरामी**ति । स्मरस्य कामस्य संहार एव लीला, तत्र यत्पाटवं सामर्थ्यं तच्छालिनः । शम्भोः देहार्धं प्रसह्य हरन्तीमित्यनेन परमेश्वर्याः तथाविधात् परमेश्वरादप्यतिशयितं पाटवं द्योत्यते ।

**उद्योते**ति । अन्य उद्योतः **उद्द्योतान्तरं** तृतीयोद्योतः, तस्य **सङ्गत** द्वितीयोद्योतेन सह प्रसङ्गरूपां सङ्गतिमित्यर्थः । **कर्तुं** सम्पादयितुम् । **व्यङ्ग्य-मुखेन** प्रदर्शित इत्युक्त्या व्यञ्जकमुखेनाप्रदर्शनं लभ्यते, तदनुपपन्नमित्याशङ्कामुद्भाव्य तदुक्तेरभिप्रायं दर्शयन्नवतारयति—**तत्रे**त्यादि । यद्यपीत्यादौ योज्यम् । तत्र ध्वनौ । **वाच्यमुखेने**त्यादि । अविवक्षितत्वादिविशिष्टवाच्यं भेदकमवलम्ब्यैव ध्वनेरविवक्षितवाच्यत्वादयः प्रभेदास्सम्भवन्तीत्यर्थः । ततः किमत आह—**वाच्यश्चे**त्यादि । **यथोक्त**मिति । वाच्यस्य व्यञ्जकत्वमस्तीत्युक्तमित्यर्थः । एतावतापि किमायातमित्यत आह—**ततश्चे**त्यादि । **स** इति । व्यञ्जक इत्यर्थः । **व्यङ्ग्येन न्यग्भावित** इति । वाच्यस्याविवक्षितत्वोक्त्या व्यङ्ग्येनाप्रधानीकृतत्वं सिद्ध्यतीति भावः । **व्यङ्ग्यार्थप्रवणः** व्यङ्ग्यपरतन्त्रः । उपसंहरति—**इती**त्यादि । **मूलभेदयो**रिति । अविवक्षितवाच्यविवक्षितान्यपरवाच्ययोरित्यर्थः । **व्यङ्ग्यमुख**त्यादि । व्यङ्ग्यपारतन्त्र्येणैवेत्यर्थः । **अत एव** उक्ताभिप्रायादेव । **किञ्चे**ति । व्य-

ञ्जकमुखेनैतत्प्रकाश्यते—

अविवक्षितवाच्यस्य पदवाक्यप्रकाशता ।
तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः ॥ १ ॥

अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे पदप्रकाशता यथा महर्षेर्व्यासस्य—'सप्तैताः समिधः श्रियः', यथा वा कालिदासस्य—'कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्', यथा वा—'किमिव हि मधुराणां मण्डनं नाकृतीनाम्', एतेषूदाहरणेषु 'समिध' इति 'सन्नद्ध' इति 'मधुराणा'मिति च पदानि व्यञ्जकत्वाभिप्रायेणैव कृतानि ।

लोचनम्

पो योऽर्थः स व्यङ्ग्यमुखप्रेक्षिताशरणतयैव भेदमासादयति। अत एवाह—व्यङ्ग्यमुखेनेति । किं च यद्यप्यर्थो व्यञ्जकस्तथापि व्यङ्ग्यतायोग्योऽप्यसौ भवतीति, शब्दस्तु न कदाचिद्व्यङ्ग्यः अपि तु व्यञ्जक एवेति । तदाह—व्यञ्जकमुखेनेति । न च वाच्यस्याविवक्षितादिरूपेण यो भेदस्तत्र सर्वथैव व्यञ्जकत्वं नास्तीति पुनःशब्देनाह । व्यञ्जकमुखेनापि भेदः सर्वथैव न न प्रकाशितः किन्तु प्रकाशितोऽप्यधुना पुनः शुद्धव्यञ्जकमुखेन । तथाहि व्यङ्ग्यमुखप्रेक्षितया विना पदं वाक्यं वर्णाः पदभागः सङ्घटना महावाक्यमिति स्वरूपत एव व्यञ्जकानां भेदः, न चैषामर्थवत्कदाचिदपि व्यङ्ग्यता सम्भवतीति व्यञ्जकैकनियतं स्वरूपं यत्तन्मुखेन भेदः प्रकाश्यत इति तात्पर्यम् ।

यस्तु व्याचष्टे—'व्यङ्ग्यानां वस्त्वलङ्काररसानां मुखेन' इति, स एवं प्रष्टव्यः—एतत्तावत्त्रिभेदत्वं न कारिकाकारेण कृतम् । वृत्तिकारेण तु दर्शितम् । न चेदानीं वृत्ति-

बालप्रिया

ङ्ग्यमुखेन प्रदर्शित इत्युक्तेरभिप्रायान्तरञ्चास्तीत्यर्थः । तदाह—यद्यपीत्यादि । अर्थः वाच्यः । व्यङ्ग्येत्यादि । कदाचिद्व्यङ्ग्योऽपि भवतीत्यर्थः । तदाहेति । तदभिप्रायादाहेत्यर्थः । नन्वेवं पुनर्व्यञ्जकमुखेनेत्यत्र पुनश्शब्दोऽनुपपन्न इत्यतस्तात्पर्यं विवृणोति—न चेत्यादि । तत्रेति । अविवक्षितत्वादिभेदविशिष्टवाच्य इत्यर्थः । व्यञ्जकत्वञ्च च नास्तीत्यन्वयः । 'व्यञ्जकमुखत्वमि'ति पाठे वाच्यस्येत्यादेः वाच्यसम्बन्धि यदविवक्षितादिरूपं अविवक्षितत्वादिकन्तेन हेतुना यो भेदः ध्वनेरवान्तरभेदः । तत्र ध्वनिभेद इत्यर्थः । न च नास्तीत्युक्तमेवार्थं विवृणोति—व्यञ्जकमुखेनापीत्यादि । तथाच व्यञ्जकमुखेनेत्यस्य फलितमर्थमाह—शुद्धेत्यादि । केवलव्यञ्जकमुखेनेत्यर्थः । एषामिति । पदादीनामित्यर्थः । सम्भवतीति । सम्भाव्यत इति च पाठः । इती-

लोचनम्

कारो भेदप्रकटनं करोति। ततश्चेदं कृतमिदं क्रियत इति कर्तृभेदे का सङ्गतिः ? न चैतावता सकलप्राक्तनग्रन्थसङ्गतिः कृता भवति। अविवक्षितवाच्यादीनामपि प्रकाराणां दर्शितत्वादित्यलं निजपूर्व्यजनसगोत्रैः साकं विवादेन। चकारः कारिकायां यथासङ्ख्यशङ्कानिवृत्त्यर्थः। तेनाविवक्षितवाच्यो द्विप्रभेदोऽपि प्रत्येकं पदवाक्यप्रकाश इति द्विधा। तदन्यस्य विवक्षिताभिधेयस्य सम्बन्धी यो भेदः क्रमद्योत्यो नाम स्वभेदसहितः सोऽपि प्रत्येकं द्विधैव। अनुरणनेन रूपं रूपणसादृश्यं यस्य तादृग्व्यङ्ग्यं यत्तस्येत्यर्थः। महर्षेरित्यनेन[1] तदनुसन्धत्ते यत्प्रागुक्तम्, अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये दृश्यत इति।

> धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा।
> मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः॥

समिच्छब्दार्थस्यात्र सर्वथा तिरस्कारः, असम्भवात्। समिच्छब्देन[2] च व्यङ्ग्योऽर्थोऽनन्यापेक्षलक्ष्म्युद्दीपनक्षमत्वं सप्तानां वक्त्राभिप्रेतं ध्वनितम्। यद्यपि—'निःश्वासान्ध इवादर्शः' इत्याद्युदाहरणादप्ययमर्थो लभ्यते, तथापि प्रसङ्गाद्बहुलक्ष्यव्यापित्वं दर्शयितुमुदाहरणान्तराण्युक्तानि। अत्र च वाच्यस्यात्यन्ततिरस्कारः पूर्वोक्तमनुसृत्य

बालप्रिया

ति हेतौ। **स्वरूपमिति**। पदादिस्वरूपमित्यर्थः। **इति कर्तृभेदे का सङ्गतिरिति**। इत्यस्य कर्तृभेदे सति सङ्गतत्वं न सम्भवतीत्यर्थः। 'व्यञ्जकमुखेन प्रदर्शिते पुनर्व्यञ्जकमुखेनैतत्प्रकाश्यत' इत्यनेन प्रदर्शनप्रकाशनयोरेककर्तृकत्वं स्वरसतः प्रतीयते, तदसङ्गतं भवेदिति यावत्। 'का सङ्गतिः एवं प्रष्टव्य' इति सम्बन्धः। दोषान्तरमाह—**न चेत्यादि**। **चकार इत्यादि**। चकारस्याभावे अविवक्षितवाच्यस्य पदप्रकाशता, तदन्यस्य वाक्यप्रकाशतेति यथासङ्ख्येनार्थभ्रमस्स्यादिति भावः। **तेनेति**। समुच्चयार्थकचकारेणेत्यर्थः। 'तदन्यस्ये'ति व्यधिकरणविशेषणमित्याशयेन व्याचष्टे—**विवक्षितेत्यादि**। 'अनुरणने'त्यादेर्विवरणं—**क्रमेत्यादि**। 'रूपमि'त्यस्य विवरणम्—**रूपणेति**। फलितमाह—**सादृश्यमिति**। इति यत्प्रागुक्तमिति सम्बन्धः। **समिच्छब्दार्थस्य** इध्मत्वविशिष्टस्य। **समिच्छब्देनेति**। उद्दीपकत्वं लक्षयतेति शेषः। समिच्छब्दोऽत्र वाच्यलक्ष्योभयानुगतोद्दीपकत्वप्रकारेण लक्षयति। एवमुद्यतत्वं लक्षयतेत्यादेरुद्यतत्वाद्युभयानुगतधर्मप्रकारेण लक्षयतेत्यर्थो बोध्यः। 'शब्देन चे'त्यनन्तरं

---

१ 'अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये दृश्यत इति यत्प्रागुक्तं, तत् महर्षेरित्यनेनानुसन्धत्ते' इति योजना।

२. समिच्छब्दस्योद्दीपनसामर्थ्यं लक्ष्यम्, तत्र अनन्यापेक्षत्वं सहकार्यन्तरानपेक्षत्वं व्यङ्ग्यम्। लक्ष्मीति तु न लक्ष्यघटकम्, श्रीशब्देनैव तदुक्तेरिति ध्येयम्।

तस्यैवार्थान्तरसङ्क्रमितवाच्ये यथा—'रामेण प्रियजीवितेन तु कृतं

लोचनम्

योजनीयः किं पुनरुक्तेन। सन्नद्धपदेन[1] चात्रासम्भवत्स्वार्थेनोद्यतत्वं[2] लक्षयता वक्त्रभिप्रेता निष्करुणकत्वाप्रतिकार्यत्वाप्रेक्षापूर्वकारित्वादयो ध्वन्यन्ते। तथैव मधुरशब्देन[3] सर्वविषयरञ्जकत्वतर्पकत्वादिकं लक्षयता सातिशयाभिलाषविषयत्वं नात्राश्चर्यमिति वक्त्रभिप्रेतं ध्वन्यते। **तस्यैवेति**। अविवक्षितवाच्यस्य यो द्वितीयो भेदस्तस्येत्यर्थः।

'प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा' इति।

रक्षःस्वभावादेव यः क्रूरोऽनतिलङ्घ्यशासनत्वदुर्मदतया च प्रसह्य निराक्रियमाणः क्रोधान्धः तस्यैतत्तावत्स्वचित्तवृत्तिसमुचितमनुष्ठानं यन्मूर्धकर्तनं नाम, मान्योऽपि

बालप्रिया

व्यङ्ग्योऽर्थ इति पाठो दृश्यते तत्पक्षे ध्वनितमित्यस्य बोधितमित्यर्थः। **असम्भवत्स्वार्थेनेति**। स्वार्थः वर्मितः। 'सन्नद्धो वर्मित' इत्यमरः। **ध्वन्यन्त इति**। त्वत्पदार्थस्य मेघस्येति शेषः। **मधुरशब्देनेति**। माधुर्यरसविशिष्टवाचिनेति भावः। **सर्वेति**। सर्वविषयरञ्जकत्वतर्पकत्वादीनाम्मध्ये एकन्धर्ममित्यर्थः। **अत्रेति**। आकृतिष्वित्यर्थः।

**प्रत्याख्यानेति**। श्रीरामचन्द्रस्य देवीं सीतामुद्दिश्येदं वचनम्। विवृणोति—**रक्ष** इत्यादि। **यः** रावणः। प्रत्याख्यानरुडित्यस्य विवरणम्—**अनती**त्यादि **क्रोधान्ध** इत्यन्तम्। अनतिलङ्घ्यं शासनं यस्य तत्त्वेन या दुर्मदता अहमनतिलङ्घ्यशासन इति दुरभिमानः तयेति क्रोधान्धत्वे हेतुः। **निराक्रियमाणः** त्वया निराकृतः। 'एतदनुष्ठानं स्वचित्तवृत्ति समुचितमि'ति सम्बन्धः। एतदित्येतद्विवृणो-

१. 'कस्सन्नद्धे विरहविधुरां त्वय्युपेक्षेतजायां' इत्यत्रत्यसन्नद्धपदेनेत्यर्थः।

२. 'उद्धतत्वं लक्षयते'ति क्वचित्पाठः, सोऽपि साधीयान्। उद्धतो हि निष्करुणः अप्रतीकार्यः अपेक्षापूर्वकारी च भवतीति तद्धर्माणां व्यङ्ग्यतोच्यमाना समीचीनमुपपद्यते।

३. दर्पणतृकृस्तु 'सर्वावस्थाविशेषेषु माधुर्यं रमणीयता' इति माधुर्यं परिभाष्य 'सरसिजमनुविद्धं' इत्यादिपद्यमुदाहार्षुः। एवमेव दशरूपककृतोऽपि 'अनुल्बणत्वं माधुर्य' इति संलक्ष्येदमेव पद्यं निदर्शयाम्बभूवुः। तथा चात्रत्यमधुरशब्दस्य रमणीयताविशेषे परिभाषितत्वात् तद्भावाभावेन क्व लक्षणा, क्व वा तन्मूला व्यञ्जनेति सुधीभिर्विभाव्यताम्।

प्रेम्णः प्रिये नोचितम्' । अत्र रामेणेत्येतत्पदं साहसैकरसत्वादिव्यङ्ग्या भिसङ्क्रमितवाच्यं व्यञ्जकम् ।

लोचनम्

कश्चिन्ममाज्ञां लङ्घयिष्यतीति । त इति यथा तादृगपि तया न गणितस्तस्यास्तवेत्यर्थः । तदपि तथा अविकारेणोत्सवापत्तिबुद्ध्या नेत्रविस्फारतामुखप्रसादादिलक्ष्यमाणया सोढम् । यथा येन प्रकारेण कुलजन इति यः कश्चित्पामरप्रायोऽपि कुलवधूशब्दवाच्यः। उच्चैः शिरो धत्ते एवंविधाः किल वयं कुलवध्वो भवाम इति । अथ च शिरःकर्तनावसरे त्वया शीघ्रं कृत्यतामिति तथा सोढं तथोच्चैः शिरो धृतं यथान्योऽपि कुलस्त्रीजन उच्चैः शिरो धत्ते नित्यप्रवृत्ततया । एवं रावणस्य तव च समुचितकारित्वं निर्व्यूढम् । मम पुनः सर्वमेवानुचितं पर्यवसितम् । तथाहि राज्यनिर्वासनादिनिरवकाशीकृतधनुर्व्यापारस्यापि कलत्रमात्ररक्षणप्रयोजनमपि यच्चापमभूत्तत्संप्रति त्वय्यरक्षितव्यापन्नायामेव निष्प्रयोजनम्, तथापि च तद्धारयामि । तन्नूनं निजजीवितरक्षैवास्य प्रयोजनत्वेन संभाव्यते । न चैतद्युक्तम् । रामाणेति । असमसाहसरसत्वसत्यसंधत्वोचितकारित्वादिव्यङ्ग्यधर्मान्तरपरिणतेनेत्यर्थः । 'कापुरुषादिधर्मपरिग्रहस्त्वादिशब्दात्' इति यद्व्याख्यातम्, तदसत्; कापुरुषस्य ह्येतदेव प्रत्युतोचितं स्यात् । प्रिय इति शब्दमात्रमेवैतदिदानीं संवृत्तम् । प्रियशब्दस्य प्रवृत्तिनिमित्तं यत्प्रेमनाम तदप्य-

बालप्रिया

ति—यन्मूर्धकर्तनं नामेति । रावणेन हि श्रीरामस्य पुरतो मायासीताशिरश्छेदः कृतः । इतीति । इति बुद्ध्येत्यर्थः । ते इत्यस्य प्रत्याख्यानेत्यनेन, कृतमित्यनेन च सम्बन्धः । भावार्थमाह—यथेत्यादि । तादृगपि निरतिशयैश्वर्यादिविशिष्टोऽपि सः गणितः आदृतः । तदपि शिरःकर्तनमपि । बुद्ध्येत्यस्य विशेषणं—नेत्रेत्यादि । विस्फारता विकासः । सोढमनुभूतम् । इत्युच्चैश्शिरो धत्त इति सम्बन्धः । इत्यभिमानेन शिर उन्नतं करोतीत्यर्थः । अन्यथापि व्याचष्टे–अथ चेत्यादि । तच्चेत्यस्य विवरणं–शिरःकर्तनावसर इति । तथा सोढमित्यस्य व्याख्यानं–तथोच्चैरित्यादि । उच्चैश्शिरो धत्त इति प्रार्थनाप्रत्याख्यानेन क्रोधान्धे कस्मिंश्चित् कामिनि शिरःकर्तनायोद्युक्ते सति शिर उन्नतं करोतीत्यर्थः । नित्यप्रवृत्ततयेति लडर्थविवरणम् । उत्तरार्धं व्याख्यास्यन्नाह–एवमित्यादि । पुनरिति तुशब्दविवरणम् । 'व्यर्थ' मित्यादेर्व्याख्यानम्—राज्येत्यादि । 'प्रियजीवितेने'त्यस्य तन्नूनमित्यादि च । अस्येति । धनुर्धारणस्येत्यर्थः । एतदिति । निजजीवितरक्षाप्रयोजनकत्वेन धनुर्धारणमित्यर्थः । 'रामेणे'त्यादिवृत्तिग्रन्थं व्याचष्टे—रामेणेत्यादि । साहसैकरसत्वमित्यस्य विवरणम्–असमेत्यादि । आदिपदार्थकथनं–सत्येत्यादि । अत्र रामपदलक्ष्यतावच्छेदकं कातरत्वमिति प्रदीपकारः, कैतवस्नेहवत्त्वमिति चक्रवर्ती, पुरुषकारपराङ्मुखत्वमिति भट्टगो-

यथा वा—

एमेअ जणो तिस्सा देइ कवोलोपमाइ ससिबिम्बम् ।
परमत्थविआरे उण चन्दो चन्दो विअ वराओ ॥

अत्र द्वितीयश्चन्द्रशब्दोऽर्थान्तरसङ्क्रमितवाच्यः ।

अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे वाक्यप्रकाशता यथा—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

लोचनम्

नौचित्यकलङ्कितमिति शोकालम्बनोद्दीपनविभावयोगात्करुणरसो रामस्य स्फुटीकृत इति । **एमेअ इति** ।

एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम् ।
परमार्थविचारे पुनश्चन्द्रश्चन्द्र इव वराकः ॥ ( इति छाया । )

एवमेवेति स्वयमविवेकान्धतया । जन इति लोकप्रसिद्धगतानुगतिकतामात्रशरणः । तस्या इत्यसाधारणगुणगणमहार्घवपुषः । कपोलोपमायामिति निर्व्याजलावण्यसर्वस्वभूतमुखमध्यवर्तिप्रधानभूतकपोलतलस्योपमायां प्रत्युत तदधिकवस्तुकर्तव्यं ततो दूरनिकृष्टं शशिबिम्बं कलङ्कव्याजजिह्मीकृतम् । एवं यद्यपि गड्डरिकाप्रवाहपतितो लोकः, तथापि यदि परीक्षकाः परीक्षन्ते तद्वराकः कृपैकभाजनं यश्चन्द्र इति प्रसिद्धः स चन्द्र एव क्षयित्वविलासशून्यत्वमलिनत्वधर्मान्तरसंक्रान्तो योऽर्थः । अत्र च यथा व्यङ्ग्यधर्मान्तरसङ्क्रान्तिस्तथा पूर्वोक्तमनुसन्धेयम् । एवमुत्तरत्रापि ।

एवं प्रथमभेदस्य द्वावपि प्रकारौ पदप्रकाशकत्वेनोदाहृत्य वाक्यप्रकाशकत्वेनोदाहरति—**या निशेति** । **विवक्षित** इति । तेन ह्युक्तेन न कश्चिदुपदेश्यं प्रत्युप-

बालप्रिया

पालः । **शोकेत्यादि** । सम्भावितप्रियामरणमालम्बनविभावः प्रियासम्बन्ध्यसाधारणकर्मादिस्मरणमुद्दीपनविभावः । एवमेवेत्यादेर्भावार्थं व्याचष्टे—**स्वयमित्यादि** । **तदधिकमिति** । कपोलादुत्कृष्टमित्यर्थः । उपमायां कर्तव्यमित्यन्वयः । उपमानत्वेन वक्तव्यमित्यर्थः । **तत** इति । कपोलादित्यर्थः । शशिपदविवरणम्—**कलङ्केत्यादि** । कलङ्कव्याजो यः शशः तेन जिह्मीकृतं मलिनीकृतम् । विअ इत्यवधारणार्थकमित्याशयेनाह—**चन्द्र एवेति** । द्वितीयचन्द्रपदस्य चन्द्रपदवाच्यत्वेन गुणशून्यत्वेन वा रूपेण लक्षणात्र बोध्या । व्यङ्ग्यधर्मानाह—**क्षयित्वेत्यादि** । **सङ्क्रान्तो योऽर्थ** इति । **अर्थः** चन्द्रपदार्थः । **अत्रेति** । उक्तयोरुदाहरणयोरित्यर्थः । **पूर्वोक्तमिति** । द्वितीयोद्योतस्यादावुक्तमित्यर्थः । **तेन ह्युक्तेनेति** । निशादिपदवाच्येन रात्र्याद्यर्थेनेत्यर्थः ।

अनेन हि वाक्येन निशार्थो न च जागरणार्थः कश्चिद्विवक्षितः । किं तर्हि ? तत्त्वज्ञानावहितत्वमतत्त्वपराङ्मुखत्वं च मुनेः प्रतिपाद्यत इति तिरस्कृतवाच्यस्यास्य व्यञ्जकत्वम् ।

तस्यैवार्थान्तरसङ्क्रमितवाच्यस्य वाक्यप्रकाशता यथा—

विसमइओ काण वि काण वि वालेइ अमिअणिम्माओ ।
काण वि विसामिअमओ काण वि अविसामओ कालो ॥
( विषमयितः केषामपि केषामपि प्रयात्यमृतनिर्माणः ।
केषामपि विषामृतमयः केषामप्यविषामृतः कालः ॥ इति छाया )

लोचनम्

देशः सिद्धयति । निशायां जागरितव्यमन्यत्र रात्रिवदासितव्यमिति किमनेनोक्तेन । तस्माद्बाधितस्वार्थमेतद्वाक्यं संयमिनो लोकोत्तरतालक्षणेन निमित्तेन तत्त्वदृष्टाववधानं मिथ्यादृष्टौ च पराङ्मुखत्वं ध्वनति । सर्वशब्दार्थस्य चापेक्षिकतयाप्युपपद्यमानतेति न सर्वशब्दार्थान्यथानुपपत्त्यायमर्थ आक्षिप्तो मन्तव्यः । सर्वेषां ब्रह्मादिस्थावरान्तानां चतुर्दशानामपि भूतानां या निशा व्यामोहजननी तत्त्वदृष्टिः तस्यां संयमी जागर्ति कथं प्राप्ये-

बालप्रिया

**न कश्चिदि**ति । कश्चिदुपदेशो न सिद्ध्यतीत्यन्वयः । भगवद्गीतागतस्यास्योपदेशपरत्वमावश्यकमिति भावः । कुतो न सिद्धयतीत्यत्राह—**निशायामि**त्यादि । **अन्यत्र रात्रिवदि**ति । अहनि रात्राविवेत्यर्थः । **बाधिते**ति । अनुपयोगबाधितेत्यर्थः । **वाक्यमि**ति । निशा जागर्तीत्यादिपदसमुदाय इत्यर्थः । तत्तत्पदलक्ष्यार्थाः प्रदर्शयिष्यन्ते । **लोकोत्तरे**त्यादि । लोकोत्तरत्वेन हेतुनेत्यर्थः । नन्वत्र निद्राकालरूपनिशापदार्थे सर्वभूतसम्बन्धान्वये सर्वपदार्थघटकतया संयमिनोऽपि तदन्वयः प्राप्तः, स च जागर्तीत्येतदर्थान्वयिनोऽनुपपन्नस्तस्मादनेनोक्तव्यङ्ग्यस्याविष्कृतत्वान्न ध्वनित्वमिति शङ्कां परिहरति—**सर्वशब्दार्थस्ये**त्यादि । **आपेक्षिकतये**ति । सर्वशब्दोऽत्र संयमिव्यतिरिक्ताशेषत्वावच्छिन्नवाचक इत्यतः किञ्चिदपेक्षयेत्यर्थः । **सर्वशब्दार्थे**ति । सर्वशब्दार्थान्वयेत्यर्थः । **अयमर्थः** पूर्वोक्तव्यङ्ग्यार्थः । **आक्षिप्तः** आविष्कृतः । श्लोकं व्यचष्टे—**सर्वेषामि**त्यादि । **चतुर्दशानामपि भूताना**मिति । ब्राह्मप्राजापत्यैन्द्रपित्र्यगान्धर्वयाक्षराक्षसपैशाचभेदादष्टविधन्दैवं मानुषमेकविधं पशुपक्षिसर्पकीटस्थावरभेदात्पञ्चविधं तैर्यग्योनं भूतमिति चतुर्दशविधानामपि देहिनामित्यर्थः । यथोक्तं साङ्ख्यकारिकायां "अष्टविकल्पो दैव" इत्यादि । **व्यामोहजनन्ती**ति निशापदलक्ष्यार्थकथनम् । सा केत्यत्राह—**तत्त्वे**ति । 'जागर्ति' पदलक्ष्यार्थमाह—**कथमि-**

लोचनम्

तेति। न तु विषयवर्जनमात्रादेव संयमीति यावत्। यदि वा सर्वभूतनिशायां मोहिन्यां जागर्ति कथमियं हेयेति। यस्यां तु मिथ्यादृष्टौ सर्वाणि भूतानि जाग्रति अतिशयेन सुप्रबुद्धरूपाणि सा तस्य रात्रिरप्रबोधविषयः। तस्या हि चेष्टायां नासौ प्रबुद्धः। एवमेव लोकोत्तराचारव्यवस्थितः पश्यति मन्यते च। तस्यैवान्तर्बहिष्करणवृत्तिश्चरितार्था। अन्यस्तु न पश्यति न च मन्यत इति। तत्त्वदृष्टिपरेण भाव्यमिति तात्पर्यम्। एवं च पश्यत इत्यपि मुनेरित्यपि च न स्वार्थमात्रविश्रान्तम्। अपि तु व्यङ्ग्य एव विश्राम्यति। यत्तच्छब्दयोश्च न स्वतन्त्रार्थतेति सर्व एवायमाख्यातसहायः पदसमूहो व्यंङ्ग्यपरः। तदाह—**अनेन हि वाक्येनेति**। प्रतिपाद्यत इति ध्वन्यत इत्यर्थः। विषमयितो विषमयतां प्राप्तः। केषाञ्चिद्दुष्कृतिनामतिविवेकिनां वा। केषाञ्चित्सुकृतिनामत्यन्तमविवेकिनां वा अतिक्रामत्यमृतनिर्माणः। केषाञ्चिन्मिश्रकर्मणां विवेकाविवेकवतां वा, विषामृतमयः। केषामपि मूढप्रायाणां धाराप्राप्तयोगभूमिकारूढानां वा अविषामृतमयः कालोऽतिक्रामतीति सम्बन्धः। विषामृतपदे च लावण्यादिशब्दवन्निरूढलक्षणारूपतया सुखदुःखसाधनयोर्वर्तते, यथा—विषं निम्बममृतं कपित्थमिति। न चात्र सुखदुःखसाधने तन्मात्रविश्रान्ते, अपि तु स्वकर्तव्यसुखदुःखपर्यवसिते। न च ते साधने सर्वथा

बालप्रिया

त्यादि। इयं कथं प्राप्येतेति मत्या तत्प्राप्त्युपायमनुतिष्ठतीत्यर्थः। भावमाह—**न त्वि**त्यादि। **संयमी** संयमिपदवाच्यः। तत्त्वदृष्टेर्मोहजनकत्वमप्रसिद्धमित्यतोऽन्यथा विवृणोति—**यदि** वेत्यादि। **मोहिन्यामिति**। अविद्यायामित्यर्थः। **मिथ्यादृष्टाविति**। अविद्यायां तत्कार्ये द्वैतप्रपञ्चे वेत्यर्थः। **तस्येति**। संयमिन इत्यर्थः। **अप्रबोधवि**षय इत्यस्यैव विवरणम्—**तस्या हीत्यादि**। **असाविति**। संयमीत्यर्थः। **लोकोत्तराचारव्यवस्थित** इति संयमिपदस्यैव लक्ष्यार्थकथनम्। 'पश्यतो मुने' रित्यस्य विवरणम्—**पश्यति मन्यते चेति**। अत्र पश्यतीत्येतच्चरितार्थबहिष्करणवृत्तित्वेन मन्यत इत्येतच्चरितार्थान्तःकरणवृत्तित्वेन च रूपेण लक्षकमित्याह—**तस्यैवे**त्यादि। अनेन गम्यमर्थमाह—**अन्य** इत्यादि। फलितं व्यङ्ग्यमाह—**तत्त्वेति**। **व्यङ्ग्य ए**वेति। पूर्वोक्तमुख्यव्यङ्ग्य एवेत्यर्थः। **तदाहेति**। उक्ताभिप्रायादाहेत्यर्थः। **'केषामपी'**त्यादेर्विवरणम्—**केषाञ्चिदि**त्यादि। 'प्रयाती'त्यस्य **अतिक्रमतीति**। 'अमिअणिम्माओ'इति गाथापाठाभिप्रायेण छायामाह—**अमृतनिर्माण** इति। अमृतस्येव निर्माणं यस्य स इत्यर्थः। विषामृतपदयोः दुःखसुखसङ्क्रमितवाच्यत्वं वृत्तावुक्तं व्यवस्थापयिष्यन्नाह—**विषामृतपदे** इत्यादि। सुखदुःखेति व्युत्क्रमेण निर्देशः दुःखसुखसाधनयोरित्यर्थः। तथा पाठो वा। एवमुपर्यपि बोध्यम्। अत्र दृष्टान्तमाह—**यथे**त्यादि। इतीत्यस्य इत्यादावित्यर्थः। प्रकृतोदाहरणे विशेषमाह—**न चे**त्यादि। **अत्रेति**। प्रकृतोदाहरण इत्यर्थः। **तन्मात्रेति**। सुखदुःखसाधनमात्रेत्यर्थः। तन्मात्रविश्रान्तेन

अत्र हि वाक्ये विषामृतशब्दाभ्यां दुःखसुखरूपसङ्क्रमितवाच्याभ्यां व्यवहार इत्यर्थान्तरसङ्क्रमितवाच्यस्या व्यञ्जकत्वम् ।

विवक्षिताभिधेयस्यानुरणनरूपव्यङ्ग्यस्य शब्दशक्त्युद्भवे प्रभेदे पद-प्रकाशता यथा—

लोचनम्

न विवक्षिते । निस्साधनयोस्तयोरभावात् । तदाह—**सङ्क्रमितवाच्याभ्यामिति** । केषाञ्चिदिति चास्य विशेषे सङ्क्रान्तिः । अतिक्रामतीत्यस्य च क्रियामात्रसङ्क्रान्तिः । काल इत्यस्य च सर्वव्यवहारसङ्क्रान्तिः । उपलक्षणार्थं तु विषामृतग्रहणमात्रसङ्क्रमणं वृत्तिकृता व्याख्यातम् । तदाह—**वाक्यइति** ।

एवं कारिकाप्रथमार्धलक्षितांश्चतुरः प्रकारानुदाहृत्य द्वितीयकारिकार्धस्वीकृतान् षडन्यान् प्रकारान् क्रमेणोदाहरति—**विवक्षिताभिधेयस्येत्यादिना** । **प्रातुमिति** पूरयितुम् । धनैरिति बहुवचनं यो येनार्थी तस्य तेनेति सूचनार्थम् । अतएवार्थिग्रहणम् । जनस्येति बाहुल्येन हि लोको धनार्थी, न तु गुणैरुपकारार्थी । **दैवेनेति** । अशक्यपर्यनु-

बालप्रिया

चेति सम्बन्धः । विविक्षिते इत्यपकृष्यते । **स्वकर्तव्येति** । स्वसाध्येत्यर्थः । स्वपदं साधनपरम् । **न च न विवक्षिते** विवक्षिते एव । कुत इत्यतत्राह—**निस्साधने-त्यादि** । **तदाहेति** । उक्ताभिप्रायेण सुखदुःखरूपसङ्क्रमितवाच्यत्वमाहेत्यर्थः । 'विषं निम्बममृतं कपित्थमि'त्यादौ निरूढलक्षणया दुःखसाधनं निम्बं सुखसाधनं कपित्थमित्येवार्थो विवक्षितः, प्रकृते तु कालः केषाञ्चिद्दुःखमयः केषाञ्चित्सुखमयश्चातिक्रामतीत्यर्थस्य विवक्षिततया विषपदस्य किञ्चित्साधनकदुःखे अमृतपदस्य किञ्चित्साधनकसुखे च लक्षणा दुःखसुखयोर्विशेषो व्यङ्ग्यः, साधनत्वेन विषामृतयोर्भानादर्थान्तरसङ्क्रमितवाच्यता चेति भावः । **केषाञ्चिदिति चास्य विशेषे सङ्क्रान्तिरिति** । अज्ञातविशेषधर्मावच्छिन्नवाचकस्य केषामपीति शब्दस्य च दुष्कृतिनामित्याद्युक्तार्थविशेषे सङ्क्रान्तिरित्यर्थः । दुष्कृत्यादीनामज्ञातत्वादिकं व्यङ्ग्यम् । **क्रियामात्रे** भवत्यर्थे । **सर्वव्यवहारेति** । व्यवहारगोचरवस्तुजातेत्यर्थः ।

**द्वितीयेति** । द्वितीयं यत्कारिकार्धं तत्स्वीकृतास्तदुक्तानित्यर्थः । 'प्रातुमि'ति । 'अस्मी'त्यव्ययमहमर्थे । धनैरर्थिजनस्य वाञ्छां प्रातुं दैवेन न सृष्टो यदि नामेत्यभ्युपगमे । तर्हीति शेषः । जडोऽहं पथि प्रसन्नाम्बुधरस्तटाकः अथवा कूपः किं कस्मात् । न कृतः दैवेन न सृष्टः। तटाकस्य कूपादुत्कृष्टत्वादादावुक्तिः। लोचने—**यो येनार्थीति** । यो जनो गोसुवर्णादीनाम्मध्ये येन धनेनार्थीत्यर्थः । **अत एवेति** । उक्ताभिप्रायादेवेत्यर्थः । भावार्थकथनम्—**अशक्येत्यादि** । दैवस्यादृश्यत्वादिति भावः । 'अस्मि न सृष्ट'

प्राप्तुं धनैरर्थिजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नास्मि ।
पथि प्रसन्नाम्बुधरस्तडागः कूपोऽथवा किं न जडः कृतोऽहम् ॥ १ ॥

अत्र हि जड इति पदं निर्विण्णेन वक्त्रात्मसमानाधिकरणतया प्रयुक्तमनुरणनरूपतया कूपसमानाधिकरणतां स्वशक्त्या प्रतिपद्यते ।

तस्यैव वाक्यप्रकाशता यथा हर्षचरिते सिंहनादवाक्येषु-'वृत्तेऽस्मिन्महाप्रलये धरणीधारणायाधुना त्वं शेषः' ।

एतद्धि वाक्यमनुरणनरूपमर्थान्तरं शब्दशक्त्या स्फुटमेव प्रकाशयति ।

लोचनम्

योगेनेत्यर्थः । **अस्मीति** । अन्यो हि तावदवश्यं कश्चित्सृष्टो न त्वहमिति निर्वेदः । प्रसन्नं लोकोपयोगि अम्बु धारयतीति । **कूपोऽथवेति** । लोकैरप्यलक्ष्यमाण इत्यर्थः । **आत्मसमानाधिकरणतयेति** । जडः किङ्कर्तव्यतामूढ इत्यर्थः, अथ च कूपो जडोऽर्थिता कस्य कीदृशीत्यसम्भवद्विवेक इति । अत एव जडः शीतलो निर्वेदसन्तापरहितः । तथा जडः शीतजलयोगितया परोपकारसमर्थः । अनेन तृतीयार्थेनायं जडशब्दस्तटाकार्थेन पुनरुक्तार्थसम्बन्ध इत्यभिप्रायेणाह—**कूपसमानाधिकरणतामिति** । स्वशक्त्येति शब्दशक्त्युद्भवत्वं योजयति । **महाप्रलय इति** । महस्य उत्सवस्य आसमन्तात्प्रलयो यत्र तादृशि शोककारणभूते वृत्ते धरण्या राज्यधुराया धारणायाश्वासनाय त्वं शेषः शिष्यमाणः । इतीयता पूर्णे वाक्यार्थे कल्पावसाने भूपीठभारोद्वहनक्षम एको

बालप्रिया

इत्यनेन गम्यमर्थमाह—**अन्यो हीत्यादि** । **लोकोपयोगीति** । लोकैरित्यादि च गम्यार्थविवरणम् । 'आत्मसमानाधिकरणतये'ति प्रतीकधारणमादावस्मदर्थान्वयी जडपदार्थो विवरिष्यत इति ज्ञापनाय । तमर्थमाह—**किंकर्तव्यतामूढ** इति । कूपान्वयिनं व्यङ्ग्यमर्थमाह—**अथ चेत्यादि** । अन्नार्थान्तरञ्चाह—**अत एवेत्यादि** । **अत एव** विवेकाभावादेव । **शीतल** इति । "शिशिरो जडः" इत्यमरः । अनेन गम्यमर्थमाह—**निर्वेदेति** । लडयोरभेदाज्जडपदं जलमयार्थकञ्चेत्याह—**तथेत्यादि** । वृत्तौ 'कूपसमानाधिकरणतां प्रतिपद्यत' इत्यनेन जडपदस्य कूपपदसामानाधिकरण्यमेवोक्तन्न तु तटाकपदसामानाधिकरण्यमपि, तत्कुत इति शङ्कां परिहरंस्तद्ग्रन्थमवतारयति—**अनेनेत्यादि** । **अनेन तृतीयार्थेनेति** । कूपान्वयित्वेनोक्तेष्वर्थेषु तृतीयेन शीतजलवाहितयेत्याद्युक्तेनार्थेन हेतुनेत्यर्थः । **तटाकार्थेनेति** । तेन सहेत्यर्थः । **पुनरुक्तेति** । 'प्रसन्नाम्बुधर' इति विशेषणार्थस्यैवोक्त्या पुनरुक्तार्थसम्बन्धस्स्यादित्यर्थः । 'स्वशक्त्ये'त्यत्रान्यथाप्रतिपत्तिनिरासायाह—**शब्देत्यादि** । वाच्यार्थमाह—**महस्येत्यादि** । अस्मिन्नित्यस्य विवरणम्—**शोकेत्यादि** । **वृत्ते** जाते । व्यङ्ग्यमर्थान्तरन्दर्शयति—

अस्यैव कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा हरिविजये—

चूअंकुरावअंसं छणमप्पसरमहग्घणमणहरसुरामोअम् ।

असमप्पिअं पि गहिअं कुसुमसरेण महुमासलच्छिमुहम् ॥

अत्र ह्यसमर्पितमपि कुसुमशरेण मधुमासलक्ष्म्या मुखं गृहीतमित्यसमर्पितमपीत्येतदवस्थाभिधायिपदमर्थशक्त्या कुसुमशरस्य बलात्कारं प्रकाशयति ।

अत्रैव प्रभेदे वाक्यप्रकाशता यथोदाहृतं प्राक् 'सज्जेहि सुरहिमासो' इत्यादि । अत्र सज्जयति सुरभिमासो न तावदर्पयत्यनङ्गाय शरानित्ययं वाक्यार्थः कविप्रौढोक्तिमात्रनिष्पन्नशरीरो मन्मथोन्माथकदनावस्थां वसन्तसमयस्य सूचयति ।

लोचनम्

नागराज एव दिग्दन्तिप्रभृतिष्वपि प्रलीनेष्वित्यर्थान्तरम् ।

चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम् ।

महार्घेण उत्सवप्रसरेण मनोहरसुरस्य मन्मथदेवस्य आमोदश्चमत्कारो यत्र तत् । अत्र महार्घशब्दस्य परनिपातः, प्राकृते नियमाभावात् । छण इत्युत्सवः ।

असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्मीमुखम् ॥

मुखं प्रारम्भो वक्त्रं च । तच्च सुरामोदयुक्तं भवति । मध्वारम्भे कामश्चित्तमाक्षिपतीत्येतावानयमर्थः कविप्रौढोक्त्यार्थान्तरव्यञ्जकः सम्पादितः । अत्र कविनिबद्धवक्तृप्रौढोक्तिशरीरार्थशक्त्युद्भवे पदवाक्यप्रकाशतायामुदाहरणद्वयं न दत्तम् । 'प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः' इति प्राच्यकारिकाया इयतैवोदाहृतत्वं भवेदित्यभिप्रायेण । तत्र पदप्रकाशता यथा—

सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ।

किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥

बालप्रिया

कल्पेत्यादि । 'महाप्रलय' इत्यस्य कल्पावसान इति, 'धरणीधारणाये'त्यस्य भूभारेत्यादि, 'शेष' इत्यस्य नागराज इति च विवरणम् । दिग्दन्तीत्यादि भावार्थकथनम् । अत्रोपमा व्यङ्ग्या बोध्या । मधुमासलक्ष्म्या नायिकात्वप्रतीत्या तदनुगुणमर्थमाह—वक्त्रञ्चेति । सुरा मद्यम् । अर्थान्तरव्यञ्जक इति । अर्थान्तरं वृत्तान्तरुक्तम् । अत्रेत्यादि । इत्यभिप्रायेण न दत्तमिति सम्बन्धः । सत्यमिति । काव्य-

स्वतःसम्भविशरीरार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—

वाणिअअ हत्थिदन्ता कुत्तो अह्माण वाघकित्ती अ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सुह्मा ॥

अत्र लुलितालकमुखीत्येतत्पदं व्याधवध्वाः स्वतःसम्भावितशरीरार्थशक्त्या सुरतक्रीडासक्तिं सूचयंस्तदीयस्य भर्तुः सततसम्भोगक्षामतां प्रकाशयति ।

लोचनम्

इत्यत्र कविना यो विरागी वक्ता निबद्धस्तत्प्रौढोक्त्या जीवितशब्दोऽर्थशक्तिमूलतयेदं ध्वनयति—सर्वे एवामी कामा विभूतयश्च स्वजीवितमात्रोपयोगिनः, तदभावे हि सद्भिरपि तैरसद्रूपताप्यते, तदेव च जीवितं प्राणधारणरूपत्वात्प्राणवृत्तेश्च चाञ्चल्यादनास्थापदमिति विषयेषु वराकेषु किं दोषोद्घोषणदौर्जन्येन निजमेव जीवितमुपालभ्यम्, तदपि च निसर्गचञ्चलमिति न सापराधमित्येतावता गाढं वैराग्यमिति । वाक्यप्रकाशता यथा—'शिखरिणि' इत्यादौ ।

वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा ॥ इति छाया ।

सविभ्रमं चंक्रम्यते । अत्र लुलितेति स्वरूपमात्रेण विशेषणमवलिप्ततया च हस्तिदन्ताद्यपाहरणं सम्भाव्यमिति वाक्यार्थस्य तावत्येव न काचिदनुपपत्तिः ।

बालप्रिया

प्रकाशेऽप्युदाहृतोऽयं श्लोकः । **कामाः** काम्यमाना वनितादयः । **तदभावे** जीविताभावे । जीवितमनास्थापदमिति सम्बन्धः । **अत्र** हेतुः—**प्राणे**त्यादि । **इतीति** हेतौ । **निसर्गचञ्चलमितीति** । निसर्गचञ्चलत्वाद्धेतोरित्यर्थः । स्वभावस्यापरिहार्यत्वादिति भावः ।

**वाणिजकेति** । अस्माकं गृहे कुतस्सन्ति ? न सन्तीत्यर्थः । अत्र कार्यान्तरव्यग्रतां हेतुत्वेन दर्शयन्नाह—**यावदि**त्यादि । **यावत्** यतः । **लुलितेति** । लुलिताः इतस्ततो विकीर्णा अलका यत्र तथाविधं मुखं यस्यास्सा । **स्नुषा** पुत्रभार्या । **परिष्वक्कत** इति । अतस्तत्परिपालनव्यग्रा वयमिति भावः । **स्वत** इत्यादि । स्वतस्सम्भावितं लोकेऽप्यौचित्यात्सम्भाव्यमानं शरीरं यस्य तथाविधस्यार्थस्य शक्त्या सामर्थ्येनेत्यर्थः । लोचने 'परिष्वक्कत' इत्यस्य व्याख्यानम्—**सविभ्रमं चङ्क्रम्यत** इति । व्यङ्ग्यस्य वाच्यसिद्ध्यङ्गत्वशङ्कां परिहरति—**अत्रे**त्यादि । **लुलितेतीति** । इत्यादिकमित्यर्थः । **स्वरूपे**त्यादि । स्वरूपकथनमित्यर्थः । **अवलिप्ततयेति** । धनित्वाद्यभिमानेनेत्यर्थः । चकारस्सम्भवतो हेत्वन्तरस्य समुच्चायकः । **हस्ती-**

तस्यैव वाक्यप्रकाशता यथा—

सिहिपिञ्छकण्णऊरा बहुआ वाहस्स गव्विरी भमइ ।
मुत्ताफलरइअपसाहणाणँ मज्झे सवत्तीणम् ॥

अनेनापि वाक्येन व्याधवध्वा शिखिपिच्छकर्णपूराया नवपरिणीतायाः कस्याश्चित्सौभाग्यातिशयः प्रकाश्यते । तत्सम्भोगैकरसो मयूरमात्रमारणसमर्थः पतिर्जातं इत्यर्थप्रकाशनात् तदन्यासां चिरपरिणीतानां मुक्ताफलरचितप्रसाधनानां दौर्भाग्यातिशयः ख्याप्यते । तत्सम्भोगकाले स एव व्याधः करिवरवधव्यापारसमर्थ आसीदित्यर्थप्रकाशनात् ।

ननु ध्वनिः काव्यविशेष इत्युक्तं तत्कथं तस्य पदप्रकाशता । काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतुः शब्दसन्दर्भविशेषः । तद्भावश्च पदप्रकाशत्वे नोपपद्यते । पदानां स्मारकत्वेनावाचकत्वात् । उच्यते—स्या·

लोचनम्

**सिहिपिच्छेति** । पूर्वमेव योजिता गाथा । **नन्विति** । समुदाय एव ध्वनिरित्यत्र पक्षे चोद्यमेतत् । **तद्भावश्चेति** । काव्यविशेषत्वमित्यर्थः । अवाचकत्वादिति यदुक्तं सोऽयमप्रयोजको हेतुरिति छलेन तावद्दर्शयति—**स्यादेष दोष** इति । एवं छलेन परिहृत्य

बालप्रिया

त्यादि । हस्तिदन्तादेरपाहरणमनाहरणं दन्ताद्यनाहरणमिति च पाठः । स्नुषाभर्तुरिति शेषः । **समुदाय इति** । वाचकवाच्यव्यङ्ग्यादिसमुदाय इत्यर्थः । इत्यत्र पक्ष इति । 'अविवक्षितवाच्यस्ये'त्यादिकारिकायां समुदायस्यैव ध्वनिपदार्थत्वादत्र पक्ष एव चोद्यस्योपपत्तेश्चेति भावः । वृत्तौ 'नन्वि'त्यादि । 'इत्युक्तमि'ति । 'यत्रार्थश्शब्दो वे'त्यादिनेति भावः । 'तत्' तस्मात् । चोद्यमुपपादयति—'काव्यविशेषो ही'त्यादि । 'विशिष्टे'ति । वाच्यव्यङ्ग्यभेदेन द्विविधो यो विशिष्टार्थः तत्प्रतिपत्तिहेतुरित्यर्थः । 'शब्दे'त्यादि । सङ्घटितपदविशेष इत्यर्थः । विशिष्टार्थस्तत्प्रतिपादको वाक्यविशेषश्चेति यावत् । ततः किमत आह—'तद्भावश्चे'त्यादि । 'पदप्रकाशत्वे' पदप्रकाश्यत्वे सति । 'नोपपद्यते' न सङ्गच्छते । तद्भावः पदप्रकाशत्वेन सह विरुद्ध इत्यर्थः । कुत इत्यत्राह—'पदानामि'त्यादि । 'अवाचकत्वात्' अनुभावकत्वाभावात् । पदैस्ततत्तदर्थाः स्मार्यन्ते, स्मृतास्ते त्वाकाङ्क्षादिसहकृता वाक्यार्थमनुभावयन्तीति मते पदस्मारितत्वरूपं पदप्रकाशत्वं तत्तदर्थ एव वर्तते । तत्र च काव्यविशेषत्वरूपं ध्वनित्वन्नास्तीत्यतो ध्वनेः न पदप्रकाशत्वं, किन्तु वाक्यप्रकाशत्वमेव सम्भवतीति भावः । अनेन ग्रन्थेन पदस्य ध्वनिप्रकाशकमवाचकत्वादित्यर्थः फलित इत्यभिप्रेत्य 'स्यादेष दोष' इत्यादिसमाधानग्रन्थमवतारयति लोचने—**अवाचकत्वादि**त्यादि । **अप्रयो·**

देष दोषः यदि वाचकत्वं प्रयोजकं ध्वनिव्यवहारे स्यात् । न त्वेवम्; तस्य व्यञ्जकत्वेन व्यवस्थानात् । किं च काव्यानां शरीराणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्यापि चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारो न विरोधि ।

लोचनम्

वस्तुवृत्तेनापि परिहरति—**किं चेति** । यदि परो ब्रूयात्—न मया अवाचकत्वं ध्वन्यभावे हेतूकृतं किं तूक्तं काव्यं ध्वनिः । काव्यं चानाकाङ्क्षप्रतिपत्तिकारि वाक्यं न पदमिति तत्राह—सत्यमेवं, तथापि पदं न ध्वनिरित्यस्माभिरुक्तम् । अपि तु समुदाय एव; तथा च पदप्रकाशो ध्वनिरिति प्रकाशपदेनोक्तम् । ननु पदस्य तत्र तथाविधं सामर्थ्यमिति कुतोऽखण्ड एव प्रतीतिक्रम इत्याशङ्क्याह—**काव्यानामिति** । उक्तं हि प्राग्विवेककाले विभागोपदेश इति ।

ननु भागेषु पदरूपेषु कथं सा चारुत्वप्रतीतिरारोपयितुं शक्या? तानि हि स्मारकाण्येव । ततः किम्? मनोहारिव्यङ्ग्यार्थस्मारकत्वाद्धि चारुत्वप्रतीतिनिबन्धनत्वं केन

बालप्रिया

जक इति । असाधक इत्यर्थः । छलेन व्याजेन वक्ष्यमाणाभिप्रायाप्रकटनेनेति यावत् । **तावत्** आदौ । **वस्तुवृत्तेनापीति** । पारमार्थिकाभिप्रेतार्थप्रकटनेनापीत्यर्थः । ननु वस्तुवृत्तेन परिहारः किमर्थं इत्यतः काव्यानामित्यादिग्रन्थमवतारयिष्यन् भूमिकामाह—**यदि पर** इत्यादि । **ध्वन्यभावे** ध्वनिप्रकाशकत्वाभावे । पदानामिति शेषः । **हेतूकृतं** हेतुत्वेनोक्तम् । **किन्त्वित्यादि** । काव्यविशेषो ध्वनिः काव्यञ्च तथाविधं वाक्यमिति वाक्यमेव ध्वनिः, पदन्तु न ध्वनिरित्यर्थः । तथाच पदे ध्वन्यभावे अवाक्यत्वं हेतुरिति भावः । इति ब्रूयादिति सम्बन्धः । **आहेति** । सिद्धान्तीति शेषः । **तथापीत्यन्तमभ्युपगमे** । न उक्तमिति सम्बन्धः । **समुदाय एवेति** । ध्वनिरित्युक्तमित्यनुषङ्गः । अत्रोपष्टम्भकमाह—**तथाचेत्यादि** । **तत्रेति** । वाक्य इत्यर्थः । **तथाविधं** ध्वनिप्रकाशनानुकूलम् । **इति कुत** इत्येतत्कथं घटते । अत्र हेतुः—**अखण्ड** इत्यादि । भागेषु कल्प्यत इत्यत्रोपष्टम्भकमाह—**उक्तं हीत्यादि** । वृत्तौ 'काव्यानामि'त्यस्य 'चारुत्वे'त्यनेन सम्बन्धः । 'संस्थाने'ति । संस्थानविशेषैः शब्दसन्दर्भविशेषैः मुखाद्यवयवसंयोगविशेषैश्च अवच्छिन्नो विशिष्टो यस्समुदायस्तत्साध्यापीत्यर्थः । तथाच प्रतीयमानं चारुत्वं समुदायनिष्ठमिति भावः । 'भागेषु' पदेषु मुखादिषु च । 'कल्प्यत' इति । प्राधान्यादिति भावः । इतीति हेतौ । 'व्यञ्जकत्वमुखेन' व्यञ्जकत्वप्राधान्येन । 'ध्वनिव्यवहारः' पदप्रकाशो ध्वनिरिति व्यवहारः ।

'अनिष्टस्ये'त्यादिग्रन्थमवतारयति लोचने—**नन्वित्यादि** । **स्मारकाण्येवेत्यन्तः**

'अनिष्टस्य श्रुतिर्यद्वदापादयति दुष्टताम् ।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणम् ॥
पदानां स्मारकत्वेऽपि पदमात्रावभासिनः ।
तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता ॥
विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥'

इति परिकरश्लोकाः ।

**यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।**
**वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते ॥ २ ॥**

लोचनम्

वार्यते । यथा श्रुतिदुष्टानां पेलवादिपदानामसभ्यपेलाद्यर्थं प्रति न वाचकत्वम् । अपि तु स्मारकत्वम् । तद्वशाच्च चारुत्वरूपं काव्यं श्रुतिदुष्टम् । तच्च श्रुतिदुष्टत्वमन्वयव्यतिरेकाभ्यां भागेषु व्यवस्थाप्यते तथा प्रकृतेऽपीति तदाह—**अनिष्टस्येति** । अनिष्टार्थस्मारकस्येत्यर्थः । दुष्टतामित्यचारुत्वम् । गुणमिति चारुत्वम् । एवं दृष्टान्तमभिधाय पादत्रयेण तुर्येण दार्ष्टान्तिकार्थ उक्तः । अधुनोपसंहरति—**पदानामिति** । यत एवमिष्टस्मृतिश्चारुत्वमावहति तेन हेतुना सर्वेषु प्रकारेषु निरूपितस्य पदमात्रावभासिनोऽपि पदप्रकाशस्यापि ध्वने रम्यतास्ति स्मारकत्वेऽपि पदानामिति समन्वयः । अपिशब्दः काकाक्षिन्यायेनोभयत्रापि सम्बध्यते । अधुना चारुत्वप्रतीतौ पदस्यान्वयव्यतिरेकौ दर्शयति—**विच्छित्तीति** ॥ १ ॥

एवं कारिकां व्याख्याय तदसङ्गृहीतमलक्ष्यक्रमव्यङ्ग्यं प्रपञ्चयितुमाह—**यस्त्वि**ति । तुशब्दः पूर्वभेदेभ्योऽस्य विशेषद्योतकः । वर्णसमुदायश्च पदम् । तत्समुदायो वाक्यम् । सङ्घटना पदगता वाक्यगता च । सङ्घटितवाक्यसमुदायः प्रबन्धः

बालप्रिया

शङ्काग्रन्थः । ततः किमित्यादिर्वक्ष्यमाणार्थकः परिहारग्रन्थः । **पेलवादिपदानामिति** । 'अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठ' इत्यादौ पेलवादिशब्दानामित्यर्थः । **असभ्येति** । असभ्यो यः पेलाद्यर्थः पेलादिशब्दार्थस्तं प्रतीत्यर्थः । पेलशब्दो हि लाटभाषायां वृषणवाचकः । **न वाचकत्वमिति** । तदर्थस्य तद्वाक्यार्थघटकत्वाभावादिति भावः । पादत्रयेणाभिधायेति सम्बन्धः । 'तेने'ति पदस्य विवरणम्—**यत** इत्यादि । निरूपितस्येति पूरितम् । **अपिशब्दः** स्मारकत्वेऽपीत्यपिशब्दः ॥ २ ॥

तत्र वर्णानामनर्थकत्वाद्द्योतकत्वमसम्भवीत्याशङ्क्येदमुच्यते—

शषौ सरेफसंयोगो ढकारश्चापि भूयसा।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युतः ॥ ३ ॥
त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा।
तदा तं दीपयन्त्येव तेन वर्णा रसच्युतः ॥ ४ ॥

श्लोकद्वयेनान्वयव्यतिरेकाभ्यां वर्णानां द्योतकत्वं दर्शितं भवति।

लोचनम्

इत्यभिप्रायेण वर्णादीनां यथाक्रममुपादानम्। आदिशब्देन पदैकदेशपदद्वितयादीनां ग्रहणम्। सप्तम्या निमित्तत्वमुक्तम्। दीप्यतेऽवभासते सकलकाव्यावभासकतयेति पूर्ववत्काव्यविशेषत्वं समर्थितम् ॥ २ ॥

**भूयसे**ति प्रत्येकमभिसम्बध्यते। तेन शकारो भूयसेत्यादि व्याख्यातव्यम्। रेफप्रधानस्संयोगः र्कर्हर्द्र इत्यादिः। **विरोधिन** इति। परुषा वृत्तिविरोधिनी शृङ्गारस्य। यतस्ते वर्णा भूयसा प्रयुज्यमाना न रसांश्च्योतन्ति स्रवन्ति। यदि वा तेन शृङ्गारविरोधित्वेन हेतुना वर्णाः शषादयो रसाच्छृङ्गाराच्च्यवन्ते तं न व्यञ्जयन्तीति व्यतिरेक उक्तः। अन्वयमाह—**त एव त्वि**ति। शादयः। **त**मिति बीभत्सादिकं रसम्। **दीपयन्ति** द्योतयन्ति। कारिकाद्वयं तात्पर्येण व्याचष्टे—**श्लोकद्वयेने**ति। यथासंख्यप्रसङ्गपरिहा-

बालप्रिया

**आदिशब्देने**ति। 'पदादिष्वि'त्यादिपदेनेत्यर्थः। **सप्तम्ये**ति। पदादिष्वित्यादिस्थया सप्तम्येत्यर्थः। **निमित्तत्वमुक्त**मिति। न त्वधिकरणत्वमिति भावः। दीप्यत इत्यस्य विवरणम्—**सकलकाव्यावभासकतयावभासत** इति। अलक्ष्यक्रमस्तु यो ध्वनिः समुदायात्मकः काव्यविशेषः। सः वर्णादिनिमित्तको दीप्यत इत्यर्थादयमर्थस्सिध्यतीति भावः। **काव्यविशेषत्व**मिति। ध्वनेरिति शेषः ॥ २ ॥

**प्रत्येक**मिति। शषावित्यादिना प्रत्येकमित्यर्थः। **भूयसे**ति। प्रयुज्यमानो विरोधीति शेषः। सारार्थमाह—**परुषे**ति। तल्लक्षणमुक्तं भट्टोद्भटेन—"शषाभ्यां रेफसंयोगैः टवर्गेण च योजिता। परुषा नाम वृत्तिस्स्यादि"ति। रसश्च्युत इति पाठे ते न इति पदद्वयमित्याशयेन व्याचष्टे—**ते वर्णा** इत्यादि। **ते वर्णाः** शषादयः। **रसं** शृङ्गारम्। **स्रवन्ति** स्रावयन्ति। रसच्युत इति पाठे तु तेनेत्येकं पदमित्याह—**यदि वे**त्यादि। तेनेत्यस्य व्याख्यानम्—**शृङ्गारे**त्यादि, **रसाच्च्यवन्त** इत्यस्य **तं न व्यञ्जयन्तीति** च। **इती**त्यादि। शषावित्यादिश्लोकेन शकारादिवर्णसत्वे शृङ्गारव्यक्त्यभावरूपो व्यतिरेकः प्रदर्शित इत्यर्थः। **अन्वय**मिति। शषादिसत्वे बीभत्सादिव्यक्तिरूपमन्वयमित्यर्थः। 'त एवे'त्यादिकारिकायाश्चतुर्थपादे **रसश्च्युत** इति

पदे चालक्ष्यक्रमव्यङ्ग्यस्य द्योतनं यथा—

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि[1] ॥

लोचनम्

रार्थं श्लोकाभ्यामिति न कृतम् । पूर्वश्लोकेन हि व्यतिरेक उक्तो द्वितीयेनान्वयः । अस्मिन्विषये शृङ्गारलक्षणे शषादिप्रयोगः सुकवित्वमभिवाञ्छता न कर्तव्य इत्येवंफलत्वादुपदेशस्य कारिकाकारेण पूर्वं व्यतिरेक उक्तः । न च सर्वथा न कर्तव्योऽपि तु बीभत्सादौ कर्तव्य एवेति पश्चादन्वयः । वृत्तिकारेण त्वन्वयपूर्वको व्यतिरेक इति शैलीमनुसर्तुमन्वयः पूर्वमुपात्तः ।

एतदुक्तं भवति—यद्यपि विभावानुभावव्यभिचारिप्रतीतिसम्पदेव रसास्वादे निबन्धनम् । तथापि विशिष्टश्रुतिकशब्दसमर्प्यमाणास्ते विभावादयस्तथा भवन्तीति स्वसंवित्सिद्धमदः । तेन वर्णानामपि श्रुतिसमयोपलक्ष्यमाणार्थानपेक्ष्यपि श्रोत्रैकग्राह्यो मृदुप-

बालप्रिया

पाठे तेनेत्येकं पदं, रसच्युत इति पाठे तु ते नेति पदद्वयमिति बोध्यम् । **यथासंख्येत्यादि** । श्लोकाभ्यामिति निर्देशे द्वाभ्यां श्लोकाभ्यां प्रतिपादितौ यावन्वयव्यतिरेकौ ताभ्यामित्यर्थस्य प्रतीत्या यथासङ्ख्यमन्वयस्य प्रसक्तिर्भवति, श्लोकद्वयेनेति निर्देशे तु श्लोकात्मकद्वयवयवघटितसमुदायेन प्रतिपादितौ यावन्वयव्यतिरेकौ ताभ्यामित्यर्थस्य प्रतीत्या न तत्प्रसक्तिरिति भावः । नन्वत्र यथासङ्ख्यमस्त्वित्यत्राह—**पूर्वेत्यादि** । कारिकायामादौ व्यतिरेकप्रदर्शनस्य बीजमाह—**अस्मिन्नित्यादि** । तर्हि वृत्तावन्यथा कथने किं बीजमित्यत्राह—**वृत्तीत्यादि** । विभावादीनामेव रसव्यञ्जकत्वाद्वर्णादीनान्तात् कथमित्यशङ्कां प्रदर्श्य परिहरति—**एतदित्यादि** । **विशिष्टेति** । **विशिष्टा** उपनागरिकादिवृत्तिविशिष्टा, तद्विषयिकेति यावत् । **श्रुतिः** श्रवणं येषान्तैः शब्दैः **समर्प्यमाणा** इत्यर्थः । **तथेति** । रसास्वादनिबन्धनानीत्यर्थः । **वर्णानामपीति** । 'स्वभाव' इत्यनेनास्य सम्बन्धः । **श्रुतीति** ।

१. 'झगिति कनकचित्रे तत्र दृष्टे कुरङ्गे
रभसविकसितास्ते दृष्टिपाताः प्रियायाः ।
पवनविलुलितानामुत्पलानां पलाश-
प्रकरमिव किरन्तः स्मर्यमाणा दहन्ति ॥
इदं पद्यं उत्कम्पिनीत्यादिपद्योत्तरं क्वचिद्दृश्यते ।

अत्र हि ते इत्येतत्पदं रसमयत्वेन स्फुटमेवावभासते सहृदयानाम् ।
पदावयवेन द्योतनं यथा—

व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य ।

लोचनम्

रुषात्मा स्वभावो रसास्वादे सहकार्येव । अत एव च सहकारितामेवाभिधातुं निमित्तसप्तमी कृता वर्णपदादिष्विति । न तु वर्णैरेव रसाभिव्यक्तिः, विभावादिसंयोगाद्धि रसनिष्पत्तिरित्युक्तं बहुशः । श्रोत्रैकग्राह्योऽपि च स्वभावो रसनिष्यन्दे व्याप्रियत एव, अपदगीतध्वनिवत् पुष्करवाद्यनियमितविशिष्टजातिकरणप्रायनुकरणशब्दवच्च । पदे चेति । पदे च सतीत्यर्थः । तेन रसप्रतीतिर्विभावादेरेव । ते विभवादयो यदा विशिष्टेन केनापि पदेनार्प्यमाणा रसचमत्कारविधायिनो भवन्ति तदा पदस्यैवासौ महिमा समर्प्यत इति भावः ।

अत्र हीति । वासवदत्तादाहाकर्णनप्रबुद्धशोकनिर्भरस्य वत्सराजस्येदं परिदेवितवचनम् । तत्र च शोको नामेष्टजनविनाशप्रभव इति तस्य जनस्य ये भ्रूक्षेपकटाक्षप्रभृतयः पूर्वं रतिविभावतामवलम्बन्ते स्म त एवात्यन्तविनष्टाः सन्त इदानीं स्मृतिगोचरतया निरपेक्षभावत्वप्राणं करुणमुद्दीपयन्तीति स्थितम् । ते लोचने इति तच्छब्दस्तल्लोचनगतस्वसंवेद्याव्यपदेश्यानन्तगुणगणस्मरणाकारद्योतको रसस्यासाधारणनिमित्ततां प्राप्तः । तेन यत्केनचिच्चोदितं परिहृतं च तन्मिथ्यैव । तथाहि चोद्यम्—प्रक्रान्तपरामर्शकस्य तच्छब्दस्य कथमियति सामर्थ्यमिति । उत्तरं च—रसाविष्टोऽत्र परामृष्टेति ।

बालप्रिया

श्रुतिसमये उपलक्ष्यमाणो ज्ञायमानो योऽर्थस्तदनपेक्ष्यपीत्यर्थः । मृदुपुरुषात्मेति । मृदुत्वपरुषत्वरूप इत्यर्थः । रसनिष्यन्दे व्याप्रियत इति । रसास्वादे सहकारीत्यर्थः । दृष्टान्तमाह—अपदेत्यादि । पदरहितगानशब्दवदित्यर्थः । प्रायनुहारेति च पाठः । पदे च सतीति । पदविशेषसत्त्वनिमि त्तचेत्यर्थः । अस्य भावमाह—तेनेत्यादि । ते रसास्वादहेतवः । तस्य जनस्येति । वासवदत्तात्मकेष्टजनस्येत्यर्थः । इति स्थितमिति । इति वस्तुस्थितिरित्यर्थः । तच्छब्द इति अनुभूतार्थक इति भावः । स्पष्टमिदं काव्यप्रकाशादौ । तदित्यादि । वक्तृनायकगतं तथाविधगुणगणस्मरणं स्मरणविषयगुणगणं वा द्योतयतीत्यर्थः । प्राप्त इति । तत्स्मरणस्य शोकोद्दीपकत्वादिति भावः । तेनेति । यतोऽत्र तच्छब्दोऽनुभूतार्थकः स्मरणाकारद्योतकश्च तत इत्यथः । अनुत्थानोपहितमित्यनेनास्य सम्बन्धः । मिथ्यैव परिहृतमित्यन्वयः । इयतीति उक्तार्थबोधन इत्यर्थः । रसाविष्ट इत्यादि । तल्लोचनगततथाविधगुणगणं बुद्धौ कृत्वा रसाविष्टेन वक्त्रा ते इत्युक्तम् , स एवार्थः प्रतिपत्त्रापि परामृश्यत इति भावः । परामृष्टा-

लोचनम्

तदुभयमनुत्थानोपहतम्। यत्र ह्यनूद्दिश्यमानधर्मान्तरसाहित्ययोग्यधर्मयोगित्वं वस्तुनो यच्छब्देनाभिधाय तद्बुद्धिस्थधर्मान्तरसाहित्यं तच्छब्देन निर्वाच्यते। यत्रोच्यते-'यत्तदोर्नित्यसम्बन्धत्वं' इति, तत्र पूर्वप्रक्रान्तपरामर्शकत्वं तच्छब्दस्य। यत्र पुनर्निमित्तोपनतस्मरणविशेषाकारसूचकत्वं तच्छब्दस्य 'स घट' इत्यादौ यथा, तत्र का परामर्शकत्वकथेत्यास्तामलीकपरामर्शकैः पण्डितम्मन्यैः सह विवादेन।

उत्कम्पिनीत्यादिना तदीयभयानुभावोत्प्रेक्षणम्। मयाऽनिर्वाहितप्रतीकारमिति शोकावेशस्य विभावः। ते इति सातिशयविभ्रमैकायतनरूपे अपि लोचने विधुरे कान्दिशीकतया निर्लक्षे क्षिपन्ती कत्राता कासावार्यपुत्र इति तयोर्लोचनयोस्तादृशी चावस्थेति सुतरां शोकोद्दीपनम्। क्रूरेणेति। तस्यायं स्वभाव एव। किं कुरुतां तथापि च धूमेनान्धीकृतो द्रष्टुमसमर्थ इति न तु सविवेकस्येदृशानुचितकारित्वं सम्भाव्यते, इति स्मर्यमाणं तदीयं सौन्दर्यमिदानीं सातिशयशोकावेशविभावतां प्राप्तमिति। ते शब्दे सति सर्वोऽयमर्थो निर्व्यूढः। एवं तत्र तत्र व्याख्यातव्यम्।

बालप्रिया

परामर्शकतौ। **यत्र हीत्यादि**। यत्र यो विद्वान् स पूज्य इत्यादौ। **अनूद्दिश्यमानेति** अनूद्देक्ष्यमाणेति च पाठः। तथाविधं यद्धर्मान्तरं पूज्यत्वादिकं तत्साहित्यस्य योग्यः प्रयोजको यो धर्मो विद्वत्त्वादिः तद्योगित्वं तत्सम्बन्ध इत्यर्थः। **यच्छब्देन** यच्छब्दघटितवाक्येन। **तदिति**। तद्बुद्धिस्थञ्च यद्धर्मान्तरं विद्वत्त्वादिकं तस्य साहित्यं सम्बन्ध इत्यर्थः। **निर्वाच्यते** बोध्यते। तत्र पूर्वप्रक्रान्तपरामर्शकत्वमिति सम्बन्धः। मध्ये संवादकथनम्—**यत्रोच्यत** इत्यादि। **तत्रेति**। यो विद्वान् स पूज्य इत्यादावित्यर्थः। **पूर्वेति**। पूर्वोक्तविद्वत्त्वादिधर्मविशिष्टोपस्थापकत्वरूपं पूर्वप्रक्रान्तपरामर्शकत्वमित्यर्थः। इदमुपलक्षणं 'तदन्वये शुद्धिमती' त्यादावपि तद्बोध्यम्। **यत्रेति**। 'ते लोचने' इत्यादावित्यर्थः। स इत्यादिदृष्टान्तकथनम्। **का परामर्शकत्वकथेति**। पूर्वप्रक्रान्तपरामर्शकत्वप्रसङ्ग एव नास्तीत्यर्थः।

**उत्कम्पिनीत्यादिनेति**। तदुक्त्या गम्यमिति भावः। **तदीयेति**। तदीयानां वासवदत्तासम्बन्धिनां भयानुभावानामुत्कम्पादीनामुत्प्रेक्षणमनुमानमित्यर्थः। 'विभाव' इत्यनेनास्य सम्बन्धः। शोकावेशप्रकारकथनम्-**मयेत्यादि**। अनिर्वाहितः अकृतः प्रतीकारो यस्य तत्। भयमिति शेषः। **इति** इतिमत्या। **विभावः** उद्दीपनम्। तच्छब्दद्योत्यार्थकथनं **सातिशयेत्यादि**। **कान्दिशीकतया** भयातिशयेन। इति इति बुद्ध्या। क्षिपन्तीति सम्बन्धः। **क्रूरेणेति** तीक्ष्णेनेति च पाठः। **तस्यायं स्वभाव इति**। दाहकत्वादिः क्रूरस्वभाव इत्यर्थः। क्रूरत्वेऽपि न तन्मात्रेण दग्धा, किन्तु हेत्वन्तरेणापीत्याह—**तथेत्यादि**। धूमान्धितेनेति दहनस्य विशेषणं, तच्च हेतुगर्भमिति भावः। उपसंहरति—**इतीत्यादि**। **ते शब्दे सतीत्यादि**। ते इति

तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥

इत्यत्र त्रिभागशब्दः ।

वाक्यरूपश्चालक्ष्यक्रमव्यङ्ग्यो ध्वनिः शुद्धोऽलङ्कारसङ्कीर्णश्चेति द्विधा मतः । तत्र शुद्धस्योदाहरणं यथा रामाभ्युदये—'कृतककुपितैः' इत्यादि

लोचनम्

**त्रिभागशब्द** इति । गुरुजनमवधीर्यापि सा मां यथा तथापि साभिलाषमन्युदैन्यगर्वमन्थरं विलोकितवतीत्येवं स्मरणेन परस्परहेतुकत्वप्राणप्रवासविप्रलम्भोद्दीपनं त्रिभागशब्दसन्निधौ स्फुटं भातीति । **वाक्यरूपश्चेति** । प्रथमानिर्देशेनाव्यतिरेकनिर्देशस्यायमभिप्रायः । वर्णपदतद्भागादिषु सत्स्वेवालक्ष्यक्रमो व्यङ्ग्यो निर्भासमानोऽपि समस्तकाव्यव्यापक एव निर्भासते, विभावादिसंयोगप्राणत्वात् । तेन वर्णादीनां निमित्तत्वमात्रमेव, वाक्यं तु ध्वनेरलक्ष्यक्रमस्य न निमित्ततामात्रेण वर्णादिवदुपकारि, किं तु समग्रविभावादिप्रतिपत्तिव्याप्ततत्वाद्रसादिमयमेव तन्निर्भासत इति 'वाक्य' इत्येतत्का-

बालप्रिया

पदस्यैवात्र प्राधान्यमिति भावः । वृत्तौ 'झटिति कनके'त्याद्युदाहरणान्तरं प्रक्षिप्तमत एव न विवृतं लोचने ।

प्रवासोद्यतमात्मानं गुरुजनसन्निधाने दृष्टवत्याः प्रियाया दर्शनप्रकारं कश्चित् स्वयं परामृशति ; यद्वा–स्निग्धं प्रति कथयति–**व्रीडायोगादि**ति । गुरूणां पित्रादीनाम् । कुचकलशयोः बद्धः कृत उत्कम्पः येन तम् । मन्युं प्रवासनिरोधेऽपि तदुद्यमाज्जातं कोपम् । त्वं तिष्ठेति मां प्रति न उक्तं किमिव, उक्तमेव । यद्यतः तया बाष्पं समुत्सृज्य चकितहरिणीव चकितहरिणीनेत्रमिव हारि, यद्वा–चकितहरिण्या हारि यन्नेत्रं तस्य त्रिभागः तृतीयो भागः । चकितहरिणीहारीति भिन्नं पदमासञ्जनक्रियाविशेषणमिति वा । मयि आसक्त आसञ्जित इत्यन्वयः । त्रिभागशब्दस्य व्यञ्जकत्वं विवृणोति–**गुरुजनमि**त्यादि । **साभिलाषेति** । अभिलाषादयो भावा नेत्रे प्रकाशिता इति भावः । **स्मरणेनेति** । स्मरणमात्रगम्यम् । **परस्परहेतुकत्वेति** । परस्परास्थाबन्धहेतुकत्वेत्यर्थः । **प्रथमेति** । वाक्यरूपो ध्वनिरिति प्रथमान्तनिर्देशेनेत्यर्थः । **अव्यतिरेकनिर्देशस्य** अभेदबोधनस्य । **अयं** वाक्यन्त्वित्यादिना वक्ष्यमाणः । सत्स्वेव निर्भासमानोऽपीति सम्बन्धः । यद्यपि वर्णपदादिप्रयुक्तमेव निर्भासनन्तथापीत्यर्थः । **तेनेति** । विभावादिसंयोगप्राणत्वेन निर्भासनादित्यर्थः । वर्णादिवदिति वैधर्म्येण दृष्टान्तः । **समग्रेति** । समग्रविभावादिप्रतिपादकत्वादित्यर्थः । **तत्** वाक्यम् । **इतीति** हेतौ । **वाक्य** इत्यादि । कारिकास्थं वाक्ये इत्येतदित्यर्थः ।

श्लोकः । एतद्धि वाक्यं परस्परानुरागं परिपोषप्राप्तं प्रदर्शयत्सर्वत एव परं रसतत्त्वं प्रकाशयति ।

अलङ्कारान्तरसङ्कीर्णो यथा—'स्मरनवनदीपूरेणोढाः' इत्यादिश्लो-

लोचनम्

रिकायां न निमित्तसप्तमीमात्रम्, अपि त्वनन्यत्र भावविषयार्थमपीति। शुद्ध इत्यर्थालङ्कारेण केनाप्यसंमिश्रः ।

> कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितै-
> र्वनमपि गता यस्य प्रीत्या धृतापि तथाम्बया ।
> नवजलधरश्यामाः पश्यन्दिशो भवतीं विना
> कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥

अत्र तथा तैस्तैः प्रकारैर्मात्रा धृतापीत्यनुरागपरवशत्वेन गुरुवचनोल्लङ्घनमपि त्वया कृतमिति । प्रिये प्रिय इति परस्परजीवितसर्वस्वाभिमानात्मको रतिस्थायिभाव उक्तः। नवजलधरेत्यसोढपूर्वप्रावृषेण्यजलदालोकनं विप्रलम्भोद्दीपनविभावत्वेनोक्तम् । जीवत्येवेति सापेक्षभावता एवकारेण करुणावकाशनिराकरणायोक्ता । सर्वत एवेति । नात्रान्यतमस्य पदस्याधिकं किञ्चिद्रसव्यक्तिहेतुत्वमित्यर्थः । रसतत्त्वमिति । विप्रलम्भशृङ्गारात्मतत्त्वम् ।

> स्मरनवनदीपूरेणोढाः पुनर्गुरुसेतुभि-
> र्यदपि विधृताः तिष्ठन्त्याराद‌पूर्णमनोरथाः ।
> तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
> नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥

बालप्रिया

मेत्यादि । तत्सप्तम्यर्थो निमित्तमात्रं नेति यावत् । अनन्यत्रेति । अनन्यत्रभावः तदन्यत्र सम्भवाभावः, तद्रूपो यो विषयस्स अर्थो यस्य तत् । वाक्य इति सप्तम्यर्थो विषयश्चेत्यर्थः ।

कृतकेति । तृतीयान्तानां धृतापीत्यनेनान्वयः । यस्य प्रीत्या यस्मिन् मयि प्रेम्णा । धृता उपरुद्धा । व्याचष्टे—अत्रेत्यादि । कृतमितीति । व्यज्यत इति शेषः । प्रिये प्रिय इतीति । इत्याभ्यामित्यर्थः । उक्तः व्यञ्जितः । नवजलधरेतीति । इत्यनेनेत्यर्थः । जीवत्येवेत्येवकारेण सापेक्षभावतोक्तेत्यन्वयः ।

स्मरेति । विधृतास्तिष्ठन्त्याराद‌पूर्णेति च पाठः । प्रावृषेण्यः प्रावृषिभवः । प्रवाहत्वारोपे गम्यं साधर्म्यमाह—सरभसेत्यादि । ऊढा इत्यनेनात्र विवक्षितमाह—परस्परेत्यादि । पुनरित्यस्य विवरणमनन्तरमिति, गुरुपदेनार्थान्तरञ्च

कः। अत्र हि रूपकेण यथोक्तव्यञ्जकलक्षणानुगतेन प्रसाधितो रसः सुतरामभिव्यज्यते।

अलक्ष्यक्रमव्यङ्ग्यः सङ्घटनायां भासते ध्वनिरित्युक्तं तत्र सङ्घटना-स्वरूपमेव तावन्निरूप्यते—

असमासा समासेन मध्यमेन च भूषिता।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता॥ ५॥

कैश्चित्।

लोचनम्

**रूपकेणेति**। स्मर एव नवनदीपूरः प्रावृषेण्यप्रवाहः सरभसमेव प्रवृद्धत्वात् तेनोढाः परस्परसांमुख्यमबुद्धिपूर्वमेव नीताः। अनन्तरं गुरवः श्वश्रूप्रभृतय एव सेतवः, इच्छाप्रसररोधकत्वात्। अथ च गुरवोऽलङ्घ्याः सेतवस्तैः विधृताः प्रतिहतेच्छाः। अत एवापूर्णमनोरथास्तिष्ठन्ति। तथापि परस्परोन्मुखतालक्षणेनान्योन्यतादात्म्येन स्वदेहे सकलवृत्तिनिरोधाल्लिखितप्रायैरङ्गैर्नयनान्येव नलिनीनालानि तैरानीतं रसं परस्पराभिलाषलक्षणमास्वादयन्ति परस्पराभिलाषात्मकदृष्टिच्छटामिश्रीकारयुक्त्यापि कालमतिवाहयन्तीति। ननु नात्र रूपकं निर्व्यूढं हंसचक्रवाकादिरूपेण नायकयुगलस्यारूपितत्वात्। ते हि हंसाद्या एकनलिनीनालानीतसलिलपानक्रीडादिसूचिता इत्याशङ्क्याह—**यथोक्तव्यञ्जकेति**। उक्तं हि पूर्वम्—'विवक्षातत्परत्वेन' इत्यादौ 'नातिनिर्वहणैषिता' इति। **प्रसाधित** इति। विभावादिभूषणद्वारेण रसोऽपि प्रसाधित इत्यर्थः॥ ३, ४॥

**सङ्घटनायामिति** भावे प्रत्ययः, वर्णादिवच्च निमित्तमात्रे सप्तमी। **उक्तमिति**। कारिकायाम्। **निरूप्यत** इति। गुणेभ्यो विविक्ततया विचार्यत इति यावत्। **रसा-**

बालप्रिया

विवक्षितमित्याह—**अथ चेत्यादि**। तदपीत्यस्य विवरणम्—**तथापीति**। परस्परमुन्मुखा इत्येतल्लिखितप्रख्यैरित्यस्योपपादकमित्याह—**परस्परेत्यादि**। गम्यं साधर्म्यं दर्शयति—**स्वदेह** इत्यादि। **वृत्तीति**। चेष्टेत्यर्थः। **अङ्गैरित्युपलक्षणे** तृतीया। **रसमित्यादि**। परस्पराभिलाषरूपं जलमित्यर्थः। तात्पर्यमाह—**परस्परेति**। परस्पराभिलाषात्मकानां परस्पराभिलाषं प्रकाशयन्तीनां दृष्टिच्छटानां यो मिश्रीकारस्तस्य युक्त्या योजनयेत्यर्थः। प्रिया इत्यत्र हंसचक्रवाकेत्यत्राप्येकशेषो बोध्यः। **अरूपितत्वादिति**। अरूपणादित्यर्थः। तथा रूपणे युक्तिमाह—**ते हीत्यादि**। नन्वत्र कथं रूपकेण रसस्यालङ्कृतत्वमित्यत आह—**विभावादीत्यादि**॥ ३,४॥

**भावे प्रत्यय** इति। भावरूपार्थे युच् प्रत्यय इत्यर्थः। **सप्तमीति**। सङ्घट-

तां केवलमनूद्येदमुच्यते—

**गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन्व्यनक्ति सा ।**

**रसान्—**

सा सङ्घटना रसादीन् व्यनक्ति गुणानाश्रित्य तिष्ठन्तीति । अत्र च विकल्प्यं गुणानां सङ्घटनायाश्चैक्यं व्यतिरेको वा । व्यतिरेकेऽपि द्वयी गतिः । गुणाश्रया सङ्घटना, सङ्घटनाश्रया वा गुणा इति । तत्रैक्यपक्षे सङ्घटनाश्रयगुणपक्षे च गुणानात्मभूतानाधेयभूतान्वाश्रित्य तिष्ठन्ती सङ्घ-

लोचनम्

निति कारिकायां द्वितीयार्धस्यार्थं पदम् । 'रसांस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः' इति कारिकार्धम् । बहुवचनेनाद्यर्थः सङ्गृहीत इति दर्शयति—**रसादीनिति** । **अत्र चेति** । अस्मिन्नेव कारिकार्धे । विकल्पेनेदमर्थजातं कल्पयितुं व्याख्यातुं शक्यम् किं तदित्याह—**गुणानामिति** । त्रयः पक्षा ये सम्भाव्यन्ते ते व्याख्यातुं शक्याः । कथमित्याह—**तत्रैक्यपक्ष** इति । **आत्मभूतानिति** । स्वभावस्य कल्पनया प्रतिपादनार्थं प्रदर्शितभेदस्य स्वाश्रयवाचोयुक्तिर्दृश्यते शिंशपाश्रयं वृक्षत्वमिति । **आधेयभूतानिति** । सङ्घटनाया धर्मा गुणा इति भट्टोद्भटादयः, धर्माश्च धर्म्याश्रिता इति

बालप्रिया

नायामित्यत्र सप्तमीत्यर्थः । कुत्रोक्तमित्यत आह—**कारिकायामिति** । सङ्घटनोदितेत्यत्र कर्तृपदं पूरयति वृत्तौ—'कैश्चिदि'ति । तामित्याद्यवतारिका । 'रसानि'त्यन्तः कारिकापाठ इति दर्शयति लोचने—**रसानित्यादि** । रसादीनित्यर्थः । कथं लब्ध इत्यत आह—**बह्वित्यादि** । **बहुवचनेन** रसानिति बहुवचनेन । अत्रेत्यस्य व्याख्यानम्—**अस्मिन्नित्यादि** । 'विकल्प्यमि'त्येतत्प्रकृतानुरोधेन व्याचष्टे—**विकल्पेनेत्यादि** । **इदं** वक्ष्यमाणम् । **शक्यमिति** । विकल्प्यमित्यस्य विकल्पेन कल्प्यमिति विग्रह इति भावः । भावमाह—**त्रय** इत्यादि । वृत्तौ—'व्यतिरेको वे'ति । भेदो वेत्यर्थः । 'द्वयी गति'रिति । द्वैविध्यमित्यर्थः । कथं द्वैविध्यमित्यत्राह—'गुणाश्रये' त्यादि । सप्तम्यन्तपक्षपदयोरर्थ इत्यनेन सम्बन्धः । 'आत्मभूतानि'ति । स्वाभिन्नानित्यर्थः । 'आधेयभूतानि'ति । स्वनिष्ठानित्यर्थः । 'इत्ययमर्थ' इति । कारिकाया इति शेषः । गुणसङ्घटनयोरैक्यपक्षे "गुणानाश्रित्य तिष्ठन्ती"त्याधाराधेयभावेन निर्देशस्योपपत्तिन्दर्शयति लोचने—**स्वभावस्येत्यादि** । स्वभावस्य **प्रतिपादनार्थं** वस्तुस्वभावं प्रतिपादयितुम् । कल्पनया प्रदर्शितो भेदो यत्र तस्य । स्वाभिन्नस्यापि वस्तुनस्स्वस्माद्भेदं परिकल्प्येत्यर्थः । **स्वाश्रयेति** । स्वाश्रयत्वेन कथनमित्यर्थः । जातिव्यक्त्योरैक्यमतानुरोधेन दृष्टान्तमाह—**शिंशपेत्यादि** । **इतीति** । इत्यादीत्यर्थः ।

टना रसादीन् व्यनक्तीत्ययमर्थः। यदा तु नानात्वपक्षे गुणाश्रयसङ्घटनापक्षः तदा गुणानाश्रित्य तिष्ठन्ती गुणपरतन्त्रस्वभावा न तु गुणरूपैवेत्यर्थः। किं पुनरेवं विकल्पनस्य प्रयोजनमिति ?

अभिधीयते—यदि गुणाः सङ्घटना चेत्येकं तत्त्वं सङ्घटनाश्रया वा गुणाः, तदा सङ्घटनाया इव गुणानामनियतविषयत्वप्रसङ्गः। गुणानां हि माधुर्यप्रसादप्रकर्षः करुणविप्रलम्भशृङ्गारविषय एव। रौद्राद्भुतादिविषयमोजः। माधुर्यप्रसादौ रसभावतदाभासविषयावेवेति विषयनियमो

लोचनम्

प्रसिद्धो मार्गः। **गुणपरतन्त्रेति**। अत्र नाधाराधेयभाव आश्रयार्थः। न हि गुणेषु सङ्घटना तिष्ठतीति। तेन राजाश्रयः प्रकृतिवर्ग इत्यत्र यथा राजाश्रयौचित्येनामात्यादिप्रकृतय इत्ययमर्थः, एवं गुणेषु परतन्त्रस्वभावा तदायत्ता तन्मुखप्रेक्षिणी सङ्घटनेत्ययमर्थो लभ्यत इति भावः। **सङ्घटनाया इवेति**। प्रथमपक्षे तादात्म्येन समानयोगक्षेमत्वादितरत्र तु धर्मत्वेनेति भावः। भवत्वनियतविषयतेत्याशङ्क्याह—**गुणानां हीति**। हिशब्दस्तुशब्दार्थे। न त्वेवमुपपद्यते, आपद्यते तु न्यायबलादित्यर्थः। स

बालप्रिया

दृश्यत इत्यनेन सम्बन्धः, वृक्षत्वशिंशपयोरैक्येऽपि भेदकल्पनया शिंशपाया वृक्षत्वाश्रयत्वकथनं यथा, तथा प्रकृतेऽपीति भावः। आधेयभूतानित्यत्रोपष्टम्भकमाह—**सङ्घटनाया** इत्यादि। गुणपरतन्त्रस्वभावेति व्याख्याने बीजमाह—अत्रेत्यादि। **आश्रयार्थः** आश्रयशब्दार्थः। नेत्यत्र हेतुमाह—**न हीत्यादि**। तेनेति। आश्रयपदमुख्यार्थस्य बाधेनेत्यर्थः। लभ्यत इत्यनेनास्य सम्बन्धः। **राजाश्रयौचित्येनेति**। राजाश्रयशब्दार्थस्यान्वययोग्यत्वायेत्यर्थः। फलरूपहेतौ तृतीया। अस्यानन्तरं "राजपरतन्त्रा अमात्यादिप्रकृतय" इति पठनीयं, राजपरतन्त्रा इति पाठाभावे तत्पदमध्याहार्यम्। **एवमिति**। तथेत्यर्थः। गुणेषु परतन्त्रेत्यादेरेव विवरणम्—**तदायत्तेति**। वृत्तौ 'किमि'त्यादि चोद्यम्। 'अभिधीयत' इत्याद्युत्तरम्। 'एकं तत्त्वमि'ति। एकः पदार्थ इत्यर्थः। सङ्घटनाया इवेत्यादिग्रन्थस्य भावमाह लोचने—**प्रथमपक्ष** इत्यादि। **प्रथमपक्षे** एकं तत्त्वमिति पक्षे। गुणसङ्घटनयोरिति शेषः। **समानयोगक्षेमत्वात्** तुल्यस्वभावत्वात्। **इतरत्र** सङ्घटनाश्रया गुणा इति पक्षे। **धर्मत्वेन** सङ्घटनाधर्मत्वेन। तुल्ययोगक्षेमत्वादित्यनुषङ्गः। अनियतविषयत्वप्रसङ्ग इत्येतद्विवृणोति—न त्वेवमित्यादि। **एवमिति**। अनियतविषयत्वमित्यर्थः। **न तु उपपद्यत** इति। गुणानां नियतविषयत्वस्य व्यवस्थितत्वादिति भावः। **आपद्यते** प्रसज्यते। इत्याशङ्क्याहेति। इतीष्टापत्तिं वारयतीत्यर्थः। **तुशब्दार्थे** अवधारणार्थे।

व्यवस्थितः, सङ्घटनायास्तु स विघटते । तथा हि शृङ्गारेऽपि दीर्घसमासा दृश्यते रौद्रादिष्वसमासा चेति ।

तत्र शृङ्गारे दीर्घसमासा यथा—'मन्दारकुसुमरेणुपिञ्जरितालका' इति । यथा वा—

> अनवरतनयनजललवनिपतनपरिमुषितपत्त्रलेखं ते ।
> करतलनिषण्णमबले वदनमिदं कं न तापयति ॥

इत्यादौ । तथा रौद्रादिष्वप्यसमासा दृश्यते । यथा—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः' इत्यादौ । तस्मान्न सङ्घटनास्वरूपाः, न च सङ्घटनाश्रया गुणाः ।

ननु यदि सङ्घटना गुणानां नाश्रयस्तत्किमालम्बना एते परिकल्प्यन्ताम् । उच्यते—प्रतिपादितमेवैषामालम्बनम् ।

लोचनम्

इति । योऽयं गुणेषु नियम उक्तोऽसाविवर्थः । तथात्वे लक्ष्यदर्शनमेव हेतुत्वेनाह—**तथा हीति** ।

दृश्यत इत्युक्तं दर्शनस्थानमुदाहरणमासूत्रयति—**तत्रेति** । नात्र शृङ्गारः कश्चिदित्याशङ्क्य द्वितीयमुदाहरणमाह—**यथा वेति** । एषा हि प्रणयकुपितनायिकाप्रसादनायोक्तिर्नायकस्येति । **तस्मादिति** । नैतद्व्याख्यानद्वयं कारिकायां युक्तमिति यावत् । **किमालम्बना इति** । शब्दार्थालम्बनत्वे हि तदलङ्कारेभ्यः को विशेष इत्युक्तं चिरन्तनैरिति भावः । **प्रतिपादितमेवेति** । अस्मन्मूलग्रन्थकृतेत्यर्थः ।

बालप्रिया

स विघटत इत्यत्र तत्पदं व्याचष्टे-**योऽयमित्यादि** । **नियम उक्त इति** । शृङ्गारादावसमासैव सङ्घटना, रौद्रादौ दीर्घसमासैवेति नियम इति भावः । विघटत इत्यस्य व्यभिचरतीत्यर्थः । **तथात्व इति** । नियमविघटन इत्यर्थः । **आसूत्रयति** प्रदर्शयति । उदाहरणान्तरमवतारयति—**नात्रेत्यादि** । अनुभावादेरप्रतीतेरिति भावः ।

**अनवरतेति** । अनवरतं यन्नयनजललवनिपतनं तेन परिमुषिता अपहृता पत्रलेखा यस्मिंस्तत् । ते तव । इदं वदनमिति सम्बन्धः । भावमाह—**नैतदित्यादि** । 'किमालम्बने'ति चोद्याशयमाह—**शब्देत्यादि** । गुणानामिति शेषः । **को विशेष इति** । विशेषो न भवेदित्यर्थः । **मूलग्रन्थेति** । कारिकेत्यर्थः । न चैषामित्यादिग्रन्थस्य तात्पर्यं विवृणोति—**न हीत्यादि** । **ऐक्यमिति** । वस्तुनोरिति शेषः । गुणा-

तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।

अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥ इति ।

अथवा भवन्तु शब्दाश्रया एव गुणाः, न चैषामनुप्रासादितुल्यत्वम् । यस्मादनुप्रासादयोऽनपेक्षितार्थशब्दधर्मा एव प्रतिपादिताः । गुणास्तु व्यङ्ग्यविशेषावभासिवाच्यप्रतिपादनसमर्थशब्दधर्मा एव । शब्दधर्मत्वं चैषामन्याश्रयत्वेऽपि शरीराश्रयत्वमिव शौर्यादीनाम् ।

ननु यदि शब्दाश्रया गुणास्तत्सङ्घटनारूपत्वं तदाश्रयत्वं वा तेषां प्राप्तमेव । न ह्यसङ्घटिताः शब्दा अर्थविशेषप्रतिपाद्यरसाद्याश्रितानां गुणा-

लोचनम्

**अथवेति** । न ह्येकाश्रितत्वादेवैक्यं, रूपस्य संयोगस्य चैक्यप्रसङ्गात् । संयोगे द्वितीयमपेक्ष्यमिति चेत्—इहापि व्यङ्ग्योपकारकवाच्यापेक्षास्त्येवेति समानम् । न चायं मम स्थितः पक्षः, अपि तु भवत्वेषामविवेकिनामभिप्रायेणापि शब्दधर्मत्वं शौर्यादीनामिव शरीरधर्मत्वम् । अविवेकी हि औपचारिकत्वविभागं विवेक्तुमसमर्थः । तथापि न कश्चिद्दोष इत्येवम्परमेतदुक्तमित्येतदाह—**शब्दधर्मत्वमिति** । **अन्याश्रयत्वेऽपीति** । आत्मनिष्ठत्वेऽपीत्यर्थः ।

**शब्दाश्रया** इति । उपचारेण यदि शब्देषु गुणास्तदेदं तात्पर्यम्—शृङ्गारादिरसाभिव्यञ्जकवाच्यप्रतिपादनसामर्थ्यमेव शब्दस्य माधुर्यम् । तच्च शब्दगतं विशिष्टघटनयैव लभ्यते । अथ सङ्घटना न व्यतिरिक्ता काचित्, अपि तु सङ्घटिता एव

बालप्रिया

लङ्कारयोरिति यावत् । **ऐक्यप्रसङ्गादिति** । घटाद्येकद्रव्याद्याश्रितत्वादिति भावः । ऐक्यप्रसङ्गं परिहरति—**संयोग** इत्यादि । **द्वितीयमपेक्ष्यमिति** । संयोगरूपकार्यस्य द्वयोरुत्पत्त्या स्वस्मिन् यस्य संयोगो जायते तं प्रति तस्यापेक्षास्तीत्यर्थः । रूपस्य त्वेकस्मिन्नेवोत्पत्त्या न द्वितीयापेक्षेति भावः । परिहारप्रकारस्तुल्य इत्याह—'इहे'त्यादि । **इहापि** गुणेष्वपि । **व्यङ्ग्येति** । अनेन 'गुणास्तु व्यङ्ग्ये'त्यादिग्रन्थो विवृतः । शब्दधर्मत्वञ्चेत्यादिग्रन्थमवतारयति—**न चे**त्यादि । अयं स्थितः मम पक्षो नेति योजना । **एषामिति** । गुणानामित्यर्थः । शब्दधर्मत्वं भवत्विति सम्बन्धः । **औपचारिकत्वविभागमिति** । औपचारिकत्वस्य मुख्यत्वाद्भेदमित्यर्थः । **विवेक्तुं** ज्ञातुम् । **एतदुक्तमथवेत्याद्युक्तम्** । **इत्येतदिति** । उक्तमित्यर्थः । **आत्मनिष्ठत्वेऽपीति** । आत्मपदेन रसः जीवात्मा च ग्राह्यः ।

'यदि शब्दाश्रया' इत्यादि 'प्राप्तमेवे'त्यन्तग्रन्थस्य तात्पर्यमाह—**उपचारेणे**त्यादि । 'गुणा' इत्यन्तस्य विवरणम्—**उपचारेणे**त्यादि । **इदमिति** । अनुपदं

नामवाचकत्वादाश्रया भवन्ति । नैवम् ; वर्णपदव्यङ्ग्यत्वस्य रसादीनां प्रतिपादितत्वात् ।

लोचनम्

शब्दाः, तदाश्रितं तत्सामर्थ्यमिति सङ्घटनाश्रितमेवेत्युक्तं भवतीति तात्पर्यम् ।

ननु शब्दधर्मत्वं शब्दैकात्मकत्वं वा तावतास्तु, किमयं मध्ये सङ्घटनानुप्रवेश इत्याशङ्क्य स एव पूर्वपक्षवाद्याह—न हीति । अर्थविशेषैर्न तु पदान्तरनिरपेक्षशुद्धपदवाच्यैः सामान्यैः प्रतिपाद्या व्यङ्ग्या ये रसभावतदाभासतत्प्रशमास्तदाश्रितानां मुख्यतया तन्निष्ठानां गुणानामसङ्घटिताः शब्दा आश्रया न भवन्त्युपचारेणापीति भावः । अत्र हेतुः—अवाचकत्वादिति । न ह्यसङ्घटिताः व्यङ्ग्योपयोगिनिराकाङ्क्षरूपं वाच्यमाहुरित्यर्थः । एतत्परिहरति—नैवमिति । वर्णव्यङ्ग्यो हि यावद्रस उक्तस्तावदवाचकस्यापि पदस्य श्रवणमात्रावसेयेन स्वसौभाग्येन वर्णवदेव यद्रसाभिव्यक्तिहेतुत्वं स्फुटमेव लभ्यत इति तदेव माधुर्यादीति किं सङ्घटनया? तथा च पदव्यङ्ग्यो यावद्ध्वनिरुक्तस्तावच्छुद्धस्यापि पदस्य स्वार्थस्मारकत्वेनापि रसाभिव्यक्तियोग्यार्थावभासकत्वमेव माधुर्यादीति तत्रापि कः सङ्घटनाया उपयोगः ।

बालप्रिया

वक्ष्यमाणमित्यर्थः । तच्च शब्दगतमिति । उक्तसामर्थ्यरूपं शब्दाश्रितं सामर्थ्यञ्चेत्य[र्थ]ः । विशिष्टेति । विशिष्टा या शब्दान्तरसङ्घटना तथैव लभ्यत इत्यर्थः । ततः किमत आह—अथेत्यादि । अथ अथ च । न व्यतिरिक्ता न शब्दाद्भिन्ना । तदाश्रितं सङ्घटितशब्दाश्रितम् । तत् पूर्वोक्तम् । इतीति हेतौ । सङ्घटनाश्रितमिति । सङ्घटनारूपत्वमप्युक्तरीत्या बोध्यम् ।

नन्विति । गुणानामिति शेषः । तावतेति । उपचारेणेत्यर्थः । स एवाहेत्यनेन 'तच्च शब्दगतं विशिष्टघटनयैवे'ति ग्रन्थेनायमर्थः स्वयं प्रदर्शित इति प्रकाश्यते । अर्थविशेषैरिति । परस्परसाकाङ्क्षपदसमुदायप्रतिपाद्यैर्विभावादिरूपैरित्यर्थः । अनेन लब्धं व्यावर्त्यमाह—न त्वित्यादि । सामान्यैरिति । सामान्यरूपा अर्थाः पदवाच्या इत्युक्तं प्राक् । अवाचकत्वादित्यस्याननुभावकत्वादित्यर्थमभिप्रेत्य व्याचष्टे—न हीत्यादि । शब्दा इति शेषः । वाच्यमाहुः वाक्यार्थमनुभावयन्ति । वर्णेत्यादिग्रन्थस्य भावं विवृणोति—वर्णव्यङ्ग्यो हीत्यादि । यावत् यतः । उक्तः 'यस्त्वलक्ष्यक्रमव्यङ्ग्य' इत्यादिना प्रदर्शितः । तावत् ततः । अवाचकस्यापि स्वार्थास्मारकस्यापि । पदस्य वर्णसमुदायरूपस्य । वर्णवत् वर्णस्येव । स्फुटमेव लभ्यत इति । कैमुत्यन्यायेनेति भावः । तथा चेति । स्वार्थास्मारकस्यापि पदस्य रसाभिव्यक्तिहेतुत्वे सिद्धे चेत्यर्थः । शुद्धस्यापीति । असङ्घटितस्यापीत्यर्थः ।

अभ्युपगते वा वाक्यव्यङ्ग्यत्वे रसादीनां न नियता काचित्सङ्घटना तेषामाश्रयत्वं प्रतिपद्यत इत्यनियतसङ्घटनाः शब्दा एव गुणानां व्यङ्ग्य-विशेषानुगता आश्रयाः। ननु माधुर्ये यदि नामैवमुच्यते तदुच्यताम्; ओजसः पुनः कथमनियतसङ्घटनशब्दाश्रयत्वम्। न ह्यसमासा सङ्घटना कदाचिदोजस आश्रयतां प्रतिपद्यते। उच्यते—यदि न प्रसिद्धिमात्रग्रह-दूषितं चेतस्तदत्रापि न न ब्रूमः। ओजसः कथमसमासा सङ्घटना नाश्रयः। यतो रौद्रादीन् हि प्रकाशयतः काव्यस्य दीप्तिरोज इति प्राक्प्रतिपादितम्। तच्चौजो यद्यसमासायामपि सङ्घटनायां स्यात्तत्को दोषो भवेत्। न

### लोचनम्

ननु वाक्यव्यङ्ग्ये ध्वनौ तर्ह्यवश्यमनुप्रवेष्टव्यं सङ्घटनया स्वसौन्दर्यं वाच्यसौन्दर्यं वा, तया विना कुत इत्याशङ्क्याह—**अभ्युपगत** इति। वाशब्दोऽपिशब्दार्थे, वाक्य-व्यङ्ग्यत्वेऽपीत्यत्र योज्यः। एतदुक्तं भवति—अनुप्रविशतु तत्र सङ्घटना, न हि तस्याः सन्निधानं प्रत्याचक्ष्महे। किं तु माधुर्यस्य न नियता सङ्घटना आश्रयो वा स्वरूपं वा तया विना वर्णपदव्यङ्ग्ये रसादौ भावान्माधुर्यादेः वाक्यव्यङ्ग्येऽपि तादृशीं सङ्घटनां विहायापि वाक्यस्य तद्रसव्यञ्जकत्वात्सङ्घटना सन्निहितापि रसव्यक्तावप्रयोजिकेति। तस्मादौपचारिकत्वेऽपि शब्दाश्रया एव गुणा इत्युपसंहरति—**शब्दा एवेति**। **नन्विति**। वाक्यव्यङ्ग्यध्वन्यभिप्रायेणेदं मन्तव्यमिति केचित्।

### बालप्रिया

**नन्वित्यादि** । **सङ्घटनया** सङ्घटनाविशेषेण । **स्वेति** । वाक्यसौन्दर्यमि-त्यर्थः । वृत्तौ 'तेषामि'ति । गुणानामित्यर्थः । 'व्यङ्ग्यविशेषानुगता' इति । व्यङ्ग्यविशेषावभासिन इत्यर्थः । 'अभ्युपगत' इत्यादिग्रन्थस्य भावमाह लोचने—**एतदि**त्यादि । **माधुर्यस्येति** । माधुर्यादेरित्यर्थः । नियता सङ्घटना माधुर्यस्या-श्रयो वा स्वरूपं वा नेत्यन्वयः । अत्र हेतुमाह—तयेत्यादि । **भावान्माधुर्यादे**-रिति । माधुर्यादेस्सत्त्वादित्यर्थः । भावादित्यन्तेन व्यभिचारः प्रदर्शितः । अत एवाह—वाक्येत्यादि । रसादावित्यनुषङ्गः। **सङ्घटनां विहायापि** सङ्घटनायास्स-हकारित्वमन्तरेणापि । **तद्रसव्यञ्जकत्वात्** तत्तद्रसव्यञ्जकत्वसम्भवात्। **अप्रयो-जिका** अनुपयोगिनी । वृत्तौ 'नन्वि'त्यादि । 'एवमि'ति । अनियतसङ्घटनशब्दाश्रय-त्वमित्यर्थः । 'तत्तदा उच्यतां' तथा उच्यताम् । 'पुन'रिति विशेषे । 'अत्रापि न न ब्रूम' इति । अस्मिंश्चोद्येऽपि उत्तरं ब्रूम एवेत्यर्थः । लोचने—**वाक्यव्यङ्ग्ये**त्या-दि । **इद**मिति । चोद्यमित्यर्थः । **मन्तव्य**मिति । वाक्य एव सङ्घटनायास्सम्भवा-दिति भावः ।

चाचारुत्वं सहृदयहृदयसंवेद्यमस्ति । तस्मादनियतसङ्घटनशब्दाश्रयत्वे गुणानां न काचित्क्षतिः । तेषां तु चक्षुरादीनामिव यथास्वं विषयनियमितस्य स्वरूपस्य न कदाचिद्व्यभिचारः । तस्मादन्ये गुणा अन्या च सङ्घटना । न च सङ्घटनामाश्रिता गुणा इत्येकं दर्शनम् । अथवा सङ्घटनारूपा एव गुणाः ।

यत्तूक्तम्—'सङ्घटनावद्गुणानामप्यनियतविषयत्वं प्राप्नोति । लक्ष्ये व्यभिचारदर्शनात्' इति । तत्राप्येतदुच्यते—यत्र लक्ष्ये परिकल्पितविषयव्यभिचारस्तद्विरूपमेवास्तु । कथमचारुत्वं तादृशे विषये सहृदयानां नावभातीति चेत् ? कविशक्तितिरोहितत्वात् । द्विविधो हि दोषः—कवेरव्युत्पत्तिकृतोऽशक्तिकृतश्च । तत्राव्युत्पत्तिकृतो दोषः शक्तितिरस्कृतत्वात्कदाचिन्न लक्ष्यते । यस्त्वशक्तिकृतो दोषः स झटिति प्रतीयते । परिकरश्लोकश्चात्र—

'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते ॥'

लोचनम्

वयं तु ब्रूमः—वर्णपदव्यङ्ग्यत्वेऽप्योजसि रौद्रादिस्वभावे वर्णपदानामेकाकिनां स्वसौन्दर्यमपि न तादृगुन्मीलति तावद्यावत्तानि सङ्घटनाङ्कितानि न कृतानीति सामान्येनैवायं पूर्वपक्ष इति । प्रकाशयन इति 'लक्षणहेत्वोः'[1] इति शतृप्रत्ययः । रौद्रादिप्रकाशनालक्ष्यमाणमोज इति भावः । न चेति । चशब्दो हेतौ । यस्मात् 'यो यः शस्त्रं' इत्यादौ नाचारुत्वं प्रतिभाति तस्मादित्यर्थः । तेषांत्विति गुणानाम् । यथास्वमिति । 'शृङ्गार एव परमो मनःप्रह्लादनो रसः' इत्यादिना च विषयनियम उक्त एव । अथवेति ।

बालप्रिया

वर्णेत्यादि । ओजसो वर्णपदव्यङ्ग्यत्वेऽपीत्यर्थः । रौद्रादिस्वभावे रौद्रादिरसधर्मे । तादृक् सातिशयम् । तावन्नोन्मीलतीति सम्बन्धः । तानीति । वर्णपदानीत्यर्थः । सङ्घटनाङ्कितानीति । सङ्घटनाविशिष्टानीत्यर्थः । सामान्येनैवेति । वर्णपदवाक्यव्यङ्ग्यध्वनिसामान्याभिप्रायेणैवेत्यर्थः । रौद्रादीति । रौद्रादेः प्रकाशनेन आलक्ष्यमाणमनुमीयमानमित्यर्थः । नाचारुत्वमिति । अचारुत्वं न प्रतिभातीत्यन्वयः । वृत्तौ 'तेषामि'ति । गुणानामित्यर्थः । स्वरूपस्येत्यनेन सम्ब-

१. पा. सू. ३. २. १२६

तथा हि—महाकवीनामप्युत्तमदेवताविषयप्रसिद्धसंभोगशृङ्गारनिब-न्धनाद्यनौचित्यं शक्तितिरस्कृतत्वात् ग्राम्यत्वेन न प्रतिभासते। यथा कुमारसम्भवे देवीसम्भोगवर्णनम्। एवमादौ च विषये यथौचित्यात्यागस्तथा

लोचनम्

रसाभिव्यक्तावेतदेव सामर्थ्यं शब्दानां यत्तथा तथा सङ्घटमानत्वमिति भावः।

शक्तिः प्रतिभानं वर्णनीयवस्तुविषयनूतनोल्लेखशालित्वम्। व्युत्पत्तिस्तदुपयोगिसमस्तवस्तुपौर्वापर्यपरामर्शकौशलम्। तस्येति कवेः। अनौचित्यमिति। आस्वादयितॄणां यः चमत्काराविघातस्तदेव रससर्वस्वं आस्वादायत्तत्वात्। उत्तमदेवतासंभोगपरामर्शे च पितृसंभोग इव लज्जातङ्कादिना कश्चमत्कारावकाश इत्यर्थः। शक्तितिरस्कृतत्वादिति। संभोगोऽपि ह्यसौ वर्णितस्तथा प्रतिभानवता कविना यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति यथा निर्व्याजपराक्रमस्य पुरुषस्याविषयेऽपि युध्यमानस्य तावत्तस्मिन्नवसरे साधुवादो वितीर्यते न तु पौर्वापर्यपरामर्शो

बालप्रिया

न्धः। 'विषये'ति। चक्षुरादीनां विषया रूपादयः गुणानान्तु रसाः। 'दर्शनमि'ति। मतमित्यर्थः। अथवेत्यादिग्रन्थस्य भावमाह लोचने—**रसे**त्यादि। **तथा तथे**ति। तत्तद्रसानुगुण्येनेत्यर्थः। **इति भाव** इति। शब्दगतं माधुर्यादिकं शृङ्गारादि तत्तद्रसाभिव्यञ्जनसामर्थ्यमेव, तच्च तथा तथा सङ्घटनया। अतस्सङ्घटनारूपा एव गुणा इति भावार्थ इत्यर्थः।

वृत्तौ—'यस्त्वि'त्यादि। इति यत्तूक्तमित्यन्वयः। 'यत्र लक्ष्ये' इति। 'अनवरते'त्यादौ, 'यो यश्शस्त्रमि'त्यादौ चेत्यर्थः। 'परिकल्पिते'ति। 'असमासे'त्याद्युक्तविषयस्य व्यभिचार इत्यर्थः। शक्तिव्युत्पत्तिपदे विवृणोति लोचने—**शक्तिरि**त्यादि। **तदुपयोगी**ति। तस्य वर्णनीयस्य उपयोगीनि यानि वस्तूनि तेषां पौर्वापर्येण यः परामर्शस्तत्र कौशलं सामर्थ्यमित्यर्थः। उत्तमदेवताविषयसम्भोगशृङ्गारनिबन्धनस्यानौचित्यं विवृणोति—**य** इत्यादि। **चमत्काराविघातः** चमत्कारविघातकाभावः। **पितृसम्भोग** इति। मातापित्रोस्सम्भोगस्य परामर्श इत्यर्थः। 'शक्तितिरस्कृतत्वा'दित्यादिग्रन्थं विवृणोति—**सम्भोगोऽपी**त्यादि। **असा**विति। उत्तमदेवताविषय इत्यर्थः। **तत्रैव** वर्णिते सम्भोग एव। **हृदयं** कर्तृ। **न ददाति** स्वात्मानं, सहृदयस्येति शेषः। यद्वा—स इति शेषः। वर्णितस्सम्भोग इत्यर्थः। **हृदयं** कर्म। **अविषयेऽपी**ति। बालगुरुजनादिविषयेऽपीत्यर्थः। **तस्मिन्नवसरे** युद्धकाले। **वितीर्यते** पश्यद्भिः दीयते। वृत्तौ—'यथौचित्यात्याग'इति। यथा येन प्रकारेण वर्णने। औचित्यात्यागः अनौचित्याभावः। 'दर्शितामि'ति। विभावभावेत्यादिग्रन्थजातेन प्रदर्शितमित्यर्थः। '**अग्रे**' उपरि। नन्वेवं दर्शयिष्यत इति वक्तव्यं न तु दर्शितमितीत्यत आह लोचने—

दर्शितमेवाग्रे । शक्तितिरस्कृतत्वं चान्वयव्यतिरेकाभ्यामवसीयते । तथा हि शक्तिरहितेन कविना एवंविधे विषये शृङ्गार उपनिबध्यमानः स्फुटमेव दोषत्वेन प्रतिभासते । नन्वस्मिन् पक्षे 'यो यः शस्त्रं बिभर्ति' इत्यादौ किमचारुत्वम्? अप्रतीयमानमेवारोपयामः । तस्माद्गुणव्यतिरिक्तत्वे गुणरूपत्वे च सङ्घटनाया अन्यः कश्चिन्नियमहेतुर्वक्तव्य इत्युच्यते ।

**तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः ॥ ६ ॥**

तत्र वक्ता कविः कविनिबद्धो वा, कविनिबद्धश्चापि रसभावरहितो रसभावसमन्वितो वा, रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा, कथानायकश्च धीरोदात्तादिभेदभिन्नः पूर्वस्तदनन्तरो वेति विकल्पाः । वाच्यं च ध्वन्यात्मर-

लोचनम्

तथात्रापीति भावः । दर्शितमेवेति । कारिकाकारेणेति भूतप्रत्ययः । वक्ष्यते हि—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्' इत्यादि । अप्रतीयमानमेवेति । पूर्वापरपरामर्शविवेकशालिभिरपीत्यर्थः । गुणव्यतिरिक्तत्व इति । व्यतिरेकपक्षे हि सङ्घटनाया नियमहेतुरेव नास्ति ऐक्यपक्षेऽपि न रसो नियमहेतुरित्यन्यो वक्तव्यः ।

तन्नियम इति कारिकाशेषः । कथां नयति स्वकर्तव्याङ्गभावमिति कथानायको यो निर्वहणे फलभागी । धीरोदात्तादीति । धर्मयुद्धवीरप्रधानो धीरोदात्तः । वीररौद्रप्रधानो धीरोद्धतः । वीरशृङ्गारप्रधानो धीरललितः । दानधर्मवीरशान्तप्रधानो धीरप्रशान्त इति चत्वारो नायकाः क्रमेण सात्वत्यारभटीकैशिकीभारतीलक्षणवृत्तिप्रधानाः। पूर्वः कथानायकस्तदनन्तर उपनायकः । विकल्पा इति । वक्तृभेदा इत्यर्थः । वाच्यमि-

बालप्रिया

कारिकाकारेणेति । कारिकावचनस्य निष्पन्नत्वात् भूतनिर्देश उपपन्न इति भावः । वक्ष्यते हीति । वृत्तिकारेण चेति शेषः । वृत्तौ नन्वित्यादि । 'अस्मिन् पक्षे' इति । सङ्घटनारूपा एव गुणा इति पक्ष इत्यर्थः । 'किमचारुत्व'मिति चोद्यम् । तत्रोत्तरम्—'अप्रतीयमानमि'त्यादि । अचारुत्वमित्यनुषङ्गः । कैरप्रतीयमानमित्यत्राह लोचने—पूर्वेत्यादि । विवृणोति—व्यतिरेकपक्षे हीत्यादि । नास्तीति । गुणानां विषयनियम एवोक्तः सङ्घटनाया नियमहेतुः कोऽपि नोक्त इत्यर्थः । न रसो नियमहेतुरिति । लक्ष्येषु व्यभिचारादिति भावः । वृत्तौ—'इत्युच्यत' इति । इत्यतो हेतोर्नियमहेतुः प्रदर्श्यत इत्यर्थः । कारिकाशेष इति । न तु वृत्तिकृता पूरितमिति भावः ।

कथानायकपदं व्याचष्टे—कथामित्यादि । स्वकर्तव्येति । स्वसाध्येत्यर्थः । स्वपदं फलभागिपरम् । धर्मेति । धर्मवीरयुद्धवीरप्रधान इत्यर्थः । धीरोद्धतादीनां क्रमेण रौद्रशृङ्गारशान्तप्राधान्येऽपि तेषूत्साहस्याप्यवश्यम्भावित्वादाह—वीरेत्यादि । सात्वती-

साङ्गं रसाभासाङ्गं वा, अभिनेयार्थमनभिनेयार्थं वा, उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम्। तत्र यदा कविरपगतरसभावो वक्ता तदा रचनायाः

## लोचनम्

**ति**। ध्वन्यात्मा ध्वनिस्वभावो यो रसस्तस्याङ्गं व्यञ्जकमित्यर्थः। अभिनेयो वागङ्गसत्त्वाहार्यैराभिमुख्यं साक्षात्कारप्रायं नेयोऽर्थो व्यङ्ग्यरूपो ध्वनिस्वभावो यस्य तदभिनेयार्थं वाच्यं, स एव हि काव्यार्थ इत्युच्यते। तस्यैव चाभिनयेन योगः। यदाह मुनिः—'[1]वागङ्गसत्त्वोपेतात्काव्यार्थान् भावयन्ति' इत्यादि तत्र तत्र। रसाभिनयनान्तरीयकतया तु तद्विभावादिरूपतया वाच्योऽर्थोऽभिनीयत इति वाच्यमभिनेयार्थमित्येषैव युक्ततरा वाचोयुक्तिः। न त्वत्र व्यपदेशिवद्भावो व्याख्येयः, यथान्यैः। **तदितरेति**। मध्यमप्रकृत्याश्रयमधमप्रकृत्याश्रयं चेत्यर्थः। एवं वक्तृभेदान्वाच्यभेदांश्चाभिधाय तद्गतमौचित्यं नियामकमाह—**तत्रेति**। **रचनाया** इति सङ्घटनायाः। रसभावहीनोऽनाविष्टस्तापसादिरुदासीनोऽपीतिवृत्ताङ्गतया यद्यपि प्रधानरसानुयाय्येव, तथापि तावति

## बालप्रिया

त्यादि। सात्त्वत्यादिवृत्तीनां लक्षणान्यन्यत्र द्रष्टव्यानि। 'विकल्पा' इति पदं प्रकृतानुगुण्येन व्याचष्टे—**वक्तृभेदा** इति। 'वक्तृवाच्ययो'रित्युक्तवक्त्रवान्तरभेदा इत्यर्थः। वाच्यमभिनेयार्थमित्येतद्व्याचष्टे—**अभिनेय** इत्यादि। वागित्यादि। चतुर्विधैरित्यर्थः। **व्यङ्ग्यरूप** इत्यस्यैव विवरणम्—**ध्वनिस्वभाव** इति। ध्वन्यात्मेत्यर्थः। उक्तमुपपादयति—**स एवे**त्यादि। **स एव** व्यङ्ग्य एव। **अभिनयेन योगः** अभिनेतव्यत्वम्। वागङ्गेति भावयन्तीत्यन्तं भावा इत्यस्य व्युत्पत्तिकथनम्। इत्यादि तत्र तत्राहेति सम्बन्धः। काव्येनार्थ्यत इति व्युत्पत्त्या काव्यार्थशब्दो व्यङ्ग्यरसादिवाचीति भावः। नन्वेवं वाच्यार्थाभिनयः किं नास्तीत्यत्राह—**रसाभिनये**त्यादि। व्याख्यानमुपसंहरति—**इती**त्यादि। **इतीति** हेतौ। इत्येषा वाचोयुक्तिरेव युक्ततरेत्यन्वयः। उक्तव्याख्यैवातिशयेन युक्तेत्यर्थः। **न त्वि**त्यादि। यदि वाच्यस्यैवाभिनेयत्वं, तदा वाच्यमभिनेयार्थमित्यत्र अभिनेयः अर्थो यस्येति विग्रहे यत्पदार्थस्य वाच्यस्य अर्थपदार्थस्य चैक्यात् 'राहोश्शिर' इत्यादाविव व्यपदेशिवद्भावेन भेदविवक्षया षष्ठीति व्याख्यातव्यं, तन्न कर्तव्यमित्यर्थः। **यथान्यैरि**ति। व्यपदेशिवद्भाव इत्यनुषङ्गः, व्याख्यात इति शेषः। कविनिबद्धो वक्ता रसभावरहित इत्यस्यार्थं प्रदर्श्य तत्रानुपपत्तिमाशङ्क्य परिहरति—**रसभावहीन** इत्यादि। रसभावहीन इत्यस्य विवरणम्—**अनाविष्ट** इति। रसाद्यावेशरहित इत्यर्थः। स क इत्यत्राह—**तापसादि**रित्यादि। **अपीति** समुच्चये। **प्रधानरसानुयाय्येवेति**। तथा च तस्य तत्तच्चित्तवृत्त्यावेशेन

---

1. भरतना., ७. १

कामचारः। यदापि कविनिबद्धो वक्ता रसभावरहितस्तदा स एव; यदा तु कविः कविनिबद्धो वा वक्ता रसभावसमन्वितो रसश्च प्रधानाश्रितत्वाद्ध्वन्यात्मभूतस्तदा नियमेनैव तत्रासमासामध्यसमासे एव सङ्घटने। करुणविप्रलम्भशृङ्गारयोस्त्वसमासैव सङ्घटना। कथमिति चेत्; उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतीतौ व्यवधायका विरोधिनश्च सर्वात्मनैव परिहार्याः। एवं च दीर्घसमासासङ्घटनासमासानामनेकप्रकारसम्भावनया कदाचिद्रसप्रतीतिं व्यवदधातीति तस्यां नात्यन्तमभिनिवेशः

लोचनम्

रसादिहीन इत्युक्तम्। स एवेति कामचारः। एवं शुद्धवक्त्रौचित्यं विचार्य वाच्यौचित्येन सह तदेवाह—यदा त्विति। कविर्यद्यपि रसाविष्ट एव वक्ता युक्तः। अन्यथा 'स एव वीतरागश्चेत्' इति स्थित्या नीरसमेव काव्यं स्यात्। तथापि यदा यमकादिचित्रदर्शनप्रधानोऽसौ भवति, तदा 'रसादिहीन' इत्युक्तम्। नियमेन रसभावसन्वितो वक्ता न तु कथञ्चिदपि तटस्थः। रसश्च ध्वन्यात्मभूत एव न तु रसवदलङ्कारप्रायः। तदासमासामध्यसमासे एव सघट्टने, अन्यथा तु दीर्घसमासापीत्येवं योज्यम्। तेन नियमशब्दस्य द्वयोश्चैवकारयोः पौनरुक्त्यमनाशङ्क्यम्। कथमिति चेदिति। किं धर्मसूत्रकारवचनमेतदिति भावः। उच्यत इति। न्यायोपपत्त्येत्यर्थः। तत्प्रतीताविति। तदास्वादे ये व्यवधायका अस्वादविघ्नरूपाविरोधिनश्च तद्विपरीतास्वादमया इत्यर्थः। सम्भावनयेति। अनेकप्रकारः सम्भाव्यते सङ्घटना तु सम्भावनायां प्रयोक्त्रीति

बालप्रिया

भाव्यमिति भावः। तावतीति। स्वस्मिन्नित्यर्थः। इत्युक्तमिति। रसभावरहित इत्यनेन नैसर्गिकं तद्राहित्यं विवक्षितमित्यर्थः। शुद्धेति। शुद्धमन्येनासम्मिश्रं यद्वक्त्रौचित्यन्तदित्यर्थः। यदा तु कविरित्यादिना कदाचिद्रसभावरहितत्वं कवेर्भवतीति गम्यते पूर्वमुक्तञ्च, तस्यानुपपत्तिमुद्भाव्य परिहरति—कविर्यद्यपीत्यादि। स एवेति। श्लोकोऽयं प्रदर्शयिष्यते। 'तदा नियमेनैव समासे एव' इत्यत्र नियमेनेति पदमेवकारद्वयञ्च यथायथं योजयंस्तत्तद्व्यवच्छेद्यमर्थञ्च दर्शयन्विवृणोति—नियमेनेत्यादि। तेनेति। उक्तेन योजनेनेत्यर्थः। किं धर्मेत्यादि। धर्मसूत्रकारवचनं हि युक्तिरहितमप्यादरणीयमिति भावः। आस्वादनविघ्नरूपा इति। आस्वादनविघ्नाः संशयादयोऽभिनवभारत्यादौ दर्शिताः। तद्विपरीतेति। प्रधानरसविपरीतेत्यर्थः। सम्भावनयेत्यत्र णिजन्ताण्णिजित्याह—अनेकेत्यादि। सम्भाव्यत इति। प्रतिपत्तृभिरिति शेषः। प्रयोक्त्रीति। प्रयोजककर्त्रीत्यर्थः। वृत्तौ—'विशेषत' इत्यादि। तस्यामित्यादेरनुषङ्गः। अभिनेयार्थे काव्ये तस्यामत्यन्तमभिनिवेशो विशेषतो न

शोभते। विशेषतोऽभिनेयार्थे काव्ये, ततोऽन्यत्र च विशेषतः करुणविप्रलम्भशृङ्गारयोः। तयोर्हि सुकुमारतरत्वात्स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति। रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ मध्यमसमासा सङ्घटना कदाचिद्धीरोद्धतनायकसम्बन्धव्यापाराश्रयेण दीर्घसमासापि वा तदाक्षेपाविनाभाविरसोचितवाच्यापेक्षया न विगुणा भवतीति सापि नात्यन्तं परिहार्या। सर्वासु च सङ्घटनासु प्रसादाख्यो गुणो व्यापी।

लोचनम्

द्वौ निचौ। विशेषतोऽभिनेयार्थेति। अत्रुटितेन व्यङ्ग्येन तावत्समासार्थाभिनयो न शक्यः कर्तुम्। काक्वादयोऽन्तरप्रसादगानादयश्च। तत्र दुष्प्रयोजा बहुतरसन्देहप्रसरा च तत्र प्रतिपत्तिर्न नाट्येऽनुरूपा स्यात्। प्रत्यक्षरूपत्वात्तस्या इति भावः। अन्यत्र चेति। अनभिनेयार्थेऽपि। मन्थरीभवतीति। आस्वादो विघ्नितत्वात्प्रतिहन्यत इत्यर्थः। तस्या दीर्घसमाससङ्घटनायाः य आक्षेपस्तेन विना यो न भवति व्यङ्ग्याभिव्यञ्जकस्तादृशो रसोचितो रसव्यञ्जकतयोपादीयमानो वाच्यस्तस्य यासावपेक्षा दीर्घसमाससङ्घटनां प्रति सा अवैगुण्ये हेतुः। नायकस्याक्षेपो व्यापार इति यद्व्याख्यातं तन्न श्लिष्यतीवेत्यलम्। व्यापीति। या काचित्सङ्घटना सा तथा कर्तव्या, यथा वाच्ये झटिति भवति प्रतीतिरिति यावत्। उक्तमिति। 'समर्पकत्वं काव्यस्य यत्तु' इत्यादिना। न व्यनक्ती-

बालप्रिया

शोभत इत्यन्वयः। कुत एतदिति जिज्ञासां परिहर्तुं भावमाह—अत्रुटितेनेत्यादि। तत्रेति प्रतिवाक्यं योज्यं, दीर्घसमासायां सङ्घटनायां सत्यामिति तदर्थः। अत्रुटितेन व्यङ्ग्येन कर्तुं न शक्यः, किन्तु व्यङ्ग्यार्थत्रोटनं कृत्वैव कर्तव्यो भवेदिति भावः। दोषान्तराण्यप्याह—काक्वादय इत्यादि। अन्तरेति। अन्तरे मध्ये प्रसादार्थो ये गानादयस्ते। दुष्प्रयोजाः दुःखेन प्रयोज्याः। तत्र बहुतरसन्देहप्रसरा प्रतिपत्तिश्च स्यात्। सा नाट्ये न अनुरूपा च इति योजना। अत्र हेतुमाह—प्रत्यक्षेति। संशयादिविघ्नरहितसाक्षात्काररूपत्वादित्यर्थः। तस्या इति। नाट्यप्रतीतेरित्यर्थः। नाट्यन्नाम रसचर्वणात्मकप्रतीतिरूपमित्यभिनवभारत्यामुक्तम्। वृत्तौ 'तत्रान्यत्र चे'ति। तस्यामित्यादेरनुषङ्गोऽत्रापि बोध्यः। लोचने भावार्थमाह—आस्वाद इत्यादि। वृत्तौ'रसान्तर' इत्यादि। रौद्रादौ रसान्तरे पुनः प्रतिपाद्ये मध्यमसमाससङ्घटना विगुणा न भवति कदाचिद्दीर्घसमासापि वा सङ्घटना विगुणा न भवतीति सम्बन्धः। दीर्घसमासाया अवैगुण्ये हेतुस्तदाक्षेपेत्यादिः। एतं ग्रन्थं व्याचष्टे—तस्या इत्यादि। सङ्घटनाया इति कर्मणि षष्ठी। आक्षेपः स्ववाचकशब्दसमुदाये आकर्षः योजनमिति यावत्। तेनाविनाभावीति वाच्यस्य विशेषणमित्याह—तेने-

स हि सर्वरससाधारणः सर्वसङ्घटनासाधारणश्चेत्युक्तम् । प्रसादातिक्रमे ह्यसमासापि सङ्घटना करुणविप्रलम्भशृङ्गारौ न व्यनक्ति । तदपरित्यागे च मध्यमसमासापि न न प्रकाशयति । तस्मात्सर्वत्र प्रसादोऽनुसर्तव्यः । अत एव च 'यो यः शस्त्रं बिभर्ति' इत्यादौ यद्योजसः स्थितिर्नेष्यते तत्प्रसादाख्य एव गुणो न माधुर्यम् । न चाचारुत्वम् ; अभिप्रेतरसप्रकाशनात् । तस्माद्गुणाव्यतिरिक्तत्वे गुणव्यतिरिक्तत्वे वा सङ्घटनाया यथोक्तादौचित्याद्विषयनियमोऽस्तीति तस्या अपि रसव्यञ्जकत्वम् । तस्याश्च रसाभिव्यक्तिनिमित्तभूताया योऽयमनन्तरोक्तो नियमहेतुः स एव गुणानां नियतो विषय इति गुणाश्रयेण व्यवस्थानमप्यविरुद्धम् ।

लोचनम्

ति । व्यञ्जकस्य स्ववाच्यस्यैवाप्रत्यायनादिति भावः । तदिति । प्रसादस्यापरित्यागे अभीष्टत्वादत्रार्थे स्वकण्ठेनान्वयव्यतिरेकावुक्तौ । **न माधुर्यमिति**। ओजोमाधुर्ययोर्ह्यन्योन्याभावरूपत्वं प्राङ्निरूपितमिति तयोः सङ्करोऽत्यन्तं श्रुतिबाह्य इति भावः । **अभिप्रेतेति** । प्रसादेनैव स रसः प्रकाशितः न न प्रकाशित इत्यर्थः । **तस्मादिति** । यदि गुणाः सङ्घटनैकरूपास्तथापि गुणनियम एव सङ्घटनाया नियमः। गुणाधीनसङ्घटनापक्षेऽप्येवम् । सङ्घटनाश्रयगुणपक्षेऽपि सङ्घटनाया नियामकत्वेन यद्वक्तृवाच्यौचित्यं

बालप्रिया

त्यादि । यो वाच्यो व्यङ्ग्याभिव्यञ्जको न भवतीति सम्बन्धः । स्वस्ववाचकशब्दानां दीर्घसमाससङ्घटनाङ्कितत्वे सत्येव वाच्यार्थो व्यञ्जका भवन्तीति भावः । अपेक्षयेत्यस्य विगुणा न भवतीत्यनेनान्वय इत्याह—**सेत्यादि** । तदाक्षेपेत्यत्र व्याख्यानान्तरं प्रदर्श्य निराकरोति—**नायकस्येत्यादि** । **न श्लिष्यतीति** । अन्वयानुगुण्याभावादिति भावः । प्रसादाख्यो गुणो व्यापीत्युक्तं विवृणोति—**येत्यादि** । **या काचित्सङ्घटना सेति** । दीर्घसमादिरूपा सङ्घटनेत्यर्थः । **अभीष्टत्वादिति** । प्रसादानुसरणस्याभिप्रेतत्वादित्यर्थः । उक्तावित्यनेनास्य सम्बन्धः । **अत्रार्थ** इति । सर्वत्र प्रसादस्यानुसर्तव्यत्व इत्यर्थः । **स्वकण्ठेनेत्यादि** । तदपरित्यागे न न प्रकाशयतीत्यनेनान्वयः, प्रसादातिक्रम इत्यादिना व्यतिरेकश्चोक्त इत्यर्थः । भावमाह—**ओजोमाधुर्ययोरित्यादि** । **अन्योन्येति** । माधुर्याभावरूपत्वमोजसस्तदभावरूपत्वं माधुर्यस्य चेत्यर्थः । **सङ्कर** इति । शृङ्गारादावोजसो रौद्रादौ माधुर्यस्य च समावेश इत्यर्थः । **श्रुतिबाह्य** इति । अश्रुत इत्यर्थः । तस्मादित्याद्यविरुद्धमित्यन्तग्रन्थस्य तात्पर्यमाह—**यदि गुणा** इत्यादिना ॥ ५, ६ ॥

**विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति ।**
**काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा ॥ ७ ॥**

वक्तृवाच्यगतौचित्ये सत्यपि विषयाश्रयमन्यदौचित्यं सङ्घटनां नियच्छति । यतः काव्यस्य प्रभेदा मुक्तकं संस्कृतप्राकृतापभ्रंशनिबद्धम् । सन्दानितकविशेषककलापककुलकानि । पर्यायबन्धः परिकथा खण्डकथा सकलकथे सर्गबन्धोऽभिनेयार्थमाख्यायिकाकथे इत्येवमादयः । तदाश्रये-

लोचनम्

हेतुत्वेनोक्तं तद्गुणानामपि नियमहेतुरिति पक्षत्रयेऽपि न कश्चिद्विप्लव इति तात्पर्यम् ॥ ५, ६ ॥

नियामकान्तरमप्यस्तीत्याह—**विषयाश्रयमिति** । विषयशब्देन सङ्घातविशेष उक्तः । यथा हि सेनाद्यात्मकसङ्घातनिवेशी पुरुषः कातरोऽपि तदौचित्यादनुगुणतयैवास्ते तथा काव्यवाक्यमपि सङ्घातविशेषात्मकसन्दानितकादिमध्यनिविष्टं तदौचित्येन वर्तते । मुक्तकं तु विषयशब्देन यदुक्तं तत्सङ्घाताभावेन स्वातन्त्र्यमात्रं प्रदर्शयितुं स्वप्रतिष्ठितमाकाशमिति यथा । अपिशब्देनेदमाह—सत्यपि वक्तृवाच्यौचित्ये विषयौचित्यं केवलं तारतम्यभेदमात्रव्याप्तम्, न तु विषयौचित्येन वक्तृवाच्यौचित्यं निवार्यत इति । **मुक्तकमिति** । मुक्तमन्येनानालिङ्गितं तस्य सञ्ज्ञायां कन् । तेन स्वतन्त्रतया परिसमाप्तनिराकाङ्क्षार्थमपि प्रबन्धमध्यवर्ति न मुक्तकमित्युच्यते । मुक्तक-

बालप्रिया

सदृष्टान्तं विवृणोति—**यथेत्यादि** । **सेनेति** । सेनाद्यात्मको यस्सङ्घातः समुदायः तत्र निवेशी निविष्टः । **कातरोऽपीति** । स्वतः अधीरोऽपीत्यर्थः । कातरादिरपीति च पाठः । **तदनुगुणतयेति** । सेनाद्यनुगुणतयेत्यर्थः । अकातरत्वेनेति यावत् । **काव्यवाक्यमिति** । काव्यरूपं वाक्यमित्यर्थः । नन्वेवं मुक्तकस्यैकपद्यात्मकस्य सङ्घातरूपत्वाभावात् वृत्तौ तस्य काव्यप्रभेदत्वेन कथनं किमर्थमित्यत आह—**मुक्तकम्त्वित्यादि** । तत् तद्वचनम् । सङ्घाताभावेन सङ्घातरूपत्वाभावेन । **स्वातन्त्र्येति** । मुक्तकस्यापि रसस्यन्दित्वात्सङ्घटनानियमने स्वातन्त्र्यमस्तीत्येतावन्मात्रं प्रदर्शयितुं मुक्तकमपि काव्यप्रभेदत्वेनोक्तमित्यर्थः । अत्र दृष्टान्तमाह—**स्वेत्यादि** । पृथिव्यादीनाञ्चतुर्णामाकाशे प्रतिष्ठितत्वमित्युक्त्वाकाशस्य कुत्र प्रतिष्ठेति प्रश्ने प्रतिवाक्यमिदमाकाशं स्वस्मिन्नाकाशे प्रतिष्ठितमिति ब्रह्म ब्रह्मणीव आकाशमाकाश एव प्रतिष्ठितन्नान्यत्रेत्यर्थः । यथैतद्वचनमाकाशस्य स्वातन्त्र्यप्रदर्शकमात्रं तथेत्यर्थः । **सत्यपीति** । सत्येवेत्यर्थः । **तारतम्येति** । तारतम्यभेदमात्रप्रयोजकमित्यर्थः । **अन्येनानालिङ्गितमिति** । निराकाङ्क्षप्रतिपत्तये स्वेतरानपेक्षीत्यर्थः । **संज्ञायां कन्निति** । अनेन

णापि सङ्घटना विशेषवती भवति । तत्र मुक्तकेषु रसबन्धाभिनिवेशिनः कवेस्तदाश्रयमौचित्यम् । तच्च दर्शितमेव । अन्यत्र कामचारः ।

लोचनम्

स्यैव विशेषणं संस्कृतेत्यादि । क्रमभावित्वात्तथैव निर्देशः । द्वाभ्यां क्रियासमाप्तौ सन्दानितकम् । त्रिभिर्विशेषकम् । चतुर्भिः कलापकम् । पञ्चप्रभृतिभिः कुलकम् । इति क्रियासमाप्तिकृता भेदा इति द्वन्द्वेन निर्दिष्टाः । अवान्तरक्रियासमाप्तावपि वसन्तवर्णनादिरेकवर्णनीयोद्देशेन प्रवृत्तः पर्यायबन्धः । एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रकारा परिकथा । एकदेशवर्णना खण्डकथा । समस्तफलान्तेतिवृत्तवर्णना सकलकथा । द्वयोरपि प्राकृतप्रसिद्धत्वाद्द्वन्द्वेन निर्देशः । पूर्वेषां तु मुक्तकादीनां भाषायामनियमः । महाकाव्यरूपः पुरुषार्थफलः समस्तवस्तुवर्णनाप्रबन्धः सर्गबन्धः संस्कृत एव । अभिनेयार्थं दशरूपकं नाटिकात्रोटकरासकप्रकरणिकाद्यवान्तरप्रपञ्चसहितमनेकभाषाव्यामिश्ररूपम् । आख्यायिकोच्छ्वासादिना वक्त्रापरवक्त्रादिना च युक्ता । कथा तद्विरहिता । उभयोरपि गद्यबन्धस्वरूपतया द्वन्द्वेन निर्देशः । आदिग्रहणाच्चम्पूः । यथाह दण्डी–'गद्यपद्यमयी चम्पूः' इति । अन्यत्रेति । रसबन्धानभिनिवेशे ।

बालप्रिया

रूढिर्दर्शिता । तेनेति । रूढेरपि सत्वेनेत्यर्थः । न मुक्तकमित्युच्यत इति । प्रबन्धानन्तर्गत एव रूढिस्वीकारादिति भावः । संस्कृतप्राकृतापभ्रंशनिबद्धमित्येकवचनान्तत्वेन निर्देशादाह—मुक्तकस्यैवेत्यादि । विशेषणमिति । एकवचनान्तत्वेनोक्तेरिति शेषः । सन्दानितकेत्यादिना तु विपरिणामेन तत्पदं योज्यमिति भावः । एतेन पूर्वेषान्तु मुक्तकादीनां भाषायामनियम इति वक्ष्यमाणस्य नासङ्गतिः । हेमचन्द्रेणाप्येवमुक्तं "एतानि सर्वभाषाभिर्भवन्तो"ति । संस्कृतादीनां लक्षणानि काव्यादर्शादावुक्तानि । क्रमभावित्वादिति । संस्कृतात्प्राकृतस्य तस्मादपभ्रंशस्य चोत्पन्नत्वादिति भावः । तथैव संस्कृतेत्यादिक्रमेणैव । त्रिभिरित्यादौ क्रियासमाप्तावित्यस्यानुषङ्गः । कृता भेदा इति । एषामिति शेषः । द्वन्द्वेति हेतौ । क्रियासमाप्तिकृतभेदत्वेन समप्राधान्यादित्यर्थः । द्वन्द्वेन सन्दानितकेत्यादिना । प्रवृत्तः निबद्धः । एकं धर्मादीति । धर्मादिषु पुरुषार्थेष्वेकमित्यर्थः । एकदेशेति । प्रसिद्धेतिवृत्तैकदेशेत्यर्थः । महाकाव्यरूप इति । महाकाव्यादीनां लक्षणानि काव्यादर्शादावुक्तानि । द्वन्द्वेनेति । 'आख्यायिके'त्यादिद्वन्द्वेन । कथमपि कृतप्रत्यापत्ताविति । प्रत्यापत्तिः प्रत्यागमनम् । स्खलितं सजातगोत्रस्खलनम् । कृत्वेत्यादिव्याजेनाश्रवणमभिनीयेत्यर्थः । शून्ये सखीशून्ये । श्लोकोऽयं काव्यालङ्कारसङ्ग्रहव्याख्यायां विवृतः । 'मध्यमध्मासादीर्घस-

मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते । यथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव । सन्दानितकादिषु तु विकटनिबन्धनौचित्यान्मध्यमसमासादीर्घसमासे एव रचने । प्रबन्धाश्रयेषु यथोक्तप्रबन्धौचित्यमेवानुसर्तव्यम् । पर्यायबन्धे पुनरसमासामध्यमसमासे एव सङ्घटने । कदाचिदर्थौचित्याश्रयेण दीर्घसमासायामपि सङ्घटनायां परुषा ग्राम्या च वृत्तिः परिहर्तव्या । परिकथायां कामचारः, तत्रेतिवृत्तमात्रोपन्यासेन नात्यन्तं रसबन्धाभिनिवेशात् । खण्डकथासकलकथयोस्तु प्राकृतप्रसिद्धयोः कुलकादिनिबन्धनभूयस्त्वाद्दीर्घसमासायामपि न विरोधः । वृत्त्यौचित्यं तु यथारसमनुसर्तव्यम् । सर्ग-

लोचनम्

ननु मुक्तके विभावादिसङ्घटना कथं येन तदायत्तो रसः स्यादित्याशङ्क्याह—मुक्तकेष्विति । अमरुकस्येति ।

> कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे
> विरहकृशया कृत्वा व्याजप्रकल्पितमश्रुतम् ।
> असहनसखीश्रोत्रप्राप्तिं विशङ्क्य ससम्भ्रमं
> विवलितदृशा शून्ये गेहे समुच्छ्वसितं ततः ॥

इत्यत्र हि श्लोके स्फुटैव विभावादिसम्पत्प्रतीतिः । विकटेति । असमासायां हि सङ्घटनायां मन्थररूपा प्रतीतिः साकाङ्क्षा सती चिरेण क्रियापदं दूरवर्त्यनुधावन्ती वाच्यप्रतीतावेव विश्रान्ता सती न रसतत्त्वचर्वणायोग्या स्यादिति भावः । प्रबन्धा-

बालप्रिया

मासे एवेत्युक्तमुपपादयति—असमासायामित्यादि । सङ्घटनायामिति । सत्यामिति शेषः । मन्थररूपेति । मन्दीभवन्तीत्यर्थः । साकाङ्क्षेति । क्रियाद्याकाङ्क्षासहितेत्यर्थः । वाच्यप्रतीतावेव विश्रान्तेति । वाच्यार्थप्रतीतेश्चिरेणैव जायमानत्वादिति भावः । न स्यादिति । तथाच वाच्यप्रतीतिमान्थर्यादिपरिहाराय मध्यमसमासा दीर्घसमासा वा सङ्घटना कार्येति भावः । प्रबन्धाश्रयेष्वित्यत्र सन्दानितकादिष्वित्यस्यैवानुषङ्गो न तु मुक्तकेष्वित्यस्यापि पूर्वोक्तलक्षणस्य मुक्तकस्य

---

१. सङ्घटने इत्येव पाठस्स्वारसिकः प्रतिभाति । पूर्वकारिकायां 'सङ्घटनोदिता' इत्युक्तेः । एतत्कारिकावृत्तावपि 'सङ्घटनां नियच्छति' इत्यादिव्याहृतेश्च ।

२. अत्यन्तमिति विभक्तिप्रतिरूपकमव्ययमिति भावः ।

बन्धे तु रसतात्पर्ये यथारसमौचित्यमन्यथा तु कामचारः, द्वयोरपि मार्गयोः सर्गबन्धविधायिनां दर्शनाद्रसतात्पर्यं साधीयः । अभिनेयार्थे तु सर्वथा रसबन्धेऽभिनिवेशः कार्यः । आख्यायिकाकथयोस्तु गद्यनिबन्धनबाहुल्याद् गद्ये च छन्दोबन्धभिन्नप्रस्थानत्वादिह नियमे हेतुरकृतपूर्वोऽपि मनाक्रियते ।

**एतद्यथोक्तमौचित्यमेव तस्या नियामकम् ।**
**सर्वत्र गद्यबन्धेऽपि छन्दोनियमवर्जिते ॥ ८ ॥**

यदेतदौचित्यं वक्तृवाच्यगतं सङ्घटनाया नियामकमुक्तमेतदेव गद्ये छन्दोनियमवर्जितेऽपि विषयापेक्षं नियमहेतुः । तथा ह्यत्रापि यदा कविः कविनिबद्धो वा वक्ता रसभावरहितस्तदा कामचारः । रसभावसमन्विते तु वक्तरि पूर्वोक्तमेवानुसर्तव्यम् । तत्रापि च विषयौचित्यमेव । आख्या-

लोचनम्

**अर्थेष्विति** । सन्दानितकादिषु कुलकान्तेषु । यदि वा प्रबन्धेऽपि मुक्तकस्यास्तु सद्भावः, पूर्वापरनिरपेक्षेणापि हि येन रसचर्वणा क्रियते तदेव मुक्तकम् । यथा—'त्वामालिख्य प्रणयकुपितां' इत्यादिश्लोकः । **कदाचिदिति** रौद्रादिविषये । **नात्यन्तमिति** । रसबन्धे यो नात्यन्तमभिनिवेशस्तस्मादिति सङ्गतिः । **वृत्त्यौचित्यमिति** । परुषोपनागरिकाग्राम्याणां वृत्तीनामौचित्यं यथाप्रबन्धं यथारसं च । **अन्यथेति** । कथामात्रतात्पर्ये वृत्तिष्वपि कामचारः । **द्वयोरपीति** सप्तमी । कथातात्पर्ये सर्गबन्धो यथा भट्टजयन्तकस्य कादम्बरीकथासारम् । रसतात्पर्यं यथा रघुवंशादि । अन्ये तु संस्कृतप्राकृतयोर्द्वयोरिति व्याचक्षते । तत्र तु रसतात्पर्यं साधीय इति यदुक्तं तत्किमपेक्षयेति नेयार्थं स्यात् ॥ ७ ॥

बालप्रिया

प्रबन्धेष्वसम्भवादित्याह—**सन्दानितकादिष्वित्यादि** । पक्षान्तरमाह—**यदि वेत्यादि** । ननु तर्हि किं मुक्तकलक्षणमित्यत आह—**पूर्वेत्यादि** । नात्यन्तमित्याद्येकं पदम् । रसबन्धेऽभिनिवेशो रसबन्धाभिनिवेशः अत्यन्तं रसबन्धाभिनिवेशो यस्तस्याभावः नात्यन्तंरसबन्धाभिनिवेशस्तस्मादित्यर्थं इत्यभिप्रायेण व्याचष्टे—**रसबन्ध इत्यादि** । अत्यन्तं रसबन्धानभिनिवेशादिति च वृत्तौ पाठः । द्वयोरपि मार्गयोरिति सप्तम्यन्ते । तात्पर्यस्येति शेषः । कथातात्पर्यस्य रसतात्पर्यस्य चेत्यर्थ इत्याह—**द्वयोरित्यादि** । द्वयोरपि मार्गयोरित्यस्य व्याख्यानान्तरमाह—**अन्य इत्यादि** । तद् दूषयति—**तत्रेत्यादि** ॥ ७ ॥

यिकायां तु भूम्ना मध्यमसमासादीर्घसमासे एव सङ्घटने। गद्यस्य विकटबन्धाश्रयेण छायावत्त्वात्। तत्र च तस्य प्रकृष्यमाणत्वात्। कथायां तु विकटबन्धप्राचुर्येऽपि गद्यस्य रसबन्धोक्तमौचित्यमनुसर्तव्यम्।

रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।
रचना विषयापेक्षं तत्तु किञ्चिद्विभेदवत्॥ ९॥

अथवा पद्यवद्गद्यबन्धेऽपि रसबन्धोक्तमौचित्यं सर्वत्र संश्रिता रचना

लोचनम्

**विषयापेक्ष**मिति। गद्यबन्धस्य भेदा एव विषयत्वेनानुमन्तव्याः॥ ८॥

स्थितपक्षन्तु दर्शयति—**रसबन्धोक्त**मिति। वृत्तौ च वाशब्दोऽस्यैव पक्षस्य स्थितिद्योतकः। यथा—

स्त्रियो नरपतिर्वह्निर्विषं युक्त्या निषेवितम्।
स्वार्थाय यदि वा दुःखसम्भारायैव केवलम्॥ इति। cf. ध्वन्यालोक.

रचना सङ्घटना। तर्हि विषयौचित्यं सर्वथैव त्यक्तं नेत्याह—तदेव रसौचित्यं विषयं सहकारितयापेक्ष्य किञ्चिद्विभेदोऽवान्तरवैचित्र्यं विद्यते यस्य सम्पाद्यत्वेन तादृशं

बालप्रिया

**विषयत्वेने**ति। विषयशब्दार्थत्वेनेत्यर्थः॥ ८॥

'रसबन्धे'ति कारिकायां रचना सर्वत्र रसबन्धोक्तमौचित्यं संश्रिता भातीत्यन्वयः। वृत्तौ 'अथवे'ति न विकल्पार्थक इत्याह—**वृत्तौ च वाशब्द** इति। चकारो वाक्यालङ्कारे। **वाशब्द** इति। अथवेत्यत्र वाशब्द इत्यर्थः। **अस्ये**ति। पद्यवदित्यादिना वक्ष्यमाणस्येत्यर्थः। **स्थितिद्योतक** इति। निश्चितस्वरूपस्थितत्वद्योतक इत्यर्थः। सम्मतत्वद्योतक इति यावत्। अथवेत्यादिना पक्षान्तरकथने खलु शास्त्रकाराणां निर्भरः। उक्तार्थे महाकविप्रयोगमुपष्टम्भकतया दर्शयति—**स्त्रिय** इति। युक्त्या निषेवितं स्त्र्यादिचतुष्टयं स्वार्थाय स्वप्रयोजनाय भवति। इत्थं प्रसिद्ध्यनुरोधेनोक्त्वा स्वमतमाह—**यदि वे**त्यादि। युक्त्यान्यथा वा निषेवितं तच्चतुष्टयं केवलं **दुःखसम्भाराय** दुःखातिशयायैव भवति। अत्र यदिवेति दुःखसम्भारायैवेति स्थितपक्षद्योतकम्। "विषप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छये"ति रघुवंशश्लोकव्याख्याने "वाशब्दो वाक्यार्थस्य स्थितपक्षतां द्योतयती"त्यरुणाचलनाथाः। कारिकां व्यचष्टे—**रचने**त्यादि। **तर्ही**ति। रचनाया रसबन्धोक्तौचित्याश्रयणेन सर्वत्र भवनस्वीकारे सतीत्यर्थः। **त्यक्तमि**ति। किन्त्यक्तमिति चोद्यम्। **नेत्याहे**ति। न त्यक्तमिति प्रतिवक्तीत्यर्थः। तत्त्वित्यस्य व्याख्यानम्—**तदेवे**ति। तत्पदार्थमाह—**रसौचित्य**मिति। रसबन्धोक्तौचित्यमित्यर्थः। विषयापेक्षमित्यस्य विवरणम्—**विषयमि**-

भवति । तत्तु विषयापेक्षं किञ्चिद्विशेषवद्भवति, न तु सर्वाकारम् । तथा हि गद्यबन्धेऽप्यतिदीर्घसमासा रचना न विप्रलम्भशृङ्गारकरुणयोराख्यायिकायामपि शोभते । नाटकादावप्यसमासैव न रौद्रवीरादिवर्णने । विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च । तथा ह्याख्यायिकायां नात्यन्तमसमासा स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति सङ्घटनाया दिगनुसर्तव्या ।

इदानीमलक्ष्यक्रमव्यङ्ग्यो ध्वनिः प्रबन्धात्मा रामायणमहाभारतादौ

लोचनम्

भवति । एतद्व्याचष्टे—तत्त्विति । सर्वाकारमिति क्रियाविशेषणम् । असमासैवेति । सर्वत्रैवेति शेषः । तथा हि वाक्याभिनयलक्षणे 'चूर्णपादैः प्रसन्नैः' इत्यादि मुनिरभ्यधात् । अत्रापवादमाह—न चेति । नाटकादाविति । स्वविषयेऽपीति सम्बन्धः ॥ ९ ॥

एवं सङ्घटनायां चालक्ष्यक्रमो दीप्यत इति निर्णीतम् । प्रबन्धे दीप्यत इति तु निर्विवादसिद्धोऽयमर्थ इति नात्र वक्तव्यं किञ्चिदस्ति । केवलं कविसहृदयान् व्युत्पादयितुं रसव्यञ्जने येतिकर्तव्यता प्रबन्धस्य सा निरूपयितव्येत्याशयेनाह—इदानीमिति । इदानीं तत्प्रकारजातं प्रतिपाद्यत इति सम्बन्धः । प्रथमं तावदिति प्रबन्धस्य व्यञ्जकत्वे ये प्रकारास्ते क्रमेणैवोपयोगिनः । पूर्वं हि कथापरीक्षा । तत्राधिकारापः फल-

बालप्रिया

त्यादि । किञ्चिद्विभेदवदित्यस्य विवरणम्—किञ्चिदित्यादि । अस्य समासायत्तेन विद्यत इति सम्बन्धः । सर्वत्रैवासमासेत्यत्र मुनिवचनं प्रमाणयति—तथा हीत्यादि । वृत्तौ 'न चे'त्यत्र असमासैवेत्यस्यानुषङ्गः । 'प्रमाणत' इति । रसबन्धोक्तौचित्यरूपात्प्रमाणादित्यर्थः । 'आख्यायिकाया'मित्यादि । 'स्वविषयेऽपी'ति । अत्यन्तासमासाया विषये शृङ्गारादावपीत्यर्थः । 'ने'ति । शोभत इत्यस्यानुषङ्गः । न चारुरित्यर्थः । 'नाटकादा'विति । स्वविषयेऽपीत्यस्यानुषङ्गः । अतिदीर्घसमासायास्सङ्घटनाया विषये रौद्रवीरादावपीत्यर्थः । 'नाती'ति । अतिदीर्घसमासासङ्घटना न शोभत इत्यर्थः । "इतिकाव्यार्थे"त्यादिश्लोकः क्वचिद्ग्रन्थे न दृश्यते, अत एव न व्याख्यात ॥ ९ ॥

लोचनेऽवतारयति—एवमित्यादि । येतिकर्तव्यतेति । यः प्रकार इत्यर्थः । निरूप्या निरूपणार्हा । 'इदानी'मित्यस्यान्वयं 'तत्प्रतिपाद्यत' इत्यत्र तत्पदार्थञ्च दर्शयति—इदानीमित्यादि । प्रथमन्तावदितीति प्रतीकधारणम् । विभावेत्यादिनिर्देशक्रमस्य बीजन्दर्शयति—प्रबन्धस्येत्यादि । फलपर्यन्ततामक्रममिति । कथाया इति

1. भरतना.,

प्रकाशमानः प्रसिद्ध एव । तस्य तु यथा प्रकाशनं तत्प्रतिपाद्यते—

विभावभावानुभावसञ्चार्यौचित्यचारुणः ।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥ १० ॥
इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम् ।
उत्प्रेक्ष्याऽप्यन्तराभीष्टरसोचितकथोन्नयः ॥ ११ ॥
सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ १२ ॥
उद्दीपनप्रशमने यथावसरमन्तरा ।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ॥ १३ ॥
अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम् ।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥ १४ ॥

प्रबन्धोऽपि रसादीनां व्यञ्जक इत्युक्तं तस्य व्यञ्जकत्वे निबन्धनम् । प्रथमं तावद्विभावभावानुभावसञ्चार्यौचित्यचारुणः कथाशरीरस्य विधिर्यथायथं प्रतिपिपादयिषितरसभावाद्यपेक्षया य उचितो विभावो भावोऽनुभावः सञ्चारी वा तदौचित्यचारुणः कथाशरीरस्य विधिर्व्यञ्जकत्वे निब-

**लोचनम्**

पर्यन्ततानयनम् , रसं प्रति जागरणम् , तदुचितविभावादिवर्णनेऽलङ्कारौचित्यमिति । तत्क्रमेण पञ्चकं व्याचष्टे—**विभावेत्यादिना** । **तदौचित्येति** । शृङ्गारवर्णनेच्छुना तादृशी कथा संश्रयणीया यस्यामृतुमाल्यादेर्विभावस्य लीलादेरनुभावस्य

**बालप्रिया**

शेषः । तत्पञ्चकमिति । आद्यञ्चतुष्टयं श्लोकचतुष्टयेन क्रमान्निर्दिष्टं, पञ्चमन्त्वर्धश्लोकेनेति बोध्यम् । विभावाद्यौचित्यचारुणः कथाशरीरस्य विधिरित्येतद्रसविशेषमुपादाय विवृणोति—**शृङ्गारवर्णने चुम्बनेत्यादि** । वृत्तौ 'प्रकृति'रित्यादि । प्रकृतिः स्वभावः । 'दिव्ये'त्यादि । दिव्या मानुषी दिव्यमानुषी पातालीयेत्यादिर्बहुविधेत्यर्थः । तत्र दिव्या प्रकृतिरमर्त्यैकरूपत्वं यथा श्रीमहेश्वरादेः । मानुषी मर्त्यैकरूपत्वं यथा माधवादेः । दिव्यमानुषी पाण्डवादेरिति बोध्यम् । 'तामि'ति । प्रकृतिमित्यर्थः । 'असङ्कीर्णः' स्थाय्यन्तरासङ्कीर्णः । 'औचित्यवानि'ति । औचित्यभागिति च पाठः । क्वचिद्ग्रन्थे भवतीत्यनन्तरं नान्यथेति च पाठः । 'अन्यथे'त्यादि । अन्यथा उक्तप्र-

न्धनमेकम् । तत्र विभावौचित्यं तावत्प्रसिद्धम् । भावौचित्यं तु प्रकृत्यौचित्यात् । प्रकृतिर्ह्युत्तममध्यमाधमभावेन दिव्यमानुषादिभावेन च विभेदिनी । तां यथायथमनुसृत्यासङ्कीर्णः स्थायी भाव उपनिबध्यमान औचित्यभाग् भवति । अन्यथा तु केवलमानुषाश्रयेण दिव्यस्य केवलदिव्याश्रयेण वा केवलमानुषस्योत्साहादय उपनिबध्यमाना अनुचिता भवन्ति । तथा च केवलमानुषस्य राजादेर्वर्णने सप्तार्णवलङ्घनादिलक्षणा व्यापारा उपनिबध्यमानाः सौष्ठवभृतोऽपि नीरसा एव नियमेन भवन्ति, तत्र त्वनौचित्यमेव हेतुः ।

ननु नागलोकगमनादयः सातवाहनप्रभृतीनां श्रूयन्ते, तद्लोकसामान्यप्रभावातिशयवर्णने किमनौचित्यं सर्वोर्वीभरणक्षमाणां क्षमाभुजामिति । नैतदस्ति ; न वयं ब्रूमो यत्प्रभावातिशयवर्णनमनुचितं राज्ञाम् , किं तु केवलमानुषाश्रयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यमौचित्यं न योजनीयम् । दिव्यमानुष्यायां तु कथायामुभयौचित्ययोजनमविरुद्धमेव । यथा पाण्डवादिकथायाम् । सातवाहनादिषु तु येषु यावदपदानं श्रूयते तेषु तावन्मात्रमनुगम्यमानमनुगुणत्वेन प्रतिभासते । व्यतिरिक्तं तु तेषामेवोपनिबध्यमानमनुचितम् । तदयमत्र परमार्थः—

> अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
> प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥

लोचनम्

हर्षधृत्यादेः सञ्चारिणः स्फुट एव सद्भाव इत्यर्थः । **प्रसिद्धमिति** । लोके भरतशास्त्रे च । **व्यापार** इति । तद्विषयोत्साहोपलक्षणमेतत् । स्थाय्यौचित्यं हि व्याख्येयत्वेनोपक्रान्तं नानुभावौचित्यम् । **सौष्ठवभृतोऽपीति** । वर्णनामहिम्नेत्यर्थः । **तत्र त्विति** नीरसत्वे । **व्यतिरिक्तं त्विति** । अधिकमित्यर्थः ।

बालप्रिया

कारातिक्रमणेन । दिव्यस्य उत्साहादयः केवलमानुषाश्रयेण केवलमानुषस्योत्साहादयः केवलदिव्याश्रयेण वा उपनिबध्यमाना इत्यन्वयः । 'तथाचे'ति । तथाहीत्यर्थः । लोचने—**तद्विषयेति** । व्यापारविषयकेत्यर्थः । **एतदिति** । व्यापारपदमित्यर्थः । कुत इत्यत आह—**स्थायीत्यादि** । वृत्तौ 'भान्ती'ति 'भवन्ती'ति च पाठः ।

अत एव च भरते प्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यकर्तव्यतयोपन्यस्तम् । तेन हि नायकौचित्यानौचित्यविषये कविर्न व्यामुह्यति । यस्तूत्पाद्यवस्तु नाटकादि कुर्यात्तस्याप्रसिद्धानुचितनायकस्वभाववर्णने महान् प्रमादः ।

लोचनम्

एतदुक्तं भवति—यत्र विनेयानां प्रतीतिखण्डना न जायते तादृग्वर्णनीयम् । तत्र केवलमानुषस्य एकपदे सप्तार्णवलङ्घनमसम्भाव्यमानतयानृतमिति हृदये स्फुरदुपदेश्यस्य चतुर्वर्गोपायस्याप्यलीकतां बुद्धौ निवेशयति । रामादेस्तु तथाविधमपि चरितं पूर्वप्रसिद्धिपरम्परोपचितसम्प्रत्ययोपारूढमसत्यतया न चकास्ति । अत एव तस्यापि यदा प्रभावान्तरमुत्प्रेक्ष्यते तदा तादृशमेव । न त्वसम्भावनापदं वर्णनीयमिति । तेन हीति । प्रख्यातोदात्तनायकवस्तुत्वेन । व्यामुह्यतीति किं वर्णयेयमिति । यस्त्विति कविः । महान् प्रमाद इति । तेनोत्पाद्यवस्तु नाटकादि न

बालप्रिया

शङ्कते—'नन्वि'त्यादि । 'नागलोके'ति । नाकलोकेति च पाठः । 'तदि'ति । तस्मादित्यर्थः । क्ष्माभुजामित्यस्य वर्णने इत्यनेन सम्बन्धः । किमिति प्रश्ने निषेधे वा । परिहरति—'नैतदि'त्यादि । नैतदस्ति एतच्चोद्यं न भवति । कुत इत्यत्राह—'ने'त्यादि । राज्ञां प्रभावातिशयवर्णनं यद्द्वयं तदनुचितं न ब्रूम इति सम्बन्धः । व्यतिरिक्तन्त्वित्यादिग्रन्थस्य सारार्थमाह लोचने—एतदुक्तमित्यादि । यत्रेति । वर्ण्यमाने यस्मिंश्चरित इत्यर्थः । प्रतीतिखण्डना प्रतीतेरप्रतिष्ठा । केवलमानुषस्येति । वर्ण्यमानमिति शेषः । सप्तार्णवलङ्घनं कर्तृ निवेशयतीति सम्बन्धः । अनृतमितीति । असत्यत्वेनेत्यर्थः । हृदये बुद्धावित्युभयत्र विनेयानामित्यस्यानुषङ्गेण सम्बन्धः । अलीकतामिति । असत्यतामित्यर्थः । विशेषमाह—रामादेस्त्विति । तथाविधमिति । अर्णवलङ्घनादिरूपमित्यर्थः । पूर्वप्रसिद्धीति । पूर्वा पुरातनी या प्रसिद्धिपरम्परा तया उपचितो यः सम्प्रत्ययो विश्वासः तमुपारूढमिति हेतुगर्भम् । तस्यापि रामादेरपि । उत्प्रेक्ष्यते कल्पनापूर्वकं वर्ण्यते । तादृशमेव असत्यतया स्फुरेदेव । परमतात्पर्यमाह—न त्वित्यादि । असम्भावनापदमिति । असम्भाव्यत्वबुद्धिविषयभूतमित्यर्थः । व्यामोहाकारमाह—किमित्यादि । मुनिना नाटकादेरुत्पाद्यवस्तुत्वस्यानिरूपितत्वादुत्पाद्यवस्तुनाटकादीति यथाश्रुतार्थस्यासङ्गत्या यो नाटकादि उत्पाद्यवस्तु सत् कुर्यात्तस्य महान् प्रमादस्स्यादिति योजनाम्मनसि कृत्य तात्पर्यं वद्णोति—तेनेत्यादि । तेन कवेर्महतः प्रमादस्य प्रसङ्गेन हेतुना । मुनिना नाटकादि

ननु यद्युत्साहादिभाववर्णने कथञ्चिद्दिव्यमानुष्याद्यौचित्यपरीक्षा क्रियते तत्क्रियताम्, रत्यादौ तु किं तया प्रयोजनम्? रतिर्हि भारतवर्षोचितेनैव व्यवहारेण दिव्यानामपि वर्णनीयेति स्थितिः। नैवम्; तत्रौचित्यातिक्रमेण सुतरां दोषः। तथा ह्यधमप्रकृत्यौचित्येनोत्तमप्रकृतेः शृङ्गारोपनिबन्धने का भवेन्नोपहास्यता। त्रिविधं प्रकृत्यौचित्यं भारते वर्षेऽप्यस्ति शृङ्गारविषयम्। यत्तु दिव्यमौचित्यं तत्तत्रानुपकारकमेवेति चेत्—न वयं दिव्यमौचित्यं शृङ्गारविषयमन्यत्किञ्चिद्ब्रूमः। किं तर्हि? भारतवर्षविषये यथोत्तमनायकेषु राजादिषु शृङ्गारोपनिबन्धस्तथा दिव्याश्रयोऽपि शोभते। न च राजादिषु प्रसिद्धग्राम्यशृङ्गारोपनिबन्धनं प्रसिद्धं नाटकादौ, तथैव देवेषु तत्परिहर्तव्यम्। नाटकादेरभिनेयार्थत्वादभिनयस्य च सम्भोगशृङ्गारविषयस्यासभ्यत्वात्तत्र परिहार इति चेत्—न; यद्यभिनयस्यैवंविषयस्यासभ्यता तत्काव्यस्यैवंविषयस्य सा केन निवार्यते? तस्मादभिनेयार्थेऽनभिनेयार्थे वा काव्ये यदुत्तमप्रकृते राजादेरुत्तमप्रकृतिभिर्नायिकाभिः सह ग्राम्यसम्भोगवर्णनं तत्पित्रोः सम्भोगवर्णनमिव सुतरामसभ्यम्। तथैवोत्तमदेवतादिविषयम्।

लोचनम्

निरूपितं मुनिनेति न कर्तव्यमिति तात्पर्यम्। आदिशब्दः प्रकारे, डिमादेः प्रसिद्धदेवचरितस्य सङ्ग्रहाऽर्थः।

बालप्रिया

उत्पाद्यवस्तु सत् न निरूपितमिति सम्बन्धः। इतीति हेतौ। न कर्तव्यमिति। कविना नाटकादि उत्पाद्यवस्तु सन्न निबद्धव्यमित्यर्थः। 'नाटकादी'त्यत्रादिशब्दं विवृणोति—प्रकार इत्यादि। प्रकारे सादृश्ये, तच्च प्रख्यातवस्तुत्वेन बोध्यम्। 'डिमादे'रित्यादिपदेन व्यायोगो ग्राह्यः। "प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चे"त्यादि डिमलक्षणम्। व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीर इत्यादिव्यायोगलक्षणञ्च नाट्यशास्त्रादावुक्तम्।

नाटकादीत्यत्र नाटकमादिः यस्येति व्युत्पत्त्या नाटकादिपदेनातद्गुणसंविज्ञानबहुव्रीहिणा प्रकरणं विवक्षितमतो न यथाश्रुतार्थानुपपत्तिरिति कश्चिदाह, तन्मतमाह—

१. यद्दिव्यनायककृतं काव्यं सङ्ग्रामबन्धवधयुक्तम्।
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु॥ (भरत., २०.१०१.) इति भरतनाट्यशास्त्रे व्यक्तोऽयं विषयः।

न च सम्भोगशृङ्गारस्य सुरतलक्षण एवैकः प्रकारः, यावदन्येऽपि प्रभेदाः परस्परप्रेमदर्शनादयः सम्भवन्ति, ते कस्मादुत्तमप्रकृतिविषये न वर्ण्यन्ते ? तस्मादुत्साहवद्रतावपि प्रकृत्यौचित्यमनुसर्तव्यम् । तथैव विस्मयादिषु । यत्त्वेवंविधे विषये महाकवीनाप्यसमीक्ष्यकारिता लक्ष्ये दृश्यते स दोष एव । स तु शक्तितिरस्कृतत्वात्तेषां न लक्ष्यत इत्युक्तमेव । अनुभावौचित्यं तु भरतादौ प्रसिद्धमेव ।

लोचनम्

अन्यस्तु—'उपलक्षणमुक्तो बहुव्रीहिरिति प्रकरणमत्रोक्तमि'त्याह । 'नाटिकादि' इति वा पाठः । तत्रा दिग्रहणं प्रकारसूचकम्, तेन मुनिनिरूपिते नाटिकालक्षणे 'प्रकरणनाटकयोगादुत्पाद्यं वस्तु नायको नृपतिः'[1] इत्यत्र यथासंख्येन प्रख्यातोदात्तनृपतिनायकत्वं बोद्धव्यमिति भावः । कथं तर्हि सम्भोगशृङ्गारः कविना निबध्यतामित्याशङ्क्याह—न चेति । तथैवेति । मुनिनापि स्थाने स्थाने प्रकृत्यौचित्यमेव विभावानुभावादिषु बहुतरं प्रमाणीकृतं '[2]स्थैर्येणोत्तममध्यमाधमानां नीचानां सम्भ्रमेण' इत्यादि वदता ।

बालप्रिया

अन्यस्त्वित्यादि । उक्तो बहुव्रीहिरुपलक्षणमिति । नाटकादीति बहुव्रीहिरन्योपलक्षक इत्यर्थः । इतीति हेतौ । प्रकारान्तरेणाह—नाटिकादीत्यादि । प्रकारसूचकं सादृश्यबोधकम् । सादृश्यमुत्पाद्यवस्तुत्वेन बोध्यम्, प्रकरणादिकमादिपदेन ग्राह्यमिति भावः । तेनेति । नाटिकादेरुत्पाद्यवस्तुत्वकथनेनेत्यर्थः । वस्तुन एवोत्पाद्यत्वोक्त्येति यावत् । बोद्धव्यमिति । नायके उत्पाद्यत्वस्यान्वयो नेति भावः ।

वृत्तौ 'नन्वि'त्यादि । 'दिव्ये'ति । दिव्यं मानुष्यञ्च तदादि यदौचित्यं तस्य परीक्षा । यदि क्रियत इति सम्बन्धः । 'तत्' तर्हि । 'तया' दिव्यमानुष्याद्यौचित्यपरीक्षया । 'तत्रे'ति । रत्यादावित्यर्थः । पुनश्शङ्कते—'यत्त्वि'त्यादि । परिहरति—'ने'त्यादि । 'दिव्याश्रयोऽपी'ति । शृङ्गारोपनिबन्ध इत्यनुषङ्गः । 'न चे'ति । नाटकादौ राजादिषु न च प्रसिद्धमित्यन्वयः । 'प्रसिद्धे'ति । अधमपात्रगतत्वेन प्रसिद्धेत्यर्थः । 'तदि'ति । ग्राम्यशृङ्गारोपनिबन्धनमित्यर्थः । शङ्कते—'नाटकादेरि'ति । 'तत्रे'ति । नाटकादावित्यर्थः । 'एवं विषयस्यासभ्यते'ति । सम्भोगशृङ्गारविषयस्यासभ्यतेत्यर्थः । 'से'ति । असभ्यतेत्यर्थः । न च सम्भोगशृङ्गारस्येत्यादिग्रन्थमवतारयति लोचने—कथन्तर्हीत्यादि । तथैव विस्मयादिष्वित्यत्र प्रमाणमाह—मुनिनापीत्यादि । स्थैर्येणेति ।

१. भरतभा., २०. ६० २. भरतना., ७. ६३

इयत्तूच्यते—भरतादिविरचितां स्थितिं चानुवर्तमानेन महाकविप्रबन्धांश्च पर्यालोचयता स्वप्रतिभां चानुसरता कविनावहितचेतसा भूत्वा विभावाद्यौचित्यभ्रंशपरित्यागे परः प्रयत्नो विधेयः । औचित्यवतः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ग्रहो व्यञ्जक इत्यनेनैतत्प्रतिपादयति—यदितिहासादिषु कथासु रसवतीषु विविधासु सतीष्वपि यत्तत्र विभावाद्यौचित्यवत्कथाशरीरं तदेव ग्राह्यं नेतरत् । वृत्तादपि च कथाशरीरादुत्प्रेक्षिते विशेषतः प्रयत्नवता भवितव्यम् । तत्र ह्यनवधानात्स्खलतः कवेरव्युत्पत्तिसम्भावना महती भवति ।

परिकरश्लोकश्चात्र—

कथाशरीरमुत्पाद्यवस्तु कार्यं तथातथा ।
यथा रसमयं सर्वमेव तत्प्रतिभासते ॥

लोचनम्

**इयदिति** । लक्षणज्ञत्वं लक्ष्यपरिशीलनमदृष्टप्रसादोदितस्वप्रतिभाशालित्वं चानुसर्तव्यमिति संक्षेपः । रसवतीष्वित्यनादरे सप्तमी । रसवत्त्वं चाविवेचकजनाभिमानाभिप्रायेण मन्तव्यम् । विभावाद्यौचित्येन हि विना का रसवत्ता । कवेरिति ।

बालप्रिया

"स्त्रीनीचप्रकृतिष्वेष शोको व्यसनसम्भवः ।
धैर्येणोत्तममध्यानां नीचानां रुदितेन च" ॥

इति भावाध्याये पाठः । अत्राभिनेय इत्यस्यानुषङ्गः । 'भरतादिविरचितां स्थितिञ्चानुवर्तमानेने'त्यादितृतीयान्तपदत्रयलब्धमर्थमाह—**लक्षणज्ञत्वमित्यादि** । **अदृष्टेति** । अदृष्टं सुकृतं प्रसादो देवतादिप्रसादः ताभ्यामुदिता या स्वप्रतिभा तच्छालित्वमित्यर्थः । **अनादरे सप्तमीति** । इतिहासादिषु विविधासु रसवतीषु कथासु सतीष्वपि ताः कथा अनादृत्य तत्र तासाम्मध्ये यत्कथाशरीरमौचित्यवत्तदेव कविना ग्राह्यं, नेतरद्विभावाद्यौचित्यशून्यं कथाशरीरं रसवदपि न ग्राह्यमिति वृत्त्यर्थ इति भावः । ननु विभावाद्यौचित्याभावे कथं रसवत्वमित्यत आह—**रसवत्वञ्चेति** । **अविवेचकेत्यादि** । अविवेचकजनानां योऽभिमानः रसवत्वाभिमानः तदभिप्रायेण ज्ञातव्यमित्यर्थः । अत्र हेतुमाह—**विभावाद्यौचित्येनेत्यादि** । महती अव्युत्पत्तिसम्भावना भवतीत्युक्तं विवृणोति—**न हीत्यादि** । **तत्रेति** । स्वयमुत्प्रेक्षिते कथाशरीर इत्यर्थः । **जात्युत्तरमिति** । असमीचीनमुत्तरमित्यर्थः । तत्र इति जात्युत्तरमपि न सम्भवतीति सम्बन्धः । सन्तीत्यादिकं विवृणोति—**सिद्ध इत्यादि** । **आस्वादेति** । आस्वाद-

तत्र चाभ्युपायः सम्यग्विभावाद्यौचित्यानुसरणम् । तच्च दर्शितमेव ।

किञ्च—

सन्ति सिद्धरसप्रख्या ये च रामायणादयः ।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी ॥

तेषु हि कथाश्रयेषु तावत्स्वेच्छैव न योज्या । यदुक्तम्—'कथामार्गे न चाल्पोऽप्यतिक्रमः' । स्वेच्छापि यदि योज्या तद्रसविरोधिनी न योज्या ।

इदमपरं प्रबन्धस्य रसाभिव्यञ्जकत्वे निबन्धनम् । इतिवृत्तवशायातां कथञ्चिद्रसाननुगुणां स्थितिं त्यक्त्वा पुनरुत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयो विधेयः यथा कालिदासप्रबन्धेषु । यथा च सर्वसेनविरचिते

लोचनम्

न हि तत्रेतिहासवशादेव मया निबद्धमिति जात्युत्तरमपि सम्भवति । तत्र चेति । रसमयत्वसम्पादने । सिद्धेति । सिद्धः आस्वादमात्रशेषो न तु भावनीयो रसो येषु । कथानामाश्रया इतिहासाः, तैरितिहासार्थैः तैस्सह स्वेच्छा न योज्या । सहार्थश्चात्र विषयविषयिभाव इति व्याचष्टे—तेष्विति सप्तम्या । स्वेच्छा तेषु न योज्या, कथञ्चिद्वा यदि योज्यते तत्तत्प्रसिद्धरसविरुद्धा न योज्या । यथा रामस्य धीरललितत्वयोजनेन नाटिकानायकत्वं कश्चित्कुर्यादिति त्वत्यन्तासमञ्जसम् । यदुक्तमिति । रामाभ्युदये यशोवर्मणा । 'स्थितमिति' यथा शय्याम् । कालिदासेति । रघुवंशेऽजादीनां राज्ञां विवाहादिवर्णनं नेतिहासेषु निरूपितम् । हरिविजये कान्तानुनयनाङ्गत्वेन पारिजातहरणादि निरूपितमितिहासेष्वदृष्टमपि । तथार्जुनचरितेऽर्जुनस्य पातालविज-

बालप्रिया

मात्रं सहृदयास्वाद एव शेषः शिष्टांशो यस्य सः । मात्रपदव्यवच्छेद्यमाह—न त्वित्यादि । भावनीयः वर्णनया सम्पादनीयः । सिद्धरसाः प्रख्याः प्रख्याताश्च सिद्धरसप्रख्या ये रामायणादयः कथाश्रयास्सन्तीति सम्बन्धः । तत्र कथाश्रयपदं व्याचष्टे—कथानामित्यादि । तैरित्येतद्व्याचष्टे—इतिहासार्थैरिति । न तैरित्यादिकं वाक्यद्वये पर्यवसन्नमित्याशयेन तेष्वित्यादि व्याख्यातं वृत्तौ, तत्र तैरित्यनेन तेष्वित्यर्थः । कथं लब्ध इत्यतस्तद्ग्रन्थमवतारयति—तैरित्यादि । तेष्विति सप्तम्येति । सप्तमीयं वैषयिकाधिकरण इति भावः । स्वेच्छेति । स्वेच्छानिर्मिता अर्था इत्यर्थः । तेष्विति । सिद्धरसप्रख्येषु कथाश्रयेष्वित्यर्थः । यथा रामस्येति । रामायणप्रसिद्धस्तदीयो रसो हि वीर इति भावः । वृत्तौ—'न चाल्पोऽप्यतिक्रम' इति । अल्पोऽप्यतिक्रमो न कार्य इत्यर्थः । 'इति वृत्ते'त्यादि । कथञ्चिद्रसाननुगुणां कयाऽपि विधया

हरिविजये । यथा च मदीय एवार्जुनचरिते महाकाव्ये । कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम् । तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्तदेमां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत् । न हि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित्प्रयोजनम्, इतिहासादेव तत्सिद्धेः ।

रसादिव्यञ्जकत्वे प्रबन्धस्य चेदमन्यन्मुख्यं निबन्धनं, यत्सन्धीनां मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्यानां तदङ्गानां चोपक्षेपादीनां घटनं

लोचनम्

यादि वर्णितमितिहासाप्रसिद्धम् । एतदेव युक्तमित्याह—**कविनेति** । **सन्धीनामिति** । इह प्रभुसम्मितेभ्यः श्रुतिस्मृतिप्रभृतिभ्यः कर्तव्यमिदमित्याज्ञामात्रपरमार्थेभ्यः शास्त्रेभ्यो ये न व्युत्पन्नाः, न चाप्यस्येदं वृत्तममुष्मात्कर्मण इत्येवं युक्तियुक्तकर्मफलसम्बन्धप्रकटनकारिभ्यो मित्रसम्मितेभ्य इतिहासशास्त्रेभ्यो लब्धव्युत्पत्तयः, अथ चावश्यं व्युत्पाद्याः प्रजार्थसम्पादनयोग्यताक्रान्ता राजपुत्रप्रायास्तेषां हृदयानुप्रवेशमुखेन चतुर्वर्गोपायव्युत्पत्तिराधेया । हृदयानुप्रवेशश्च रसास्वादमय एव । स च रसश्चतुर्वर्गोपायव्युत्पत्तिनान्तरीयकविभावादिसंयोगप्रसादोपनत इत्येवं रसोचितविभावाद्युपनिबन्धे रसास्वादवैवश्यमेव स्वरसभाविन्यां व्युत्पत्तौ प्रयोजकमिति प्रीतिरेव व्युत्पत्तेः प्रयोजिका । प्रीत्यात्मा च रसस्तदेव नाट्यं नाट्यमेव वेद इत्यस्मदुपाध्यायः । न चैते प्रीतिव्युत्पत्ती भिन्नरूपे एव, द्वयोरप्येकविषयत्वात् । विभावाद्यौचि-

बालप्रिया

रसानुगुण्यरहिताम् । 'उत्प्रेक्ष्य' आलोच्य । 'अन्तरा' मध्ये । 'अभीष्टे'ति । अभीष्टस्य रसस्य उचितायाः कथाया उन्नयः घटनम् । उक्तमेवार्थं स्फुटं विवृणोति–'कविने'त्यादि । 'प्रबन्धमि'ति 'काव्यमि'ति च पाठः । लोचने 'सन्धीनामि'त्यादिग्रन्थार्थं विवृणोति–**इह प्रभुसम्मितेभ्य** इत्यादि । **कर्तव्यमिदमिति** उपलक्षणमेतदिदं न कर्तव्यमित्यस्य । **शास्त्रेभ्य** इति हेतौ पञ्चमी । **न चापीति** । लब्धव्युत्पत्तय इत्यनेनास्य सम्बन्धः । **अस्येति** नायकविशेषस्य निर्देशः । **इदं वृत्तमिति** । एतत्फलं जातमित्यर्थः । **शास्त्रीति** । शास्त्रमितिहासात्मकानि शास्त्राणि इतिहासशास्त्राणि तेभ्यः । अथ चावश्यं व्युत्पाद्या इत्यत्र हेतुमाह—**प्रजार्थेति** । प्रजानामर्थसम्पादने परिपालने या योग्यता राजकुलप्रसूतत्वादिरूपा तया आक्रान्ता आश्रिता इत्यर्थः । **चतुरिति** । चतुर्वर्गोपायव्युत्पत्तिः नान्तरीयकमानुषङ्गिकफलं यस्य तथाविधो यो विभावादिसंयोगः **तत्प्रसादोपनतः** तेनोत्पादित इत्यर्थः । **इत्येवमिति** । उक्तप्रकारेणेत्यर्थः । **प्रीतिरेवेति** । रसास्वादानन्द एवेत्यर्थः । **भिन्नरूपे** इति । विभिन्नविषयके इत्यर्थः ।

लोचनम्

त्यमेव हि सत्यतः प्रीतेर्निदानमित्यसकृदवोचाम। विभावादीनां तद्रसोचितानां यथास्वरूपवेदनं फलपर्यन्तीभूततया व्युत्पत्तिरित्युच्यते। फलं च नाम यददृष्टवशाद्देवताप्रसादादन्यतो वा जायते। न च तदुपदेश्यम्, तत उपाये व्युत्पत्त्ययोगात्। तेनोपायक्रमेण प्रवृत्तस्य सिद्धिः अनुपायद्वारेण प्रवृत्तस्य नाश इत्येवं नायकप्रतिनायकगतत्वेनार्थानर्थोपायव्युत्पत्तिः कार्या। उपायश्च कर्त्राश्रीयमाणः पञ्चावस्था भजते। तद्यथा—स्वरूपं, स्वरूपात्किञ्चिदुच्छूनतां, कार्यसम्पादनयोग्यतां, प्रतिबन्धोपनिपातेनाशङ्क्यमानतां, निवृत्तप्रतिपक्षतायां बाधकबाधनेन सुदृढफलपर्यन्तताम्। एवमार्तिसहिष्णूनां विप्रलम्भभीरूणां प्रेक्षापूर्वकारिणां तावदेवं कारणोपादानम्। ता एवंविधाः पञ्चावस्थाः कारणगता मुनिनोक्ताः—

संसाध्ये[1] फलयोगे तु व्यापारः कारणस्य यः।

बालप्रिया

**फलपर्यन्तीभूततयेति**। स्वरूपसंवेदनमित्यनेन सम्बन्धः। **तदिति**। अदृष्टादिजन्यं फलमित्यर्थः। **ततः** तथाविधफलोपदेशेन। **उपाये व्युत्पत्त्ययोगादिति**। तत्तत्फलोपायविषयकव्युत्पत्त्यनुदयादित्यर्थः। **तेनेति**। उक्तहेतुनेत्यर्थः। **सिद्धिरिति**। फलसिद्धिरित्यर्थः। **अनुपायेति**। अनुपायशब्देनाहेतुरनिष्टहेतुश्च विवक्षितः। **नाश इति**। फलासिद्धिरनिष्टसिद्धिश्चेत्यर्थः। **नायकप्रतिनायकगतत्वेनेति**। अर्थानर्थेत्यनेन सम्बन्धः। यथासङ्ख्यं नायकप्रतिनायकगतौ यावर्थानर्थौ तदुपायस्य व्युत्पत्तिरित्यर्थः। **कार्येति**। कविना सम्पादनीयेत्यर्थः। **कर्त्रेति**। नायकादिनेत्यर्थः। स्वरूपमित्यादिद्वितीयान्तानां पञ्चावस्था इत्यनेन पूर्वस्थेन सम्बन्धः। **स्वरूपमिति**। उपायस्यानुष्ठीयमानत्वस्वरूपमित्यर्थः। **किञ्चिदुच्छूनतामिति**। किञ्चित्पोषमित्यर्थः। तद्रूपां कार्यसम्पादनयोग्यतामिति द्वितीयावस्था। **प्रतिबन्धके**त्यादि। प्रतिबन्धकोपनिपातेनाशङ्क्यमानकार्यसिद्धिकत्वमित्यर्थः। **निवृत्तप्रतिपक्षतायामिति**। प्रतिबन्धकनिवृत्तमित्यर्थः। प्रतिबन्धकनिवृत्त्या निश्चीयमानकार्यकत्वमिति यावत्। प्रतापरुद्रीयव्याख्यायान्तु—प्रथमावस्थास्वरूपात् किञ्चिदुच्छूनत्वं, द्वितीया तु कार्यसम्पादनयोग्यता, तृतीया तु प्रतिबन्धकोपनिपातेन कार्यस्य शङ्क्यमानत्वं, चतुर्थी तु प्रतिबन्धकनिवृत्त्या कार्यस्य निश्चयः, पञ्चमी तु बाधकबाधनेन फलपर्यन्ततादार्ढ्यमित्युक्तम्, तदनुरोधे तु स्वरूपात् किञ्चिदुच्छूनतामित्यस्य स्वरूपमित्यनेनान्वयो बोध्यः। **आर्तिसहिष्णूनामिति**। श्रमसहिष्णूनामित्यर्थः। यथोक्तम्—"विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमाना" इत्यादि। **विप्रलम्भेति**। कार्यासिद्धीत्यर्थः। **संसाध्य इति**। **कारणस्येति**। नायकादेरित्यर्थः। प्रारम्भादीनाम्मुखादि-

१. भरतना., २१. ७, ९.

लोचनम्

तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च सम्भवः ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ इति ।

एवं या एताः कारणस्यावस्थास्तत्सम्पादकं यत्कर्तुरितिवृत्तं पञ्चधा विभक्तम् । त एव मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्या अन्वर्थनामानः पञ्च सन्धय इतिवृत्तखण्डाः,

१. यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
काव्ये शरीरानुगतं तन्मुखं परिकीर्तितम् ॥ भरना., २१. ३९.

इति मुखसन्धेर्लक्षणम् । तदङ्गानि च—

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥
उद्भेदः करणं भेदो ह्येतान्यङ्गानि वै मुखे ॥ इति ।
बीजस्योद्घाटनं यत्तु दृष्टनष्टमिव क्वचित् ।
मुखे न्यस्तस्य सर्वत्र तद्वै प्रतिमुखं भवेत् ॥

इति प्रतिमुखसन्धेर्लक्षणम् । तदङ्गानि च—

विलासः परिसर्पश्च विधूतं तापनं तथा ।
नर्म नर्मद्युतिश्चैव तथा प्रशमनं पुनः ॥
निरोधश्चैव विज्ञेयः पर्युपासनमेव च ।
वज्रं पुष्पमुपन्यासो वर्णसंहारमेव च ॥ इति ।

गर्भसन्धेर्लक्षणं तदङ्गानि च—

उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
सङ्ग्रहश्चानुमानञ्च प्रार्थनाक्षिप्तमेव च ॥
तोटकाधिबले चैव चोद्वेगो विद्रवस्तथा ॥ इति ।

विमर्शतदङ्गानि च—

गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा ।
किञ्चिदाश्लेषसंयुक्तो विमर्शस्स इति स्मृतः ॥
अपवादोऽथ सम्फेटो विद्रवः शक्तिरेव च ।
व्यवसायः प्रसङ्गश्च द्युतिः खेदो निषेधनम् ।
विरोधनमथादानं छादनञ्च प्ररोचना ॥ इति ।

निर्वहणसन्धेर्लक्षणं तदङ्गानि च—

समानञ्च समार्थानां मुख्यार्थानां सबीजिनाम् ।
फलोपसङ्ग्रहानाञ्च ज्ञेयं निर्वहणं तु तत् ॥

लोचनम्

सन्धीयन्त इति कृत्वा । तेषामपि सन्धीनां स्वनिर्वाह्यं प्रति तथा क्रमदर्शनादवान्तरभिन्ना इतिवृत्तभागाः सन्ध्यङ्गानि–'उपक्षेपः परिकरः परिन्यसो विलोभनम्' इत्यदीनि ।

अर्थप्रकृतयोऽत्रैवान्तर्भूताः । तथा हि स्वायत्तसिद्धेर्बीजं बिन्दुः कार्यमिति तिस्रः । बीजेन सर्वव्यापाराः बिन्दुनानुसन्धानं कार्येण निर्वाहः सन्दर्शनप्रार्थनाव्यवसायरूपा ह्येतास्तितस्रोऽर्थसम्पाद्ये कर्तुः प्रकृतयः स्वभावविशेषाः । सचिवायत्तसिद्धित्वे तु सचिवस्य तदर्थमेव वा स्वार्थमेव वा स्वार्थमपि वा प्रवृत्तत्वेन प्रकीर्णत्वप्रसिद्धत्वाभ्यां प्रकरीपताकाव्यपदेश्यतयोभयप्रकारसम्बन्धी व्यापारविशेषः प्रकरीपताकाशब्दाभ्यामुक्त इति । एवं प्रस्तुतफलनिर्वाहणान्तस्याधिकारिकस्य वृत्तस्य पञ्चसन्धित्वं पूर्णसन्ध्यङ्गता च सर्वजनव्युत्पत्तिदायिनी निबन्धनीया । प्रासङ्गिके त्वितिवृत्ते नायं नियम इत्युक्तम्-

'प्रासङ्गिके परार्थत्वान्न ह्येष नियमो भवेत्'

इति मुनिना । एवं स्थिते रत्नावल्यां धीरललितस्य नायकस्य धर्माविरुद्धसम्भोगसेवायामनौचित्याभावात्प्रत्युत न निरसुखः स्यादिति श्लाघ्यत्वात्पृथ्वीराज्य-

बालप्रिया

सन्धीनां तदङ्गानामुपक्षेपादीनाञ्च लक्षणानि दशरूपकादिषु द्रष्टव्यानि । **स्वनिर्वाह्यमिति** । स्वनिर्वाह्यं फलमित्यर्थः ।

**अर्थप्रकृतयोऽत्रैवेति** । ताः "बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणा" इत्युक्ता बोध्याः । **स्वायत्तसिद्धेरिति** । नायकस्त्रिविधः—स्वायत्तसिद्धिस्सचिवायत्तसिद्धिरुभयायत्तसिद्धिश्चेति । **बीजेन सर्वव्यापारा** इति । विवक्षिता इति शेषः । एवमुत्तरवाक्ययोरपि बोध्यम् । **अनुसन्धानमिति** । अवान्तरार्थैर्मुख्यप्रयोजनस्य विच्छेदे तत्सन्धानकरणमित्यर्थः । **सन्दर्शनेत्यादि** । तत्तत्प्रयोजनं मनसि कृत्य तत्सिद्धिं सम्प्रार्थ्य तदर्थो व्यवसायो भवतीति सन्दर्शनादिजन्यत्वाद्बीजादयस्तत्स्वरूपा इत्यर्थः । **अर्थे** इत्यादि । अनेनार्थप्रकृतय इत्यस्यावयवार्थो दर्शितः । अथ प्रकरीपताकापदार्थौ दर्शयिष्यन्नाह—**सचिवेत्यादि** । **तदर्थं** नायकार्थम् । प्रकरीपताकापदाभ्यां व्यपदेशे क्रमेण हेतुः प्रकीर्णत्वप्रसिद्धत्वाभ्यामिति । इति **मुनिना** इत्युक्तमिति सम्बन्धः । **इतीत्यस्य** इति वदता इत्यर्थः । लक्ष्यं दर्शयति—**एवमित्यादि** । **एवं स्थिते** रत्नावल्यां दर्शिता एवेत्यन्वयः । **इति श्लाघ्यत्वादिति** । इति वचनेन धर्माविरु-

---

सन्धिर्विरोधो प्रथनं निर्णयः परिभाषणम् ।
धुतिः प्रसादश्चानन्दः समयो ह्युपगूहनम् ॥
भाषणं पूर्ववाक्यं च कायसंहार एव च ॥
प्रशस्तिरिति चाङ्गानि कुर्यान्निर्वहणे बुधः ॥ इति ।

एतेषामसङ्कीर्णानि लक्षणानि भरतनाट्यशास्त्रे एकविंशाध्याये निरूपितानि, तत एवावगन्तव्यानि ।

१. भरतना., २१. २०

**रसाभिव्यक्त्यपेक्षया, यथा रत्नावल्याम्; न तु केवलं शास्त्रस्थितिसम्पादनेच्छया। यथा वेणीसंहारे विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य प्रकृतरसनिबन्धाननुगुणमपि द्वितीयेऽङ्के भरतमतानुसरणमात्रेच्छया घटनम्।**

लोचनम्

महाफलान्तरानुबन्धिकन्यालाभफलोद्देशेन प्रस्तावनोपक्रमे पञ्चापि सन्धयोऽवस्थापञ्चकसहिताः समुचितसन्ध्यङ्गपरिपूर्णा अर्थप्रकृतियुक्ता दर्शिता एव। 'प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ' इति हि बीजादेव प्रभृति 'विश्रान्तविग्रहकथः' इति 'राज्यं निर्जितशत्रु' इति च वचोभिः 'उपभोगसेवावसरोऽयम्' इत्युपक्षेपात्प्रभृति हि निरूपितम्। एतत्तु समस्तसन्ध्यङ्गस्वरूपं तत्पाठपृष्ठे प्रदर्श्यमानमतितमां ग्रन्थगौरवमावहति। प्रत्येकेन तु प्रदर्श्यमानं पूर्वापरानुसन्धानवन्ध्यतया केवलं संमोहदायि भवतीति न विततम्। अस्यार्थस्य यत्नावधेयत्वेनेष्टत्वात्स्वकण्ठेन यो व्यतिरेक उक्तो 'न तु केवलया' इति तस्योदाहरणमाह—**न** त्विति। केवलशब्दमिच्छाशब्दं च प्रयुञ्जानस्यायमाशयः—भरतमुनिना सन्ध्यङ्गानां रसाङ्गभूतमितिवृत्तप्राशस्त्योत्पादनमेव प्रयोजनमुक्तम्। न तु पूर्वरङ्गाङ्गवददृष्टसम्पादनं विघ्नादिवारणं वा। यथोक्तम्—

> इष्टस्यार्थस्य[1] रचना वृत्तान्तस्यानपक्षयः।
> रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम्॥
> आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम्।
> अङ्गानां षड्विधं ह्येतद्दृष्टं शास्त्रे प्रयोजनम्॥ इति।

ततश्च—

> समीहा[2] रतिभोगार्थो विलासः परिकीर्तितः।

बालप्रिया

द्धसम्भोगसेवायाः श्लाघनीयत्वादित्यर्थः। **तत्पाठपृष्ठे प्रदर्श्यमानमिति**। रत्नावलीस्थतत्तद्वाक्यानि सर्वाण्युदाहृत्य प्रदर्श्यमानमित्यर्थः। **प्रत्येकेनेति**। पूर्वापरवाक्यं विना उदाहरणमात्रमित्यर्थः। **न विततमिति**। सविस्तरं सोदाहरणं वृत्तौ नोक्तमित्यर्थः। **अस्यार्थस्येति**। सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षयेत्युक्तस्यार्थस्येत्यर्थः। इति यो व्यतिरेक इति सम्बन्धः। **न त्वितीति**। न त्वित्यादिग्रन्थेनेत्यर्थः। **प्रयुञ्जानस्येति**। कारिकाकर्तुरिति शेषः। **अयमिति**। नाधिगतार्थ इत्यन्तेन ग्रन्थेन वक्ष्यमाण इत्यर्थः। **सन्ध्यङ्गानामिति** **प्रयोजनमित्यनेन** सम्बध्नाति।

**इष्टस्येति** रचनाप्रतिपादनम्। **प्रयोगस्य रागप्राप्तिः** अभिनयरागसमृद्धिः। अभिनयदर्शनेन सामाजिकमनोरञ्जनसमृद्धिरिति यावत्। **आश्चर्यवदिति**। चमत्कारकारीत्यर्थः। **ततश्चेति**। उक्तेन हेतुनेत्यर्थः। प्रयुक्त इत्यनेनास्य सम्बन्धः। **समी**-

१. भरतना., २१. ५३. २. भरतना., २१. ७८.

इदं चापरं प्रबन्धस्य रसव्यञ्जकत्वे निमित्तं यदुद्दीपनप्रशमने यथावसर-

लोचनम्

इति प्रतिमुखसन्ध्यङ्गविलासलक्षणे ¹रतिभोगशब्द आधिकारिकरसस्थायिभावोपव्यञ्जकविभावाद्युपलक्षणार्थत्वेन प्रयुक्तः, यथातत्त्वं नाधिगतार्थ इति। प्रकृते ह्यत्र वीररसः। **उद्दीपन** इति। उद्दीपनं विभावादिपरिपूरणया। यथा—'अयं स राआ उदयणो त्ति' इत्यादि सागरिकायाः। प्रशमनं वासवदत्तातः पलायने। पुनरुद्दीपनं चित्रफलकोल्लेखे। प्रशमनं सुसङ्गताप्रवेशे इत्यादि। गाढं ह्यनवरतपरिमृदितो रसः सुकुमारमालतीकुसुमवज्झटित्येव म्लानिमवलम्बेत। विशेषतस्तु शृङ्गारः। यदाह मुनिः—

यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते।

दुर्लभत्वं यतो नार्या कामिनः सा परा रतिः॥ इति।

वीररसादावपि यथावसरमुद्दीपनप्रशमनाभ्यां विना झटित्येवाद्भुतफलकल्पे साध्ये लब्धे प्रकटीचिकीर्षित उपायोपेयभावो न प्रदर्शित एव स्यात्। **पुनरिति**। इतिवृ-

बालप्रिया

हेति। **समीहा** इच्छा। **रतिभोगार्थेति**। सुरतानुभवविषयिकेत्यर्थः। यद्वा—रतेः रत्याख्यस्थायिनः यो भुज्यत इति भोगो विषयः प्रमदादिः तदर्था तत्सम्भोगार्था इत्यर्थः। **आधिकारिकेति**। आधिकारिको यो रसो वर्ण्यमानः तस्य यः स्थायीभावस्तदुपव्यञ्जको यो विभावादिः तदुपलक्षणार्थत्वेन तदुपलक्षकत्वेनेत्यर्थः। न तु पूर्वोक्तवाच्यार्थमात्रपरत्वेनेति भावः। **प्रयुक्त** इति। मुनिनेति शेषः। **यथेति**। यथातत्त्वमधिगतो ज्ञातोऽर्थो मुन्यभिप्रेतार्थो यस्य तथाभूतो न, किन्तु तद्वाच्यार्थ एवाधिगत इति भावः। वेणीसंहारकृतेति शेषः। इतीत्यस्याशय इत्यनेनान्वयः। ननु वेणीसंहारे क आधिकारिको रस इत्यत्राह—**प्रकृत** इति। न तु शृङ्गार इति भावः। अन्यथा दोषं दर्शयति—**गाढमित्यादि**। **अनवरतपरिमृदितः** अविच्छेदेनास्वादितः। **मालतीति**। अनवरतमृदितमालतीत्यर्थः।

**यदिति**। **वामाभिनिवेशित्वं** नार्याः प्रतिकूलाचरणाभिलाषः। **यतश्च** यच्च **विनिवार्यते** नार्या सम्भोग इति शेषः। **यतः** यत् **सा** एतत्त्रयम्, **परा रतिः** विघ्नितसम्भोगाया नार्याः सम्भोगः परमप्रीतिहेतुरित्यर्थः। न केवलं शृङ्गारे रसान्तरेऽप्युक्तं प्राह्यमित्याह—**वीरेत्यादि**। **अद्भुतफलेति**। इन्द्रजालादिदर्शितफलेत्यर्थः। **प्रकटीचिकीर्षितः** कविना प्रकटीकर्तुमभिलषितः। **उपायेति**। नायकादितत्तद्व्यापारस्य चतुर्वर्गस्य च हेतुहेतुमद्भाव इत्यर्थः। नैवेति योजना। आरब्धेत्यनेन प्रकृते विवक्षितमाह—**आशङ्क्यमानप्रायेति**। **उपनता** जाता। विश्रान्तिपदार्थमाह—**विच्छेद** इति। तथाच यत्र यत्राङ्गिनो रसस्य विच्छेदः प्राप्नुयात्तत्र

१. भरतना., २४. १९९.

मन्तरा रसस्य, यथा रत्नावल्यामेव। पुनरारब्धविश्रान्ते रसस्याङ्गिनोऽनुसन्धिश्च। यथा तापसवत्सराजे। प्रबन्धविशेषस्य नाटकादे रसव्यक्तिनिमित्तमिदं चापरमवगन्तव्यं यदलंकृतीनां शक्तावप्यानुरूप्येण योजनम्। शक्तो हि कविः कदाचिदलङ्कारनिबन्धने तदाक्षिप्ततयैवानपेक्षितरसबन्धः प्रबन्धमारभते तदुपदेशार्थमिदमुक्तम्। दृश्यन्ते च कवयोऽलङ्कारनिबन्धनैकरसा अनपेक्षितरसाः प्रबन्धेषु।

लोचनम्

त्तवशादारब्धाशङ्क्यमानप्राया न तु सर्वथैवोपनता विश्रान्तिर्विच्छेदो यस्य स तथा। **रसस्येति**। रसाङ्गभूतस्य कस्यापीति यावत्। तापसवत्सराजे हि वासवदत्ताविषयो जीवितसर्वस्वाभिमानात्मा प्रेमबन्धस्तद्विभावाद्यौचित्यात्करुणविप्रलम्भादिभूमिका गृह्णन्समस्तेतिवृत्तव्यापी। राज्यप्रत्यापत्त्या हि सचिवनीतिमहिमोपनतया तदङ्गभूतपद्मावतीलाभानुगतयानुप्राण्यमानरूपा परमामभिलषणीयतमतां प्राप्ता वासवदत्ताधिगतिरेव तत्र फलम्। निर्वहणे हि 'प्राप्ता देवी भूतधात्री च भूयः संबन्धोऽभूद्दर्शकेन' इत्येवं देवीलाभप्राधान्यं निर्वाहितम्। इयति चेतिवृत्तवैचित्र्यचित्रे भित्तिस्थानीयो वासवदत्ताप्रेमबन्धः प्रथममन्त्रारम्भात्प्रभृति पद्मावतीविवाहादौ, तस्यैव व्यापारात्। तेन स एव वासवदत्ताविषयः प्रेमबन्धः कथावशादाशङ्क्यमानविच्छेदोऽप्यनुसंहितः। तथा

बालप्रिया

तत्र तदनुसन्धानं सम्पादयितव्यमित्यर्थः। अङ्गिनो रसस्येत्यत्र रसपदेन विवक्षितमाह—**रसाङ्गभूतस्येति**। **कस्यापीति**। विभावादेरित्यर्थः। 'यथा तापसवत्सराजे' इत्युक्तं विवृणोति—**तापसवत्सराजे हीत्यादि**। **प्रेमबन्ध** इति। वत्सराजगत इति शेषः। **समस्तेति**। वृत्तव्यापीत्यनेनास्य सम्बन्धः। **करुणेति**। क्रमोऽत्र बोध्यः। उक्तं दृढीकरोति—**राज्येत्यादि**। प्राप्तेत्यत्र हेतुः—**राज्यप्रत्यापत्त्यानुप्राण्यमानरूपेति**। राज्यप्रत्यापत्तेः विशेषणद्वयम्—**सचिवेत्यादि**। उक्तमुपपादयति—**निर्वहण इत्यादि**। **प्राप्तेति**।

दृष्टा यूयं निर्जिता विद्विषश्च प्राप्ता देवी भूतधात्री च भूयः।
सम्बन्धोऽभूद्दर्शकेनापि सार्धं किं ते दुःखं यत्ततश्शान्तमद्य ॥

इति सम्पूर्णश्लोकः। 'रसस्यारब्धविश्रान्तेरि'त्याद्युक्तं सङ्गमयति—**इयतीत्यादि**। **इतिवृत्तवैचित्र्यचित्र** इति। आलेख्यतुल्ये विचित्रेतिवृत्त इत्यर्थः। प्रभृतिभित्तिस्थानीय इत्यन्वयः। **व्यापारादिति**। व्यापरणादित्यर्थः व्याप्तेरिति यावत्। **इत्यादिनेति**। "निशापि मन्मथकृतोत्साहैस्तदङ्गार्पणैः तां सम्प्रत्यपि मार्गदत्तनयनां

लोचनम्

हि—प्रथमे तावदङ्के स्फुटं स एवोपनिबद्धः 'तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा तद्गोष्ठ्यैव' इत्यादिना, 'बद्धोत्कण्ठमिदं मनः किमथवा प्रेमाऽसमाप्तोत्सवम्' इत्यन्तेन। द्वितीयेऽपि 'दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दि वक्त्रं न किम्' इत्यादिना स एव विच्छिन्नोऽप्यनुसंहितः। तृतीयेऽपि

सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते
श्वासोत्कम्पविहस्तया प्रतिपदं देव्या पतन्त्या तथा।
हा नाथेति मुहुः प्रलापपरया दग्धं वराक्या तया
शान्तेनापि वयं तु तेन दहनेनाद्यापि दह्यामहे॥

इत्यादिना। चतुर्थेऽपि

देवीस्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे
तद्गोत्रग्रहणादियं सुवदना यायात्कथं न व्यथाम्।
इत्थं यन्त्रणया कथंकथमपि क्षीणा निशा जाग्रते।

बालप्रिया

प्रष्टुं प्रवृत्तस्य मे" इत्यादिपदेन ग्राह्यम्। **तद्वक्त्रेति**। तत्पदेनात्र सर्वत्र वासवदत्तायाः परामर्शः। **दिवसः** अहस्समयः। तया सह गोष्ठी सम्भाषणादिस्तद्गोष्ठी तया। निशापीत्यत्र नीतेति विपरिणामेन सम्बन्धः। **मन्मथेति**। मन्मथेन कृतः उत्पादितः उत्साहः येषां तैः। **किं** कुतः बद्धोत्कण्ठं भवति। विमृश्याह—**अथवे**त्यादि। असमाप्तः उत्सवः वक्त्रेन्दुविलोकनादिरूपो यत्र। यद्वा—असमाप्तः असमापितः उत्सवः येन तत्। भवति इत्यन्तेनानुसंहित इति सम्बन्धः। **दृष्टिरिति**। नामृतधर्मिणीति च पाठः। आदिपदेन

"नोर्ध्वार्द्रं हृदयं न चन्दनरसस्पर्शानि चाङ्गानि वा
कस्मिन् लब्धपदेन ते कृतमिदं क्रूरेण पीताग्निना।
नूनं वज्रमयोऽन्य एव दहनस्तस्येदमाचेष्टितम्॥

इत्यस्य सङ्ग्रहः। ते दृष्टिः अमृतवर्षिणी न किममृतवर्षिण्येवेत्यर्थः। एवमुपर्यपि किंशब्दो नञ्पदैर्योज्यः। ऊर्ध्वार्द्रमुपरिभागे आर्द्रताविशिष्टम्। नो वार्द्रमिति वा पाठः। पूर्वार्द्धेन हृदयाद्यङ्गेषु विरोधिसद्भावादग्नेः पदलाभो न भवतीति दर्शितमत एवाह—'कस्मिन्नि'त्यादि कस्मिन् कृताङ्गे इदं कृतमित्येतद्विवृणोति—'क्रूरेणे'त्यादि त्वं क्रूरेणाग्निना पीता दग्धा इति यदिदमिति सम्बन्धः। शोकावेशवशादाह—'नूनमि'त्यादि। दहनः त्वद्दाहकोऽग्निः। वज्रमयोन्य एव। नूनं सम्भावयामि।

**सर्वत्रेति**। वराक्या निर्भाग्यया तया देव्या तथा दग्धमिति सम्बन्धः। **देवीति**। देवीत्यादिहेतुगर्भम्। देवी वासवदत्ता। नियतमिति सम्भावनायाम्। स्वप्ने सम्भाव्यमानात्तद्गोत्रग्रहणादित्यर्थः। **इयमिति**। पद्मावतीत्यर्थः। **इत्थं यन्त्रणया एवं**

लोचनम्

दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ॥

इत्यादिना । पञ्चमेऽपि समागमप्रत्याशया करुणे निवृत्ते विप्रलम्भेऽङ्कुरिते

तथाभूते तस्मिन्मुनिवचसि जातागसि मयि
प्रयत्नान्तर्गूढां रुषमुपगता मे प्रियतमा ।
प्रसीदेति प्रोक्ता न खलु कुपितेत्युक्तिमधुरं
समुद्भिन्ना पीतैर्नयनसलिलैः स्थास्यति पुनः ॥

इत्यादिना । षष्ठेऽपि 'त्वत्सम्प्राप्तिविलोभितेन सचिवैः प्राणा मया धारिताः' इत्यादिना । अलङ्कृतीनामिति योजनापेक्षया कर्मणि षष्ठी । दृश्यन्ते चेति । यथा स्वप्नवासवदत्ताख्ये नाटके—

'स्वञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपताडेन ।
उद्घाटय सा प्रविष्टा हृदयगृहं मे नृपतनूजा ॥' इति ॥ १४ ॥

बालप्रिया

चिन्तनरूपनिद्राप्रतिबन्धकेन जाग्रतो मे निशा क्षीणेति सम्बन्धः। निशा निद्रां विनैवातीतेत्यर्थः । अत आह—दाक्षिण्येत्यादि । दाक्षिण्यमत्र पद्मावतीविषयकं बोध्यम् । सा वासवदत्ता । अङ्कुरित इत्यादिना अनुसंहित इति सम्बन्धः ।

तथा भूत इति । मुनिवचसीति निमित्ते सप्तमी । स्थास्यतीत्यनेनास्यान्वयः । सा प्रियतमा तथा मम पुनःपश्चादपि पुर इति वा पाठः। स्थास्यतीत्याशंसायां लृट् । प्रयत्नान्तर्गूढामिति । प्रयत्नैरन्तर्नियमितामित्यर्थः । उक्त्या मधुरं मनोहरं यथा तथा । समुद्भिन्ना संमिश्रा, युक्तेति यावत् पीतैः अन्तःस्तम्भितैः समुद्भिन्नप्रीतिरिति पाठः । साधिष्ठः समुद्भिन्ना प्रकाशिता प्रीतिः यया सेत्यर्थः । नयनसलिलोद्गमो हि कुपितानां स्त्रीणां प्रीतेरनुभावः। त्वदिति । आदिपदेन

"तन्मत्वा त्यजतश्शरीरकमिदं नैवास्ति निस्स्नेहता
आसन्नोऽवसरस्तवानुगमने जाता धृतिः किंत्वयम् ।
खेदो यच्च तवानुगं न हृदयं तस्मिन् क्षणे दारुण ॥

इत्यस्य सङ्ग्रहः । सचिवैः प्रयोजकैः मया प्रयोज्येन । 'तदि'ति । त्वत्सम्प्राप्तिमित्यर्थः । अत्यजत इति च्छेदः । इत्यादिनेति तृतीयान्तानामनुसंहित इत्यनेनान्वयो बोध्यः । योजनापेक्षयेति । योजनमिति कृदन्तापेक्षयेत्यर्थः ।

स्वञ्चितेति । वत्सराजोक्तिरियम् । स्वञ्चिते प्रवेशप्रतिबन्धाय सुष्ठु मिथः सम्बद्धे पक्ष्मणी एव कवाटे यस्य तत् । नयनद्वारं नयनमेव द्वारम् । स्वरूपताडेन स्वस्य रूपमाकृतिः तदेव ताडः ताडनक्रिया साधनमुद्घाटनकरणमिति यावत् तेन । स्वरूपतडितैवेति पाठेस्वरूपमेव तडिद्विद्युत्तया करणेनेति तदर्थः। सा नृपतनूजा वासवदत्ता। अत्र नयनद्वारमित्येतावदेव रूपणं श्रृङ्गारानुगुणतया सुन्दरं न त्वन्यदपीति भावः॥ १४॥

किञ्च—

अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः ।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ॥ १९ ॥

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेरनुरणनरूपव्यङ्ग्योऽपि यः प्रभेद उदाहृतो द्विप्रकारः सोऽपि प्रबन्धेषु केषुचिद्द्योतते । तद्यथा मधुमथनविजये पाञ्चजन्योक्तिषु । यथा वा ममैव कामदेवस्य सहचरसमा-

लोचनम्

न केवलं प्रबन्धेन साक्षाद्व्यङ्ग्यो रसो यावत्पारम्पर्येणापीति दर्शयितुमुपक्रमते—किञ्चेति । अनुस्वानोपमः—शब्दशक्तिमूलोऽर्थशक्तिमूलश्च, यो ध्वनेः प्रभेद उदाहृतः सः केषुचित्प्रबन्धेषु निमित्तभूतेषु व्यञ्जकेषु सत्सु व्यङ्ग्यतया स्थितः सन् । अस्येति रसादिध्वनेः प्रकृतस्य भासते व्यञ्जकतयेति शेषः । वृत्तिग्रन्थोऽप्येवमेव योज्यः । अथ वानुस्वानोपमः प्रभेद उदाहृतो यः प्रबन्धेषु भासते अस्यापि 'द्योत्योऽलक्ष्यक्रमः क्वचित्' इत्युत्तरश्लोकेन कारिकावृत्त्योः सङ्गतिः ।

एतदुक्तं भवति—प्रबन्धेन कदाचिदनुरणनरूपव्यङ्ग्यो ध्वनिः साक्षाद्व्यज्यते स तु रसादिध्वनौ पर्यवस्यतीति । यदि तु स्पष्टमेव व्याख्यायते तदा ग्रन्थस्य पूर्वोक्तस्यालक्ष्यक्रमविषयस्य मध्ये ग्रन्थोऽयमसङ्गतः स्यात्, नीरसत्वं च पाञ्चजन्योक्त्यादीनामुक्तं स्यादित्यलम् ।

बालप्रिया

स्वव्याख्यास्यमानार्थाभिप्रायेण 'किञ्चे'त्यादिग्रन्थमवतारयति—**न केवलमित्यादि** । **पारम्पर्येणापीति** । व्यंग्यान्तरद्वारेणापीत्यर्थः । कारिकां व्याचष्टे—**अनुस्वानेत्यादि** । ध्वनेरित्यस्य प्रभेद इत्यनेन सम्बन्ध इति दर्शयति—**ध्वनेः प्रभेद** इति । पूरयति—**व्यञ्जकेष्वित्यादि** । अस्येत्यस्य व्याख्यानम्—**रसादिध्वनेः प्रकृतस्येति** । अत्रापि पूरयति—**व्यञ्जकतयेति** । भासते इत्यनेन सम्बन्धः । प्रकारान्तरेण व्याचष्टे—**अथवेत्यादि** । य उदाहृतः स केषुचित् प्रबन्धेषु भासते इत्यन्त अनुवादः । अस्य ध्वनेरपीत्यवशिष्टांशस्य उत्तरकारिकास्थेन द्योत्य इत्यनेनान्वयः । अस्य ध्वनेरपीत्यस्यानुस्वानोपमध्वनेरपीत्यर्थश्चेति भावः ।

एवं द्वेधाऽपि व्याख्यानेन लब्धमर्थमाह—**एतदित्यादि** । यथाश्रुतार्थपरित्यागे बीजमाह—**यदीत्यादि** । **ग्रन्थोऽयमिति** । अनुस्वानोपमेत्यादिकारिकेत्यर्थः । दोषान्तरं चाह—**नीरसत्वमित्यादि** । **नीरसत्वमुक्तं स्यादिति** । नीरसत्वं प्रदर्शितं भवेदित्यर्थः ।

गमे विषमबाणलीलायाम् । यथा च गृध्रगोमायुसंवादादौ महाभारते ।

लोचनम्

लीलादाढा ग्गुध्यूढ्ढासअलमहिमण्डलस्सिअ अज्ज ।

कीस्समुणालाहरतुज्झआइ अङ्गम्मि ॥

इत्यादयः पाञ्चजन्योक्तयो रुक्मिणीविप्रलब्धवासुदेवाशयप्रतिभेदनाभिप्रायमभिव्यञ्जयन्ति । सोऽभिव्यक्तः प्रकृतरसस्वरूपपर्यवसायी । सहचराः वसन्तयौवनमलयानिलादयस्तैः सह समागमे ।

मिअवहण्डिअरोरोणिरङ्कुसो अविवेअरहिओ वि ।

सविण वि तुमम्मि पुणोवन्ति अ अतन्ति पंमुसिम्मि ॥

इत्यादयो यौवनस्योक्तयस्तत्तन्निजस्वभावव्यञ्जिकाः, स स्वभावः प्रकृतरसपर्यवसायी । यथा चेति । श्मशानावतीर्णं पुत्रदाहार्थमुद्योगिनं जनं विप्रलब्धुं गृध्रो दिवा शवशरीरभक्षणार्थी शीघ्रमेवापसरत यूयमित्याह ।

अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसङ्कुले ।

कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥

बालप्रिया

लीलेति । "लीलादाढग्गुद्धरिअस अलमहीमण्डलस्सविअअज्ज । कीससुणालहरणं वितुज्झगुरु आइ अङ्गम्मि ॥ इति पाठः ।

लीलादंष्ट्राग्रोद्धृतसकलमहीमण्डलस्यैवाद्य ।

कस्मान्मृणालाभरणमपि तव गुरु भवत्यङ्गे ॥ इतिच्छाया ।

लीलया दंष्ट्राग्रेण उद्धृतं सकलमहीमण्डलं येन वराहरूपिणा तस्येत्यनेन गुरुतरवस्तुवहने अनायासस्सूच्यते । एवकारो विरोधद्योतकः । मृणालाभरणमपि अतिलघु मृणालरूपमाभरणमपि । कस्माद्गुरु भवतीति सम्बन्धः । अनेन भगवतो विरहावस्थातिशयो द्योत्यते । एतमर्थं दर्शयति—रुक्मिणीत्यादि । रुक्मिणीविप्रलब्धो रुक्मिणीविरही यो वासुदेवस्तस्याशयो रुक्मिण्यामभिलाषः, तस्य प्रतिभेदनमाविष्करणं तदभिप्रायमित्यर्थः । प्रकृतरसेति । विप्रलम्भशृङ्गारेत्य[र्थ]ः । सहचरसमागमे इत्येतद्विवृणोति—सहचरा इत्यादि । मिअवेति ।

हुम्मि अवहत्थिअरे होणिरङ्कुसो अहविवेअरहिओवि ।

सिविणेवि तुमम्मि पुणो भन्ति णपसुमरामि । इति पाठः ।

भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।

स्वप्नेऽपि तव पुनर्भक्तिं न प्रस्मरामि ॥ इति छाया ।

अपहस्तितरेख इति । अतिक्रान्तमर्याद इत्यर्थः । तत्तन्निजस्वभावेति । कामानुवर्तनादिस्वभावेत्यर्थः । अलमित्यादि । काव्यप्रकाशेऽप्युदाहृता इमे श्लोकाः ।

**सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः ।**
**कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥ १६ ॥**

अलक्ष्यक्रमो ध्वनेरात्मा रसादिः सुब्विशेषैस्तिङ्विशेषैर्वचनविशेषैः सम्बन्धविशेषैः कारकशक्तिभिः कृद्विशेषैस्तद्धितविशेषैः समासैश्चेति ।

लोचनम्

न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥

इत्याद्यवोचत् । गोमायुस्तु निशोदयावधि अमी तिष्ठन्तु, ततो गृध्रादपहृत्याहं भक्षयिष्यामीत्यभिप्रायेणावोचत् ।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं बालास्त्यक्ष्यध्वमविशङ्किताः ॥

इत्यादि । स चाभिप्रायो व्यक्तः शान्तरस एव परिनिष्ठिततां प्राप्तः ॥ १५ ॥

एवमलक्ष्यक्रमव्यङ्ग्यस्य रसादिध्वनेर्यद्यपि वर्णेभ्यः प्रभृति प्रबन्धपर्यन्ते व्यञ्जकवर्गे निरूपिते न निरूपणीयान्तरमवशिष्यते, तथापि कविसहृदयानां शिक्षां दातुं पुनरपि सूक्ष्मदृशान्वयव्यतिरेकावाश्रित्य व्यञ्जकवर्गमाह—सुप्तिङित्यादि । वयं त्वित्थमेतदनन्तरं सवृत्तिकं वाक्यं बुध्यामहे। सुबादिभिः योऽनुस्वानोपमो भासते वक्त्रभिप्रायादिरूपः अस्यापि सुबादिभिर्व्यक्तस्यानुस्वानोपमस्यालक्ष्यक्रमव्यङ्ग्यो द्योत्यः। क्वचिदिति पूर्वकारिकया सह संमील्य सङ्गतिरिति । सर्वत्र हि सुबादीनामभिप्रायविशेषाभिव्यञ्जकत्वमेव । उदाहरणे स त्वभिव्यक्तोऽभिप्रायो यथास्वं विभावादिरूपताद्वारेण रसादीन्व्यनक्ति ।

बालप्रिया

**इत्याहेति** । इत्यभिप्रायेणाहेत्यर्थः । **कालधर्ममिति** । मरणमित्यर्थः । **जीवेदपीति** । बालोऽयमिति शेषः । कनकवर्णवदाभातीति कनकवर्णाभः, कनकवर्णस्य हेमकुम्भादेराभा कान्तिरिवाभा यस्य इति वा तम् । त्यक्ष्यध्वं पितृपिण्डदमिति च पाठः । त्यक्ष्यध्वमित्यार्षः प्रयोगः । **स चाभिप्राय इति** । जनविसर्जनाभिप्रायः, भक्षणाभिप्राय इति वा अर्थः ॥ १५ ॥

**एवमित्यादि** । **निरूपिते** निरूपिते सति न अवशिष्यत इति सम्बन्धः । यथाऽनुस्वानेत्यादिपूर्वग्रन्थो व्याख्यातस्तथा सुबित्यादिग्रन्थं व्याख्यातुमारभते—**वयमित्यादि** । एतदनन्तरं सुप्तिङ्वचनेत्यादिकम् । सुबित्यादीनां तृतीयान्तानां पूर्वकारिकास्थेन भासत इत्यनेन तत्स्थस्यास्य ध्वनेरपीत्यस्यात्रत्येन द्योत्य इत्यनेन च सम्बन्ध इति व्याचष्टे—**सुबादिभिरित्यादि** । उक्तमुपपादयति—**सर्वत्र हीत्यादि** ।

चशब्दान्निपातोपसर्गकालादिभिः प्रयुक्तैरभिव्यज्यमानो दृश्यते । यथा—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः

सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।

धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा

स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

लोचनम्

एतदुक्तं भवति—वर्णादिभिः प्रबन्धान्तैः साक्षाद्वा रसोऽभिव्यज्यते विभावादिप्रतिपादनद्वारेण यदिवा विभावादिव्यञ्जनद्वारेण परम्परयेति तत्र बन्धस्यैतत्परम्परया व्यञ्जकत्वं प्रसङ्गादादावुक्तम् । अधुना तु वर्णपदादीनामुच्यत इति । तेन वृत्तावपि 'अभिव्यज्यमानो दृश्यते' इति । व्यञ्जकत्वं दृश्यत इत्यादौ च वाक्यशेषोऽध्याहार्यः विभावादिव्यञ्जनद्वारतया पारम्पर्येणेत्येवंरूपः । **ममारय** इति । मम शत्रुसद्भावो नोचित इति सम्बन्धानौचित्यं क्रोधविभावं व्यनक्ति अरय इति बहुवचनम् । तपो विद्यते यस्येति पौ षकथाहीनत्वं तद्धितेन मत्वर्थीयेनाभिव्यक्तम् । तत्रापिशब्देन निपातसमुदायेनात्यन्तासम्भावनीयत्वम् । मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता । तस्यां च स कर्ता अपिशब्देन मनुष्यमात्रकम् । **अत्रैवेति**–मदधिष्ठितो

बालप्रिया

तात्पर्यमाह–**एतदुक्तमित्यादि** । विभावादिप्रतिपादनद्वारेण साक्षाद्वा विभावादिव्यञ्जनद्वारेण परम्परया वा रसोऽभिव्यज्यत इति सम्बन्धः । **आदाविति** । पूर्वकारिकायामित्यर्थः । व्याख्यातार्थानुरोधेन वृत्तिग्रन्थं योजयति–**तेनेत्यादि** । **इत्येवंरूपो** वाक्यशेष इत्यन्वयः । **व्यञ्जनद्वारतयेति** । रसादिस्सुब्विशेषादिभिर्विभावादिव्यञ्जनद्वारा पारम्पर्येणाभिव्यज्यमानो दृश्यत इत्याद्यर्थ इति भावः ।

**'न्यक्कार'** इति । इयं श्रीरामेण राक्षसकुलक्षये क्रियमाणे क्रुद्धस्य रावणस्य स्वाधिक्षेपोक्तिः । **मे अरयस्सन्ति** यदयमेव न्यक्कार इत्याद्यन्वयः । 'प्रबोधितवते'ति । णिजन्ताद्भावे क्ते ततो मतुपि बोध्यम् । स्वर्ग एव ग्रामटिका स्वल्पग्रामः । श्लोकोऽयं काव्यप्रकाशेऽप्युदाहृतः । वृत्त्युक्तं व्यञ्जकत्वं विवृणोति—**मे** इत्यादि । बहुत्वेन शत्रुमत्ता ममानुचितेति सम्बन्धानौचित्यरूपं क्रोधविभावमरय इति बहुवचनं व्यञ्जयतीति बहुवचनमित्यन्तस्यार्थः । वृत्तौ 'सम्बन्धे'त्यस्य षष्ठ्यर्थसम्बन्धेत्यर्थः । **अभिव्यक्तमिति** । अदस्शब्दार्थस्येति शेषः । **अत्यन्तासम्भावनीयत्वमिति** । तापसगतशत्रुताया अत्यन्तासम्भाव्यत्वमभिव्यक्तमित्यर्थः । अभिव्यक्तपदस्य यथायोगमुत्तरत्रापि सम्बन्धो बोध्यः । **हननक्रियेति** । यत्किञ्चित्कर्तृकाऽपीति शेषः । **सः** तापसः मानुषमात्रकः कुत्सितो मनुष्य एव । नीत्युपसर्गार्थविवरणम्–**निश्शेषेणेति** । यथा

अत्र हि श्लोके भूयसा सर्वेषामप्येषां स्फुटमेव व्यञ्जकत्वं दृश्यते। तत्र 'मे यदरयः' इत्यनेन सुप्सम्बन्धवचनानामभिव्यञ्जकत्वम्। 'तत्राप्यसौ तापस' इत्यत्र तद्धितनिपातयोः। 'सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः' इत्यत्र तिङ्कारकशक्तीनाम्। 'धिग्धिक्छक्रजितम्' इत्यादौ श्लोकार्धे कृत्तद्धितसमासोपसर्गाणाम्। एवंविधस्य व्यञ्जकभूयस्त्वे च घटमाने काव्यस्य सर्वातिशायिनी बन्धच्छाया समुन्मीलति। यत्र हि व्यङ्ग्यावभासिनः पदस्यैकस्यैव तावदाविर्भावस्तत्रापि काव्ये कापि बन्धच्छाया किमुत यत्र तेषां बहूनां समवायः। यथात्रानन्तरोदितश्लोके। अत्र हि रावण इत्यस्मिन् पदेऽर्थान्तरसंक्रमितवाच्येन ध्वनिप्रभेदेनालङ्कृतेऽपि पुनरनन्तरोक्तानां व्यञ्जकप्रकाराणामुद्भासनम्। दृश्यन्ते च महात्मनां प्रतिभाविशेषभाजां बाहुल्येनैवंविधा बन्धप्रकाराः।

लोचनम्

देशोऽधिकरणम् निःशेषेण हन्यमानतताया राक्षसबलं च कर्मेति तदिदमसंभाव्यमानमुपनतमिति पुरुषकारासम्पत्तिर्ध्वन्यते तिङ्कारकशक्तिप्रतिपादकैश्च शब्दैः। रावण इति त्वर्थान्तरसङ्क्रमितवाच्यत्वं पूर्वमेव व्याख्यातम्। धिग्धिगिति निपातस्य शक्रं जितवानित्याख्यायिकेयमिति उपपदसमासेन सहकृतः स्वर्गेत्यादिसमासस्य स्वपौरुषानुस्मरणं प्रति व्यञ्जकत्वम्। ग्रामटिकेति स्वार्थिकतद्धितप्रयोगस्य स्त्रीप्रत्ययसहितस्याबहुमानास्पदत्वं प्रति, विलुण्ठनशब्दे विशब्दस्य निर्दयावस्कन्दनं प्रति व्यञ्जकत्वम्। वृथाशब्दस्य निपातस्य स्वात्मपौरुषनिन्दां प्रति व्यञ्जकता। भुजैरिति बहुवचनेन प्रत्युत भारमात्रमेतदिति व्यज्यते। तेन तिलशस्तिलशोऽपि विभज्यमानेऽत्र श्लोके सर्व एवांशो व्यञ्जकत्वेन भातीति किमन्यत्। एतदर्थप्रदर्शनस्य फलं दर्शयति—**एवमिति**। एकस्य पदस्येति यदुक्तं तदुदाहरति—**यथात्रेति**।

बालप्रिया

राक्षसकुलनामापि नक्ष्यति तथेत्यर्थः। **राक्षसबलमिति**। राक्षसकुलमिति च पाठः। सोऽपीत्यादिवाक्यव्यङ्ग्यं दर्शयति—**तदिदमित्यादि**। **पुरुषकारासम्पत्तिरिति**। स्वपौरुषप्रकर्षाभाव इत्यर्थः। तिङ्कारकशक्तिप्रतिपादकैश्शब्दैर्ध्वन्यत इत्यन्वयः। तिङ्च कारकशक्तिप्रतिपादकाश्च तैः। तिङ्निहन्तीति कारकशक्तयः—अधिकरणत्वकर्तृत्वकर्मत्वरूपाः। **पूर्वमेव व्याख्यातमिति**। महेन्द्रपुरीविमर्दनादिकारित्वं रावणपदेन व्यज्यत इति भावः। **निपातस्येति**। व्यञ्जकत्वमिति शेषः। **आख्यायिकेति**। कतिपतार्था वागित्यर्थः। **इतीति**। इत्यर्थं प्रतीत्यर्थः। **सहकृत इति** षष्ठ्यन्तं निपातस्येत्यस्य विशेषणम्। उपसंहरति—**तेनेत्यादि**। विभज्येत्यत्र निर्भ-

यथा महर्षेर्व्यासस्य—

अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।
श्वः श्वः पापीयदिवसा पृथिवी गतयौवना ॥

अत्र हि कृत्तद्धितवचनैरलक्ष्यक्रमव्यङ्ग्यः, 'पृथिवी गतयौवना'

लोचनम्

अतिक्रान्तं न तु कदाचन वर्तमानतामवलम्बमानं सुखं येषु ते काला इति, सर्व एव न तु सुखं प्रति वर्तमानः स कोऽपि काललेश इत्यर्थः। प्रतीपान्युपस्थितानि वृत्तानि प्रत्यावर्तमानानि तथा दूरभावीन्यपि प्रत्युपस्थितानि निकटतया वर्तमानानि भवन्ति दारुणानि दुःखानि येषु ते। दुःखं बहुप्रकारमेव प्रतिवर्तमानाः सर्वे कालांशा इत्यनेन कालस्य तावन्निर्वेदमभिव्यञ्जयतः शान्तरसव्यञ्जकत्वम्। देशस्याप्याह—पृथिवी श्वः श्वः प्रातः प्रातर्दिनाद्दिनं पापीयदिवसाः पापानां सम्बन्धिनः पापिष्ठजनस्वामिका दिवसा यस्यां सा तथोक्ता। स्वाभावत एव तावत्कालो दुःखमयः तत्रापि पापिष्ठजनस्वामिकपृथिवीलक्षणदेशदौरात्म्याद्विशेषतो दुःखमय इत्यर्थः। तथा हि श्वः श्व इति दिनाद्दिनं गतयौवना वृद्धस्त्रीवदसंभाव्यमानसंभोगा गतयौवनतया हि यो यो दिवस आगच्छति

बालप्रिया

उपैति च पाठः। अत्र व्यङ्ग्यत्वेनोक्तानामर्थानां रावणगतक्रोधनिर्वेदातिशयव्यञ्जकत्वं बोध्यम्। श्लोकं व्याख्याति—**अतिक्रान्तमि**त्यादि। भूतार्थकक्तप्रत्ययेन गम्यमर्थमाह—**न त्वि**त्यादि। काला इति बहुवचनार्थविवरणम्—**सर्व एवे**ति। तेन गम्यमाह—**न त्वि**त्यादि। प्रतीत्यस्य विवरणम्—**प्रतीपानी**ति। प्रतिकूलानीत्यर्थः। वृत्तानि प्रत्यावर्तमानान्युपस्थितानीति सम्बन्धः। गतान्यपि प्रत्यावर्तमानत्वेन ज्ञायमानानीत्यर्थः। अन्यथापि व्याचष्टे—**तथे**त्यादि। उक्तमेवार्थं स्फुटमाह—**दुःखमि**त्यादि। **इत्यनेने**त्यादि। निर्वेदाभिव्यञ्जनद्वारा प्रकृतशान्तरसव्यञ्जकत्वमित्यर्थः। पापीयेति छप्रत्ययान्तमित्याशयेन व्याचष्टे—**पापानामि**त्यादि। पापानां सम्बन्धिन इत्यस्यैव विवरणम्—**पापिष्ठे**त्यादि। भूमार्थकाजन्तः पापशब्दोऽत्रातिशयितपापविशिष्टार्थक इति भावः। पापत्रयतात्पर्यमाह—**स्वभावत** इत्यादि। **पापिष्ठे**ति। पापिष्ठजनस्वामिकः पृथिवीलक्षणो यो देशस्तस्य दौरात्म्यादित्यर्थः। श्वः श्व इत्यस्य गतयौवनेत्यनेनापि सम्बन्ध इत्याह—**श्वःश्व** इत्यादि। गतयौवनेत्यस्य मुख्यार्थस्य प्रकृते बाधाल्लक्षणानिमित्तं तत्सारूप्यं च दर्शयति—**वृद्धे**त्यादि। सम्भोगस्सुखानुभवः। गतयौवनापदेनात्र सुखानाधायिकेत्यर्थो लक्ष्यते, सुखानुभवस्य सम्भावनाऽपि नास्तीत्यर्थो व्यङ्ग्यश्चेति भावः। गतयौवनेति पापीयानित्यत्र हेतुगर्भं पापीयपदमर्थान्तरपरं चेत्यन्यथा व्याचष्टे—**गते**त्यादि। यदि वेत्यादौ योज्यम्। **गते**ति।

इत्यनेन चात्यन्ततिरस्कृतवाच्यो ध्वनिः प्रकाशितः ।

एषां च सुबादीनामेकैकशः समुदितानां च व्यञ्जकत्वं महाकवीनां प्रबन्धेषु प्रायेण दृश्यते । सुबन्तस्य व्यञ्जकत्वं यथा—

तालैः शिञ्जद्वलयसुभगैः कान्तया नर्तितो मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥

तिङन्तस्य यथा—

अवसर रोउं चिअ णिम्मिआइँ मा पुंस मे हअच्छीइं ।
दंसणमेत्तुम्मत्तेहिं जहिँ हिअअं तुह ण णाअम् ॥

लोचनम्

स स पूर्वपूर्वापेक्षया पापीयान् निकृष्टत्वात् । यदिवेयसुनन्तोऽयं शब्दो मुनिनैवं प्रयुक्तो णिजन्तो वा । अत्यन्तेति । सोऽपि प्रकारोऽस्यैवाङ्गतामेतीति भावः। सुबन्तस्येति । समुदितत्वे तूदाहरणं दत्तं व्यस्तत्वे चोच्यत इति भावः । तालैरिति बहुवचनमनेकविधं वैदग्ध्यं ध्वानत् विप्रलम्भोद्दीपकतामेति ।

अपसर रोदितुमेव निर्मिते मा पुंसय हते अक्षिणी मे ।
दर्शनमात्रोन्मत्ताभ्यां याभ्यां तव हृदयमेवंरूपं न ज्ञातम् ॥

उन्मत्तो हि न किञ्चिज्जानातीति न कस्याप्यत्रापराधः दैवेनेत्थमेव निर्माणं

बालप्रिया

पृथिव्या इति शेषः । ननु पापीयानित्युक्तार्थः कथं लभ्यत इत्यत्राह—इयसुनन्त इति । नन्वस्मिन् पक्षे पापीयो दिवसेति भाव्यमित्यत आह—मुनिनेत्यादि । आर्षोऽयं प्रयोग इत्यर्थः । अत्र पक्षान्तरमाह—णिजन्तो वेति । मुनिना प्रयुक्त इत्यनुषज्यते णिजन्तेयसुनन्तो मुनिना प्रयुक्तो वेत्यर्थः । लोकान् पापीयसः करोतीत्यर्थे पापीयश्शब्दाण्णिचि कर्तर्यचि टेर्णिचश्च लोपादकारान्तोऽयं पापीयशब्द इति भावः । अनुस्वानेत्यादिकारिका यथा व्याख्याता, तथा प्रकृते योजयति—सोऽपीत्यादि । सोऽपि प्रकारः अत्यन्ततिरस्कृतवाच्यो ध्वनिः । रसस्येति । प्रकृतस्य शान्तस्येत्यर्थः । दत्तमिति । न्यक्कार इत्यादिश्लोकेन दर्शितमित्यर्थः । 'तालै' रित्याद्युत्तरमेघसन्देशस्थम् । वैदग्ध्यमिति । नर्तनविषयकं वैदग्ध्यमित्यर्थः । अपसरेत्यादिविरहिण्याश्शठं प्रत्युक्तिः । मे हताक्षिणी इति छाया । त्वमपसर अपेहि । कुत इत्यत्राह—रोदितुमित्यादि । रोदितुमेव निर्मिते सृष्टे मे हताक्षिणी कुत्सिते नयने । मा पुंसय मा अभिवर्धय, मा त्वदभिमुखं विकासयेति यावत् । पुंस अभिवर्धन इति चुरादौ । हृदयं तव न ज्ञातमिति छाया । तद्व्याख्यानम्—तवेत्यादि । एवंरूपमिति । मयि अनासक्तं भावीत्यर्थः । भावार्थमाह—उन्मत्तो हीत्यादि । तिङन्त इति । अपस-

यथा वा—

मा पन्थं रुन्धीओ अवेहि बालअ अहोसि अहिरीओ ।
अम्हेअ णिरिच्छाओ सुण्णघरं रक्खिदव्वं णो ॥

सम्बन्धस्य यथा—

अण्णत्त वच्च बालअ ह्णअन्तिं किं मं पुलोएसि एअम् ।
भो जाआभीरुआणं तडं विअण होई ॥

लोचनम्

कृतमिति । अपसर मा वृथा प्रयासं कार्षीः दैवस्य विपरिवर्तयितुमशक्यत्वादिति तिङन्तो व्यञ्जकः तदनुगृहीतानि पदान्तराण्यपीति भावः ।

मा पन्थानं रुधः अपेहि बालक अप्रौढ अहो असि अह्रीकः ।
वयं परतन्त्रा यतः शून्यगृहं मामकं रक्षणीयं वर्तते ॥

इत्यत्रापेहीति तिङन्तमिदं ध्वनति—त्वं तावदप्रौढो लोकमध्ये यदेवं प्रकाशयसि। अस्ति तु सङ्केतस्थानं शून्यगृहं तत्रैवागन्तव्यमिति । 'अन्यत्र व्रज बालक' अप्रौढ बुद्धे स्नान्तीं मां किं प्रकर्षेणालोकयस्येतत् । भो इति सोल्लुण्ठमाह्वानम् । जायाभीरुकाणां सम्बन्धितडमेव न भवति। अत्र जायातो ये भीरवस्तेषामेतत्स्थानमिति दूरापेतः

बालप्रिया

रेति तिङन्तशब्द इत्यर्थः । व्यञ्जक इति । ईर्ष्यादिव्यञ्जक इत्यर्थः । बालकेत्यस्य विवरणम्—अप्रौढेति । णिरिछाओ इत्यस्य छायाविवरणम् । वयं परतन्त्रा इति । शून्यगृहं रक्षणीयं न इति छाया । अस्य व्याख्यानम्—यत इत्यादि । प्रकाशयसी- ति । सम्भोगेच्छामिति शेषः । अत्र श्लोके शृङ्गारः सम्भोगो व्यङ्ग्यः पूर्वश्लोके तु विप्रलम्भ इति भेदः । वृत्तौ—'अण्णत्ते'ति ।

अन्यत्र व्रज बालक स्नान्तीं किं मां प्रलोकयस्येतत् ।
भो जायाभीरुकाणां तटमेव न भवति ॥

इति जायां जलाशये स्नान्तीं काञ्चिदनुरागेण पश्यन्तं कञ्चन गृहस्थं प्रति तं कामयमानायास्तस्या उक्तिरियम् । तडमित्यस्य स्थाने तित्थमिति पाठोऽपि दृश्यते । तस्य तीर्थमिति छाया। लोचने—सम्बन्धीति षष्ठ्यर्थकथनम् । एतत्तटं जायाभीरुकाणां सम्बन्धि न भवत्येवेति योजना । उक्तस्यैव विवरणम्—जायात इत्यादि । इति सम्बन्धो दूरापेत इत्यन्वयः । तथाविधानामत्र स्थाने वर्तनरूपः सम्बन्धो दूरापेत इत्यर्थः । अतो व्रजेति । अनेन सम्बन्धेनेति । षष्ठ्यर्थसम्बन्धेनेत्यर्थः । ईर्ष्यैति ।

कृतकप्रयोगेषु प्राकृतेषु तद्धितविषये व्यञ्जकत्वमावेद्यत एव। अवज्ञातिशये कः। समासानां च वृत्त्यौचित्येन विनियोजने। निपातानां व्यञ्जकत्वं यथा—

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपाधिरम्यैः॥

इत्यत्र चशब्दः। यथा वा—

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु॥

अत्र तुशब्दः। निपातानां प्रसिद्धमपीह द्योतकत्वं रसापेक्षयोक्तमिति द्रष्टव्यम्। उपसर्गाणां व्यञ्जकत्वं यथा—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दलेखाङ्किताः॥

लोचनम्

सम्बन्ध इत्यनेन सम्बन्धेनेर्ष्यातिशयः प्रच्छन्नकामिन्याभिव्यक्तः। कृतकेति कग्रहणं तद्धितोपलक्षणार्थम्। कृतः कप्रत्ययप्रयोगो येषु काव्यवाक्येषु यथा जायाभीरुकाणामिति। ये ह्यरसज्ञा धर्मपत्नीषु प्रेमपरतन्त्रास्तेभ्यः कोऽन्यो जगति कुत्सितः स्यादिति कप्रत्ययोऽवज्ञातिशयद्योतकः। समासानां चेति। केवलानामेव व्यञ्जकत्वमावेद्यत इति सम्बन्धः।

चशब्द इति जातावेकवचनम्। द्वौ चशब्दावेवमाहतुः काकतालीयन्यायेन गण्डस्योपरि स्फोट इतिवत्तद्वियोगश्च वर्षासमयश्च समुपनतौ एतदलं प्राणहरणाय। अत एव रम्यपदेन सुतरामुद्दीपनविभावत्वमुक्तम्। तुशब्द इति। पश्चात्तापसूचकस्सन् तावन्मात्रपरिचुम्बनलाभेनापि कृतकृत्यता स्यादिति ध्वनतीति भावः। प्रसिद्धम-

बालप्रिया

जायासक्तिनिमित्तकेर्ष्येत्यर्थः। कग्रहणं तद्धितोपलक्षणार्थमिति। कृतकप्रयोगेष्वित्यत्र कप्रत्ययग्रहणं कादितद्धितोपलक्षकमित्यर्थः। व्याचष्टे—कृत इत्यादि। केत्यस्य विवरणम्—कप्रत्ययेति। 'अवज्ञातिशये क' इत्येतद्विवृणोति—य इत्यादि। प्रेमेत्यत्र कामेति च पाठः। केवलानामेवेति पूरितम्।

'अयमि'त्यादिविक्रमोर्वशीयस्थम्। द्वौ चशब्दाविति। 'उपनतश्च' 'भवित-

इत्यादौ। द्वित्राणां चोपसर्गाणामेकत्र पदे यः प्रयोगः सोऽपि रसव्यक्त्यनुगुणतयैव निर्दोषः। यथा—'प्रभ्रश्यत्युत्तरीयत्विषि समसि समुद्वीक्ष्य वीतावृतीन्द्राग्जन्तून्' इत्यादौ। यथा वा—'मनुष्यवृत्त्या समुपाचरन्तम्' इत्यादौ।

## लोचनम्

पीति। वैयाकरणादिगृहेषु हि प्राक्प्रयोगस्वातन्त्र्यप्रयोगाभावात्षष्ठ्याद्यश्रवणाल्लिङ्गसंख्याविरहाच्च वाचकवैलक्षण्येन द्योतका निपाता इत्युद्घोष्यत एवेति भावः। प्रकर्षेण स्निग्धा इति प्रशब्दः प्रकर्षं द्योतयन्निङ्गुदीफलानां सरसत्वमाचक्षाण आश्रमस्य सौन्दर्यातिशयं ध्वनति। 'तापसस्य फलविशेषविषयोऽभिलाषातिरेको ध्वन्यते' इति त्वसत्; अभिज्ञानशाकुन्तले हि राज्ञ इयमुक्तिर्न तापसस्येत्यलम्। द्वित्राणामित्यनेनाधिक्यं निरस्यति। सम्यगुच्चैर्विशेषेणेक्षितिरवे भगवतः कृपातिशयोऽभिव्यक्तः।

मनुष्यवृत्त्या समुपाचरन्तं स्वबुद्धिसामान्यकृतानुमानाः।
योगीश्वरैरप्यसुबोधमीश त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः॥

सम्यग्भूतमुपांशुकृत्वा आ समन्ताच्चरन्तमित्यनेन लोकानुजिघृक्षातिशयस्तत्तदाचरतः परमेश्वरस्य ध्वनितः।

## बालप्रिया

व्यञ्चे'ति चशब्दादित्यर्थः। समयश्चेत्यनन्तरं द्वयमिति शेषः। मुहुरित्यादिश्लोकद्वयं शाकुन्तलस्थमस्मदीयशाकुन्तलव्याख्यायां विस्तरेण व्याख्यातम्। प्रसिद्धिं विवृणोति—**वैयाकरणादी**त्यादि। गृहेष्वित्यस्योद्घोष्यत इत्यनेन सम्बन्धः। वाचकवैलक्षण्ये हेतुचतुष्टयमाह—**प्रागि**त्यादि। **प्राक्प्रयोगस्वातन्त्र्यप्रयोगाभावा**दिति। प्राक्प्रयोगश्च स्वातन्त्र्येण प्रयोगाभावश्च तस्मात् प्राक्प्रयोगादिति व्यस्ततया पाठः साधीयान् उपसर्गसंज्ञाविशिष्टानां प्रसाक्षादित्यादीनां निपातानां धातोः प्रागेव प्रयोगादिवैवमादीनां प्रतियोग्यादिवाचकपदं विना स्वतन्त्रतया प्रयोगस्याभावाच्चेत्यर्थः। **षष्ठ्याद्यश्रवणा**दिति। यथा चन्द्रस्य चन्द्रेण वा सदृशं मुखमित्यादौ षष्ठ्यादिकं श्रूयते, तथा चन्द्र इवेत्यादौ षष्ठ्यादिकं न श्रूयते यतस्तस्मादित्यर्थः। **लिङ्गे**ति। निपातार्थस्येति शेषः। समुद्वीक्ष्ये' त्येतद्व्याचष्टे—**सम्य**गित्यादि। **भगवतः** सूर्यस्य।

**मनुष्ये**ति। कृताभिमाना इति'च पाठः। **समुपाचरन्त**मित्येतद्विवृणोति—**सम्य**गित्यादि। 'ये जीवन्ती'ति। ऊर्जिते गुणिनि दृष्टे सति, ये जीवन्ति स्म उत्कृष्टजीविता अभूवन्। ये प्रीत्या वपुषि न मान्ति स्म, ये प्रस्यन्दिप्रमदाश्रवः पुलकिताः सन्तः प्रनृत्यन्ति स्मेत्याद्यन्वयः। 'साधुद्विषः' असज्जनान्। साधुद्विषामिति पाठे कर्मणश्शेषत्वविवक्षया षष्ठी। 'पुष्यता' पोषयता। ये स्ववपुषीति पाठे तु जीवन्ती-

निपातानामपि तथैव । यथा—'अहो बतासि स्पृहणीयवीर्यः' इत्यादौ । यथा वा—

ये जीवन्ति न मान्ति ये स्म वपुषि प्रीत्या प्रनृत्यन्ति च
प्रस्यन्दिप्रमदाश्रवः पुलकिता दृष्टे गुणिन्यूर्जिते ।
हा धिक्कष्टमहो क्व यामि शरणं तेषां जनानां कृते
नीतानां प्रलयं शठेन विधिना साधुद्विषः पुष्यता ॥

इत्यादौ ।

पदपौनरुक्त्यं च व्यञ्जकत्वापेक्षयैव कदाचित्प्रयुज्यमानं शोभामावहति । यथा—

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किन्तु
कर्तुं वृथाप्रणयमस्य न पारयन्ति ॥

इत्यादौ ।

लोचनम्

तथैवेति । रसव्यञ्जकत्वेन द्वित्राणामपि प्रयोगो निर्दोष इत्यर्थः । श्लाघातिशयो निर्वेदातिशयश्च अहो बतेति हा धिगिति च ध्वन्यते । प्रसङ्गात्पौनरुक्त्यान्तरमपि व्यञ्जकमित्याह—पदपौनरुक्त्यमिति । पदग्रहणं वाक्यादेरपि यथासंभवमुपलक्षणम् । विदन्तीति । त एव हि सर्वं विदन्ति सुतरामिति ध्वन्यते । वाक्यपौनरुक्त्यं यथा—'पश्य द्वीपादन्यस्मादपि' इति वचनानन्तरं 'कः संदेहः द्वीपादन्यस्मादपि' इत्यनेनेप्सितप्राप्तिरविघ्नितैव ध्वन्यते । 'किं किम् ? स्वस्था भवन्ति मयि जीवति' इत्यनेनामर्षातिशयः । 'सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी' इत्युन्मादातिशयः ।

बालप्रिया

इत्यादौ वर्तमानसामीप्ये भूते लडिति बोध्यम् । लोचने—ध्वन्यत इति । अत्र यथासंख्यं बोध्यम् । 'यद्वञ्चने'ति । काव्यप्रकाशेऽप्युदाहृतम् । **द्वीपादित्यादि**रत्नावलीस्थम् । **स्वस्था** इति । वेणीसंहारस्थमिदम् । **अमर्षातिशय** इति । वक्तुर्भीमसेनस्येति शेषः । **सर्वे**त्यादि विक्रमोर्वशीयस्थम् । **उन्मादातिशय** इति । वक्तुः पुरूर-

कालस्य व्यञ्जकत्वं यथा—

समविसमणिव्विसेसा समन्तओ मन्दमन्दसंआरा ।
अइरा होहिन्ति पहा मणोरहाणं पि दुल्लङ्घा ॥
[समविषमनिर्विशेषाः समन्ततो मन्दमन्दसञ्चाराः ।
अचिराद्भविष्यन्ति पन्थानो मनोरथानामपि दुर्लङ्घयाः ॥ इति छाया]

अत्र ह्यचिराद्भविष्यन्ति पन्थान इत्यत्र भविष्यन्तीत्यस्मिन् पदे प्रत्ययः कालविशेषाभिधायी रसपरिपोषहेतुः प्रकाशते । अयं हि गाथार्थः प्रवासविप्रलम्भशृङ्गारविभावतया विभाव्यमानो रसवान् । यथात्र प्रत्ययांशो व्यञ्जकस्तथा क्वचित्प्रकृत्यंशोऽपि दृश्यते । यथा—

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावगाहं दिवः
सा धेनुर्जरती चरन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥

लोचनम्

**कालस्येति** । तिङन्तपदानुप्रविष्टस्याप्यर्थकलापस्य कारककालसंख्योपग्रहरूपस्य मध्येऽन्वयव्यतिरेकाभ्यां सूक्ष्मदृशा भागगतमपि व्यञ्जकत्वं विचार्यमिति भावः । **रसपरिपोषेति** । उत्प्रेक्ष्यमाणो वर्षासमयः कम्पकारी किमुत वर्तमान इति ध्वन्यते । अंशांशिकप्रसङ्गादेवाह—**यथात्रेति** ।

बालप्रिया

वस इति शेषः । ध्वन्यते इत्यस्यानुषङ्गः । भावमाह—**तिङन्तेत्यादि** । **तिङन्तपदानुप्रविष्टस्य** तिङन्तपदबोध्यस्य । **कारकेत्यादि** । कारकादिचतुष्टयरूपस्येत्यर्थः । **उपग्रहः**, आत्मनेपदपरस्मैपदे तद्योत्यः कर्त्रभिप्रायक्रियाफलादिरिति यावत् । **भागगतमिति** । कारकादिचतुष्टयैकदेशभूतकालगतमपीत्यर्थः । वृत्तौ 'समे'ति । समविषमाः समाः विषमाश्च देशाः निर्विशेषाः जलप्रवाहनिमग्नतया एकरूपाः येषु ते । 'मनोरथानाम'पीति । किमुत जनानामित्यपिशब्दार्थः । 'रसपरिपोषहेतुः प्रकाशत' इत्युक्तं विवृणोति—**उत्प्रेक्ष्यमाण** इत्यादि । **उत्प्रेक्ष्यमाणः** अचिराद्भाविरवेनोह्यमानः । **कम्पेति** । विरहिजनानामिति शेषः । 'तद्गेहमि'ति । काव्यप्रकाशेऽप्युदाहृतोऽयं श्लोकः । 'इयतीं भूमि' मिति । समृद्धिसीमामित्यर्थः । भूतिमिति च पाठः ।

अत्र श्लोके दिवसैरित्यस्मिन् पदे प्रकृत्यंशोऽपि द्योतकः । सर्वनाम्नां च व्यञ्जकत्वं यथानन्तरोक्ते श्लोके । अत्र च सर्वनाम्नामेव व्यञ्जकत्वं हृदि व्यवस्थाप्य कविना क्वेत्यादिशब्दप्रयोगो न कृतः । अनया दिशा

लोचनम्

दिवसार्थो ह्यत्रात्यन्तासम्भाव्यमानतामस्यार्थस्य ध्वनति । सर्वनाम्नां चेति । प्रकृत्यंशस्य चेत्यर्थः। तेन प्रकृत्यंशेन सम्भूय सर्वनामव्यञ्जकं दृश्यत इत्युक्तं भवतीति न पौनरुक्त्यम् । तथा हि तदिति पदं नतभित्तीत्येतत्प्रकृत्यंशसहायं समस्तामङ्गलनिधानभूतां मूषकाद्याकीर्णतां ध्वनति । तदिति हि केवलमुच्यमाने समुत्कर्षातिशयोऽपि संभाव्येत । न च नतभित्तिशब्देनाप्येते दौर्भाग्यायतनत्वसूचका विशेषा उक्ताः । एवं सा धेनुरित्यादावपि योज्यम् । एवंविधे च विषये स्मरणाकारद्योतकता तच्छब्दस्य । न तु यच्छब्दसंबद्धतेत्युक्तं प्राक् । अत एवात्र तदिदंशब्दादिना स्मृत्यनुभवयोरत्यन्तविरुद्धविषयतासूचनेनाश्चर्यविभावता योजिता । तदिदंशब्दाद्यभावे तु सर्वमसङ्गतं स्यादिति तदिदमंशयोरेव प्राणत्वं योज्यम् । एतच्च द्विशः सामस्त्यं त्रिशः सामस्त्यमिति व्यञ्जकमित्युपलक्षणपरम् । तेन लोष्टप्रस्तारन्यायेनानन्तवैचित्र्यमुक्तम् ।

बालप्रिया

दिवसैरित्याद्युक्तं विवृणोति-**दिवसार्थो** **हीत्यादि** । **दिवसार्थः** दिवसरूपप्रकृत्यर्थः । **अस्यार्थस्य** सम्पत्समृद्धिप्राप्तिरूपार्थस्य । ननु प्रकृत्यंशो द्योतक इत्युक्त्यैव सर्वनाम्नामपि व्यञ्जकत्वे प्राप्ते पुनस्तद्वचनं पुनरुक्तमित्यत आह—**प्रकृत्यंशस्य चेति** । सर्वनाम्नाञ्चेति चकारेणोक्तार्थस्य लाभ इति भावः । एवं व्याख्यानेन लब्धमाह—**तेनेत्यादि** । **तदिति पदमिति** । 'तद्गेह' मित्यत्र तत्पदमित्यर्थः । **ध्वनतीति** । गेहस्येति शेषः । द्वयोः सम्भूय व्यञ्जकत्वमुक्तमुपपादयति—**तदित्यादि** । **सम्भाव्यतेति** । व्यंग्यत्वेनेति शेषः । **नतभित्तिशब्देनापीति** । केवलेनेति विपरिणामेनानुषङ्गः । **एते विशेषा** इति । मूषकाद्याकीर्णतारूपा विशेषा इत्यर्थः । न च उक्ता इति सम्बन्धः । भवेयुरिति शेषः । केवलयोस्तयोरुक्तार्थव्यञ्जकत्वं न भवेदित्यर्थः । ते लोचने इत्यत्र पूर्वमुक्तं स्मारयति—**एवंविध** इत्यादि । **अत एवेति** । तच्छब्दानां स्मरणाकारद्योतकत्वादेवेत्यर्थः । **स्मृत्यनुभवयोरिति** । तच्छब्दगम्यायाः स्मृतेरिदमेतच्छब्दगम्यस्यानुभवस्य चेत्यर्थः । **अत्यन्तेति** । अत्यन्तविरुद्धौ विषयौ ययोस्तत्तायास्सूचनेनेत्यर्थः । अत्र गेहस्य नतभित्तित्वमूषकाद्याकीर्णत्वादिधर्मप्रकारेण स्मृतिः दिवो लब्धावकाशमित्याद्युक्तधर्मप्रकारेणानुभवश्चेति बोध्यम् । तदिदं शब्दादिना योजितेत्यन्वयः । **तदिदमंशयोरेवेति** । तदित्यादेरिदमित्यादेश्चैवेत्यर्थः । **प्राणत्वमिति** । चमत्कारकारित्वमित्यर्थः । **एतच्चेत्यादि** । द्वयोः सम्भूय तथा त्रयाणां सम्भूय व्यञ्जकत्वमित्येतदुपलक्षणमित्यर्थः । **उक्तमिति** । दर्शितमित्य-

सहृदयैरन्येऽपि व्यञ्जकविशेषाः स्वयमुत्प्रेक्षणीयाः । एतच्च सर्वं पदवाक्य-रचनाद्योतनोक्त्यैव गतार्थमपि वैचित्र्येण व्युत्पत्तये पुनरुक्तम् ।

ननु चार्थसामर्थ्याक्षेप्या रसादय इत्युक्तम्, तथा च सुबादीनां व्यञ्जकत्ववैचित्र्यकथनमनन्वितमेव । उक्तमत्र पदानां व्यञ्जकत्वोक्त्यव-सरे । किञ्चार्थविशेषाक्षेप्यत्वेऽपि रसादीनां तेषामर्थविशेषाणां व्यञ्जकश-ब्दाविनाभावित्वाद्यथाप्रदर्शितं व्यञ्जकस्वरूपपरिज्ञानं विभज्योपयुज्यत एव । शब्दविशेषाणां चान्यत्र च चारुत्वं यद्विभागेनोपदर्शितं तदपि तेषां व्यञ्जकत्वेनैवावस्थितमित्यवगन्तव्यम् ।

यत्रापि तत्सम्प्रति न प्रतिभासते तत्रापि व्यञ्जके रचनान्तरे यद्दृष्टं सौष्ठवं तेषां प्रवाहपतितानां तदेवाभ्यासादपोद्धृतानामप्यवभासत इत्यव-

लोचनम्

यद्वक्ष्यत्यन्येऽपीति । अतिविक्षिप्ततया शिष्यबुद्धिसमाधानं न भवेदित्यभिप्रायेण संक्षि-पति—**एतच्चेति** । वितत्याभिधानेऽपि प्रयोजनं स्मारयति—**वैचित्र्येणेति** ।

**नन्विति** । पूर्वं निर्णीतमप्येतदविस्मरणार्थमधिकाभिधानार्थं चाक्षिप्तम् । **उक्त-मत्रेति** । न वाचकत्वं ध्वनिव्यवहारोपयोगि येनावाचकस्य व्यञ्जकत्वं न स्यात् इति प्रागेवोक्तम् । ननु न गीतादिवद्रसाभिव्यञ्जकत्वेऽपि शब्दस्य तत्र व्यापारोऽस्त्येव; स च व्यञ्जनात्मैवेति भावः । एतच्चास्माभिः प्रथमोद्द्योते निर्णीतचरम् । न चेदमस्माभि-रपूर्वमुक्तमित्याह—**शब्दविशेषाणां चेति** । **अन्यत्रेति** । भामहविवरणे । **विभा-गेनेति** । स्रक्चन्दनादयः शब्दाः शृङ्गारे चारवो बीभत्से त्वचारव इति रसकृत एव विभागः । रसं प्रति च शब्दस्य व्यञ्जकत्वमेवेत्युक्तं प्राक् ।

**यत्रापीति** । स्रक्चन्दनादिशब्दानां तदानीं शृङ्गारादिव्यञ्जकत्वाभावेऽपि व्यञ्ज-

बालप्रिया

र्थः । अत्रोपष्टम्भकमाह—यद्वक्ष्यत्यन्येऽपीति । इत्यभिप्रायेण वक्ष्यतीति सम्बन्धः ।

'नन्वि'त्याद्याक्षेपस्य फलं दर्शयति—**पूर्वमित्यादि** । **अधिकाभिधानार्थं चाक्षिप्तमिति** । वृत्तावनुपदं वक्ष्यमाणस्याधिकांशस्य बोधनार्थं चाक्षेपः कृत इत्यर्थः । वृत्तौ 'अनन्वित'मिति । असङ्गतमित्यर्थः । समाधत्ते—'उक्तमि'त्यादि । 'उक्तमत्रे' ति । अत्र प्रत्युक्तमित्यर्थः । एतद्विवृणोति—**न वाचकत्वमित्यादि** । येनेति । वा-चकत्वस्य ध्वनिव्यवहारोपयोगित्वेनेत्यर्थः । स तु नेत्यस्य व्यापारोऽस्तीत्यनेनान्व-यः । भावमाह—**स्रक्चन्दनादय इत्यादि** ।

'यत्रापी'त्यादेः 'अवसातव्य' मित्यन्तग्रन्थस्य तात्पर्यं विवृणोति—**स्रक्चन्द-**

सातव्यम् । कोऽन्यथा तुल्ये वाचकत्वे शब्दानां चारुत्वविषयो विशेषः स्यात् । अन्य एवासौ सहृदयसंवेद्य इति चेत, किमिदं सहृदयत्वं नाम ? किं रसभावानपेक्षकाव्याश्रितसमयविशेषाभिज्ञत्वम् , उत रसभावादिमयकाव्यस्वरूपपरिज्ञाननैपुण्यम् । पूर्वस्मिन् पक्षे तथाविधसहृदयव्यवस्थापितानां शब्दविशेषाणां चारुत्वनियमो न स्यात् । पुनः समयान्तरेणान्यथापि व्यवस्थापनसम्भवात् । द्वितीयस्मिंस्तु पक्षे रसज्ञतैव सहृदयत्वमिति । तथाविधैः सहृदयैः संवेद्यो रसादिसमर्पणसामर्थ्यमेव नैसर्गिकं शब्दानां विशेष इति व्यञ्जकत्वाश्रय्येव तेषां मुख्यं चारुत्वम् । वाचकत्वाश्रयाणा-

### लोचनम्

कत्वशक्तेर्भूयसा दर्शनात्तदधिवाससुन्दरीभूतमर्थं प्रतिपादयितुं सामर्थ्यमस्ति । तथाहि- 'तटी तारं ताम्यति' इत्यत्र तटशब्दस्य पुंस्त्वनपुंसकत्वे अनादृत्य स्त्रीत्वमेवाश्रितं सहृदयैः 'स्त्रीति नामापि मधुरं' इति कृत्वा । यथा वास्मदुपाध्यायस्य विद्वत्कविसहृदयचक्रवर्तिनो भट्टेन्दुराजस्य—

> इन्दीवरद्युति यदा बिभृयान्न लक्ष्म
> स्युर्विस्मयैकसुहृदोऽस्य यदा विलासाः ।
> स्यान्नाम पुण्यपरिणामवशात्तथापि
> किं किं कपोलतलकोमलकान्तिरिन्दुः ॥

अत्र हीन्दीवरलक्ष्मविस्मयसुहृद्विलासनामपरिणामकोमलादयः शब्दाः शृङ्गाराभिव्यञ्जनदृष्टशक्तयोऽत्र परं सौन्दर्यमावहन्ति । अवश्यं चैतदभ्युपगन्तव्यमित्याह—कोऽन्यथेति । असंवेद्यस्तावदसौ न युक्त इत्याशयेनाह—सहृदयेति । पुनरिति ।

### बालप्रिया

नादिशब्दानामित्यादि । तदानीमिति । प्रकृतप्रयोगकाल इत्यर्थः । शृङ्गारातिरिक्तवर्णनस्थल इति यावत् । पुंस्त्वनपुंसकत्वे इति । 'तटं त्रिषु' त्यनुशासनप्राप्ते ते इत्यर्थः ।

इन्दीवरेति । पुण्यपरिणामवशादिन्दुः इन्दीवरद्युति लक्ष्म न बिभृयाद्यदा, अस्य विलासाः विस्मयैकसुहृदः स्युः यदा, तथाऽपि कपोलतलकोमलकान्तिः किं किं स्यान्नामेति सम्बन्धः । यदेति यदीत्यर्थे । कपोलेति । सुन्दरीकपोलतल इव कोमलकान्तिरित्यर्थः । केरीकपोलेति पाठे केरीशब्दः स्त्रीविशेषवाची बोध्यः । किं किं स्यान्नामेति । नैव स्यादित्यर्थः । अत्रेति । चन्द्रं विलोक्य मध्यस्थस्य कस्यचिद्रसिकस्य वचन इत्यर्थः । 'अन्य' इत्यादिशङ्काग्रन्थमवतारयति— असंवेद्य इत्यादि । असा-

न्तु प्रसाद एवार्थापेक्षायां तेषां विशेषः। अर्थानपेक्षायां त्वनुप्रासादिरेव।

एवं रसादीनां व्यञ्जकस्वरूपमभिधाय तेषामेव विरोधिरूपं लक्षयितुमिदमुपक्रम्यते—

**प्रबन्धे मुक्तके वापि रसादीन्बन्द्धुमिच्छता।**
**यत्नः कार्यः सुमतिना परिहारे विरोधिनाम्॥ १७॥**

प्रबन्धे मुक्तके वापि रसभावनिबन्धनं प्रत्यादृतमनाः कविर्विरोधिपरिहारे परं यत्नमादधीत। अन्यथा त्वस्य रसमयः श्लोक एकोऽपि सम्यङ्न सम्पद्यते।

लोचनम्

अनियन्त्रितपुरुषेच्छायत्तो हि समयः कथं नियतः स्यात्। **मुख्यं चारुत्वमिति।** विशेष इति पूर्वेण सम्बन्धः। **अर्थापेक्षायामिति।** वाच्यापेक्षायामित्यर्थः। **अनुप्रासादिरेवेति।** शब्दान्तरेण सह या रचना तदपेक्षोऽसौ विशेष इत्यर्थः। आदिग्रहणाच्छब्दगुणालङ्काराणां सङ्ग्रहः। अत एव रचनया प्रसादेन चारुत्वेन चोपबृंहिता एव शब्दाः काव्ये योज्या इति तात्पर्यम्॥ १५, १६॥

रसादीनां यद्व्यञ्जकं वर्णपदादिप्रबन्धान्तं तस्य स्वरूपमभिधायेति सम्बन्धः। **उपक्रम्यत** इति। विरोधिनामपि लक्षणकरणे प्रयोजनमुच्यते शक्यहानत्वं नाम अनया कारिकया। लक्षणं तु विरोधिरससम्बन्धीत्यादिना भविष्यतीत्यर्थः॥ १७॥

ननु 'विभावभावानुभावसञ्चार्यौचित्यचारुणः' इति यदुक्तं तत एव व्यतिरेकमुखेनैतदप्यवगंस्यते। मैवम्; व्यतिरेकेण हि तदभावमात्रं प्रतीयते न तु तद्विरुद्धम्। तदभावमात्रं च न तथा दूषकं यथा तद्विरुद्धम्। पथ्यानुपयोगो हि न तथा व्याधिं

बालप्रिया

वेति। शब्दगतो विशेष इत्यर्थः। **अनियन्त्रितेत्यादिना** 'पुन'रित्यादिग्रन्थस्य भावार्थ उक्तः। अनुप्रासपदार्थं व्याचष्टे—**शब्दान्तरेणेत्यादि**। फलितमाह—**अत एव रचनयेत्यादि**। **उपबृंहिताः** विशिष्टाः॥ १५, १६॥

भावमाह—**विरोधिनामपीत्यादि**। शक्यहानत्वं नाम प्रयोजनमनया कारिकया उच्यत इति सम्बन्धः। विरोधिनां लक्षणे ज्ञाते तेषां परिहारः शक्य इति तदेव प्रयोजनमित्यर्थः॥ १७॥

**एतदपीति।** विरोधिनां परिहरणमपीत्यर्थः। **तदभावमात्रमिति।** विभावाद्यौचित्यशालिनः कथाशरीरस्य विधिरित्यादिना तदौचित्यविरहिणो विधिर्न कार्य इत्याद्यर्थमात्रमित्यर्थः। **यत्नत इतीति।** यत्नत इत्यादिनेत्यर्थः। वृत्तौ 'भ्रान्ताः

कानि पुनस्तानि विरोधीनि यानि यत्नतः कवेः परिहर्तव्यानीत्युच्यते—

> विरोधिरससम्बन्धिविभावादिपरिग्रहः ।
> विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम् ॥ १८ ॥
> अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम् ।
> परिपोषं गतस्यापि पौनःपुन्येन दीपनम् ।
> †रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च ॥ १९ ॥

प्रस्तुतरसापेक्षया विरोधी यो रसस्तस्य सम्बन्धिनां विभावभावानुभावानां परिग्रहो रसविरोधहेतुकः सम्भवनीयः । तत्र विरोधिरसविभावपरिग्रहो यथा शान्तरसविभावेषु तद्विभावतयैव निरूपितेष्वनन्तरमेव शृङ्गारादिविभाववर्णने । विरोधिरसभावपरिग्रहो यथा प्रियं प्रति प्रणयकलहकुपितासु कामिनीषु वैराग्यकथाभिरनुनये । विरोधिरसानुभावपरिग्रहो यथा प्रणयकुपितायां प्रियायामप्रसीदन्त्यां नायकस्य कोपावेशविवशस्य रौद्रानुभाववर्णने ।

## लोचनम्

जनयति यद्वदपथ्योपयोगः । तदाह—**यत्नत** इति । 'विभावे'त्यादिना श्लोकेन यदुक्तं तद्विरुद्धं **विरोधी**त्यादिनार्धश्लोकेनाह । 'इतिवृत्ते'त्यादिना श्लोकद्वयेन यदुक्तं तद्विरुद्धं **विस्तरे**णेत्यर्धश्लोकेनाह । 'उद्दीपने'त्यर्धश्लोकोक्तस्य विरुद्धं **अकाण्ड** इत्यर्धश्लोकेन । 'रसस्ये'त्यर्धश्लोकोक्तस्य विरुद्धं **परिपोषं** गतस्येत्यर्धश्लोकेन । 'अलङ्कृतीनामि'त्यनेन यदुक्तं तद्विरुद्धमन्यदपि च विरुद्धं **वृत्त्यनौचित्य**मित्यनेन । एतत्क्रमेण व्याचष्टे—**प्रस्तुतरसापेक्षये**त्यादिना । हास्यशृङ्गारयोर्वीराद्भुतयो रौद्रकरुणयोर्भयानकबीभत्सयोर्न विभावविरोध इत्यभिप्रायेण शान्तशृङ्गारावुपन्यस्तौ, प्रशमरागयोर्विरोधात् । विरोधिनो रसस्य यो भावो व्यभिचारी तस्य परिग्रहः, विरोधिनस्तु यः स्थायी स्थायि-

## बालप्रिया

दीति 'शृङ्गारादी'ति च निर्देशे बीजमाह—[illegible]रित्यादि । भयानकबीभत्सयोरित्यस्यानन्तरं "शान्तबीभत्सयो"रिति च क्वचित् ग्रन्थे पाठः । शान्तशृङ्गारयोर्विरोधे हेतुमाह—प्रशमेति । विरोधादिति । सहानवस्थानादित्यर्थः । प्रतिपत्तर्येकस्मिन् शमे उद्बुद्धे तदव्यवधानेन [illegible] । अतः शान्तविभावे वर्णिते तदनन्तरमेव शृङ्गारादि[illegible] कायम् । विरोधिरसस्ये-

अयं चान्यो रसभङ्गहेतुर्यत्प्रस्तुतरसापेक्षया वस्तुनोऽन्यस्य कथञ्चिदन्वितस्यापि विस्तरेण कथनम्। यथा विप्रलम्भशृङ्गारे नायकस्य कस्यचिद्वर्णयितुमुपक्रान्ते कवेर्यमकाद्यलङ्कारनिबन्धनरसिकतया महता प्रबन्धेन पर्वतादिवर्णने। अयं चापरो रसभङ्गहेतुरवगन्तव्यो यदकाण्ड

लोचनम्

तया तत्परिग्रहोऽसम्भवनीय एव तदनुत्थानप्रसङ्गात्। व्यभिचारितया तु परिग्रहो भवत्येव। अत एव सामान्येन भावग्रहणम्। वैराग्यकथाभिरिति वैराग्यशब्देन निर्वेदः शान्तस्य यः स्थायी स उक्तः। यथा—'प्रसादे वर्तस्व प्रकटय मुदं सन्त्यज रुषम्' इत्याद्युपक्रम्यार्थान्तरन्यासो 'न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः' इति। मनागपि निर्वेदानुप्रवेशे सति रतेर्विच्छेदः। ज्ञातविषयसतत्त्वो हि जीवितसर्वस्वाभिमानं कथं भजेत। न हि ज्ञातशुक्तिकारजततत्त्वस्तदुपादेयधियं भजते ऋते संवृतिमात्रात्। कथाभिरिति बहुवचनं शान्तरसस्य व्यभिचारिणो धृतिं मतिप्रभृतीन् सङ्गृह्णाति।

नन्वन्यदनुन्मत्तः कथं वर्णयेत्, किमुत विस्तरत इत्याह—कथञ्चिदन्वितस्ये-

बालप्रिया

त्यादिग्रन्थं विवृणोति—**विरोधिन** इत्यादि। **तदनुत्थानप्रसङ्गादि**ति। तस्य स्थायित्वेनोत्थाने प्रसङ्गस्याभावादित्यर्थः। तदुत्थाने प्रकृतस्थायिनो विच्छेदः स्यादिति भावः। **सामान्येने**त्यादि। स्वत एव व्यभिचारिणः व्यभिचारित्वेन स्थायिनश्च बोधनाय भाव इति सामान्यत उक्तमित्यर्थः। **प्रसाद** इति। काव्यप्रकाशेऽप्युदाहृतोऽयं श्लोकः। 'प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः। निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखमि'ति द्वितीयतृतीयपादौ। हे मुग्धे विवेकरहिते, गतः काल एव हरिणः अस्थिरत्वात् प्रत्येतुं प्रत्यागन्तुम् न प्रभवति स पुनर्नागच्छतीत्यर्थः। अत्र शान्तस्य विभावः कालानित्यत्वलक्षणो निबन्धः तत्प्रकाशितो निर्वेदो व्यभिचारी चेत्यतोऽत्र विरोधिरसविभावभावयोः परिग्रहः स च प्रकृतरसप्रतिकूल इत्याह—**मनागपी**त्यादि। निर्वेदानुवेधे इति च पाठः। **विच्छेद** इति। भवेदिति शेषः। अत्र हेतुमाह—**ज्ञाते**त्यादि। ज्ञातं विषयाणां सतत्वं दुःखमिश्रितत्वपरिणामविरसत्वादिना हेयस्वरूपं तत्त्वं येन सः। **जीवितसर्वस्वाभिमान**मिति। वनितादौ विषय इति शेषः। भजेतेत्यत्र करोत्विति च पाठः। दृष्टान्तमाह—**न ही**त्यादि। शुक्तौ भासमानं रजतं शुक्तिकारजतमित्युच्यते, ज्ञातं शुक्तिकारजततत्वं येन सः। **तदि**ति। तद्विशेष्यकोपादेयत्वबुद्धिमित्यर्थः। **संवृतिमात्रादृत** इति। संवृत्यैव तत्रोपादेयत्वबुद्धिं भजत इति भावः। संवृतिरविद्या भ्रमरूपा तद्वृत्तिर्वा। वृत्तौ 'कथञ्चिदन्वितस्ये'ति। यया कयापि विधया प्रकृतेन सम्बद्धस्येत्यर्थः।

एतद्ग्रन्थमवतारयति—**नन्वि**त्यादि। **अपि तावदिति शब्दाभ्या**मिति

एव विच्छित्तिः रसस्याकाण्ड एव च प्रकाशनम्। तत्रानवसरे विरामो रसस्य यथा नायकस्य कस्यचित्स्पृहणीयसमागमया नायिकया कयाचित्परां परिपोषपदवीं प्राप्ते शृङ्गारे विदिते च परस्परानुरागे समागमोपायचिन्तोचितं व्यवहारमुत्सृज्य स्वतन्त्रतया व्यापारान्तरवर्णने। अनवसरे च प्रकाशनं रसस्य यथा प्रवृत्ते प्रवृत्तविविधवीरसङ्क्षये कल्पसङ्क्षयकल्पे सङ्ग्रामे रामदेवप्रायस्यापि तावन्नायकस्यानुपक्रान्तविप्रलम्भशृङ्गारस्य निमित्तमुचितमन्तरेणैव शृङ्गारकथायामवतारवर्णने। न चैवंविधे विषये दैवव्यामोहितत्वं कथापुरुषस्य परिहारो यतो रसबन्ध एव कवेः प्राधान्येन प्रवृत्तिनिबन्धनं युक्तम्। इतिवृत्तवर्णनं तदुपाय एवेत्युक्तं प्राक् 'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः' इत्यादिना।

अत एव चेतिवृत्तमात्रवर्णनप्राधान्येऽङ्गाङ्गिभावरहितरसभावनिबन्धेन च कवीनामेवंविधानि स्खलितानि भवन्तीति रसादिरूपव्यङ्ग्यतात्पर्यमेवैषां

---

**लोचनम्**

ति। **व्यापारान्तरेति**। यथा वत्सराजचरिते चतुर्थेऽङ्के—रत्नावलीनामधेयमप्यगृह्णतो विजयवर्मवृत्तान्तवर्णने। अपि तावदिति शब्दाभ्यां दुर्योधनादेस्तद्वर्णनं दूरापास्तमिति वेणीसंहारे द्वितीयाङ्कमेवोदाहरणत्वेन ध्वनति। अत एव वक्ष्यति—'दैवव्यामोहितत्वमि'ति। पूर्वं तु सन्ध्यङ्गाभिप्रायेण प्रत्युदाहरणमुक्तम्। कथापुरुषस्येति प्रतिनायकस्येति यावत्।

**अत एव** चेति। यतो रसबन्ध एव मुख्यः कविव्यापारविषयः इतिवृत्तमात्र-

**बालप्रिया**

रामदेवप्रायस्यापि तावदित्यत्रत्याभ्यां ताभ्यामित्यर्थः। ध्वनतीत्यनेनास्य सम्बन्धः। **तद्वर्णनमिति**। सङ्ग्रामे प्रवृत्ते निमित्तमुचितमन्तरेणैव शृङ्गारवर्णनमित्यर्थः। **अत एवेति**। द्वितीयाङ्कस्य उदाहरणत्वेन ध्वननादेवेत्यर्थः। **दैवव्यामोहितत्वमिति**। दैवेन व्यामोहितः कृत्याकृत्यविवेकराहित्यं प्रापितस्तत्त्वमित्यर्थः। वेणीसंहारे दुर्योधनस्य तद्गम्यत इति भावः। यथा वेणीसंहारे इति पूर्वमुक्तमन्याभिप्रायेणेति स्मारयति—**पूर्वमित्यादि**। कथापुरुषस्येत्यनेन विवक्षितमाह—**प्रतिनायकस्येति**। न तु प्रधाननायकस्येत्यर्थः। तस्य तथात्वेनौचित्यापातादिति भावः। वृत्तौ 'रसबन्ध' इति प्रथमान्तं रसानुकूलशब्दार्थनिबन्ध इत्यर्थः। **प्रवृत्तिनिबन्धनमिति**। प्रवृत्तिविषय इत्यर्थः। यद्वा रसबन्धे इति सप्तम्यन्तम्। 'प्रवृत्तिनिबन्धनं' प्रवृत्तेः सम्बन्धो विषयतेत्यर्थः। 'अतएवे'त्यस्यारब्ध इत्यनेन सम्बन्धः।

लोचने व्याचष्टे—**यत** इत्यादि। वृत्तौ प्राधान्ये सति यन्निबन्धनं तस्मिन्निति स-

युक्तमिति यत्नोऽस्माभिरारब्धो न ध्वनिप्रतिपादनमात्राभिनिवेशेन। पुनश्चायमन्यो रसभङ्गहेतुरवधारणीयो यत्परिपोषं गतस्यापि रसस्य पौनःपुन्येन दीपनम्। उपयुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमाणः परिम्लानकुसुमकल्पः कल्पते। तथा वृत्तेर्व्यवहारस्य यदनौचित्यं तदपि रसभङ्गहेतुरेव। यथा नायकं प्रति नायिकायाः कस्याश्चिदुचितां भङ्गिमन्तरेण स्वयं सम्भोगाभिलाषकथने। यदि वा वृत्तीनां भरतप्रसिद्धानां कैशिक्यादीनां काव्यालङ्कारान्तरप्रसिद्धानामुपनागरिकाद्यानां वा यदनौचित्यमविषये निबन्धनं तदपि रसभङ्गहेतुः। एवमेषां रसविरोधिनामन्येषां चानया दिशा स्वयमुत्प्रेक्षितानां परिहारे सत्कविभिरवहितैर्भवितव्यम्। परिकरश्लोकाश्चात्र—

मुख्या व्यापारविषयाः सुकवीनां रसादयः।
तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः॥
नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः॥

लोचनम्

वर्णनप्राधान्ये सति यदङ्गाङ्गिभावरहितानामविचारितगुणप्रधानभावानां रसभावानां निबन्धनं तन्निमित्तानि स्खलितानि सर्वे दोषा इत्यर्थः। न **ध्वनिप्रतिपादनमात्रे**ति। व्यङ्ग्योऽर्थो भवतु मा वा भूत् कस्तत्राभिनिवेशः? काकदन्तपरीक्षाप्रायमेव तत्स्यादिति भावः। वृत्त्यनौचित्यमेव चेति बहुधा व्याचष्टे तदपीत्यनेन चशब्दं कारिकागतं व्याचष्टे। रसभङ्गहेतुरेव इत्यनेनैवकारस्य कारिकागतस्य भिन्नक्रमत्वमुक्तम्। रसस्य विरोधायैवेत्यर्थः। **नायकं प्रती**ति। नायकस्य हि धीरोदात्तादिभेदभिन्नस्य सर्वथा वीररसानुवेधेन भवितव्यमिति तं प्रति कातरपुरुषोचितमधैर्ययोजनं दुष्टमेव। **तेषामि**ति रसादीनाम्। **तैरि**ति सुकविभिः। सोऽपशब्द इति दुर्यश इत्यर्थः। ननु कालिदासः

बालप्रिया

म्बन्धः। चकारौ वाक्यालङ्कारे इत्याशयेन व्याचष्टे—**इतिवृत्ते**त्यादि। **बहुधा व्याचष्ट** इति। वृत्तेर्व्यवहारस्येत्यादिना रसभङ्गहेतुरित्यन्तग्रन्थेन त्रेधा व्याचष्ट इत्यर्थः। **तदपीत्यनेने**ति। तत्पदोत्तरापिशब्देनेत्यर्थः। नायकं प्रति नायिकया स्वयं सम्भोगाभिलाषस्य कथने निबद्धे नायकस्याधैर्ययोजनमापतति, तच्च दुष्टमिति भावं विवृणोति—**नायकस्ये**त्यादि। **भावितव्यमि**ति। सर्वेषां वीरशब्देन व्यवहारादिति भावः। **कातरपुरुषे**ति। अधीरपुरुषेत्यर्थः। वृत्तौ 'उचितां भङ्गिमन्तरेणे'

पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः ।
तान्समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा ॥
वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः ।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः ॥ इति ।

**विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् ।**
**बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥ २० ॥**

स्वसामग्र्या लब्धपरिपोषे तु विवक्षिते रसे विरोधिनां विरोधिरसाङ्गानां बाध्यानामङ्गभावं वा प्राप्तानां सतामुक्तिरदोषा । बाध्यत्वं हि विरोधिनां शक्याभिभवत्वे सति नान्यथा । तथाच तेषामुक्तिः प्रस्तुतरसपरिपोषायैव सम्पद्यते । अङ्गभावं प्राप्तानां च तेषां विरोधित्वमेव निवर्तते । अङ्गभावप्राप्तिर्हि तेषां स्वाभाविकी समारोपकृता वा । तत्र येषां नैसर्गिकी तेषां तावदुक्तावविरोध एव । यथा विप्रलम्भशृङ्गारे तदङ्गानां

**लोचनम्**

परिपोषं गतस्यापि करुणस्य रतिविलासेषु पौनःपुन्येन दीपनमकार्षीत् , तत्कोऽयं रसविरोधिनां परिहारनिर्बन्ध इत्याशङ्कयाह—**पूर्व** इति । न हि वसिष्ठादिभिः कथञ्चिद्यदि स्मृतिमार्गस्त्यक्तस्तद्वयमपि तथा त्यजामः । अचिन्त्यहेतुकत्वादुपरिचरितानामिति भावः । इति शब्देन परिकरश्लोकसमाप्तिं सूचयति ॥ १९ ॥

एवं विरोधिनां परिहारे सामान्येनोक्ते प्रतिप्रसवं नियतविषयमाह—**विवक्षित** इति । **बाध्यानामिति** । बाध्यत्वाभिप्रायेणाङ्गत्वाभिप्रायेण वेत्यर्थः। **अच्छला** निर्दोषेत्यर्थः । बाध्यत्वाभिप्रायं व्याचष्टे-**बाध्यत्वं हीति** । आङ्गभावाभिप्रायमुभयथा व्याचष्टे,

**बालप्रिया**

त्यनेन भङ्गया तत्कथनं दुष्यन्तादेर्नायकस्येव नायिकाया अपि न दोष इति दर्शितम् । भावार्थमाह—**न हीत्यादि** । न हि त्यजाम इति सम्बन्धः । वसिष्ठादीनां तत्त्यागेऽपि न दोष इत्याह—**अचिन्त्येत्यादि** । अचिन्त्यहेतुकत्वादुपरिचरितानामिति च पाठः । उपरिचरितानामित्यस्योत्कृष्टचरितानामित्यर्थः ॥ १९ ॥

'बाध्यानामि'त्यादिकारिकाभागं व्याचष्टे—**बाध्यत्वेत्यादि** । उक्तिरित्यनेनास्य सम्बन्धः । **उभयथा व्याचष्ट** इति । 'अङ्गभावप्राप्तिर्हि'त्यादिग्रन्थेन द्वेधा व्याख्यातवानित्यर्थः । वृत्तौ 'तदङ्गानां व्याध्यादीनामि'ति । उक्तावविरोध इत्यस्यानुषङ्गः । उपरि वाक्ये उक्तावित्यस्यैवानुषङ्गः । तत्पदेनात्र विप्रलम्भपरामर्शः । व्याध्यादीनां

व्याध्यादीनां तेषाञ्च तदङ्गानामेवादोषो नातदङ्गानाम्। तदङ्गत्वे च सम्भवत्यपि मरणस्योपन्यासो न ज्यायान्। आश्रयविच्छेदे रसस्यात्यन्तविच्छेदप्राप्तेः। करुणस्य तु तथाविधे विषये परिपोषो भविष्यतीति चेत्—न; तस्याप्रस्तुतत्वात् प्रस्तुतस्य च विच्छेदात्। यत्र तु करुणरसस्यैव काव्यार्थत्वं तत्राविरोधः। शृङ्गारे वा मरणस्यादीर्घकालप्रत्यापत्तिसम्भवे कदाचिदुपनिबन्धो नात्यन्तविरोधी। दीर्घकालप्रत्यापत्तौ तु तस्यान्तरा प्रवाहविच्छेद एवेत्येवंविधेतिवृत्तोपनिबन्धनं रसबन्धप्रधानेन कविना परिहर्तव्यम्।

लोचनम्

तत्र प्रथमं स्वाभाविकप्रकारं निरूपयति—**तदङ्गानामि**ति। निरपेक्षभावतया सापेक्षभावविप्रलम्भशृङ्गारविरोधिन्यपि करुणे ये व्याध्यादयस्सर्वथाङ्गत्वेन दृष्टाः तेषामिति। ते हि करुणे भवन्त्येव त एव च भवन्तीति। शृङ्गारे तु भवन्त्येव नापि त एवेति। **अतदङ्गानामि**ति। यथालस्यौग्र्यजुगुप्सानामित्यर्थः। **तदङ्गत्वे चे**ति। 'सर्वं एव शृङ्गारे व्यभिचारिण इत्युक्तत्वादि'ति भावः। आश्रयस्य स्त्रीपुरुषान्यतरस्याधिष्ठानस्यापाये रतिरेवोच्छिद्येत तस्या जीवितसर्वस्वाभिमानरूपत्वेनोभयाधिष्ठानत्वात्। **प्रस्तुतस्ये**ति। विप्रलम्भस्येत्यर्थः। **काव्यार्थत्वमि**ति। प्रस्तुतत्वमित्यर्थः। नन्वेवं सर्वं एव व्यभिचारिण इति विघटितमित्याशङ्क्याह—**शृङ्गारे** वेति। अदीर्घकाले यत्र मरणे विश्रान्तिपदबन्ध एव नोत्पद्यते तत्रास्य व्यभिचारित्वम्। **कदाचिदि**ति। यदि तादृशीं भङ्गिं घटयितुं सुकवेः कौशलं भवति। यथा—

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोर्देहन्यासादमरगणनालेख्यमासाद्य सद्यः।

बालप्रिया

विरोधिरसाङ्गत्वं प्रकृतरसाङ्गत्वं च दर्शयति—**निरपेक्षभावत**येत्यादि। **ते ही**ति। व्याध्यादयो हीत्यर्थः। **करुणे** इत्यादि। करुणे भवन्त्येव ते एव भवन्तीति द्वेधा नियम इत्यर्थः। **नापी**त्यादि। ते एवेति नियमोऽपि नेत्यर्थः। मरणस्य विप्रलम्भाङ्गत्वसम्भवे मानमाह—**सर्वं** इत्यादि। आलस्यौग्र्यजुगुप्सावर्जास्सर्वं एव व्यभिचारिण इति मुनिना उक्तत्वादित्यर्थः। आश्रयविच्छेद इत्यादिग्रन्थं व्याचष्टे—**आश्रयस्ये**त्यादि। वृत्तौ–'शृङ्गारे वे'त्यादि। 'मरणस्ये'ति। नायकयोरेकस्य यन्मरणं तस्येत्यर्थः। अस्य उपनिबन्ध इत्यनेन सम्बन्धः। 'अदीर्घे'ति। मरणादूर्ध्वमदीर्घो यः कालस्तस्मिंस्तेन वा प्रत्यापत्तिः नायकयोः समागमस्तत्सम्भवे सतीत्यर्थः। लोचने भावमाह—**यत्रे**त्यादि। **विश्रान्तिपदबन्धः** प्रतीतिविश्रान्तेः प्रतिष्ठा। **तत्र** तथाविधस्थले। **अस्य** मरणस्य। काव्यानुशासनेऽप्येवमुक्तम्–"शृङ्गारे तु मरणाध्यवसायो

तत्र लब्धप्रतिष्ठे तु विवक्षिते रसे विरोधिरसाङ्गानां बाध्यत्वेनोक्तावदोषो यथा—

काकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥

लोचनम्

पूर्वाकाराधिकचतुरया सङ्गतः कान्तयासौ लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥

अत्र स्फुटैव रत्यङ्गता मरणस्य । अत एव सुकविना मरणे पदबन्धमात्रं न कृतम्, अनूद्यमानत्वेनैवोपनिबन्धनात् । पदबन्धनिवेशे तु सर्वथा शोकोदय एवातिपरिमितकालप्रत्यापत्तिलाभेऽपि ।

अथ दूरपरामर्शकसहृदयसामाजिकाभिप्रायेण मरणस्यादीर्घकालप्रत्यापत्तेरङ्गतोच्यते, हन्त तापसवत्सराजेऽपि यौगन्धरायणादिनीतिमार्गाकर्णनसंस्कृतमतीनां वासवदत्तामरणबुद्धेरेवाभावात्करुणस्य नामापि न स्यादित्यलमवान्तरेण बहुना । तस्माद्दीर्घकालतात्र पदबन्धलाभ एवेति मन्तव्यम् । एवं नैसर्गिकाङ्गता व्याख्याता । समारोपितत्वे तद्विपरीतेत्यर्थलब्धत्वात्स्वकण्ठेन न व्याख्याता ।

एवं प्रकारत्रयं व्याख्याय क्रमेणोदाहरति—**तत्रेत्यादिना** । **काकार्यमिति** ।

बालप्रिया

मरणादूर्ध्वं झटिति पुनर्योगो वा निबध्यत' इति । **तीर्थ** इति रघुवंशस्थम् । देहत्यागादिति च पाठः । **कान्तया** इन्दुमत्या । **असौ** अजः । **रत्यङ्गतेति** । रमणाङ्गतेत्यर्थः । **मरणस्येति** । देहत्यागादित्यनेन दर्शितस्य मरणस्येत्यर्थः । प्रपूर्वश्लोकेन सङ्गमाशाया वर्णितत्वादत्र मरणस्य विप्रलम्भाङ्गत्वं स्फुटमिति भावः । **पदबन्धः** प्रतीतिविश्रान्तेः पदबन्धः । **अनूद्यमानत्वेनेति** । देहत्यागादित्यनेनेति भावः । **अतीति** । अतिपरिमितोऽत्यल्पः कालस्तेन प्रत्यापत्तेः सङ्गमस्य लाभः सम्भवः प्रतीतिर्वा तस्मिन्नपीत्यर्थः। शोकोदय एवेत्यनेनास्य सम्बन्धः । सहृदयानां शोकचर्वणैव भवेदिति तदर्थः ।

केचिददीर्घकालेत्यादिग्रन्थस्य भावमन्यथा व्याचक्षते, तदनुवदन्नाह—**अथेत्यादि** । **अथेति** प्रश्ने । प्रतिवक्ति—**हन्तेत्यादि** । अयुक्तकथनहेतुको विषादो विस्मयो वा हन्तेत्यनेन प्रकाश्यते । स्वमतेनोपसंहरति—**तस्मादित्यादि** । **दीर्घेति** । दीर्घकालतापदार्थोऽत्र मरणे सहृदयप्रतीतिविश्रान्तेः पदबन्ध एवेत्यर्थः । **समारोपितात्वेति** । अङ्गतेति शेषः । **तद्विपरीतेति** । वास्तवाङ्गत्वाभावान्नैसर्गिकाङ्गता विपरीतेत्यर्थः । **व्याख्यातेति** । पदर्शितेत्यर्थः । वृत्तौ 'तस्ये'त्यादि । 'तस्य' शृङ्गारस्य ।

यथा वा पुण्डरीकस्य महाश्वेतां प्रति प्रवृत्तनिर्भरानुरागस्य द्वितीयमुनिकुमारोपदेशवर्णने । स्वाभाविक्यामङ्गभावप्राप्तावदोषो यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

इत्यादौ । समारोपितायामप्यविरोधो यथा—'पाण्डुक्षामम्' इत्यादौ । यथा वा—'कोपात्कोमललोलबाहुलतिकापाशेन' इत्यादौ । इयं

लोचनम्

वितर्क औत्सुक्येन मतिः स्मृत्या शङ्का दैन्येन धृतिश्चिन्तया च बाध्यते । एतच्च द्वितीयोद्द्योतारम्भ एवोक्तमस्माभिः । द्वितीयेति । विपक्षीभूतवैराग्यविभावाद्यवधारणेऽपि ह्यशक्यविच्छेदत्वेन दार्ढ्यमेवानुरागस्योक्तं भवतीति भावः । समारोपितायामिति । अङ्गभावप्राप्ताविति शेषः ।

पाण्डुक्षामं वक्त्रं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥

अत्र करुणोचितो व्याधिः श्लेषभङ्ग्या स्थापितः । कोपादिति बध्वेति हन्यत इति च रौद्रानुभावानां रूपकबलादारोपितानां तदनिर्वाहादेवाङ्गत्वम् । तच्च पूर्वमेवोक्तं 'ना-

बालप्रिया

'अन्तरा' मध्ये । 'प्रवाहविच्छेदः' अनुसन्धानधाराया विच्छेद इत्यर्थः ।

लोचने—विपक्षीभूतेति । अनुरागस्य विरोधिभूतेत्यर्थः । अनुरागस्येति । पुण्डरीकगतानुरागस्येत्यर्थः । वृत्तौ 'भ्रमिमि'ति । इदं पाण्डित्वत्यादि च काव्यप्रकाशेऽप्युदाहृतम् । भ्रमिर्नाम दिशां भ्रमणमिव दर्शयन्नान्तरः कश्चिद्विकारः । प्रलयो नष्टचेष्टता, मूर्छा बाह्याभ्यन्तरेन्द्रियवृत्तिनिरोधः । तमः आन्ध्यम् । जलद एव भुजगस्तज्जम् । विषं जलमेव गरलम् । अत्र करुणोचितव्याधेरनुभावानां भ्रम्यादीनां विप्रलम्भेऽपि सम्भवान्नैसर्गिकी अङ्गता ।

पाण्डुक्षाममिति । हृदयं उरः । सरसं अङ्गरससहितं, यद्वा—चन्दनादिरससहितम् । अलसं बाह्यक्रियायामक्षमम् । क्षेत्रियो देहान्तरे चिकित्स्योऽसाध्य इति यावत् । रोगः गदः । क्षेत्रियो रोगः क्षयरोग इति केचित् तम् । आवेदयतीति । वक्त्रादीनां प्रत्येकमन्वयाभिप्रायेणैकवचनान्ततया निर्देशः ।

अत्र करुणोचितव्याधेः विप्रलम्भे समारोपादङ्गतेत्याह लोचने—अत्रेत्यादि । श्लेषभङ्ग्येति । उभयसाधारणानुभावप्रदर्शनेनेत्यर्थः । स्थापित इति । आरोपेणाङ्गतया प्रदर्शित इत्यर्थः । बध्वेतीत्यादि । बन्धनादीनामित्यर्थः । तदनिर्वाहादिति । रूपकानिर्वाहादित्यर्थः । अङ्गत्वमिति । शृङ्गाराङ्गत्वमित्यर्थः । वृत्तौ अङ्गभावगमनं यदियं

चाङ्गभावप्राप्तिरन्या यदाधिकारिकत्वात्प्रधान एकस्मिन्वाक्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोर्द्वयोरङ्गभावगमनं तस्यामपि न दोषः । यथोक्तं 'क्षिप्तो हस्तावलग्नः' इत्यादौ । कथं तत्राविरोध इति चेत्, द्वयोरपि तयोरन्यपरत्वेन व्यवस्थानात् । अन्यपरत्वेऽपि विरोधिनोः कथं विरोधनिवृत्तिरिति चेत्, उच्यते—विधौ विरुद्धसमावेशस्य

लोचनम्

तिनिर्वहणैषिता' इत्यत्रान्तरे । अन्येति । चतुर्थोऽयं प्रकार इत्यर्थः । पूर्वं हि विरोधिनः प्रस्तुतरसान्तरेऽङ्गतोक्ता, अधुना तु द्वयोर्विरोधिनोर्वस्त्वन्तरेऽङ्गभाव इति शेषः । क्षिप्त इति । व्याख्यातमेतत् 'प्रधानेऽन्यत्र वाक्यार्थे' इत्यत्र । नन्वन्यपरत्वेऽपि स्वभावो न निवर्तते, स्वभावकृत एव च विरोध इत्यभिप्रायेणाह—अन्यपरत्वेऽपीति । विरोधिनोरिति । तत्स्वभावयोरिति हेतुत्वाभिप्रायेण विशेषणम् । उच्यत इति । अयं भावः–सामग्रीविशेषपतितत्वेन भावानां विरोधाविरोधौ न स्वभावमात्रनिबन्धनौ शीतोष्णयोरपि विरोधाभावात् । विधाविति । तदेव कुरु मा कार्षीरिति

बालप्रिया

चान्या अङ्गभावप्राप्तिरिति सम्बन्धः । 'तस्यामपी'ति । तथाविधाङ्गभावप्राप्तावपीत्यर्थः । अन्येत्यस्य विवरणं लोचने—चतुर्थ इति । पूर्वोक्ताद्विशेषं दर्शयति—पूर्वमित्यादि । विरोधिन इति । विरोधिरसाङ्गस्येत्यर्थः । रसान्तरे रसविशेषे । वस्त्वन्तर इति । प्रस्तुते इत्यनुषज्यते । अन्यपरत्वेऽपीति । अन्याङ्गत्वेऽपीत्यर्थः । आहेति । पृच्छतीत्यर्थः । विशेषणमिति । अनुषज्यमानयोर्द्वयोरित्यस्य विशेषणमित्यर्थः । अयं भावः विधावित्यादिग्रन्थस्यायं भावार्थः । क इत्यत्राह—सामग्रीत्यादि । अयमर्थः—पदार्थानां मध्ये कस्यचित्केनचित्सह विरोधश्चाविरोधश्च स्वभावमात्रकृतौ न, किन्तु सामग्रीविशेषानुप्रवेशेनापि सम्भवतः । अत्र तद्विरोधो नाम तदसामानाधिकरण्यं तदुत्पत्तिप्रतिबन्धश्च घटत्वादीनां पटत्वादिभिश्शीतस्पर्शादीनामुष्णस्पर्शादिभिश्च सहासामानाधिकरण्यरूपो विरोधः स्वभावकृतः । एवं तेषां द्रव्यत्वादिभिः रूपादिगुणैश्च सह सामानाधिकरण्यरूपाविरोधश्च बोध्यः । शीतस्पर्शसौरभगन्धादीनां स्वाश्रयारब्धद्रव्ये उष्णस्पर्शासौरभगन्धाद्युत्पत्तिप्रतिबन्धरूपस्तद्विरोधस्सामग्रीविशेषानुप्रवेशकृतः, एवं शीतोष्णस्पर्शयोरविरोधः कोमलभक्तोत्पत्तिसामग्रीविशेषानुप्रवेशकृतो बोध्यः । विधिस्थले प्रवृत्तिसामग्रीं निषेधस्थले निवृत्तिसामग्रीं चादाय तदनुप्रवेशेन विरोधाविरोधौ ग्राह्याविति । शीतोष्णयोरिति । शीतोष्णस्पर्शयोरित्यर्थः । विरोधाभावादिति । सामग्रीविशेषानुप्रवेशेनेति शेषः । विधावित्यदेर्दृष्टान्तमाह—तदेवेत्यादि । तदित्यनेनैकं कर्म विवक्षितम् । एकदेति शेषः । इति यथेति । इति विधौ दुष्टत्वं यथा तथेत्यर्थः । करणाकरणयोरेकेनैकदाऽनुष्ठातुमशक्यत्वादिति भावः । उपष्टम्भ-

दुष्टत्वं वानुवादे ।

लोचनम्

यथा। विधिशब्देनात्रैकदा प्राधान्यमुच्यते । अत एवातिरात्रे[1] षोडशिनं गृह्णन्ति न गृह्णन्तीति विरुद्धविधिर्विकल्पपर्यवसायीति वाक्यविदः[2] । **अनुवाद** इति। अन्याङ्गतायामि-

बालप्रिया

कमाह—**अतएवे**त्यादि । **अतएव** विरुद्धायोरेकत्रैकदा प्राधान्यस्य दुष्टत्वादेव । **अतिरात्र** इत्यादि । **अतिरात्रे** अतिरात्रयागे **षोडशिनं** सोमपात्रविशेषम् **गृह्णन्ति**

१. अयमत्र विषयविवेकः—अस्ति ज्योतिष्टोमसंज्ञकः क्रतुस्स्वर्गोद्देशेन विहितः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । अत्र सन्ति चतस्रस्संस्थाः—अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति । संस्था नाम क्रतुप्रयोगवृत्तिस्तोत्रोपरमः । स्तोत्रं नामोद्गातृगणप्रविष्टैरुद्गातृप्रस्तोतृप्रतिहर्तृभिः क्रियमाणं प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्। एवञ्च येन स्तोत्रेण क्रतुप्रयोगः परिसमाप्यते तेनैव सा संस्था व्यवह्रियते । तथा हि—ज्योतिष्टोमे द्वादश स्तोत्राणि वर्तन्ते—बहिष्पवमानम्, चत्वार्याज्यस्तोत्राणि, माध्यन्दिनपवमानम्, चत्वारि पृष्ठस्तोत्राणि, आर्भवपवमानम्, अग्निष्टोमस्तोत्रञ्चेति । अग्निष्टोमस्तोत्रानन्तरं स्तोत्रान्तरमकृत्वा तेनैव चेज्ज्योतिष्टोमस्समाप्यते, तदा सोऽग्निष्टोमसंस्थाको ज्योतिष्टोम इति व्यपदिश्यते । एवमेकदा ज्योतिष्टोमप्रयोगं परिसमाप्य प्रयोगान्तरे पूर्वोक्तानि द्वादशापि स्तोत्राणि कृत्वाऽनन्तरमुक्थ्यस्तोत्रञ्चेत्क्रियेत, तदा स उक्थ्यसंस्थाको ज्योतिष्टोम इति व्यवह्रियते । एवमुक्थ्यस्तोत्रानन्तरं षोडशिस्तोत्रं कृत्वा क्रतुश्चेत्समाप्यते, तदा सः षोडशिसंस्थाक इत्युच्यते । षोडशिस्तोत्रानन्तरं रात्रिपर्यायाः स्तोत्रविशेषास्त्रयश्चेत्क्रियन्ते तदा सोऽतिरात्रसंस्थाको ज्योतिष्टोमो भवति अत्राग्निष्टोमोक्थ्यषोडश्यतिरात्रपदानां प्रचुरप्रयोगात् तत्तत्संस्थास्वेव शक्तिः, तादृशसंस्थावति ज्योतिष्टोमे निरूढलक्षणा, तद्वति क्रत्वन्तरे च साम्प्रतिकी लक्षणा, ग्रहणे स्तोत्रे च गौणीति मीमांसकमर्यादा ।

ज्योतिष्टोमप्रकरणे च 'नातिरात्रे षोडशिनं गृह्णाति' 'अतिरात्रे षोडशिनं गृह्णाति' इति निषेधकं विधायकञ्च वाक्यं श्रुतम्। अतिरात्रे अतिरात्रसंस्थाके ज्योतिष्टोमे षोडशिनं तत्संज्ञकं ग्रहं न गृह्णीयात्, गृह्णीयादिति च तयोरर्थः । अत्र 'अतिरात्रे षोडशिनं गृह्णाति' इति विधिना विहितं षोडशिग्रहणं 'नातिरात्रे षोडशिनं गृण्हाति' इति निषेधकवाक्येन प्रतिबध्यत इति विहितप्रतिषिद्धत्वाद्विकल्पः स्वीक्रियते। अत्र प्रतिषेधे सत्यपि प्रतिषिध्यमानस्य नानर्थहेतुत्वम् तस्य विकल्पापादकत्वात् । तत्रैव प्रतिषिध्यमानस्यानर्थहेतुत्वं, यत्र च प्रतिषेधस्य न विकल्पापादकत्वम् । यथा—'न कलञ्जं भक्षयेत्' इत्यत्र प्रकृते च शास्त्रविहितस्यैव शास्त्रान्तरेण प्रतिषिद्धत्वात्, उभयोस्तुल्यबलत्वाच्च विकल्पस्स्वीक्रियत इति ।  २. वाक्यविदः मीमांसका इत्यर्थः ।

यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥

इत्यादौ । अत्र हि विधिप्रतिषेधयोरनूद्यमानत्वेन समावेशे न विरोधस्तथेहापि भविष्यति । श्लोके ह्यस्मिन्नीर्ष्याविप्रलम्भशृङ्गारकरुणवस्तुनोर्न विधीयमानत्वम् । त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वात्तदङ्गत्वेन च तयोर्व्यवस्थानात् ।

लोचनम्

त्यर्थः । क्रीडाङ्गत्वेन ह्यत्र विरुद्धानामर्थानामभिधानमिति राजनिकटव्यवस्थिताततायिद्वयन्यायेन विरुद्धानामप्यन्यमुखप्रेक्षितापरतन्त्रीकृतानां श्रौतेन क्रमेण स्वात्मपरामर्शेऽप्यविश्राम्यताम्, का कथा परस्पररूपचिन्तायां येन विरोधः स्यात् । केवलं विरुद्धत्वा-

बालप्रिया

गृह्णीयुः इति षोडशिग्रहणं विहितम् । पुनश्च "नातिरात्रे षोडशिनं गृह्णाती"त्यनेन तन्निषिद्धञ्चेति यद्यपि ग्रहणाग्रहणयोर्विरुद्धयोर्विधिः, तथाऽपि स विधिः षोडशिनं गृह्णीयान्न गृह्णीयाद्वा इति विकल्पे पर्यवस्यतीत्यर्थः । वृत्तौ—'एही'ति । हे अर्थिन् त्वमेहि आगच्छ । 'एव'मिति । उक्तप्रकारेणेत्यर्थः । 'आशे'ति । आशारूपैर्ग्रहैर्ग्रस्तास्तैरित्यर्थः । 'अर्थिभिः' याचकैः धनिनः क्रीडन्तीति सम्बन्धः । अत्र एहीति क्रीडन्ति गच्छेति क्रीडन्तीत्यादिरीत्या भावाभावरूपयोरपि गमनागमनाद्योः प्रधानभूतक्रीडायां प्रकारतयाऽन्वयेन तदङ्गत्वान्न दुष्टत्वमिति दर्शयन्नाह लोचने—क्रीडाङ्गत्वेनेत्यादि । अत्रेति । एहीत्यादिश्लोक इत्यर्थः । विरुद्धानामर्थानामिति । एकदैकत्र विरुद्धयोः गमनागमनयोः पतनोत्थानयोर्वचनमौनयोश्चार्थानामित्यर्थः। इतीति हेतौ । राजेति । राजनिकटव्यवस्थितौ राजाश्रयत्वेन स्थितौ यावाततायिनौ मिथो वैरेण वधोद्यतौ पुरुषौ तयोर्द्वयं तन्न्यायेनेत्यर्थः । अन्येति । अन्यमुखप्रेक्षिता अन्यायत्तता तया परतन्त्रीकृतानामुपसर्जनीकृतानामित्यर्थः । श्रौतेन क्रमेण एहि गच्छेत्यादिश्रुतिक्रमेण यः स्वात्मनां परामर्शः प्रतीतिः तस्मिन् सत्यपि । अविश्राम्यतामिति । स्वात्मनि प्रतीतिविश्रान्तिमलभमानानामित्यर्थः । क्रीडायामङ्गत्वेनान्वयादिति भावः । परस्पररूपेति । परस्परस्य यद्रूपं स्वभावः तच्चिन्तायां का कथा तच्चिन्ता नोदेत्येवेत्यर्थः । विशेषमाह—केवलमित्यादि । अरुणेति । अरुणाधिकरणन्यायेनेत्यर्थः । सम्भाव्यत इत्यनेनास्य सम्बन्धः । अरुणयेत्यादिविधिवाक्ये कारकाणां भावनान्वयनियमान्मिथोऽनन्वितानामेवारुण्यपिङ्गाक्षीत्वादीनां करणविभक्त्यन्तपदार्थानां सोमक्रयणभावनायां करणत्वेनादावन्वयः, पश्चात् परस्परान्वयः—

न च रसेषु विध्यनुवादव्यवहारो नास्तीति शक्यं वक्तुम्, तेषां वाक्यार्थत्वेनाभ्युपगमात्। वाक्यार्थस्य वाच्यस्य च यौ विध्यनुवादौ तौ

लोचनम्

दरुणाधिकरणस्थितया यो वाक्यीय एषां पाश्चात्यः सम्बन्धः सम्भाव्यते स विघटताम्।

ननु प्रधानतया यद्वाच्यं तत्र विधिः। अप्रधानत्वेन तु वाच्येऽनुवादः। न च रसस्य वाच्यत्वं त्वयैव सोढमित्याशङ्कमानः परिहरति—**न चेति**। प्रधानाप्रधानत्वमात्रकृतौ विध्यनुवादौ, तौ च व्यङ्ग्यतायामपि भवत एवेति भावः। मुख्यतया च रस एव काव्यवाक्यार्थ इत्युक्तम्। तेनामुख्यतया यत्र सोऽर्थस्तत्रानूद्यमानत्वं रसस्यापि युक्तम्। यदि वानूद्यमानविभावादिसमाक्षिप्तत्वाद्रसस्यानूद्यमानता तदाह—**वाक्यार्थ**·

बालप्रिया

या गौस्सा अरुणा पिङ्गाक्षीत्यादि। स्पष्टमिदं मीमांसापरिभाषादौ। **वाक्यीय** इति। वाक्यप्रतिपाद्य इत्यर्थः। **एषामित्यादि**। य आगच्छति स गच्छतीत्यादिपार्ष्ठिकान्वय इत्यर्थः। विरुद्धत्वात्स केवलं विघटतामिति सम्बन्धः। वृत्तौ 'विधिप्रतिषेधयो'रिति। गमनागमनायोरित्यर्थः। 'अनूद्यमानत्वेने'ति। क्रीडाविधाने इति शेषः। तथेत्याद्युक्तमेव विवृणोति—'श्लोक' इत्यादि। 'विधीयमानत्व'मिति। प्राधान्यमित्यर्थः।

'न चे'त्याद्यभ्युपगमादित्यन्तं ग्रन्थमवतारयति लोचने—**नन्वित्यादि**। **यद्वाच्यमिति**। यो वाच्यार्थ इत्यर्थः। **तत्र विधिरिति**। तस्य विधीयमानत्वमित्यर्थः। **अनुवाद** इति। अनूद्यमानत्वमित्यर्थः। वाच्यार्थस्यैव विधिरनुवादश्चेति भावः। तेषामित्यादिपरिहारग्रन्थस्य भावमाह—**प्रधानेत्यादि युक्तमित्यन्तेन**। **विध्यनुवादाविति**। अर्थस्येति शेषः। **व्यङ्ग्यतायामपि** व्यङ्ग्यत्वे सत्यपि। कुत्रानूद्यमानत्वं रसस्येत्यत्राह—**मुख्यतयेत्यादि**। **सोऽर्थः** व्यङ्ग्यार्थः। **यद्विेति** पक्षा·

१. अयमत्र विषयः—ज्योतिष्टोमप्रकरणे 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति श्रुतम्। अरुणा अरुणगुणविशिष्टा, पिङ्गे अक्षिणी यस्यास्सा गौः पिङ्गाक्षी, एकं हायनं यस्यास्सा एकहायनी एकवर्षवयस्का गौः। अत्रारुणादिशब्दत्रयं लक्षणया तद्विशिष्टं क्रयमभिदधाति। तस्य चाख्यातवाच्यभावनायां करणत्वेनान्वयः, सोमस्य ( सोमलतायाः ) च भाव्यत्वेन। एवञ्च आरुण्यादियुक्तगोविशिष्टक्रयेण सोमं सम्पादयेदिति विषयवाक्यार्थः। मीमांसकानां भावनामुख्यविशेष्यकशाब्दबोधस्याभिमतत्वात् आरुण्यादीनां प्रथमतो भावनायामेवान्वयः। एकहायन्या यथा तृतीयाश्रुतिबलात् क्रयकरणिकभावनायामन्वयः, तथा 'अरुणये'ति तृतीयाबलादारुण्यस्यापि तत्रैवान्वयः। एवञ्च साक्षात्क्रयेणान्वितयोरपि द्रव्यगुणयोः पश्चाद्वाक्यप्रमाणेन परस्परावच्छेदकत्वेनान्वय इष्यते। तथा सति आरुण्यविशिष्टैकहायन्या क्रीणातीत्यर्थः पर्यवस्यति इति।

तदाक्षिप्तानां रसानां केन वार्येते। यैर्वा साक्षात्काव्यार्थता रसादीनां नाभ्युपगम्यते, तैस्तेषां तन्निमित्तता तावदवश्यमभ्युपगन्तव्या। तथाप्यत्र श्लोके न विरोधः। यस्मादनूद्यमानाङ्गनिमित्तोभयरसवस्तुसहकारिणो विधीयमानांशाद्भावविशेषप्रतीतिरुत्पद्यते ततश्च न कश्चिद्विरोधः। दृश्यते हि विरुद्धोभयसहकारिणः कारणात्कार्यविशेषोत्पत्तिः। विरुद्धफलोत्पादन-हेतुत्वं हि युगपदेकस्य कारणस्य विरुद्धं न तु विरुद्धोभयसहकारित्वम्।

लोचनम्

स्येति। यदि वा मा भूदनूद्यमानतया विरुद्धयो रसयोः समावेशः, सहकारितया तु भविष्यतीति सर्वथाविरुद्धयोर्युक्तियुक्तोऽङ्गाङ्गिभावो नात्र प्रयासः कश्चिदिति दर्शयति— **यैर्वे**ति। **तन्निमित्तते**ति। काव्यार्थो विभावादिर्निमित्तं येषां रसादीनां ते तथा तेषां भावस्तत्ता। अनूद्यमाना ये हस्तक्षेपादयो रसाङ्गभूता विभावादयस्तन्निमित्तं यदुभयं करुणविप्रलम्भात्मकं रसवस्तु रससजातीयं तत्सहकारि यस्य विधीयमानस्य शाम्भव-शरवह्निजनितदुरितदाहलक्षणस्य तस्माद्भावविशेषे प्रेयोलङ्कारविषये भगवत्प्रभावातिशय-लक्षणे प्रतीतिरिति सङ्गतिः। विरुद्धं यदुभयं वारितेजोगतं शीतोष्णं तत्सहकारि यस्य तण्डुलादेः कारणस्य तस्मात्कार्यविशेषस्य कोमलभक्तकरणलक्षणस्योत्पत्तिर्दृश्यते। सर्वत्र हीत्थमेव कार्यकारणभावो बीजाङ्कुरादौ नान्यथा।

ननु विरोधस्तर्हि सर्वत्राकिञ्चित्करः स्यादित्याशङ्क्याह—**विरुद्धफले**ति। तथा चाहुः—'नोपादानं विरुद्धस्य' इति। नन्वभिनेयार्थे काव्ये यदीदृशं वाक्यं भवेत्तदा

बालप्रिया

न्तरद्योतकम्। **अन्वि**त्यादि। अनूद्यमानैर्विभावादिभिः समाक्षिप्तत्वाद्यञ्जितत्वादि-त्यर्थः। **तदाह** तदभिप्रायेणाह। 'तन्निमित्तते'त्येतद्व्याचष्टे—काव्येत्यादि। अनूद्य-मानाङ्गेत्यादिकं क्षिप्त इत्यादिश्लोके योजयन् व्याचष्टे—**अनूद्यमाना** इत्यादि। हस्त-क्षेपादयो विभावादय इत्यत्र यथासंख्येनान्वयो न विवक्षितः। हस्तक्षेपस्यानुभावत्वात् अनुभावादय इति वा पाठः। **तन्निमित्त**मिति। ते निमित्तानि यस्य तदित्यर्थः। **रससजातीय**मिति। रसात्मकं स्थाय्यात्मकं वेत्यर्थः। यस्य विधीयमानांशस्येत्य-स्यैव विवरणम्—**शाम्भवे**त्यादि। विधीयमानांशादिति विशेष्यसन्निधानेन यस्य विधीयमानांशस्येति व्याख्यातं, तदेतद्दर्शयितुमाह—**तस्मा**दिति। भावविशेषप्रतीति-रित्येतद्व्याचष्टे—**भावे**त्यादि। भावविशेषे इत्यस्य विवरणम्—**प्रेयोऽलङ्कारविषय** इति। स क इत्यत्राह—**भगवदि**त्यादि। **सर्वत्रे**त्यादि। तेजोजलाद्यात्मकविरुद्धो-भयसहकारिण एव बीजादेरङ्कुरादिकार्योत्पत्तिरिति भावः। **नोपादान**मिति। नोत्पा-दनमिति पाठेन भाव्यमिति प्रतिभाति।

**एवंविधविरुद्धपदार्थविषयः कथमभिनयः प्रयोक्तव्य इति चेत्, अनूद्यमानैवंविधवाच्यविषये या वार्ता सात्रापि भविष्यति। एवं विध्यनुवादनयाश्रयेणात्र श्लोके परिहृतस्तावद्विरोधः।**

**किं च नायकस्याभिनन्दनीयोदयस्य कस्यचित्प्रभावातिशयवर्णने तत्प्रतिपक्षाणां यः करुणो रसः स परीक्षकाणां न वैक्लव्यमादधाति**

लोचनम्

यदि समस्ताभिनयः क्रियते तदा विरुद्धार्थविषयः कथं युगपदभिनयः कर्तुं शक्य इत्याशयेनाशङ्कमान आह—**एवमिति**। एतत्परिहरति—**अनूद्यमानेति**। अनूद्यमानमेवंविधं विरुद्धाकारं वाच्यं यत्र तादृशो यो विषयः 'एहि गच्छ पतोत्तिष्ठ' इत्यादिस्तत्र या वार्ता सात्रापीति।

एतदुक्तं भवति—'क्षिप्तो हस्तावलग्न' इत्यादौ प्राधान्येन भीतविप्लुतादिदृष्ट्युपपादनक्रमेण प्राकरिणकस्तावदर्थः प्रदर्शयितव्यः। यद्यप्यत्र करुणोऽपि पराङ्गमेव तथापि विप्रलम्भापेक्षया तस्य तावन्निकटं प्राकरणिकत्वं महेश्वरप्रभावं प्रति सोपयोगत्वात्। विप्रलम्भस्य तु कामीवेत्युत्प्रेक्षोपमाबलेनायातस्य दूरत्वात्। एवं च साश्रुनेत्रोत्पलाभिरत्यन्तं प्राधान्येन करुणोपयोगाभिनयक्रमेण लेशतस्तु विप्रलम्भस्य करुणेन सादृश्यात्सूचनां कृत्वा। कामीवेत्यत्र यद्यपि प्रणयकोपोचितोऽभिनयः कृतस्तथापि ततः प्रतीयमानोऽप्यसौ विप्रलम्भः समनन्तराभिनीयमाने स दहतु दुरितमित्यादौ साटोपाभिनयसमर्पितो यो भगवत्प्रभावस्तत्राङ्गतायां पर्यवस्यतीति न कश्चिद्विरोधः। एतं विरोधपरिहारमुपसंहरति—**एवमिति**।

विषयान्तरे तु प्रकारान्तरेण विरोधपरिहारमाह—**किञ्चेति**। परीक्षकाणामिति सामाजिकानां विवेकशालिनाम्। **न वैक्लव्यमिति**। न तादृशे विषये चित्तद्रुतिरुत्पद्यते करुणास्वादविश्रान्त्यभावात्। किन्तु वीरस्य योऽसौ क्रोधो व्यभिचारितां प्रतिपद्यते तत्फलरूपोऽसौ करुणरसः स्वकारणाभिव्यञ्जनद्वारेण वीरास्वादातिशय एव पर्यवस्यति।

बालप्रिया

नटशिक्षार्थं विवृणोति—**एतदुक्तमित्यादि**। **प्रदर्शयितव्यः** अभिनेतव्यः। **उत्प्रेक्षापमाबलेनेति**। उत्प्रेक्षाया उपमाया वा बलेनेत्यर्थः। कृत्वा अभिनय इति सम्बन्धः। शङ्कते—**कामीत्यादि**। समाधत्ते—**तथाऽपीत्यादि**। **कृत इति**। कृतिविषय इत्यर्थः। भवेदिति शेषः।

किञ्चेत्यादिग्रन्थमवतारयति—**विषयान्तरेऽपीत्यादि**। **विषयान्तरे** स्थलान्तरे कुरवकेत्यादौ। **प्रकारान्तरेणेति**। पञ्चमेन प्रकारेणेत्यर्थः। **आहेति**। प्रसङ्गादाहेत्यर्थः। **तादृशे विषय इति**। कुरवकेत्याद्युदाहरणादावित्यर्थः। वैक्लव्यमित्यस्य

प्रत्युत प्रीत्यतिशयनिमित्ततां प्रतिपद्यत इत्यतस्तस्य कुण्ठशक्तिकत्वात्तद्विरोधविधायिनो न कश्चिद्दोषः । तस्माद्वाक्यार्थीभूतस्य रसस्य भावस्य वा विरोधी रसविरोधीति वक्तुं न्याय्यः, न त्वङ्गभूतस्य कस्यचित् ।

लोचनम्

यथोक्तम्—'रौद्रस्य चैव यत्कर्म स ज्ञेयः करुणो रसः' इति । तदाह—**प्रीत्यतिशयेति** । अत्रोदाहरणम्—

> कुरबक कुचाघातक्रीडासुखेन वियुज्यसे
> बकुलविटपिन् स्मर्तव्यं ते मुखसवसेवनम् ।
> चरणघटनाशून्यो यास्यस्यशोक सशोकता-
> मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥

**भावस्य** वेति । तस्मिन् रसे स्थायिनः प्रधानभूतस्य व्यभिचारिणो वा यथा विप्रलम्भशृङ्गार औत्सुक्यस्य ।

बालप्रिया

विवरणम्—**चित्तद्रुतिरिति** । **कुरवकेति** । मुखासवसेवनमित्यपि पाठः ।

> पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम्
> स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलश्शीधुगण्डूषसेकात् ॥

इति वचनमत्रानुसन्धेयम् । वृत्तौ 'करुणो रस'इति । निबध्यमान इति शेषः । 'प्रीत्यतिशये'ति । वीररसास्वादेत्यर्थः । 'तस्ये'ति । करुणस्येत्यर्थः । 'कुण्ठशक्तिकत्वादि'ति । अन्याङ्गत्वेन शक्तेः कुण्ठीभावादित्यर्थः । न दोष इत्यनेनास्य सम्बन्धः । 'तद्विरोधविधायिन' इति तस्येत्यस्य विशेषणम् । वीररसास्वादातिशयविरोधविधायिन इत्यर्थः । अकुण्ठशक्तिकत्वादिति पाठे तस्येत्यस्य वीरास्वादस्येत्यर्थः । तद्विरोधविधायिन इति पञ्चम्यन्तं करुणादिति शेषः । निगमयति 'तस्मादि'त्यादि । 'वाक्यार्थीभूतस्ये'ति । प्रधानस्य प्रस्तुतस्येत्यर्थः । 'रसविरोधीति वक्तुमि'ति । "विरोधिरसे"त्यादौ विरोधिपदेन वक्तुमित्यर्थः । तथाच वाक्यार्थभूतरसादिविरोधिरससम्बन्धिपरिग्रहो दोष इति भावः । 'न त्वि'त्यादि । अङ्गभूतस्य कस्यचिद्रसस्य भावस्य वा विरोधी रसविरोधीति वक्तुं न न्याय्य इत्यर्थः । तथाचाङ्गभूतस्य कस्यचिद्विरोधी यो रसः तत्सम्बन्धिपरिग्रहो न दोष इति भावः । यथाक्षिप्तेत्यादौ शृङ्गारविरोधी यः करुणस्तत्सम्बन्धिपरिग्रहः । भावस्य वेत्यत्र भावपदेन स्थायी व्यभिचारी च विवक्षित इत्याह लोचने—**तस्मिन्नित्यादि** । **तस्मिन् रसे** प्रकृतरसे । वाक्यार्थभूतस्येत्यस्य विवरणम्—**प्रधानभूतस्येति** ।

अथवा वाक्यार्थीभूतस्यापि कस्यचित्करुणरसविषयस्य तादृशेन शृङ्गारवस्तुना भङ्गिविशेषाश्रयेण संयोजनं रसपरिपोषायैव जायते । यतः प्रकृतिमधुराः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः संस्मर्यमाणैर्विलासैरधिकतरं शोकावेशमुपजनयन्ति । यथा—

लोचनम्

अधुना पूर्वस्मिन्नेव श्लोके क्षिप्त इत्यादौ प्रकारान्तरेण विरोधं परिहरति—**अथवेति** । अयं चात्र भावः—पूर्वं विप्रलम्भकरुणयोरन्यत्राङ्गभावगमनान्निर्विरोधत्वमुक्तम् । अधुना तु स विप्रलम्भः करुणस्यैवाङ्गतां प्रतिपन्नः कथं विरोधीति व्यवस्थाप्यते—तथा हि करुणो रसो नामेष्टजनविनिपातादेर्विभावादित्युक्तम् । इष्टता च नाम रमणीयतामूला । ततश्च कामीवार्द्रापराध इत्युत्प्रेक्षयेदमुक्तम् । शांभवशरवह्निचेष्टितावलोकने प्राक्तनप्रणयकलहवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया शोकविभावतां प्रतिपद्यते । तदाह—**भङ्गिविशेषे**ति । अग्राम्यतया विभावानुभावादिरूपताप्रापणया

बालप्रिया

अथ वेत्यादिग्रन्थस्यार्थान्तरभ्रमनिवारणाय तद्ग्रन्थमवतारयति—**अधुने**त्यादि । अथ वेति इत्यस्य स्थाने अथवेत्यादिना दोषाभाव इत्यन्तेनेति च पाठः । वृत्तौ 'अथवे'त्यादि । 'वाक्यार्थभूतस्ये'ति । वाच्यस्येत्यर्थः । अपिशब्दः अनन्तरोक्तनीत्या रसपरिपोषणे आपाततो विरोधं द्योतयति 'कस्यचिदि'ति । विभावादिरूपस्य कस्यचिदित्यर्थः । 'करुणरसविषयस्य' करुणाङ्गस्य । 'तादृशेन' वाच्यतया तत्तुल्येन । यद्वा–विरोधिना शृङ्गारवस्तुना शृङ्गाराङ्गेन । उक्तस्योदाहरणमाह—'अयमि'त्यादि । काव्यप्रकाशेऽप्युदाहृतोऽयं श्लोकः । प्रकृते क्षिप्त इत्यादावुक्तं योजयन्नाह—'तदत्रे'त्यादि । 'व्यवहरति स्मे'ति । करग्रहणादिकमकरोदिति तदर्थः । वृत्तिग्रन्थेन विवक्षिता स्यास्पष्टत्वाद्भावमाह लोचने–**अयञ्चात्रे**त्यादि । **अन्यत्र** त्रिपुररिपुप्रभावातिशये । अधुना तु इत्यस्य इति व्यवस्थाप्यत इत्यनेन सम्बन्धः । **कथं विरोधी**ति । करुणस्य विरोधी नेत्यर्थः । **विभावादित्युक्त**मिति । मुनिनेति शेषः । **रमणीयतामूले**ति बहुव्रीहिः । इत्युत्प्रेक्षयेति । इदं चात्रोत्प्रेक्षालङ्कार इति पक्षाभिप्रायेणोक्तम् । **इदमुक्त**मिति । वक्ष्यमाणार्थः प्रकाशित इत्यर्थः । **शाम्भवेति** । शाम्भववह्नेश्चेष्टितानामवलोकनेनेत्यर्थः । अवलोकने इत्यपि पाठः, स्मर्यमाण इत्यनेनास्य सम्बन्धः । **प्राक्तने**ति । प्राक्तनः पूर्वानुभूतः प्रणयकलहवृत्तान्तः करग्रहणासहनादिरित्यर्थः । **स्मर्यमाण** इति । त्रिपुरयुवतिभिरिति शेषः । **विध्वस्ततये**ति । नष्टतयेत्यर्थः शोकविभावतामित्यस्यानन्तरं प्रकृष्टामिति च क्वचित् पाठः । **प्रतिपद्यत** इति । तथाचात्र विशिष्टवैशिष्ट्यन्यायेन विप्रलम्भोपस्कृतः करुणः त्रिपुररिपुप्रभावातिशयं

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

इत्यादौ । तदत्र त्रिपुरयुवतीनां शाम्भवः शराग्निरार्द्रापराधः कामी यथा व्यवहरति स्म तथा व्यवहृतवानित्यनेनापि प्रकारेणास्त्येव निर्विरोधत्वम् । तस्माद्यथा यथा निरूप्यते तथा तथात्र दोषाभावः । इत्थं च—

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

इत्येवमादीनां सर्वेषामेव निर्विरोधत्वमवगन्तव्यम् ।

एवं तावद्रसादीनां विरोधिरसादिभिः समावेशासमावेशयोर्विषयविभागो दर्शितः ।

इदानीं तेषामेकप्रबन्धविनिवेशने न्याय्यो यः क्रमस्तं प्रतिपादयितु-

लोचनम्

ग्राम्योक्तिरहितत्वेत्यर्थः । अत्रैव दृष्टान्तमाह—**यथा अय**मिति । अत्र भूरिश्रवसः समरभुवि निपतितं बाहुं दृष्ट्वा तत्कान्तानामेतदनुशोचनम् । रशना मेखला सम्भोगावसरेषूर्ध्वं कर्षतीति रसनोत्कर्षी । अमुना विरोधोद्धरणप्रकारेण बहुतरं लक्ष्यमुपपादितं भवतीत्यभिप्रायेणाह—**इत्थं चे**ति । होमाग्निधूमकृतं बाष्पाम्बु यदि वा बन्धुगृहत्यागदुःखोद्भवम् । भयं कुमारीजनोचितः साध्वसः । एवमियताङ्गभावं प्राप्तानामुक्तिरच्छलेति कारिकाभागोपयोगि निरूपितमित्युपसंहरति—**एवमि**ति । तावद्ग्रहणेन वक्तव्यान्तरमप्यस्तीति सूचयति ॥ २० ॥

तदेवावतारयति—**इदानी**मित्यादिना । तेषां रसानां क्रम इति योजना ।

बालप्रिया

तदालम्बितं इतिभावं वा उपस्करोतीति भावः । तदाहेति । उक्ताभिप्रायेणाहेत्यर्थः । अग्राम्यतयेत्यस्यैव विवरणम्—विभावेत्यादि । अत्र **भूरिश्रवस** इत्यादि । श्लोकेऽस्मिन्नायकगतश्शृङ्गारो नायिकागतकरुणस्याङ्गमित्यादिकं काव्यप्रदीपोद्योतादौ द्रष्टव्यम् । **अमुने**ति । उक्तेनेत्यर्थः । विवाहकाले कथं बाष्पोद्गम इत्यत आह—**होमे**ति । अयमपि श्लोकः काव्यप्रकाशे उदाहृतः । क्षिप्त इत्यादाविवात्रापि सर्वं बोध्यम् ॥२०॥

इदानीं तेषामित्यत्र तेषामितिपदं व्याचष्टे—**रसाना**मिति । **क्रम** इत्यादि ।

मुच्यते—

प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।
एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता ॥ २१ ॥

प्रबन्धेषु महाकाव्यादिषु नाटकादिषु वा विप्रकीर्णतयाङ्गाङ्गिभावेन बहवो रसा उपनिबध्यन्त इत्यत्र प्रसिद्धौ सत्यामपि यः प्रबन्धानां छायातिशययोगमिच्छति तेन तेषां रसानामन्यतमः कश्चिद्विवक्षितो रसोऽङ्गित्वेन विनिवेशयितव्य इत्ययं युक्ततरो मार्गः ।

ननु रसान्तरेषु बहुषु प्राप्तपरिपोषेषु सत्सु कथमेकस्याङ्गिता न विरुध्यत इत्याशङ्क्येदमुच्यते—

रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः ।
नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः ॥ २२ ॥

प्रबन्धेषु प्रथमतरं प्रस्तुतः सन् पुनः पुनरनुसन्धीयमानत्वेन स्थायी यो रसस्तस्य सकलबन्धव्यापिनो रसान्तरैरन्तरालवर्तिभिः समावेशो यः

लोचनम्

प्रसिद्धेऽपीति । भरतमुनिप्रभृतिभिर्निरूपितेऽपीत्यर्थः । तेषामिति प्रबन्धानाम् । महाकाव्यादिष्वित्यादिशब्दः प्रकारे । अनभिनेयान्भेदानाह, द्वितीयस्त्वभिनेयान् । विप्रकीर्णतयेति । नायकप्रतिनायकपताकाप्रकरीनायकादिनिष्ठतयेत्यर्थः । अङ्गाङ्गिभावेनेत्येकनायकनिष्ठत्वेन । युक्ततर इति । यद्यपि समवकारादौ पर्यायबन्धादौ च नैकस्याङ्गित्वं तथापि नायुक्तता तस्याप्येवंविधो यः प्रबन्धः तद्यथा नाटकं महाकाव्यं वा तदुत्कृष्टतरमिति तरशब्दस्यार्थः ॥ २१ ॥

नन्विति । स्वयं लब्धपरिपोषत्वे कथमङ्गत्वम् ? अलब्धपरिपोषत्वे वा कथं रसत्वमिति रसत्वमङ्गत्वं चान्योन्यविरुद्धं तेषां चाङ्गत्वायोगे कथमेकस्याङ्गित्वमुक्तमिति भावः । रसान्तरेति । प्रस्तुतस्य समस्तेतिवृत्तव्यापिनस्तत एव विततव्याप्तिकत्वेनाङ्गिभावो-

बालप्रिया

क्रम इत्यनेन तेषामित्यस्य सम्बन्ध इत्यर्थः । प्रसिद्धेऽपीत्येतद्विवृणोति—भरतेत्यादि । वृत्तिग्रन्थं व्याचष्टे—महेत्यादि । 'युक्ततर' इत्यत्र तरबर्थं दर्शयति—यद्यपीत्यादि । तथाऽपि च तस्यापि नायुक्तता इति सम्बन्धः । तस्यापीति । समवकारादेरपीत्यर्थः । एवंविध इति । नानारसकोऽङ्गिभूतैकरसकश्चेत्यर्थः ॥ २१ ॥

'नन्वि'त्यादिशङ्काग्रन्थस्य भावमाह—स्वयमित्यादि । लब्धपरिपोषत्वे इति । रसान्तराणामिति शेषः । नन्वङ्गत्वं मास्त्वित्यत्राह—तेषां चेत्यादि । वृत्तौ

स नाङ्गितामुपहन्ति ।

एतदेवोपपादयितुमुच्यते—

> कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते ।
> तथा रसस्यापि विधौ विरोधो नैव विद्यते ॥ २३ ॥

लोचनम्

चितस्य रसस्य रसान्तरैरितिवृत्तवशायातत्वेन परिमितकथाशकलव्यापिभिर्यः समावेशः समुपबृंहणं स तस्य स्थायित्वेनेतिवृत्तव्यापितया भासमानस्य नाङ्गितामुपहन्ति, अङ्गितां पोषयत्येवेत्यर्थः ।

एतदुक्तं भवति—अङ्गभूतान्यपि रसान्तराणि स्वविभावादिसामग्र्या स्वावस्थायां यद्यपि लब्धपरिपोषाणि चमत्कारगोचरतां प्रतिपद्यन्ते, तथापि स चमत्कारस्तावत्येव न परितुष्य विश्राम्यति किं तु चमत्कारान्तरमनुधावति । सर्वत्रैव ह्यङ्गाङ्गिभावेऽयमेवो-दन्तः । यथाह तत्रभवान्—

> गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
> प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ॥ २२ ॥

**उपपादयितुमिति** । दृष्टान्तस्य समुचितस्य निरूपणेनेति भावः । न्यायेन चैतदेवोपपद्यते; कार्यं हि तावदेकमेवाधिकारिकं व्यापकं प्रासङ्गिककार्यान्तरोपक्रियमाण-मवश्यमङ्गीकार्यम् । तत्पृष्ठवर्तिनीनां नायकचित्तवृत्तीनां तद्बलादेवाङ्गाङ्गिभावः प्रवाहा-पतित इति किमत्रापूर्वमिति तात्पर्यम् । **तथेति** व्यापितया । यदि वा एवकारो भिन्न-क्रमः, तथैव तेनैव प्रकारेण कार्याङ्गाङ्गिभावरूपेण रसानामपि बलादेवासावापततीत्यर्थः। तथा च वृत्तौ वक्ष्यति 'तथैवे'ति ।

**कार्यमिति** । 'स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति' इति लक्षितं बीजम् ।

बालप्रिया

क्वचिद्ग्रन्थे बहुष्विति पाठो न, 'कथमेकस्याङ्गिता न' इत्यस्य स्थाने एकस्याङ्गितेति पाठश्च दृश्यते । कारिकां व्याचष्टे-प्रस्तुतस्येत्यादि । अस्येत्यस्य विवरणम्-तस्येति।

कारिकयाऽनया लब्धं नन्वित्यादिशङ्कायाः समाधानं दर्शयति—**एतदुक्तमि-त्यादि** । **गुण इति** । गुणः अङ्गभूतः । अन्येन **कृतात्मसंस्कारः** सन् तथा कृतात्म-संस्कारः गुणः प्रधानस्य अङ्गिनः **भूयसि उपकारे वर्तते** भूयसे उपकाराय भवति हि । श्लोकोऽयं काव्यप्रकाशेऽपि दर्शितः ।

**निरूपणेनेति** । प्रदर्शनेनेत्यर्थः । **एतदेवेति** । कार्यमित्यादिना वक्ष्यमाणमेवे-त्यर्थः । **तत्पृष्ठवर्तिनीनामिति** । तत्तत्कार्यानुषक्तानामित्यर्थः । **नायकचित्तवृ-त्तीनामिति** । नायकपदेन नायकोपनायकादयस्सर्वेऽत्र विवक्षिताः । **तद्बलादेवेति** । कार्याणामङ्गाङ्गिभावस्य बलादेवेत्यर्थः । कारिकास्थं तथेति पदं व्याचष्टे—**व्यापित-येति** । अन्यथाऽपि व्याचष्टे—**यदि वेत्यादि** । **भिन्नक्रम इति** । नैवेत्येवकारस्त-

सन्ध्यादिमयस्य प्रबन्धशरीरस्य यथा कार्यमेकमनुयायि व्यापकं कल्प्यते न च तत्कार्यान्तरैर्न सङ्कीर्यते, न च तैः सङ्कीर्यमाणस्यापि तस्य प्राधान्यमपचीयते, तथैव रसस्याप्येकस्य सन्निवेशे क्रियमाणे विरोधो न कश्चित्। प्रत्युत प्रत्युदितविवेकानामनुसन्धानवतां सचेतसां तथाविधे विषये प्रह्लादातिशयः प्रवर्तते।

ननु येषां रसानां परस्पराविरोधः यथा—वीरशृङ्गारयोः शृङ्गार-

लोचनम्

बीजात्प्रभृति प्रयोजनानां विच्छेदे यदविच्छेदकारणं यावत्समाप्तिबन्धं स तु बिन्दुः' इति बिन्दुरूपयार्थप्रकृत्या निर्वहणपर्यन्तं व्याप्नोति तदाह—**अनुयायी**ति। अनेन बीजं बिन्दुश्चेत्यर्थप्रकृती सङ्गृहीते। **कार्यान्तरै**रिति। 'आगर्भादाविमर्शाद्वा पताका विनिवर्तते' इति प्रासङ्गिकं यत्पताकालक्षणार्थप्रकृतिनिष्ठं कार्यं यानि च ततोऽप्यून-व्याप्तितया प्रकरीलक्षणानि कार्याणि तैरित्येवं पञ्चानामर्थप्रकृतीनां वाक्यैकवाक्यतया निवेश उक्तः। **तथाविध** इति। यथा तापसवत्सराजे।

एवमनेन श्लोकेनाङ्गाङ्गितायां दृष्टान्तनिरूपणमितिवृत्तबलापतितत्वं च रसाङ्गाङ्गि-भावस्येति द्वयं निरूपितम्। वृत्तिग्रन्थोऽप्युभयाभिप्रायेणैव नेयः। शृङ्गारेण वीरस्या-विरोधो युद्धनयपराक्रमादिना कन्यारत्नलाभादौ। हास्यस्य तु स्पष्टमेव तदङ्गत्वम्। हास्यस्य स्वयमपुरुषार्थस्वभावत्वेऽपि समधिकतररञ्जनोत्पादनेन शृङ्गाराङ्गतयैव तथात्वम्। रौद्रस्यापि तेन कथञ्चिदविरोधः। यथोक्तम्-'शृङ्गारश्च[1] तैः प्रसभं सेव्यते'।

बालप्रिया

थेत्यनेन सम्बध्नातीत्यर्थः। **असा**विति। अङ्गाङ्गिभाव इत्यर्थः। कार्यपदेन योग-व्युत्पत्त्या विवक्षितमर्थं दर्शयन् विवृणोति—**स्वल्पमात्रमि**त्यादि। बीजमित्यस्य व्याप्नोतीत्यनेन सम्बन्धः। **अनेने**ति। कार्यपदेनेत्यर्थः। कार्यान्तरैरित्यनेन विव-क्षितं विवृणोति—**आगर्भा**दित्यादि। **ततोऽप्यूनव्याप्ती**ति। ततः पताकालक्षणा-र्थप्रकृतेः। तैरित्यन्तेन कार्यान्तरैरित्यस्य विवरणम्। उपसंहरति-**इत्येवमि**त्यादि। **उक्त** इति। कार्यं कार्यान्तरैरित्याभ्यां बोधित इत्यर्थः। तथाविधे विषये इत्यस्योदा-हरणं दर्शयति—**यथा तापसे**ति।

सारार्थमाह—**एवमि**त्यादि। **अनेने**ति। कार्यमित्यादिनेत्यर्थः। **अङ्गाङ्गितायां** दृष्टान्तनिरूपणं रसाङ्गाङ्गिभावस्य इतिवृत्तबलापतितत्वं चेति द्वयमनेन श्लोकेन निरूपि-तमिति सम्बन्धः। रसानामविरोधमुपपादयति—**शृङ्गारेणे**त्यादि। **अविरोध** इति। एकाश्रयत्वे विरोधाभाव इत्यर्थः। **तदङ्गत्वं** शृङ्गाराङ्गत्वम्। **समधिकरञ्जनोत्पा-**

१. भरतना.,

हास्ययो रौद्रशृङ्गारयोर्वीराद्भुतयोर्वीररौद्रयो रौद्रकरुणयोः शृङ्गाराद्भुतयोर्वा तत्र भवत्वङ्गाङ्गिभावः। तेषां तु स कथं भवेद्येषां परस्परं बाध्यबाधकभावः। यथा—शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोः शान्त-

## लोचनम्

तैरिति रौद्रप्रभृतिभिः रक्षोदानवोद्धतमनुष्यैरित्यर्थः। केवलं नायिकाविषयमौग्र्यं तत्र परिहर्तव्यम्। असम्भाव्यपृथिवीसम्मार्जनादिजनितविस्मयतया तु वीराद्भुतयोः समावेशः। यथाह मुनिः—'वीरस्य[1] चैव यत्कर्म सोऽद्भुतः' इति। वीररौद्रयोर्धीरोद्धते भीमसेनादौ समावेशः क्रोधोत्साहयोरविरोधात्। रौद्रकरुणयोरपि मुनिनैवोक्तः—

'रौद्रस्यैव[2] च यत्कर्म स ज्ञेयः करुणो रसः' इति।

**शृङ्गाराद्भुतयोरिति**। यथा रत्नावल्यामैन्द्रजालिकदर्शने। **शृङ्गारबीभत्सयोरिति**। ययोर्हि परस्परोन्मूलनात्मकतयैवोद्भवस्तत्र कोऽङ्गाङ्गिभावः आलम्बननिमग्नरूपतया च रतिरुत्तिष्ठति ततः पलायमानरूपतया जुगुप्सेति समानाश्रयत्वेन तयोरन्योन्यसंस्कारोन्मूलनत्वम्। भयोत्साहावप्येवमेव विरुद्धौ वाच्यौ। शान्तस्यापि तत्त्वज्ञानसमुत्थितसमस्तसंसारविषयनिर्वेदप्राणत्वेन सर्वतो निरीहस्वभावस्य विषयासक्तिजीविताभ्यां रतिक्रोधाभ्यां विरोध एव॥ २३॥

## बालप्रिया

दनेनेति। समधिकरसोत्पादनेनेति च पाठः। शृङ्गाररसनाया आधिक्योत्पादनेनेत्यर्थः। तथात्वं पुरुषार्थत्वम्। तेन शृङ्गारेण। **उक्तमिति**। मुनिनेति शेषः। विशेषमाह—**केवलमिति**। **असम्भाव्येत्यादि**। वीरस्य असम्भाव्यवस्तुलाभेन विस्मयो भवति। **उक्त इति**। अविरोध इति शेषः। अत्रैकालम्बनकत्वेनाविरोधो बोध्यः। रौद्रकरुणयोर्भिन्नाश्रयकत्वस्यैव सम्भवात्। 'शृङ्गाराद्भुतयोरपी'ति अविरोध इति शेषः। बाध्यबाधकभावमुक्तं विवृणोति—**ययोर्हीत्यादि**। **ययोरिति**। शृङ्गारबीभत्साद्योरित्यर्थः। **तत्र** तयोः। उक्तार्थे हेतुं दर्शयति—**आलम्बनेत्यादि**। **उत्तिष्ठति** प्रादुर्भवति। **तत इति**। आलम्बनादित्यर्थः। **जुगुप्सेति**। उत्तिष्ठतीत्यनुषङ्गः। **इतीति** हेतौ। **समनाश्रयत्वेनेति**। एकालम्बनकत्वेनैकाधिकरणकत्वेन चेत्यर्थः। **तयोरिति**। रतिजुगुप्सयोरित्यर्थः। **अन्योन्येति**। अन्योन्यस्य यः संस्कारः, तदुन्मूलनत्वं तद्विनाशकारित्वमित्यर्थः। **एवमेवेति**। एकाश्रयत्वेनेत्यर्थः॥ २३॥

---

१. भरतना. २. भरत.,

शृङ्गारयोर्वा इत्याशङ्क्येदमुच्यते—

अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे ।
परिपोषं न नेतव्यस्तथा स्यादविरोधिता ॥ २४ ॥

अङ्गिनि रसान्तरे शृङ्गारादौ प्रबन्धव्यङ्ग्ये सति अविरोधी विरोधी वा रसः परिपोषं न नेतव्यः। तत्राविरोधिनो रसस्याङ्गिरसापेक्षयात्यन्तमाधिक्यं न कर्तव्यमित्ययं प्रथमः परिपोषपरिहारः । उत्कर्षसाम्येऽपि तयोर्विरोधास-

लोचनम्

**अविरोधी विरोधी वेति ।** वाग्रहणस्यायमभिप्रायः—अङ्गिरसापेक्षया यस्य रसान्तरस्योत्कर्षो निबध्यते तदा तदविरुद्धोऽपि रसो निबद्धश्चोद्यावहः । अथ तु युक्त्याङ्गिनि रसेऽङ्गभावतानयेनोपपत्तिर्घटते तद्विरुद्धोऽपि रसो वक्ष्यमाणेन विषयभेदादियोजनेनोपनिबध्यमानो न दोषावह इति विरोधाविरोधावकिञ्चित्करौ । विनिवेशनप्रकार एव त्ववधातव्यमिति । **अङ्गिनीति** सप्तम्यनादरे । अङ्गिनं रसविशेषमनादृत्य न्यक्कृत्याङ्गभूतो न पोषयितव्य इत्यर्थः । **अविरोधितेति** । निर्दोषतेत्यर्थः । परिपोषपरिहारे त्रीन् प्रकारानाह—तत्रेत्यादिना तृतीय इत्यन्तेन । ननु न्यूनत्वं कर्तव्यमिति वाच्ये आधिक्यस्य का सम्भावना येनोक्तमाधिक्यं न कर्तव्यमित्याशङ्क्याह—उत्कर्षसाम्य इति ।

एकतो रोदिति प्रिया अन्यतः समरतूर्यनिर्घोषः ।
स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम् ॥

बालप्रिया

**अयमिति ।** वक्ष्यमाण इत्यर्थः । अपेक्षयेत्यस्य उत्कर्ष इत्यनेन सम्बन्धः । **तदविरुद्धोऽपीति ।** अङ्गिरसाविरुद्धोऽपीत्यर्थः । **अङ्गेति ।** अङ्गत्वप्रापणेनेत्यर्थः । **तदिति ।** तर्हि इत्यर्थः । **अङ्गिनीति** इति प्रतीकधारणम् । **सप्तमीति ।** अङ्गिनि रसान्तरे इत्यत्र सप्तमीत्यर्थः । **अनादर इति ।** "षष्ठी चानादर" इति सूत्रानुशिष्टा सप्तमीत्यर्थः । रसान्तरपदविवरणम्–**रसविशेषमिति** । अनादृत्येत्यस्यैव विवरणम्–**न्यक्कृत्येति ।** **इति वाच्य इति ।** तत्राविरोधिनो रसस्याङ्गिरसापेक्षया न्यूनत्वं कर्तव्यमिति वक्तव्ये सतीत्यर्थः । वृत्तौ 'तयोरि'ति । अङ्गिनो रसस्य तदविरोधिनो रसान्तरस्य चेत्यर्थः । **कत इति ।** एकतः एकस्मिन् देशे । **अन्यतः** अन्यस्मिन् देशे । **दोलायितं** सन्देहाकुलम् ।

'कण्ठादि'ति कण्ठाच्छित्वा । हारं कण्ठादुद्धृत्य । मेखलाया गुणेनैव विषधरपतिनेति रूपकम् । 'सन्ध्ये'ति । सन्ध्याया नायिकात्वं गम्यते । तस्यां या अभ्यसूया तया हेतुना हसितः पशुपतिः सन्ध्यां सेवमानः परमेश्वरो यया सा । हृष्टा सन्तुष्टा । श्लोकोऽयं प्रक्षिप्तः । उत्कर्षसाम्यं विवृणोति लोचने—रोदितीत्यादि । इत्यत इति ।

म्भवात् । यथा—

एकत्तो रुअइ पिआ अण्णत्तो समरतूरणिग्घोसो ।
णेहेण रणरसेण अ भडस्स दोलाइअं हिअअम् ॥

यथा वा—

कण्ठाच्छित्त्वाक्षमालावलयमिव करे हारमावर्तयन्ती
कृत्वा पर्यङ्कबन्धं विषधरपतिना मेखलाया गुणेन ।
मिथ्यामन्त्राभिजापस्फुरदधरपुटव्यञ्जिताव्यक्तहासा
देवी सन्ध्याभ्यसूयाहसितपशुपतिस्तत्र दृष्टा तु वोऽव्यात् ॥

इत्यत्र ।

अङ्गिरसविरुद्धानां व्यभिचारिणां प्राचुर्येणानिवेशनम्, निवेशने वा क्षिप्रमेवाङ्गिरसव्यभिचार्यनुवृत्तिरिति द्वितीयः ।

लोचनम्

इति च्छाया । रोदिति प्रियेत्यतो रत्युत्कर्षः । समरतूर्येति भटस्येति चोत्साहोत्कर्षः । दोलायितमिति तयोरन्यूनाधिकतया साम्यमुक्तम् । एतच्च मुक्तकविषयमेव भवति न तु प्रबन्धविषयमिति केचिदाहुस्तच्चासत्; आधिकारिकेष्वितिवृत्तेषु त्रिवर्गफलसमप्राधान्यस्य सम्भवात् । तथाहि—रत्नावल्यां सचिवायत्तसिद्धित्वाभिप्रायेण पृथिवीराज्यलाभ आधिकारिकं फलं कन्यारत्नलाभः प्रासङ्गिकं फलं, नायकाभिप्रायेण तु विपर्यय इति स्थिते मन्त्रिबुद्धौ नायकबुद्धौ च स्वाम्यमात्यबुद्ध्येकत्वात्फलमिति नीत्या एकीक्रियमाणायां समप्राधान्यमेव पर्यवस्यति । यथोक्तम्—'कवेः प्रयत्नान्नेतॄणां युक्तानाम्' इत्यलमवान्तरेण बहुना ।

एवं प्रथमं प्रकारं निरूप्य द्वितीयमाह—**अङ्गीति** । **अनिवेशनमिति** । **अङ्गभूते**

बालप्रिया

प्रियाकर्तृकरोदनरूपानुभावोक्त्येत्यर्थः । **रत्युत्कर्ष** इति । उक्त इति विपरिणामेन सम्बन्धः । उक्तः व्यञ्जितः । **तयोरिति** । रत्युत्कर्षस्य उत्साहोत्कर्षस्य चेत्यर्थः । **साम्यमुक्तमिति** । अत्र प्रकृतो रसो वीरः भटस्येत्युक्तिबलाद्गम्यः समप्राधान्येन वर्णितस्तदविरोधी शृङ्गारः, कण्ठादित्यादौ तु प्रकृतो रसो विप्रलम्भः तदविरोधी हास्यस्समप्राधान्येन दर्शितः । **एतदिति** । द्वयोरुत्कर्षसाम्यमित्यर्थः । **मुक्तकविषयमेवेति** । मुक्तके एवेत्यर्थः । **त्रिवर्गेति** । त्रिवर्गरूपं यत् फलं तस्य समप्राधान्यं यत्तस्येत्यर्थः । **समप्राधान्यमेवेति** । वीरशृङ्गारयोरिति शेषः ।

कुत्रानिवेशनमित्यतः पूरयति—**अङ्गभूत** इति । **असाविति** । अङ्गभूतो रस इत्यर्थः ।

अङ्गत्वेन पुनः पुनः प्रत्यवेक्षा परिपोषं नीयमानस्याप्यङ्गभूतस्य रसस्येति तृतीयः। अनया दिशान्येऽपि प्रकारा उत्प्रेक्षणीयाः। विरोधिनस्तु रसस्याङ्गिरसापेक्षया कस्यचिन्न्यूनता सम्पादनीया। यथा शान्तेऽङ्गिनि शृङ्गारस्य शृङ्गारे वा शान्तस्य। परिपोषरहितस्य रसस्य कथं रसत्वमिति चेत्—उक्तमत्राङ्गिरसापेक्षयेति। अङ्गिनो हि रसस्य

**लोचनम्**

रस इति शेषः। नन्वेवं नासौ परितुष्टो भवेदित्याशङ्क्य मतान्तरमाह—**निवेशने वेति**। अत एव वाग्रहणमुत्तरपक्षदाढर्यं सूचयति न विकल्पम्। तथा चैक एवायं प्रकारः। अन्यथा तु द्वौ स्याताम्। अङ्गिनो रसस्य यो व्यभिचारी तस्यानुवृत्तिरनुसन्धानम्। यथा—'कोपात्कोमललोल' इति श्लोकेऽङ्गिभूतायां रतावङ्गत्वेन यः क्रोध उपनिबद्धस्तत्र बद्ध्वा दृढं इत्यमर्षस्य निवेशितस्य क्षिप्रमेव रुदत्येति हसन्निति च रत्युचितेर्ष्यौत्सुक्यहर्षानुसन्धानम्।

तृतीयं प्रकारमाह—**अङ्गत्वेनेति**। अत्र च तापसवत्सराजे वत्सराजस्य पद्मावतीविषयः सम्भोगशृङ्गार उदाहरणीकर्तव्यः। **अन्येऽपीति**। विभावानुभावानां चापि उत्कर्षो न कर्तव्योऽङ्गिरसविरोधिनां निवेशनमेव वा न कार्यम्, कृतमपि चाङ्गिरसविभावानुभावैरुपबृंहणीयम्। परिपोषिता अपि विरुद्धरसविभावानुभावा अङ्गत्वं प्रतिजागरयितव्या इत्यादि स्वयं शक्यमुत्प्रेक्षितुम्। एवं विरोध्यविरोधिसाधारणं प्रकारमभिधाय विरोधिविषया साधारणदोषपरिहारप्रकारगतत्वेनैव विशेषान्तरमप्याह—**विरोधिन**

**बालप्रिया**

**रतावङ्गत्वेनेति**। उपनिबद्ध इत्यनेनास्य सम्बन्धः। अनुभावद्वारा प्रदर्शित इत्यर्थः। **तत्रेति**। क्रोधे इत्यर्थः। तद्व्यभिचारितयेति यावत्। **उदाहरणीकर्तव्य इति**। स तत्राङ्गमिति भावः। अन्येऽपीत्याद्युक्तं विवृणोति–**विभावेत्यादि**। विभावानुभावानामित्यस्य विशेषणम्–**अङ्गिरसविरोधिनामिति**। **निवेशनमेव वेति**। षष्ठ्यन्तयोरत्रानुषङ्गः। **कृतमपीति**। निवेशनमित्यनुषज्यते। **अङ्गीति**। अङ्गिरसस्य ये विभावानुभावाः तदेकरूपं सत् तदेकरूपतां सम्पाद्येत्यर्थः। बृंहणीयं पोषणीयम्। **अङ्गत्वं प्रति जागरयितव्याः** अङ्गतां नेतव्याः। **विरोध्यविरोधिसाधारणं प्रकारमिति**। सम्भवन्तमिति शेषः। **विरोधीति**। विरोधिविषयः असाधारणश्च यो दोषपरिहारप्रकारः तद्गतत्वेन तत्सम्बन्धित्वेनेत्यर्थः। **सम्भवीति**। अत्र पूरयति–**प्रधानेत्यादि**। वृत्तौ 'एतच्चेत्यादि। बहुरसेषु प्रबन्धेष्वेकस्य रसस्य आपेक्षिकमेतत्प्रकर्षयोगित्वमशक्यप्रतिक्षेपमिति सम्बन्धः। केनाशक्यप्रतिक्षेपमित्यत्रोक्तम्–**रसानामित्यादि**। मतमेतद्विवृणोति–**उपकार्येत्यादि**। **अन्यथेति**। स्वचमत्कारविश्रान्तत्वाभाव

यावान् परिपोषस्तावांस्तस्य न कर्तव्यः, स्वतस्तु सम्भवी परिपोषः केन वार्यते। एतच्चापेक्षिकं प्रकर्षयोगित्वमेकस्य रसस्य बहुरसेषु प्रबन्धेषु रसानामङ्गाङ्गिभावमनभ्युपगच्छताप्यशक्यप्रतिक्षेपमित्यनेन प्रकारेणाविरोधिनां विरोधिनां च रसानामङ्गाङ्गिभावेन समावेशे प्रबन्धेषु स्यादविरोधः। एतच्च सर्वं येषां रसो रसान्तरस्य व्यभिचारीभवति इति दर्शनं

लोचनम्

इति। **सम्भवीति**। प्रधानाविरोधित्वेनेति शेषः। **एतच्चेति**। उपकार्योपकारकभावो रसानां नास्ति स्वचमत्कारविश्रान्तत्वात्; अन्यथा रसत्वायोगात्, तदभावे च कथमङ्गाङ्गितेत्यपि येषां मतं तैरपि कस्यचिद्रसस्य प्रकृष्टत्वं भूयः प्रबन्धव्यापकत्वमन्येषां चाल्पप्रबन्धानुगामित्वमभ्युपगन्तव्यमितिवृत्तसङ्घटनाया एवान्यथानुपपत्तेः, भूयः प्रबन्धव्यापकस्य च रसस्य रसान्तरैर्यदि न काचित्सङ्गतिस्तदितिवृत्तस्यापि न स्यात्सङ्गतिश्चेदयमेवोपकार्योपकारकभावः। न च चमत्कारविश्रान्तेर्विरोधः कश्चिदिति समनन्तरमेवोक्तं तदाह-**अनभ्युपगच्छतापीति**। शब्दमात्रेणासौ नाभ्युपगच्छति। अकाम एवाभ्युपगमयितव्य इति भावः। अन्यस्तु व्याचष्टे-एतच्चापेक्षिकमित्यादिग्रन्थो द्वितीयमतमभिप्रेत्य यत्र रसानामुपकार्योपकारकता नास्ति, तत्रापि हि भूयो वृत्तव्यापित्वमेवाङ्गित्वमिति। एतच्चासत्; एवं हि **एतच्च सर्वमिति** सर्वशब्देन य उपसंहार एकपक्ष-

बालप्रिया

इत्यर्थः। **तदभाव** इति। रसत्वाभाव इत्यर्थः। **कथमङ्गाङ्गितेति**। रसयोरङ्गाङ्गिभावः कथमित्यर्थः। तैरपीत्यस्याभ्युपगन्तव्यमित्यनेन सम्बन्धः। **कस्यचिद्रसस्य** प्रकृष्टत्वमित्यनेनैतच्चापेक्षिकमित्यादिग्रन्थो विवृतः। प्रकृष्टत्वं विवृणोति-**भूय** इत्यादि। अशक्यप्रतिक्षेपमित्यस्य विवरणम्—**अभ्युपगन्तव्यमिति**। अत्र हेतुमाह-**इतिवृत्तेत्यादि**। इतिवृत्तघटनायाः कथासङ्घटनस्य। एवमभ्युपगमे उपकार्योपकारकभावोऽप्यभ्युपगतो भवेदित्याह—**भूय** इत्यादि। **सङ्गतिरिति**। सम्बन्ध इत्यर्थः। **तदिति**। तदेत्यर्थः। **न स्यादिति**। सङ्गतिरित्यनुषज्यते। **न च चमत्कारेति**। चमत्कारविश्रान्तेः कश्चिद्विरोधो न चेत्यन्वयः। **तदाहेति**। तदभिप्रायेणाहेत्यर्थः। **शब्देति**। वचनमात्रेणेत्यर्थः। **अभ्युपगमयितव्य** इति। युक्त्येति शेषः। **द्वितीयं मतमिति**। मतान्तरे त्वित्यादिना वक्ष्यमाणं मतमित्यर्थः। **रसानामित्यादि**। किन्तु सास्थायिनामिति भावः। **तत्रापीति**। तन्मतेऽपीत्यर्थः। **भूय** इत्यादि। तथाच बह्वितिवृत्तव्यापित्वमङ्गित्वमल्पेतिवृत्तव्यापित्वमङ्गत्वं चेति भावः। **सर्वशब्देनेति**। सर्वशब्दं प्रयुञ्जेत्यर्थः। **उपसंहार** इति। तन्मतेनोच्यते इत्युपसंहार इत्यर्थः। **एकपक्षविषय** इति। रसो रसान्तरस्येत्युक्तैकपक्षविषयक इत्यर्थः। एतत्पक्षविषय

लोचनम्

विषयः मतान्तरेऽपीत्यादिना च यो द्वितीयपक्षोपक्रमः सोऽतीव दुःश्लिष्ट इत्यलं पूर्ववंश्यैः सह बहुना संलापेन । येषामिति । भावाध्यायसमाप्तावस्ति श्लोकः—

बहूनां समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो रसस्थायी शेषाः सञ्चारिणो मताः ॥ इति ।

तत्रोक्तक्रमेणाधिकारिकेतिवृत्तव्यापिका चित्तवृत्तिरवश्यमेव स्थायित्वेन भाति प्रासङ्गिकवृत्तान्तगामिनी तु व्यभिचारितयेति रस्यमानतासमये स्थायिव्यभिचारिभावस्य न कश्चिद्विरोध इति केचिद्व्याचचक्षिरे । तथा च भागुरिरपि किं रसानामपि स्थायिसञ्चारितास्तीत्याक्षिप्याभ्युपगमेनैवोत्तरमवोचद्बाढमस्तीति ।

अन्ये तु स्थायितया पठितस्यापि रसस्य रसान्तरे व्यभिचारित्वमस्ति, यथा क्रोधस्य वीरे व्यभिचारितया पठितस्यापि स्थायित्वमेव रसान्तरे, यथा तत्त्वज्ञानविभावकस्य निर्वेदस्य शान्ते ; व्यभिचारिणो वा सत एव व्यभिचार्यन्तरापेक्षया स्थायित्वमेव, यथा विक्रमोर्वश्यामुन्मादस्य चतुर्थेऽङ्के इतीयन्तमर्थमवबोधयितुमयं श्लोकः बहूनां चित्तवृत्तिरूपाणां भावानां मध्ये यस्य बहुलं रूपं यथोपलभ्यते स स्थायी भावः, स च रसो रसीकरणयोग्यः; शेषास्तु सञ्चारिण इति व्याचक्षते, न तु रसानां स्थायिसञ्चारिभावेनाङ्गाङ्गितोक्तेति । अत एवान्ये रसस्थायीति षष्ठ्या सप्तम्या द्वितीयया अश्रि-

बालप्रिया

इति च पाठः । स दुःश्लिष्ट इत्यपकर्षः ।

**बहूनामिति** । समवेतानामात्मनिष्ठानाम् बहूनां भावानामिति शेषः । चित्तवृत्तिविशेषाणामित्यर्थः । मध्ये यस्य भावस्य, रूपं बहु भूयः प्रबन्धव्यापकं भवेत् । **रस स्थायीति** । रसः स्थायीति छेदः । "खर्परे शरी"ति विसर्गलोपः । सः स्थायी रसो मन्तव्य इति योजना । **शेषा** इति । रसा इति विपरिणामेनानुषङ्गः । उक्तमर्थं दर्शयन्नाह—तत्रेत्यादि । **तत्रोक्तक्रमेण** तस्मिन् श्लोके उक्तो यः क्रमस्तेन । **रस्यमानतासमये** इति । रस्यमानतायामपीति च पाठः । **स्थायिव्यभिचारिभावस्येति** । रसानामिति शेषः । **तथाचे**त्यादि । भागुरिरपि बाढमस्तीत्यभ्युपगमेनैवावोचदित्यन्वयः ।

'मतान्तर' इत्यादिग्रन्थं तन्मतस्योपपत्तिं दर्शयन्नवतारयति—**अन्ये त्वि**त्यादि । अत्र वीर इत्यन्तमेकं वाक्यं, शान्त इत्यन्तं द्वितीयं, चतुर्थेऽङ्क इत्यन्तं तृतीयं बोध्यम् । **उन्मादस्येति** । वितर्काद्यपेक्षयेति शेषः । समवेतानामित्यस्य विवरणं चित्तवृत्तिरूपाणां भावानामिति । सः स्थायी रसश्च मन्तव्य इति योजना । **स्थायी**त्यस्य व्याख्यानम्—स्थायिभाव इति । **रस** इत्यस्य **रसीकरणयोग्य** इति । **शेषा** इति । अन्ये भावा इत्यर्थः । **न त्वि**त्यादि । किन्तु स्थायिनामेवेति भावः । **युक्तेति** । उक्तेति च पाठः । **षष्ठ्ये**त्यादि । रसस्य रसे रसं स्थायीति विग्रह इति भावः ।

तन्मतेनोच्यते । मतान्तरे तु रसानां स्थायिनो भावा उपचाराद्रसशब्दे-नोक्तास्तेषामङ्गत्वं निर्विरोधमेव ।

एवमविरोधिनां विरोधिनां च प्रबन्धस्थेनाङ्गिना रसेन समावेशे साधारणमविरोधोपायं प्रतिपाद्येदानीं विरोधिविषयमेव तं प्रतिपादयितुमि-दमुच्यते ।

**विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनो भवेत् ।**
**स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता ॥ २५ ॥**

ऐकाधिकरण्यविरोधी नैरन्तर्यविरोधी चेति द्विविधो विरोधी । तत्र प्रबन्धस्थेन स्थायिनाङ्गिना रसेनौचित्यापेक्षया विरुद्धैकाश्रयो यो विरोधी यथा वीरेण भयानकः स विभिन्नाश्रयः कार्यः । तस्य वीरस्य य आश्रयः कथानायकस्तद्विपक्षविषये सन्निवेशयितव्यः । तथा सति च तस्य विरो-धिनोऽपि यः परिपोषः स निर्दोषः । विपक्षविषये हि भयातिशयवर्णने

लोचनम्

तादिषु गमिगाम्यादीनामिति समासं पठन्ति । तदाह—**मतान्तरेऽपीति** । **रस-शब्देनेति** । 'रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः' इत्यादिप्राक्तनकारिकानि-दिष्टेनेत्यर्थः ॥ २४ ॥

अथ साधारणं प्रकारमुपसंहरन्नसाधारणमासूत्रयति—**एवमिति** । तमित्यवि-रोधोपायम् । विरुद्धेति विशेषणं हेतुगर्भम् । यस्तु स्थायी स्थाय्यन्तरेणासंभाव्य-मानैकाश्रयत्वाद्विरोधी भवेद्यथोत्साहेन भयं स विभिन्नाश्रयत्वेन नायकविपक्षा-दिगामित्वेन कार्यः । **तस्येति** । तस्य विरोधिनोऽपि तथाकृतस्य तथानिबद्धस्य

बालप्रिया

**श्रितादिषु गम्यादीनामिति**। द्वितीयया वेति सम्बन्धः । द्वितीयाश्रितेत्यादिसूत्रे "गम्यादीनामुपसंख्यान" मिति वार्तिकमनेन स्मारितम् ॥ २४ ॥

**साधारणं प्रकारमिति** । विरोध्यविरोधिसाधारणं अविरोधोपायप्रकारमित्यर्थः । **उपसंहरन्निति** । अनेन प्रतिपाद्येत्यन्तवृत्त्यर्थो दर्शितः । **असाधारणं** विरोधिमा-त्रविषयकम् । अनेन विरोधिविषयमेवेतिवृत्त्यर्थो दर्शितः। **विरुद्धेतीति** । विरुद्धैका-श्रय इतीत्यर्थः । विरुद्धपदं विवृणोति—**स्थायीत्यादि** । असम्भाव्यमानः एकाश्रयः यस्य तत्त्वात् । सः तथाविधः स्थायी । तस्येति तत्पदार्थं विवृण्वन्नाह—**तस्य विरोधिनोऽपीत्यादि** । **तथा कृतस्य** विभिन्नाश्रयत्वेन कृतस्य । अस्यैव विवर-

नायकस्य नयपराक्रमादिसम्पत्सुतरामुद्द्योतिता भवति । एतच्च मदीयेऽर्जुनचरितेऽर्जुनस्य पातालावतरणप्रसङ्गे वैशद्येन प्रदर्शितम् ।

एवमैकाधिकरण्यविरोधिनः प्रबन्धस्थेन स्थायिना रसेनाङ्गभावगमने निर्विरोधित्वं यथा तथा तद्दर्शितम् । द्वितीयस्य तु तत्प्रतिपादयितुमुच्यते—

**एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान् ।**
**रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा ॥ २६ ॥**

यः पुनरेकाधिकरणत्वे निर्विरोधो नैरन्तर्ये तु विरोधी स रसान्त-

लोचनम्

परिपुष्टतायाः प्रत्युत निर्दोषता नायकोत्कर्षाधानात् । अपरिपोषणन्तु दोष एवेति यावत् । अपिशब्दो भिन्नक्रमः । एवमेव वृत्तावपि व्याख्यानात् । ऐकाधिकरण्यमेकाश्रयेण सम्बन्धमात्रम् , तेन विरोधी यथा—भयनोत्साहः, एकाश्रयत्वेऽपि सम्भवति कश्चिन्निरन्तरत्वेन निर्व्यवधानत्वेन विरोधी, यथा रत्या निर्वेदः । प्रदर्शितमिति । 'समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनो महानुपप्लवोऽभवत्पुरे पुरन्दरद्विषाम्' इत्यादिना ॥२५॥

द्वितीयस्येति । नैरन्तर्यविरोधिनः । तदिति । निर्विरोधित्वम् । एकाश्रयत्वेन

बालप्रिया

णम्—**तथानिबद्धस्येति** । 'पोषे अदोषते' त्येतद्विवृणोति—**परीत्यादि** । गम्यमर्थमाह—**अपरिपोषणन्त्वित्यादि** । **अपिशब्द** इति । 'पोषेऽप्यदोषते'त्यपिशब्द इत्यर्थः । **व्याख्यानादिति** । तस्य विरोधिनोऽपीति व्याख्यानादित्यर्थः । एवं कारिकाव्याख्यानेन 'तत्रे'त्यादिवृत्तिग्रन्थस्य विवरणादैकाधिकरण्यविरोधीत्यादिपूर्वभागमात्रं व्याचष्टे-**ऐकाधिकरण्यमित्यादि** । **सम्बन्धमात्रं** सम्बन्ध एव । दृष्टान्तमाह—**भयेनोत्साह** इति । 'नैरन्तर्यविरोधी' त्येतद्विवृणोति—**एकेत्यादि** । एकाश्रयत्वे सम्भवत्यपि कश्चिन्निरन्तरत्वेन विरोधीति सम्बन्धः । **निरन्तरत्वेनेत्यस्य** विवरणम्—**निर्व्यवधानत्वेनेति** । **समुत्थित** इति । "श्रवेण तस्य तु ध्वनेर्विलुप्तमूलबन्धनमशेषदैत्ययोषितां श्लथीबभूव जीवितमि" त्युत्तरार्धम् । किरीटिनोऽर्जुनस्य धनुर्ध्वनाविति सम्बन्धः । पुरन्दरद्विषामसुराणाम् । उपप्लवस्यैव किञ्चिद्विवरणं **श्रवेणे**त्यादि ॥ २५ ॥

वृत्तौ 'ऐकाधिकरण्यविरोधिन' इत्यस्य 'अङ्गभावगमने निर्विरोधित्व'मित्यनेन सम्बन्धः । कारिकायाम् 'एकाश्रयत्वे नैरन्तर्ये'इत्युभयत्र सप्तमी निमित्त इत्याशयेन व्याचष्टे—**एकाश्रयत्वेनेत्यादि** । निर्दोष इत्यस्य व्याख्यानम्—**न विरोधीति** ।

रव्यवधानेन प्रबन्धे निवेशयितव्यः। यथा शान्तशृङ्गारौ नागानन्दे निवेशितौ।

लोचनम्

निमित्तेन यो निर्दोषः न विरोधी किं तु निरन्तरत्वेन निमित्तेन विरोधमेति स तथाविधविरुद्धरसद्वयाविरुद्धेन रसान्तरेण मध्ये निवेशितेन युक्तः कार्य इति कारिकार्थः। प्रबन्ध इति बाहुल्यापेक्षं, मुक्तकेऽपि कदाचिदेवं भवेदपि। यद्वक्ष्यति—'एकवाक्यस्थयोरपि' इति। यथेति। तत्र हि—'रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः' इत्यादिनोपक्षेपात्प्रभृति परार्थशरीरवितरणात्मकनिर्वहणपर्यन्तः शान्तो रसस्तस्य विरुद्धो मलयवतीविषयः शृङ्गारस्तदुभयाविरुद्धमद्भुतमन्तरीकृत्य क्रमप्रसरसम्भावनाभिप्रायेण कविना निबद्धः 'अहो गीतमहो वादित्रम्' इति। एतदर्थमेव 'व्यक्तिर्व्यञ्जनधातुना' इत्यादि नीरसप्रायमप्यत्र निबद्धमद्भुतरसपरिपोषकतयात्यन्तरसवहमिति 'निर्दोषदर्शनाः कन्यकाः' इति च क्रमप्रसरो निबद्धः। यथाहुः—'चित्तवृत्तिप्रसरप्रसंख्यानधनाः संख्याः पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेने'ति। अनन्तरं च निमित्तनैमित्तिकप्रसङ्गागतो यः शेखरकवृत्तान्तोदितहास्यरसोपकृतः शृङ्गारस्तस्य विरुद्धो यो वैराग्यशमपोषको नागीयकलेबरास्थिजालावलोकनादिवृत्तान्तः स

बालप्रिया

विरोधवानित्यस्य विवरणम्—विरोधमेतीति। उत्तरार्धं व्याचष्टे—स इत्यादि। प्रबन्ध इतीति। प्रबन्धे निवेशयितव्य इत्यत्र प्रबन्धग्रहणमित्यर्थः। यथा शान्तशृङ्गारौ नागानन्दे निवेशिताविस्येतद्विवृणोति—तत्रेत्यादि। इत्यादिना य उपक्षेपस्तस्मादित्यर्थः। परेति। परार्थं यच्छरीरवितरणं तदात्मकं यन्निर्वहणं तत्पर्यन्त इत्यर्थः। शान्तो रस इति। निबद्ध इत्यस्यापकर्षः। तस्येत्यादि। शृङ्गारः इत्यद्भुतमन्तरीकृत्य निबद्ध इत्यन्वयः। क्रमेति। क्रमेण यः प्रसरः रतिरूपशृङ्गारस्य नायके प्रसरणं तस्य सम्भावनारूपो य अभिप्रायस्तेनेत्यर्थः। इत्यादिनिबद्धमिति सम्बन्धः। इति चेति। निर्दोषदर्शनाः कन्यका इत्युक्त्या वक्तरि रत्यनाविर्भावप्रकाशनादिति भावः। चित्तवृत्तीति। चित्तवृत्तीनां रागादीनां ये प्रसरास्तेषु, यद्वा चित्तवृत्तीनां प्रसरो येषु विषयेषु तेषु यत्प्रसंख्यानं दोषदर्शनं, तदेव धनं येषां ते। तद्वचनमाह—पुरुषार्थेत्यादि। सांख्यकारिकायाः पूर्वार्धमिदम्। "प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गमि"त्युत्तरार्धम्। निमित्तं धर्मादिनैमित्तिकं धर्मादिकारणं स्थूलदेहादि तयोः प्रसङ्गेन सम्बन्धेन। 'इदं लिङ्गं' सूक्ष्मशरीरम्। 'नटवद्व्यवतिष्ठते' यथा नटो विविधं रूपं गृहीत्वा व्यवहरति तथा देवादिशरीरं गृहीत्वा व्यवहरति। किमर्थम्, तत्राह—'पुरुषार्थे'ति। पुरुषार्थफलकमित्यर्थः। तत्तद्भोगादृष्टबलात्तत्तद्भोगार्थमेव तथा व्यवहरतीति यावत्। कुतोऽस्यैवंविधो महिमेत्यत्राह—'प्रकृते'रित्यादि इति तद्व्याख्या।

शान्तश्च तृष्णाक्षयसुखस्य यः परिपोषस्तल्लक्षणो रसः प्रतीयत एव । तथा चोक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

लोचनम्

मित्रावसोः प्रविष्टस्य मलयवतीनिर्गमनकारिणः 'संसर्पद्भिः समन्तात्' इत्यादि काव्योपनिबद्धक्रोधव्यभिचार्युपकृतवीररसान्तरितो निवेशितः ।

ननु नास्त्येव शान्तो रसः तस्य तु स्थाय्येव नोपदिष्टो मुनिनेत्याशङ्क्याह—**शान्तश्चे**ति । तृष्णानां विषयाभिलाषाणां यः क्षयः सर्वतो निवृत्तिरूपो निर्वेदः तदेव सुखं तस्य स्थायिभूतस्य यः परिपोषो रस्यमानताकृतस्तदेव लक्षणं यस्य स शान्तो रसः । **प्रतीयत एवे**ति । स्वानुभवेनापि निवृत्तभोजनाद्यशेषविषयेच्छाप्रसरत्वकाले सम्भाव्यत एव ।

अन्ये तु सर्वचित्तवृत्तिप्रशम एवास्य स्थायीति मन्यन्ते । तृष्णासद्भावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तित्वाभावेन भावत्वायोगात् । पर्युदासे त्वस्मत्पक्ष एवायम् ।

बालप्रिया

कामादितत्तत्पुरुषार्थलाभः क्रमेणैव भवतीत्यंशे उपष्टम्भकमिदं वचनमिति बोध्यम् । **निवेशित** इति । नागानन्दनाटकमवलोकयतां सहृदयानां स्पष्टोऽयं विषयः ।

**निवृत्तिरूपो निर्वेद** इति । निवृत्तिरूपः प्रध्वंसहेतुः । **निर्वेद** इति । तत्त्वज्ञानजनितो विषयेषु हेयत्वबुद्धिरित्यर्थः । यद्वा—**सर्वतो निवृत्तिरूप** इति । सर्वस्माद्विषयान्मनोनिवृत्तिरूप इत्यर्थः । निवृत्तिर्नाम काचिच्चित्तवृत्तिः । **तस्य स्थायिभूतस्ये**ति सुखस्येत्यन्तस्य विवरणम् । रस्यमानताकृतो यः परिपोष इति सम्बन्धः । **निवृत्ते**ति । निवृत्तः भोजनाद्यशेषविषयाया इच्छायाः प्रसरो यतः पुरुषात्तस्य भावस्तत्वं तस्य काले प्रसरकाले इति वा पाठः । **सम्भाव्यते** ज्ञायते ।

शमः स्थायीति केचित्, तन्मतमाह—**अन्य** इति । **सर्वे**ति । सर्वासां चित्तवृत्तीनां रत्यादिरूपाणां प्रशमः प्रकर्षेण शम इत्यर्थः । तृष्णाक्षयशब्दार्थोऽप्ययमेवेति भावः । **अस्ये**ति । शान्तस्येत्यर्थः । सर्वचित्तवृत्तिप्रशम इत्यनेन सर्वासां चित्तवृत्तीनामभावस्य विवक्षणे दोषं दर्शयन्नाह—**तृष्णे**त्यादि । तृष्णानां सर्वासां चित्तवृत्तीनां सद्भावस्य प्रसरस्य यः प्रसज्यप्रतिषेधोऽत्यन्ताभावस्तद्रूपत्वे । सर्वचित्तवृत्तिप्रशमपदार्थस्येति शेषः । **चेतोवृत्तित्वाभावेने**ति । अभावरूपत्वादिति भावः । **भावत्वायोगा**दिति । भावान्तर्भावासम्भवादित्यर्थः । **पर्युदास** इति । विवक्षिते इति शेषः । पर्युदासन्यायेनार्थे विवक्षिते सतीत्यर्थः । यथा अधर्मादिपदस्य धर्मविरोधिपापादिकमर्थः, तथा तृष्णाक्षयपदस्य सर्वचित्तवृत्तिप्रशमपदस्य वा सर्वचित्तवृत्तिविरोधी

लोचनम्

अन्ये तु—

स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते ।
पुनर्निमित्तापाये तु शान्त एव प्रलीयते ॥

इति भरतवाक्यं दृष्टवन्तः सर्वरससामान्यस्वाभावं शान्तमाचक्षाणा अनुपजातविशेषान्तरचित्तवृत्तिरूपं शान्तस्य स्थायिभावं मन्यन्ते । एतच्च नातीवास्मत्पक्षाद्दूरम् । प्रागभावप्रध्वंसाभावकृतस्तु विशेषः । युक्तश्च प्रध्वंस एव तृष्णानाम् । यथोक्तम्—'वीतरागजन्मादर्शनात्' इति । **प्रतीयत एवे**ति । मुनिनाप्यङ्गीक्रियत एव 'क्वचिच्छमः' इत्यादि वदता । न च तदीया पर्यन्तावस्था वर्णनीया येन सर्वचेष्टोपरमादनुभावाभावेनाप्रतीयमानता स्यात् । 'शृङ्गारादेरपि फलभूमाववर्णनीयतैव पूर्वभूमौ तु 'तस्य प्रशान्तवाहिता संस्कारात् । तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः'

बालप्रिया

चित्तवृत्तिविशेषो यदि विवक्षितस्तदेति यावत् । **अस्मत्पक्ष एवाय**मिति । निर्वेदरूपचित्तवृत्तिविशेषे एव पर्यवसानादिति भावः ।

**स्वं स्व**मिति । षष्ठाध्यायान्तिमभागस्थोऽयं श्लोकः । अस्मात्पूर्वोऽयं श्लोकः—

भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः ।
विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते ॥ इति ।

**स्व**मिति । स्वं स्वीयम् । निमित्तम् वनितादिरूपम् । शान्तान्निर्विकारादन्तःकरणरूपात्प्रकृतेः । भावः रत्यादिः । **अनुपे**ति । अनुपजातविशेषा बाह्यवनितादिविषयविशेषानाश्रया आन्तरी आत्मविषयिका च या चित्तवृत्तिः, तद्रूपमित्यर्थः । **एतदि**ति । उक्तमतमित्यर्थः । **नातीवे**त्यादि । अस्मत्पक्षसन्निकृष्टमित्यर्थः । **प्रागभावे**ति । पक्षस्यास्य सर्वचित्तवृत्तिप्रागभावे पर्यवसानमस्मत्पक्षस्य तु सर्वचित्तवृत्तिप्रध्वंसाभाव इति विशेष इत्यर्थः । **युक्तश्चे**त्यादि । तृष्णाप्रध्वंसपक्ष एव युक्त इत्यर्थः । **यथोक्त**मिति । सर्वासां तृष्णानां प्रध्वंसो भवतीत्येतदुक्तमित्यर्थः । न्यायसूत्रकृतेति शेषः । **वीते**ति । तृतीयाध्यायप्रथमाह्निकस्थमिदं सूत्रम् । वीतरागस्य रागादिरहितस्य । जन्मनः अदर्शनात् यतो जन्म न भवति, तस्मादित्यर्थः । किन्तु सरागस्यैव जन्मेति भावः । आत्मनो नित्यत्वसाधकमिदम् । प्रतीयत एवेत्येतदन्यथाऽपि व्याचष्टे—**मुनिने**त्यादि । वदता मुनिनेत्यन्वयः । शमपदमत्र योगेन निर्वेदपरमिति भावः । चेष्टोपरमादयो हि शान्तस्यानुभावा वक्तव्यास्ते च न प्रयोगयोग्याः । अतस्तस्यानुभावैरप्रतीयमानतेति केचिद्वदन्ति, तन्मतन्निराकर्तुमाह—**न चे**त्यादि । **तदीये**ति । शान्तसम्बन्धिनीत्यर्थः । **पर्यन्तावस्था** निरीहावस्था । **अप्रतीयमानते**ति । शान्तस्येति शेषः । **फलभूमा**विति । सुरतावस्थायामित्यर्थः । **पूर्वभूमा**वित्यादि । पूर्वभूमौ तु शान्तस्यापि जनकादेश्चेष्टा दृष्टैवेति सम्बन्धः । चित्तस्य क्षिप्ताद्या

लोचनम्

इति सूत्रद्वयनीत्या चित्राकारा यमनियमादिचेष्टा राज्यधुरोद्वहनादिलक्षणा वा शान्तस्यापि जनकादेर्दृष्टैवेत्यनुभावसद्भावाद्यमनियमादिमध्यसम्भाव्यमानभूयोव्यभिचारिसद्भावाच्च प्रतीयत एव ।

ननु न प्रतीयते नास्य विभावाः सन्तीति चेत्—न; प्रतीयत एव तावदसौ । तस्य च भवितव्यमेव प्राक्तनकुशलपरिपाकपरमेश्वरानुग्रहाध्यात्मरहस्यशास्त्रवीतरागपरिशीलनादिभिर्विभावैरितीयतैव विभावानुभावव्यभिचारिसद्भावः स्थायी च दर्शितः । ननु तत्र हृदयसंवादाभावाद्रस्यमानतैव नोपपन्ना । क एवमाह स नास्तीति, यतः प्रतीयत एवेत्युक्तम् ।

ननु प्रतीयते सर्वस्य श्लाघास्पदं न भवति । तर्हि वीतरागाणां शृङ्गारो न

बालप्रिया

नानावस्थाः, ता भूमय इत्युच्यन्ते । **प्रशान्ते**त्यादि । "तस्य प्रशान्तवाहितासंस्कारात्, तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः" इमे योगसूत्रे । अत्राद्यस्येयं भोजवृत्तिः—"तस्य चेतसः उक्तान्निरोधसंस्कारात् प्रशान्तवाहिता भवति परिहृतविक्षेपतया सदृशप्रवाहपरिणामि चित्तं भवतीत्यर्थः" इति । सूत्रमिदं तृतीये पादे, तच्छिद्रेत्यादि चतुर्थे । अस्यापीयं भोजवृत्तिः—"तस्मिन् समाधौ स्थितस्य छिद्रेष्वन्तरालेषु यानि प्रत्ययान्तराणि व्युत्थानरूपाणि ज्ञानानि तानि, प्राग्भूतेभ्यो व्युत्थानानुभवजेभ्यः संस्कारेभ्यः अहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि भवन्ति" इति । **चित्राकारे**ति । विस्मयावहेत्यर्थः । **राज्ये**त्यादि । चेष्टेति शेषः । अत्र समाधिकाले यमादिचेष्टा व्युत्थानकाले राज्यधुरोद्वहनादिचेष्टेति विभागः । **जनकादे**रिति । जनकमहाराजो महायोगीति प्रसिद्धिः । इतीति हेतौ । **यमे**ति । यमनियमादीनां योगाङ्गानां मध्ये अन्तरे सम्भाव्यमानाः भूयांसश्च ये व्यभिचारिणः मतिधृतिस्मृत्यादयः, तेषां सम्भवादित्यर्थः । **प्रतीयत एवे**ति । शान्तो रस इति शेषः ।

शङ्कते—**नन्वि**त्यादि । **न प्रतीयत** इति । शान्त इति शेषः । कुत इत्यत्राह—**नास्ये**त्यादि । समाधत्ते—**ने**ति । के वा विभावा इत्यत्राह—**तस्ये**त्यादि । तस्य च विभावैर्भवितव्यमेवेत्यन्वयः । तानाह—**प्राक्तने**त्यादि । प्राक्तनानां कुशलानां सत्कर्मणां परिपाकः तथा परमेश्वरानुग्रहः, तथाऽध्यात्मरहस्यशास्त्रेषु वेदान्तादिषु वीतरागेषु च परिशीलनं तदादिभिरित्यर्थः । उपसंहरति—**इती**त्यादि । **इयतैव** उक्तप्रकारेणैव । शङ्कते-**नन्वि**ति । **तत्र** शान्ते । **हृदये**ति । प्रतिपत्तॄणामिति शेषः। समाधत्तं-**क** इति । **सः** हृदयसम्वादः उक्तमिति । वृत्तिकृतेति शेषः ।

'यदि नामे'त्यादिग्रन्थमवतारयति—**नन्वि**त्यादि । **प्रतीयत** इति शान्त इति शेषः । विशेषमाह—**सर्वस्ये**ति । प्रतिबन्द्या उत्तरमाह—**तर्ही**त्यादि । **सोऽपि** शृङ्गारोऽपि । **तदाहे**ति । तदभिप्रायेणाहेत्यर्थः । **नन्वि**त्यादि । **असौ** धर्मप्रधानो

यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति नैतावतासावलोकसामान्यमहानुभावचित्तवृत्तिविशेषः प्रतिक्षेप्तुं शक्यः। न च वीरे तस्यान्तर्भावः कर्तुं युक्तः। तस्याभिमानमयत्वेन व्यवस्थापनात्। अस्य चाहङ्कारप्रशमैकरूपतया स्थितेः। तयोश्चैवंविधविशेषसद्भावेऽपि यद्यैक्यं

लोचनम्

श्लाघ्य इति सोऽपि रसत्वाच्च्यवतामिति तदाह—यदि नामेति। ननु धर्मप्रधानोऽसौ वीर एवेति सम्भावयमान आह—न चेति। तस्येति वीरस्य। अभिमानमयत्वेनेति। उत्साहो ह्यहमेवंविध इत्येवं प्राण इत्यर्थः। अस्य चेति शान्तस्य। तयोश्चेति। ईहामयत्वनिरीहत्वाभ्यामत्यन्तविरुद्धयोरपीति चशब्दार्थः। वीररौद्रयोस्त्वत्यन्तविरोधोऽपि नास्ति। समानं रूपं च धर्मार्थकामार्जनोपयोगित्वम्।

नन्वेवं दयावीरो धर्मवीरो दानवीरो वा नासौ कश्चित्, शान्तस्यैवेदं नामान्तरकरणम्। तथा हि मुनिः—

दानवीरं धर्मवीरं युद्धवीरं तथैव च।
रसवीरमपि प्राह ब्रह्मा त्रिविधसम्मितम्॥

बालप्रिया

वीर एवेति सम्बन्धः। असौ शान्तः धर्मप्रधानो वीरः धर्मवीरः। इतीत्यादि। इति सम्भावनां कुर्वस्तां परिहर्तुमाहेत्यर्थः। वृत्तौ—'न चे'त्यादि। 'वीरे' धर्मवीरे। 'तस्य' शान्तस्य न च युक्त इति सम्बन्धः। 'तस्ये'ति। वीरस्येत्यर्थः। 'अभिमानमयत्वेन, गर्वमयत्वेन। इममर्थं विवृणोति लोचने—उत्साहो हीत्यादि। उत्साहः वीरस्थायी। एवंविध इत्यादि सर्वं साधयितुं शक्नोमीत्यादि बुद्धिरेव प्राणा जीवितं यस्य स इत्यर्थः। तयोश्चेति चकारार्थमाह—ईहेत्यादि। तद्वीररौद्रयोरपि तथा प्रसङ्ग इत्युक्तं विवृणोति—वीररौद्रयोरित्यादि। धर्मेति। धर्मार्थकामानां यदर्जनं तदुपयोगित्वं समानरूपं चास्तीत्यर्थः। अतस्तयोरैक्यं स्यादिति भावः। दयावीरादीनामित्यादिग्रन्थमवतारयति—नन्वित्यादि। एवं वीरशान्तयोरुक्तरीत्या भेदाङ्गीकारे। दयावीर इत्यादि। दयावीरः धर्मवीरान्तर्गतो दानवीरान्तर्गतो वेत्यर्थः। दयावीर इत्यस्यानन्तरं 'कोऽभिधीयता'मिति च पाठः। प्रतिवक्ति—नासावित्यादि। दयावीर इत्यनुषज्यते। असौ कश्चिन्नेति। धर्मवीरो दानवीरो वा नेत्यर्थः। तर्हि किमात्मक इत्यत्राह—शान्तस्यैवेत्यादि। इदं दयावीर इत्येतत्। शान्तस्यैव नामान्तरकरणं दयावीरश्शान्त एवान्तर्भूत इत्यर्थः। कुत इत्यत्र मुनिवचनं प्रमाणयति—तथेत्यादि। तथाहीति। दयावीरस्य शान्तान्तर्भावाद्धेतोरित्यर्थः त्रैविध्यमेवाभ्यधादित्यनेनास्य सम्बन्धः।

दानवीरमिति। त्रिविधसम्मितमिति। त्रैविध्येन विभक्तमित्यर्थः।

परिकल्प्येते तद्वीररौद्रयोरपि तथा प्रसङ्गः। दयावीरादीनां च चित्तवृत्तिविशेषाणां सर्वाकारमहङ्काररहितत्वेन शान्तरसप्रभेदत्वम्, इतरथा तु वीरप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः। तदेवमस्ति शान्तो रसः। तस्य चाविरुद्धरसव्यवधानेन प्रबन्धे विरोधिरससमावेशे सत्यपि निर्विरोधत्वम्। यथा प्रदर्शिते विषये।

## लोचनम्

इत्यागमपुरःसरं त्रैविध्यमेवाभ्यधात्। तदाह—**दयावीरादीनाञ्चे**त्यादिग्रहणेन। विषयजुगुप्सारूपत्वाद्बीभत्सेऽन्तर्भावः शङ्क्यते। सा त्वस्य व्यभिचारिणी भवति न तु स्थायितामेति, पर्यन्तनिर्वाहे तस्या मूलत एव विच्छेदात्। आधिकारिकत्वेन तु शान्तो रसो न निबद्धव्य इति चन्द्रिकाकारः। तच्चेहास्माभिर्न पर्यालोचितं, प्रसङ्गान्तरात्। मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात्सर्वरसेभ्यः प्रधानतमः। स चायमस्मदुपाध्यायभट्टतौतेन काव्यकौतुके, अस्माभिश्च तद्विवरणे बहुतरकृतनिर्णयपूर्वपक्षसिद्धान्त इत्यलं बहुना॥ २६॥

## बालप्रिया

**आगमपुरस्सर**मिति। ब्रह्मा प्राहेत्युक्तेरिति भावः। त्रैविध्यमेवेत्येवकारेण दयावीरव्यवच्छेदः। **तदाहे**ति। उक्ताभिप्रायेणाहेत्यर्थः। 'दयावीरादीनां चे' तीत्यस्यानन्तरं विषयेत्यादेः पूर्वमादिग्रहणेनेति पाठः सर्वेषु दृष्टग्रन्थेषु दृश्यते, तस्य च विषयेत्यादिना सम्बन्धो न घटते चातोऽत्र धर्मवीरदानवीरयोर्ग्रहणमिति पूरणीयम्। यदि वा तथा ग्रन्थे पठनीयमिति बोध्यम्। वृत्तौ 'चित्तवृत्तिविशेषाणा'मिति। चर्व्यमाणानामिति शेषः। दयावीरो नाम परोपचिकीर्षाप्रयत्नरूप उत्साहः। 'सर्वाकार'मि'ति क्रियाविशेषणम्। सर्वथेत्यर्थः। 'अहङ्काररहितत्वेने'ति हेतौ तृतीया, रहितत्वे इति च पाठः। नायकस्येति शेषः। 'इतरथा' अहङ्कारसहितत्वे। शान्तस्थायिनो विषयजुगुप्सारूपत्वाच्छान्तस्य बीभत्सेऽन्तर्भाव इति केचित्। तन्मतं प्रसङ्गान्निराकरोति लोचने—विषयेत्यादि। **विषयजुगुप्सारूपत्वा**दिति। शान्तस्येति शेषः। अस्येत्यपकर्षो वा। **शङ्क्यत** इति। कैश्चिदिति शेषः। वस्तुतो नैवमित्याह—**सा त्वि**त्यादि। सा जुगुप्सा। **अस्य** शान्तस्य। **तस्याः** जुगुप्सायाः। शान्तस्य सर्वरसापेक्षयोत्कर्षं इत्याह—**मोक्षे**त्यादि। **स चेति**। शान्तश्चेत्यर्थः। **बहुत्या**दि। बहुतरं यथा तथा कृतनिर्णयौ कृतविचारौ पूर्वपक्षसिद्धान्तौ यस्य सः॥ २६॥

[These three verses are quoted in [illegible]
under वीररसप्रकृति as भगवतो व्यासस्यैते. There one more
verse is prefixed to these three, which is as follows:
परस्परं [illegible] तृतीयोद्द्योतः [illegible] ३९५ [illegible]
कुम्भेषु [illegible] स्तनेषु लीना इव [illegible]

एतदेव स्थिरीकर्तुमिदमुच्यते—

रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्तते हि रसयोः समावेशे विरोधिता ॥ २७ ॥

रसान्तरव्यवहितयोरेकप्रबन्धस्थयोर्विरोधिता निवर्तत इत्यत्र न काचिद्भ्रान्तिः । यस्मादेकवाक्यस्थयोरपि रसयोरुक्तया नीत्या विरुद्धता निवर्तते । यथा—

† भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तरालाः ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानाँल्ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥

लोचनम्

**स्थिरीकर्तुमिति** । शिष्यबुद्धावित्यर्थः । अपिशब्देन प्रबन्धविषयतया सिद्धोऽयमर्थ इति दर्शयति—**भूरेणिवति** । विशेषणैरतीव दूरापेतत्वमसम्भावनास्पदमुक्तम् । स्वदेहानित्यनेन देहत्वाभिमानादेव तादात्म्यसम्भावनानिष्पत्तेरेकाश्रयत्वमस्ति,

बालप्रिया

**अपिशब्देनेति** । 'एकवाक्यस्थयोरपी'त्यपिशब्देनेत्यर्थः । वृत्तौ—'भूरेणिव'-त्यादि । इदं काव्यप्रकाशेऽप्युदाहृतम् । वीराः पतितान् स्वदेहानपश्यन्निति सम्बन्धः । यथाक्रमं कुतूहलहेतुगर्भमेकं देहानामपरं वीराणां विशेषणम् । 'दिग्धान्' व्याप्तान् 'वासिते'ति । सुरभीकृतेत्यर्थः । 'बाहुमध्यं' वक्षः । 'क्रव्यभुजां' मांसाशिनाम् । चन्दनवारीणां सेको यत्र तादृशैः । 'कल्पलतादुकूलैः' कल्पलतोद्भूतपट्टवस्त्रैः, यद्वा—कल्पलता एव दुकूलानि तैः । 'ललनाः' स्ववेश्याः । लोचने—**विशेषणैरिति** । भूरेणिवत्यादिदेहविशेषणैरित्यर्थः । **असम्भावनास्पदम्** स्वीयत्वसम्भावनाया अभावस्य निमित्तम् । दूरापेतत्वं दूरविप्रकृष्टत्वमत्यन्तवैलक्षण्यमिति यावत् । उक्तं व्यञ्जितम् । ननु शृङ्गारबीभत्सयोरेकस्मिन्नेकालम्बनकयोरेव विरोधः, एकस्मिन्नेकदैकस्य रतिजुगुप्सयोरनुदयात्; प्रकृते च भूरेणुदिग्धत्वादिविशिष्टवीरदेहालम्बनको बीभत्सो दिव्यत्वविशिष्टवीरदेहालम्बनकश्च शृङ्गार इति तयोः कथमेकालम्बनकत्मरूपैकाश्रयत्वमिति शङ्कां परिहरन्नाह—**स्वेत्यादि** । **देहत्वाभिमानादिति** । वीराणां पतितदेहेषु स्वदेहत्वबु-

इत्यादौ । अत्र हि शृङ्गारबीभत्सयोस्तदङ्गयोर्वा वीररसव्यवधानेन समावेशो न विरोधी ।

**विरोधमविरोधं च सर्वत्रेत्थं निरूपयेत् ।**
**विशेषतस्तु शृङ्गारे सुकुमारतमो ह्यसौ ॥ २८ ॥**

यथोक्तलक्षणानुसारेण विरोधाविरोधौ सर्वेषु रसेषु प्रबन्धेऽन्यत्र च निरूपयेत्सहृदयः; विशेषतस्तु शृङ्गारे । स हि रतिपरिपोषात्मकत्वा-

लोचनम्

अन्यथा विभिन्नविषयत्वात्को विरोधः । ननु वीर एवात्र रसो न शृङ्गारो न बीभत्सः, किन्तु रतिजुगुप्से हि वीरं प्रति व्यभिचारीभूते । भवत्वेवम्, तथापि प्रकृतोदाहरणता तावदुपपन्ना । तदाह—**तदङ्गयोर्वेति** । तयोरङ्गे तत्स्थायिभावावित्यर्थः । **वीररसेति** । 'वीराः स्वदेहान्' इत्यादिना तदीयोत्साहाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया प्रतीतिरिति मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायकतेति भावः ॥ २७ ॥

**अन्यत्र चेति** मुक्तकादौ । स हि शृङ्गारः सुकुमारतम इति सम्बन्धः । सुकुमार-

बालप्रिया

द्धेरित्यर्थः । एतत्प्रदर्शनार्थं स्वपदोपादानमिति भावः । **तादात्म्येति** । प्रतिपत्तृद्वयोर्देहयोरैक्यबुद्धिनिष्पत्तेरित्यर्थः । तथा च स्वललनागतस्य शृङ्गारस्य बीभत्सस्य च देहद्वयैक्याभिमानी वीर एक एव विषय इति भावः । 'तदङ्गयोर्वे'ति ग्रन्थमवतारयति—**नन्वित्यादि** । **वीर एवेति** । साहसेन रणमध्यनिपातनाद्यनुभावेनाक्षेपलभ्यगर्वादिसञ्चारिणा च वीररस एव प्रतीयत इत्यर्थः । **तत्स्थायिभावाविति** । शृङ्गारबीभत्सयोः स्थायिभावौ रतिजुगुप्से इत्यर्थः । **इत्यादिनेति** । वीरपदेन देहपाताद्यनुभावेन चेत्यर्थः । **उत्साहादी**त्यादिपदेन गर्वादेः परिग्रहः । अवगत्येत्यनन्तरं वीरो रस इति शेषः । वीरव्यवधानं विवृणोति—**कर्तृकर्मणोरित्यादि** । कर्तृकर्मणोः वीरस्य कर्तुः पतितदेहरूपकर्मणश्च । **समस्तेत्यादि** । अत्र वाक्यं पदसमुदायः भूरेणुदिग्धा-न्नवेत्यादिवाक्यार्थान्वयितया कर्मणः न वेत्यादिवाक्यार्थान्वयितया कर्तुश्च प्रतीतिरित्यर्थः । इतीति हेतौ । **भाव इति** । अयमर्थः—'भूरेणुदिग्धा'न्यादिविशेषणार्थबोधे बीभत्सस्तद्विशेष्यार्थबोधे वीरो, न वेत्यादिविशेषणार्थबोधे शृङ्गारस्तद्विशेष्यार्थबोधे वीरश्चास्वाद्यत इति रीत्या वीरस्य मध्ये मध्ये आस्वादः । श्रुतक्रमेण बोधे स्वादौ बीभत्सो, योजनया बोधे स्वादौ शृङ्गार इति ॥ २७ ॥

'प्रबन्धेऽन्यत्र चे'त्यत्रान्यत्रपदं व्याचष्टे—**मुक्तकादाविति** । 'सुकुमारतमो हि

द्रुतेश्च स्वल्पेनापि निमित्तेन भङ्गसम्भवात्सुकुमारतमः सर्वेभ्यो रसेभ्यो मनागपि विरोधिसमावेशं न सहते ।

**अवधानातिशयवान्रसे तत्रैव सत्कविः ।**
**भवेत्तस्मिन् प्रमादो हि झटित्येवोपलक्ष्यते ॥ २९ ॥**

तत्रैव च रसे सर्वेभ्योऽपि रसेभ्यः सौकुमार्यातिशययोगिनि कविरवधानवान् प्रयत्नवान्स्यात् । तत्र हि प्रमाद्यतस्तस्य सहृदयमध्ये क्षिप्रमेवावज्ञानविषयता भवति । शृङ्गाररसो हि संसारिणां नियमेनानुभवविषयत्वात्सर्वरसेभ्यः कमनीयतया प्रधानभूतः ।

एवं च सति—

**विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा ।**
**तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥ ३० ॥**

### लोचनम्

स्तावद्रसजातीयः ततोऽपि करुणस्ततोऽपि शृङ्गार इति तमप्रत्ययः ॥ २८–२९ ॥

**एवं चेति** । यतोऽसौ सर्वसंवादीत्यर्थः । **तदिति** । शृङ्गारस्य विरुद्धा ये शान्तादयस्तेष्वपि तदङ्गानां शृङ्गाराङ्गानां सम्बन्धी स्पर्शो न दुष्टः । तया भङ्गया रसान्तरगता अपि विभावानुभावाद्या वर्णनीया यया शृङ्गाराङ्गभावमुपागमन् । यथा ममैव स्तोत्रे—

त्वां चन्द्रचूडं सहसा स्पृशन्ती प्राणेश्वरं गाढवियोगतप्ता ।
सा चन्द्रकान्ताकृतिपुत्रिकेव संविद्विलीयापि विलीयते मे ॥

### बालप्रिया

स' इति कारिकापाठाभिप्रायेण व्याचष्टे—**स हीत्यादि** । **रसजातीय इति** । रसत्वजातिमानित्यर्थः ॥ २८–२९ ॥

'एवञ्चे'त्येतत् व्याचष्टे—**यत इति** । शृङ्गारस्य सर्वानुभवविषयत्वादित्यर्थः । 'विनेयानि'त्याद्यर्थं व्याख्यास्यन्नादौ तद्विरुद्धेत्याद्युत्तरार्धं व्याचष्टे—**तदित्यादि** । भावार्थमाह—**तयेत्यादि** । **रसान्तरेति** । शान्तादीत्यर्थः । **यया शृङ्गाराङ्गभावमुपागमन्निति** । यया भङ्गया वर्णनया शृङ्गारविभावादित्वं प्राप्नुवन्तो भवन्तीत्यर्थः । अत्रोदाहरणमाह—**त्वामित्यादि** । गाढवियोगेन गाढं गाढेन वा त्वदस्पर्शेन तप्ता संसारतापमनुभवन्ती । सा विषयान्तरसञ्चारिणी मे संवित् अन्तःकरणं तद्वृत्तिर्वा त्वां स्पृशन्ती किञ्चिद्विषयीकुर्वाणा विलीय त्वदाकारतारूपत्वसम्बन्धमवाप्य यत्र ज्ञाने

शृङ्गारविरुद्धरसस्पर्शः शृङ्गाराङ्गानां यः स न केवलमविरोधलक्षणयोगे सति न दुष्यति यावद्विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा क्रियमाणो न दुष्यति । शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो हि विनेयाः सुखं विनयोपदेशान् गृह्णन्ति । सदाचारोपदेशरूपा हि नाटकादिगोष्ठी

लोचनम्

इत्यत्र शान्तविभावानुभावानामपि शृङ्गारभङ्गया निरूपणम् । विनेयानुन्मुखीकर्तुं या काव्यशोभा तदर्थं नैव दुष्यतीति सम्बन्धः । वाग्रहणेन पक्षान्तरमुच्यते । तदेव व्याचष्टे—**न केवलमिति** । वाशब्दस्यैतद्व्याख्यानम् । अविरोधलक्षणं परिपोषपरिहारादि पूर्वोक्तम् । विनेयानुन्मुखीकर्तुं या काव्यशोभा तदर्थमपि वा विरुद्धसमावेशः न केवलं पूर्वोक्तैः प्रकारैः, न तु काव्यशोभा विनेयोन्मुखीकरणमन्तरेणास्ते, व्यवधानाव्यवधाने नापि लभ्येते यथान्यैर्व्याख्याते । **सुखमिति** । रञ्जनापुरःसरमित्यर्थः । ननु काव्यं क्रीडारूपं क्व च वेदादिगोचरा उपदेशकथा इत्याशङ्क्याह—**सदाचारेति** ।

बालप्रिया

ध्यातृध्यानध्येयानि भासन्ते तदनेन दर्शितम् । अपिशब्द आपाततो विरोधं द्योतयति । विलीयते विलयनं नामान्तःकरणस्य तद्वृत्तेर्वा अभानम् । अनेन ध्येयमात्रविषयकज्ञानं दर्शितम् । यद्वा—विलीयापि विलीयते द्रवीभूयापि द्रवीभवति अत्यन्तं द्रुता भवतीत्यर्थः । भक्तानां चित्तद्रुतिः प्रसिद्धा पुत्रिकापक्षे तु चन्द्रकरस्पर्शेन किञ्चिदार्द्रीभूय पुनस्सर्वावयवावच्छेदेनार्द्रीभवतीत्यर्थः । अत्र संविदादौ विरहतप्तनायिकात्वादिप्रतीत्या शृङ्गारविभावत्वादिप्राप्तिः, तदाह—**शृङ्गारभङ्गया निरूपणमिति** । पूर्वार्धं व्याचष्टे—**विनेयानित्यादि** । एवकारस्य नञा सम्बन्ध इति दर्शयति—**नैवेति** । **पक्षान्तरमिति** । अविरोधी विरोधी वेत्यादिकारिकाभिरुक्तेभ्यः पक्षेभ्योऽन्य इत्यर्थः, न त्वत्रैव पक्षद्वयद्योतक इति भावः । **एतद्व्याख्यानमिति** । स न केवलमित्यादिव्याख्यानमित्यर्थः । अविरोधलक्षणयोग इत्यत्राविरोधलक्षणपदं व्याचष्टे—**परिपोषे**त्यादि। 'विनेयानि'त्यादि 'तदर्थमपि वे'त्यन्तं 'विनेयानि'त्यादिवृत्तेर्विवरणं, 'स क्रियमाण' इत्यस्य विवरणं 'विरुद्धसमावेश' इति । फलितमाह—**न केवलं पूर्वोक्तैः प्रकारैरिति** । विरुद्धसमावेशो न दुष्यतीति शेषः । किन्त्वेवं क्रियमाणोऽपि न दुष्यतीति भावः । विनेयानुन्मुखीकर्तुं या काव्यशोभेत्युक्तमुपपादनति—**न त्वि**त्यादि । नास्ते इत्यन्वयः । न भवतीत्यर्थः । **व्यवधानेति** । रसान्तरेण यद्व्यवधानमव्यवधानं वा तेनापीत्यर्थः । **क्वचिल्लभ्यत** इति । काव्यशोभा नेत्यनयोरनुषङ्गः । **यथे**त्यादि । तथेति पूर्वेण सम्बन्धः । अन्यव्याख्यानञ्च विनेयानुन्मुखीकर्तुं वा काव्यशोभार्थं वेति विकल्पपरं बोध्यम् । वृत्तौ 'विनेयानि'त्याद्युक्तस्यैव विवरणम्—

विनेयजनहितार्थमेव मुनिभिरवतारिता ।

किं च शृङ्गारस्य सकलजनमनोहराभिरामत्वात्तदङ्गसमावेशः काव्ये शोभातिशयं पुष्यतीत्यनेनापि प्रकारेण विरोधिनि रसे शृङ्गाराङ्गसमावेशो न विरोधी । ततश्च

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥

इत्यादिषु नास्ति रसविरोधदोषः ।

लोचनम्

**मुनिभिरिति**—भरतादिभिरित्यर्थः । एतच्च प्रभुमित्रसम्मितेभ्यः शास्त्रेतिहासेभ्यः प्रीतिपूर्वकं जायासम्मितत्वेन नाट्यकाव्यगतं व्युत्पत्तिकारित्वं पूर्वमेव निरूपितमस्माभिरिति न पुनरुक्तभयादिह लिखितम् ।

ननु शृङ्गाराङ्गताभङ्ग्या यद्विभावादिनिरूपणमेतावतैव किं विनेयोन्मुखीकारः । न; अस्ति प्रकारान्तरं, तदाह—**किं चेति** । **शोभातिशयमिति** । अलङ्कारविशेषमुपमाप्रभृतिं पुष्यति सुन्दरीकरोतीत्यर्थः । यथोक्तम्—'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः' इति । **मत्ताङ्गनेति** । अत्र हि शान्तविभावे सर्वस्यानित्यत्वे वर्ण्यमाने न कस्यचिद्विभावस्य शृङ्गारभङ्ग्या निबन्धः कृतः, किं तु सत्यमिति

बालप्रिया

'शृङ्गारे'त्यादि । तत्र सुखमित्येतद्व्याचष्टे—**रञ्जनेति** । **एतच्चेत्यादि** । **प्रभुमित्रसम्मितेभ्यः शास्त्रेतिहासेभ्यः** तान्यपेक्ष्य । नाट्यकाव्यगतमेतद्व्युत्पत्तिकारित्वं जायासम्मितत्वेन प्रीतिपूर्वकमिति पूर्वमेवास्माभिर्निरूपितमिति सम्बन्धः । **इतीति** हेतौ ।

किञ्चेत्यादिकमवतारयति—**नन्वित्यादि** । **शृङ्गाराङ्गतेति** । शृङ्गारविभावानुभावतेत्यर्थः । समाधत्ते—**नेति** । **तदिति** । प्रकारान्तरमित्यर्थः । शोभाया अतिशयो येनेति व्युत्पत्तिमभिप्रेत्य प्रकृतानुगुणं व्याचष्टे—**अलङ्कारेत्यादि** । 'सत्य'मित्यादि । सत्यमित्यर्धाङ्गीकारे । 'रामाः' रमण्यः कामा इति च पाठः 'विभूतयः' ऐश्वर्याणि । 'मत्ते'ति । मत्ता यौवनादिमदयुक्ता या अङ्गना प्रशस्ताङ्गा नारी तस्याः अपाङ्गभङ्गः कटाक्षः स इव लोलमस्थिरम् । 'ही'ति प्रसिद्धौ । रामादीनां मनोरमत्वेऽपि सत्येव जाविते जनैः स्वोपभोगायोपादेयास्ताः जीवितं चास्थिरमिति किङ्कृतं तासामुपादेयत्वमतो रम्यत्वेऽपि तास्सर्वा निष्फला एवेति भावः । उक्तमर्थं लोचने विवृणोति—**अत्रेत्यादि** । **सर्वस्यानित्यत्व** इति । समस्तानित्यत्वे इति च पाठः । सर्वजीवितस्यास्थिरत्वे इत्यर्थः । न कृत इति सम्बन्धः । **कस्यचिद्विभावस्य** शान्तादिविभावस्य । **शृङ्गारभङ्ग्या** शृङ्गारविभावत्वयोजनेन । **सत्यमितीति** ।

**विज्ञायेत्थं रसादीनामविरोधविरोधयोः ।**
**विषयं सुकविः काव्यं कुर्वन्मुह्यति न क्वचित् ॥ ३१ ॥**

इत्थमनेनानन्तरोक्तेन प्रकारेण रसादीनां रसभावतदाभासानां परस्परं विरोधस्याविरोधस्य च विषयं विज्ञाय सुकविः काव्यविषये प्रतिभातिशययुक्तः काव्यं कुर्वन्न क्वचिन्मुह्यति ।

एवं रसादिषु विरोधाविरोधनिरूपणस्योपयोगित्वं प्रतिपाद्य व्यञ्जकवाच्यवाचकनिरूपणस्यापि तद्विषयस्य तत्प्रतिपाद्यते—

**वाच्यानां वाचकानां च यदौचित्येन योजनम् ।**
**रसादिविषयेणैतत्कर्म मुख्यं महाकवेः ॥ ३२ ॥**

लोचनम्

परहृदयानुप्रवेशेनोक्तम्; न खल्वलीकवैराग्यकौतुकरुचिं प्रकटयामः, अपि तु यस्य कृते सर्वमभ्यर्थ्यते तदेवेदं चलमिति; तत्र मत्ताङ्गनापाङ्गभङ्गस्य शृङ्गारं प्रति सम्भाव्यमानविभावानुभावत्वेनाङ्गस्य लोलतायामुपमानतोक्तेति प्रियतमाकटाक्षो हि सर्वस्याभिलषणीय इति च तत्प्रीत्या प्रवृत्तिमान् गुडजिह्विकया प्रसक्तानुप्रसक्तवस्तुतत्त्वसंवेदनेन वैराग्ये पर्यवस्यति विनेयः ॥ ३० ॥

तदेतदुपसंहरन्नस्योक्तस्य प्रकरणस्य फलमाह—**विज्ञायेत्थमिति** ॥ ३१ ॥

रसादिषु रसादिविषये व्यञ्जकानि यानि वाच्यानि विभावादीनि वाचकानि च सुप्तिङादीनि तेषां यन्निरूपणं तस्येति । **तद्विषयस्येति** । रसादिविषयस्य । **तदिति**

बालप्रिया

इत्यनेनेत्यर्थः । **परेति** । पराभिमतार्थाङ्गीकारेणेत्यर्थः । **अलीकेति** । अलीका असत्या या वैराग्यकौतुके रुचिस्तामित्यर्थः । **यस्येति** । जीवितस्येत्यर्थः । **तत्र** जीविते । तत्र लोलतायामुपमानतेति सम्बन्धः । तन्निरूपितं लोलतानिमित्तकोपमाप्रतियोगित्वमित्यर्थः । **सम्भाव्येति** । सम्भाव्यमानेन नायकविभावत्वेन नायिकानुभावत्वेन च हेतुना शृङ्गाराङ्गस्येत्यर्थः । तदुक्तेः फलमाह—**प्रियेत्यादि** । **तत्प्रतीत्येति** कटाक्षस्योपमानत्वप्रतीत्येत्यर्थः । तत्प्रीत्या इति च पाठः । **विनेय** इति । व्युत्पाद्यो राजकुमारादिरित्यर्थः । तथा च यया कयाऽपि विधया शृङ्गाराङ्गयोजनं काव्यशोभाकरमिति भावः ॥ ३० ॥

'विज्ञाये'त्यादिकारिकामवतारयति—**तदेतदित्यादि** ॥ ३१ ॥

**रसादिष्वि**त्यस्य विवरणम्—**रसादिविषये** इति । 'व्यञ्जकवाच्ये'त्यादिग्रन्थं

वाच्यानामितिवृत्तविशेषाणां वाचकानां च तद्विषयाणां रसादिविषयेणौचित्येन यद्योजनमेतन्महाकवेर्मुख्यं कर्म । अयमेव हि महाकवेर्मुख्यो व्यापारो यद्रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम् ।

एतच्च रसादितात्पर्येण काव्यनिबन्धनं भरतादावपि सुप्रसिद्धमेवेति प्रतिपादयितुमाह—

**रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।**
**औचित्यवान्यस्ता एता वृत्तयो द्विविधाः स्थिताः ॥३३॥**

व्यवहारो हि वृत्तिरित्युच्यते । तत्र रसानुगुण औचित्यवान्वाच्याश्रयो यो व्यवहारस्ता एताः कैशिक्याद्या वृत्तयः । वाचकाश्रयाश्चोपनागरिकाद्याः । वृत्तयो हि रसादितात्पर्येण संनिवेशिताः कामपि नाट्यस्य काव्यस्य च च्छायामावहन्ति । रसादयो हि द्वयोरपि तयोर्जीवभूताः । इतिवृत्तादि तु शरीरभूतमेव ।

लोचनम्

उपयोगित्वम् । मुख्यमिति । 'आलोकार्थी' इत्यत्र यदुक्तं तदेवोपसंहृतम् । महाकवेरिति सिद्धवत्फलनिरूपणम् । एवं हि महाकवित्वं नान्यथेत्यर्थः । इतिवृत्तविशेषाणामिति । इतिवृत्तं हि प्रबन्धवाच्यं तस्य विशेषाः प्रागुक्ताः—'विभावभावानुभावसञ्चार्यौचित्यचारुणः । विधिः कथाशरीरस्य' इत्यादिना । काव्यार्थीकृत्येति । अन्यथा लौकिकशास्त्रीयवाक्यार्थेभ्यः कः काव्यार्थस्य विशेषः । एतच्च निर्णीतमाद्योद्द्योते—'काव्यस्यात्मा स एवार्थः' इत्यत्रान्तरे ॥ ३२ ॥

एतच्चेति । यदस्माभिरुक्तमित्यर्थः । भरतादावित्यादिग्रहणादलङ्कारशास्त्रेषु परुषाद्या वृत्तय इत्युक्तं भवति । द्वयोरपि तयोरिति । वृत्तिलक्षणयोर्व्यवहारयोरित्यर्थः । जीवभूता इति । 'वृत्तयः काव्यमातृकाः' इति ब्रुवाणेन मुनिना रसोचितेतिवृत्तसमाश्रयणोपदेशेन रसस्यैव जीवितत्वमुक्तम् । भामहादिभिश्च—

स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटुभेषजम् ॥

बालप्रिया

व्याचष्टे—व्यञ्जकानीत्यादि । आलोकार्थीत्यादि । आलोकार्थीत्यादिकारिकया प्रथमोद्योते यदुक्तं तदेवानया कारिकया उपसंहृतमित्यर्थः ॥ ३२ ॥

अत्र केचिदाहुः—'गुणगुणिव्यवहारो रसादीनामितिवृत्तादिभिः सह युक्तः, न तु जीवशरीरव्यवहारः। रसादिमयं हि वाच्यं प्रतिभासते न तु रसादिभिः पृथग्भूतम्' इति। अत्रोच्यते—यदि रसादिमयमेव वाच्यं यथा गौरत्वमयं शरीरम्। एवं सति यथा शरीरे प्रतिभासमाने नियमेनैव गौरत्वं प्रतिभासते सर्वस्य तथा वाच्येन सहैव रसादयोऽपि सहृदयस्यासहृदयस्य च प्रतिभासेरन्। न चैवम्; तथा चैतत्प्रतिपादितमेव प्रथमोद्द्योते।

लोचनम्

इत्यादिना रसोपयोगजीवितः शब्दवृत्तिलक्षणो व्यवहार उक्तः। **शरीरभूत**मिति। 'इतिवृत्तं हि नाट्यस्य शरीरं' इति मुनिः[1]। नाट्यं च रस एवेत्युक्तं प्राक्।

**गुणगुणिव्यवहार** इति। अत्यन्तसम्मिश्रतया प्रतिभासनाद्धर्मधर्मिव्यवहारो युक्तः। **न त्वि**ति। क्रमस्यासंवेदनादिति भावः। **प्रथमे**ति। 'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते' इत्यादिना प्रतिपादितमदः।

बालप्रिया

कारिकायामर्थशब्दयोः रसाद्यनुगुणत्वेन औचित्यवान् व्यवहारो यः, एता वृत्तयः एताः द्विविधाः स्थिताश्चेत्यन्वयः। लोचने—**रसोपयोगजीवित** इति। रसोपयोग एव जीवितं यस्य स इत्यर्थः। शेषं सर्वं स्पष्टम्। 'गुणगुणिव्यवहार' इत्यस्य व्याख्यानम्—**धर्मधर्मिव्यवहार** इति। अत्र हेतुं दर्शयति—**अत्यन्ते**त्यादि। गुणगुणिनोरिव रसादिवाच्ययोरिति शेषः। अत्र गुणस्थानीयो रसादिः गुणिस्थानीय इतिवृत्तादिरूपो वाच्यार्थः। न तु पृथग्भूतमित्यत्र हेतुमाह—**क्रमस्यासंवेदना**दिति। वाच्यप्रतीतेः रसादिप्रतीतेश्चेति शेषः। वृत्तौ—'यदी'त्याद्यनुवादः। अत्र दृष्टान्तमाह—'यथे'त्यादि। 'गौरत्वमयं शरीर'मिति गुणगुणिनोस्तादात्म्येन व्यवहारः। 'एवं सती'ति। वाच्यस्य रसादिमयत्वे सतीत्यर्थः। प्रतिभासेरन्नित्यनेनास्य सम्बन्धः। दृष्टान्तप्रदर्शनपूर्वकमाह—'यथे'त्यादि। 'नियमेनैव भासत' इति। द्रव्यप्रत्यक्षस्य तद्गतरूपविषयकत्वनियमादिति भावः। 'तथे'ति। नियमेनैवेत्यस्यानुषङ्गः। 'प्रतिभासेरन्नि'ति। यदि रसादिमयो वाच्यार्थस्तर्हि स नियमतो रसादिभिः सहैव सर्वैः प्रतीयमानस्स्यादित्यर्थः। अत्रेष्टापत्तिं परिहरति—'न चैव'मिति। 'स्यान्मतमि'ति शङ्काद्योतकम्। जात्यत्वमिवेति योजना। जात्यत्वमुत्कृष्टरत्नगतो

1. भरतना.,

स्यान्मतम्; रत्नानामिव जात्यत्वं प्रतिपत्तृविशेषतः संवेद्यं वाच्यानां रसादिरूपत्वमिति । नैवम्; यतो यथा जात्यत्वेन प्रतिभासमाने रत्ने रत्नस्वरूपानतिरिक्तत्वमेव तस्य लक्ष्यते तथा रसादीनामपि विभावानुभावादिरूपवाच्याव्यतिरिक्तत्वमेव लक्ष्येत । न चैवम्;

लोचनम्

ननु यद्यस्य धर्मरूपं तत्तत्प्रतिभाने सर्वस्य नियमेन भातीत्यनैकान्तिकमेतत् । माणिक्यधर्मो हि जात्यत्वलक्षणो विशेषो न तत्प्रतिभासेऽपि सर्वस्य नियमेन भातीत्याशङ्कते—**स्यादि**ति । एतत्परिहरति—**नैवमि**ति । एतदुक्तं भवति—अत्यन्तोन्मग्नस्वभावत्वे सति तद्धर्मत्वादिति विशेषणमस्माभिः कृतम् । उन्मग्नरूपता च न रूपवज्जात्यत्वस्य, अत्यन्तलीनस्वभावत्वात् । रसादीनां चोन्मग्नतास्त्येवेत्येवं केचिदेतं ग्रन्थमनैषुः । अस्मद्गुरवस्त्वाहुः—अत्रोच्यत इत्यनेनेदमुच्यते—यदि रसादयो

बालप्रिया

जातिविशेषः । यथा मालत्यां "जात्येन चन्द्रमणिनेव महीधरस्ये"ति । 'प्रतिपत्तृविशेषतः' ज्ञातृविशेषेण कर्त्रा ।

स्यादित्यादिग्रन्थमवतारयति लोचने—**नन्वि**त्यादि । **यदि**त्यादि । यत् गौरत्वादि । **यस्य** शरीरादेः । तत् गौरत्वादि । **तत्प्रतिभाने** शरीरादिप्रतिभासे इत्येतदिति सम्बन्धः इति नियम इत्यर्थः । यत्र यत्र यद्धर्मत्वं तत्र तत्र प्रत्यक्षीयतद्विषयिताव्यापकविषयिताकत्वमिति व्याप्तिरिति यावत् । **अनैकान्तिक**मिति । व्यभिचारीत्यर्थः । कुत्र व्यभिचार इत्यत आह—**माणिक्ये**त्यादि । **तत्प्रतिभासे** माणिक्यभाने । **न भातीति** । तथा च माणिक्यधर्मे जात्यत्वे व्यभिचार इति भावः । वृत्तौ—'यथे'त्यादि । 'जात्यत्वेन' जात्यत्वप्रकारेण । 'भासमाने' प्रतिपत्तृविशेषगतसाक्षात्कारविषये । रत्नस्वरूपानतिरिक्तत्वं रत्नादभिन्नत्वम् । 'तस्य' जात्यत्वस्य । 'लक्ष्यते' ज्ञायते । 'विभावे'ति । विभावानुभावादिरूपं यद्वाच्यं तस्मादव्यतिरिक्तत्वमित्यर्थः । 'न चैवमि'ति । एवं न लक्ष्यते इत्यर्थः । कुत इत्यत्राह—'न ही'त्यादि । न ह्यवगम इति सम्बन्धः । यत इत्यादि न चैवमित्यन्तस्य परिहारग्रन्थस्य भावमाह लोचने—**एतदुक्तमि**त्यादि । **अत्यन्तोन्मग्नस्वभावत्व** इति । स्वाश्रयाद्भिन्नत्वेन प्रतीयमानत्व इत्यर्थः । सतीति । इत्येतदिति शेषः । **तद्धर्मत्वा**दित्यादि । तद्धर्मत्वादित्यस्य विशेषणमित्यर्थः । कृतमिति । अभिमतमित्यर्थः । यत्र यत्र तद्धर्मत्वमित्यत्र अत्यन्तोन्मग्नस्वभावत्वे सतीत्यपि निविष्टमस्तीत्यर्थः । इत्थं च जात्यत्वेन व्यभिचार इत्याह—**उन्मग्ने**ति । उन्मग्नरूपता यथारूपस्य गौरत्वादेरस्ति तथा जात्यत्वस्य नेत्यर्थः । **अत्यन्तलीनस्वभावत्वात्** अनुन्मग्नस्वभावत्वात् । स्वाश्रयाद्भिन्नत्वेनाप्रतीयमानत्वादिति यावत् । **एतं ग्रन्थमि**ति । यत इत्यादि न चै-

न हि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः। अतएव च विभावादिप्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेन व्यवस्थानात्क्रमोऽवश्यम्भावी। स तु लाघवान्न प्रकाश्यते 'इत्यलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादयः' इत्युक्तम्।

## लोचनम्

वाच्यानां धर्मास्तथासति द्वौ पक्षौ रूपादिसदृशा वा स्युर्मणिक्यगतजात्यत्वसदृशा वा। न तावत्प्रथमः पक्षः, सर्वान् प्रति तथानवभासनात्। नापि द्वितीयः, जात्यत्ववदनतिरिक्तत्वेनाप्रकाशनात्। एष च हेतुराद्येऽपि पक्षे सङ्गच्छत एव। तदाह—स्यान्मतमित्यादिना न चैवमित्यन्तेन। एतदेव समर्थयति—न हीति। अत एव चेति। यतो न वाच्यधर्मत्वेन रसादीनां प्रतीतिः, यतश्च तत्प्रतीतौ वाच्यप्रतीतिः सर्वथानुपयोगिनी तत एव हेतोः क्रमेणावश्यं भाव्यं, सहभूतयोरुपकारायोगात्। स तु सहृदयभावनाभ्यासान्न लक्ष्यते अन्यथा तु लक्ष्येतापीत्युक्तं प्राक्। यस्यापि प्रतीतिविशेषात्मैव रस इत्युक्तिः, प्राक्तस्यापि व्यपदेशिवत्त्वाद्रसादीनां प्रतीतिरित्येवमन्यत्र।

ननु भवन्तु वाच्यादतिरिक्ता रसादयस्तत्रापि क्रमो न लक्ष्यत इति तावत्त्वयैवोक्तम्। तत्कल्पने च प्रमाणं नास्ति। अन्वयव्यतिरेकाभ्यामर्थप्रतीतिमन्तरेण रसप्रतीत्युदयस्य

## बालप्रिया

वमित्यन्तं ग्रन्थमित्यर्थः। स्वमतमाह—अस्मादित्यादि। तथाऽनवभासादित्यन्तेन 'प्रतिभासेरन्न चैवमि'त्यन्तग्रन्थो विवृतः। अप्रकाशनादिति। अप्रकाशादित्यर्थः। आद्येऽपि पक्ष इति। रूपादिसदृशा वा इति पक्षेऽपीत्यर्थः। रूपादीनामनतिरिक्तत्वेन प्रकाशनादिति भावः। इत्यन्तेनेति। इतीति शेषः। आहुरिति पूर्वेण सम्बन्धः। वृत्तावत एवेत्येको हेतुः व्यवस्थानादित्यपरश्चेत्याशयेन व्याचष्टे–यतो नेत्यादि। तत्प्रतीतौ रसप्रतीतौ। सर्वथेति। नेत्यस्यानुषङ्गः। नानुपयोगिनी उपयोगिन्येव। क्रमोऽवश्यंभावीत्यस्य विवरणम्—क्रमेणावश्यं भाव्यमिति। कुत इत्यत्राह—सहेति। उपकारायोगादिति। उपकार्योपकारकभावायोगादित्यर्थः। यस्यापीति। उक्तिः प्रागित्यनेन सम्बन्धः। तस्यापीति। मते इति शेषः। व्यपदेशिवत्त्वादिति। राहोश्शिर इत्यादिवद्भेदारोपादित्यर्थः। इतीति। इति व्यवहार इत्यर्थः।

'ननु शब्द एवे'त्यादिग्रन्थमवतारयति—नन्वित्यादि। इत्युक्तमिति। तदुक्त्या क्रमोऽस्तीत्यावेदितमिति भावः। तत्कल्पन इति। क्रमकल्पन इत्यर्थः। रसप्रतीत्युदयस्येत्यस्य दर्शनादित्यनेन सम्बन्धः। कृतस्येत्युदयस्येत्यस्य विशेषणम्। फलितमाह–ततश्चेत्यादि। सहैव युगपदेव। वचनेत्यादि। वचनव्यापारो वाच्यार्थप्रतिपा-

ननु शब्द एव प्रकरणाद्यवच्छिन्नो वाच्यव्यङ्ग्ययोः सममेव प्रतीतिमुपजनयतीति किं तत्र क्रमकल्पनया । न हि शब्दस्य वाच्यप्रतीतिपरामर्श एव व्यञ्जकत्वे निबन्धनम् । तथा हि गीतादिशब्देभ्योऽपि रसाभिव्यक्तिरस्ति । न च तेषामन्तरा वाच्यपरामर्शः । अत्रापि ब्रूमः—प्रकरणाद्यवच्छेदेन व्यञ्जकत्वं शब्दानामित्यनुमतमेवैतदस्माकम् । किं तु तद्व्यञ्जकत्वं तेषां कदाचित्स्वरूपविशेषनिबन्धनं कदाचिद्वाचकशक्तिनिबन्धनम् । तत्र येषां वाचकशक्तिनिबन्धनं तेषां यदि वाच्यप्रतीतिमन्तरेणैव स्वरूपप्रतीत्या निष्पन्नं तद्भवेन्न तर्हि वाचकशक्तिनिबन्धनम् । अथ

लोचनम्

पदविरहितस्वरालापगीतादौ शब्दमात्रोपयोगकृतस्य दर्शनात् । ततश्चैकयैव सामग्र्या सहैव वाच्यं व्यङ्ग्याभिमतं च रसादि भातीति वचनव्यञ्जनव्यापारद्वयेन न किञ्चिदिति तदाह—**नन्विति** । यत्रापि गीतशब्दानामर्थोऽस्ति तत्रापि तत्प्रतीतिरनुपयोगिनी ग्रामरागानुसारेणापहस्तितवाच्यानुसारतया रसोदयदर्शनात् । न चापि सा सर्वत्र भवन्ती दृश्यते, तदेतदाह—**न चेति** । तेषामिति गीतादिशब्दानाम् । आदिशब्देन वाद्यविलपितशब्दादयो निर्दिष्टाः । **अनुमतमिति** । 'यत्रार्थः शब्दो वा' इति ह्यवोचामेति भावः । **न तर्हीति** । ततश्च गीतवदेवार्थावगमं विनैव रसावभासः स्यात्काव्यशब्देभ्यः, न चैवमिति वाचकशक्तिरपि तत्रापेक्षणीया ; सा च वाच्यनिष्ठैवेति प्राग्वाच्ये प्रतिपत्तिरित्युपगन्तव्यम् । तदाह—**अथेति** । तदिति वाचकशक्तिः ।

बालप्रिया

दनम् । **तदाहेति** । उक्तामाशङ्कां 'नन्वि'त्यादिना 'परामर्श' इत्यन्तेन प्रदर्शयतीत्यर्थः । 'न चे'त्यादिग्रन्थमवतारयति—**यत्रापी**त्यादि । 'अनुपयोगिनी'त्यत्र हेतुमाह—**ग्रामे**त्यादि । **अपेति** । अपहस्तितः अनादृतः वाच्यानुसारः वाच्यार्थप्रतीत्यनुसरणं येन रसोदयेन तस्य भावस्तत्ता तया । **सेति** । वाच्यप्रतीतिरित्यर्थः । 'गीतादीना'मित्यत्रादिपदार्थमाह—**आदी**त्यादि । **विलपितं** विलापः "विलापोऽनर्थकं वच" इत्यमरः । वृत्तौ 'तद्व्यञ्जकत्वमि'ति । प्रकरणादिसहकृतं व्यञ्जकत्वमित्यर्थः । 'तेषां' शब्दानाम् । 'स्वरूपविशेषे'ति । शब्दस्वरूपविशेषेत्यर्थः । 'वाचके'ति । वाचकशक्तिरभिधा सैव निबन्धनं प्रयोजकं यस्य तत् । व्यक्तेरभिधेयार्थप्रतीतिपूर्वकत्वादिति भावः । 'येषामि'ति । तद्व्यञ्जकत्वमित्यनुषङ्गः । 'तदि'ति व्यञ्जकत्वमित्यर्थः । 'न तर्हीं'ति । तदित्यस्यानुषङ्गः । लोचने न तर्हीत्यादेर्भावं दर्शयन्नुत्तरग्रन्थमवतारयति—**ततश्चे**त्यादि । ततश्च व्यञ्जकत्वस्य वाचकशक्तिनिबन्धनत्वाभावे च । **गीतवदिति** । गीतेन तुल्यमित्यर्थः । **न चैवं** एवं न भवति च । इतीति हेतौ । **वाच्यनिष्ठैव** वाच्यविषयिकैव । **प्रागि**त्यादि ।

तन्निबन्धनं तन्नियमेनैव वाच्यवाचकभावप्रतीत्युत्तरकालत्वं व्यङ्ग्यप्रतीतेः प्राप्तमेव ।

स तु क्रमो यदि लाघवान्न लक्ष्यते तत्किं क्रियते । यदि च वाच्यप्रतीतिमन्तरेणैव प्रकरणाद्यवच्छिन्नशब्दमात्रसाध्या रसादिप्रतीतिः स्यात्तदनवधारितप्रकरणानां वाच्यवाचकभावे च स्वयमव्युत्पन्नानां प्रतिपत्तॄणां

### लोचनम्

**वाच्यवाचकभावेति** । सैव वाचकशक्तिरित्युच्यते ।

एतदुक्तं भवति—मा भूद्वाच्यं रसादिव्यञ्जकम् ; अस्तु शब्दादेव तत्प्रतीतिस्तथापि तेन स्ववाचकशक्तिस्तस्यां कर्तव्यायां सहकारितयावश्यापेक्षणीयेत्यायातं वाच्यप्रतीतेः पूर्वभावित्वमिति । ननु गीतशब्दवदेव वाचकशक्तिरत्राप्यनुपयोगिनी, यत्तु क्वचिच्छ्रुतेऽपि काव्ये रसप्रतीतिर्न भवति तत्रोचितः प्रकरणावगमादिः सहकारी नास्तीत्याशङ्क्याह—**यदि चेति** । प्रकरणावगमो हि क उच्यते ? किं वाक्यान्तरसहायत्वम् ? अथ वाक्यान्तराणां सम्बन्धिवाच्यम् । उभयपरिज्ञानेऽपि न भवति प्रकृतवाक्यार्थो-

### बालप्रिया

वाच्यार्थप्रतीतिः प्राग्भवतीत्यभ्युपगन्तव्यमित्यर्थः । वृत्तौ 'अथे'ति यदीत्यर्थे । 'तन्निबन्धन'मिति । सा निबन्धनं यस्य तदित्यर्थः । व्यञ्जकत्वमित्यनुषङ्गः । 'तदि'ति । तर्हीत्यर्थः । 'स तु क्रम' इति । वाच्यप्रतीत्युत्तरकालत्वरूपः क्रमस्त्वित्यर्थः । व्यङ्ग्यप्रतीतेरित्यनुषङ्गः । तन्निबन्धनमित्यत्र तत्पदं व्याचष्टे लोचने—**वाचकशक्तिरिति** । **सैवे**ति । स एवेति च पाठः । वाच्यवाचकभाव एवेत्यर्थः ।

भावार्थमाह—**एतदि**त्यादि । **रसादिव्यञ्जक**मिति । रसादिव्यक्तिजनकमित्यर्थः । **तत्प्रतीति**रिति । रसादिप्रतीतिरित्यर्थः । तेनेति । शब्देनेत्यर्थः । **तस्यां कर्तव्याया**मिति । रसादिप्रतीतावुत्पादयितव्यायामित्यर्थः । इतीति हेतौ । **नन्वि**त्यादि । **गीतशब्दव**दिति । गीतशब्दे इवेत्यर्थः । **अत्रापि** काव्यशब्देऽपि । नन्वेवं यत्र शब्दः श्रुतोऽर्थो नाधिगतश्च तत्र रसप्रतीतिः स्यादित्यत आह—यत्त्वित्यादि । यत्तु यत्र । **इत्याशङ्क्याहे**ति । इति शङ्कापूर्वकं समाधानं भवेदित्यन्तग्रन्थेनाहेत्यर्थः । वृत्तौ शब्दमात्रसाध्येत्यत्रत्यमात्रपदार्थविवरणम्—'वाच्यप्रतीतिमन्तरेणैवे'ति । 'तदवधारिते'ति । तत्तर्हि । अवधारितं ज्ञातं प्रकरणं यैस्तेषाम् । 'वाच्ये'त्यादि । तत्तद्वाचकशब्दस्य तत्तद्वाच्यार्थे स्वयमजानतामित्यर्थः । 'असौ' रसादिप्रतीतिः । लोचने विवृणोति—**प्रकरणे**त्यादि । **प्रकरणावगमः** अवगम्यः प्रकरणपदार्थः । **वाक्ये**ति । वाक्यान्तरं सहायः सहकारि यस्य तत्त्वं सहकारि वा-

**काव्यमात्रश्रवणादेवासौ भवेत् । सहभावे च वाच्यप्रतीतेरनुपयोगः, उपयोगे वा न सहभावः । येषामपि स्वरूपविशेषप्रतीतिनिमित्तं व्यञ्जकत्वं यथा गीतादिशब्दानां तेषामपि स्वरूपप्रतीतेर्व्यङ्ग्यप्रतीतेश्च नियमभावी**

**लोचनम्**

वेदने रसोदयः । **स्वयमिति** । प्रकरणमात्रमेव परेण केनचिद्येषां व्याख्यातमिति भावः । न चान्वयव्यतिरेकवतीं वाच्यप्रतीतिमपह्नुत्यादृष्टसद्भावाभावौ शरणत्वेनाश्रितौ मात्सर्यादधिकं किञ्चित्पुष्णीत इत्यभिप्रायः ।

नन्वस्तु वाच्यप्रतीतेरुपयोगः क्रमाश्रयेण किं प्रयोजनम् , सहभावमात्रमेव ह्युपयोग एकसामग्र्यधीनतालक्षणमित्याशङ्क्याह—**सहेति** । एवं ह्युपयोग इति अनुपकारके सञ्ज्ञाकरणमात्रं वस्तुशून्यं स्यादिति भावः । उपकारिणो हि पूर्वभावितेति त्वयाप्यङ्गीकृतमित्याह—**येषामिति** । तद्दृष्टान्तेनैव वयं वाच्यप्रतीतेरपि पूर्वभावितां सम-

**बालप्रिया**

न्तरमित्यर्थः । प्रकृतवाक्यस्येति शेषः । अथेति प्रश्ने । **वाक्यान्तराणामित्यादि** । वाक्यान्तरतद्वाच्यमित्यर्थः । **उभयेति** । वाक्यान्तरतद्वाच्योभयेत्यर्थः । **प्रकृतवाक्यार्थावेदन** इति । प्रकृतवाक्यघटकतत्तत्पदार्थानवगम इत्यर्थः । वाच्यवाचकभावाव्युत्पत्तिमुपपादयति—**प्रकरणमात्रमित्यादि** । मात्रशब्देन वाच्यस्य व्यवच्छेदः । **येषामिति** । केषाञ्चित् प्रतिपत्तॄणामित्यर्थः । **व्याख्यातमिति** । बोधितमित्यर्थः । ननु वाक्येन रसादिप्रतीतौ कर्तव्यायामदृष्टविशेषोऽपि सहकारी तदभावादेव वाच्यप्रतीतिविरहकाले रसादेरप्रतीतिरिति शङ्कां परिहरति—**न चेत्यादि** । न च पुष्णीत इति सम्बन्धः । **अन्वयेति** । वाच्यप्रतीतिसत्त्वे रसादिप्रतीतिस्तदभावे तदभाव इत्यन्वयव्यतिरेकशालिनीमित्यर्थः । **शरणत्वेनेति** । प्रयोजकत्वेनेत्यर्थः । रसप्रतीतितदभावयोरिति शेषः ।

**नन्वित्यादि** । **उपयोग** इति । रसादिप्रतीतिं प्रतीति शेषः । **क्रमाश्रयेणेति** । वाच्यप्रतीतिरसादिप्रतीत्योः पौर्वापर्यरूपक्रमाश्रयेणेत्यर्थः । तर्हि उपयोगः क इत्यत्राह—**सहेति** । तत् कीदृशमित्याङ्क्याह—**एकेति** । वाच्यप्रतीतेः रसादिप्रत्ययैकसामग्र्यधीनत्वरूपो रसादिसहभाव इति भावः । **उपयोगः** उपयोगपदार्थः । **आशङ्क्येति** । आपाततश्शङ्कित्वेत्यर्थः । सहभावे चेत्यादिग्रन्थस्य भावमाह—**एवं हीत्यादि** । अनुपकारके उपयोग इति सञ्ज्ञाकरणमात्रमिति सम्बन्धः । मात्रपदार्थं विवृणोति—**वस्त्वित्यादि** । **वस्तु** उपकारकत्वरूपस्तदर्थः । **पूर्वभावितेति** । पूर्वकालवृत्तित्वमित्यर्थः । क्रम इत्यन्तग्रन्थस्य भावमाह—**त्वद्दृष्टान्तेनेत्यादि** । **त्वद्दृष्टान्तेन** गीतादिना तत्त्वित्यादिग्रन्थमवतारयति—**नन्वित्यादि** । शब्दस्येत्यस्य क्रियेत्यनेन सम्बन्धः ।

क्रमः । तत्तु शब्दस्य क्रियापौर्वापर्यमनन्यसाध्यतत्फलघटनास्वाशुभाविनीषु वाच्येनाविरोधिन्यभिधेयान्तरविलक्षणे रसादौ न प्रतीयते ।

लोचनम्

र्थयिष्याम इति भावः । ननु संश्चेत्क्रमः किं न लक्ष्यत इत्याशङ्क्याह—**तत्त्विति** । क्रियापौर्वापर्यमित्यनेन क्रमस्य स्वरूपमाह—**क्रियेते** इति । क्रिये वाच्यव्यङ्ग्यप्रतीती यदि वाभिधाव्यापारो व्यञ्जनापरपर्यायो ध्वननव्यापारश्चेति क्रिये तयोः पौर्वापर्यं न प्रतीयते । क्वेत्याह—**रसादौ** विषये । कीदृशि ? अभिधेयान्तरात्तदभिधेयविशेषाद्विलक्षणे सर्वथैवानभिधेये अनेन भवितव्यं तावत्क्रमेणेत्युक्तम् । तथा वाच्येनाविरोधिनि, विरोधिनि तु लक्ष्यत एवेत्यर्थः । कुतो न लक्ष्यते इति निमित्तसप्तमीनिर्दिष्टं हेत्वन्तरगर्भं हेतुमाह—**आशुभाविनीष्विति** । अनन्यसाध्यतत्फलघटनासु घटनाः पूर्वं माधुर्यादिलक्षणाः प्रतिपादिता गुणनिरूपणावसरे ताश्च तत्फलाः रसादिप्रतीतिः फलं यासाम्, तथा अनन्यत्तदेव साध्यं यासाम्, न ह्योजोघटनायाः करुणादिप्रतीतिः साध्या ।

एतदुक्तं भवति—यतो गुणवति काव्येऽसङ्कीर्णविषयतया सङ्घटना प्रयुक्ता ततः क्रमो न लक्ष्यते । ननु भवत्वेवं सङ्घटनानां स्थितिः, क्रमस्तु किं न लक्ष्यते अत आह-**आशुभाविनीषु** वाच्यप्रतीतिकालप्रतीक्षणेन विनैव झटित्येव ता **रसादीन्** भाव-

बालप्रिया

शब्दजन्यक्रियेत्यर्थः । क्रियापदार्थमाह—**क्रियेते** इत्यादि । ते के इत्यत्राह—**वाच्येति** । शब्दस्य क्रियेत्यस्य शब्दनिष्ठक्रियेत्यभिप्रायेणाह-**यद्वेत्यादि** । अन्वयं दर्शयति—**तयोरित्यादि** । **तयोः** क्रिययोः । अत्र वाच्यव्यङ्ग्यप्रतीतिगतं पौर्वापर्यं तद्व्यापारयोरारोपितं बोध्यम् । **रसादौ विषये** इति । तथाच वाच्यप्रतीतेः रसादिरूपव्यङ्ग्यप्रतीतेश्चेत्यर्थः । **अभिधेयविशेषादिति** । तत्तद्वाच्यार्थविशेषादित्यर्थः । फलितमाह—**सर्वथेत्यादि** । **अनभिधेये** अभिधेयभिन्ने । **अनेनेति** । अनभिधेयत्वकथनेनेत्यर्थः । **इत्युक्तमिति** । इति दर्शितमित्यर्थः । **लक्ष्यत एवेति** । यथा "भ्रम धार्मिके"त्यादौ । **इतीति** । इत्याकाङ्क्षायामित्यर्थः । **निमित्तसप्तमीति** । "यस्य च भावेने"ति सूत्रानुशिष्टनिमित्तार्थकसप्तमीत्यर्थः । **हेत्वन्तरेति** । अनन्यसाध्यतत्फलत्वरूपहेत्वन्तरेत्यर्थः । अनन्येत्यादिकं व्याचष्टे—**घटना** इत्यादि । कर्मधारयाभिप्रायेण विग्रहमाह—**ताश्चेत्यादि** । अनन्यदित्यस्य व्याख्यानम्—**तदेवेति** । तत्तद्घटनया यत्साध्यं तदेवेत्यर्थः । उक्तमेव विवृणोति—**न हीत्यादि** । ओजोघटनया करुणादिप्रतीतिर्न हि साध्येत्यन्वयः । किन्तु वीरादिप्रतीतिरेवेति भावः ।

उक्तस्य भावमाह—**एतदित्यादि** । **असङ्कीर्णविषयतयेति** । घटनान्तरासङ्कीर्णस्वविषयकत्वेनेत्यर्थः । आशुभाविनीष्वित्येतद्व्याचष्टे—**वाच्येत्यादि** । **ता** इति ।

## लोचनम्

यन्ति तदास्वादं विदधतीत्यर्थः । एतदुक्तं भवति—सङ्घटनाव्यङ्ग्यत्वाद्रसादीनामनुपयुक्तेऽप्यर्थविज्ञाने पूर्वमेवोचितसङ्घटनाश्रवण एव यत आसूत्रितो रसास्वादस्तेन वाच्यप्रतीत्युत्तरकालभवेन परिस्फुटास्वादयुक्तोऽपि पश्चादुत्पन्नत्वेन न भाति । अभ्यस्ते हि विषयेऽविनाभावप्रतीतिक्रम इत्थमेव न लक्ष्यते । अभ्यासो ह्ययमेव यत्प्रणिधानादिनापि विनैव संस्कारस्य बलवत्त्वात्सदैव प्रबुभुत्सुतया अवस्थापनमित्येवं यत्र धूमस्तत्राग्निरिति हृदयस्थितत्वाद्व्याप्तेः पक्षधर्मज्ञानमात्रमेवोपयोगि भवतीति परामर्शस्थानमाक्रमति, झटित्युत्पन्ने हि धूमज्ञाने तद्व्याप्तिस्मृत्युपकृते तद्विजातीयप्रणिधानानुसरणा-

## बालप्रिया

घटना इत्यर्थः । रसादीनित्यादेर्विवरणम्—**तदास्वादमित्यादि** । तत्त्वित्यादिग्रन्थेन लब्धं क्रमस्तु किन्न लक्ष्यत इति चोद्यस्योत्तरं विवृणोति—**एतदित्यादि** । **सङ्घटनाव्यङ्ग्यत्वादिति**। अर्थज्ञानोपयोगं विनाऽपि सङ्घटनया व्यङ्ग्यत्वादित्यर्थः । **पूर्वमेव** वाच्यार्थज्ञानात्प्रागेव । **उचितेति** । अभ्यस्तेत्यर्थः । **आसूत्रितः** ईषत्स्फुरितः । तेनेत्यस्य न भातीत्यनेनान्वयः । **वाच्येति** । वाच्यप्रतीत्युत्तरकाले यो भवः जननं तेन हेतुना यः परिस्फुटास्वादः तेन युक्तोऽपि विशिष्टोऽपि ; परिस्फुटास्वादः युक्तोऽपीति च पाठः। **पश्चादुत्पन्नत्वेन** वाच्यप्रतीत्युत्तरकालोत्पन्नत्वेन । **न भातीति**। सहृदयानामिति शेषः। सदृष्टान्तमुक्तमेव विवृणोति–**अभ्यस्त इत्यादि** । **अभ्यस्ते** व्याप्तिमत्त्वेन पुनः पुनर्ज्ञाते । **अविनेति** । अविनाभावो व्याप्तिस्तस्य प्रतीतिस्तस्याः क्रमः अनुमिताविति शेषः । **अभ्यास इत्यादि** । "अभ्यासस्तु समाने विषये ज्ञानानामभ्यावृत्तिरि" ति न्यायभाष्ये । **प्रणिधानेत्यादि** । "सुस्मूर्षया मनसो धारणं प्रणिधान"मिति न्यायभाष्यम् । धारणमेकाग्रीकरणम् । प्रणिधानादिनेत्यादिपदेन "प्रणिधाननिबन्धाभ्यासलिङ्ग"त्यादिन्यायसूत्रोक्तलिङ्गादीनां ग्रहणम् । विनैवेत्यस्य प्रबुभुत्सुतया स्थापनमित्यनेन सम्बन्धः । **बलवत्त्वादिति** । झटित्युद्बोधकसमवधानरूपदार्ढ्यवत्त्वादित्यर्थः । **प्रबुभुत्सुतयेति** । स्मृतिरूपप्रबोधोपधायकत्वेनेत्यर्थः। कूलं पिपतिषतीत्यादिवत् प्रयोगः। अभ्यस्त इत्यादिना सामान्यत उक्तं विशिष्य दर्शयति—**एवमित्यादि** । इत्येवं व्याप्तेरित्यन्वयः । **हृदयस्थितत्वादिति** । संस्काररूपेणान्तः करणे वर्तमानत्वादित्यर्थः । **पक्षेति** धूमादिलिङ्गस्य पर्वतादिपक्षवृत्तित्वज्ञानमात्रमित्यर्थः । **मात्रमेवेत्यनेन** पक्षे साध्यव्याप्तिविशिष्टहेतुमत्ताज्ञानरूपस्य परामर्शस्य व्यवच्छेदः । **उपयोगीति** । वह्न्याद्यनुमिताविति शेषः । **इतीति** हेतौ । **परामर्शेति** : परामर्शस्थानीयं भवतीत्यर्थः । यद्वा-आक्रमतीति सप्तम्यन्तं धूमज्ञाने इत्यस्य विशेषणम्। वेदान्तपरिभाषादौ स्पष्टमिदं मतम् । झटितीत्यस्य व्याप्तिस्मृतीत्यनेन सम्बन्धः । **तद्व्याप्तीति** । धूमादौ वह्न्यादिव्याप्तेः स्मृत्या सहकृते सतीत्यर्थः । **तदित्यादि** । ताभ्यां धूमज्ञानव्याप्तिस्मृतिभ्यां विजातीयं यत् प्रणिधानानुसरणादिना प्रणिधानकरणादिना प्रतीत्यन्तरमालोच-

क्वचित्तु लक्ष्यत एव। यथानुरणनरूपव्यङ्ग्यप्रतीतिषु। तत्रापि कथमिति चेदुच्यते—अर्थशक्तिमूलानुरणनरूपव्यङ्ग्ये ध्वनौ तावदभिधेयस्य तत्सामर्थ्याक्षिप्तस्य चार्थस्याभिधेयान्तरविलक्षणतयात्यन्तविलक्षणे ये प्रतीती तयोरशक्यनिह्नवो निमित्तनिमित्तिभाव इति स्फुटमेव तत्र पौर्वापर्यम्। यथा प्रथमोद्द्योते प्रतीयमानार्थसिद्ध्यर्थमुदाहृतासु गाथासु। तथाविधे च विषये वाच्यव्यङ्ग्ययोरत्यन्तविलक्षणत्वाद्यैव एकस्य प्रतीतिः सैवेतरस्येति न शक्यते वक्तुम्। शब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये तु ध्वनौ—

गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु

लोचनम्

दिप्रतीत्यन्तरानुप्रवेशविरहादाशुभाविन्यामग्निप्रतीतौ क्रमो न लक्ष्यते तद्वदिहापि। यदि तु वाच्याविरोधी रसो न स्यादुचिता च घटना न भवेत्तल्लक्ष्येतैव क्रम इति।

चन्द्रिकाकारस्तु पठितमनुपठतीति न्यायेन गजनिमीलिकया व्याचचक्षे—तस्य शब्दस्य फलं तद्वा फलं वाच्यव्यङ्ग्यप्रतीत्यात्मकं तस्य घटना निष्पादना यतोऽनन्यसाध्या शब्दव्यापारैकजन्येति। न चात्रार्थसतत्त्वं व्याख्याने किञ्चिदुत्पश्याम इत्यलं पूर्ववंश्यैः सह विवादेन बहुना।

यत्र तु सङ्घटनाव्यङ्ग्यत्वं नास्ति तत्र लक्ष्यत एवेत्याह—**क्वचित्त्विति**। तुल्ये व्यङ्ग्यत्वे कुतो भेद इत्याशङ्कते—**तत्रापीति**। **स्फुटमेवेति**।

अविवक्षितवाच्यस्य पदवाक्यप्रकाशता।
तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः॥

इति हि पूर्वं वर्णसङ्घटनादिकं नास्य व्यञ्जकत्वेनोक्तमिति भावः। **गाथा-**

बालप्रिया

नरूपं तस्य योऽनुप्रवेशः तस्य विरहादभावादित्यर्थः। **आशुभाविन्यां** झटिति भवन्त्याम्। **अग्निप्रतीतौ** पर्वतादौ वह्नेरनुमितौ। **क्रम** इति। व्याप्तिस्मृतिसहकृतस्य धूमज्ञानस्येति शेषः। उपसंहरति—**तद्वदिति**। अभ्यासनिमित्तकाशुभावित्वेन साम्यं बोध्यम्। वाच्याविरोधितेत्याद्युक्त्या गम्यमर्थमाह—**यदीत्यादि**।

अनन्येत्यादिग्रन्थस्य चन्द्रिकाव्याख्यानमाह—**तस्येत्यादि**। **अर्थसतत्त्वमिति**। अर्थस्य सङ्गतत्वमित्यर्थः। स्फुटमेव पौर्वापर्यमित्येतदुपपादयति—**अविवक्षितेत्यादि**। इति हि पूर्वमुक्तं वर्णसङ्घटनादिकमस्य व्यञ्जकत्वेन नोक्तमिति सम्बन्धः।

इत्यादावर्थद्वयप्रतीतौ शाब्द्यामर्थद्वयस्योपमानोपमेयभावप्रतीतिरुप-मावाचकपदविरहे सत्यर्थसामर्थ्यादाक्षिप्तेति, तत्रापि सुलक्षमभिधेयव्यङ्ग्या-लङ्कारप्रतीत्योः पौर्वापर्यम् ।

पदप्रकाशशब्दशक्तिमूलानुरणनरूपव्यङ्ग्येऽपि ध्वनौ विशेषणपद-स्योभयार्थसम्बन्धयोग्यस्य योजकं पदमन्तरेण योजनमशाब्दमप्यर्थादव-स्थितमित्यत्रापि पूर्ववदभिधेयतत्सामर्थ्याक्षिप्तालङ्कारमात्रप्रतीत्योः सुस्थि-

लोचनम्

**स्विति** । 'भम धम्मिअ' इत्यादिकासु । ताश्च तत्रैव व्याख्याताः । **शाब्द्यामिति** । शाब्द्यामपीत्यर्थः । उपमावाचकं यथेवादि । **अर्थसामर्थ्यादिति** । वाक्यार्थसाम-र्थ्यादिति यावत् ।

एवं वाक्यप्रकाशशब्दशक्तिमूलं विचार्य पदप्रकाशं विचारयति—**पदप्रकाशेति** । **विशेषणपदस्येति** । जड इत्यस्य । **योजकमिति** । कूप इति च अहमिति चोभ-यसमानाधिकरणतया संवलनम् । अभिधेयं च तत्सामर्थ्याक्षिप्तं च तयोरलङ्कारमात्रयोः । ये प्रतीती तयोः पौर्वापर्यं क्रमः । **सुस्थितं** सुलक्षितमित्यर्थः । मात्रग्रहणेन रसप्रतीति-

बालप्रिया

येन पौर्वापर्यस्यास्फुटत्वं भवेदिति भावः । **शाब्द्यामपीति** । अभिधया शब्दजन्या-मपीत्यर्थः । अपिशब्देनाप्रकृतार्थस्य व्यङ्ग्यत्वपक्षः सूच्यते । उपमावाचकपदविरह इत्यत्रोपमावाचकपदं विवृणोति—**उपमेत्यादि** । वृत्तौ 'आक्षिप्ते'ति । उत्पादिते-त्यर्थः । 'अभिधेये'ति । अभिधेयस्य व्यङ्ग्यालङ्कारस्य च ये प्रतीती तयोरित्यर्थः । द्वितीयार्थोऽप्यभिधेयः तदुपमामात्रं व्यङ्ग्यमिति मताभिप्रायेणेदम्, अनुपदं वक्ष्यमाण-स्थलेऽप्येवं बोध्यम् ।

लोचने वृत्तानुवादपूर्वकमवतारयति—**एवमित्यादि** । **पदप्रकाशमिति** । शब्दशक्तिमूलमित्यनुषङ्गः । प्रातुं धनैरित्याद्युक्तमुदाहरणं मनसिकृत्य व्याचष्टे—**जड इत्यस्येति** । योजनशब्दार्थमाह—**कूप इत्यादि** । **इति चोभयेति** । कूपा-हम्पदार्थोभयेत्यर्थः । **संवलनं** सम्मिश्रणम् । वृत्तौ 'अशाब्दमपी'ति । योजक-शब्दाप्रतिपाद्यमपीत्यर्थः । अर्थाद्व्यञ्जनात् । 'अवस्थितम्' प्रतिपत्तिविषयभूतम् । अभिधेयेत्यादिकं व्याचष्टे-**अभिधेयमित्यादि** । अत्राभिधेयोऽलङ्कारो दीपकम्, जडत्व-स्योभयत्रान्वयात् । तत्सामर्थ्याक्षिप्ता चोपमा । अभिधेयं च तत्सामर्थ्याक्षिप्तालङ्कारश्च तावेव तन्मात्रे इति च वृत्त्यर्थो बोध्यः । अलक्षणीयत्वशङ्काया व्यावर्तनीयतया तदनु-रोधेन व्याचष्टे-**सुलक्षितमिति** । **मात्रग्रहणेनेति** । अलङ्कारमात्रेत्यत्रत्यमात्रपदेने-

तमेव पौर्वापर्यम् । आर्थ्यपि च प्रतिपत्तिस्तथाविधे विषये उभयार्थसम्बन्धयोग्यशब्दसामर्थ्यप्रसावितेति शब्दशक्तिमूला कल्प्यते । अविवक्षितवाच्यस्य तु ध्वनेः प्रसिद्धस्वविषयवैमुख्यप्रतीतिपूर्वकमेवार्थान्तरप्रकाशनमिति नियमभावी क्रमः । तत्राविवक्षितवाच्यत्वादेव वाच्येन सह व्यङ्ग्यस्य क्रमप्रतीतिविचारो न कृतः । तस्मादभिधानाभिधेयप्रतीत्यो-

लोचनम्

स्तत्राप्यलक्ष्यक्रमैवेति दर्शयति । नन्वेवमार्थत्वं शब्दशक्तिमूलत्वं चेति विरुद्धमित्याशङ्क्याह—**आर्थ्यपीति** । नात्र विरोधः कश्चिदिति भावः । एतच्च वितत्य पूर्वमेव निर्णीतमिति न पुनरुच्यते । **स्वविषयेति** । अन्धशब्दादेरुपहतचक्षुष्कादिः स्वो विषयः, तत्र यद्वैमुख्यमनादर इत्यर्थः । **विचारो न कृत इति** । नामधेयनिरूपणद्वारेणेति शेषः । सहभावस्य शङ्कितुमत्रायुक्तत्वादिति भावः । एवं रसादयः कैशिक्यादीनामितिवृत्तभागरूपाणां वृत्तीनां जीवितमुपनागरिकाद्यानां च सर्वस्यास्योभयस्यापि वृत्तिव्यवहारस्य रसादिनियन्त्रितविषयत्वादिति यत्प्रस्तुतं तत्प्रसङ्गेन रसादीनां वाच्यातिरिक्तत्वं समर्थयितुं क्रमो विचारित इत्येतदुपसंहरति—**तस्मादिति** । अभिधानस्य

बालप्रिया

त्यर्थः । **रसप्रतीतिरिति** । रसस्य भावस्य वा प्रतीतिरित्यर्थः । **तत्रापीति** । उक्तशब्दशक्तिमूलस्थलेऽपीत्यर्थः । प्रातुमित्यादौ निर्वेदो व्यङ्ग्यः । **नात्रेत्यादि** । उभयार्थेत्यादिविशेषणस्य विद्यमानत्वान्न विरोध इत्यर्थः । एवं विवक्षितान्यपरवाच्ये व्यङ्ग्यव्यञ्जकयोः क्रमं प्रतिपाद्य सर्वत्रापि व्यङ्ग्यव्यञ्जकयोः क्रमोऽस्तीति दर्शयितुमाह—वृत्तौ '**अविवक्षिते**'त्यादि । 'निःश्वासान्ध' इत्यादिपूर्वोक्तोदाहरणनिष्ठतया स्वविषयवैमुख्यमित्येतद्व्याचष्टे—**अन्धशब्दादेरित्यादि** । **विषयः** वाच्यार्थः। **अनादर इति**। वाच्यार्थस्य बाधितत्वात्परित्याग इत्यर्थः । वृत्तौ 'अर्थान्तरे'ति । व्यङ्ग्येत्यर्थः । 'क्रम' इति । वाच्यव्यङ्ग्यप्रतीत्योरिति शेषः । 'तत्राविवक्षितवाच्यत्वादि'ति । अविवक्षितवाच्यध्वनिस्थले वाच्यस्याविवक्षितत्वादित्यर्थः । 'क्रमे'ति । क्रमेण या प्रतीतिः तद्विचारः वाच्यार्थव्यङ्ग्यार्थप्रतीत्योः क्रमस्य विचार इत्यर्थः । न कृत इत्यत्र पूरयति लोचने—**नामेत्यादि** । भावमाह—**सहेत्यादि** । **अत्रेति** । अविवक्षितवाच्यध्वनावित्यर्थः । ननु रसादेः वृत्तिजीवितत्वमुपक्रान्तं वाच्यव्यङ्ग्यप्रतीतिक्रमश्च तस्मादित्यादिना उपसंहृतः । तदिदमसङ्गतमित्यतस्तद्ग्रन्थमवतारयति—**एवं रसादय** इत्यादि । उपनागरिकाद्यानां च वृत्तीनामिति सम्बन्धः । रसादीनामुभयविधवृत्तिजीवितत्वे हेतुमाह—**सर्वस्येत्यादिना** । **प्रस्तुतमुपक्रान्तं** तत्प्रसङ्गेन विचारित इत्यन्वयः । इत्येतदिति । प्रसङ्गागतं क्रमविचारमित्यर्थः । वाच्यव्यङ्ग्यप्रतीती क्रमवत्यौ निमित्तनैमित्तिकत्वाद-

रिव वाच्यव्यङ्ग्यप्रतीत्योर्निमित्तनिमित्तिभावान्नियमभावी क्रमः । स तूक्तयुक्त्या क्वचिल्लक्ष्यते क्वचिन्न लक्ष्यते ।

तदेवं व्यञ्जकमुखेन ध्वनिप्रकारेषु निरूपितेषु कश्चिद्ब्रूयात्—किमिदं व्यञ्जकत्वं नाम व्यङ्ग्यार्थप्रकाशनम्, न हि व्यञ्जकत्वं व्यङ्ग्यत्वं चार्थस्य व्यञ्जकसिद्ध्यधीनं व्यङ्ग्यत्वम्, व्यङ्ग्यापेक्षया च व्यञ्जकत्वसिद्धिरित्यन्योन्यसंश्रयादव्यवस्थानम् । ननु वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य

लोचनम्

शब्दरूपस्य पूर्वं प्रतीतिस्ततोऽभिधेयस्य । यदाह तत्र भवान्—

'विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते' इत्यादि ।

अतोऽनिर्ज्ञातरूपत्वात्किमाहेत्यभिधीयते' इत्यत्रापि चाविनाभाववत्समयस्याभ्यस्तत्वात्क्रमो न लक्ष्येतापि ।

उद्योतारम्भे यदुक्तं व्यञ्जनमुखेन ध्वनेः स्वरूपं प्रतिपाद्यत इति तदिदानीमुपसंहरन्व्यञ्जकभावं प्रथमोद्योते समर्थितमपि शिष्याणामेकप्रघट्टकेन हृदि निवेशयितुं पूर्वपक्षमाह—**तदेवमिति । कश्चिदिति** । मीमांसकादिः । **किमिदमिति**। वक्ष्यमाणश्चोदक-

बालप्रिया

भिधानाभिधेयप्रतीतिवदिति वृत्त्युक्तानुमाने दृष्टान्तस्य साधनवैकल्यशङ्कां परिहर्तुं व्याचष्टे-**अभिधानस्येत्यादि** । **यदाहेति** । यस्मादाहेत्यर्थः । **विषयत्वमित्यादि** । **विषयत्वं** श्रावणादिज्ञानविषयत्वम् । **अनापन्नैः** अज्ञातैरित्यर्थः । **न प्रकाश्यते** किन्तु ज्ञातैरेवेत्यर्थः । इत्यादीत्यादिपदेन सूचितेषु किञ्चित् पद्यार्द्धमपि दर्शयति—**अत इत्यादि । अत इति** । यतो निर्ज्ञातस्यैवार्थबोधकत्वं तत इत्यर्थः । **अनिर्ज्ञातरूपत्वादिति** । श्रोत्रा सम्यगश्रवणे शब्दस्यानिश्चितस्वरूपत्वादित्यर्थः । **किमाहेत्यभिधीयत इति** । भवान् किं वक्तीति पृच्छ्यते इत्यर्थः । शब्दस्य तदर्थस्य च जिज्ञासयेति भावः । प्रसङ्गादाह—**अत्रापीत्यादि । अत्रापि** अभिधानाभिधेयप्रतीत्योरपि । अविनाभाववदविनाभावस्येव । **समयस्य** तत्तदर्थे तत्तत्पदसङ्केतस्य । **न लक्ष्येतापि** क्वचिदलक्ष्योऽपि भवति ।

'तदेव'मित्यादि'निरूपितेष्वि'त्यन्तमनुपयोगि, कश्चिदित्यादिना व्यञ्जकत्वनिरूपणं पुनरुक्तं चेत्यतस्तत्फलं दर्शयन्नवतारयति—**उद्योतारम्भ** इत्यादिना । **प्रघट्टकेन** प्रकरणेन । किमिदमित्यत्र किंशब्दः आक्षेपे प्रश्ने वा, तत्र हेतुर्नोक्त इत्यत आह—**वक्ष्यमाण** इति । अन्योन्याश्रयादव्यवस्थानमिति वक्ष्यमाण इत्यर्थः । **चोदकस्य** चोद्यवादिनः । वृत्तौ 'व्यङ्ग्यार्थप्रकाशन'मिति । व्यंग्यार्थप्रतीत्यनुकूलसामर्थ्यमित्यर्थः । अस्यानन्तरं चेदिति शेषः । निषेधति—'न ही'त्यादि । शब्दस्येति शेषः । शब्दस्य

सिद्धिः प्रागेव प्रतिपादिता तत्सिद्ध्यधीना च व्यञ्जकसिद्धिरिति कः पर्यनुयोगावसरः । सत्यमेवैतत् ; प्रागुक्तयुक्तिभिर्वाच्यव्यतिरिक्तस्य वस्तुनः सिद्धिः कृता, स त्वर्थो व्यङ्ग्यतयैव कस्माद्व्यपदिश्यते । यत्र च प्राधा-

लोचनम्

स्याभिप्रायः । **प्रागेवे**ति । प्रथमोद्योते अभाववादनिराकरणे । अतश्च न व्यञ्जकसिध्या तत्सिद्धिर्येनान्योन्याश्रयः शङ्क्येत, अपि तु हेत्वन्तरैस्तस्य साधितत्वादिति भावः । तदाह—**तत्सिद्धी**ति । **स त्वि**ति । अस्त्वसौ द्वितीयोऽर्थः, तस्य यदि व्यङ्ग्य इति नाम कृतम् , वाच्य इत्यपि कस्मान्न क्रियते ? व्यङ्ग्य इति वा वाच्याभिमतस्यापि कस्मान्न क्रियते ? अवगम्यमानत्वेन हि शब्दार्थत्वं तदेव वाचकत्वम् । अभिधा

बालप्रिया

व्यञ्जकत्वमर्थस्य व्यङ्ग्यत्वं च 'न हि' स्वतो न भवति हि । हीति प्रसिद्धौ । अत इति शेषः । अतः परिशेषादित्यर्थः । व्यङ्ग्यत्वं व्यञ्जकसिद्ध्यधीनं व्यङ्ग्यापेक्षया व्यञ्जकत्वसिद्धिश्च । 'इती'ति । इत्यतो हेतोरित्यर्थः । 'अव्यवस्थानं' न व्यवस्थितिः । यद्वा-न हीत्यस्य पूर्वेण सम्बन्धः । व्यञ्जकत्वं शब्दस्यैवेति सूचयितुं व्यङ्ग्यत्वं चार्थस्येत्युक्तम् । तथा च यतोऽर्थस्य व्यङ्ग्यत्वमतो व्यञ्जकत्वं शब्दस्यैव तच्च व्यङ्ग्यार्थप्रकाशनं न हीति सम्बन्धः । अत्र हेतुमाह-'व्यञ्जकत्वे'त्यादि । व्यञ्जकत्वसिद्ध्यधीनमित्यस्यानन्तरं व्यङ्ग्यत्वमिति पाठाभावे त्वेवं योजना—व्यञ्जकत्वं व्यङ्ग्यार्थप्रकाशनं न हि । कुत इत्यत्राह 'व्यङ्ग्यत्वमि'त्यादीति । 'नन्वि'त्यादि सिद्धान्तिनः समाधानग्रन्थः । विस्मरणमाशङ्क्य तत्रत्यं प्रागिति पदं व्याचष्टे लोचने—**प्रथमे**त्यादि । फलितमाह—**अतश्चे**त्यादि । चकारोऽवधारणे अत इत्यनेन परामृष्टं हेतुमाह—**हेत्वन्तरै**रिति । **तदाहे**ति । तस्मादाहेत्यर्थः । वृत्तौ—'तत्सिद्ध्यधीने'ति । व्यङ्ग्यसिध्यधीनेत्यर्थः । 'सत्यमि'त्यादिना सिद्धान्त्युक्तमनूद्य पूर्वपक्षी 'स त्वि'त्यादिना दूषणमभिहितवांस्तं ग्रन्थं व्याचष्टे—**अस्त्वसा**वित्यादिना । स त्वर्थ इत्यस्य व्याख्यानम्-**असौ द्वितीयोऽर्थ** इति । व्यङ्ग्यतयैवेत्येवकारं द्विधा योजयन् व्याचष्टे—**तस्ये**त्यादिना । **न क्रियत** इति । अतश्च नियमार्थं व्यङ्ग्यशब्दप्रवृत्तिनिमित्तं वक्तव्यं, तथाचान्योन्याश्रय एव पर्यवस्येदिति भावः । यत्र चेत्यादिना व्यङ्ग्यत्वविशिष्टार्थस्याभिमतस्यासिद्धिरूपं दूषणान्तरमुच्यते तद्ग्रन्थमवतारयति—**अवगम्यमानत्वेने**त्यादिना । अवगम्यमानत्वेन शब्दावगम्यमानत्वेन । **शब्दार्थत्वमिति** । तथा च शब्दावगम्यत्वं वाच्यत्वमित्यर्थः । **तदेवे**ति । यदेवार्थगतावगम्यत्वप्रतियोगि तदेवेत्यर्थः । अर्थावगमकत्वमेवेति यावत् । अस्त्वेवं ततः किमत आह—**अभिधा** हीत्यादि । **अभिधा** वाचकत्वान्तर्गता वचनलक्षणा । **यत्पर्यन्ते**ति । योऽर्थः पर्यन्तो यस्याः

**न्येनानवस्थानं तत्र वाच्यतयैवासौ व्यपदेष्टुं युक्तः, तत्परत्वाद्वाक्यस्य । अतश्च तत्प्रकाशिनो वाक्यस्य वाचकत्वमेव व्यापारः । किं तस्य व्यापारान्तरकल्पनया ? तस्मात्तात्पर्यविषयो योऽर्थः स तावन्मुख्यतया वाच्यः। या त्वन्तरा तथाविधे विषये वाच्यान्तरप्रतीतिः सा तत्प्रतीतेरुपायमात्रं पदार्थप्रतीतिरिव वाक्यार्थप्रतीतेः ।**

लोचनम्

हि यत्पर्यन्ता तत्रैवाभिधायकत्वमुचितम्, तत्पर्यन्तता च प्रधानीभूते तस्मिन्नर्थे इति मूर्धाभिषिक्तं ध्वनेर्यद्रूपं निरूपितं, तत्रैवाभिधाव्यापारेण भवितुं युक्तम् । तदाह— **यत्र चेति** । **तत्प्रकाशिन** इति । तद्व्यङ्ग्याभिमतं प्रकाशयत्यवश्यं यद्वाक्यं तस्येति । **उपायमात्रमित्यनेन** साधारण्योक्त्या भाट्टं प्राभाकरं वैयाकरणं च पूर्वपक्षं सूचयति । भाट्टमते हि—

> वाक्यार्थमितये[1] तेषां प्रवृत्तौ नान्तरीयकम् ।
> पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥

बालप्रिया

सेत्यर्थः । **तत्रैव** पर्यन्तीभूततदर्थ एव । नन्वस्तु पर्यन्तीभूतार्थं प्रति वाचकत्वं, ततः किमत आह—**तत्पर्यन्तत्यादि** । **तत्पर्यन्तता** तामभिधां प्रति पर्यन्तता अवधिता तात्पर्यविषयतेति यावत् । **तस्मिन्निति** । व्यङ्ग्यभूते त्वदभिलषित इत्यर्थः । उक्तस्य दूषणत्वं प्रकटयन् फलितमाह—**इतीत्यादि** । इतीति हेतौ । **मूर्धाभिषिक्तं** प्रधानं रसादिलक्षणम् । **रूपं** स्वरूपम् । **तत्रैवेति** । एवकारोऽभिधाव्यापारेणेत्यनेन सम्बध्नाति । **भवितुं युक्तमिति** । अतो व्यञ्जकत्वं नाममात्रमिति भावः । वृत्तौ 'यत्र चे'त्यादि । यत्र काव्यादौ । 'प्राधान्येनावस्थान'मिति । तात्पर्यविषयतया अर्थस्यावस्थानमित्यर्थः । 'तत्र' काव्यादौ । 'असौ' प्राधान्येनावस्थितोऽर्थः । लोचने—**तदित्यादि** । **अवश्यमिति** । अन्यथा काव्यचारुत्वं न सिध्येदिति भावः । **इत्यनेन साधारण्योक्त्येति** । सा तत्प्रतीतेरुपायमात्रं पदार्थप्रतीतिरिव वाक्यार्थप्रतीतेरिति मतत्रयसाधारणवचनेनेत्यर्थः । तन्मतत्रयं क्रमेणोपन्यस्यति—**भाट्टमते हीत्यादि** । **वाक्यार्थमितये** इत्यादि । तेषां पदानां वाक्यजननद्वारेण वाक्यार्थमितये एव प्रवृत्तिः, तस्यां सत्याम् स्वार्थप्रतिपादनं नान्तरीयकमविनाभावबलादायातम् । यथाऽ-

१. श्लोकवार्तिकवाक्याधिकरणस्थेयं कारिका । वाक्यघटकीभूतपदैरुपस्थापितानां पदार्थानां प्रमाणान्तरसिद्धत्वात् तन्मात्रप्रतिपादनं पदानां निष्फलाय भवेदिति पदार्थावसिताभिधाव्यापराणामपि पदानां तत्रानवसिततात्पर्याणां वाक्यार्थावगतावेव तात्पर्यमिति भावः ।

अत्रोच्यते—यत्र शब्दः स्वार्थमभिदधानोऽर्थान्तरमवगमयति तत्र यत्तस्य स्वार्थाभिधायित्वं यच्च तदर्थान्तरावगमहेतुत्वं तयोरविशेषो विशेषो वा । न तावदविशेषः ; यस्मात्तौ द्वौ व्यापारौ भिन्नविषयौ भिन्नरूपौ च प्रतीयेते एव । तथाहि वाचकत्वलक्षणो व्यापारः शब्दस्य स्वार्थविषयः गम-

## लोचनम्

इति शब्दावगतैः पदार्थैस्तात्पर्येण योऽर्थ उत्थाप्यते स एव वाक्यार्थः, स एव च वाच्य इति । प्राभाकरदर्शनेऽपि दीर्घदीर्घो व्यापारो निमित्तिनि वाक्यार्थे, पदार्थानां तु निमित्तभावः पारमार्थिक एव । वैयाकरणानां तु सोऽपारमार्थिक इति विशेषः । एतच्चास्माभिः प्रथमोद्द्योत एव वितत्य निर्णीतमिति न पुनरायस्यते ग्रन्थयोजनैव तु क्रियते । तदेतन्मतत्रयं पूर्वपक्षे योज्यम् ।

**अत्रे**ति पूर्वपक्षे । **उच्यत** इति सिद्धान्तः । वाचकत्वं गमकत्वं चेति स्वरूपतो भेदः स्वार्थेऽर्थान्तरे च क्रमेणेति विषयतः । ननु तस्माच्चेदसौ गम्यतेऽर्थः कथं तर्ह्युच्यतेऽर्थान्तरमिति । नो चेत्स तस्य न कश्चिदिति को विषयार्थ

## बालप्रिया

पाकार्थं प्रवृत्तानां काष्ठानां ज्वलनम् । अतः पदानां वाक्यार्थमितिपर्यन्त एवाभिधाव्यापारो यथा काष्ठव्यापारः पाकान्त इत्यर्थः । **इती**ति । इत्युक्तनयेनेत्यर्थः । **शब्दावगतै**रिति । वाक्यगतपदावगतैरित्यर्थः । **स एवे**ति । एवकारेण पदार्थव्यावृत्तिः पदार्थप्रतीतेरुपायमात्रत्वेन तस्यातात्पर्यविषयत्वात् । **व्यापार** इति । वाक्यात्मकपदानामिति शेषः । **निमित्तिनी**ति । नैमित्तिके कार्यरूपे इत्यर्थः । वाक्यार्थस्य नैमित्तिकत्वोक्त्यैव पदार्थानां निमित्तत्वे सिद्धेऽपि वैयाकरणमताद्विशेषं दर्शयितुमाह—**पदार्थानान्त्वि**ति । उत्पत्त्यपेक्षया पदार्थवाक्यार्थयोर्निमित्तनिमित्तिभावोक्तिः, प्रतीतिस्तु प्रथमं वाक्यार्थस्य प्राभाकरमते कार्यान्विताभिधानादिति बोध्यम् । **सोऽपारमार्थिक** इति । अविद्यात्मकत्वादपारमार्थिक इत्यर्थः । सङ्क्षिप्य मतत्रयोपन्यासस्य फलमाह—**तदेत**दिति । **योज्य**मिति । अन्यथा निर्मूलत्वप्रसङ्गादिति भावः ।

'उच्यते' इत्यत्र पूरयति-**सिद्धान्त** इति । यत्रेत्यादिवृत्तिग्रन्थेनाभिहितौ स्वरूपविषयभेदौ स्फुटयति—**वाचकत्व**मित्यादि । **विषयत** इति । भेद इत्यनुषज्यते । समयापेक्षत्वात्स्वार्थे अभिधा तदनपेक्षत्वादन्यत्रार्थे अवगमनव्यापार इति भावः । 'न च स्वपरे'त्यादिग्रन्थमवतारयति—**नन्वि**त्यादि । **तस्मा**दिति । यस्मादभिधेयस्यार्थस्य प्रतीतिः तस्माच्छब्दादित्यर्थः । **असौ** व्यङ्ग्यत्वेनाभिमतः । ननु न गम्यते तस्माच्छब्दात्किन्तु तत्सम्बन्धिवशादित्यत आह—**नो चे**दित्यादि । **सः** सशब्दः ।

कत्वलक्षणस्त्वर्थान्तरविषयः । न च स्वपरव्यवहारो वाच्यव्यङ्ग्ययोरपह्नोतुं शक्यः, एकस्य सम्बन्धित्वेन प्रतीतेरपरस्य सम्बन्धिसम्बन्धित्वेन । वाच्यो ह्यर्थः साक्षाच्छब्दस्य सम्बन्धी तदितरस्त्वभिधेयसामर्थ्याक्षिप्तः सम्बन्धिसम्बन्धी । यदि च स्वसम्बन्धित्वं साक्षात्तस्य स्यात्तदार्थान्तरत्वव्यवहार एव न स्यात् । तस्माद्विषयभेदस्तावत्तयोर्व्यापारयोः सुप्रसिद्धः । रूपभेदोऽपि प्रसिद्ध एव । न हि यैवाभिधानशक्तिः सैवावगमनशक्तिः । अवाचकस्यापि गीतशब्दादे रसादिलक्षणार्थावगमदर्शनात् । अशब्दस्यापि चेष्टादेरर्थविशेषप्रकाशनप्रसिद्धेः । तथाहि 'व्रीडायोगान्नतवदनया'

## लोचनम्

इत्याशङ्क्याह—न चेति । न स्यादिति । एवकारो भिन्नक्रमः, नैव स्यादित्यर्थः । यावता न साक्षात्सम्बन्धित्वं तेन युक्त एवार्थान्तरव्यवहार इति विषयभेद उक्तः । ननु भिन्नेऽपि विषये अक्षशब्दादेर्बह्वर्थस्य एक एवाभिधालक्षणो व्यापार इत्याशङ्क्य रूपभेदमुपपादयति—रूपभेदोऽपीति । प्रसिद्धिमेव दर्शयति—न हीति । विप्रतिपन्नं प्रति हेतुमाह—अवाचकस्यापीति । यदेव वाचकत्वं तदेव गमकत्वं यदि स्यादवाचकस्य गमकत्वमपि न स्यात्, गमकत्वे नैव वाचकत्वमपि न स्यात् । न चैतदुभयमपि गीतशब्दे शब्दव्यतिरिक्ते चाधोवक्त्रत्वकुचकम्पनबाष्पावेशादौ

## बालप्रिया

तस्य अर्थान्तरस्य । न कश्चिदिति । गमकोऽभिधायकश्च कश्चिन्नेत्यर्थः । ततः किमित्यत आह—इतीत्यादि । विषयार्थः विषरूपोऽर्थः । यद्वा—विषयशब्दस्यार्थः । क इति । अर्थान्तरं शब्दस्य विषयो न भवेदित्यर्थः । इत्याशङ्क्याहेति । न चेत्यादिना न स्यादित्यन्तेनाहेत्यर्थः । एवकार इति । व्यवहार एवेत्येवकार इत्यर्थः। भावं विवृणोति—यावतेत्यादि । यावता येन हेतुना । ननु भिन्नविषयत्वसमर्थनेनैवेष्टसिद्धौ रूपभेदसमर्थनं किमर्थमित्यतस्तद्ग्रन्थमवतारयति—नन्वित्यादि । अक्षशब्दादेरित्यादिपदेन हर्यादिशब्दो गृह्यते । बह्वर्थस्येति । इन्द्रियाद्यनेकार्थकस्येत्यर्थः । एक एवेति । आवृत्त्यपेक्षत्वेऽपि तत्र तत्रार्थे अभिधैव व्यापार इति भावः । स्वरूपभेदे प्रसिद्धिं हेतुमुक्त्वा पुनर्हेत्वन्तरोक्तौ बीजं दर्शयति—विप्रतिपन्नं प्रतीति । विप्रतिपन्नं वाचकत्वमेव गमकत्वं नान्यदनुभूयत इति वदन्तम् । भावं व्याचष्टे—यदेवेत्यादिना । न स्यादित्यत्र हेतुमाह—गमकत्व इत्यादि । गमकत्वे सति वाचकत्वमपि नैव न स्यादिति योजना । स्यादेवेत्यर्थः । यत इति शेषः । न चेति ।

इत्यादिश्लोके चेष्टाविशेषः सुकविनार्थप्रकाशनहेतुः प्रदर्शित एव । तस्माद्भिन्नविषयत्वाद्भिन्नरूपत्वाच्च स्वार्थाभिधायित्वमर्थान्तरावगमहेतुत्वं च शब्दस्य यत्तयोः स्पष्ट एव भेदः । विशेषश्चेन्न तर्हीदानीमवगमनस्याभिधेयसामर्थ्याक्षिप्तस्यार्थान्तरस्य वाच्यत्वव्यपदेश्यता । शब्दव्यापारगोचरत्वं तु तस्यास्माभिरिष्यत एव, तत्तु व्यङ्ग्यत्वेनैव न वाच्यत्वेन । प्रसि-

लोचनम्

तस्यावाचकस्याप्यवगमकारित्वदर्शनादवगमकारिणोऽप्यवाचकत्वेन प्रसिद्धत्वादिति तात्पर्यम् । एतदुपसंहरति—**तस्माद्भिन्नेति** । **न तर्हीति** । वाच्यत्वं ह्यभिधाव्यापारविषयता न तु व्यापारमात्रविषयता, तथात्वे तु सिद्धसाधनमित्येतदाह—**शब्दव्यापारेति** ।

ननु गीतादौ मा भूद्वाचकत्वमिह त्वर्थान्तरेऽपि शब्दस्य वाचकत्वमेवोच्यते, किं हि तद्वाचकत्वं सङ्कोच्यत इत्याशङ्क्याह—**प्रसिद्धेति** । शब्दान्तरेण तस्यार्थान्तरस्य

बालप्रिया

**एतदुभयं** वाचकत्वगमकत्वोभयम् । गीतशब्दे बाष्पावेशादौ च नास्तीत्यन्वयः, किन्तु अवगमकत्वमेवास्तीति भावः । अधोवक्त्रत्वेत्यादिना व्रीडायोगादिति श्लोकप्रतिपादितार्थो दर्शिताः । कुत इत्यत्राह—**तस्येत्यादि** । **तस्य** गीतशब्दादेः । **इति तात्पर्यमिति** । अवाचकस्येत्यादेः प्रदर्शित एवेत्यन्तवृत्तिग्रन्थस्य तात्पर्यमित्यर्थः । **एतदिति** । वाचकत्वव्यञ्जकत्वयोर्भेदसमर्थनेन अविशेषपक्षनिराकरणमित्यर्थः । वृत्तौ 'विशेषश्चे'दिति । तयोरित्यनुषङ्गः । 'अवगमनस्ये'ति । अवगमनव्यापारसम्बन्धि यदर्थान्तरमिति सम्बन्धः । अवगमनीयस्येति च पाठः । अवगमनसम्बन्धित्वे हेतुमाह–'अभिधेये'त्यादि । न वाच्यत्वव्यपदेश्यतेत्युक्तं विवृणोति—**वाच्यत्वं ह्यभिधाव्यापारविषयनेति** । साक्षात्तद्विषयतेत्यर्थः । **व्यापारमात्रेति** । व्यापारसामान्येत्यर्थः । तथात्व इति व्यापारमात्रगोचरत्वे सतीत्यर्थः । **सिद्धसाधनमिति** । तस्यार्थस्य व्यञ्जनाव्यापारविषयताया अस्मन्मतसिद्धायास्साधनात् सिद्धसाधनं नाम दोष इत्यर्थः ।

'प्रसिद्धे'त्यादिग्रन्थं शङ्कोत्तरत्वेनावतारयति—**नन्वित्यादि** । **मा भूद्वाचकत्वमिति** । वाच्यस्याभावादिति भावः । इह तु शब्दस्येति सम्बन्धः । **इह** काव्ये । तुशब्दो विशेषे । **शब्दस्य** वाचकस्य । **अर्थान्तरे** व्यङ्ग्यत्वेनाभिमते । अपीति समुच्चये । **किं हीत्यादि** । अर्थान्तरत्वस्य न तत्सङ्कोचकत्वमिति भावः । अन्वयं प्रदर्शयन् प्रकाशनोक्तिरेव युक्तेत्येवकारार्थं व्याचष्टे—**शब्दान्तरेणेत्यादि** । **शब्दान्तरेण** 'गङ्गायां घोष' इत्यादौ गङ्गादिशब्देन । **तस्यार्थान्तरस्य** शैत्यपावनत्वादेः । तत्र

द्वाभिधानान्तरसम्बन्धयोग्यत्वेन च तस्यार्थान्तरस्य प्रतीतेः शब्दान्तरेण स्वार्थाभिधायिना यद्विषयीकरणं तत्र प्रकाशनोक्तिरेव युक्ता।

न च पदार्थवाक्यार्थन्यायो वाच्यव्यङ्ग्ययोः। यतः पदार्थप्रतीतिर-

लोचनम्

यद्विषयीकरणं तत्र प्रकाशनोक्तिरेव युक्ता न वाचकत्वोक्तिः शब्दस्य, नापि वाच्यत्वोक्तिरर्थस्य तत्र युक्ता, वाचकत्वं हि समयवशादव्यवधानेन प्रतिपादकत्वं, यथा तस्यैव शब्दस्य स्वार्थे; तदाह-**स्वार्थाभिधायिनेति**। वाच्यत्वं हि समयबलेन निर्व्यवधानं प्रतिपाद्यत्वं यथा तस्यैवार्थस्य शब्दान्तरं प्रति तदाह—**प्रसिद्धेति**। प्रसिद्धेन वाचकतयाभिधानान्तरेण यः सम्बन्धो वाच्यत्वं तदेव तत्र वा यद्योग्यत्वं तेनोपलक्षितस्य। न चैवंविधं वाचकत्वमर्थं प्रति शब्दस्येहास्ति, नापि तं शब्दं प्रति तस्यार्थस्योक्तरूपं वाच्यत्वम्। यदि नास्ति तर्हि कथं तस्य विषयीकरणमुक्तमित्याशङ्क्याह-**प्रतीतेरिति**। अथ च प्रतीयते सोऽर्थो न च वाच्यवाचकत्वव्यापारेणेति विलक्षण एवासौ व्यापार इति यावत्।

नन्वेवं मा भूद्वाचकशक्तिस्तथापि तात्पर्यशक्तिर्भविष्यतीत्याशङ्क्याह—**न चेति**।

बालप्रिया

**तस्मिन्नर्थे**। **प्रकाशनोक्तिः** अवगमकत्वोक्तिः। **शब्दस्य** गङ्गादिशब्दस्य। न वाचकत्वोक्तिर्युक्तेत्यत्र हेतुत्वेन स्वार्थाभिधायिनेति पदं वाचकत्वनिर्वचनपूर्वकमवतारयति—**वाचकत्वं हीत्यादि**। **तस्यैव शब्दस्य** गङ्गादिशब्दस्य। **स्वार्थे** प्रवाहादौ। **तदाह** तदभिप्रायेणाह। न वाच्यत्वोक्तिर्युक्तेत्यत्र हेतुत्वेन प्रसिद्धेत्यादिग्रन्थं वाच्यत्वलक्षणोक्तिपुरस्सरमवतारयति—**वाच्यत्वं हीत्यादि**। **अर्थस्य** शैत्यपावनत्वादेः। **शब्दान्तरं** शैत्यपावनत्वादिशब्दम्। प्रकृतानुगुणं व्याचष्टे—**प्रसिद्धेनेत्यादि**। वाचकतयेति पूरितम्। **अभिधानान्तरेण** शब्दान्तरेण शैत्यपावनत्वादिशब्देन। **तत्र वेति**। तत्र वाच्यत्वे तन्निरूपितमित्यर्थः। **योग्यत्वम**र्हत्वम्। तेनोपलक्षितस्येत्यर्थान्तरस्येत्यस्य विशेषणं योग्यत्वेनेत्युपलक्षणे तृतीयेति भावः। निगमयति—**न चैवमित्यादि**। **अर्थं** शैत्यपावनत्वाद्यर्थम्। **शब्दस्य** गङ्गादिशब्दस्य। योग्यत्वेनेत्युपलक्षणे तृतीयेति व्याख्यानात्प्रतीतेरित्यनेन तदन्वयस्य निरस्तत्वात्तत्पदमवतारयति-**यदीत्यादि**। यदि नास्तीत्यनेन न चैवंविधमित्याद्युक्तस्यानुवादः। **तस्य** शैत्यपावनत्वाद्यर्थस्य। **विषयीकरणमिति**। गङ्गादिशब्देनेति शेषः। **अथ चेति** वृत्तिस्थचकारार्थविवरणम्। **सोऽर्थः** शैत्यपावनत्वाद्यर्थः। **व्यापारेणे**त्यनन्तरं किन्तु व्यापारान्तरेणेति शेषः। तथा च फलितमाह-**इतीत्यादि**।

प्रकृतसन्दर्भानुगुणमवतारयति—**नन्वित्यादि**। तात्पर्यशक्तिर्भविष्यतीति।

सत्यैवेति कैश्चिद्विद्वद्भिरास्थितम् । यैरप्यसत्यत्वमस्या नाभ्युपेयते तैर्वाक्यार्थपदार्थयोर्घटतदुपादानकारणन्यायोऽभ्युपगन्तव्यः । यथाहि घटे निष्पन्ने तदुपादानकारणानां न पृथगुपलम्भस्तथैव वाक्ये तदर्थे वा प्रतीते पदतदर्थानां तेषां तदा विभक्ततयोपलम्भे वाक्यार्थबुद्धिरेव दूरीभवेत् । न त्वेष वाच्यव्यङ्ग्ययोर्न्यायः, न हि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरी-

लोचनम्

**कैश्चिदिति** वैयाकरणैः । **यैरपीति** भट्टप्रभृतिभिः । तमेव न्यायं व्याचष्टे—**यथाहीति** । **तदुपादानकारणानामिति** । समवायिकारणानि कपालानि अनयोक्त्या निरूपितानि । सौगतकापिलमते तु यद्यप्युपादातव्यघटकाले उपादानानां न सत्ता एकत्र क्षणक्षयित्वेन परत्र तिरोभूतत्वेन तथापि पृथक्तया नास्त्युपलम्भ इतीयत्यंशे दृष्टान्तः । **दूरीभवेदिति** । अर्थैकत्वस्याभावादिति भावः ।

बालप्रिया

**अर्थान्तर** इति शेषः । अर्थान्तरप्रतीत्यनुकूला वाक्यस्य या शक्तिस्सा तात्पर्यशक्तिरेव न त्वदभिमतेति भावः । वृत्तौ 'न चे'त्यादि । यथा पदार्थे प्रतीते तात्पर्यशक्त्या वाक्यार्थो गम्यते, तथा वाक्यार्थे प्रतीतेऽर्थान्तरञ्चेति न युक्तमित्यर्थः । अर्थान्तरं तात्पर्यशक्तिगम्यं पदसमुदायगम्यत्वात्, वाक्यार्थवदित्यनुमानमत्र शङ्कितुरभिप्रेतम् । न चेत्यत्र हेतुमाह—'यत' इत्यादि । अनेन दृष्टान्तवैषम्यादिति हेतुर्दर्शितः । 'असत्यैवे'ति । स्फोटरूपवाक्यार्थस्यैव सत्यत्वादिति भावः । लोचने—**भट्टप्रभृतिभिरिति** । प्रभृतिपदेन नैयायिकादीनां ग्रहणम् । **समवायीति** । उत्पद्यमानं वस्तु यत्र समवैति तत्समवायकारणम् । **कपालानि** शकलानि । **अनयोक्त्या** उपादानकारणशब्देन । **निरूपितानि** दर्शितानि । ननु यैरपीति सामान्येनोक्तिर्न घटते सौतगकापिलमतयोरुपादेयकाले उपादानाभावादिति शङ्कते—**सौगतेत्यादि** । न सत्तेत्यत्र हेतुमाह—**एकत्रेत्यादि** । **एकत्र** सौगतमते । **क्षणेति** । उपादानानामित्यनुषज्यते । यत्सत्तत्क्षणिकमिति हि तन्मतम् । **अपरत्र** कापिलमते । **तिरोभूतत्वेन** उपादानानां तिरोभावेन । समाधत्ते—**तथापीत्यादि** । वृत्तौ 'वाक्य' इत्यादि । यद्यपि पदार्थवाक्यार्थयोरेव प्रकृतत्वं, तथापि पदवाक्यग्रहणं दृष्टान्तार्थम् । 'पदतदर्थाना'मिति । न पृथगुपलम्भ इत्यनुषङ्गः । वाक्ये प्रतीते तस्मात्पदानां वाक्यार्थे प्रतीते तस्मात्पदार्थानाञ्च पृथक्तया उपलम्भो नास्तीत्यर्थः । पृथगुपलम्भे दोषं दर्शयति—'तेषामि'त्यादि । 'तेषां' पदतदर्थानाम् । 'तदा' तत्प्रतीतिकाले । 'विभक्ततया' वाक्याद्वाक्यार्थाच्च विभागेन । 'दूरीभवेदि'ति । पदार्थप्रतीतेर्दूरे भवेदित्यर्थः । अत्र गम्यं हेतुं दर्शयति लोचने—**अर्थैकत्वस्याभावादिति** पदार्थवाक्यार्थ-

भवति, वाच्यावभासाविनाभावेन तस्य प्रकाशनात् । तस्माद्घटप्रदीपन्याय-स्तयोः, यथैव हि प्रदीपद्वारेण घटप्रतीतावुत्पन्नायां न प्रदीपप्रकाशो निवर्तते तद्वद्व्यङ्ग्यप्रतीतौ वाच्यावभासः । यत्तु प्रथमोद्द्योते 'यथा पदार्थद्वारेण' इत्याद्युक्तं तदुपायत्वमात्रात्साम्यविवक्षया ।

नन्वेवं युगपदर्थद्वययोगित्वं वाक्यस्य प्राप्तं तद्भावे च तस्य वाक्यतैव विघटते, तस्या ऐकार्थ्यलक्षणत्वात्; नैष दोषः; गुणप्रधानभावेन तयोर्व्यवस्थानात् । व्यङ्ग्यस्य हि क्वचित्प्राधान्यं वाच्यस्योपसर्जनभावः

लोचनम्

एवं पदार्थवाक्यार्थन्यायं तात्पर्यशक्तिसाधकं प्रकृते विषये निराकृत्याभिमतां प्रकाशशक्तिं साधयितुं तदुचितं प्रदीपघटन्यायं प्रकृते योजयन्नाह—**तस्मादिति** । यतोऽसौ पदार्थवाक्यार्थन्यायो नेह युक्तस्तस्मात्, प्रकृतं न्यायं व्याकरणपूर्वकं दार्ष्टान्तिके योजयति—**यथैव हीति** ।

ननु पूर्वमुक्तम्—

यथा पदार्थद्वारेण वाक्यार्थः स प्रतीयते ।
वाक्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः ॥

इति तत्कथं स एव न्याय इह यत्नेन निराकृत इत्याशङ्क्याह—**यत्त्विति । तदिति।** न तु सर्वथा साम्येनेत्यर्थः । **एवमिति** । प्रदीपघटवद्युगपदुभयावभासप्रकारेणेत्यर्थः । तस्या इति वाक्यतायाः । ऐकार्थ्यलक्षणमर्थैकत्वाद्धि वाक्यमेकमित्युक्तम्[1] । सकृत्

बालप्रिया

प्रतीत्योः प्रयोजनैक्यस्याभावादित्यर्थः । दूरीभावश्च नेष्ट इत्यतस्तयोः पृथगुपलम्भो नाभ्युपेय इति भावः । प्रकृते विशेषमाह—'न त्वेष' इत्यादि । कुत इत्यत आह—'न ही'त्यादि । न हि दूरीभवतीति सम्बन्धः। अत्र हेतुमाह—'वाच्ये'त्यादि । वाच्येन सह व्यङ्ग्यस्य पृथक्प्रतीतेरित्यर्थः । लोचने 'तस्मादि'त्यादिग्रन्थमवतारयति—**एवमित्यादि** । **प्रकृतन्यायं** घटप्रदीपन्यायम् । **व्याकरणपूर्वकं** विवरणपूर्वकम् । तदुपायत्वमात्रात्साम्येत्यत्रत्यमात्रपदव्यावर्त्यं दर्शयति—**न त्वित्यादि । ऐकार्थ्यलक्षणमिति** । एकः अर्थो यस्य तस्य भावः ऐकार्थ्यम् । अस्य लक्षणत्वे प्रमाणमाह—**अर्थैकत्वादिति** । नन्वेकार्थत्वं न लक्षणं श्लेषालङ्कारविषयस्यानेकार्थस्यापि वाक्यत्वादिति शङ्कामभिप्रायप्रदर्शनेन परिहरति—**सकृदित्यादि । यत्रैव यदर्थं**

१. 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्यात्' इति जैमिनिसूत्रं द्रष्टव्यम् ।

क्वचिद्वाच्यस्य प्राधान्यमपरस्य गुणभावः। तत्र व्यङ्ग्यप्राधान्ये ध्वनिरित्युक्तमेव; वाच्यप्राधान्ये तु प्रकारान्तरं निर्देक्ष्यते। तस्मात्स्थितमेतत्—व्यङ्ग्यपरत्वेऽपि काव्यस्य न व्यङ्ग्यस्याविधेयत्वमपि तु व्यङ्ग्यत्वमेव।

किं च व्यङ्ग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावद्भवद्भिर्नाभ्युपगन्तव्यमतत्परत्वाच्छब्दस्य। तदस्ति तावद्व्यङ्ग्यः शब्दानां कश्चिद्विषय इति। यत्रापि तस्य प्राधान्यं तत्रापि किमिति तस्य स्वरूपमपह्नूयते।

लोचनम्

श्रुतो हि शब्दो यत्रैव समयस्मृतिं करोति स चेदनेनैवागमितः तद्विरम्यव्यापाराभावात्समयस्मरणानां बहूनां युगपदयोगात्कोऽर्थभेदस्यावसरः। पुनः श्रुतस्तु स्मृतो वापि नासाविति भावः। तयोरिति वाच्यव्यङ्ग्ययोः। तत्रेति। उभयोः प्रकारयोर्मध्याद्यदा प्रथमः प्रकार इत्यर्थः। प्रकारान्तरमिति। गुणीभूतव्यङ्ग्यसञ्ज्ञितम्। व्यङ्ग्यत्वमेवेति प्रकाश्यत्वमेवेत्यर्थः।

ननु यत्परः शब्दः स शब्दार्थ इति व्यङ्ग्यस्य प्राधान्ये वाच्यत्वमेव न्याय्यम्, तर्ह्यप्राधान्ये किं युक्तं व्यङ्ग्यत्वमिति चेत्सिद्धो नः पक्षः, एतदाह—किञ्चेति। ननु प्राधान्ये मा भूद्व्यङ्ग्यत्वमित्याशङ्क्याह—यत्रापीति। अर्थान्तरत्वं सम्बन्धिसम्ब-

बालप्रिया

एव। समयस्मृतिं सङ्केतस्मरणम्। करोति उद्बोधकत्वाज्जनयति। सः सोऽर्थः। अनेनैव सकृच्छ्रुतेन शब्देनैव। अवगमितश्चेत् प्रकरणादिसहकारेण बोधितो यदि। तत् तर्हि कोऽर्थभेदस्यावसर इत्यनेनास्य सम्बन्धः। ननु समयस्मरणञ्चेदर्थावगमे कारणं, तर्हि तान्यपि बहूनि भवन्त्वित्याशङ्कायां तानि क्रमेण युगपद्वेति विकल्पाद्यं निराकरोति—विरम्यव्यापाराभावादिति। द्वितीयं निराकरोति—समयेत्यादि। ननु श्लेषविषये बह्वर्थत्वं दृश्यत इत्यत आह—पुनरित्यादि। श्रुतस्तु स्मृतो वापीत्युभयत्र शब्द इति शेषः। यद्वा श्रुतः अनुसंहितः शब्द इति शेषः। स्मृतः अर्थ इति शेषः। नासाविति। पूर्वः शब्दोऽर्थो वा नेत्यर्थः। तथाच श्लेषस्थले आवृत्त्या बोधाद्वाक्यतदर्थौ भिन्नौ तयोरेकत्वञ्चौपचारिकमिति भावः। वृत्तौ 'नैष दोष' इति। न वाक्यभेदरूपदोष इत्यर्थः। 'गुणे'ति। तथाच वाच्योपसर्जनको व्यङ्ग्यो व्यङ्ग्योपसर्जनकवाच्यो वैक एवार्थो वाक्ये न प्रतिपाद्यत इति भावः।

किञ्चेत्यादिग्रन्थमवतारयति लोचने—नन्वित्यादि। न्याय्यमित्यन्तः पूर्वपक्षः। तर्ह्यप्राधान्ये किं युक्तमिति सिद्धान्ती पृष्ट्वा पूर्वपक्षिण उत्तरमनुवदन्नाह—व्यङ्ग्यत्वमिति चेदित्यादि। अनेनास्तितावदित्यादिवृत्तिग्रन्थो विवृतः। भावमाह—अर्थान्तरत्वमित्यादि। अर्थान्तरत्वं मुख्यार्थभिन्नार्थत्वम्। सम्बन्धिसम्बन्धि-

एवं तावद्वाचकत्वादन्यदेव व्यञ्जकत्वम्; इतश्च वाचकत्वाद्व्यञ्जकत्वस्यान्यत्वं यद्वाचकत्वं शब्दैकाश्रयमितरत्तु शब्दाश्रयमर्थाश्रयं च शब्दार्थयोर्द्वयोरपि व्यञ्जकत्वस्य प्रतिपादितत्वात्।

गुणवृत्तिस्तूपचारेण लक्षणया चोभयाश्रयापि भवति। किन्तु ततोऽपि व्यञ्जकत्वं स्वरूपतो विषयतश्च भिद्यते। रूपभेदस्तावदयम्—यद-

लोचनम्

न्धित्वमनुपयुक्तसमयत्वमिति व्यङ्ग्यतायां निबन्धनं, तच्च प्राधान्येऽपि विद्यत इति स्वरूपमहेयमेवेति भावः। एतदुपसंहरति—**एवमिति**। विषयभेदेन स्वरूपभेदेन चेत्यर्थः। **तावदिति** वक्तव्यान्तरमासूत्रयति। तदेवाह—**इतश्चेति**। अनेन सामग्रीभेदात्कारणभेदोऽप्यस्तीति दर्शयति। एतच्च वितत्य ध्वनिलक्षणे 'यत्रार्थः शब्दो वा' इति वाग्रहणं, 'व्यङ्क्तः' इति द्विवचनं च व्याचक्षाणैरस्माभिः प्रथमोद्द्योत एव दर्शितमिति पुनर्न विस्तार्यते।

एवं विषयभेदात्स्वरूपभेदात्कारणभेदाच्च वाचकत्वान्मुख्यात्प्रकाशकत्वस्य भेदं प्रतिपाद्योभयाश्रयत्वाविशेषात्तर्हि व्यञ्जकत्वगौणत्वयोः को भेद इत्याशङ्क्यामुख्यादपि प्रतिपादयितुमाह—**गुणवृत्तिरिति**। **उभयाश्रयापीति** शब्दार्थाश्रया।

बालप्रिया

त्वमिति। शब्दस्य सम्बन्धी वाच्यो लक्ष्यो वार्थः तत्सम्बन्धित्वमित्यर्थः। अनेन शब्दगम्यत्वं दर्शितम्। अर्थान्तरत्वे हेतुमाह-**अनुपयुक्तसमयत्वमिति**। सङ्केतग्रहानपेक्षप्रतीतिविषयत्वमित्यर्थः। **इतीति**। एतन्त्रयमित्यर्थः। नन्वेतदस्तु ततः प्रकृते किमित्यत आह-**तच्चेत्यादि**। **प्राधान्येऽपीति**। व्यङ्ग्यस्येति शेषः। **वक्तव्यान्तरमासूत्रयतीति**। प्राथम्यार्थकत्वात्तावच्छब्दस्येति भावः। **तदेवेति**। वक्तव्यान्तरमेवेत्यर्थः। वृत्ताविति इत्यनेन यदित्यादिवक्ष्यमाणः आश्रयभेदरूपो हेतुः परामृश्यत इत्यक्षिप्रेत्य व्याचष्टे-**अनेनेत्यादि**। **सामग्रीभेदादिति**। सहकारिवर्गभेदादित्यर्थः। वृत्तावाश्रयशब्देन कारणमुच्यत इत्याह-**कारणभेदोऽपीति**। अर्थस्य व्यञ्जकत्वाश्रयत्वं शब्दायत्तमेवेति यद्यपि शब्द एव वाचकत्वस्येव व्यञ्जकत्वस्यापि मुख्य आश्रय इति कारणैक्यमस्ति, तथापि सहकारिभेदात्कारणरूपस्य शब्दस्य भेदोऽपीत्यर्थः। शब्दार्थयोरित्यादेर्विवरणम्—**एतच्चेत्यादि**।

'गुणवृत्तिस्त्वि'त्यादिग्रन्थं वृत्तानुवादपूर्वकमवतारयति—**एवमित्यादिना**। एवं मुख्याद्वाचकत्वादभेदं प्रतिपाद्य अमुख्यादपि प्रतिपादयितुमाहेति सम्बन्धः। किमिदानीं तत्प्रतिपादनमित्यत उक्तः उभयाश्रयत्वाविशेषादित्यारभ्याशङ्क्येत्यन्तग्रन्थः। **तर्हीति**। यदि वाचकत्वव्यञ्जकत्वयोर्भेदः, तर्हीत्यर्थः। क इति। नेत्यर्थः। उपचारलक्षणारूपोभयेत्यर्थभ्रमः स्यादत उभयाश्रयेत्येतद्व्याचष्टे-**शब्देत्यादि**। उपचारेण लक्ष-

मुख्यतया व्यापारो गुणवृत्तिः प्रसिद्धा । व्यञ्जकत्वं तु मुख्यतयैव शब्दस्य व्यापारः । न ह्यर्थाद्व्यङ्ग्यत्रयप्रतीतिर्या तस्या अमुख्यत्वं मनागपि लक्ष्यते।

अयं चान्यः स्वरूपभेदः— यद्गुणवृत्तिरमुख्यत्वेन व्यवस्थितं वाचकत्वमेवोच्यते । व्यञ्जकत्वं तु वाचकत्वादत्यन्तं विभिन्नमेव । एतच्च प्रतिपादितम् । अयं चापरो रूपभेदो यद्गुणवृत्तौ यदार्थोऽर्थान्तरमुपलक्षयति । तदोपलक्षणीयार्थात्मना परिणत एवसौ सम्पद्यते । यथा 'गङ्गायां घोषः' इत्यादौ । व्यञ्जकत्वमार्गे तु यदार्थोऽर्थान्तरं द्योतयति तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवत् । यथा—'लीलाकमलपत्राणि गणयामास पार्वती' इत्यादौ । यदि च यत्रातिरस्कृतस्वप्रतीतिरर्थोऽर्थान्तरं लक्षयति तत्र लक्षणाव्यवहारः क्रियते, तदेवं सति लक्षणैव मुख्यः शब्दव्यापार इति प्राप्तम् । यस्मात्प्रायेण वाक्यानां वाच्यव्यतिरिक्ततात्पर्यविषयार्थावभासित्वम् ।

## लोचनम्

उपचारलक्षणयोः प्रथमोद्द्योत एव विभज्य निर्णीतं स्वरूपमिति न पुनर्लिख्यते । **मुख्यतयैवे**ति । अस्खलद्गतित्वेनेत्यर्थः । **व्यङ्ग्यत्रयमि**ति । वस्त्वलङ्काररसात्मकम् । **वाचकत्वमेवे**ति । तत्रापि हि तथैव समयोपयोगोऽस्त्येवेत्यर्थः । **प्रतिपादितमि**ति । इदानीमेव । **परिणत** इति । स्वेन रूपेणानिर्भासमान इत्यर्थः ।

## बालप्रिया

णया च या गुणवृत्तिः सा उभयाश्रयापीति वृत्तौ योजनेति भावः । पूर्वमुक्तं स्मारयति—**उपचारलक्षणयोरि**ति । मुख्यतयैवेत्यत्र मुख्यत्वं प्रकृतानुरोधेन व्याचष्टे—**अस्खलद्गतित्वेने**ति वाचकत्वमेव गुणवृत्तिरित्येतद्विवृणोति—**तत्रापी**त्यादि । **तत्रापि** गुणवृत्तावपि । **तथैव** यथावाचकत्वे तथैव । **समयोपयोगः** सङ्केतग्रहणोपयोगः । **अस्त्येवेत्यर्थ** इति । गुणवृत्तेरभिधेयाविनाभूतप्रतीतित्वादिति भावः । वृत्तौ 'यदार्थोऽर्थान्तरमि' ति । 'अर्थः' प्रवाहादिः । 'अर्थान्तरं' तीरादिकम् । परिणामो नाम पूर्वरूपपरित्यागेन रूपान्तरापत्तिः । परिणतपदं प्रकृतानुरोधेन व्याचष्टे लोचने—**स्वेने**त्यादि । वृत्तौ 'असा' विति । प्रवाहाद्यर्थ इत्यर्थः । 'यदार्थ' इति । 'अर्थः' लीलाकमलपत्रगणनादिः । 'अर्थान्तरं' लज्जादिकम् । 'स्वरूपं प्रकाशयन्नेवे' त्यादौ दृष्टान्तमाह—'प्रदीपवदि' ति । अर्थोऽर्थान्तरं द्योतयतीत्युक्तस्योदाहरणमाह—'**यथा लीले**'त्यादि । माभूदत्यन्ततिरस्कृतवाच्यस्थले गुणवृत्तिव्यञ्जकत्वयोः स्वरूपाभेदः, तद-

ननु त्वत्पक्षेऽपि यदार्थो व्यङ्ग्यत्रयं प्रकाशयति तदा शब्दस्य कीदृशो व्यापारः। उच्यते—प्रकरणाद्यवच्छिन्नशब्दवशेनैवार्थस्य तथाविधं व्यञ्जकत्वमिति शब्दस्य तत्रोपयोगः कथमपह्नूयते। विषयभेदोऽपि गुणवृत्तिव्यञ्जकत्वयोः स्पष्ट एव। यतो व्यञ्जकत्वस्य रसादयोऽलङ्कारविशेषा व्यङ्ग्यरूपावच्छिन्नं वस्तु चेति त्रयं विषयः। तत्र रसादिप्रती-

लोचनम्

कीदृश इति मुख्यो वा न वा प्रकारान्तराभावात्। मुख्यत्वे वाचकत्वमन्यथा गुणवृत्तिः, गुणो निमित्तं सादृश्यादि तद्द्वारिका वृत्तिः शब्दस्य व्यापारो गुणवृत्तिरिति भावः। मुख्य एवासौ व्यापारः सामग्रीभेदाच्च वाचकत्वाद्व्यतिरिच्यत इत्यभिप्रायेणाह—**उच्यत** इति। एवमस्खलद्गतित्वात् कथञ्चिदपि। समयानुपयोगात्पृथगाभासमानत्वाच्चेति त्रिभिः प्रकारैः प्रकाशकत्वस्यैतद्विपरीतरूपत्रयायाश्च गुणवृत्तेः स्वरूपभेदं व्याख्याय विषयभेदमप्याह—**विषयभेदोऽपीति**। वस्तुमात्रं गुणवृत्तेरपि विषय इत्यभिप्रायेण विशेषयति—**व्यङ्ग्य-**

बालप्रिया

न्यस्थले तु स्यादित्याशङ्क्य परिहरति—'यदि चे' त्यादि। 'लक्षणाव्यवहार' इति। न व्यञ्जकत्वव्यवहार इति शेषः। मुख्यः शब्दव्यापारो लक्षणैवेति सम्बन्धः। 'इति प्राप्तमि' ति। स्यादिति शेषः। अत्र हेतुमाह—'यस्मादि' त्यादि।

उक्तमसहमानस्य प्रतिबन्द्या प्रत्यवस्थानम्-'नन्वि' त्यादि। तदभिप्रायं व्याचष्टे लोचने—**मुख्यो वेत्यादि**। कल्पान्तराकरणे हेतुमाह-**प्रकारान्तराभावादिति**। तस्मिन्सति किं स्यादित्यतः क्रमेण दूषणमाह—**मुख्यत्व** इत्यादि। अमुख्यत्वे गुणवृत्तित्वं गुणवृत्तिशब्दार्थविवरणेन साधयति—**गुणो निमित्तमित्यादि**। उच्यत इत्यादिग्रन्थस्य भावमाह—**मुख्य** इत्यादि। **असौ व्यापारः** शब्दव्यापारः। ननु मुख्यत्वे वाचकत्वादभेदस्स्यादित्यत आह—**सामग्रीभेदादिति**। [वृत्तौ] 'प्रकरणे' त्यादिना सामग्रीभेदः प्रदर्शितः। 'तत्रे' ति। अर्थेन व्यङ्ग्यत्रयप्रकाशनस्थल इत्यर्थः। 'उपयोग' इति। व्यञ्जकत्वलक्षणोपयोग इत्यर्थः। गुणवृत्तिव्यञ्जकत्वयोः स्वरूपभेदहेतून् बहुग्रन्थोक्तान् सुग्रहत्वायैकग्रन्थेन वृत्त्यभिप्रायतया उपसंहरन्नुत्तरग्रन्थं तात्पर्योक्त्यावतारयति-**एवमित्यादि**। **अस्खलद्गतित्वादिति**। स्खलद्गतित्वाभावादित्यर्थः। **कथञ्चिदपीत्यादि**। असङ्केतितार्थप्रतिपादकत्वादित्यर्थः। **पृथगिति**। वाच्यार्थात्पृथगित्यर्थः। त्रिभिः प्रकारैरित्यस्य गुणवृत्तेस्स्वरूपभेदमित्यनेन सम्बन्धः। **एतदिति**। एतद्विपरीतं रूपत्रयं स्खलद्गतित्वादिकं यस्यास्तस्या इत्यर्थः। **गुणवृत्तेः** गुणवृत्तितः। व्यङ्ग्येत्यादिविशेषणस्य फलमाह—**वस्तुमात्रमिति**। एवं विशेषणेऽपि कथं गुणवृत्तिविषयव्यावृत्तिरित्यतस्तात्पर्यमाह—**व्यञ्जकत्वस्येत्यादि**।

तिर्गुणवृत्तिरिति न केनचिदुच्यते न च शक्यते वक्तुम् । व्यङ्ग्यालङ्कारप्रतीतिरपि तथैव । वस्तुचारुत्वप्रतीतये स्वशब्दानभिधेयत्वेन यत्प्रतिपिपादयिषितुमिष्यते तद्व्यङ्ग्यम् । तच्च न सर्वं गुणवृत्तेर्विषयः प्रसिद्ध्यनुरोधाभ्यामपि गौणानां शब्दानां प्रयोगदर्शनात् । तथोक्तं प्राक् । यदपि च गुणवृत्तेर्विषयस्तदपि च व्यञ्जकत्वानुप्रवेशेन । तस्माद्गुणवृत्तेरपि व्य-

## लोचनम्

**रूपावच्छिन्नमिति** । व्यञ्जकत्वस्य यो विषयः स गुणवृत्तेर्न विषयः अन्यश्च तस्या विषयभेदो योज्यः । तत्र प्रथमं प्रकारमाह—**तत्रेति** । **न च शक्यत इति** । लक्षणासामग्र्यास्तत्राविद्यमानत्वादिति हि पूर्वमेवोक्तम् । **तथैवेति** । न तत्र गुणवृत्तिर्युक्तेत्यर्थः । वस्तुनो यत्पूर्वं विशेषणं कृतं तद्व्याचष्टे—**चारुत्वप्रतीतय इति** । **न सर्वमिति** । किंचित्तु भवति । यथा—'निःश्वासान्ध इवादर्शः' इति । यदुक्तम्—'कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम्' इति । प्रसिद्धितो लावण्यादयः शब्दाः, वृत्तानुरोधव्यवहारानुरोधादेः 'वदति बिसिनीपत्रशयनम्' इत्येवमादयः । **प्रागिति** । प्रथमोद्द्योते 'रूढा ये विषयेऽन्यत्र' इत्यत्रान्तरे । न सर्वमिति यथास्माभिर्व्याख्यातं तथा स्फुटयति—**यदपि चेति** । गुणवृत्तेरिति पञ्चमी । अधुनेतररूपोपजीवकत्वेन तदितरस्मात्तदितररूपोपजीवकत्वेन च तदितरस्मादित्यनेन पर्यायेण वाचकत्वाद्गु-

## बालप्रिया

**वस्तुमात्रं** भवतु गुणवृत्तेर्विषयः व्यङ्ग्यत्वावच्छिन्नन्तु न तद्विषयः, यतो व्यङ्ग्यत्वं व्यञ्जनाव्यापारविषयत्वमित्यर्थः । **अन्यश्चेति** । प्रथमोद्योतोक्तश्चेत्यर्थः । **तस्याः** गुणवृत्तितः । **योज्यः** अत्रानुसन्धातव्यः । न च शक्यते वक्तुमित्यत्र गम्यं हेतुमाह-**लक्षणेत्यादि** । तथैवेत्येतत्तात्पर्यतो व्याचष्टे-**नेत्यादि** । **विशेषणमिति** । व्यङ्ग्यरूपावच्छिन्नमिति विशेषणमित्यर्थः । वृत्तौ 'रसादिप्रतीति' रिति । रसादिप्रतीतिहेतुरित्यर्थः । 'वस्त्विव' त्यादि । यद्वस्त्विवति सम्बन्धः । 'चारुत्वे'ति । काव्यचारुत्वेत्यर्थः । 'तद्व्यङ्ग्यमि'ति । तथाविधं व्यङ्ग्यं व्यङ्ग्यरूपावच्छिन्नमित्यनेन विवक्षितमित्यर्थः । सर्वमित्यनेन गम्यमाह लोचने—**किञ्चिदिति** । **यदुक्तमिति** । यस्मादुक्तमित्यर्थः । प्रसिध्यनुरोधाभ्यामित्येतद्विवृणोति—**प्रसिद्धित इत्यादि** । **प्रसिद्धितः** रूढितः । **यथा व्याख्यातमिति** । किञ्चित्तु भवतीति व्याख्यातम् । **स्फुटयतीति** । स्वयमिति शेषः । गुणवृत्तेरपीत्यत्र षष्ठीभ्रमस्स्यादत आह—**पञ्चमीति** । वाचकत्वेत्यादिग्रन्थं भेदप्रदर्शनपरतया व्याख्यास्यन्नवतारयति—**अधुनेत्यादि** । **इतरेति** । इतररूपं गुणवृत्तिस्तदुपजीवकत्वेन तत्समाश्रयत्वेनेत्यर्थः । **तदितरस्मादिति** । वाचकत्वादित्यर्थः । **तदितरेत्यादि** । तदितररूपं वाचकत्वं तदुपजीवकत्वेनेत्यर्थः ।

ञ्जकत्वस्यात्यन्तविलक्षणत्वम् । वाचकत्वगुणवृत्तिविलक्षणस्यापि च तस्य तदुभयाश्रयत्वेन व्यवस्थानम् ।

व्यञ्जकत्वं हि क्वचिद्वाचकत्वाश्रयेण व्यवतिष्ठते, यथा विवक्षितान्यपरवाच्ये ध्वनौ । क्वचित्तु गुणवृत्त्याश्रयेण यथा अविवक्षितवाच्ये ध्वनौ । तदुभयाश्रयत्वप्रतिपादनायैव च ध्वनेः प्रथमतरं द्वौ प्रभेदावुपन्यस्तौ । तदुभयाश्रितत्वाच्च तदेकरूपत्वं तस्य न शक्यते वक्तुम् । यस्मान्न तद्वाचकत्वैकरूपमेव, क्वचिल्लक्षणाश्रयेण वृत्तेः । न च लक्षणै-

लोचनम्

णवृत्तेश्च द्वितयादपि भिन्नं व्यञ्जकत्वमित्युपपादयति—**वाचकत्वे**ति । चोऽवधारणे भिन्नक्रमः, अपिशब्दोऽपि न केवलं पूर्वोक्तो हेतुकलापो यावत्तदुभयाश्रयत्वेन मुख्योपचाराश्रयत्वेन यद्व्यवस्थानं तदपि वाचकगुणवृत्तिविलक्षणस्यैवेति व्याप्तिघटनम् । तेनायं तात्पर्यार्थः—तदुभयाश्रयत्वेन व्यवस्थानात्तदुभयवैलक्षण्यमिति ।

एतदेव विभजते—**व्यञ्जकत्वं ही**ति । **प्रथमतर**मिति । प्रथमोद्द्योते 'स च' इत्यादिना ग्रन्थेन । हेत्वन्तरमपि सूचयति—**न चे**ति । वाचकत्वगौणत्वोभयवृत्तान्त-

बालप्रिया

**तदितरस्मा**दिति । गुणवृत्तिप्रकारादित्यर्थः । उभयत्र भिन्नमिति शेषः । **पर्यायेण** क्रमेण । **च** इति । 'विलक्षणस्यापि चे'त्यत्रत्यचकार इत्यर्थः । **भिन्नक्रम** इति । विलक्षणस्येत्यनेन योज्य इत्यर्थः । **अपिशब्दोऽपी**ति । भिन्नक्रम इत्यनुषज्यते । क्वचिद्ग्रन्थे तथा पाठश्च । अपिशब्दस्य व्यवस्थानमित्यनेन सम्बन्ध इति भावः । अपिशब्दगम्यमर्थमाह—**न केवल**मित्यादि । तदुभयाश्रयत्वेनेत्यस्य विवरणम्—**मुख्ये**त्यादि । वाचकत्वगुणवृत्त्युभयाश्रयत्वेनेत्यर्थः । **इति व्याप्तिघटन**मिति । यद्यदाश्रयत्वेनावतिष्ठते तत्तद्विलक्षणमिति व्याप्तिर्दर्शितेत्यर्थः । **तदुभयाश्रयत्वेने**ति । व्यञ्जकत्वस्येति शेषः । व्यञ्जकत्वं वाचकत्वाद्गुणवृत्तेश्च विलक्षणं तदुभयाश्रयत्वेनावस्थानादित्यर्थः ।

**एतदेवे**ति । उक्तमेवेत्यर्थः । **विभजते** विभज्य दर्शयति । **प्रथमतर**मिति । द्वितीयोद्योतापेक्षया तरपः प्रयोग इति व्याचष्टे—**प्रथमे**ति । वृत्तौ 'न चे' त्यादि । तदित्यनुषज्यते । व्यञ्जकत्वमित्यर्थः । 'उभयधर्मत्वेनैव' वाचकत्वगुणवृत्त्युभयाश्रयत्वेन हेतुनैव । 'तदेकैकरूपं न भवति' वाचकत्वादिभिन्नं भवति । इति न चेति सम्बन्धः । 'यावदि' त्यादि । यावत् किन्तु । 'वाचकत्वे'ति । वाचकत्वलक्षणादिरूपैः रहिता ये शब्दाः तद्धर्मत्वेनापीत्यर्थः । तत्तदेकैकरूपं न भवतीत्यस्यानुषङ्गः । न चोभयेत्यादिग्रन्थमवतारयति लोचने—**हेत्वन्तर**मित्यादि । उक्ते साध्ये इति

करूपमेवान्यत्र वाचकत्वाश्रयेण व्यवस्थानात् । न चोभयधर्मत्वेनैव तदेकैकरूपं न भवति । यावद्वाचकत्वलक्षणादिरूपरहितशब्दधर्मत्वेनापि । तथाहि गीतध्वनीनामपि व्यञ्जकत्वमस्ति रसादिविषयम् । न च तेषां वाचकत्वं लक्षणा वा कथञ्चिल्लक्ष्यते । शब्दादन्यत्रापि विषये व्यञ्जकत्वस्य दर्शनाद्वाचकत्वादिशब्दधर्मप्रकारत्वमयुक्तं वक्तुम् । यदि च वाचकत्वलक्षणादीनां शब्दप्रकाराणां प्रसिद्धप्रकारविलक्षणत्वेऽपि व्यञ्जकत्वं प्रकारत्वेन परिकल्प्यते तच्छब्दस्यैव प्रकारत्वेन कस्मान्न परिक-

### लोचनम्

वैलक्षण्यादिति सूचितो हेतुः । तमेव प्रकाशयति—**तथाहीत्या**दिना । **तेषामिति** । गीतादिशब्दानाम् । हेत्वन्तरमपि सूचयति—**शब्दादन्यत्रे**ति । वाचकत्वगौणत्वाभ्यामन्यद्व्यञ्जकत्वं शब्दादन्यत्रापि वर्तमानत्वात्प्रमेयत्वादिवदिति हेतुः सूचितः । नन्वन्यत्रावाचके यद्व्यञ्जकत्वं तद्भवतु वाचकत्वादेर्विलक्षणम्, वाचके तु यद्व्यञ्जकत्वं तदविलक्षणमेवास्त्वित्याशङ्क्याह—**यदी**ति । आदिपदेन गौणं गृह्यते । **शब्दस्यै-**

### बालप्रिया

शेषः । तमेव हेतुं स्फुटयति–**वाचकत्वे**त्यादि । वाचकत्वगौणत्वोभयस्य यो वृत्तान्तः तद्वैलक्षण्यात्तदुभयरहितवृत्तित्वादित्यर्थः । **गौणत्वेति** । लाक्षणिकत्वस्याप्युपलक्षणम् । शब्दादित्यादिदर्शनादित्यन्तग्रन्थो न पूर्वान्वयी, किन्तु उत्तरान्वयीत्याशयेनावतारयति—**हेत्वन्तरमिति** । तमेव हेत्वन्तरमवयवान्तरेण सह दर्शयति—**वाचकत्वे**त्यादि । भिन्नमित्यन्तं वाचकत्वादिशब्दधर्मप्रकारत्वमशक्यं वक्तुमित्यस्य विवरणम् । **नन्वित्यादि** । **अवाचक** इति । गीतध्वन्यादावित्यर्थः । **अविलक्षणमि**ति । वाचकत्वादेरित्यनुषङ्गः । **गौणमिति** । गौणीवृत्तिरित्यर्थः । वृत्तौ 'शब्दप्रकाराणामि'ति निर्धारणे षष्ठी, प्रकारत्वेनेत्यनेनास्य सम्बन्धः । शब्दप्रकाराणां मध्ये यः प्रकारस्तत्त्वेनेत्यर्थः । 'प्रसिद्धप्रकारविलक्षणत्वेऽपी'ति । व्यञ्जकत्वस्य प्रसिद्धप्रकारेभ्यो वाचकत्वादिभ्यो वैलक्षण्ये वस्तुतस्सत्यपीत्यर्थः । 'तदि'ति । तर्हीत्यर्थः । 'शब्दस्यैव प्रकारत्वेने'ति । शब्दावान्तरभेदत्वेनेत्यर्थः । 'कस्मान्न परिकल्प्यत' इति । परिकल्पनं

१. वाचकत्वेति । अयम्भावः–व्यञ्जनम् अभिधालक्षणान्यतरत्वावच्छिन्नप्रतियोगिताकभेदवत् शब्दवृत्तित्वे सति शब्देतरवृत्तित्वात् प्रमेयत्ववत् । गौण्याः पृथग्वृत्तित्ववादिमीमांसकनये तु तदुभयगौण्यन्यतमत्वावच्छिन्नप्रतियोगिताकभेदवदिति साध्यरूपं बोध्यम् ।

कल्प्यते। तदेवं शाब्दे व्यवहारे त्रयः प्रकाराः—वाचकत्वं गुणवृत्तिर्व्यञ्जकत्वं च। तत्र व्यञ्जकत्वे यदा व्यङ्ग्यप्राधान्यं तदा ध्वनिः, तस्य चाविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्वौ प्रभेदावनुक्रान्तौ प्रथमतरं तौ सविस्तरं निर्णीतौ।

अन्यो ब्रूयात्—ननु विवक्षितान्यपरवाच्ये ध्वनौ गुणवृत्तिता

लोचनम्

वेति। व्यञ्जकत्वं वाचकत्वमिति यदि पर्यायौ कल्प्येते तर्हि व्यञ्जकत्वं शब्द इत्यपि पर्यायता कस्मान्न कल्प्यते, इच्छाया अव्याहतत्वात्। व्यञ्जकत्वस्य तु विविक्तं स्वरूपं दर्शितं तद्विषयान्तरे कथं विपर्यस्यताम्। एवं हि पर्वतगतो धूमोऽनग्निजोऽपि स्यादिति भावः। अधुनोपपादितं विभागमुपसंहरति—**तदेवमिति**। व्यवहारग्रहणेन समुद्रघोषादीन् व्युदस्यति।

ननु वाचकत्वरूपोपजीवकत्वाद्गुणवृत्त्यनुजीवकत्वादिति च हेतुद्वयं यदुक्तं तदविवक्षितवाच्यभागे सिद्धं न भवति तस्य लक्षणैकशरीरत्वादित्यभिप्रायेणोपक्रमते—**अन्यो ब्रूयादिति**। यद्यपि च तस्य तदुभयाश्रयत्वेन व्यवस्थानादिति ब्रुवता निर्णीततरमेवैतत्, तथापि गुणवृत्तेरविवक्षितवाच्यस्य च दुर्निरूपं वैलक्षण्यं यः पश्यति तं प्रत्याश-

बालप्रिया

स्यादित्यर्थः। विवृणोति लोचने—व्यञ्जकत्वमित्यादि। **इतीति**। इतिशब्दावित्यर्थः। **पर्यायौ** एकार्थकौ। **इत्यपीति**। इत्यनयोरपीत्यर्थः। अस्तु पर्यायतेत्यत आह—**व्यञ्जकत्वस्येत्यादि**। **विविक्तं** वाचकत्वादेर्विविक्तम्। **दर्शितमिति**। गीतध्वन्यादाविति भावः। अतश्च वाचकत्वादिरूपेण परिकल्पनमयुक्तमित्याह—**तदित्यादि**। **तद्विषयान्तर** इति। वाचकगतं व्यञ्जकत्वमित्यर्थः। **कथं विपर्यस्यतामिति**। वाचकत्वादिरूपेणेति शेषः। **एवं हीत्यादि**। वाचकाश्रयं व्यञ्जकत्वं वाचकत्वादिमूलं न चेत्पर्वतगतो धूमोऽनग्निजश्च स्यादतो विपर्यासो न युक्त इति भावः। **विभागमुपसंहरतीति**। वाचकत्वगुणवृत्तिभ्यां विभक्ततया व्यञ्जकत्वस्य प्रतिपादितत्वात्प्रकारत्रयमुपपादितमेवेति भावः। **व्युदस्यतीति**। समुद्रघोषादेरभिधायकत्वाभावादिति भावः।

तात्पर्यतोऽवतारयति—**नन्वित्यादि**। उपजीवत्यपेक्षत इत्युपजीवकमनुसन्निधौ जीवतीत्यनुजीवकम्। वाचकत्वेत्यादि नावाचकत्वगुणवृत्त्युभयाश्रयत्वमेवांशे दूषणदानायानूदितम्। यथोक्तार्थोभयाश्रयत्वहेतुनैवास्य चोद्यस्य परिहृतत्वात्पुनस्तदुद्भावनपरिहारावनर्थकाविस्याशङ्क्य परिहरति—**यद्यपीत्यादि**। अविवक्षितवाच्यस्येति ध्वनेशेष रितिः। यो वैलक्षण्यं दुर्निरूपं पश्यति, तं प्रतीति सम्बन्धः। **आशङ्क्येति**। वैल-

नास्तीति यदुच्यते तद्युक्तम् । यस्माद्वाच्यवाचकप्रतीतिपूर्विका यत्रार्था-न्तरप्रतिपत्तिस्तत्र कथं गुणवृत्तिव्यवहारः, न हि गुणवृत्तौ यदा निमित्तेन केनचिद्विषयान्तरे शब्द आरोप्यते अत्यन्ततिरस्कृतस्वार्थः यथा—'अग्नि-र्माणवकः' इत्यादौ, यदा वा स्वार्थमंशेनापरित्यजंस्तत्सम्बन्धद्वारेण विष-

लोचनम्

ङ्कानिवारणार्थोऽयमुपक्रमः । अत एवाद्यभेदस्याङ्गीकरणपूर्वकमयं द्वितीयभेदाक्षेपः । **विवक्षितान्यपरवाच्य** इत्यादिना पराभ्युपगमस्य स्वाङ्गीकारी दर्श्यते । गुणवृत्ति-व्यवहाराभावे हेतुं दर्शयितुं तस्या एव गुणवृत्तेस्तावद्वृत्तान्तं दर्शयति—**न हीति** । गुणतया वृत्तिर्व्यापारो गुणवृत्तिः । गुणेन निमित्तेन सादृश्यादिना च वृत्तिः अर्थान्तर-विषयेऽपि शब्दस्य सामानाधिकरण्यमिति गौणं दर्शयति । **यदा वा स्वार्थमिति**

बालप्रिया

क्षण्यदुर्निरूपत्वाशङ्केत्यर्थः । अयमुपक्रमः वृत्तिकारोपक्रमः । अत्रोपष्टम्भकमाह—**अत एवेत्यादि** । **आद्यभेदस्य** विवक्षितान्यपरवाच्यस्य । **द्वितीयभेदेति** । अविवक्षित-वाच्येत्यर्थः । अत्र हेतुं दर्शयति—**विवक्षितेत्यादि** । न हीत्यादिग्रन्थस्य फलं दर्शय-न्नवतारयति—**गुणवृत्तीत्यादि** । **हेतुं दर्शयितुमिति** । विवक्षितान्यपरवाच्य इति शेषः । गौणलाक्षणिकोभयसाधारणं गुणवृत्तिशब्दार्थमाह—**गुणतयेत्यादि** । **गुणतया** अप्रधानतया । अभिधावृत्तिर्हि प्रधानभूता । **व्यापार** इति । शब्दस्येति शेषः । अनेन गौणस्य लाक्षणिकस्य च संग्रहः । गौणे गुणवृत्तिशब्दस्यार्थान्तरञ्चाह—**गुणेनेत्यादि** । गुणेनेत्यस्य विवरणम्—**सादृश्यादिनेति** । निमित्तेनेति तृतीयार्थकथनम् । उक्तस्यैव विवरणम्—**अर्थान्तरविषयेऽपीत्यादि** । अर्थान्तरमेव विषयस्तस्मिन् । **इति गौणं**

१. स्वार्थमंशेनापरित्यजन्निति । अग्निर्माणवक इत्यत्र अग्नेः अग्निसदृशे लाक्ष-णिकतया सादृश्यस्य भेदघटितत्वेन लक्ष्यकुक्षौ वाच्यार्थाप्रवेशाद् भवतीयं जहत्स्वार्था, गङ्गायां घोष इत्यत्र तु गङ्गापदस्य गङ्गातीरे लक्षणया लक्ष्यघटकतया शक्यस्यापि गङ्गापदार्थस्य प्रतीत्यासावजहत्स्वार्थेत्याह—स्वार्थमंशेनापरित्यजन्निति । यदा च गङ्गा-शब्दस्य तीरमात्रे लक्षणा तदैषापि जहत्स्वार्थैव समाकलनीया ।

वयन्त्वत्र विभावयामः—यत्र शक्यार्थस्य स्वरूपेण रूपान्तरेण वा पदार्थान्तरेणा-न्वयः शाब्दमतौ भासते तत्राजहत्स्वार्था, यथा यष्टयः प्रविशन्ति इत्यादौ काकेभ्यो दधि रक्ष्यतामित्येवं प्रभृतिनि च । अत्र हि यष्टीनामपि यष्टित्वेन प्रवेशनक्रियायाम-न्वयः, काकानां च दध्युपघातकत्वेन रक्षणान्वयः । पूर्वत्र उभयत्र च नाग्नेर्माणवका-न्वयः, न च गङ्गाया घोषे । तथा चात्र द्वयोर्जहत्स्वार्थैव सर्वथा । एवं च 'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणमि'ति प्रकाशीयतल्लक्षणे 'स्वसिद्धये स्वार्थस्य अन्वयप्रवेश-सिद्धये' इति प्रदीपव्याख्यानं साधु संगच्छते ।

यान्तरमाक्रामति, यथा—'गङ्गायां घोषः' इत्यादौ । तदाविवक्षितवाच्यत्वमुपपद्यते । अत एव च विवक्षितान्यपरवाच्ये ध्वनौ वाच्यवाचकयोर्द्वयोरपि स्वरूपप्रतीतिरर्थावगमनं च दृश्यत इति व्यञ्जकत्वव्यवहारो युक्त्यनुरोधी । स्वरूपं प्रकाशयन्नेव परावभासको व्यञ्जक इत्युच्यते, तथाविधे विषये वाचकत्वस्यैव व्यञ्जकत्वमिति गुणवृत्तिव्यवहारो नियमेनैव न शक्यते कर्तुम् ।

लोचनम्

लक्षणां दर्शयति । अनेन भेदद्वयेन च स्वीकृतमविवक्षितवाच्यभेदद्वयात्मकमिति सूचयति । अत एव **अत्यन्ततिरस्कृतस्वार्थशब्देन विषयान्तरमाक्रामति चेत्यनेन** शब्देन तदेव भेदद्वयं दर्शयति—**अत एव चेति** । यत एव न तत्रोक्तहेतुबलाद्गुणवृत्तिव्यवहारो न्याय्यस्तत इत्यर्थः । युक्तिं लोकप्रसिद्धिरूपामबाधितां दर्शयति—**स्वरूपमिति** । उच्यत इति प्रदीपादिः, इन्द्रियादेस्तु करणत्वान्न व्यञ्जकत्वं प्रतीत्युत्पत्तौ।

बालप्रिया

**दर्शयतीत्यादि** । उक्तगुणवृत्तिशब्दार्थाभिप्रायेण 'यदा निमित्तेने' त्यादिग्रन्थेन गौणीं 'यदा वा स्वार्थमि' त्यादिग्रन्थेन लक्षणाञ्च दर्शयतीत्यर्थः । ननु गुणवृत्तेर्बहुरूपत्वेऽपि किमितीदं भेदद्वयं सोदाहरणं दर्शितमित्यत आह—**अनेनेत्यादि** । **अनेन** दर्शितेन । सूचयतीत्यत्र गमकमाह-**अत एवेत्यादि** । **तदेव भेदद्वयमिति** । अविवक्षितवाच्यभेदद्वयमेवेत्यर्थः । वृत्तौ 'न ही' त्यादि । विवक्षितवाच्यत्वं तदा न ह्युपपद्यत इति सम्बन्धः । 'विषयान्तरे' माणवकादौ । 'शब्दः' अग्न्यादिशब्दः । अग्निर्माणवक इत्यादौ ह्यग्न्यादिपदं तीक्ष्णत्वादिगुणवत्त्वेन माणवकादिकं लक्षयतीत्यतोऽत्यन्ततिरस्कृतस्वार्थं तत् । 'स्वार्थमि'ति । गङ्गादिशब्दमुख्यार्थमित्यर्थः । 'अंशेनापरित्यजन्नि'ति । गङ्गादिशब्दो हि गङ्गातीरत्वादिना केवलतीरत्वादिना वा गङ्गायास्तीरमेव लक्षयतीत्यतोंऽशेन स्वार्थापरित्यागः । 'तत्सम्बन्धद्वारेणे'ति । सामीप्यरूपस्वार्थसम्बन्धेन निमित्तेनेत्यर्थः । 'विषयान्तरं' तीरादिकम् । 'आक्रामति' स्वविषयमापादयति । शब्द इत्यनुषङ्गः, गङ्गादिशब्द इत्यर्थः । लोचने—**युक्तिमिति** । युक्त्यनुरोधीत्यत्रोक्तां युक्तिमित्यर्थः । पूरयति—**प्रदीपादिरिति** । ननु व्यञ्जकत्वं ज्ञापकत्वं, तत्तु मुख्यमिन्द्रियादेस्ततः किं सहकारिभूतप्रदीपादिग्रहणमित्यत आह—**इन्द्रियादेस्त्विति** । आदिपदेन लिङ्गादिग्रहणम् । प्रतीत्युत्पत्तौ करणत्वाद्व्यञ्जकत्वं नेति सम्बन्धः । वृत्तौ 'तथाविधे विषय' इति । वाच्यवाचकप्रतीतिपूर्वकप्रतीतिविषयेऽर्थान्तर इत्यर्थः । 'वाचकत्वस्यैवे'ति वाचकत्वाश्रयेवेत्यर्थः । 'कथं भिद्यत' इति । न भिद्यत इत्यर्थः । अत्र हेतुमाह-'तस्ये' त्यादि ।

**अविवक्षितवाच्यस्तु ध्वनिर्गुणवृत्तेः कथं भिद्यते । तस्य प्रभेदद्वये गुणवृत्तिप्रभेदद्वयरूपता लक्ष्यत एव यतः । अयमपि न दोषः । यस्मादविवक्षितवाच्यो ध्वनिर्गुणवृत्तिमार्गाश्रयोऽपि भवति न तु गुणवृत्तिरूप एव । गुणवृत्तिर्हि व्यञ्जकत्वशून्यापि दृश्यते । व्यञ्जकत्वं च यथोक्तचारुत्वहेतुं**

लोचनम्

एवमभ्युपगमं प्रदर्श्याक्षेपं दर्शयति—**अविवक्षितेति** । तुशब्दः पूर्वस्माद्विशेषं द्योतयति । **तस्येति** । अविवक्षितवाच्यस्य यत्प्रभेदद्वयं तस्मिन् गौणलाक्षणिकत्वात्मकं प्रकारद्वयं **लक्ष्यते** निर्भास्यत इत्यर्थः । एतत्परिहरति—**अयमपीति** । गुणवृत्तेर्यो मार्गः प्रभेदद्वयं स आश्रयो निमित्ततया प्राक्कक्ष्यानिवेशी यस्येत्यर्थः । एतच्च पूर्वमेव निर्णीतम् । ताद्रूप्याभावे हेतुमाह—**गुणवृत्तिरिति** । गौणलाक्षणिकरूपोभयी अपीत्यर्थः । ननु व्यञ्जकत्वेन कथं शून्या गुणवृत्तिर्भवति, यतः पूर्वमेवोक्तम्—

मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥ इति ।

न हि प्रयोजनशून्य उपचारः प्रयोजनांशनिवेशी च व्यञ्जनव्यापार इति भवद्भिरेवाभ्यधायीत्याशङ्कयाभिमतं व्यञ्जकत्वं विश्रान्तिस्थानरूपं तत्र नास्तीत्याह—**व्यञ्जक**-

बालप्रिया

लोचने—**दर्शयतीति** । पूर्वपक्षीति शेषः । गुणवृत्तीत्यादेर्विवरणम्—**गौणेत्यादि** । लक्ष्यत इत्यस्यार्थान्तरभ्रमनोदनाय विवृणोति—**निर्भास्यत** इति । न हीत्यादिनोक्तप्रकारेणेति शेषः । **प्राक्कक्ष्येति** । व्यञ्जनातः पूर्वकक्ष्येत्यर्थः । **पूर्वमेवेति** । न हीत्यादिग्रन्थे 'भ्रम धार्मिके' त्यादिगाथाव्याख्यानावसरे वेत्यर्थः । **ताद्रूप्याभाव** इति । गुणवृत्तिरूपत्वाभाव इत्यर्थः । ननु गुणवृत्तिर्हि व्यञ्जकत्वशून्यापि दृश्यत इत्यनेनैवाविवक्षितवाच्यस्य गुणवृत्तिरूपत्वाभावे सिद्धे व्यञ्जकत्वञ्चेत्यादिग्रन्थः किमर्थं इत्यतस्तद्ग्रन्थमवतारयति—**नन्वित्यादि** । ननु पूर्वोक्तिरन्यपरैवास्त्वित्यत आह—**न हीत्यादि** । इतीत्यादि । अन्यवाक्यं तिष्ठतु इति भवद्भिरेवाभ्यधायि चेत्यर्थः । अभिमतमित्यस्यैव विवरणम्—**विश्रान्तिस्थानरूपमिति** । **तत्रेति** । गुणवृत्तिमात्र इत्यर्थः । **नास्तीति** । व्यञ्जकत्वं न व्यञ्जनकरणत्वमात्रमत्र विवक्षतं, किन्तु विश्रान्तिस्थानभूतव्यञ्जनकरणत्वम् । तत्तु चारुत्वहेतुव्यङ्ग्यव्यञ्जनं विना न भवतीत्यर्थः । व्यञ्जकत्वशून्यापि दृश्यत इत्युक्तस्यैव विवरणं वृत्तौ 'गुणवृत्तिस्त्वि'त्यादि । गुणवृत्तिस्तु वाच्यधर्माश्रयेणैव व्यङ्ग्यमात्राश्रयेण च सम्भवति । सा अभेदोपचाररूपा यथेत्याद्यन्वयो यापीत्यादिवाक्ये वाच्येत्यादेर्व्यङ्ग्येत्यादेश्चानुषङ्गश्च बोध्यः । तत्र वाच्यधर्माश्रयेणेत्येतत्प्रकृतानुगुणं विवृणोति लोचने—

व्यङ्ग्यं विना न व्यवतिष्ठते । गुणवृत्तिस्तु वाच्यधर्माश्रयेणैव व्यङ्ग्यमात्राश्रयेण चाभेदोपचाररूपा सम्भवति, यथा—तीक्ष्णत्वादग्निर्माणवकः, आह्लादकत्वाच्चन्द्र एवास्या मुखमित्यादौ । यथा च 'प्रिये जने नास्ति पुनरुक्तम्' इत्यादौ । यापि लक्षणरूपा गुणवृत्तिः साप्युपलक्षणीयार्थसंबन्धमात्राश्रयेण चारुरूपव्यङ्ग्यप्रतीतिं विनापि सम्भवत्येव, यथा—मञ्चाः क्रोशन्तीत्यादौ विषये ।

## लोचनम्

त्वं चेति । वाच्यधर्मेति । वाच्यविषयो यो धर्मोऽभिधाव्यापारस्तस्याश्रयेण तदुपबृंहणायेत्यर्थः । श्रुतार्थापत्ताविवार्थान्तरस्याभिधेयार्थोपपादान एव पर्यवसानादिति भावः । तत्र गौणस्योदाहरणमाह—यथेति । द्वितीयमपि प्रकारं व्यञ्जकत्वशून्यं निदर्शयितुमुपक्रमते—यापीति । चारुरूपं विश्रान्तिस्थानं, तदभावे स व्यञ्जकत्वव्यापारो नैवोन्मीलति, प्रत्यावृत्य वाच्य एव विश्रान्तेः, क्षणदृष्टनष्टदिव्यविभवप्राकृतपुरुषवत् ।

## बालप्रिया

वाच्यविषयो यो धर्म इति । वाचकस्येति शेषः । भावार्थविवरणम्—तदुपबृंहणायेति । अभिधेयार्थोपबृंहणायेत्यर्थः । कथं गुणवृत्तेस्तदुपबृंहणार्थत्वमित्यतस्सदृष्टान्तमाह—श्रुतेत्यादि । यथा पीनो देवदत्तो दिवा न भुङ्क्त इत्यादौ श्रुतस्य पीनत्वादेरुपपादकतया रात्रिभोजनादिकं कल्प्यते । कल्पितस्य तस्यार्थान्तरस्य पीनत्वाद्युपपादन एव पर्यवसानञ्च तथा गुणवृत्तिस्थलेऽर्थान्तरस्य लक्ष्यस्य पदान्तराभिधेयार्थोपपादन एव पर्यवसितिर्यतस्तस्मादित्यर्थः । वृत्तौ'व्यङ्ग्यमात्राश्रयेणे'त्यत्र मात्रपदेन चारुत्वहेतुर्मुख्यव्यङ्ग्यं व्यावर्त्यते । 'प्रिये जन'इति । प्रिय इति तीक्ष्णत्वादित्यादिवद्गुणरूपहेतुकथनं पुनरुक्तपदेनानुपादेयत्वं लक्ष्यत इति पूर्वमेवोक्तम् । एषूदाहरणेषु तीक्ष्णत्वादिगुणानामाधिक्यं व्यङ्ग्यं, तत्तु न चारुत्वकारीति भावः । 'उपलक्षणीये'ति । उपलक्षणीयो लक्ष्यो योऽर्थो मञ्चस्थबालकादिस्तेन सह यस्सम्बन्ध आधाराधेयभावादिर्मञ्चादिपदमुख्यार्थस्य तन्मात्राश्रयेणेत्यर्थः । मात्रपदव्यावर्त्यकथनं 'चारुरूपे'त्यादि । 'मञ्चा' इति । अत्र मञ्चस्थबालकानां बहुत्वादिकं व्यङ्ग्यं तदपि न चारुत्वकारि । 'चारुरूप'मित्येतद्विवृणोति लोचने—विश्रान्तीति । ननु विनापि चारुव्यङ्ग्यप्रतीतिं व्यञ्जनाव्यापारो भवत्वित्यत आह—तदभाव इत्यादि । तदभावे चारुव्यङ्ग्याभावे । सः लक्षणामूलकः । उन्मीलति प्रकाशते । कुत इत्यत आह–प्रत्यावृत्येत्यादि । क्षणेति । क्षण एव दृष्टो नष्टश्च दिव्यविभवो यस्य सः तथाविधो यः प्राकृतो दरिद्रः पुरुषः तद्वत् । तस्य यथा प्रत्यावृत्य प्राकृतविभव एव तथा व्यञ्जना-

यत्र तु सा चारुरूपव्यङ्ग्यप्रतीतिहेतुस्तत्रापि व्यञ्जकत्वानुप्रवेशेनैव वाचकत्ववत्। असम्भविना चार्थेन यत्र व्यवहारः, यथा—'सुवर्णपुष्पां पृथिवीम्' इत्यादौ तत्र चारुरूपव्यङ्ग्यप्रतीतिरेव प्रयोजिकेति तथा-

लोचनम्

ननु यत्र व्यङ्ग्येऽर्थे विश्रान्तिस्तत्र किं कर्तव्यमित्याशङ्क्याह—**यत्र त्विति**। अस्ति तत्रापरो व्यञ्जनव्यापारः परिस्फुट एवेत्यर्थः। दृष्टान्तं पराङ्गीकृतमेवाह—**वाचकत्ववदिति**। वाचकत्वे हि त्वयैवाङ्गीकृतो व्यञ्जनव्यापारः प्रथमं ध्वनिप्रभेद-मप्रत्याचक्षाणेनेति भावः। किञ्च वस्त्वन्तरे मुख्ये सम्भवति सम्भवदेव वस्त्वन्तरं मुख्यमेवारोप्यते विषयान्तरमात्रतस्त्वारोपव्यवहार इति जीवितमुपचारस्य, सुवर्णपुष्पा-णां तु मूलत एवासम्भवात्तदुच्चयनस्य तत्र क आरोपव्यवहारः; 'सुवर्णपुष्पां पृथिवीम्' इति हि स्यादारोपः, तस्मादत्र व्यञ्जनव्यापार एव प्रधानभूतो नारोपव्यवहारः, स परं व्यञ्जनव्यापारानुरोधितयोत्तिष्ठति। तदाह—**असम्भविनेति**। **प्रयोजिकेति**। व्यङ्ग्य-मेव हि प्रयोजनरूपं प्रतीतिविश्रामस्थानमारोपिते त्वसम्भवति प्रतीतिविश्रान्तिराशङ्क्नी-

बालप्रिया

व्यापारस्य वाच्यार्थ एव विश्रान्तिर्यतस्तस्मादित्यार्थः।

वृत्तौ 'यत्रे'त्यादि। 'से'ति। गुणवृत्तिरित्यर्थः। 'व्यञ्जकत्वानुप्रवेशेनैवे'ति। भव-तीति शेषः। ग्रन्थमेतमवतारयति—**नन्वित्यादि**। **अपर इति**। चारुरूपव्यङ्ग्य-प्रत्यायकत्वाद्विलक्षण इत्यर्थः। **प्रथममिति**। विवक्षितान्यपरवाच्यमित्यर्थः। **अप्र-त्याचक्षाणेन** अभ्युपगच्छता। असम्भविनेत्यादिग्रन्थं तात्पर्यतोऽवतारयति—**किञ्चेत्यादि**। असम्भविना चेति चकारः किञ्चेत्यनेन व्याख्यातः। **वस्त्वन्तर** इत्यादि। अधिष्ठानारोप्ययोरुभयोरपि सम्भवे सत्येवारोप इत्यर्थः। यथा माणवकादा-वग्न्यादेः। ननु तयोरुभयोस्सत्वे कुत आरोपव्यवहार इत्यत आह—**विषयान्तर-मात्रत इति**। विषयान्तरत्वमात्रेणेत्यर्थः। वस्तुतस्तयोरैक्याभावादिति भावः। **इ-तीत्यादि**। स्वतस्सतोरारोप्याधिष्ठानयोरेकस्मिन्नन्यस्यारोप इतीदमुपचारस्य मुख्यं जीवितमित्यर्थः। अस्त्वेतत्ततः किमत आह—**सुवर्णपुष्पाणामित्यादि**। **मूलत एव** अत्यर्थमेव। **तदुच्चयनस्य** सुवर्णपुष्पोच्चयनस्य। **तत्र** सुवर्णपुष्पामित्याद्युदाहरण-स्थले। **क इति**। निर्जीव इत्यर्थः। ननु तर्हि सुवर्णपुष्पां पृथिवीमिति प्रयोगः कथमु-पपद्यत इत्यत आह—**सुवर्णे**त्यादि। इत्यारोपस्स्याद्धीति सम्बन्धः। तदारोपं विना तस्य महाकविप्रयोगस्यानिर्वाहादिति भावः। फलितमाह—**तस्मादित्यादि**। **आरो-पव्यवहार इति**। आरोपमूलकगुणवृत्तिव्यवहार इत्यर्थः। **तदाहेति**। उक्ताभिप्राये-णाहेत्यर्थः। वृत्तौ 'प्रयोजिके'त्यस्य व्यवहारप्रयोजिकेत्यर्थः। चारुरूपेत्यादिग्रन्थस्य भावार्थमाह—**व्यङ्ग्यमित्यादि**। प्रयोजनरूपमिति हेतुगर्भं विशेषणम्। [नन्वसम्भ-

विधेऽपि विषये गुणवृत्तौ सत्यामपि ध्वनिव्यवहार एव युक्त्यनुरोधी। तस्मादविवक्षितवाच्ये ध्वनौ द्वयोरपि प्रभेदयोर्व्यञ्जकत्वविशेषाविशिष्टा गुणवृत्तिर्न तु तदेकरूपा सहृदयहृदयाह्लादिनी प्रतीयमाना प्रतीति·

लोचनम्

यापि न भवति। सत्यामपीति। व्यञ्जनव्यापारसम्पत्तये क्षणमात्रमवलम्बितायामिति भावः। तस्मादिति। व्यञ्जकत्वलक्षणो यो विशेषस्तेनाविशिष्टा अविद्यमानं विशिष्टं विशेषो भेदनं यस्याः व्यञ्जकत्वं न तस्या भेद इत्यर्थः। यदि वा व्यञ्जकत्वलक्षणेन व्यापारविशेषेणाविशिष्टा न्यक्कृतस्वभावा आसमन्ताद्व्याप्ता। तदेकेति। तेन व्यञ्जकत्वलक्षणेन सहैकं रूपं यस्याः सा तथाविधा न भवति। अविवक्षितवाच्ये व्यञ्जकत्वं गुणवृत्तेः पृथक्चारुप्रतीतिहेतुत्वात् विवक्षितवाच्यनिष्ठव्यञ्जकत्ववत्, न हि गुणवृत्तेश्चारु·

बालप्रिया

वदपि व्यङ्ग्यमात्रान्वितमारोपितमेव प्रतीतिविश्रान्तिस्थानमस्तु, किं चारुरूपव्यङ्ग्यसमाश्रयणेनेत्यत आह—आरोपित इत्यादि। असम्भवतीति हेतुगर्भम्। क्षणमात्रमवलम्बितायामित्यनेन गुणवृत्तिविषयभूतार्थस्यावान्तरतात्पर्यगोचरत्वं दर्शितम्। वृत्तौ 'तथाविधे विषय' इति। असम्भवदर्थकवाक्य इत्यर्थः। उपसंहरति—'तस्मादि'त्यादि। व्यञ्जकत्वविशेषाविशिष्टेत्येतत्प्रकृतानुगुण्येन व्याचष्टे—व्यञ्जकत्वेत्यादि। तेनेति करणे तृतीया। विवरणेन सिद्धं फलितार्थमाह—व्यञ्जकत्वमित्यादि। तस्याः गुणवृत्तेः। भेदः अवान्तरधर्मः। व्यञ्जकत्वगुणवृत्त्योः प्रतिपादितभेदोपसंहारपरतयैवं व्याख्याय व्यञ्जकत्वप्राधान्यस्यान्याप्राधान्यस्य च प्रतिपादितस्योपसंहारपरतयाऽप्येतं ग्रन्थं व्याचष्टे—यदि वेत्यादि। यदि वा अथ च। विशिष्टा विशेषिता न भवतीत्यविशिष्टा। यद्वा विशिष्टं विशेषः आदरः अविद्यमानं विशिष्टं यस्यास्सेति व्युत्पत्तिमभिप्रेत्याह—न्यक्कृतस्वभावेति। व्यञ्जकत्वविशेषेणाऽविशिष्टेति विग्रहं धातूनां बह्वर्थत्वाभिप्रेत्य प्रकारान्तरमाह—आसमन्ताद्व्याप्तेति। यदिवेत्यनुषङ्गः। ननु तथापि गुणवृत्तेर्व्यञ्जकत्वैकरूपत्वमस्त्विति शङ्कायामुक्तं, न तु तदेकरूपेति तद्विवृणोति—तेनेत्यादि। तदेकरूपत्वाभावे हेतुः—'सहृदये'त्यादि। नेत्यस्यानुषङ्गः। यतो गुणवृत्तिः सहृदयहृदयाह्लादिनी प्रतीयमाना च न भवत्यतो न तदेकरूपेति सम्बन्धः। व्यङ्ग्यगतं सहृदयहृदयाह्लादकत्वं प्रतीयमानत्वञ्च व्यञ्जकत्वे समारोप्य गुणवृत्तेस्तन्निषेधपूर्वकं तदेकरूपत्वं निषिद्धमिति बोध्यम्। एवं गुणवृत्तेर्व्यञ्जकत्वैकरूपत्वाभावप्रतिपादनेन व्यञ्जकत्वस्य गुणवृत्तिभिन्नत्वं लभ्यते, तत्र हेतुप्रदर्शकः प्रतीतिहेतुत्वादिति ग्रन्थः, चारुत्वप्रतीतिहेतुत्वादिति तदर्थः, व्यञ्जकत्वस्येति शेषः। तथाचार्यं प्रयोग इत्याशयेनाह लोचने—अविवक्षितवाच्य इत्यादि। पृथगिति भिन्नमित्यर्थः। वृत्तौ 'तद्रूपशून्याया' इति। चारुत्वप्रतीतिहेतुत्वशून्याया इत्यर्थः। गुणवृत्तेरित्यनुषङ्गः। ग्रन्थ·

हेतुत्वाद्विषयान्तरे तद्रूपशून्याया दर्शनात् । एतच्च सर्वं प्राक्सूचितमपि स्फुटतरप्रतीतये पुनरुक्तम् ।

अपि च व्यञ्जकत्वलक्षणो यः शब्दार्थयोर्धर्मः स प्रसिद्धसम्बन्धानुरोधीति न कस्यचिद्विमतिविषयतामर्हति । शब्दार्थयोर्हि प्रसिद्धो यः सम्बन्धो वाच्यवाचकभावाख्यस्तमनुरुन्धान एव व्यञ्जकत्वलक्षणो व्यापारः सामग्र्यन्तरसम्बन्धादौपाधिकः प्रवर्तते । अत एव वाचकत्वात्तस्य विशेषः । वाचकत्वं हि शब्दविशेषस्य नियत आत्मा व्युत्पत्तिकालादारभ्य तदविनाभावेन तस्य प्रसिद्धत्वात् । स त्वनियतः, औपा-

लोचनम्

प्रतीतिहेतुत्वमस्तीति दर्शयति—**विषयान्तर** इति । अग्निर्वटुरित्यादौ । **प्रागिति** प्रथमोद्द्योते ।

नियतस्वभावाच्च वाच्यवाचकत्वादौपाधिकत्वेनानियतं व्यञ्जकत्वं कथं न भिन्ननिमित्तमिति दर्शयति—**अपि चेति** । **औपाधिक** इति । व्यञ्जकत्ववैचित्र्यं यत्पूर्वमुक्तं तत्कृत इत्यर्थः । अत एव समयनियमितादभिधाव्यापाराद्विलक्षण इति यावत् । एत-

बालप्रिया

मेतमुक्तानुमानोपयोगितयाऽवतारयति—**न** हीत्यादि । विषयान्तर इत्यस्य विवरणम्—**अग्निर्वटुरित्यादाविति** ।

अथापि चेत्यादिग्रन्थोऽभाववादिनः प्रति स्थूणानिखननन्यायेन व्यञ्जकत्वसाधक इत्यभिप्रायेणावतारयति—**नियतेत्यादि** । **नियतस्वाभवादिति** । वाचकत्वं हि समयापेक्षत्वेन नियतस्वरूपमिति भावः । अनियतत्वे हेतुः—**औपाधिकत्वेनेति** । **कथमित्यादि** । वाचकत्वाद्व्यञ्जकत्वस्य प्रवृत्तेर्निमित्तं भिन्नमेवेत्यर्थः । वृत्तौ 'सामग्र्यन्तरे'त्यादि । 'सामग्र्यन्तरसम्बन्धात्' प्रकरणादेर्मुख्यसामग्र्यास्सन्निधानात् । 'औपाधिकः प्रवर्तते' औपाधिकस्सन्नुल्लसतीत्यर्थः । अत्रोपाधिशब्देनान्यावान्तरसामग्री विवक्षितेत्याशयेन विवृणोति—**व्यञ्जकत्वेत्यादि** । व्यञ्जकत्वे यद्वैचित्र्यं वाच्यवाचकयोर्गुणत्वप्राधान्यादि । ननु सामग्र्यन्तरसम्बन्धजनितत्वेऽप्ययं व्यापारो वाचकव्यापारत्वादभिधैवास्त्वित्यत आह—**अत एवेत्यादि** । अत एव यतस्सामग्र्यन्तरसम्बन्धादौपाधिको जनितस्तत एवेत्यर्थः । **एतदेव** उक्तमेव । वृत्तौ 'शब्दविशेषस्ये'ति । साक्षात्समयापेक्षिणश्शब्दस्येत्यर्थः । 'आत्मा' स्वभावः । 'व्युत्पत्तिकालादि'ति । सङ्केतकालादित्यर्थः । तथा पाठश्च । 'तदि'ति शब्देत्यर्थः । 'तस्य' वाचकत्वस्य । 'स त्वि'ति । व्यञ्जकत्वव्यापारस्त्वित्यर्थः । 'प्रकरणाद्यवच्छेदेन' प्रकरणादिसहकारेण ।

धिकत्वात् । प्रकरणाद्यवच्छेदेन तस्य प्रतीतेरितरथा त्वप्रतीतेः । ननु यद्यनियतस्तत्किं तस्य स्वरूपपरीक्षया । नैष दोषः; यतः शब्दात्मनि तस्यानियतत्वम्, न तु स्वे विषये व्यङ्ग्यलक्षणे । लिङ्ग[1]-त्वन्यायश्चास्य व्यञ्जकभावस्य लक्ष्यते, यथा लिङ्गत्वमाश्रयेष्वनियता-वभासम्, इच्छाधीनत्वात्; स्वविषयाव्यभिचारि च । तथैवेदं यथा दर्शितं

लोचनम्

देव स्फुटयति—**अत एवेति** । औपाधिकत्वं दर्शयति—**प्रकरणादीति** । **किं तस्येति** । अनियतत्वाद्यथारुचि कल्प्येत पारमार्थिकं रूपं नास्तीति; न चावस्तुनः परीक्षोपपद्यत इति भावः । **शब्दात्मनीति** । सङ्केतास्पदे पदस्वरूपमात्र इत्यर्थः । **आश्रयेष्विति** । न हि धूमे वह्निगमकत्वं सदातनम्, अन्यगमकत्वस्य वह्न्यगमकत्वस्य च दर्शनात् । **इच्छाधीनत्वादिति** । इच्छात्र पक्षधर्मत्वजिज्ञासाव्याप्तिबुभुत्सामूर्षाप्र[2]भृतिः । **स्वावि**-

बालप्रिया

'तस्य' व्यञ्जकत्वस्य । 'प्रतीतेः' उन्मेषात् । प्रकरणादीत्यादिग्रन्थो न हेत्वन्तरप्रदर्शकः, किन्त्वौपाधिकत्वादित्युक्तस्यैव विवरणरूप इत्याह लोचने—**औपाधिकत्वं दर्शय-तीति** । वृत्तौ 'यद्यनियत' इति । स इत्यनुषज्यते । **तस्य** व्यञ्जकत्वस्य । लोचने भाव-माह—**अनियतत्वादित्यादि** । **अनियतत्वात्** अभिधावन्नियतत्वाभावात् । **कल्प्येतेति** । तत्स्वरूपमिति शेषः । अत्र हेतुमाह—**पारमार्थिकमित्यादि** । पार-मार्थिकं अनुगतम् । **इतीति** हेतौ । किं तत इत्यत आह—**न चेत्यादि** । गगनार-विन्दादेरपि परीक्ष्यत्वप्रसङ्गादिति भावः । शब्दात्मनीत्यनेन विवक्षितं व्याचष्टे—**सङ्के-तास्पद इत्यादि** । मात्रपदेनार्थस्य व्यवच्छेदः । वृत्तौ 'तस्ये'ति । व्यञ्जकत्वस्येत्यर्थः । 'न त्वि'त्यादि । तस्यानियतत्वमित्यनुषज्यते । स्वे स्वसम्बन्धिनि । 'व्यङ्ग्यलक्षणे विषये' व्यङ्ग्यार्थे । यस्य यस्य व्यङ्ग्योऽर्थो विद्यते तस्य तस्य व्यञ्जकत्वमित्येव-मर्थविषये नियतत्वं व्यञ्जकत्वस्यास्त्येवेत्यर्थः । अत्र दृष्टान्तकथनम्—लिङ्गत्वे'त्यादि । 'लिङ्गत्वन्यायः' लिङ्गत्वसाम्यम् । 'लिङ्गत्वं' वह्न्यादिज्ञापकत्वम् । 'आश्रयेषु' धूमा-दिषु । अनियतावभासमित्येतद्विवृणोति लोचने—**न हीत्यादि** । न हि सदातनमित्यत्र हेतुमाह—**अन्येत्यादि** । **अन्येति** । वह्न्यतिरिक्तेत्यर्थः । **वह्न्यगमकत्वस्येति** । कदाचिद्वह्निगमकत्वाभावस्येत्यर्थः । **दर्शनात्** अनुभवात् । इच्छाधीनत्वादित्यत्रेच्छा-पदं प्रकृतानुगुणतया व्याख्याति—**इच्छेत्यादि** । **पक्षधर्मता** व्याप्यस्य पक्षवृत्तिता

१. लिङ्गत्वेति । लीनं प्रत्यक्षाद्यविषयं व्याप्तिज्ञानपरामर्शाभ्यां गमयति वेदयतीति लिङ्गं पृषोदरादित्वान्निष्पन्नसाधुत्वकम् ।

२. प्रभृतिरिति । इच्छात्र सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षताकुक्षिनिहितानुमित्साग्निकोपादेयेति तत्त्वम् ।

व्यञ्जकत्वम् । शब्दात्मन्यनियतत्वादेव च तस्य वाचकत्वप्रकारता न शक्या कल्पयितुम् । यदि हि वाचकत्वप्रकारता तस्य भवेत्तच्छब्दात्मनि नियततापि स्याद्वाचकत्ववत् । स च तथाविध औपाधिको धर्मः शब्दानामौत्पत्तिकशब्दार्थसम्बन्धवादिना वाक्यतत्त्वविदा पौरुषापौरुषेययोर्वाक्ययोर्विशेषमभिदधता नियमेनाभ्युपगन्तव्यः, तदनभ्युपगमे हि तस्य शब्दार्थसम्बन्धनित्यत्वे सत्यप्यपौरुषेयपौरुषेययोर्वाक्ययोरर्थप्रतिपा-

लोचनम्

षयेति । स्वस्मिन्विषये च गृहीते त्रैरूप्यादौ न व्यभिचरति । न कस्यचिद्विमतिमेतीति यदुक्तं तत्स्फुटयति—स चेति । व्यञ्जकत्वलक्षण इत्यर्थः । औत्पत्तिकेति । जन्मना द्वितीयो भावविकारः सत्तारूपः सामीप्याल्लक्ष्यते विपरीतलक्षणातो वानुत्पत्तिः,

बालप्रिया

तस्याः जिज्ञासा । व्याप्तिसुस्मूर्षा हेतौ साध्यस्य या व्याप्तिः, तत्स्मरणेच्छा । प्रभृतिपदेन व्याप्यस्य सपक्षसत्त्वादिजिज्ञासा गृह्यते । पक्षधर्मताजिज्ञासादीनामनुमितिं प्रति प्रयोजकत्वं प्राचीनाभ्युपगतं तद्द्वारा च लिङ्गत्वस्य तदधीनत्वं बोध्यम् । स्वाविषयाव्यभिचारीत्यस्य तात्पर्यार्थविवरणम्—स्वस्मिन्नित्यादि । स्वस्मिन् स्वसम्बन्धिनि लिङ्गे । विषये च साध्ये च । विषये वेति च पाठः । गृहीत इत्यनेनानयोस्सम्बन्धः । त्रैरूप्यादाविति । त्रैरूप्यमनुमानाङ्गभूतं पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपमादिपदेनाबाधितत्वादिकं गृह्यते । तत्र त्रैरूप्यस्य लिङ्गे अबाधितत्वादेस्साध्ये च ग्रहः । न व्यभिचरतीति ज्ञापकत्वं स्वविषये न व्यभिचरतीत्यर्थः । स्वविषयाव्यभिचारीति वृत्तेस्तु ज्ञापकत्वस्य विषये ज्ञाप्ये वह्न्यादौ न व्यभिचरतीत्येवार्थः । वृत्तौ 'वाचकत्वप्रकारते'ति । वाचकत्वावान्तरधर्मतेत्यर्थः । 'तदि'ति । तर्हीत्यर्थः । नन्वेवं व्यञ्जकत्वं न कस्य चिद्विमतिविषयतामर्हतीत्युक्तमयुक्तं व्यङ्ग्यव्यञ्जकभावलक्षणस्य शब्दार्थसम्बन्धस्यानियतत्वेनौत्पत्तिकसूत्रविरोधादित्याशङ्कां स चेत्यादिग्रन्थेन परिहरतीत्यवतारयति—न कस्यचिदित्यादि । स्फुटयति स्फुटं करोति साधयतीति यावत् । वृत्तौ शब्दानां धर्म इति योजना । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इत्यादिजैमिनीयं सूत्रं मनसि कृत्योक्तम् 'औत्पत्तिके'त्यादि । तत्रौत्पत्तिकपदेन नित्य इत्यर्थो विवक्षितस्तल्लाभप्रकारं दर्शयति—जन्मनेत्यादि । लक्ष्यत इति । जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति षड्विकारा भावानामुक्ताः । तत्र द्वितीयस्सत्तारूपो विकारः उत्पत्तिपदार्थेन जन्मना सामीप्यान्निमित्ताल्लक्ष्यत इत्यर्थः । सत्तामात्रस्य लक्षणात्सदासत्त्वं कल्प्यमित्यपरितोषादाह—विपरीतेत्यादि । जन्मना लक्ष्यत

**दने निर्विशेषत्वं स्यात्। तदभ्युपगमे तु पौरुषेयाणां वाक्यानां पुरुषेच्छानुविधानसमारोपितौपाधिकव्यापारान्तराणां सत्यपि स्वाभिधेयसम्बन्धापरित्यागे मिथ्यार्थतापि भवेत्।**

### लोचनम्

रूढ्या वा औत्पत्तिकशब्दो नित्यपर्यायः तेन नित्यं यः शब्दार्थयोः शक्तिलक्षणं संबन्धमिच्छति जैमिनेयस्तेनेत्यर्थः। **निर्विशेषत्वमिति**। ततश्च पुरुषदोषानुप्रवेशस्याकिञ्चित्करत्वात्तन्निबन्धं पौरुषेयेषु वाक्येषु यदप्रामाण्यं तत्र सिध्येत्। प्रतिपत्तुरेव हि यदि तथा प्रतिपत्तिस्तर्हि वाक्यस्य न कश्चिदपराध इति कथमप्रामाण्यम्। अपौरुषेये वाक्येऽपि प्रतिपत्तृदौरात्म्यात्तथा स्यात्।

### बालप्रिया

इत्यनुषङ्गः विरोधरूपसम्बन्धेन निमित्तेन जन्मनाऽ त्पत्तिर्लक्ष्यत इत्यर्थः। अत्र मतुबर्थे तद्धितः पक्षद्वयेऽपि। लाघवादाह—**रूढ्या वे**त्यादि। **रूढ्या** सूत्रकारसङ्केतेन। फलितमाह—**तेने**त्यादि। यो जैमिनेय इच्छतीति सम्बन्धः। **शक्तिलक्षण**मिति। बोधनसामर्थ्यरूपमित्यर्थः। वृत्तौ पूर्वोक्तशङ्काबीजत्वेनौत्पत्तिकेत्याद्युक्तं पौरुषेयेत्यादिकन्त्वभ्युपगन्तव्यत्वे हेतुत्वेन। अनभ्युपगमे दोषमाह—'तदि'त्यादि। 'तस्ये'ति। वाक्यतत्त्वविदो जैमिनेयस्येत्यर्थः। मत इति शेषः। 'शब्दे'त्यादि। 'शब्दार्थसम्बन्धस्य' शब्दगतार्थबोधनसामर्थ्यरूपस्य नित्यत्वादित्यर्थः। अर्थगोचरज्ञानजननशक्तिर्हि प्रामाण्यं, सा शक्तिर्यथार्थेष्विवायथार्थेष्वपि वाक्येष्वस्ति। प्रमाण्यं स्वत एव। अप्रामाण्यन्तु कारणदोषबाधकप्रत्ययादिना जन्यत इत्यादिमीमांसकमतमत्रावधेयम्। निर्विशेषत्वं स्यादित्यत्रेष्टापत्तिं परिहर्तुं निर्विशेषत्वे दोषं दर्शयति—**ततश्चे**त्यादि। **पुरुषेति**। पुरुषे वक्तरि यः कादाचित्को दोषस्य भ्रमादेरनुप्रवेशः, यद्वा—पुरुषदोषस्य वाक्ये योऽनुप्रवेशस्तस्येत्यर्थः। **अकिञ्चित्करत्वादिति**। नित्यस्य शब्दार्थसम्बन्धस्य बाधने शक्त्यभावादिति भावः। **तन्निबन्धनं** वस्तुतः पुरुषदोषाधीनम्। **पौरुषेयेषु** लौकिकेषु **वाक्येषु** अयथार्थवाक्येषु अप्रामाण्यम् यथार्थत्वनिमित्तकमप्रामाण्यम्। ततश्च तत्र सिद्ध्येदिति सम्बन्धः। ननु पुरुषदोषः प्रतिपत्तृद्वारा वाक्यस्याप्रामाण्यसम्पादक इति शङ्कायामाह—**प्रतिपत्तुरित्यादि**। तथेति। अयथार्थतयेत्यर्थः। दोषान्तरञ्चाह—**अपौरुषयेत्यादि**। **अपौरुषेयवाक्ये** वैदिकवाक्ये। **प्रतिपत्तृदौरात्म्यात्** प्रतिपत्तुर्दोषात्। **तथा स्यात्** अयथार्थत्वप्रतीत्या अप्रामाण्यं स्यात्। स्यात् वृत्तौ तथाविधौपाधिकधर्म्माभ्युपगमे गुणमाह—'तदभ्युपगम' इत्यादि। 'पुरुषेति। पुरुषेच्छायाः वक्तृपुरुषाभिप्रायस्यानुविधानाद्धेतोः समारोपितं कल्पितमत एवौपाधिकञ्च यद्व्यापारान्तरं येषु तेषामित्यर्थः।

दृश्यते हि भावानामपरित्यक्तस्वस्वभावानामपि सामग्र्यन्तरसम्पात-सम्पादितौपाधिकव्यापारान्तराणां विरुद्धक्रियत्वम् । तथा हि—हिममयूखप्रभृतीनां निर्वापितसकलजीवलोकं शीतलत्वमुद्वहतामेव प्रियाविरहदहनदह्यमानमानसैर्जनैरालोक्यमानानां सतां सन्तापकारित्वं प्रसिद्धमेव । तस्मात्पौरुषेयाणां वाक्यानां सत्यपि नैसर्गिकेऽर्थसम्बन्धे मिथ्यार्थत्वं समर्थयितुमिच्छता वाचकत्वव्यतिरिक्तं किंचिद्रूपमौपाधिकं व्यक्तमेवाभिधानीयम् । तच्च व्यञ्जकत्वादृते नान्यत् । व्यङ्ग्यप्रकाशनं हि व्यञ्जकत्वम् । पौरुषेयाणि च वाक्यानि प्राधान्येन पुरुषाभिप्रायमेव प्रकाशयन्ति । स च व्यङ्ग्य एव

## लोचनम्

ननु धर्मान्तराभ्युपगमेऽपि कथं मिथ्यार्थता, न हि प्रकाशकत्वलक्षणं स्वधर्मं जहाति शब्द इत्याशङ्क्याह—**दृश्यत** इति । प्राधान्येनेति । यदाह—"एवमयं पुरुषो वेदेति भवति प्रत्ययः न त्वेवमयमर्थः"[1] इति । तथा प्रामाणान्तरदर्शनमत्र बाध्यते, न तु

## बालप्रिया

उक्तार्थस्यानुभवसिद्धत्वमुक्तं दृश्यत इत्यादिना तद्वचनं किमर्थमित्यतस्तद्ग्रन्थमवतारयति—नन्वित्यादि । **कथमि**ति न सिद्ध्येदित्यर्थः । अत्र हेतुमाह—**न ह्नी**त्यादि **प्रकाशकत्वलक्षण**मिति। अर्थबोधनसामर्थ्यरूपमित्यर्थः। न हि जहातीति सम्बन्धः। क्लृप्तकल्प्यमानयोः क्लृप्तं बलवदिति न्यायोऽनेन दर्शितः। वृत्तौ'भावानामि'ति। पदार्थानामित्यर्थः। सामग्र्यन्तरसम्पातेन सम्पादितमत एवौपाधिकं धर्मान्तरं येषु तेषाम्। 'विरुद्धक्रियत्वं' स्वस्वभावविरुद्धक्रियोत्पादकत्वम् । 'हिममयूखः' चन्द्रः । 'निर्वापितः' सन्तापशान्तिं प्रापितो जीवलोको येन तत् । तथाविधं शीतलत्वमुद्वहतामित्यनेनापरित्यक्तस्वस्वभावत्वं प्रियाविरहेत्यादिना सामग्र्यन्तरेत्याद्युक्तं सन्तापकारित्वमित्यनेन विरुद्धक्रियत्वञ्च दर्शितम् । यथा शाकुन्तले "विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैः" इति । उपसंहरति—'तस्मादि'त्यादि । पौरुषेयाणि वाक्यानि प्राधान्येन पुरुषाभिप्रायमेव प्रकाशयन्तीत्यत्र जैमिनिसूत्रभाष्यकृद्वचनं प्रमाणयति—**यदाहे**ति । **अयं पुरुष** इति । वक्तृपुरुष इत्यर्थः । **एवं वेदे**ति । यथानेनोक्तं तथा जानातीत्यर्थः । इति प्रत्ययो भवतीति योजना । प्रतिपत्तुरिति शेषः । **न त्वेवमर्थ** इति । अयमर्थ एवमेवेति प्रत्ययस्तु प्रतिपत्तुर्न भवतीत्यर्थः । अर्थस्य बाधसम्भवादिति भावः । अतस्तत्तद्वाक्यार्थज्ञानरूपं पुरुषाभिप्रायमेव प्राधान्येन प्रकाशयन्तीति भावः ।

१. शाबरभाष्य., पृ. ४. पं. ५ चौ. सं.

न त्वभिधेयः, तेन सहाभिधानस्य वाच्यवाचकभावलक्षणसम्बन्धाभावात्। नन्वनेन न्यायेन सर्वेषामेव लौकिकानां वाक्यानां ध्वनिव्यवहारः प्रसक्तः। सर्वेषामप्यनेन न्यायेन व्यञ्जकत्वात्। सत्यमेतत्; किं तु वक्त्रभिप्रायप्रकाशनेन यद्व्यञ्जकत्वं तत्सर्वेषामेव लौकिकानां वाक्यानामविशिष्टम्। तत्तु वाचकत्वान्न भिद्यते व्यङ्ग्यं हि तत्र नान्तरीयकतया व्यवस्थितम्।

लोचनम्

शाब्दोऽन्वय इत्यनेन पुरुषाभिप्रायानुप्रवेशादेवाङ्गुल्यग्रवाक्यादौ मिथ्यार्थत्वमुक्तम्। **तेन सहेति**। अनियततया नैसर्गिकत्वाभावादिति भावः। **नान्तरीयकतयेति**।

बालप्रिया

नन्वस्तु पुरुषाभिप्रायो व्यङ्ग्यः व्यापारान्तरञ्च व्यञ्जकत्वं वाक्यस्य, तथापि कथं मिथ्यार्थकत्वमित्यत आह—**तथेत्यादि**। **तथा** अभिप्रायव्यञ्जकत्वेन प्रकारेण **अत्र** पौरुषेयवाक्ये विषये। **प्रमाणान्तरदर्शनं** प्रमाणान्तरेण प्रत्यक्षादिना दर्शनं तद्वाक्यार्थज्ञानम्। **बाध्यते** क्वचिद्बाधितं क्रियते। बाधा नाम अनुत्पत्तिः। पौरुषेयवाक्यस्य पुरुषेच्छानुविधायित्वेन यथा दृष्टार्थकत्वनियमाभावात्कदाचित्तदर्थविषयकं प्रत्यक्षादिज्ञानं नोत्पद्यत इत्यतो मिथ्यार्थकतेति भावः। न त्विति। बाध्यत इत्यनुषज्यते। **शाब्दोऽन्वयः** शब्दस्यार्थेन स्वाभाविकस्सम्बन्धोऽर्थबोधनसामर्थ्यलक्षणः। सामान्येनोक्तं विशेषे दर्शयन्नाह—**इत्यनेनेत्यादि**। **अङ्गुल्यग्रवाक्यादौ** अङ्गुल्यग्रे करिवरशतमिति वाक्यादौ। **मिथ्यार्थत्वमुक्तमिति**। असम्बद्धार्थस्यापि पुरुषाभिप्रेतत्वसम्भवादिति भावः। तथाचोक्तरूपस्य शब्दार्थसम्बन्धस्य नित्यत्वेऽपि पौरुषेयवाक्यानां पुरुषाभिप्रायानुविधायित्वात्तदभिप्रेतं यद्वाक्यार्थस्यासत्यत्वं, तद्वाक्यस्य मिथ्यार्थकत्वेनाप्रामाण्यम्। अपौरुषेयाणां वाक्यानान्तु वक्तुरभावेन तेषां सर्वेषामेव प्रामाण्यञ्चेति बोध्यम्। वृत्तौ 'तेन सहे'ति। पुरुषाभिप्रायेण सहेत्यर्थः। 'अभिधानस्य' शब्दस्य। 'वाच्यवाचकसम्बन्धाभावादि'ति। अनेन शब्दस्य व्यङ्ग्येन सह यस्सम्बन्धस्तस्य वाच्यवाचकभावत्वं नास्तीति दर्शितं, तत्र हेतुमाह लोचने—**अनियतत्वादित्यादि**। अनियतत्वेन हेतुना स्वाभाविकत्वाभावादित्यर्थः। अथाभिप्रायस्य व्यङ्ग्यत्वोक्तिमाश्रित्य शङ्कते—'नन्वनेने'त्यादि। 'प्रसक्तः' प्राप्तः, यद्वा-आपत्तिविषयः। अत्र हेतुमाह—'सर्वेषामि'त्यादि। इष्टापत्तिं दर्शयति—'सत्यमि'त्यादि। 'सत्यमेतदि'ति। अभिप्रायप्रकाशनेन यद्व्यञ्जकत्वं तत्सर्वेषामस्तीत्यर्थः। विशेषमाह—'किन्त्वि'त्यादि। यद्व्यञ्जकत्वं तत्तु वाचकत्वान्न भिद्यत इति सम्बन्धः। वक्त्रभिप्रायप्रकाशनेनेत्यस्य स्थाने वक्त्रभिप्रायविशिष्टार्थप्रकाशनेनेति च पाठः। 'अविशिष्टं' साधारणम्। वाचकत्वान्न भिद्यत इत्यत्र हेतुमाह—'व्यङ्ग्यं ही'-

**न तु विवक्षितत्वेन। यस्य तु विवक्षितत्वेन व्यङ्ग्यस्य स्थितिः तद्व्यञ्जकत्वं ध्वनिव्यवहारस्य प्रयोजकम्।**

लोचनम्

गामानयेति श्रुतेऽप्यभिप्राये व्यक्ते तदभिप्रायविशिष्टोऽर्थ एवाभिप्रेतानयनादिक्रियायोग्यो न त्वभिप्रायमात्रेण किंचित्कृत्यमिति भावः। **विवक्षितत्वेनेति**। प्राधान्येनेत्यर्थः। **यस्य त्विति**। ध्वन्युदाहरणेष्विति भावः। काव्यवाक्येभ्यो हि न नयनानयनाद्युपयोगिनी प्रतीतिरभ्यर्थ्यते, अपि तु प्रतीतिविश्रान्तिकारिणी, सा चाभिप्रायनिष्ठैव नाभिप्रेतवस्तुपर्यवसाना।

नन्वेवमभिप्रायस्यैव व्यङ्ग्यत्वात्त्रिविधं व्यङ्ग्यमिति यदुक्तं तत्कथमित्याह—

बालप्रिया

त्यात्यादि। 'नान्तरीयकतये'ति। अविनाभूतत्वेनेत्यर्थः। भावं विवृणोति लोचने—**गामित्यादि**। अभिप्राये व्यक्तेऽपीति सम्बन्धः। क्षीरग्रहणाद्यर्थकगवानयनाभिप्राये व्यक्तेऽपीत्यर्थः। **अर्थः** गोकर्मकात्वाद्यर्थः। **न त्वित्यादि**। गोकर्मकानयनादिक्रियारूपार्थं विना अभिप्रायासिद्धिरतश्च न वाचकत्वात्पृथग्व्यञ्जकत्वं वाच्याद्व्यङ्ग्यमिवेति च भावः। अभिप्रायरूपव्यङ्ग्यस्य विवक्षितत्वप्राप्त्यभावान्निषेधानुपपत्तिमाशङ्क्य व्याचष्टे—**प्राधान्येनेति**। वृत्तौ यस्य व्यङ्ग्यस्येति सम्बन्धः। विवक्षितत्वेन स्थितिरित्यत्राकाङ्क्षां पूरयति—**ध्वन्युदाहरणेष्विति**। वृत्तौ तद्व्यञ्जकत्वमित्यस्य तत्कर्मकव्यञ्जकत्वमित्यर्थः। ननु ध्वन्युदाहरणेष्वपि लौकिकवाक्येष्विव विवक्षितत्वापरपर्यायं प्राधान्यं वाच्यस्य विद्यत इत्याशङ्कायामभिप्रायमाह—**काव्यवाक्येभ्य** इत्यादि। **नयनेति**। प्रापणादिक्रियोपयोगिनीत्यर्थः। **प्रतीतिः** वाच्यार्थप्रतीतिः। **नाभ्यर्थ्यत** इति। किन्तु बलादापततीति भावः। **अपि त्विति**। का पुनरभ्यर्थ्यत इति भावः। **प्रतीतिविश्रान्तिकारिणी** वाच्यप्रतीतिविश्रान्तिकारिणी। प्रतीतिरभ्यर्थ्यत इत्यनुषङ्गः। रसादिप्रतीतिरभ्यर्थ्यत इत्यथः। विभावादिप्रतीतिरूपत्वात्तस्या इति भावः। ननु सापि वाच्यपर्यवसायिन्यस्तु, तन्मूलकत्वादिति कथं व्यङ्ग्यस्य प्राधान्यमित्यत आह—**सा चेत्यादि**। चस्त्वर्थे। **अभिप्रायनिष्ठैव** रसादिव्यङ्ग्यपर्यवसायिन्येव। **अभिप्रेतवस्त्विति**। वाच्यार्थेत्यर्थः। अतश्च वाच्यस्य न विवक्षितत्वलक्षणं प्राधान्यं काव्यवाक्येष्विति भावः।

यस्त्वित्यादिग्रन्थमानर्थक्यशङ्कापरिहारायावतारयति—**नन्वित्यादि**। वृत्तावभिप्रायविशेषरूपं यद्व्यङ्ग्यन्तु तात्पर्येण प्रकाश्यमानं सच्छशब्दार्थाभ्यां प्रकाश्यते तद्विवक्षितं भवतीति सम्बन्धः। 'विवक्षितं' प्रधानम्। 'तदेव' अभिप्रायविशेषरूपमेव। अपरिमितविषयस्येति हेतुगर्भम्। किन्तु तथा दर्शितेति सम्बन्धः। 'तथा' उक्तप्रकारेण। 'अनभिप्रायरूपश्चे'ति। विवक्षितमित्यनुषङ्गः। 'नातिव्याप्ति'रित्यादि। गुणीभूतव्य-

यत्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाशते तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानं सत्। किन्तु तदेव केवलमपरिमितविषयस्य ध्वनिव्यवहारस्य न प्रयोजकमव्यापकत्वात्। तथा दर्शितभेदत्रयरूपं तात्पर्येण द्योत्यमानमभिप्रायरूपमनभिप्रायरूपं च सर्वमेव ध्वनिव्यवहारस्य प्रयोजकमिति यथोक्तव्यञ्जकत्वविशेषे ध्वनिलक्षणे नातिव्याप्तिर्न चाव्याप्तिः। तस्माद्वाक्यतत्त्वविदां मतेन तावद्व्यञ्जकत्वलक्षणः शाब्दो व्यापारो न विरोधी प्रत्युतानुगुण एव लक्ष्यते। परिनिश्चितनिरपभ्रंशशब्दब्रह्मणां विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहार इति

लोचनम्

यत्त्विति। एवं मीमांसकानां नात्र विमतिर्युक्तेति प्रदर्श्य वैयाकरणानां नैवात्र सास्तीति दर्शयति—परिनिश्चितेति। परितः निश्चितं प्रमाणेन स्थापितं निरपभ्रंशं गलितभेदप्रपञ्चतया अविद्यासंस्काररहितं शब्दाख्यं प्रकाशपरामर्शस्वभावं ब्रह्म व्यापकत्वेन बृहद्विशेषशक्तिनिर्भरतया च बृंहितं विश्वनिर्माणशक्तीश्वरत्वाच्च बृंहणम् यै रिति।

बालप्रिया

ङ्ग्यस्थलेऽभिप्रायरूपव्यङ्ग्यस्य क्वचित्सत्त्वात्तदादाय तत्रातिव्याप्तिर्न रसादिव्यङ्ग्यस्याभिप्रायरूपत्वाभावात्तत्स्थलेऽव्याप्तिश्च नेत्यर्थः। उपसंहरति—'तस्मादि'त्यादि। न न विरोधीति सम्बन्धः। वाक्यतत्त्ववित्पदार्थकथनेन वृत्तमनुवदन्नुपसंहारग्रन्थं व्याकुर्वन् परिनिश्चितेत्यादिविशेषणविशिष्टविपश्चिच्छब्दार्थकथनेन वर्तिष्यमाणग्रन्थतात्पर्यमाह—एवमित्यादिना। सेति। विमतिरित्यर्थः। परिनिश्चितेत्यादिग्रन्थमनादिनिधनं ब्रह्मेत्यादिभर्तृहरिवचनादिकमनुसृत्य सविग्रहं विवृणोति—परित इत्यादि। परितः बहुमुखान्वादिनः प्रति दोषविशेषवाचिनापभ्रंशशब्देनात्र सर्वदोषहेतुरविद्यासंस्कारो लक्ष्यत इत्याशयेन व्याचष्टे—गलितेत्यादि। गलितभेदप्रपञ्चतया भेदप्रपञ्चसंसर्गरहितत्वेन। उपलक्षणे तृतीया। गलितभेदप्रपञ्चत्वे हेतुरविद्येत्यादि। शब्दपदविवरणं शब्दार्थाख्यमिति। शब्द इत्यर्थ इति चाख्या यस्य तत्। नामरूपात्मकमित्यर्थः। यद्वा—शब्दार्थयोराख्या स्फुरणं यस्मिंस्तच्छब्दार्थभ्रमाधिष्ठानमित्यर्थः। निरुपाधिरूपमाह—प्रकाशेत्यादि। स्वप्रकाशज्ञानस्वरूपमित्यर्थः। बृहधातोर्ब्रह्मशब्दनिष्पत्तिमभिप्रेत्य विवृणोति—व्यापकत्वेन बृहदिति। एवं निरुपाधिपरतया व्याख्याय सोपाधिपरतयापि व्याचष्टे—विशेषेत्यादि। विशेषाणां व्यष्टिरूपाणां सर्वेषां शक्तिभिर्निर्भरतापूर्णता तया चेत्यर्थः। बृहदित्यनेन सम्बध्नाति। बृहधातोर्ब्रह्मशब्दनिष्पत्त्यभिप्रायेण चाह—बृंहितमित्यादि। बृंहितमिति कर्तरि क्तः। कथं परिपोषरूपं बृंहणमित्यत आह—विश्वेत्यादि। विश्वस्य यानि निर्माणानि तद्विषया याः शक्तयः

**यैः सह किं विरोधाविरोधौ चिन्त्येते । कृत्रिमशब्दार्थसम्बन्धवादिनां तु युक्तिविदामनुभवसिद्ध एवायं व्यञ्जकभावः शब्दानामर्थान्तराणामिवा-**

**लोचनम्**

एतदुक्तं भवति—वैयाकरणास्तावद्ब्रह्मपदेनान्यत्किंचिदिच्छन्ति तत्र का कथा वाचकत्वव्यञ्जकत्वयोः, अविद्यापदे तु तैरपि व्यापारान्तरमभ्युपगतमेव । एतच्च प्रथमोद्द्योते वितत्य निरूपितम् । एवं वाक्यविदां पदविदां चाविमतिविषयत्वं प्रदर्श्य माणतत्त्वविदां तार्किकाणामपि न युक्तात्र विमतिरिति दर्शयितुमाह—**कृत्रिमेति** । कृत्रिमः सङ्केतमात्रस्वभावः परिकल्पितः शब्दार्थयोः सम्बन्ध इति ये वदन्ति नैयायिकसौगतादयः । यथोक्तम्—'न सामयिकत्वाच्छब्दार्थप्रत्ययस्ये'ति । तथा शब्दाः संकेतितं प्राहुरिति । **अर्थान्तराणामिति** । दीपादीनाम् ।

**बालप्रिया**

ताभिर्हेतुभिः ईश्वरत्वाद्विश्वपरिणमनसमर्थत्वात् । यद्वा—विश्वनिर्माणशक्तिर्माया, तस्या ईश्वरत्वाद्विश्वरूपेण परिणममानमायाधिष्ठानत्वादित्यर्थः । यैरित्यस्य परिनिश्चितमित्यनेन सम्बन्धः । तेषामिति शेषः । वृत्तौ 'विरोधाविरोधावि'ति । पूर्वपक्षतया विरोधस्सिद्धान्ततया अविरोधश्च ।

ननु वैयाकरणमतमाश्रित्य ध्वनिव्यवहारस्य प्रवृत्तत्वेऽपि वाचकलक्षणस्य शब्दस्य वाचकत्वात्पृथग्व्यञ्जकत्वाङ्गीकारे विरोधाविरोधौ मीमांसकवच्चिन्तनीयाविति तैस्सह किमित्याद्युक्तमयुक्तमिति शङ्कायां तात्पर्यमाह—**एतदुक्तमित्यादि** । **ब्रह्मपद** इति । विद्यादशायामित्यर्थः । नेच्छन्तीति सम्बन्धः । **अन्यदिति** । ब्रह्मण इति शेषः । **तत्र** ब्रह्मपदे । **का कथेति** । कथापि नास्तीत्यर्थः । अतश्च कथं विरोधाविरोधचिन्ताप्रसङ्ग इति भावः । **व्यापारान्तरमिति** । व्यञ्जकत्वमित्यर्थः । **अभ्युपगतमेवेति** । अतस्तत्रापि न विरोधाविरोधचिन्तावसर इति भावः । व्यापारान्तरं तैरभ्युपगतमिति कुतोऽवगन्तव्यमित्यत आह—**एतच्चेति** । **प्रथमोद्योत** इति । ध्वनिलक्षणनिरूपण इति भावः । वृत्तमनुवदन्नवतारयति—**एवमित्यादि** । युक्तिविदामित्यस्यार्थकथनं प्रमाणतत्त्वविदां तार्किकाणामिति । सौगतादेरुपलक्षणमिदम् । **सङ्केतमात्रस्वभाव** इति । सङ्केतस्समयः, स चास्माच्छब्दादयमर्थो बोद्धव्य इत्यादीच्छा । अस्य शब्दस्यायमर्थ इत्युपदेशस्स इति च केचित् । नेत्यादिप्रत्ययस्येत्यन्तं न्यायसूत्रम् । शब्दो लिङ्गविधयार्थबोधक इति पूर्वपक्षस्य समाधानमिदम् । **नेति** । शब्दो लिङ्गविधयार्थबोधको नेत्यर्थः । अत्र हेतुः—**सामयिकत्वादित्यादि** । शब्दादर्थस्य यः प्रत्ययो बोधस्तस्य सामयिकत्वात्सङ्केतमूलकत्वादित्यर्थः । सौगतवचनमाह—**शब्दा इत्यादि** । शब्दानामयं व्यञ्जकभावोऽनुभवसिद्ध एवेत्येतदुपपादनायार्थान्तराणामिवेति दृष्टान्तकथनं, तत्रार्थान्तराणामित्येतद्व्याचष्टे—**दीपादीना-**

विरोधश्चेति न प्रतिक्षेप्यपदवीमवतरति ।

वाचकत्वे हि तार्किकाणां विप्रतिपत्तयः प्रवर्तन्ताम्, किमिदं स्वाभाविकं शब्दानामाहोस्वित्सामयिकमित्याद्याः । व्यञ्जकत्वे तु तत्पृष्ठभाविनि भावान्तरसाधारणे लोकप्रसिद्ध एवानुगम्यमाने को विमतीनाम-

लोचनम्

नन्वनुभवेन द्विचन्द्राद्यपि सिद्धं तच्च विमतिपदमित्याशङ्क्याह—**अविरोधश्चे**ति । अविद्यमानो विरोधो निरोधो बाधकात्मको द्वितीयेन ज्ञानेन यस्य तेनानुभवसिद्धश्चाबाधितश्चेत्यर्थः । अनुभवसिद्धं न प्रतिक्षेप्यं यथा वाचकत्वम् ।

ननु तत्राप्येषां विमतिः । नैतत्; न हि वाचकत्वे सा विमतिः, अपि तु वाचकत्वस्य नैसर्गिकत्वकृत्रिमत्वादौ तदाह—**वाचकत्वे हीति** । नन्वेवं व्यञ्जकत्वस्यापि धर्मान्तरमुखेन विप्रतिपत्तिविषयतापि स्यादित्याशङ्क्याह—**व्यञ्जकत्वे त्विति** । **भावान्तरेति** । अक्षिनिकोचादेः साङ्केतिकत्वं चक्षुरादिकस्यानादिर्योग्यतेति दृष्टा

बालप्रिया

मिति । यथा दीपादिः परिकल्पितनिजविषयादन्यं विषयमपि प्रकाशयति, तथा शब्दोऽपि सङ्केतितादन्यं विषयं प्रकाशयतीति तेषामप्यनुभवसिद्ध एवायं शब्दानां व्यञ्जकभाव इति भावः ।

**नन्वि**त्यादि । **अनुभवेन** दोषजनितेनानुभवेन । **तच्च** द्विचन्द्रादि च । तच्चेत्यस्य स्थाने न च नेति च पाठः । परिहारानुगुण्येनाविरोधपदं व्याचष्टे—**अविद्यमान** इत्यादि । **निरोधः** प्रतिबन्धः । फलितमाह—**तेने**त्यादि । **न प्रतिक्षेप्यं** न विमतिपदम् । व्यञ्जकत्वं न विमतिपदमनुभवसिद्धत्वाद्वाचकत्ववदित्यनुमानमनेन दर्शितम् ।

अत्र दृष्टान्तस्य साध्यवैकल्यशङ्कापरिहारपरतया वाचकत्वे हीत्यादिग्रन्थमवतारयति—**नन्वि**त्यादि । **तत्रापि** वाचकत्वेऽपि । **एषां** तार्किकाणाम् । **नैतदि**ति । एतन्न युक्तमित्यर्थः । अत्र हेतुः—**न** हीत्यादि । वाचकत्वे धर्मिणि न विमतिः, किन्तु तत्र नैसर्गिकत्वादिधर्म एवेत्यर्थः । अतो न साध्यवैकल्यं दृष्टान्तस्येति भावः । **धर्मान्तरमुखेने**ति । नैसर्गिकत्वादिमुखेनेत्यर्थः । **विप्रतिपत्तिविषयतापी**ति । न केवलमनुभवसिद्धतेत्यपिशब्दार्थः । वाचकत्वस्य विप्रतिपत्तिविषयत्वं व्यञ्जकत्वस्य तदभावञ्च दर्शयन् भावमाह—**अक्षी**त्यादि । अक्ष्णोर्निकोचो विकासः । आदिपदेन सङ्कोचादिकं गृह्यते तस्य । **साङ्केतिकत्वमि**ति । सङ्केतवत्त्वमित्य[र्थः] । यद्वा—अर्थेन सह सम्बन्धस्य सङ्केतसिद्धत्वमित्यर्थः । **योग्यते**ति । चाक्षुषादिज्ञानकारणतेत्यर्थः । यथा भूषणसारे "इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथे"ति । **इति दृष्टैवे**ति ।

वसरः। अलौकिके ह्यर्थे तार्किकाणां विमतयो निखिलाः प्रवर्तन्ते न तु लौकिके। न हि नीलमधुरादिष्वशेषलोकेन्द्रियगोचरे बाधारहिते तत्त्वे परस्परं विप्रतिपन्ना दृश्यन्ते। न हि बाधारहितं नीलं नीलमिति ब्रुवन्नपरेण प्रतिषिध्यते नैतन्नीलं पीतमेतदिति। तथैव व्यञ्जकत्वं वाचकानां शब्दानामवाचकानां च गीतध्वनीनामशब्दरूपाणां च चेष्टादीनां

लोचनम्

काममस्तु संशयः शब्दस्याभिधेयप्रकाशने व्यञ्जकत्वं तु यादृशमेकरूपं भावान्तरेषु तादृगेव प्रकृतेऽपीति निश्चितैकरूपे कः संशयस्यावकाश इत्यर्थः। नैतन्नीलमिति नीले हि न विप्रतिपत्तिः, अपि तु प्राधानिकमिदं पारमाणवमिदं ज्ञानमात्रमिदं तुच्छमिति तत्स्रष्टावलौकिक्य एव विप्रतिपत्तयः। **वाचकानामिति**। अन्युदाहरणे-

बालप्रिया

अक्षिनिकोचादेश्चक्षुरादीन्द्रियस्य चार्थप्रकाशकत्वे समानेऽप्याद्यस्यार्थेन सह सम्बन्धस्य साङ्केतिकत्वं द्वितीयस्यार्थेन सह सम्बन्धस्य नैसर्गिकत्वञ्च दृष्टमित्यर्थः। **काममि**त्यादि। शब्दस्य वाचकत्वे किमिदं साङ्केतिकमाहोस्विन्नैसर्गिकमिति वाचकत्वधर्मिकस्संशयः कामं भवत्वित्यर्थः। यथा शब्दे नित्यानित्यत्वसंशयः। **व्यञ्जकत्वमिति**। तुशब्दो विशेषे। **भावान्तरेष्विति**। प्रदीपादिष्वित्यर्थः। न तु लौकिक इत्युक्तमुपपादयति वृत्तौ 'न ही'त्यादि। 'नीलमधुरादिषु' नीलमधुरादिद्रव्येषु। निर्धारणे सप्तमी। 'तत्त्वे' पदार्थे। 'विप्रतिपन्ना' इति। जना इति शेषः। उक्तमेव स्फुटयति—'न ही'त्यादि। 'बाधारहितं सत्यम्। 'नीलं' नीलद्रव्यं घटादि। 'नीलमिति ब्रुवन्नि'ति। इदमिति शेषः। 'अपरेणे'त्यादि। एतन्न नीलमेतत्पीतमिति न हि प्रतिषिध्यत इति सम्बन्धः। लोचने भावमाह—**नैतदि**त्यादि। नीले एतन्न नीलमिति विप्रतिपत्तिर्न हीति सम्बन्धः। लौकिकत्वादिति भावः। विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिः। **अपि त्वि**त्यादि। अपि त्वित्यलौकिक्य एव विप्रतिपत्तय इति सम्बन्धः। तत्प्रकारकथनं **प्राधानिकमि**त्यादि। इदमित्यनेन सर्वत्र जगद्विवक्षितम्। **प्राधानिकं** प्रधानस्य मूलप्रकृतेर्विकारः। **पारमाणवं** परमाणुजन्यम्। **ज्ञानमात्रं** विज्ञानस्वरूपमेव। **तुच्छं** शून्यम्। अत्र क्रमेण सांख्यवैशेषिकविज्ञानवादिमाध्यमिकानाम्मतानि दर्शितानि। **तत्स्रष्टावि**ति। जगत्सृष्टिहेतावित्यर्थः। तद्द्रष्टाविति पाठे तु जगत्कारणद्रष्टावित्यर्थः। **अलौकिक्य एव विप्रतिपत्तय** इति। लौकिके विप्रतिपत्तीनामदर्शनादलौकिके वस्तुनि तद्दर्शनाच्चान्वयव्यतिरेकाभ्यामलौकिकवस्तुविषयकत्वमेव तासां सिद्धमित्यर्थः। अलौकिक इत्यादिवृत्तिग्रन्थोऽनेन विवृतः। वृत्तावुपसंहरति—'तथैवे'त्यादि। 'तथैव' तथाभूतमेव, लौकिकमेवेति यावत्। 'केनापह्नूयत' इति। सर्वैराद्रियत एवे-

**यत्सर्वेषामनुभवसिद्धमेव तत्केनापह्नूयते । अशब्दमर्थं रमणीयं हि सूचयन्तो व्याहारास्तथा व्यापारा निबद्धाश्चानिबद्धाश्च विदग्धपरिषत्सु विविधा विभाव्यन्ते । तानुपहास्यतामात्मनः परिहरन् कोऽतिसन्दधीत सचेताः**

**लोचनम्**

ष्विति भावः । **अशब्दमिति** । अभिधाव्यापारेणास्पृष्टमित्यर्थः । **रमणीयमिति** । यद्गोप्यमानतयैव सुन्दरीभवतीत्यनेन ध्वन्यमानतायामसाधारणप्रतीतिलाभः प्रयोजनमुक्तम् । **निबद्धाः** प्रसिद्धाः । **तानिति** व्यवहारान् । कः सचेता अतिसन्दधीत नाद्रियेतेत्यर्थः । लक्षणे शत्रादेशः आत्मनः कर्मभूतस्य योपहसनीयता तस्याः परि-

**बालप्रिया**

त्यर्थः । अत्र हेतुः—'अशब्दमि'त्यादि । नास्ति शब्दोऽभिधायको यस्येति व्युत्पत्तिमभिप्रेत्याशब्दमित्येतद्व्याचष्टे लोचने—**अभिधेत्यादि** । अशब्दत्वं रमणीयत्वे हेतुरिति दर्शयन्विवृणोति—**यदित्यादि** । वस्त्रान्तप्रावृतकामिनीकुचकलशदृष्टान्तसिद्धमेतदिति भावः । सुन्दरी भवतीति रमणीयपदव्याख्यानम् । **इत्यनेनेति** । अशब्दत्वरमणीयत्वविशेषणद्वयेनेत्यर्थः । **ध्वन्यमानतायामिति** । अर्थस्येति शेषः । **असाधारणेति** । प्रतीतेरसाधारणत्वमास्वाद्यमानात्मकत्वम् । वृत्तौ 'व्याहारा' इति । व्यवहारा इति च पाठः । 'तथा व्यापारा' इति । येनार्थस्याशब्दत्वं रमणीयत्वञ्च भवति, तथाभूतो व्यापारो व्यञ्जकत्वलक्षणो येषां तथाभूता इत्यर्थः । 'निबद्धाः' काव्यादिरूपाः । 'अनिबद्धाः' गद्यादिरूपाः । लोचने—**प्रसिद्धा इति** । मुक्तकादिरूपत्वेन प्रसिद्धा इत्यर्थः । अतिसन्दधीतेत्येतत्प्रकृतानुगुणं विवृणोति—**नाद्रियेतेति** । सचेता इति विशेष्यानुसारेण परिहरन्नित्येतद्व्याचष्टे—**लक्षण इति** । लक्षणरूपार्थ इत्यर्थः । परिहरणस्यादरणफलत्वाल्लक्षणत्वम् । **शत्रादेश इति** । परिहरन्नित्यत्रेति शेषः । तेन सिद्धमर्थमाह—**आत्मन इत्यादि** । **उपसहनीयता** विद्वत्परिषत्कर्तृकपरिहासविषयता । **परिहारेण** प्रागभावपरिपालनेन । फलितमाह—**तामित्यादि** । वृत्तौ 'ब्रूयादि'ति । कश्चिदिति शेषः । सम्भाव्यन्तद्वचनमाह—'अस्ती'त्यादि । कथमित्यत्राह—'व्यञ्जकत्व'मित्यादि । 'तच्च' गमकत्वञ्च । 'लिङ्गत्वं' ज्ञापकत्वम् । 'अत' इति । गमकत्वस्य लिङ्गत्वरूपत्वादित्यर्थः । इतीति हेतौ । 'तेषां' शब्दानां व्यङ्ग्यव्यञ्जकभावो लिङ्गिलिङ्गभाव एवेति योजना । एवकारार्थकथनं 'नापरः कश्चिदि'ति । उक्तं साधयति-'अतश्चेत्यादि । 'अतः' वक्ष्यमाणाद्धेतोः । चकारो युक्त्यन्तरसमुच्चायकः । 'एतदि'ति । व्यङ्ग्यव्यञ्जकभावस्य लिङ्गिलिङ्गभावादनतिरिक्तत्वमित्यर्थः । 'अवश्यमेव बोद्धव्य'मिति । अतिरिक्तत्वे प्रमाणाभावादिति भावः । अत इत्युक्तन्दर्शयति-'यस्मादि' त्यादि । ततः किमत आह-'वक्त्रभिप्रायश्चे'त्यादि । व्यञ्जकत्वमित्यादिग्रन्थस्य

ब्रूयात्, अस्त्यतिसन्धानावसरः व्यञ्जकत्वं शब्दानां गमकत्वं तच्च लिङ्गत्वमतश्च व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति लिङ्गिलिङ्गभाव एव तेषां व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित्। अतश्चैतदवश्यमेव बोद्धव्यं यस्मा-द्वक्त्रभिप्रायापेक्षया व्यञ्जकत्वमिदानीमेव त्वया प्रतिपादितं वक्त्रभिप्राय-श्चानुमेयरूप एव।

अत्रोच्यते—नन्वेवमपि यदि नाम स्यात्तत्किं नश्छिन्नम्। वाच-कत्वगुणवृत्तिव्यतिरिक्तो व्यञ्जकत्वलक्षणः शब्दव्यापारोऽस्तीत्यस्माभिर-भ्युपगतम्। तस्य चैवमपि न काचित् क्षतिः। तद्धि व्यञ्जकत्वं लिङ्गत्व-मस्तु अन्यद्वा। सर्वथा प्रसिद्धशाब्दप्रकारविलक्षणत्वं शब्दव्यापारविष-

## लोचनम्

द्वारेणोपलक्षितस्तां परिजीहीर्षुरित्यर्थः। **अस्तीति**। व्यञ्जकत्वं नापह्नूयते तत्त्व-तिरिक्तं न भवति अपि तु लिङ्गिलिङ्गभाव एवायम्। **इदानीमेवेति**। जैमि-नीयमतोपक्षेपे।

**यदि नाम स्यादिति**। प्रौढवादितयाभ्युपगमेऽपि स्वपक्षस्तावन्न सिध्यतीति दर्शयति—**शब्देति**। शब्दस्य व्यापारः सन् विषयः शब्दव्यापारविषयः, अन्ये तु

## बालप्रिया

भावमाह लोचने—**व्यञ्जकत्वमित्यादि**। **नापह्नूयत** इति। स्वरूपत इति शेषः। तत्तु व्यञ्जकत्वन्तु। **अतिरिक्तं** लिङ्गत्वाद्भिन्नम्। **लिङ्गिलिङ्गभाव एव** लिङ्गिनि-रूपितलिङ्गत्वमेव। **अयं** व्यञ्जकत्वम्।

**स्यादितीति**। इत्यनेनेत्यर्थः। **प्रौढेति**। परोक्तं स्वीकृत्यापि स्वसिद्धान्त-स्थापनाय यो वादस्स प्रौढवादः तं वदतीति प्रौढवादी, तस्य भावस्तत्ता तये-त्यर्थः। **स्वपक्ष** इति। व्यञ्जकत्वं लिङ्गत्वादनतिरिक्तमिति पूर्वपक्षिपक्ष इत्यर्थः। **न सिद्ध्यतीति**। वक्ष्यमाणयुक्त्येति भावः। वृत्तौ 'तत् किं नः छिन्नमि'त्युक्तस्यैव विवरणम्—'वाचकत्वे'त्यादि। 'प्रसिद्धे'ति। प्रसिद्धो यश्शब्दस्य प्रकारो धर्मोऽ-भिधा लक्षणा च तद्विलक्षणत्वमित्यर्थः। शब्दव्यापारत्वमिति वक्तव्ये शब्द-व्यापारविषयत्वमित्युक्तिरसङ्गतेत्यतो व्याचष्टे लोचने—**शब्देत्यादि**। **विषय** इति। सचेतोबुद्धिविषय इत्यर्थः। तदास्वाद्य इति यावत्। व्याख्यानान्तरं दर्शयति—**अन्य** इति। वृत्तौ 'तस्ये'ति। व्यञ्जकत्वस्येत्यर्थः। व्यञ्जकत्वं लिङ्गत्व-मस्त्वित्युक्त्या सिद्धं नस्समीहितमिति मन्यमानं पूर्वपक्षिणं प्रत्याह—'न पुनरि'त्यादि।

यत्वं च तस्यास्तीति नास्त्येवावयोर्विवादः । न पुनरयं परमार्थो यद्व्य-ञ्जकत्वं लिङ्गत्वमेव सर्वत्र व्यङ्ग्यप्रतीतिश्च लिङ्गिप्रतीतिरेवेति ।

यदपि स्वपक्षसिद्धयेऽस्मदुक्तमनूदितं त्वया वक्त्रभिप्रायस्य व्यङ्ग्य-त्वेनाभ्युपगमात्तत्प्रकाशने शब्दानां लिङ्गत्वमेवेति तदेतद्यथास्माभिरभि-हितं तद्विभज्यं प्रतिपाद्यते श्रूयताम्—द्विविधो विषयः शब्दानाम्—अनुमेयः प्रतिपाद्यश्च । तत्रानुमेयो विवक्षालक्षणः । विवक्षा च शब्द-स्वरूपप्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा चेति द्विप्रकारा । तत्राद्या न शाब्दव्यवहाराङ्गम् । सा हि प्राणित्वमात्रप्रतिपत्तिफला । द्वितीया तु शब्दविशेषावधारणावसितव्यवहितापि शब्दकरणव्यवहारनिबन्धनम् । ते तु द्वे अप्यनुमेयो विषयः शब्दानाम् । प्रतिपाद्यस्तु प्रयोक्तुरर्थप्रति-पादनसमीहाविषयीकृतोऽर्थः ।

स च द्विविधः—वाच्यो व्यङ्ग्यश्च । प्रयोक्ता हि कदाचित्स्वश-

लोचनम्

शब्दस्य यो व्यापारस्तस्य विषयो विशेष इत्याहुः । न पुनरिति । प्रदीपालोकादौ लिङ्गिलिङ्गभावशून्योऽपि हि व्यङ्ग्यव्यञ्जकभावोऽस्तीति व्यङ्ग्यव्यञ्जकभावस्य लिङ्गि-लिङ्गभावोऽव्यापक इति कथं तादात्म्यम् । विषय इति । शब्द उच्चरिते यावति

बालप्रिया

इति यदयं पुनर्न परमार्थ इति सम्बन्धः । अत्राभिप्रायमाह लोचने—प्रदीपेत्यादि । लिङ्गीति । लिङ्गिलिङ्गभावेन लिङ्गिनिरूपितलिङ्गत्वेन शून्यः विना कृतः तदसमाना-धिकरण इति यावत् । शून्ये इति पाठे प्रदीपालोकादावित्यस्य विशेषणं तत् । व्यङ्ग्य-व्यञ्जकभाव इति । घटादितत्तद्विषयेण सहेति शेषः । इतीति हेतौ । लिङ्गिलिङ्ग-भावो व्यङ्ग्यव्यञ्जकभावस्य व्यापको नेति सम्बन्धः । नञ्रहितपाठे त्वव्यापक इति छेदः । कथन्तादात्म्यमिति । यदि हि व्यङ्ग्यव्यञ्जकभावो लिङ्गिलिङ्गभाव एव स्यान्न तदतिरिक्तः, तर्हि यत्र यत्र व्यङ्ग्यव्यञ्जकभावस्तत्र तत्र लिङ्गिलिङ्गभावोऽपि भवेत्, न चासावस्ति प्रदीपादौ व्यभिचारदर्शनादतस्तयोरैक्यञ्च भवतीत्यर्थः ।

ननु वक्त्रभिप्रायस्य व्यञ्जकत्वन्तु शब्दस्य लिङ्गत्वमेव वक्तृज्ञानानुमापकत्वं शब्दस्येति वदतां प्राभाकराणां मतस्य संवादकत्वादित्याशङ्कायामुक्तं वृत्तौ 'यदपी'-त्यादि । अभिहितमित्यस्यानन्तरं तथेति शेषः । विषयशब्दस्यार्थे प्रसिद्धत्वात्तस्य चात्रायोगाद्व्याचष्टे लोचने–शब्द इत्यादि । यावतीति । यावत्यर्थ इत्यर्थः । तावा-

ब्देनार्थं प्रकाशयितुं समीहते कदाचित्स्वशब्दानभिधेयत्वेन प्रयोजना-

लोचनम्

प्रतिपत्तिस्तावान्विषय इत्युक्तः। तत्र शब्दप्रयुयुक्षा अर्थप्रतिपिपादयिषा चेत्युभय्यपि विवक्षानुमेया तावत्। यस्तु प्रतिपिपादयिषायां कर्मभूतोऽर्थस्तत्र शब्दः करणत्वेन व्यवस्थितः न त्वसावनुमेयः, तद्विषया हि प्रतिपिपादयिषैव केवलमनुमीयते। न च तत्र शब्दस्य करणत्वे यैव लिङ्गस्येतिकर्तव्यता पक्षधर्मत्वग्रहणादिका सास्ति, अपि

बलप्रिया

मिति। उच्चरितशब्दजन्यप्रतिपत्तिविषय इत्यर्थः। वृत्तौ 'आद्ये'ति। शब्दस्वरूपप्रकाशनेच्छेत्यर्थः। 'शाब्दे'ति। शाब्दः शब्दकरणको यो व्यवहारोऽर्थप्रत्ययस्तस्याङ्गमित्यर्थः। 'प्राणित्वे'ति। शब्दस्वरूपप्रकाशनेच्छयोच्चरितेन शब्देनायं प्राणीति श्रोतुर्या प्राणित्वमात्रस्य प्रतिपत्तिः मात्रपदेनार्थस्य व्यवच्छेदः सा फलं यस्यास्सेत्यर्थः। 'द्वितीये'ति। शब्देनार्थप्रकाशनेच्छेत्यर्थः। 'शब्दे'ति। शब्दविशेषस्य प्रतिपिपादयिषितार्थबोधानुकूलस्य वाक्यस्य यदवधारणं वक्तुरनुसन्धानं तस्मिन्नवसिता पर्यवसिता तदुत्पादनेन कृतार्थेति यावत्। अत एव व्यवहितापि शाब्दबोधं प्रति व्यवधानवत्यपि। यद्वा—व्यवहितापि शब्दविशेषावधारणावसितेति योजना। शब्देनार्थविशेषस्यावधारणे श्रोतुर्बोधे अवसिता परम्परया तदुत्पादिकेति यावत्। तथासतीत्यर्थः। 'शब्दे'ति। शब्दः करणं यस्य तथाभूतो व्यवहारश्शाब्दबोधः, तस्य निबन्धनं निमित्तमित्यर्थः। ते तु द्वे इति पूर्वोक्ताद्द्विप्रकाराविवक्षेत्यर्थः। 'अनुमेयो विषय' इति। अयमेतद्विवक्षुः एवंविधशब्दप्रयोक्तृत्वादित्याद्यनुमानमत्र बोध्यम्। तत्रानुमेय इत्यादिग्रन्थस्यार्थन्दर्शयन्नवतारयति लोचने—तत्रेत्यादि। शब्दप्रयुयुक्षा शब्दप्रयोगेच्छा। अनुमयेति। कार्येण तत्तच्छब्दप्रयोगेणेति शेषः। प्रतिपिपादयिषायां कर्मभूत इति। प्रतिपिपादयिषित इत्यर्थः। तत्रेति। प्रतिपिपादयिषितत्वविशिष्टेऽर्थे विषय इत्यर्थः। करणत्वेन व्यवस्थित इति। प्रतिपादनं प्रति करणत्वात्तथाविधार्थं प्रति करणत्वं बोध्यम्। न लिङ्गत्वेनेति भावः। अत एवाह—न त्वित्यादि। असौ प्रतिपिपादयिषितोऽर्थः। तद्विषया अर्थविषयिका। न त्वसावनुमेय इत्युक्तमेव साधयति—न चेत्यादि। तत्र प्रतिपाद्यार्थे विषये। पक्षधर्मत्वग्रहणादिका लिङ्गस्येतिकर्तव्यता या सा तत्र शब्दस्य करणत्वेन चास्तीति योजना। लिङ्गस्य लिङ्गत्वेनाभिमतस्य धूमादेः। इतिकर्तव्यता सहकारिकारणम्। लिङ्गेतिकर्तव्यताया अभावं प्रतिपाद्य शब्देतिकर्तव्यतायास्सद्भावमाह—अपि त्वित्यादि। अन्यैवेति। इतिकर्तव्यतास्तीत्यनुषङ्गः। सङ्केतेति। तत्तच्छब्दस्य तत्तदर्थे यस्सङ्केतस्तस्य स्फुरणं स्मरणं

पेक्षया कयाचित् । स तु द्विविधोऽपि प्रतिपाद्यो विषयः शब्दानां न लिङ्गितया स्वरूपेण प्रकाशते, अपि तु कृत्रिमेणाकृत्रिमेण वा सम्बन्धान्तरेण । विवक्षाविषयत्वं हि तस्यार्थस्य शब्दैर्लिङ्गितया प्रतीयते न तु स्वरूपम् । यदि हि लिङ्गितया तत्र शब्दानां व्यापारः स्यात्तच्छब्दार्थे

लोचनम्

स्वन्यैव संकेतस्फुरणादिका तत्र तत्र शब्दो लिङ्गम् । इतिकर्तव्यता च द्विधा-एकयाभिधाव्यापारं करोति द्वितीयया व्यञ्जनाव्यापारम् । तदाह—तत्रेत्यादिना । कयाचिदिति । गोपनकृतसौन्दर्यादिलाभाभिसन्धानादिकयेत्यर्थः । शब्दार्थ इति । अनु-

बालप्रिया

तदादिकेत्यर्थः । उपसंहरति—तदित्यादि । तत् तस्मात् । तत्र प्रतिपाद्यार्थे विषये । शब्दो लिङ्गविधया नार्थप्रतिपादकः पक्षधर्मत्वाद्यनुसन्धानानपेक्षया तत्प्रतिपादकत्वाच्चक्षुरादिवदित्यनुमानमत्र बोध्यम् । प्रतिपाद्यद्वैविध्ये निमित्तन्नोक्तं वृत्ताविस्यतश्शाब्दरूपकरणेतिकर्तव्यताद्वैविध्यं तन्निमित्तमिति दर्शयति—इतिकर्तव्यतेत्यादि । एकयेति । सङ्केतस्फुरणादिरूपयेत्यर्थः । अभिधाव्यापारमिति । सङ्केतितार्थबोधनमित्यर्थः । द्वितीययेति । वक्तृवैशिष्ट्यादिज्ञानादिरूपयेत्यर्थः । व्यञ्जनाव्यापारमिति । कस्यचिदर्थस्य व्यञ्जनमित्यर्थः । करोतीत्यनुषङ्गः । शब्द इति शेषः । वृत्तौ 'स्वशब्दानभिधेयत्वेने'ति । स्वशब्दाभिधेयत्वं विनेत्यर्थः । अर्थं प्रकाशयितुं समीहत इत्यनुषङ्गः । अत्र हेतुः-'प्रयोजने'त्यादि । प्रयोजनापेक्षयेत्येतद्व्याचष्टे लोचने—गोपनेत्यादि । गोपनकृतं यत्सौन्दर्यं सूक्तिचारुत्वं तदादेर्यो लाभो निष्पत्तिस्तदभिसन्धानादिकयेत्यर्थः । वृत्तौ 'स त्वि'त्यादि । 'द्विविधोऽपि' वाच्यो व्यङ्ग्यश्च । 'न लिङ्गितये'त्यादि । व्याप्तिस्मृत्यादिसहकृतशब्दरूपलिङ्गज्ञाप्यो न भवतीत्यर्थः । कथन्तर्हि भासत इत्यत्राह—'अपि त्वि'त्यादि । द्विविधोऽपीत्यादिशब्दानामित्यन्तस्यानुषङ्गः । कृत्रिमेणेत्यादिमतभेदकथनम् । 'सम्बन्धान्तरेणे'ति । अभिधादिरूपसम्बन्धविशेषेण हेतुनेत्यर्थः । न लिङ्गितया प्रकाशत इत्यत्र हेतुमाह—'विवक्षे'त्यादि । उक्तमेव साधयति-'यदि ही'त्यादि । 'तत्र' प्रतिपिपादयिषितेऽर्थे । 'लिङ्गतया शब्दानां व्यापारः' लिङ्गलिङ्गिभावरूपः शब्दसम्बन्धः । 'स्याद्यदि' प्रतिपिपादयिषितार्थो व्याप्तिस्मृत्यादिसहकृतशब्दरूपलिङ्गानुमेयो यदि स्यादित्यर्थः । 'तत्' तर्हि । 'शब्दार्थे' शब्दप्रतिपादितार्थे । 'सम्यगि'त्यादि । अयमर्थस्सत्यः, अयमर्थो मिथ्या इत्यादयो विरुद्धा वादाः । अयमर्थस्सत्यो मिथ्या वेत्यादिसंशयाश्च वस्तुतः प्रवर्तन्ते तत्प्रवृत्तिर्न स्यादित्यर्थः । 'धूमादा'विति । धूमादिलिङ्गेनानुमितं यदनुमेयान्तरं वह्न्यादि तस्मिन्निवेत्यर्थः । तत्र यथा तद्विवादा न प्रवर्तन्ते तथेत्यर्थः । नन्वनुमितेऽर्थे कुतो विवादाप्रवृत्तिरित्यतो भावमाह लोचने—अनुमानमि-

सम्यङ् मिथ्यात्वादि विवादा एव न प्रवर्तेरन् धूमादिलिङ्गानुमितानुमेयान्तरवत्। व्यङ्ग्यश्चार्थो वाच्यसामर्थ्याक्षिप्ततया वाच्यवच्छब्दस्य सम्बन्धी भवत्येव। साक्षादसाक्षाद्भावो हि सम्बन्धस्याप्रयोजकः। वाच्यवाचकभावाश्रयत्वं च व्यञ्जकत्वस्य प्रागेव दर्शितम्। तस्माद्वक्-

लोचनम्

मानं हि निश्चयस्वरूपमेवेति भावः। उपाधित्वेनेति। वक्त्रिच्छा हि वाच्यादेर-

बालप्रिया

त्यादि। केनचिल्लिङ्गेन कस्यचिदर्थस्यानुमितिर्निश्चयरूपैव भवतीत्यर्थः। एवकारेण तदुत्तरन्तद्विषयकविषयकसंशयो व्यवच्छिद्यते। सन्देहपूर्विका ह्यनुमितिः अर्थेनाव्यभिचारिण एव हेतोर्गमकत्वञ्चेत्यभिप्रायः। ननु व्यङ्ग्यत्वेनाभिमतस्यार्थस्य शब्देन सम्बन्धे सति तत्र व्यापारस्सिद्ध्यति, स एव नेत्याशङ्कायामुक्तमेव स्मारयति वृत्तौ 'व्यङ्ग्यश्चार्थ' इत्यादि। वाच्यसामर्थ्याक्षिप्ततयेति हेतौ तृतीया। अनेन परम्परासम्बन्धः प्रदर्शितः। 'वाच्यवदि'ति। वाच्येन तुल्यमित्यर्थः। वाच्य इवेति यावत्। ननु वाच्यस्य साक्षात्सम्बन्धः व्यङ्ग्यस्य तु तद्द्वारक इत्यत आह—'साक्षादि'त्यादि। 'अप्रयोजक' इति। अत एव संयोगसंयुक्तसमवायादीनां सन्निकर्षत्वाभिधानं सङ्गच्छत इति भावः। व्यङ्ग्यस्य वाच्यसामर्थ्याक्षिप्ततया तेन सह सम्बन्धस्य वाच्यघटितत्वमुक्तं द्रढीकर्तुं पूर्वोक्तं स्मारयति—'वाच्ये'त्यादि। प्रकृतमर्थद्वैविध्यप्रतिपादनं निगमयति—'तस्मादि'त्यादि। 'वक्त्रभिप्रायरूपे' विवक्षारूपे। एवकारेण तद्विषयीकृतार्थस्य व्यवच्छेदः। 'लिङ्गतये'त्यादि। शब्दरूपलिङ्गज्ञाप्यत्वमित्यर्थः। 'तद्विषयी'ति। शब्दानां व्यापार इत्यनुषङ्गः। वक्त्रभिप्रायविषयोऽर्थस्तु शब्दप्रतिपाद्य इत्यर्थः। 'प्रतीयमाने तस्मिन्नि'ति। शब्दप्रतिपाद्ये व्यङ्ग्य इत्यर्थः। वाचकत्वेनेत्यादिविकल्प्याद्यं निषेधति—'न तावदि'ति। 'सम्बन्धान्तरेणे'ति। सम्बन्धान्तरेण यो व्यापारस्स व्यञ्जकत्वमेवेत्यर्थः। पूर्वोक्तं स्मारयति—'न चे'त्यादि। 'अन्यथादृष्टत्वादि'ति। लिङ्गत्वं विना व्यञ्जकत्वस्य दृष्टत्वादित्यर्थः। उपसंहरति—'तस्मादि'ति। 'प्रतिपाद्यो विषय' इति। व्यङ्ग्य इत्यर्थः। 'लिङ्गित्वेन' लिङ्गलिङ्गिभावेन। 'न सम्बन्धी'ति। व्यङ्ग्यत्वेनाभिमतोऽर्थो न शब्दस्य लिङ्गलिङ्गिभावेन सम्बन्धी शब्दप्रतिपाद्यत्वाद्वाच्यवदित्यनुमानमनेन दर्शितम्। उक्तमेव दर्शयितुमाह—'यो ही'त्यादि। 'तेषां' शब्दानाम्। 'यथा' दर्शितो विषयः विवक्षालक्षणः। 'स' इति। विवक्षालक्षणो विषय इत्यर्थः। 'उपाधित्वेने'ति। प्रतीयत इत्यनुषङ्गः। उपाधिशब्दोऽत्र व्यावर्तकपर्याय इत्याशयेन व्याचष्टे लोचने—वक्त्रिच्छेत्यादि। विशेषणत्वेन भातीति। अनेन वक्त्रायमर्थो विवक्षित इति प्रतीतौ विवक्षा ह्यर्थस्य विशेषणत्वेन भासते। तस्मादित्युक्तं द्रढयितुं पूर्वोक्तमेव स्मा-

भिप्रायरूप एव व्यङ्ग्ये लिङ्गतया शब्दानां व्यापारः। तद्विषयीकृते तु प्रतिपाद्यतया। प्रतीयमाने तस्मिन्नभिप्रायरूपेऽनभिप्रायरूपे च वाचकत्वेनैव व्यापारः सम्बन्धान्तरेण वा। न तावद्वाचकत्वेन यथोक्तं प्राक्। सम्बन्धान्तरेण व्यञ्जकत्वमेव। न च व्यञ्जकत्वं लिङ्गत्वरूपमेव आलोकादिष्वन्यथा दृष्टत्वात्। तस्मात्प्रतिपाद्यो विषयः शब्दानां न लिङ्गित्वेन सम्बन्धी वाच्यवत्। यो हि लिङ्गित्वेन तेषां सम्बन्धी यथा दर्शितो विषयः स न वाच्यत्वेन प्रतीयते, अपि तूपाधित्वेन। प्रतिपाद्यस्य च विषयस्य लिङ्गित्वे तद्विषयाणां विप्रतिपत्तीनां लौकिकैरेव क्रियमाणानामभावः प्रसज्येतेति। एतच्चोक्तमेव।

लोचनम्

र्थस्य विशेषणत्वेन भाति। **प्रतिपाद्यस्येति**। अर्थाद्व्यङ्ग्यस्य। **लिङ्गित्व इति**। अनुमेयत्व इत्यर्थः। **लौकिकैरेवेति**। इच्छायां लोको न विप्रतिपद्यतेऽर्थे तु विप्रतिपत्तिमानेव।

ननु यदा व्यङ्ग्योऽर्थः प्रतिपन्नस्तदा सत्यत्वनिश्चयोऽस्यानुमानादेव प्रमाणान्तरात् क्रियत इति पुनरप्यनुमेय एवासौ। मैवम्; वाच्यस्यापि हि सत्यत्वनिश्चयोऽनुमाना-

बालप्रिया

रयति वृत्तौ-'प्रतिपाद्यस्ये'त्यादि। प्रतिपाद्यस्येत्येतत्प्रकृतानुगुणं व्याचष्टे लोचने—**अर्थाद्व्यङ्ग्यस्येति**। ननु कथं विप्रतिपत्तिविषयत्वावगमादननुमेयत्वनिश्चयः, अनुमेयेऽपि विप्रतिपत्तिसम्भवादित्यत आह—**इच्छायामित्यादि**। **इच्छायां** विवक्षायायाम्। **अर्थे** विवक्षाविषयार्थे। **विप्रतिपत्तिमानेवेति**। सत्यत्वादिविप्रतिपत्तिमानेवेत्यर्थः। विमतोऽर्थो नानुमेयः विप्रतिपत्तिविषयत्वाद्व्यतिरेकेण वक्तृविवक्षावदिति प्रयोगः।

यथा चेत्यादिग्रन्थमवतारयति—**नन्वित्यादि**। **प्रतिपन्न** इति। वाच्यार्थप्रतीतिपूर्वकं शब्दादवगत इत्यर्थः। **अस्य** प्रतिपन्नस्य व्यङ्ग्यार्थस्य। अनुमानादेवेत्यस्यानन्तरं प्रमाणान्तरादिति च क्वचिद्ग्रन्थे पाठः। **क्रियत इति**। प्रतिपत्तृभिरिति शेषः। शब्दस्य संवादकप्रमाणान्तरसहकृतस्यैव स्वार्थे प्रामाण्यमिति भावः। **इती**ति हेतौ। **पुनरित्यादि**। प्रतिपाद्यस्य व्यङ्ग्यस्य शब्दापेक्षया लिङ्गित्वाभावेऽपि संवादकप्रमाणान्तरापेक्षया लिङ्गित्वं भवत्येवेति भावः। पूर्वं शब्दादर्थस्यावगमः पश्चात्तत्र संवादकस्यानुमानस्य प्रवृत्तिः, अर्थस्वरूपं हि शब्दस्य विषयः, अनुमानस्य तु तद्गतं सत्यत्वमित्यनुमानस्य न शब्दावगतार्थानुमापकत्वमिति समाधत्ते—**मैवमित्यादि**।

यथा च वाच्यविषये प्रमाणान्तरानुगमेन सम्यक्त्वप्रतीतौ क्वचि-त्क्रियमाणायां तस्य प्रमाणान्तरविषयत्वे सत्यपि न शब्दव्यापारविषय-

लोचनम्

देव । यदाहुः—

'आप्तवादाविसंवादसामान्यादत्र चेदनुमानता' इति ।[1]

न चैतावता वाच्यस्य प्रतीतिरानुमानिकी किं तु तद्गतस्य ततोऽधिकस्य सत्य-त्वस्य तद्वद्व्यङ्ग्येऽपि भविष्यति । एतदाह—**यथा** चेत्यादिना । एतच्चाभ्युपगम्योक्तं

बालप्रिया

वाच्यस्यापीत्यपिशब्देन व्यङ्ग्यस्य परिग्रहः । **यदाहुरि**ति । वाक्याधिकरणे श्लोक-वार्तिककृत इति शेषः । **आप्तेति** । मुद्रिततत्पुस्तके त्वेवं पाठः—"आप्तवादाविसंवादा-दत्र चेदनुमानते"ति । अस्यावशिष्टन्तु—

"निर्णयस्तावता सिद्ध्येद्बुद्ध्युत्पत्तिर्न तत्कृता ।
अन्यदेव हि सत्यत्वमाप्तवादत्वहेतुकम् ॥
वाक्यार्थश्चान्य एवेति ज्ञातः पूर्वतरन्ततः ।
तत्र चेदाप्तवादेन सत्यत्वमनुमीयते ॥
वाक्यार्थप्रत्ययस्यात्र कथं स्यादनुमानतेति ।

आप्तवादाविसंवादादिति हेतुकथनम् । **अत्रेति** । वाक्यार्थबुद्धावित्यर्थः । **अनु-मानता** अनुमितित्वम् । चेदित्यनन्तरं नेति शेषः । अत्र हेतुमाह—'निर्णयस्ता-वते'त्यादि । एभिर्वचनैर्वाक्यार्थस्य सत्यत्वमेवाप्तोक्तत्वरूपानुमानेन निश्चेतव्यमिति लभ्यत इति भावः । 'आप्तवादाविसंवादस्सामान्यादनुमानत' इति पाठो बहुषु ग्रन्थेषु दृश्यते । तस्यायमर्थः—आप्तवादस्य आप्तवचनस्य यस्स्वार्थविषयोऽविसंवादः सत्यत्वं, सत्यार्थविषयकत्वमिति यावत् । सः सामान्यादनुमानतः आप्तवादत्वाद्यनु-मानगम्य इति । ननु तर्हि वाच्यप्रतीतिरप्यानुमानिक्येवाश्रीयतामित्यत्राह—**न चेत्यादि** । तत् किमत्रानुमानिकी प्रतीतिरेव नास्ति, अस्तीत्याह—**किन्त्वित्यादि** । **सत्यत्वस्येति** । प्रतीतिरानुमानिकीत्यनुषङ्गः । **तद्वद्व्यङ्ग्येऽपि भविष्यतीति** । आनुमानिकं सत्यत्वं व्यङ्ग्यार्थेऽपि भविष्यतीत्यर्थः । व्यङ्ग्योऽर्थश्शब्देन प्रतिपाद्यते तस्य सत्यत्वन्त्वनुमानगम्यमिति भावः । **एतच्चेति** । यथाचेत्यादिग्रन्थेनोक्तं व्यङ्ग्यस्यानुमानिकं सत्यत्वमित्यर्थः । **अभ्युपगम्येति** । प्रयोजनवत्त्वं वस्तुतोऽविद्यमानमपि विद्यमानं कृत्वेत्यर्थः । जप्रयोजकत्वमुपपादयति—**न हीत्यादि** ।

[1] श्लोकवा., १, १, ७.

ताहानिस्तद्व्यङ्ग्यस्यापि । काव्यविषये च व्यङ्ग्यप्रतीतीनां सत्यासत्य-निरूपणस्याप्रयोजकत्वमेवेति तत्र प्रमाणान्तरव्यापारपरीक्षोपहासायैव सम्पद्यते । तस्माल्लिङ्गिप्रतीतिरेव सर्वत्र व्यङ्ग्यप्रतीतिरिति न शक्यते वक्तुम् ।

यत्त्वनुमेयरूपव्यङ्ग्यविषयं शब्दानां व्यञ्जकत्वं तद्ध्वनिव्यवहारस्या-

लोचनम्

न त्वनेन नः प्रयोजनमित्याहुः । **काव्यविषये चेति । अप्रयोजकत्वमिति ।** न हि तेषां वाक्यनामाग्निष्टोमादिवाक्यवत्सत्यार्थप्रतिपादनद्वारेण प्रवर्तकत्वाय प्रामाण्यमन्विष्यते, प्रीतिमात्रपर्यवसायित्वात् । प्रीतेरेव चालौकिकचमत्काररूपाया व्युत्पत्त्यङ्गत्वात् । एतच्चोक्तं वितत्य प्राक् । **उपहासायैवेति ।** नायं सहृदयः केवलं शुष्कतर्कोपक्रमकर्कशहृदयः प्रतीतिं परामर्ष्टुं नालमित्येष उपहासः ।

नन्वेवं तर्हि मा भूद्यत्र यत्र व्यञ्जकता तत्र तत्रानुमानत्वम् ; यत्र यत्रानुमानत्वं तत्र तत्र व्यञ्जकत्वमिति कथमपह्नूयत इत्याशङ्क्याह—**यत्त्वनुमेयेति ।** तद्व्यञ्जकत्वं न ध्वनिलक्षणमभिप्रायव्यतिरिक्तविषयाव्यापरादिति भावः । नन्वभिप्रायविषयं यद्व्यञ्जकत्वमनुमानैकयोगक्षेमं तच्चेन्न प्रयोजकं ध्वनिव्यवहारस्य तर्हि किमर्थं

बालप्रिया

तेषां काव्यरूपाणाम् । **अग्निष्टोमादिवाक्यवदिति ।** वैधर्म्येण दृष्टान्तः । **प्रवर्तकत्वाय** प्रवृत्त्युपधायकत्वसम्पादनाय । **अन्विष्यते** विचार्यते । **प्रीतिमात्रेति ।** मात्रशब्देन प्रवर्तकत्वव्युदासः । कुतः प्रीतिमात्रपर्यवसायित्वमित्यत आह—**प्रीतेरित्यादि । उक्तमिति ।** रसस्वरूपनिरूपणावसर इति भावः । उपहासस्वरूपमाह—**नायमित्यादि । शुष्केति ।** शुष्कस्य तर्कस्यानुमानस्योपक्रमेण कर्कशहृदयः अरसिक इत्यर्थः । **प्रतीतिमिति ।** काव्यजन्यप्रतीतिस्वरूपमित्यर्थः ।

**मा भूदिति ।** आलोकादौ व्यभिचारादिति भावः । **इतीति ।** इत्येतदित्यर्थः । वृत्तौ तद्व्यञ्जकत्वं ध्वनिव्यवहारस्याप्रयोजकमित्येवोक्तमप्रयोजकत्वे हेतुर्नोक्त इत्यतोऽभिप्रेतं हेतुं दर्शयन्नाह—**तद्वित्यादि ।** तद्व्यञ्जकत्वमिति । वक्त्रभिप्रायात्मकानुमेयव्यङ्ग्यविषयं शब्दस्य व्यञ्जकत्वमित्यर्थः । **न ध्वनिलक्षणं** ध्वनिव्यवहारविषयस्य लक्षणं न । अत्राव्याप्तिं हेतुमाह—**अभिप्रायेत्यादि ।** अभिप्रायो विवक्षा, तद्व्यतिरिक्तो विषयो रसालङ्कारादिरूपो व्यङ्ग्यः तत्राव्यापाराद्व्यापरणाभावादित्यर्थः । यत्राभिप्रायातिरिक्तं व्यङ्ग्यं ध्वनिव्यवहारविषये तस्मिन्नभिप्रायरूपानुमेयव्यङ्ग्यविषयस्य व्यञ्जकत्वस्याभावादव्याप्तेरिति यावत् । स्वीयपूर्ववचनव्याघातशङ्कामुद्भाव्यावतारयति—**नन्वित्यादि । अनुमानैकेति ।** अनुमानेन सह एकयोगक्षेमतुल्यप्रका-

प्रयोजकम् । अपि तु व्यञ्जकत्वलक्षणः शब्दानां व्यापार औत्पत्तिकशब्दार्थसम्बन्धवादिनाप्यभ्युपगन्तव्य इति प्रदर्शनार्थमुपन्यस्तम् । तद्धि व्यञ्जकत्वं कदाचिल्लिङ्गत्वेन कदाचिद्रूपान्तरेण शब्दानां वाचकानामवाचकानां च सर्ववादिभिरप्रतिक्षेप्यमित्ययमस्माभिर्यत्न आरब्धः । तदेवं गुणवृत्तिवाचकत्वादिभ्यः शब्दप्रकारेभ्यो नियमेनैव तावद्विलक्षणं व्यञ्ज-

लोचनम्

तत्पूर्वमुपक्षिप्तमित्याशङ्क्याह—**अपि त्विति** । एतदेव संक्षिप्य निरूपति-**तद्धीति** । यत एव हि क्वचिदनुमानेनाभिप्रायादौ क्वचित्प्रत्यक्षेण दीपालोकादौ क्वचित्कारणत्वेन गीतध्वन्यादौ क्वचिदभिधया विक्षितान्यपरे क्वचिद्गुणवृत्त्या अविवक्षितवाच्येऽनुगृह्यमाणं व्यञ्जकत्वं दृष्टं तत एव तेभ्यः सर्वेभ्यो विलक्षणमस्य रूपं नस्सिध्यति तदाह—**तदेवमिति** ।

ननु प्रसिद्धस्य किमर्थं रूपसंकोचः क्रियते अभिधाव्यापारगुणवृत्त्यादेः। तस्यैव साम-

बालप्रिया

रमित्यर्थः। **पूर्वमुपक्षिप्तमिति**। तथाविध इत्यादिग्रन्थेनोपन्यस्तमित्यर्थः। **एतदेवेति**। उक्तमेवेत्यर्थः । तद्धीत्यादिग्रन्थेन सह तदेवमित्यादिग्रन्थस्यार्थं विवृण्वन्नाह-**यत इत्यादि** । क्वचिदत्यस्य विवरणम्-**अभिप्रायादाविति** । एवमुपर्यपि बोध्यम् । क्वचिद्रूपान्तरेणेति वृत्तिग्रन्थस्य विवरणं प्रत्यक्षेणेत्यादि। तदेवमित्यादेर्विवर्णं-**तत एव तेभ्य इत्यादि** । यत एव हि अभिप्रायदिविषयं शब्दस्य व्यञ्जकत्वमनुमानेनानुमित्या । दीपालोकादिगतं घटादिविषयं व्यञ्जकत्वं प्रत्यक्षेण घटादिचाक्षुषज्ञानेन । गीतध्वन्यादिगतं सविषयं व्यञ्जकत्वं कारणत्वेन रसनिष्पादकत्वेन । विवक्षितान्यपरगतं व्यञ्जकत्वमभिधया । अविवक्षितवाच्यगतं व्यञ्जकत्वं गुणवृत्त्या च अनुगृह्यमाणं दृष्टं, तत एवेत्यर्थः । व्यञ्जकत्वानुग्राहकत्वमेवैतेषां, न तु तत्ताद्रूप्यमिति भावः । **तेभ्यस्सर्वेभ्य** इति । अनुमानादिरूपेभ्य इत्यर्थः । **विलक्षणमित्यादि** । अनेनायं प्रयोगः प्रदर्शितः-विमतं व्यञ्जकत्वमनुमानादिप्रकारेभ्यो विलक्षणं तेषु व्यावर्तमानेष्वपि अनुवर्तमानतयावभासमानत्वात्, यद्येषु व्यावर्तमानेष्वप्यनुवर्तमानतयावभासते तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रमिति । **तदाहेति** । तद्वैलक्षण्यमाहेत्यर्थः ।

**नन्वित्यादि** । प्रसिद्धस्याभिधाव्यापारगुणवृत्यादे रूपसङ्कोचः किमर्थं क्रियत इति सम्बन्धः । व्यञ्जकत्वस्यातिरिक्तस्य कल्पनेनेति शेषः । गुणवृत्यादेरित्यादिपदेन लक्षणायाः परिग्रहः । तर्हि कथं वक्तव्यमित्यत्राह—**तस्यैवेत्यादि** । **तस्यैव** अभिधाव्यापारादेरेव । **सामग्र्यन्तरेति** । प्रतिपत्तृप्रतिभावक्तृवैशिष्ट्यादिज्ञानादिरूपे-

कत्वम्। तदन्तःपातित्वेऽपि तस्य हठादभिधीयमाने तद्विशेषस्य ध्वने-र्यत्प्रकाशनं विप्रतिपत्तिनिरासाय सहृदयव्युत्पत्तये वा तत्क्रियमाणमन-तिसन्धेयमेव। न हि सामान्यमात्रलक्षणेनोपयोगिविशेषलक्षणानां प्रति-क्षेपः शक्यः कर्तुम्। एवं हि सति सत्तामात्रलक्षणे कृते सकलसद्वस्तु-लक्षणानां पौनरुक्त्यप्रसङ्गः। तदेवम्—

विमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः।

## लोचनम्

प्रयन्तरपनिपाताद्यद्विविष्टं रूपं तदेव व्यञ्जकत्वमुच्यतामित्याशङ्क्याह—**तदन्तःपातित्वेऽपीति**। न वयं संज्ञानिवेशनादिं निषेधाम इति भावः। विप्रतिपत्ति-स्तादृग्विशेषो नास्तीति व्युत्पत्तिः संशयाज्ञाननिरासः। **न हीति**। उपयोगिषु विशेषेषु यानि लक्षणानि तेषाम्। उपयोगिपदेनानुपयोगिनां काकदन्तादीनां व्युदासः। **एवं हीति**। त्रिपदार्थसङ्करी सत्तेत्यनेनैव द्रव्यगुणकर्मणां लक्षितत्वाच्छ्रुति-

## बालप्रिया

त्यर्थः। **विशिष्टं रूपमिति**। अवस्थान्तरपर्यायं विलक्षणं स्वरूपमित्यर्थः। **तदेव व्यञ्जकत्वमुच्यतामिति**। व्यञ्जकत्वाख्यस्यार्थान्तरस्य कल्पनापेक्षया लाघवादिति भावः। वृत्तौ तस्य तदन्तःपातित्वे हठादभिधीयमानेऽपीति योजना। 'तदन्तःपाति-त्वे' गुणवृत्तिवाचकत्वाद्यन्तःपातित्वे। 'तस्य' व्यञ्जकत्वस्य। 'तद्विशेषस्य ध्वनेः' व्यञ्जकत्वविशेषात्मकस्य ध्वनेः। 'अनतिसन्धेयम्' आदरणीयम्। भावमाह लोचने-**न वयमित्यादि**। वयं संज्ञानिवेशनादि न निषेधाम इति। अस्मदभिमतस्य व्यञ्ज-कत्वस्य विलक्षणस्वरूपाभिधादिसंज्ञा यदि क्रियते, तर्हि तां न निषेधाम इत्यर्थः। वस्तुनि हि समुचिता विमतिर्न नाममात्र इति भावः। विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिरिति व्युत्पत्तिमभिप्रेत्य तत्पदं व्याचष्टे—**तादृगित्यादि**। **तादृग्विशेषः** व्यञ्जकत्वरूपः। व्युत्पत्तिपदेन विवक्षितमाह—**संशयेति**। उपयोगीत्यादिग्रन्थं विवृणोति—**उपयो-गिष्वित्यादि**। **उपयोगिषु** लोकयात्रोपयोगिषु। **विशेषेषु** वस्तुविशेषेषु। तद्ग-तानीति यावत्। उपयोगिष्विति विशेषणस्य फलमाह—**उपयोगिपदेनेत्यादि**। वैशेषिकदर्शने द्रव्यादिपदार्थानामुद्देशानन्तरमादौ "सदनित्यमि"त्यादिसूत्रेण द्रव्य-गुणकर्मणां त्रयाणां सत्तावत्त्वादिकं लक्षणमभिहितं, तन्मनसि कृत्योक्तं वृत्तौ 'सत्तामात्रे'त्यादि। तद्विवृणोति—**त्रिपदार्थे**त्यादि। **त्रिपदार्थसङ्करीति**। त्रिपदार्थसङ्कीर्णेति पाठस्साधुः। द्रव्यादिपदार्थत्रयव्याप्तेत्यर्थः। सकलेत्यादिप्रसङ्ग इत्यन्तेन विव-क्षितं व्याचष्टे—**श्रुतीत्यादि**। अनारम्भे बाधकं दर्शयति—**सकलेत्यादि**। वृत्तावुप-संहरति—'तदेवमि'त्यादि। 'विमती'त्यादिश्लोको वृत्त्यन्तर्गतः। 'अविदितसतत्त्व'

**ध्वनिसञ्ज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम् ॥**
**प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।**
**यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत् ॥ ३४ ॥**

लोचनम्

स्मृत्यायुर्वेदधनुर्वेदप्रभृतीनां सकललोकयात्रोपयोगिनामनारम्भः स्यादिति भावः। विमतिविषयत्वे हेतुः—**अविदितसतत्त्व** इति । अत एवाधुनात्र न कस्यचिद्विमतिरेतस्मात्क्षणात्प्रभृतीति प्रतिपादयितुम्-**आसीत्** इत्युक्तम् ॥ ३३ ॥

एवं यावद्ध्वनेरात्मीयं रूपं भेदोपभेदसहितं यच्च व्यञ्जकभेदमुखेन रूपं तत्सर्वं प्रतिपाद्य प्राणभूतं व्यङ्ग्यव्यञ्जकभावमेकप्रघट्टकेन शिष्यबुद्धौ विनिवेशयितुं व्यञ्जकवादस्थानं रचितमिति ध्वनिं प्रति यद्वक्तव्यं तदुक्तमेव । अधुना तु गुणीभूतोऽप्ययं व्यङ्ग्यः कविवाचः पवित्रयतीत्यमुना द्वारेण तस्यैवात्मत्वं समर्थयितुमाह—**प्रकार**

बालप्रिया

इत्युक्तेरुपयोगमाह लोचने—**विमतिविषयत्वे हेतुरिति** । संशयस्य विशेषानवधारणमूलकत्वं हि प्रसिद्धम् । आसीदिति भूतनिर्देशस्य फलमाह—**अतएवेत्यादि** । **अतएवेति** । यत एव विप्रतिपत्तिर्वस्तुतत्त्वानवबोधनिबन्धना तदवधारणे सति नोत्पत्तुमर्हति, तत एवेत्यर्थः । अधुनेत्येतद्विविच्याह—**एतस्मात्क्षणादित्यादि** । **प्रतिपादयितुमिति** । सूचयितुमित्यर्थः ॥ ३३ ॥

अथ गुणीभूतव्यङ्ग्यप्रतिपादनपरमुत्तरग्रन्थसन्दर्भं तात्पर्यार्थकथनपूर्वकमवतारयितुमादित आरभ्यैतदन्तवृत्तग्रन्थसन्दर्भस्यार्थं सङ्क्षिप्याह—**एवमित्यादि** । एवं यावद्ध्वनिं प्रति यद्वक्तव्यन्तदुक्तमेवेति सम्बन्धः । प्रथमोद्योते तावत्सोपोद्घातं ध्वनेस्सामान्यलक्षणमेवोक्तं, द्वितीये त्वविवक्षितवाच्यादिभेदस्तद्भेदाश्च प्रदर्शिताः । तदाह-**भेदोपभेदसहितमात्मीयं रूपमिति** । यच्चेत्यनेन तृतीयोद्योतार्थं उक्तः । तत्सर्वं **प्रतिपाद्येत्यनेन**, तावतैव ध्वनिस्वरूपप्रतिपादनं निर्व्यूढमिति दर्शयति । **प्राणभूतमित्यनेन** व्यङ्ग्यव्यञ्जकभावनिरूपणस्यात्यन्तावश्यकत्वं प्रदर्शितम् । **एकप्रघट्टकेनेत्यादिना** पौनरुक्त्यशङ्का परिहृता । **ध्वनिं प्रतीत्यनेन** प्रतिपाद्यान्तरसद्भावं ध्वनति । ननु काव्यस्यात्मा ध्वनिरित्यभ्युपगमेन काव्यात्मभूतध्वनिस्वरूपप्रतिपादनमात्रप्रवृत्तत्वात् किमर्थं गुणीभूतव्यङ्ग्यप्रतिपादनं कृतं, तस्य काव्यात्मत्वाभावादित्यतोऽभिप्रायं दर्शयन्नवतारयति—**अधुनेत्यादि** । **अयं व्यङ्ग्यः** उक्तप्रकारो व्यङ्ग्यार्थः । **गुणीभूतोऽपि** न प्रधानभूत एवेति भावः । **पवित्रयतीति** । छायातिशयं सम्पादयतीत्यर्थः । **अमुना द्वारेणेति** । कैमुत्यन्यायोपक्षेपमुखेनेत्यर्थः । **तस्यैवेति** । ध्वनेरेवेत्यर्थः । उक्तं हि प्राक् 'एवंभूता चेयं व्यङ्ग्यते'त्यादिनराजत्वमिवे'त्यन्तम् । चारुत्वप्रकर्षहेतुत्वेन व्यङ्ग्यान्वयस्य कारिकायान्दर्शितत्वान्न व्यङ्ग्य-

व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिरित्युक्तम् । तस्य तु गुणीभावेन वाच्यचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नाम काव्यप्रभेदः प्रकल्प्यते । तत्र वस्तुमात्रस्य व्यङ्ग्यस्य तिरस्कृतवाच्येभ्यः प्रतीयमानस्य कदाचिद्वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता ।

यथा—

लावण्यसिन्धुरपरैव हि केयमत्र यत्रोत्पलानि शशिना सह सम्प्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र यत्रापरे कदलिकाण्डमृणालदण्डाः ॥

लोचनम्

इति । व्यङ्ग्येनान्वयो वाच्यस्योपस्कार इत्यर्थः । प्रतिपादित इति । 'प्रतीयमानं पुनरन्यदेव' इत्यत्र । उक्तमिति । 'यत्रार्थः शब्दो वा' इत्यत्रान्तरे व्यङ्ग्यं च वस्त्वादित्रयं तत्र वस्तुनो व्यङ्ग्यस्य ये भेदा उक्तास्तेषां क्रमेण गुणभावं दर्शयति—तत्रेति । लावण्येति । अभिलाषविस्मयगर्भेयं कस्यचित्तरुणस्योक्तिः ।

अत्र सिन्धुशब्देन परिपूर्णता, उत्पलशब्देन कटाक्षच्छटाः, शशिशब्देन वदनं, द्विरदकुम्भतटीशब्देन स्तनयुगलं, कदलिकाण्डशब्देनोरुयुगलं, मृणालदण्डशब्देन दोर्युग्ममिति ध्वन्यते । तत्र चैषां स्वार्थस्य सर्वथानुपपत्तेरन्धशब्दोक्तेन न्यायेन तिरस्कृ-

बालप्रिया

सम्बन्धमात्रं वाच्यस्यात्र विवक्षितं, किन्तु व्यङ्ग्यसम्बन्धकृतातिशयविशेषास्पदत्वमित्याह—वाच्यस्योपस्कार इति । व्यङ्ग्यस्य गुणीभावे वक्तव्ये वृत्तौ वस्त्वादेर्गुणीभावप्रदर्शनासङ्गतिशङ्कामुद्धर्तुमाह—व्यङ्ग्यञ्च वस्त्वादित्रयमिति । उक्तमिति शेषः । वृत्तौ 'लावण्ये'ति । 'अत्र' अस्मिन्देशे । 'अपरैव' अपूर्वैव । 'केयं लावण्यसिन्धुः' लावण्यस्य सरित् । 'यत्र' यस्याम् । 'शशिना' पूर्णचन्द्रेण । 'संप्लवन्ते' सम्मिलितानि भवन्ति । 'उन्मज्जति' उत्थिता भवति । 'द्विरदः' गजः । 'यत्रे' त्यादि । सन्तीति शेषः । 'कदलिकाण्डः' कदलीदण्डः । वस्तुमात्रस्य व्यङ्ग्यस्येत्यादिवृत्त्युक्तं सर्वं क्रमेण प्रदर्शयिष्यन्नादौ भूमिकां रचयति लोचने—अभिलाषेत्यादि । प्रथमं विस्मयस्ततोऽभिलाष इति क्रमः, तदविवक्षयाभिलाषविस्मयगर्भेत्युक्तम् । कस्यचिदिति । विशेषानुक्तिरनुपयोगात् । सिन्धुशब्देनेति । सिन्धुशब्देन परिपूर्णतेति ध्वन्यत इत्याद्यन्वयः । परिपूर्णतेति । पारिपूर्ण्यविशिष्टेत्यर्थः । उत्पलानिति बहुवचनान्तनिर्देशानुगुण्येनाह—कटाक्षच्छटा इति । ध्वन्यन्त इति विपरिणामेनात्र सम्बन्धः । तत्रेति । उक्तवस्तुध्वनने सतीत्यर्थः । एषां सिन्धूत्पलादिशब्दानाम् । तिरस्कृतवाच्यत्वमित्यनेन सम्बन्धः । अत्र हेतुमाह—स्वार्थस्येत्यादि । स्वार्थस्य नदी-

अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदा-

लोचनम्

तवाच्यत्वम् । स च प्रतीयमानोऽप्यर्थविशेषः 'अपरैव हि केयं' इत्युक्तिगर्भीकृते वाच्येंऽशे चारुत्वच्छायां विधत्ते, वाच्यस्यैव स्वात्मोन्मज्जनया निमज्जितव्यङ्ग्य-जातस्य सुन्दरत्वेनावभानात् । सुन्दरत्वं चास्यासम्भाव्यमानसमागमसकललोकसार-भूतकुवलयादिभाववर्गस्यातिसुभगकाधिकरणविश्रान्तिलब्धसमुच्चयरूपतया विस्मय-विभावनाप्राप्तिपुरस्कारेण व्यङ्ग्यार्थोपस्कृतस्य तथा विचित्रस्यैव वाच्यरूपोन्मज्जने-

बालप्रिया

नीलाब्जप्रभृतेः । **अन्धेति** । निःश्वासान्ध इवादर्श इत्यत्रान्धशब्दव्याख्याने य उक्तो न्यायस्तेनेत्यर्थः । प्रतीयमानोऽपीत्यपिशब्देन स्वतः प्राप्तप्रधानभावस्य वैपरीत्येन गुणीभावापत्तिर्विरुद्धेति दर्शयति । **सोऽर्थविशेषः** व्याख्यातव्यङ्ग्या-र्थजातम् । **अपरैवेत्यादि** । अपरैव हीति केयमिति चोक्तिभ्यां सामान्यात्मना क्रोडीकृत इत्यर्थः । **वाच्येंऽशे** सिन्धूत्पलादिशब्दवाच्यनदीनीलाब्जादिघटितवा-क्यार्थे । **चारुत्वच्छायां** काव्यचारुत्वप्रतीतिहेतुभूतां शोभाम् । **विधत्ते** करोति । अनेन व्यङ्ग्यस्य गुणीभावः प्रदर्शितः । अत्र सहृदयानुभवमेव प्रमाणयति—**वाचस्यैवेत्यादि** । वाच्यस्यैव सुन्दरत्वेनावभासनादिति सम्बन्धः । अत्र हेतु-गर्भे विशेषणे दर्शयति—**स्वात्मेत्यादि** । स्वस्य वाच्यस्य य आत्मा स्वरूपन्तस्य यदुन्मजनमुद्धुरकन्धरतयावस्थानं तया उपलक्षितस्य । तथा निमज्जितं व्यङ्ग्य-जातं पूर्वोक्तं येन तस्य । व्यङ्ग्यजातस्य निमज्जनं वाच्यमुखप्रेक्षितया नीचैरव-स्थानम् । कथं पुनस्तादृशस्य वाच्यस्य सुन्दरत्वमित्यत आह—**सुन्दरत्वञ्चे-त्यादि** । **अस्य** वाच्यस्य । श्लोकेऽस्मिन्नादौ वाच्यस्य विस्मयविभावता-प्राप्तिः पुनस्तामेव पुरस्सरीकृत्याभिलाषादिविभावताप्राप्तिरिति प्रतीयते तदभि-प्रायेणाह—**असम्भाव्येत्यादि** । असम्भाव्यमानस्सम्भावयितुमप्यशक्यतां प्रति-पद्यमानस्समागमो येषां ते । तथा सकललोकसारभूताश्च ये कुवलयादयो भावाः पदार्थास्तेषां वर्गस्य । अतिसुभगं यदेकाधिकरणं नायिकारूपं तत्र या विश्रा-न्तिः संश्लिष्यावस्थितिस्तया लब्धं समुच्चयरूपं सङ्घातरूपत्वं येन तस्य भाव-स्तत्ता तया हेतुना । या विस्मयविभावताप्राप्तिस्तस्याः पुरस्कारेण पुरस्सरीकारे-णेति च पाठः । अभिलाषादिविभावताप्राप्तौ हेतुमाह—**व्यङ्ग्येत्यादि** । **व्यङ्ग्या-र्थोपस्कृतस्य** कटाक्षवदनाद्युक्तव्यङ्ग्यार्थजातेनोपस्कृतस्य । **तथाविचित्रस्य** व्यङ्ग्यार्थोपस्कारेण वैचित्र्यं विशेषं प्राप्तस्य । ननु यदि व्यङ्ग्यार्थोपस्कृतस्यैवाभि-लाषादिविभावत्वं न स्वरूपतः, तर्हि व्यङ्ग्यस्य प्राधान्यमापतितं तस्यैव विभावता-प्राप्तौ प्रयोजकत्वादित्यत आह—**वाच्यरूपोन्मज्जनेनेति** । **कुवलयचन्द्रादिवाच्यार्थ-**

चिद्वाच्यप्राधान्येन काव्यचारुत्वापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता, यथोदाहृतम्—'अनुरागवती सन्ध्या' इत्येवमादि। तस्यैव स्वयमुक्त्या प्रकाशीकृतत्वेन गुणीभावः, यथोदाहृतम्—'सङ्केतकालमनसम्'

लोचनम्

नाभिलाषादिविभावत्वात्। अत एवेयति यद्यपि वाच्यस्य प्राधान्यं, तथापि **रसध्वनौ** तस्यापि गुणतेति सर्वस्य गुणीभूतव्यङ्ग्यस्य प्रकारे मन्तव्यम्। अत एव ध्वनेरेवात्मत्वमित्युक्तचरं बहुशः।

अन्ये तु जलक्रीडावतीर्णतरुणीजनलावण्यद्रवसुन्दरीकृतनदीविषयेयमुक्तिरिति सहृदयाः, तत्रापि चोक्तप्रकारेणैव योजना। यदि वा नदीसन्निधौ स्नानावतीर्णयुवतिविषया। सर्वथा तावद्विस्मयमुखेनेयति व्यापाराद्गुणताव्यङ्ग्यस्य। **उदाहृत-**

बालप्रिया

स्वरूपोन्मज्जनेन हेतुनेत्यर्थः। व्यङ्ग्यस्य कटाक्षवदनादेर्वाच्यकुवलयचन्द्रादिरूपत्वेन दर्शनं ह्यभिलाषादिजनने निमित्तमिति भावः। **अत एवेति**। उक्तरीत्या व्यङ्ग्यस्य गुणीभावादेवेत्यर्थः। **इयतीति**। विस्मयविभावताप्राप्तिपूर्वकाभिलाषादिविभावताप्राप्तिपर्यन्तेऽर्थ इत्यर्थः। अनन्तरन्तु तस्या गुणीभाव एवेत्याह—**तथापीत्यादि**। **रसध्वनौ** शृङ्गारादिध्वनौ। **तस्यापि** वाच्यस्यापि। न केवलमत्रैवेत्याह—**इति सर्वस्येत्यादि**। अत्रोपष्टम्भकमाह—**अत एवेत्यादि**। यदि गुणीभूतव्यङ्ग्यप्रभेदे वाच्यार्थस्यैव प्राधान्यं स्यात्तदा ध्वनिः काव्यस्यात्मेति तत्र तत्रोद्घोष्यमाणमसङ्गतं स्यादिति भावः।

श्लोकस्यास्य क्वचित्प्रबन्धेऽनुपलम्भान्मुक्तकस्यौचित्यानुसारेण वर्ण्यविशेषनिर्वर्णनाविधेयेति दर्शयन् पक्षान्तरमाह—**अन्ये त्वित्यादि**। लावण्यद्रवसुन्दरीकृतनदीविषयेत्यनेन लावण्यसिन्धुरित्येतद्विवृतं लावण्यमयी लावण्यसुन्दरीकृता वा सिन्धुरिति विग्रहः, सिन्धुशब्दो न तिरस्कृतवाच्यो व्यञ्जक इति च भावः। उत्पलादिशब्दानान्तु प्रागुक्तैव व्यञ्जनपरिपाटीत्याह—**तत्रापि चेत्यादि**। अस्मिन् पक्षे कुवलयादीनामतिसुभगैकाधिकरणसमावेशकृतसौभाग्यलाभो न सामञ्जस्येन भवतीत्यस्वरसमन्य इत्यनेन सूचयन् पक्षान्तरमाह—**यदि वेत्यादि**। **नदीसन्निधाविति**। युवतिगतनिरतिशयलावण्यपूरव्याप्तत्वाल्लावण्यमयी सिन्धुर्यस्यास्सेत्यर्थात्सिन्धुशब्दोऽत्रापि पक्षे मुख्यार्थक एव, न च प्रागुक्तदोषस्तरुण्या एव वर्णनीयत्वादिति भावः। पक्षत्रयेऽपि विवक्षितगुणीभूतव्यङ्ग्यप्रभेदत्वं निर्बाधमित्याह—**सर्वथेत्यादि**। **निरूपितमिति**। यथात्र व्यङ्ग्यस्य नायकवृत्तान्तस्य गुणीभावस्तथा दर्शितमित्यर्थः। ननु सन्ध्यादिशब्दानामतिरस्कृतवाच्यानामेव नायिकाद्यर्थप्रत्यायकत्वेऽप्यनुरागशब्दस्य प्रेमवाचकत्वेनैव प्रसिद्धस्य रक्तिमरूपप्रकृतार्थे जहत्स्वार्थलक्षणाया एव वक्तव्यतया कथमतिरस्कृतवाच्यत्वमिति शङ्कां परिजिहीर्षुः प्रत्युत तत्पदस्य यौगरूढ्या रक्तिमवाचकत्वमेव, प्रेम-

इत्यादि । रसादिरूपव्यङ्ग्यस्य गुणीभावो रसवदलङ्कारे दर्शितः ; तत्र च तेषामाधिकारिकवाक्यापेक्षया गुणीभावो विवहनप्रवृत्तभृत्यानुयायिराजवत् । व्यङ्ग्यालङ्कारस्य गुणीभावे दीपकादिविषयः ।

लोचनम्

मिति । एतच्च प्रथमोद्द्योत एव निरूपितम् । अनुरागशब्दस्य चाभिलाषे तदुपरञ्जकत्वलक्षणया लावण्यशब्दवत्प्रवृत्तिरित्यभिप्रायेणातिरस्कृतवाच्यत्वमुक्तम् । तस्यैवेति । वस्तुमात्रस्य । रसादीति । आदिशब्देन भावादयः रसवच्छब्देन प्रेयस्विप्रभृतयोऽलङ्कारा उपलक्षिताः ।

नन्वत्यर्थं प्रधानभूतस्य रसादेः कथं गुणीभावः, गुणीभावे वा कथमचारुत्वं न स्यादित्याशङ्क्य प्रत्युत सुन्दरता भवतीति प्रसिद्धदृष्टान्तमुखेन दर्शयति—तत्र चेति । रसवदाद्यलङ्कारविषये । एवं वस्तुनो रसादेश्च गुणीभावं प्रदर्श्यालङ्कारात्मनोऽपि तृतीयस्य व्यङ्ग्यप्रकारस्य तं दर्शयति—व्यङ्ग्यालङ्कारस्येति । उपमादेः ॥ ३४ ॥

एवं प्रकारत्रयस्यापि गुणभावं प्रदर्श्य बहुतरलक्ष्यव्यापकतास्येति दर्शयितुमाह—

बालप्रिया

रूपार्थे तु निरूढलक्षणेत्यतिरस्कृतवाच्यत्वमुपपन्नमेवेति दर्शयति—अनुरागशब्दस्येत्यादि । अभिलाषे प्रेम्णि । तदिति । तत्पदार्थस्तद्वस्तु तदुपरक्तं येन तत्त्वं वस्तूपरञ्जकत्वं तेन निमित्तेन लक्षणयेत्यर्थः । लावण्यशब्दवदिति । सुषमाविशेषे लावण्यशब्दस्येवेत्यर्थः । इत्यभिप्रायेणेति । उक्ताद्धेतोः रक्तिमरूपप्रकृतार्थो वाच्य इत्यभिप्रायेणेत्यर्थः । प्रेमरूपार्थो व्यङ्ग्य एवेति बोध्यम् । रसवच्छब्देनेति । रसवदलङ्कारे दर्शित इत्यत्रत्यरसवच्छब्देनेत्यर्थः । रसवदलङ्कारविषयः प्राक्दर्शित इति च वृत्तौ पाठः ।

दृष्टान्तप्रदर्शनपूर्वकं रसादेर्गुणीभावप्रदर्शनस्य फलं तदसम्भवशङ्कानिवृत्तिरित्याशयेन शङ्कामाह—नन्वत्यर्थमित्यादि । वाच्यस्याप्यापेक्षिकं प्राधान्यमस्तीत्यतोऽत्यर्थमित्युक्तम् । कथमिति । प्राधान्यगुणीभावयोरेकत्र समावेशो विरुद्ध एवेति भावः । ननु प्रधानस्यापि सतो रसादेः कविविवक्षावशाद्गुणीभावः किन्न स्यादित्यत आह—गुणीभावे वेति । प्रसिद्धदृष्टान्तेति । सुन्दरत्वेन प्रसिद्धदृष्टान्तेत्यर्थः । न हि राज्ञो विवाहप्रवृत्तभृत्यानुयायित्वमसुन्दरं भाति, प्रत्युत भृत्योत्कर्षविशेषोऽपि राजोत्कर्षातिशयायैव कल्पिष्यत इति चारुत्वमेव पुष्णातीति भावः ॥ ३४ ॥

अस्येति । गुणीभूतव्यङ्ग्यस्येत्यर्थः । प्रसादगुणयोगात्प्रसन्नानि व्यङ्ग्यार्थाक्षेपकत्वाद्गम्भीराणि चेति सम्बन्धः । सुखावहा इत्यनेन तेषु प्रकारोऽयमेव योज्य

तथा—

**प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः ।**
**ये च तेषु प्रकारोऽयमेव योज्यः सुमेधसा ॥ ३५ ॥**

ये चैतेऽपरिमितस्वरूपा अपि प्रकाशमानास्तथाविधार्थरमणीयाः सन्तो विवेकिनां सुखावहाः काव्यबन्धास्तेषु सर्वेष्वेवायं प्रकारो गुणीभूतव्यङ्ग्यो नाम योजनीयः । यथा—

**लच्छी दुहिदा जामाउओ हरी तंस घरिणिआ गङ्गा ।**

लोचनम्

**तथेति** । प्रसन्नानि प्रसादगुणयोगाद्गम्भीराणि च व्यङ्ग्यार्थाक्षेपकत्वात्पदानि येषु । **सुखावहा** इति चारुत्वहेतुः । तत्रायमेव प्रकार इति भावः । **सुमेधसेति** । यस्त्वेतं प्रकारं तत्र योजयितुं न शक्तः स परमलीकसहृदयभावनामुकुलितलोचनोक्त्योपहसनीयः स्यादिति भावः ।

लक्ष्मीः सकलजनाभिलाषभूमिर्दुहिता । जमाता हरिः यः समस्तभोगापवर्गदानसततोद्यमी । तथा गृहिणी गङ्गा यस्याः समभिलषणीये सर्वस्मिन्वस्तुन्यपहत उपायभावः । अमृतमृगाङ्कौ च सुतौ, अमृतमिह वारुणी । तेन गङ्गास्नानहरिचरणाराधनाद्युपायशतलब्धाया लक्ष्म्याश्चन्द्रोदयपानगोष्ठ्युपभोगलक्षणं मुख्यं फलमिति त्रैलोक्य-

बालप्रिया

इत्यत्र तत्प्रकारस्य चारुत्वहेतुत्वं दर्शितमित्याशयेनाह—**चारुत्वहेतुरित्यादि** । **तत्र** तथाविधे काव्यबन्धे । सहृदयत्वप्रतिष्ठालाभश्चैतत्प्रकारयोजनकौशलशालितानिबन्धन एवेति तदर्थिभिस्तद्विषये महाप्रयत्न आधेय इति दर्शयितुं सुमेधसेत्युक्तमित्याह—**यस्त्वेतमित्यादि** । **अलीकेति** । अयं न सहृदयः किन्त्वलीकसहृदयभावनया असत्यस्य सहृदयत्वस्य भावनया रसास्वादवैवश्यं मनसः प्रकटयितुं मुकुलितलोचन आस्ते, पश्यतास्य विप्रलम्भकभावमिति सहृदयगोष्ठीषु परिहासपात्रं स्यादित्यर्थः ।

लक्ष्मीर्दुहिता जामाता हरिस्तस्य [गृ]हिणी गङ्गा ।
अमृतमृगाङ्कौ च सुतावहो कुटुम्बं महोदधेः ॥

इति छाया । पदानामेतद्गतानां व्यङ्ग्यमर्थजातन्दर्शयन्योजनामाह—**लक्ष्मीरित्यादि** । **सकलेत्यादि** । **समस्तेत्यादि** । यस्या इत्यादि च तत्तत्पदव्यङ्ग्यार्थकथनम् । **अमृतमिति** । अमृतपदार्थ इत्यर्थः । **वारुणीति** । न पीयूषं तस्य चन्द्रोदयवदखिलजनसाधारण्याभावादिति भावः । **तेनेति** । उक्तेनार्थजातेनेत्यर्थः । **गङ्गास्नानेत्यादि**गुणीभावमनुभवतीत्यन्तस्यायमर्थः । यस्यां स्नानाद्यदाराधनादितश्च या लभ्यते सा गङ्गास्य गृहिण्येव, स हरिरस्य जामातैव, सा लक्ष्मीरस्यात्मजैव, लब्धाया

आमिअमिअङ्का अ सुआ अहो कुडुम्बं महोअहिणो ॥

वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति ।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥ ३६ ॥

वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशस्यालङ्कारस्य वस्तुमात्रस्य वा यथायोगमनुगमे सति च्छायातिशयं बिभ्रल्लक्षणकारैरेकदेशेन दर्शितः । स तु तथारूपः प्रायेण सर्व एव परीक्ष्यमाणो लक्ष्ये निरीक्ष्यते । तथा हि–दीपकसमासोक्त्यादिवदन्येऽप्यलङ्काराः प्रायेण व्यङ्ग्यालङ्कारान्तर-

लोचनम्

सारभूतता प्रतीयमाना सती अहो कुटुम्बं महोदधेरित्यहोशब्दाच्च गुणीभावमनुभवति ॥ ३५ ॥

एवं निरलङ्कारेषूत्तानतायां तुच्छतयैव भासमानममुनान्तःसारेण काव्यं पवित्रीकृतमित्युक्त्वालङ्कारस्याप्यनेनैव रम्यतरत्वमिति दर्शयति—वाच्येति । अंशत्वं गुणमात्रत्वम् । **एकदेशेनेति** । एकदेशविवर्तिरूपकमनेन दर्शितम् ।

बालप्रिया

लक्ष्म्यास्तत्सम्पद्रूपाया उपभोगाभावे चालब्धकल्पत्वाच्चन्द्रोदयकाले वारुण्युपभोगो हि मुख्यं फलं, स चन्द्रस्सा वारुणी चास्य पुत्रभावमेव भजत इति महोदधिरेव त्रैलोक्यसार इतीयानर्थोऽत्र ध्वननव्यापारादवगम्यते । स चावगतस्सन्नहो कुटुम्बमिति शब्दस्पृष्टतया गुणीभावमवलम्बते यतः, तद्व्यङ्ग्यार्थजातोपस्कृत एव वाच्यार्थो विस्मयविभावतां प्राप्नोति चमत्कारातिशयञ्च विधत्त इति ॥ ३५ ॥

पूर्वकारिकातात्पर्यार्थकथनपूर्वकमुत्तरकारिकामावतारयति—**एवमित्यादि** । **निरलङ्कारेष्विति** । लक्ष्मीरित्याद्युक्तोदाहरणे न कश्चिदलङ्कारः स्फुटोऽवगम्यत इति भावः । **उत्तानतायामिति** । आपाततः प्रतीतावित्यर्थः । भासमानं काव्यमिति सम्बन्धः । भासमानमपीति च पाठः । **अमुना** गुणीभूतेन **व्यङ्ग्येन** । **अन्तस्सारेणेति** । अन्तस्सारत्वं गुणीभावेऽपि बालक्रीडाकालीनराजत्वन्यायेन नैसर्गिकमुत्कर्षशालित्वम् । **अलङ्कारस्येति** जात्येकवचनम् । **अनेनैवेति** । गुणीभूतव्यङ्ग्येनैवेत्यर्थः । **रम्यतरत्वमिति** । अलङ्कारत्वात्स्वतो रम्यत्वमस्तीति तरप्प्रत्ययः । अत एव "परां छायामि"ति छायातिशयमिति चोक्तम् । व्यङ्ग्यांशानुगम इत्यत्र व्यङ्ग्यस्य वाच्यं प्रत्यंशत्वं गुणीभूतत्वमेवेत्याह—**अंशत्वं गुणमात्रत्वमिति** । **अनेन दर्शितमिति** । नामग्रहणे नामैकदेशग्रहणमिति न्यायेनैकदेशशब्द एकदेशविवर्तिरूपकपर इति भावः ।

वस्त्वन्तरसंस्पर्शिनो दृश्यन्ते । यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया । कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यति, कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये

लोचनम्

तदयमर्थः—एकदेशविवर्तिरूपके—

राजहंसैरवीज्यन्त शरदैव सरोनृपाः

इत्यत्र हंसानां यच्चामरत्वं प्रतीयमानं तन्नृपा इति वाच्येऽर्थे गुणतां प्राप्तमलङ्कारकारैर्यावदेव दर्शितं तावदमुना द्वारेण सूचितोऽयं प्रकार इत्यर्थः । अन्ये त्वेकदेशेन वाच्यभागवैचित्र्यमात्रेणेत्यनुद्भिन्नमेव व्याचचक्षिरे । व्यङ्ग्यं यदलङ्कारान्तरं वस्त्वन्तरं च संस्पृशन्ति ये स्वात्मनः संस्कारायाश्लिष्यन्तीति ते तथा । **महाकविभिरिति** । कालिदासादिभिः । काव्यशोभां पुष्यतीति यदुक्तं तत्र हेतुमाह—**कथं हीति** । हिशब्दो हेतौ । अतिशययोगिता कथं नोत्कर्षमावहेत् काव्ये नास्त्येवासौ प्रकार इत्यर्थः । स्वविषये यदौचित्यं तेन चेद्धृदयस्थितेन तामतिशयोक्तिं कविः करोति । यथा भट्टेन्दुराजस्य—

यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत् ।

बालप्रिया

कथमेकदेशविवर्तिरूपकेण तत्प्रदर्शनमित्यत आह—**तदयमर्थ** इत्यादि । **प्रतीयमानमिति** । सरसां नृपत्वरूपणमेव शाब्दन्तत्सामर्थ्याद्वीजनोपायभूतानां हंसानाञ्चामरत्वं व्यङ्ग्यमित्यर्थः । शरदश्चामरग्राहिणीत्वमप्यत्र व्यङ्ग्यं बोध्यम् । प्राप्तं प्राप्तं सत् । **दर्शितमिति** । अत्रोक्तव्यङ्ग्योपस्कृतस्य वाच्यस्यैव चमत्कारकारित्वाद्व्यङ्ग्यस्य गुणीभूतत्वं स्पष्टीकृतमित्यर्थः । **यावदेवेति** । कालावधिनिर्देशस्तस्य स्पष्टत्वातिशयसूचनार्थः । **तावदिति** । तद्दर्शनमात्रावसर एवानन्यापेक्षया स्फुटावसेयोऽयमिति भावः । **अमुना द्वारेणेति** । उपलक्षणन्यायेनेत्यर्थः । **अयं प्रकारः** कारिकोक्तप्रकारः । एकदेशेन दर्शित इत्यस्यान्येषां व्याख्यानमाह—**अन्य इत्यादि** । एकदेशेनेत्यस्य व्याख्यानम्—**वाच्य** इत्यादि । **अनुद्भिन्नमिति** । अस्पष्टार्थकमित्यर्थः । व्यङ्ग्यमित्यस्योभयविशेषणत्वं योजयन्नाह—**व्यङ्ग्यमित्यादि** । संस्पृशन्तीत्यस्य विवरणम्—**स्वात्मन** इत्यादि । **संस्काराय** अतिशययोगाय । काव्य इत्यस्य पूर्वेण सम्बन्धः । **नास्त्येवेत्यादि** । सत्यामतिशययोगितायामनासादितोत्कर्षः काव्यप्रकारो नास्त्येवेत्यर्थः । किं सर्वथा नेत्याह—**स्वविषय इत्यादि** । **स्वविषये** स्वस्या अतिशयोक्तेर्यो विषयस्तस्मिन् । **औचित्यं** सम्भाव्यमानत्वलक्षणम् । **तेन हृदयस्थितेनेति** । कविहृदयस्थेन तदौचित्येनोपलक्षितामित्यर्थः । करोति चेत्तदा नास्त्येवासौ प्रकार इति सम्बन्धः ।

नोत्कर्षमावहेत् । भामहेनाप्यतिशयोक्तिलक्षणे यदुक्तम्—

लोचनम्

दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥

अत्र हि भगवतो मन्मथवपुषः सौभाग्यविषयः सम्भाव्यत एवायमतिशय इति तत्काव्ये लोकोत्तरैव शोभोल्लसति । अनौचित्येन तु शोभा लीयेत एव । यथा—

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥ इति ।

नन्वतिशयोक्तिः सर्वालङ्कारेषु व्यङ्ग्यतयान्तर्लीनैवास्त इति यदुक्तं तत्कथम् ? यतो भामहोऽतिशयोक्तिं सर्वालङ्कारसामान्यरूपामवादीत् । न च सामान्यं शब्दाद्विशेषप्रतीतेः पृथग्भूततया पश्चात्तनत्वेन चकास्तीति कथमस्य व्यङ्ग्यत्वमित्या-

बालप्रिया

तत्रौचित्ययुक्तमुदाहरणमाह—यदित्यादि । व्याख्यातोऽयं श्लोकः । भगवत इति मन्मथवपुष इत्यत्र, तच्च सम्भाव्यत एवेत्यत्र च हेतुः । **सम्भाव्यत एवेति**। एवं भवेदिति प्रतिपत्तृभिस्सम्भाव्यमान एवेत्यर्थः । एवकारेणासम्भाव्यमानत्वव्यवच्छेदः । **अयं सौभाग्यविषयोऽतिशय** इति । वनितावस्थाविशेषवर्णनेन प्रतीयमानस्सौन्दर्यादिगुणातिशय इत्यर्थः । तत्काव्ये तादृशि काव्ये । एतदेव प्रत्युदाहरणमुखेन स्फुटयिष्यन्नाह—**अनौचित्येने**त्यादि । **लीयत एवेति** । शोभोल्लासस्य का वार्तेति भावः । **अल्पमिति** । **अल्पं निर्मितमिति** । स्तनयोः पर्याप्तावकाशत्वाभावेनेति भावः । **इदमिति** । दृश्यमानमित्यर्थः । **एवंविधमिति** । वक्तुमशक्यमित्यर्थः । अत्रातिमहतोऽप्यवकाशात्मकाकाशस्याल्पत्वेन निर्माणोक्त्या ततोऽप्यतिशयितं महत्वं स्तनयोः प्रतीयत इति अतिशयोक्तिर्व्यङ्ग्या, परन्त्वियं स्तनयोस्तथाविधमहत्वस्यासम्भाव्यमानत्वेनानौचित्यवतीति काव्योत्कर्षं सम्पादयितुं न क्षमत इति भावः ।

भामहेनापीत्यादिग्रन्थः प्रकृते किमर्थ इत्यतस्तमवतारयति—**नन्वित्यादि** । **यदुक्तमिति** । अतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रियेति ग्रन्थेनेति भावः । **कथमिति** । अयुक्तमित्यर्थः । कुत इत्यत्राह—**यत** इत्यादि । **भामहः** अलङ्कारलक्षणकारकूटस्थो भामहनामा आचार्यः । **अवादीदिति**। सैषा सर्वैव वक्रोक्तिरिति ग्रन्थेनोक्तवानित्यर्थः । 'सर्वोपि वक्रोक्तिः' सर्व एवालङ्कारः । 'सैषा' येयमुक्तातिशयोक्तिः सैवेति तत्तदलङ्काराणां विशेषत्वं तत्सामान्यरूपत्वञ्चातिशयोक्तेरिति तदर्थः । भवत्वेवं तावता प्रकृते किमायातमित्यत आह—**न चेत्यादि** । **कथमस्य व्यङ्ग्यत्वमिति**। व्यङ्ग्यं हि वाच्यात् पृथक्तया तत्प्रतीत्युत्तरं शब्दात्प्रतीयते सामान्यन्त्वन्यथा । गौरि-

सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥ इति ।

तत्रातिशयोक्तिर्यमलङ्कारमधितिष्ठति कविप्रतिभावशात्तस्य चारुत्वा-

लोचनम्

शङ्कयाह—भामहेनेति । भामहेनापि यदुक्तं तत्रायमेवार्थोऽवगन्तव्य इति दूरेण सम्बन्धः । किं तदुक्तम्—सैषेति । यातिशयोक्तिर्लक्षिता सैव सर्वा वक्रोक्तिरलङ्कार-प्रकारः सर्वः ।

वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः

इति वचनात् । शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेणा-वस्थानमित्ययमेवासावलङ्कारस्यालङ्कारभावः; लोकोत्तरतैव चातिशयः, तेनातिशयोक्तिः सर्वालङ्कारसामान्यम् । तथा हि—अनया अतिशयोक्त्या, अर्थः सकलजनोपभोग-पुराणीकृतोऽपि विचित्रतया भाव्यते । तथा प्रमदोद्यानादिः विभावतां नीयते ।

बालप्रिया

त्यादिशब्देन सामान्यविशेषयोरपृथक्तया समकालमेवावभासादित्यलङ्कारविशेषप्रती-त्युत्तरं तत्पृथक्तया भासमानत्वं व्यापकं निवर्तमानं स्वव्याप्यं व्यङ्ग्यत्वमपि निवर्त-यतीति तस्य व्यङ्ग्यत्वोक्तिर्भामहवचनव्याहतत्वादयुक्तेत्यर्थः । व्यवहितत्वादन्वयन्दर्श-यति—भामहेनापीत्यादि । तदुक्तं भामहोक्तम् । श्लोकं व्याचष्टे—येत्यादि । लक्षितेति । "निमित्ततो वचो यत्तु"इत्यादिग्रन्थेन लक्षितेत्यर्थः । वक्रा वक्ष्यमाण-स्वरूपवक्रताविशिष्टा । उक्तिरुच्यमानोऽर्थ इत्यर्थाभिप्रायेण व्याचष्टे—अलङ्कारप्र-कार इति । अलङ्कारविशेष इत्यर्थः । वक्रोक्तिशब्दस्यालङ्कारार्थकत्वे भामहोक्तिमेव संवादयति—वक्रेति । अलङ्कृतिरिति । अलङ्क्रियेति च पाठः । वक्रशब्दोऽत्रा-सम्भवत्स्वार्थस्सादृश्यात्प्रसिद्धपथातिलङ्घिरूपान्तरशालित्वेन लक्षयतीत्याशयेनाह—लोकेत्यादि । लोकोत्तीर्णेन रूपेण लोकप्रसिद्धशास्त्रेतिहासादिव्यावृत्तेन रूपेण । तच्च रूपं विवक्षितरसाभिव्यञ्जनं प्रति योग्यत्वापत्तिलक्षणम् । अयमेवेति । रसाभिव्य-ञ्जनयोग्यत्वरूपलोकोत्तीर्णरूपमेवेत्यर्थः । अलङ्कारस्यालङ्कारभावः उप-मादेरलङ्कारत्वम् । तथाच वक्रोक्तिशब्दोऽलङ्कारार्थक इति भावः । तथापि कथमति-शयोक्तिरूपत्वमत आह—लोकोत्तरतैवातिशय इति । फलितमाह—तेनेति । अनयेत्यादिभागं विवृणोति—तथाहीत्यादि । तथाहीति । वक्ष्यमाणमुक्तोपपादकमि-त्यर्थः । सकलेति । पुराणीकृतः अनास्वाद्यतां नीतः । विशब्दार्थविवरणं विचि-त्रतयेति । नवनवविशेषशालितयेत्यर्थः । भाव्यते निष्पाद्यते । यथाहुः—"स्वभाव-श्चायमर्थानां यन्न साक्षादमी तथा । स्वदन्ते सत्कविगिरां गता गोचरतां यथे"ति । अर्थ-द्वयश्चान्यद्विभाव्यत इत्यनेन विवक्षितमिति दर्शयति—तथेत्यादि । प्रमदोद्यानादिरि-

तिशययोगोऽन्यस्य त्वलङ्कारमात्रतैवेति सर्वालङ्कारशरीरस्वीकरणयोग्यत्वे नाभेदोपचारात्सैव सर्वालङ्काररूपेत्ययमेवार्थोऽवगन्तव्यः । तस्याश्चालङ्का

लोचनम्

विशेषेण च भाव्यते रसमयीक्रियते, इति तावत्तेनोक्तं, तत्र कोऽसावर्थ इत्यत्राह **अभेदोपचारात्सैव सर्वालङ्काररूपेति** । उपचारे निमित्तमाह—**सर्वालङ्का रेति** । उपचारे प्रयोजनमाह—**अतिशयोक्तिरित्यादिना अलङ्कारमात्रतैवेत्य न्तेन** । मुख्यार्थबाधोऽप्यत्रैव दर्शितः **कविप्रतिभावशादित्यादिना** ।

अयं भावः—यदि तावदतिशयोक्तेः सर्वालङ्कारेषु सामान्यरूपता सा तर्हि तादात्म्यपर्यवसायिनीति तद्व्यतिरिक्तो नैवालङ्कारो दृश्यत इति कविप्रतिभानं न तत्रा·

बालप्रिया

ति । अर्थ इत्यनुषज्यते । **विशेषेण भाव्यत** इत्यस्यैव विवरणं—**रसे**त्यादि । इतीत्यादिपिण्डितार्थकथनम् । **तावदि**त्यविसंवादे । **तत्रे**ति । तद्वचन इत्यर्थः । **असाविति**। अयमेवेत्यत्रेदंशब्देन विवक्षित इत्यर्थः । उपचारे हि त्रितयमवश्यं वक्तव्यं, निमित्तं प्रयोजनं मुख्यार्थबाधश्चेति । तत्राभिधेयसम्बन्धलक्षणनिमित्तसमर्पकं सर्वालङ्कारेत्यादिकमित्याह्रोपचार इत्यादि । **निमित्तमाहे**ति । तथाचालङ्कारशरीरस्वीकरणयोग्यत्वरूपमुख्यार्थसादृश्यं निमित्तमिति भावः । अतिशयोक्तिरित्यादिकं प्रयोजनसमर्पकमित्याह—**उपचार** इत्यादि । वृत्तौ 'यमलङ्कारमधितिष्ठती'ति । येनालङ्कारेण सम्बध्नातीत्यर्थः । 'तस्ये'ति । अतिशयोक्तिसम्बद्धस्येत्यर्थः । 'अन्यस्ये'ति । अतिशयोक्त्यसम्बद्धस्येत्यर्थः । तथाचोपमादेरतिशयोक्तिसम्बन्धेन चारुत्वातिशयस्य द्योतनं प्रयोजनमिति भावः । लोचने—**अत्रैवे**ति । प्रयोजनसमर्पकग्रन्थ एवेत्यर्थः ।

कथमनेन मुख्यार्थबाधावगम इत्यपेक्षायामाशयमुन्मीलयन्नाह—**अयं भाव** इत्यादि । यथा खण्डमुण्डादिविशेषेषु गोत्वादेरनुवृत्ततया सामान्यरूपत्वन्तथा उपमादिविशेषेष्वतिशयोक्तेरनुवृत्ततया सामान्यात्मकत्वात्सर्वा वक्रोक्तिस्सैवेत्यभेदव्यपदेशो मुख्यो वा, सामान्यविशेषभावस्याविवक्षयानया वाचोयुक्त्या ध्वनिरेव काव्यात्मेति पक्षप्रतिक्षेपार्थमतिशयोक्तेः काव्यजीवितत्वं वा विवक्षितमिति विकल्पं मनसि कृत्वा दूषयति—**यदि तावदि**त्यादि । **तादात्म्यपर्यवसायिनी**ति । तथाच यथा खण्डमुण्डादयो गोत्वाद्यात्मकास्तथा सर्वेऽलङ्कारा अतिशयोक्त्यात्मान एव भवेयुरिति भावः । नन्वस्तु तादात्म्यमित्यत आह—इति **तद्व्यतिरिक्त** इत्यादि । **तद्व्यतिरिक्तः** अतिशयोक्तिव्यतिरिक्तः । तत्र अतिशययोजने । **अनपेक्षणीयत्व** स्यादिति । यथा खण्डादीनां स्वत एव गोत्वाद्याकारशालित्वं नान्यापेक्षं तथा उपमादेरतिशययोगित्वमपीति कविप्रतिभातारतम्यकृतातिशयतारतम्ययोगित्वमुपलभ्यमानं

रान्तरसंकीर्णत्वं कदाचिद्वाच्यत्वेन कदाचिद्व्यङ्ग्यत्वेन । व्यङ्ग्यत्वमपि

लोचनम्

पेक्षणीयं स्यात् । अलङ्कारमात्रं च न किञ्चिद्दृश्येत । अथ सा काव्यजीवितत्वेनेत्थं विवक्षिता, तथाप्यनौचित्येनापि निबध्यमाना तथा स्यात् । औचित्यवती जीवितमिति चेत्–औचित्यनिबन्धनं रसभावादि मुक्त्वा नान्यत्किञ्चिदस्तीति तदेवान्तर्यामि मुख्यं जीवितमित्यभ्युपगन्तव्यं न तु सा । एतेन यदाहुः केचित्—औचित्यघटितसुन्दरशब्दार्थमये काव्ये किमन्येन ध्वनिनात्मभूतेनेति ते स्ववचनमेव ध्वनिसद्भावाभ्युपगमसाक्षिभूतं मन्यमानाः प्रत्युक्ताः । तस्मान्मुख्यार्थबाधादुपचारे च निमित्तप्रयोजनसद्भावादभेदोपचार एवायम् । ततश्चोपपन्नमतिशयोक्तेर्व्यङ्ग्यत्वमिति । यदुक्तमलङ्कारान्तरस्वीकरणं तदेव त्रिधा विभजते—**तस्याश्चेति** । **वाच्यत्वेनेति** । सापि वाच्या भवति । यथा—'अपरैव हि केयमत्र' इति । अत्र रूपकेऽप्यतिशयः

बालप्रिया

विरुद्ध्येतेति भावः । दूषणान्तरमाह—**अलङ्कारमात्रमित्यादि** । किञ्चिदलङ्कारमात्रमतिशयोक्त्यनालिङ्गितमपि दृश्यते, तदप्यघटमानं स्यादित्यर्थः । द्वितीयमुत्थाप्य दूषयति—**अथेति** । **सा** अतिशयोक्तिः । **काव्यजीवितत्वेनेत्थं विवक्षिता** काव्यजीवितत्वप्रदर्शनाय सर्वा वक्रोक्तिरसैवेत्युक्ता । तथापीत्यङ्गीकृत्य वादसूचकम् । किमतिशयोक्तिमात्रस्य जीवितत्वं विवक्षितं, किं वा यत्किञ्चिद्विशिष्टस्य ? नाद्यः पक्ष इत्याह—**अनौचित्येनापीति** । सेत्यनुषङ्गः । यथा "अल्पं निर्मितमि"त्यादौ । **तथा** काव्यजीवितम् । द्वितीयमनुवदति—**औचित्यवतीति** । यथा "यद्विश्रम्ये"-त्यादौ । तर्हि अस्मदभिमतं सिद्धमित्याह—**औचित्यनिबन्धनमित्यादि** । रसादिकमेवौचित्यप्रयोजकमिति प्रागेवोक्तम् । मुख्यत्वे हेतुः—**अन्तर्यामीति** । **न तु सेति** । **सा** औचित्यवत्यतिशयोक्तिः । प्रसङ्गादाह—**एतेनेत्यादि** । एतेन प्रत्युक्ता इति सम्बन्धः । **स्ववचनमेवेति** । औचित्यघटितेति वचनमेवेत्यर्थः । **ध्वनिसद्भावेति** । औचित्यस्य रसादिनिबन्धनत्वाद्रसादिध्वनिसद्भावस्याभ्युपगमे प्रमाणीभवेदित्यर्थः । उपसंहरति–**तस्मादित्यादि** । **अभेदोपचार एवायमिति** । सर्वा वक्रोक्तिरसैवेति निर्देशो मुखं चन्द्र इत्यादिवदभेदोपचार एवेत्यर्थः । औपचारिकत्वोपपादनफलमाह–**ततश्चेत्यादि**। तस्याश्चेत्यादिग्रन्थस्य प्रकृतेन सङ्गतिन्दर्शयन्नाह—**यदुक्तमित्यादि** । **उक्तमिति** । उपचारनिमित्ततया पूर्वोक्तमित्यर्थः । **अलङ्कारान्तरस्वीकरणमिति** । अलङ्कारान्तरसङ्कीर्णत्वमित्यर्थः । तस्या इत्यस्य वाच्यत्वेनेत्यनेनापि सम्बन्ध इति व्याचष्टे—**सापीत्यादि** । **सा** अतिशयोक्तिः । अत्रोदाहरणं लावण्येत्याद्युक्तमेव दर्शयति—**यथेत्यादि** । अत्र वाच्यालङ्कारन्दर्शयन्नतिशयोक्तेर्व्यङ्ग्यत्वाभावमाह—**अत्रेत्यादि** । नयनादीनामुत्पलत्वादिरूपणाद्रूपकस्य वाच्यत्वं तावदुक्तमेव, अतिशयो-

कदाचित्प्राधान्येन कदाचिद्गुणभावेन । तत्राद्ये पक्षे वाच्यालङ्कारमार्गः । द्वितीये तु ध्वनावन्तर्भावः । तृतीये तु गुणीभूतव्यङ्ग्यरूपता ।

अयं च प्रकारोऽन्येषामप्यलङ्काराणामस्ति, तेषां तु न सर्वविषयः । अतिशयोक्तेस्तु सर्वालङ्कारविषयोऽपि सम्भवतीत्ययं विशेषः । येषु चालङ्कारेषु सादृश्यमुखेन तत्त्वप्रतिलम्भः यथा रूपकोपमातुल्ययोगितानिदर्शनादिषु तेषु गम्यमानधर्ममुखेनैव यत्सादृश्यं तदेव शोभातिशयशालि भवतीति ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तो गुणीभूतव्यङ्ग्यस्यैव

लोचनम्

शब्दस्पृगेव । अस्य त्रैविध्यस्य विषयविभागमाह—तत्रेति । तेषु प्रकारेषु मध्ये य आद्यः प्रकारस्तस्मिन् ।

नन्वतिशयोक्तिरेव चेदेवम्भूता तत्किमपेक्षया प्रथमं तावदिति क्रमः सूचित इत्याशङ्क्याह—अयं चेति । योऽतिशयोक्तौ निरूपितोऽलङ्कारान्तरेऽप्यनुप्रवेशात्मकः । नन्वेवमपि प्रथममिति केनाशयेनोक्तमित्याशङ्क्याह—तेषामिति । एवमलङ्कारेषु तावद्व्यङ्ग्यस्पर्शोऽस्तीत्युक्त्या तत्र किं व्यङ्ग्यत्वेन भातीति विभागं व्युत्पादयति—येषु चेति । रूपकादीनां पूर्वमेवोक्तं स्वरूपम् । निदर्शनायास्तु 'क्रिययैव तदर्थस्य

बालप्रिया

क्तेस्तु व्यङ्ग्यतया स्थातुमारब्धाया अपि अपरैवेति शब्देन स्पृष्टत्वाद्वाच्यत्वमापतितमिति द्वयोर्वाच्यत्वमित्यर्थः । नव्यमते त्वपरैवेत्यत्र भेदकातिशयोक्तिः, यत्रोत्पलानीत्यादौ रूपकातिशयोक्तिः । भोजराजमते त्वत्र समासोक्तिरित्यादिमतभेदा बोध्याः । अस्येति । विषयविभागविरहे त्रैविध्यप्रदर्शनस्य मन्दफलत्वादिति भावः । आद्यः प्रकारः द्वयोरपि वाच्यत्वात्मकः ।

अतिशयोक्तावुक्तस्य प्रकारस्यायञ्चेत्यादिनालङ्कारान्तरेष्वतिदेशः कृतः, तत् किमर्थमित्यतोऽवतारयति—नन्वित्यादि । चेदित्यसन्दिग्धे सन्देहवचनम् । अतिशयोक्तेरेवैतद्युज्येत । तस्यास्सर्वालङ्कारशरीरस्वीकरणार्हत्वस्योक्तत्वादिति भावः । किमपेक्षयेत्यादि । क्रमो हि सत्स्वेव बहुषु क्रमिकेषु घटेत, नान्यथेति भावः । निरूपित इति । प्रकार इति शेषः । प्रथममिति केनाशयेनोक्तमिति । प्राथम्यं प्राधान्येनेति वक्तव्यं प्राधान्यं किन्निबन्धनमित्यर्थः । आह तेषामितीति । तेषामित्यादिना विशेष इत्यन्तेनाहेत्यर्थः । व्यङ्ग्यस्पर्शोऽस्तीत्युक्त्वेति । वाच्यालङ्कारवर्गोऽयमित्यादिग्रन्थेनोक्त्वेत्यर्थः । किमिति । अलङ्कारान्तरं वस्त्वन्तरं वेत्यर्थः । वृत्तौ 'तत्त्वप्रतिलम्भ' इति ।अलङ्कारत्वप्राप्तिरित्यर्थः । 'रूपके'त्यादि । रूपकादौ सादृश्यं व्यङ्ग्यमुपमा तु तत्स्वरूपैवेति बोध्यम् । लोचने—क्रिययेति । लक्षणमिदमुप-

विषयाः । समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानाद्गुणीभूतव्यङ्ग्यता निर्विवादैव । तत्र च गुणीभूतव्यङ्ग्यतायामलङ्काराणां केषाञ्चिदलङ्कारविशेषगर्भतायां नियमः । यथा व्याजस्तुतेः प्रेयोलङ्कारगर्भत्वे । केषाञ्चिदलङ्कारमात्रगर्भतायां नियमः । यथा सन्देहादीनामुपमागर्भत्वे । केषाञ्चिदलङ्काराणां परस्परगर्भतापि सम्भवति । यथा दीपकोपमयोः । तत्र दीपकमुपमागर्भत्वेन प्रसिद्धम् । उपमापि कदाचिद्दीपकच्छायानुयायिनी । यथा मालोपमा । तथा हि 'प्रभामहत्या शिखयेव दीपः' इत्यादौ स्फुटैव दीपकच्छाया लक्ष्यते ।

लोचनम्

विशिष्टस्योपदर्शनम् । इष्टा निदर्शने'ति । उदाहरणम्—

अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति ।
उदयः पतनायेति श्रीमतो बोधयन्नरान् ॥

**प्रेयोलङ्कारेति** । चाटुपर्यवसायित्वात्तस्याः । सा चोदाहृतैव द्वितीयोद्द्योतेऽस्माभिः । उपमागर्भत्व इत्युपमाशब्देन सर्व एव तद्विशेषा रूपकादयः, अथवौपम्यं सर्वसामान्यमिति तेन सर्वमाक्षिप्तमेव । **स्फुटैवेति** । 'तया स पूतश्च विभूषितश्च' इत्येतेन दीपस्थानीयेन दीपनाद्दीपकमत्रानुप्रविष्टं प्रतीयमानतया, साधारणधर्माभिधानं

बालप्रिया

हरणञ्च भामहीयम् । **यियासति** यातुमारभते । यथात्रोपमाया व्यङ्ग्यत्वं तथा कुवलयानन्दादौ स्पष्टम् । वृत्तौ 'गुणीभूतव्यङ्ग्यस्यैव विषया' इति । गम्यमानधर्मस्य वाच्यसिद्ध्यङ्गत्वादिति भावः । 'तत्वव्यवस्थानादि'ति । समासोक्तित्वादिव्यवस्थितेरित्यर्थः । 'गुणीभूतव्यङ्ग्यते'ति । वाच्यार्थोपस्कारकत्वादिति भावः । प्रेयोलङ्कारगर्भत्वे हेतुमाह लोचने—**चाटूविति** । **सा चेति** । व्याजस्तुतिश्चेत्यर्थः । केषाञ्चिदलङ्कारमात्रगर्भतायामित्यत्रालङ्कारमात्रशब्देनालङ्कारसामान्याभिधानात्पुनरुपमागर्भत्व इति तद्विशेषाभिधानं व्याहतमित्यत आह—**उपमाशब्देनेत्यादि** । **तद्विशेषाः** उपमाविशेषाः । "उपमैव तिरोभूतभेदा रूपकमिष्यत" इत्यादिवचनादिति भावः । **रूपकादय इति** । विवक्षिता इति शेषः । उपमाशब्दोऽत्रोपमालङ्कारस्य न वाचकः किन्त्वौपम्यस्येत्याह—**अथवेत्यादि** । **सर्वसामान्यमिति** । उपमारूपकादिसर्वसाधारणमित्यर्थः । कथम्मालोपमायान्दीपकच्छायावगम इत्यत उपपादयति—**तयेत्यादि** । **दीपस्थानीयेन दीपनादिति** । अनेन दीप इवेति दीपयतीति वा दीपकशब्दव्युत्पत्तिर्दर्शिता । स्पष्टमिदं कुवलयानन्दे । प्रतीयमानतया दीपकमत्रानुप्रविष्टमिति सम्बन्धः । **प्रतीयमानतया** व्यङ्ग्यतया । अत्र मालोपमास्थले 'प्रभा-

तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽलङ्काराः सर्व एव गुणीभूतव्यङ्ग्यस्य मार्गः। गुणीभूतव्यङ्ग्यत्वं च तेषां तथाजातीयानां सर्वेषामेवोक्तानुक्तानां सामान्यम्। तल्लक्षणे सर्व एवैते

लोचनम्

द्योतदुपमायां स्पष्टेनाभिधाप्रकारेणैव। **तथाजातीयानामिति**। चारुत्वातिशयवतामित्यर्थः। सुलक्षिता इति यत्किलैषां तद्विनिर्मुक्तं रूपं न तत्काव्येऽभ्यर्थनीयम्। उपमा हि 'यथा गौस्तथा गवयः' इति। रूपकं 'खलेवाली यूप' इति। श्लेषः 'द्विर्वचनेऽची'ति तन्त्रात्मकः। यथासंख्यं 'तुदीशालातुरे'ति। दीपकं 'गामश्वम्' इति। ससन्देहः 'स्थाणुर्वा स्यात्' इति। अपह्नुतिः 'नेदं रजतम्' इति। पर्यायोक्तं 'पीनो दिवा नात्ति' इति। तुल्ययोगिता 'स्थाघ्वोरिच्च' इति। अप्रस्तुतप्रशंसा सर्वाणि ज्ञापकानि, यथा पदसंज्ञायामन्तवचनम्—'अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न' इति। आक्षेपश्चोभयत्र विभाषासु विकल्पात्मकविशेषाभिधित्सया इष्टस्यापि विधेः पूर्वं निषे-

बालप्रिया

महत्ये'त्यादौ। अत्र हेतुन्दर्शयन्नाह—**साधारणेत्यादि**। **एतदुपमायामिति**। मालोपमायामित्यर्थः। **अभिधाप्रकारेण** अभिधाव्यापारेण। एवकारेण व्यञ्जनस्य व्यवच्छेदः।

अयमर्थः—अत्रोपमायामपेक्षितो धर्मः पूतत्वादिस्तयेत्यादिना स्पष्टमभिधीयते, न पुनर्दीपकाभिप्रायेण दीपस्थानीयोऽर्थः। प्रभामहत्या शिखया दीप इव तया स पूतश्चेत्यादिवाक्यार्थत्रयस्य बोधो ह्यादौ जायते, तदुत्तरन्तु पूतत्वविभूषितत्वयोर्दीपाद्युपमानत्रयहिमवदुपमेयात्मकानेकानुगमोऽवगम्यत इति दीपकमत्र व्यङ्ग्यतयानुप्रविष्टमिति। मालोपमातिरिक्तोपात्तधर्मकोपमास्थले तु धर्मस्योभयत्र सम्बन्धः स्पष्टमभिधीयत इति न दीपकस्य व्यङ्ग्यतयानुप्रवेश इति मालोपमेत्युक्तम्। 'तथाजातीना'मित्यत्र जातिशब्दः प्रकृते चारुत्वातिशययोगित्वरूपोपाधिवचन इत्याह—**चारुत्वेति**। नन्वन्य एव गुणीभूतव्यङ्ग्यप्रकारः, अन्ये चोपमादयोऽलङ्कारास्तत्कथं गुणीभूतव्यङ्ग्यलक्षणे कृते तेषां लक्षितत्वसिद्धिरित्यतोऽभिप्रायमुद्भेदयन्नाह—**यत्किलेत्यादि**। **एषामिति**। उपमादीनामित्यर्थः। **तद्विनिर्मुक्तं** गुणीभूतव्यङ्ग्यताविरहितम्। **नाभ्यर्थनीयमिति**। अलङ्कारतायामनुपयोगित्वादिति भावः। उक्तोपपादनायाह—**उपमा हीत्यादि**। **द्विर्वचनेऽचीति**। सूत्रेऽस्मिन् द्विर्वचनशब्दोऽर्थद्वयपरः। **तुदीति**। 'तुदीशाले'त्यादिसूत्रे हि यथासङ्ख्येन सम्बन्धः। गामश्वमित्यत्रैकक्रियया स बोध्यः। **स्थाघ्वोरिति**। अनेन सूत्रेण द्वयोरेकं विधीयते। **सर्वाणि ज्ञापकानीति**। तत्तत्परिभाषादयस्सूत्रस्थतत्तत्पदेन गम्यन्त इति भावः। **नेतीति**। ज्ञापयतीति शेषः। **उभयत्र**

**सुलक्षिता भवन्ति। एकैकस्य स्वरूपविशेषकथनेन तु सामान्यलक्षणरहितेन प्रतिपादपाठेनेव शब्दा न शक्यन्ते तत्त्वतो निर्ज्ञातुम्, आनन्त्यात्। अनन्ता हि वाग्विकल्पास्तत्प्रकारा एव चालङ्काराः।**

लोचनम्

धनात्प्रतिषेधेन समीकृत इति न्यायात्। अतिशयोक्तिः 'समुद्रः कुण्डिका' 'विन्ध्यो वर्धितवानर्कवर्त्मागृह्णात्' इति। एवमन्यत्।

न चैवमादि काव्योपगीति, गुणीभूतव्यङ्ग्यतैवात्रालङ्कारतायां मर्मभूता लक्षिताः तान् सुष्ठु लक्षयति। यया सुपूर्णं कृत्वा लक्षिताः सङ्गृहीता भवन्ति, अन्यथा त्ववश्यमव्याप्तिर्भवेत्। तदाह—**एकैकस्येति**। न चातिशयोक्तिवक्रोक्त्युपमादीनां सामान्यरूपत्वं चारुताहीनानामुपपद्यते, चारुता चैतदायत्तेत्येतदेव गुणीभूतव्यङ्ग्यत्वं सामान्यलक्षणम्। व्यङ्ग्यस्य च चारुत्वं रसाभिव्यक्तियोग्यतात्मकम्, रसस्य स्वात्मनैव विश्रान्तिधाम्न आनन्दात्मकत्वमिति नानवस्था काचिदिति तात्पर्यम्। **अनन्ता हीति**। प्रथमोद्द्योत एव व्याख्यातमेतत् 'वाग्विकल्पानामानन्त्यात्' इत्यत्रान्तरे।—P.25

ननु सर्वेष्वलङ्कारेषु नालङ्कारान्तरं व्यङ्ग्यं चकास्ति; तत्कथं गुणीभूतव्यङ्ग्येन

बालप्रिया

**विभाषास्वित्यादि**। स्पष्टमिदं वैयाकरणानाम्। **समुद्रः कुण्डिकेति**। जलबाहुल्यप्रदर्शनाय कुण्डिकां विषयीकृत्य समुद्र इति निर्देशाद्भेदे अभेदरूपातिशयोक्तिरिति भावः। विन्ध्य इत्यादावसम्बन्धे सम्बन्धरूपा सा। उपसंहरन्नाह—**एवमन्यदित्यादि**।

**एवमादीति**। उक्तोदाहरणादिकमित्यर्थः। **इतीति** हेतौ। तल्लक्षणे सर्वे एवैते सुलक्षिता भवन्तीत्येतस्य विवरणम्—**गुणीभूतेत्यादि**। **ययेति**। गुणीभूतव्यङ्ग्यतयेत्यर्थः। **अन्यथेति**। उक्तेन सामान्यलक्षणेन विना तत्तद्विशेषलक्षणस्यैव कथन इत्यर्थः। क्वचिद्ग्रन्थे तूपमा हीत्यादिकस्सङ्गृहीता भवन्तीत्यन्तो ग्रन्थो न दृश्यते। ननु गुणीभूतव्यङ्ग्यत्वेनैव सर्वेषामलङ्काराणां सामान्यलक्षणं तल्लक्षणेन तेषां सुलक्षितत्वं भवतीत्युक्तमयुक्तमतिशयोक्त्यादीनामलङ्कारसामान्यरूपत्वात्तल्लक्षणेनैव च चरितार्थत्वादित्यत आह—**न चेत्यादि**। चारुताहीनानामतिशयोक्त्यादीनां सामान्यरूपत्वन्न चोपपद्यत इति सम्बन्धः। ततः किमत आह—**चारुतेत्यादि**। **एतदायत्तेति**। गुणीभूतव्यङ्ग्यात्वाधीनेत्यर्थः। नन्वलङ्कारचारुत्वप्रयोजकं गुणीभूतव्यङ्ग्यस्य चारुत्वं वक्तव्यन्तदप्यन्येन प्रयुक्तन्तदप्यन्येनेत्यनवस्थाप्रसङ्ग इत्यत आह—**व्यङ्ग्यस्येत्यादि**।

यदुक्तन्तल्लक्षणे सर्वे एते सुलक्षिता इति तदाक्षिप्य तत्समाधानपरतयोत्तरग्रन्थमवतारयति—**नन्वित्यादि**। **सर्वेष्विति**। दीपकादौ क्वचिदेव चकास्त्याक्षेपादौ तु

**गुणीभूतव्यङ्ग्यस्य च प्रकारान्तरेणापि व्यङ्ग्यार्थानुगमलक्षणेन विषयत्वमस्त्येव । तदयं ध्वनिनिष्यन्दरूपो द्वितीयोऽपि महाकविविषयोऽतिरमणीयो लक्षणीयः सहृदयैः । सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स**

लोचनम्

लक्षितेन सर्वेषां संग्रहः । मैवम्; वस्तुमात्रं वा रसो वा व्यङ्ग्यं सद्गुणीभूतं भविष्यति तदेवाह—**गुणीभूतव्यङ्ग्यस्य** चेति । **प्रकारान्तरेण** वस्तुरसात्मनोपलक्षितस्य ।

यदि वेत्थमवतरणिका—ननु गुणीभूतव्यङ्ग्येनालङ्कारा यदि लक्षितास्तर्हि लक्षणं वक्तव्यं किमिति नोक्तमित्याशङ्कयाह—**गुणीभूते**ति । **विषयत्वमि**ति लक्षणीयत्वमिति यावत् । केन लक्षणीयत्वं ध्वनिव्यतिरिक्तो यः प्रकारो व्यङ्ग्यत्वेनार्थानुगमो नाम तदेव लक्षणं तेनेत्यर्थः । व्यङ्ग्ये लक्षिते तद्गुणीभावे च निरूपिते किमन्यदस्य लक्ष' क्रियतामिति तात्पर्यम् । एवं 'काव्यस्यात्मा ध्वनिः' इति निर्वाह्योपसंहरति—**तदयमि**-

बालप्रिया

नेति भावः । **तत्कथ**मित्यादि । अव्यापकत्वादलक्षणमिति भावः । गुणीभूतव्यङ्ग्यत्वमित्यत्र व्यङ्ग्यपदेनालङ्कारमात्रन्न विवक्षिम्; किन्तु वस्तुरसादिकञ्चातो नाव्यापकमिदमित्याह—**मैवमि**त्यादि । **वस्तुमात्रं** वेति । यत्र गुणीभूतव्यङ्ग्यस्थलेऽलङ्कारो न चकास्ति तत्रेति भावः । व्यङ्ग्यार्थानुगमलक्षणेनेत्येतदर्थतो विवृतं व्यङ्ग्यं सद्गुणीभूतं भविष्यतीत्यनेन । व्यङ्ग्यत्वेनार्थानुगमो वाच्यं प्रति गुणभावः, स लक्षणमसाधारणधर्मः स्वरूपं वा यस्य प्रकारान्तरस्य तेनेति तदर्थः । प्रकारान्तरेणेत्युपलक्षणे तृतीयेत्याह—**उपलक्षितस्ये**ति । गुणीभूतव्यङ्ग्यस्येत्यस्य विशेषणं, तथा च वस्तुरसालङ्कारान्यतमस्य गुणीभूतस्य व्यङ्ग्यस्येत्यर्थः । विषयत्वमस्त्येवेत्यनेन सम्बन्धः । अलङ्कारेष्विति विपरिणामेनानुषङ्गः ।

उक्तग्रन्थयोजनायाः क्लेशसम्पाद्यत्वमन्वानः प्रकारान्तरेणाह—**यदि** वेत्यादि । **लक्षिता** इति । भवेयुरिति शेषः । **तस्य** गुणीभूतव्यङ्ग्यस्य । लक्षणेनेत्युक्तेर्विषयत्वमित्यस्य लक्षणीयत्वमित्यर्थस्सिद्ध्यतीत्याह—**लक्षणीयत्वमि**तीति । केन लक्षणीयत्वमिति प्रकारान्तरेणेत्यस्यावतारिका । **ध्वनिव्यतिरिक्त** इति । पूर्वमलङ्कारापेक्षया प्रकारान्तरत्वमिदानीन्तु ध्वन्यपेक्षयेति विशेषः । **अर्थानुगमः** वाच्यं प्रति गुणीभावेनावस्थानम् । **लक्षणम**साधारणधर्मः । नन्वेतल्लक्षणन्न प्रागुक्तमतः कथं सिद्धवदभिधानमित्यत आह—**व्यङ्ग्य** इत्यादि । व्यङ्ग्यलक्षणन्तावदुक्तमेव प्रथमोद्योते । यत्र व्यङ्ग्यान्वय इत्यादिना गुणीभावश्च निरूपित इति भावः । **तदयमि**त्याद्युपसंहारस्योपसंहार्यार्थविशेषदर्शनेन तात्पर्यमाह—**एवमि**त्यादि । **निर्वाह्य** निर्व्यूढं कृत्वा ।

प्रकारो यत्र न प्रतीयमानार्थसंस्पर्शेन सौभाग्यम् । तदिदं काव्यरहस्यं परमिति सूरिभिर्भावनीयम् ।

मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् ॥ ३७ ॥

अनया सुप्रसिद्धोऽप्यर्थः किमपि कामनीयकमानीयते ।

## लोचनम्

इत्यादिना **सौभाग्यमित्यन्तेन** । यत्प्रागुक्तं सकलसत्कविकाव्योपनिषद्भूतमिति तन्न प्रतारणमात्रमर्थवादरूपं मन्तव्यमिति दर्शयितुम्—**तदिदमिति** ॥ ३६ ॥

**मुख्या भूषेति** । अलङ्कृतिभृतामपिशब्दादलङ्कारशून्यानामपीत्यर्थः । प्रतीयमानकृता छाया शोभा, सा च लज्जासदृशी गोपनासारसौन्दर्यप्राणत्वात् । अलङ्कारधारिणीनामपि नायिकानां लज्जा मुख्यं भूषणम् । प्रतीयमाना च्छाया अन्तर्मदनोद्भेदजहृदयसौन्दर्यरूपा यथा, लज्जा ह्यन्तरुद्भिन्नमान्मथविकारजुगोपयिषारूपा मदनविजृम्भैव । वीतरागाणां यतीनां कौपीनापसारणेऽपि त्रपाकलङ्कादर्शनात् । तथा हि कस्यापि

## बालप्रिया

तदिदमित्यादेरुपसंहार्यानन्तर्भावात्तद्ग्रन्थमवतारयति—यदित्यादि । **प्रतारणमात्रं** चेतोविलोभनमात्रम् । **अर्थवादरूपं** स्तुतिरूपम् ॥ ३६ ॥

कारिकायां मुख्येत्यस्य भूषेत्यनेन सम्बन्ध इति दर्शयति—**मुख्या भूषेति** । **अलङ्कृतिभृतामिति** । अलङ्कृतिपदेन काव्यालङ्काराः कटकादयश्च ग्राह्याः । प्रतीयमानच्छायेत्यस्य विवरणम्-**प्रतीयमानकृतेत्यादि** । **प्रतीयमानं** वस्त्वलङ्काररसाद्यात्मकम् । लज्जेवेत्यस्य व्याख्यानम्-**लज्जासदृशीति** । लज्जासादृश्ये हेतुमाह—**गोपनेति** । गोपनैव सारो यस्य तत्तथाविधं सौन्दर्यमेव प्राणा यस्यास्तस्या भावस्तत्ता, तस्मादित्यर्थः । प्रतीयमानस्य गोपनासारसौन्दर्यप्राणत्वमुक्तं कामिनीकुचकलशनिदर्शनदिशा । लज्जायास्त्वनुपदं वक्ष्यति । अलङ्कृतिभृतामपीत्यस्य मुख्याभूषेत्यस्य चोपमानयोजनान्दर्शयति—**अलङ्कारेत्यादि** । प्रतीयमानच्छायेत्येतदप्युपमाने योजयति—**प्रतीयमानेत्यादि** । पक्षेऽत्र छायापदार्थो न कान्तिः, किन्तु योषितां यौवनारम्भसम्भाविनी कापि हृदयस्य दशेत्याह—**अन्तरित्यादि** । अन्तर्मदनोद्भेदजं तद्धृदयसौन्दर्यन्तदेव रूपं यस्यास्सा मदनोद्भेदरूपमनोविकारात्मिकेति यावत् । यथा प्रतीयमानेति सम्बन्धः । उक्तमुपपादयति—**लज्जेत्यादि** । उक्तार्थे व्यतिरेकेण तदसम्भवं हेतुमाह—**वीतेत्यादि** । कुरङ्गीत्यादिश्लोकः काव्यप्रकाशे उदाहृतः । अत्र हि मन्मथविकारजुगोपयिषा स्पष्टं गम्यते । प्रकारान्तरेणापि

तद्यथा—

विस्रम्भोत्था मन्मथाज्ञाविधाने ये मुग्धाक्ष्याः केऽपि लीलाविशेषाः।
अक्षुण्णास्ते चेतसा केवलेन स्थित्वैकान्ते सन्ततं भावनीयाः॥

## लोचनम्

कवेः—'कुरङ्गीवाङ्गानि'[1] इत्यादिश्लोकः। तथा प्रतीयमानस्य प्रियतमाभिलाषानुनाथ-नमानप्रसूनेः छाया कान्तिः यया। शृङ्गाररसतरङ्गिणी हि लज्जावद्धा निर्भरतया तांस्तान् विलासान्नेत्रगात्रविकारपरम्परारूपान् प्रसूत इति गोपनासारसौन्दर्यलज्जाविजृम्भितमेतदिति भावः।

विस्रम्भेति। मन्मथाचार्येण त्रिभुवनवन्द्यमानशासनेन अत एव लज्जासाध्वसध्वंसिना दत्ता येयमलङ्घनीयाज्ञा तदनुष्ठानेऽवश्यकर्तव्ये सति साध्वसलज्जात्यागेन विस्रम्भसम्भोगकालोपनताः, **मुग्धाक्ष्या** इति अकृतकसम्भोगपरिभावनोचितदृष्टिप्रसरपवित्रिता येऽन्ये विलासा गात्रनेत्रविकाराः, अत एवाक्षुण्णाः नवनवरूपतया प्रतिक्षणमुन्मिषन्तस्ते, केवलेनान्यत्राव्यग्रेणैकान्तावस्थानपूर्वं सर्वेन्द्रियोपसंहारेण भाव-

## बालप्रिया

तत्पदं व्याचष्टे—**प्रतीयमानस्येत्यादि**। यया हेतुना कान्तिरिति सम्बन्धः। कथं लज्जायास्तद्धेतुत्वमित्यत आह—**शृङ्गारेत्यादि**। इत्येतदिति सम्बन्धः। नेत्रादिविकारजातं प्रतीयमानच्छायारूपमिति भावः। श्लोकं व्याचष्टे—**मन्मथाचार्येणे**त्यादि। राजा ज्ञातोऽप्यनतिलङ्घनीया ह्याचार्याज्ञा "गुरौ रुष्टे न कश्चने"त्यादिवचनादत्र आचार्यत्वरूपणम्। **त्रिभुवनेति**। यथोक्तं मालतीमाधवे—'अन्त्येषु जन्तुष्वि'त्यादि। **अत एव** त्रिभुवनवन्दनीयशासनत्वादेव। दत्तेत्यवश्यग्राह्यत्वादिसूचनार्थम्। **आज्ञेति**। सर्वो युवत्यस्त्यक्तलज्जा साध्वसास्सम्भोगपरा भवेयुरित्याज्ञेत्यर्थः। त्यागेन कर्तव्य इति सम्बन्धः। **अकृतकेति**। **अकृतकाः** अकृत्रिमाः तथा सम्भोगस्य या परिभावना आस्वादः, तत्र तदवसर इति यावत्। उचिताश्च ये दृष्टिप्रसरास्तैः पवित्रिता इत्यर्थः। सम्भोगपरिभोगेति च पाठः। लीलाविशेषा इत्यत्रत्यविशेषपदार्थकथनम्। **अन्ये** इति। असाधारणा इत्यर्थः। **अत एव** अन्यत्वादेव। एकान्तावस्थानफलमुक्तम्—**सर्वेन्द्रियोपसंहारेणे**ति। कृत्यप्रत्ययार्थं द्वेधाह—

---

[1] कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्॥
इति सम्पूर्णश्लोकः।

इत्यत्र केऽपीत्यनेन पदेन वाच्यमस्पष्टमभिदधता प्रतीयमानं वस्त्व-क्लिष्टमनन्तमर्पयता का छाया नोपपादिता।

**अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते।**
**सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता॥ ३८॥**

या चैषा काका क्वचिदर्थान्तरप्रतीतिर्दृश्यते सा व्यङ्ग्यस्यार्थस्य गुणीभावे सति गुणीभूतव्यङ्ग्यलक्षणं काव्यप्रभेदमाश्रयते। यथा—'स्व-

लोचनम्

यितुं शक्या अर्हा उचिताः। यतः केऽपि नान्येनोपायेन शक्यनिरूपणाः॥ ३७॥

गुणीभूतव्यङ्ग्यस्योदाहरणान्तरमाह—**अर्थान्तरेति**। 'कक लौल्ये' इत्यस्य धातोः काकुशब्दः। तत्र हि साकाङ्क्षनिराकाङ्क्षादिक्रमेण पठ्यमानोऽसौ शब्दः प्रकृतार्थातिरिक्तमपि वाञ्छतीति लौल्यमस्याभिधीयते। यदि वा ईषदर्थे कुशब्दस्तस्य

बालप्रिया

**शक्या अर्हा** इति। अर्हा इत्यस्यैव विवरणम्—**उचिता** इति। वृत्तौ "वाच्यमस्पष्टमभिदधते"ति। किंशब्दस्यानिर्ज्ञातविशेषधर्मावच्छिन्नवाचकत्वादिति भावः। **प्रतीयमानं वस्त्विति**। तच्च वचनाशक्यत्वानुभवैकवेद्यत्वपरमाह्लादकारित्वादिकं बोध्यम्। **का छायेत्यादि**। उक्तं व्यङ्ग्यं वाच्यार्थोपस्कारकं सत्काव्यस्य चारुत्वं सम्पादयतीत्यर्थः॥ ३७॥

कारिकां वृत्तिञ्च विवरिष्यन्नादौ काकुशब्दनिष्पत्तिमाह—**ककेत्यादि**। **अस्य धातोः** एतद्धातुसम्बन्धी। ननु लौल्यमिच्छा तत्कथमत्र घटत इत्यत आह—**तत्र हीत्यादि**। **तत्र** काकुविषये। **साकाङ्क्षेति**। यथोक्तं काव्यानुशासने—"सा च काकुर्द्विधा साकाङ्क्षा निराकाङ्क्षा च, वाक्यस्य साकाङ्क्षनिराकाङ्क्षत्वात्। यस्माद्वाक्याद्यादृशात्सङ्केतबलेनार्थः प्रतीयते, न तादृश एव, किन्तु न्यूनाभ्यधिकः प्रमाणबलेन निर्णेयस्तद्वाक्यं साकाङ्क्षं तद्विपरीतं निराकाङ्क्षम्। वक्तृगता ह्याकाङ्क्षा वाक्ये उपचर्यते। सा च प्रकरणबलान्निश्चीयते। विशिष्टविषयत्वञ्च तस्यास्तत एवावसीयते। विषयोऽपि त्रिविधः अर्थान्तरं तदर्थगत एव विशेषस्तदर्थाभावो वे"त्यादि। निराकाङ्क्षादीत्यादिशब्देन दीप्तायलङ्कारादिपरिग्रहः। क्रमः प्रकारः। **असौ शब्द** इति। ध्वनिविशेषात्मिका हि काकुश्शब्दधर्म इत्यतश्शब्द इत्युक्तम्। **प्रकृतेति**। प्रकृतो योऽर्थस्सङ्केतबलेनावगम्यमानस्तस्मादतिरिक्तमर्थमित्यर्थः। **वाञ्छतीति**। बोध्यत्वेनेच्छतीत्यर्थः। **अभिधीयत** इति। उपचारादिति शेषः। प्रकारान्तरेणाह—**यदि वेत्यादि**। **हृदयेति**। हृदयस्थं यद्वस्तु विधिनिषेधादिरूपं तस्य प्रतीतेरित्यर्थः।

स्था भवन्ति मयि जीवति धार्तराष्ट्राः' ।

लोचनम्

कादेशः । तेन हृदयस्थवस्तुप्रतीतेरीषद्भूमिः काकुः तया याऽर्थान्तरगतिः स काव्यविशेष इमं गुणीभूतव्यङ्ग्यप्रकारमाश्रितः । अत्र हेतुर्व्यङ्ग्यस्य तत्र गुणीभाव एव भवति । अर्थान्तरगतिशब्देनात्र काव्यमेवोच्यते । न तु प्रतीतेरत्र गुणीभूतव्यङ्ग्यत्वं वक्तव्यं, प्रतीतिद्वारेण वा काव्यस्य निरूपितम् ।

अन्ये त्वाहुः—व्यङ्ग्यस्य गुणीभावेऽयं प्रकारः अन्यथा तु तत्रापि ध्वनित्वमेवेति । तच्चासत्; काकुप्रयोगे सर्वत्र शब्दस्पृष्टत्वेन व्यङ्ग्यस्योन्मीलितस्यापि गुणीभावात्, काकुर्हि शब्दस्यैव कश्चिद्धर्मस्तेन स्पृष्टं 'गोप्यैवं गदितः सलेशं' इति, 'हसन्नेत्रार्पिताकूतम्' इतिवच्छब्देनैवानुगृहीतम् । अत एव 'भम धम्मिअ' इत्यादौ काकुयोजने गुणीभूतव्यङ्ग्यतैव व्यक्तोक्तत्वेन तदाभिमानाल्लोकस्य । स्वस्था इति, भवन्ति इति, मयि जीवति इति, धार्तराष्ट्रा इति च साकाङ्क्षदीप्तगद्गदतारप्रशमनोद्दीपनचित्रिता

बालप्रिया

**ईषद्भूमिरि**ति । कश्चिदुपाय इत्यर्थः । भूमिरिति कुशब्दार्थकथनम् । कारिकां व्याचष्टे—**तये**त्यादि । **तया** काका । अर्थान्तरगतिरित्यनेनार्थान्तरावगमकः काव्यविशेषो विवक्षित इति वक्ष्यति तदाशयेन सेत्येतद्व्याचष्टे—**स काव्यविशेष** इति । गुणीभाव इति सप्तमी निमित्ते गुणीभावाद्धेतोरित्यर्थ इत्याह—तत्रेत्यादि । **न त्वि**त्यादि । अर्थान्तरगतिरित्यस्य अर्थान्तरस्य प्रतीतिरिति यथाश्रुतार्थकत्वे अर्थान्तरप्रतीतेरेव गुणीभूतव्यङ्ग्यत्वं वक्तव्यं भवति, तच्चानभिमतमिति भावः । यथाश्रुतमुक्तमर्थमेव योजयन्नाह—**प्रतीती**त्यादि । अर्थान्तरप्रतीतेर्गुणीभावप्रदर्शनव्याजेन तद्धेतुभूतकाव्यस्य गुणीभूतव्यङ्ग्यत्वं प्रदर्शितमित्यर्थः ।

अन्ये तु काकुस्थले यत्र तद्व्यङ्ग्यस्य प्राधान्यन्तत्र ध्वनित्वं, यत्र गुणीभावस्तत्र गुणीभूतव्यङ्ग्यत्वं तदेतद्व्यङ्ग्यस्य गुणीभाव इत्यनेन दर्शितमिति व्याचक्षते; तन्मतमुपन्यस्य दूषयति—**अन्य** इत्यादि । शब्दस्पृष्टत्वमुपपादयति—**काकुर्ही**त्यादि । **धर्म** इति । यथोक्तमभिप्रायवान् पाठ्यधर्मः काकुरिति । 'काकुः स्त्रियां विकारो यश्शोकभीत्यादिभिर्ध्वनेः'रित्यमरश्च । **तेन स्पृष्टमि**ति । काकुरूपेण शब्दधर्मेण विषयीकृतमित्यर्थः । शब्देनैवानुगृहीतमित्यनेनास्य सम्बन्धः धर्मधर्मिणोरभेदादिति भावः । शब्दावेदितस्वरूपशब्दानुगृहीतत्वे दृष्टान्तमाह—**गोप्ये**त्यादि । **अत एवे**ति । काकुव्यङ्ग्यस्य गुणीभावादेवेत्यर्थः । **काक्वि**त्यादि । भ्रमणनिषेधस्य काक्वा व्यङ्ग्यत्वे गुणीभूतव्यङ्ग्यत्वमेवेत्यर्थः । अत्र हेतुमाह—**व्यक्ते**त्यादि । **तदा** काकुयोजने । काकुमुदाहरणे दर्शयति—**स्वस्था** इत्यादि । **इति चे**ति । चतुर्षु स्थलेषु चेत्यर्थः । **साकाङ्क्षे**त्यादि । साकाङ्क्षा दीप्ता गद्गदेन ताराप्रशमनोद्दीपनाभ्यां चित्रिता विशेषवती चेत्य-

यथा वा—आम असइओ ओरम पइव्वए ण तुए मलिणिअं सीलम् ।
किं उण जणस्स जाअ व्व चन्दिलं तं ण कामेमो ॥

शब्दशक्तिरेव हि स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सत्यर्थविशेषप्रतिपत्तिहेतुर्न काकुमात्रम् । विषयान्तरे स्वेच्छाकृतात्काकुमात्रात्तथाविधार्थप्रतिपत्त्यसम्भवात् । स चार्थः काकुविशेषसहायशब्दव्यापारोपारूढोऽप्यर्थसामर्थ्यलभ्य इति व्यङ्ग्यरूप एव । वाचकत्वानुगमेनैव तु यदा

लोचनम्

काकुरसम्भाव्योऽयमर्थोऽत्यर्थमनुचितश्चेत्यमुं व्यङ्ग्यमर्थं स्पृशन्ती तेनैवोपकृता सती क्रोधानुभावरूपतां व्यङ्ग्योपस्कृतस्य वाच्यस्यैवाधत्ते । आमेति ।

आम असत्यः उपरम पतिव्रते न त्वया मलिनितं शीलम् ।
किं पुनर्जनस्य जायेव नापितं तं न कामयामहे ॥

इति च्छाया । आम असत्यो भवामः इत्यभ्युपगमकाकुः साकाङ्क्षोपहासा । उपरमेति निराकाङ्क्षया सूचनगर्भा । पतिव्रते इति दीप्तस्मितयोगिनी। न त्वया मलिनितं शीलमिति सगद्गदाकाङ्क्षा । किं पुनर्जनस्य जायेव मन्मथान्धीकृता, चन्दिलं नापितमिति पामरप्रकृतिं न कामयामहे इति निराकाङ्क्षगद्गदोपहासगर्भा । एषा हि कयाचिन्नापितानुरक्तया कुलवध्वा दृष्टाविनयाया उपहास्यमानायाः प्रत्युपहासावेशगर्भोक्तिः काकुप्रधानैवेति । गुणीभावं दर्शयितुं शब्दस्पृष्टतां तावत्साधयति—शब्दशक्तिरेवे-

बालप्रिया

र्थः । दीप्ततारावलङ्कारान्तर्गतौ प्रशमनोद्दीपने स्वङ्गान्तर्गते इति विवेकः । अयमर्थ इति । मयि जीवति धार्तराष्ट्राः स्वस्था भवन्तीति वाच्यार्थ इत्यर्थः । स्पृशन्तीति । विषयीकुर्वाणा सतीत्यर्थः । तेनैव उक्तेन व्यङ्ग्येनैव । उपकृता सतीति हेतुकथनम् । व्यङ्ग्येति । असम्भाव्यत्वादिरूपोक्तव्यङ्ग्येनोपस्कृतस्येत्यर्थः। आधत्त सम्पादयति । तथाच व्यङ्ग्यं गुणीभूतमिति भावः ।

आमेति । वयमसत्यः स्वैरिण्यो भवामः । आमेत्यभ्युपगमे । उपरम त्वं मदुपहासाद्विरम । शीलं सद्वृत्तम् । किं पुनः किन्तु । जनस्य जायेवेति । त्वमिवेत्यर्थः । त्वं यथा कामयसे तथेति यावत् । लोचने-साकाङ्क्षेति । साकाङ्क्षा उपहासव्यञ्जिका चेत्यर्थः । पतिव्रत इति न मलिनितमित्यत्र च काका तत्तद्भावो व्यङ्ग्य इत्यभिप्रायेणाह—पतिव्रत इत्यादि । चन्दिलमित्यस्य छाया—नापितमिति । तेन गम्यमाह—पामरेति । गुणीभावमिति । व्यङ्ग्यस्येति शेषः । अनुगम इत्यस्य

तद्विशिष्टवाच्यप्रतीतिस्तदा गुणीभूतव्यङ्ग्यतया तथाविधार्थद्योतिनः काव्यस्य व्यपदेशः। व्यङ्ग्यविशिष्टवाच्याभिधायिनो हि गुणीभूतव्यङ्ग्यत्वम्।

प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते।
विधातव्या सहृदयैर्न तत्र ध्वनियोजना॥ ३९॥

सङ्कीर्णो हि कश्चिद् ध्वनेर्गुणीभूतव्यङ्ग्यस्य च लक्ष्ये दृश्यते मार्गः।

लोचनम्

त्यादिना। नन्वेवं व्यङ्ग्यत्वं कथमित्याशङ्क्याह—स चेति। अधुना गुणीभावं दर्शयति—वाचकत्वेति। वाचकत्वेऽनुगमो गुणत्वं व्यङ्ग्यव्यञ्जकभावस्य व्यङ्ग्यविशिष्टवाच्यप्रतीत्या तत्रैव काव्यस्य प्रकाशकत्वं कल्प्यते; तेन च तथा व्यपदेश इति काकुयोजनायां सर्वत्र गुणीभूतव्यङ्ग्यतैव। अत एव 'मथ्नामि कौरवशतं समरे न कोपात्' इत्यदौ विपरीतलक्षणां य आहुस्ते न सम्यक्परामम्रशुः। यतोऽत्रोच्चारणकाल एव 'न कोपात्' इति दीप्ततारगद्गदसाकाङ्क्षकाकुबलान्निषेधस्य निषिध्यमानतयैव युधिष्ठिराभिमतसन्धिमार्गाक्षमारूपत्वाभिप्रायेण प्रतिपत्तिरिति मुख्यार्थबाधाद्यनुसरणविघ्नाभावात्को लक्षणाया अवकाशः। 'दर्शे यजेत' इत्यत्र तु तथाविधकाक्वाद्युपायान्तराभावाद्भवतु विपरीतलक्षणा इत्यलमवान्तरेण बहुना॥ ३८॥

अधुना संकीर्णं विषयं विभजते—प्रभेदस्येति। युक्त्येति। चारुत्वप्रतीतिरे-

बालप्रिया

विवरणम्—गुणत्वमिति। कस्येत्यतः पूरयति—व्यङ्ग्येत्यादि। 'तद्विशिष्टे'त्यादिवृत्तिग्रन्थविवरणम्—व्यङ्ग्यविशिष्टेत्यादि। तत्रैव व्यङ्ग्यविशिष्टवाच्य एव। प्रकाशकत्वं बोधकत्वम्। वृत्तौ 'यदा तदे'त्यनयोर्यतस्तत इत्यर्थौ बोध्यौ। मथ्नामीत्यादि। प्रतिज्ञातकौरवशतवधस्य क्रुद्धस्य भीमसेनस्य वचनमिदमत एव न मथ्नामीत्यादौ विपरीतलक्षणेति केचित्तदाह—विपरीतेत्यादि। इति निषेधस्य निषिध्यमानतयैव प्रतिपत्तिरिति सम्बन्धः। काकुकल्पनायां हेतुः—युधिष्ठिरेत्यादि। युधिष्ठिराभिमतो यस्सन्धिमार्गस्तस्य यदक्षमारूपत्वमक्षम्यत्वं तदभिप्रायो भीमगतस्तेनेत्यर्थः। इतीत्यादि। अयं भावः—न मथ्नामीत्यादिरूपस्य मथनादिनिषेधस्यादौ प्रतीतिः पश्चात्तु मथ्नाम्येवेत्यादिरूपस्य तन्निषेधनिषेधस्य प्रतीतिरितिन, किन्तूच्चारणकाल एव काकुबलान्मथनादिनिषेधस्य निषेधप्रतियोगित्वेनैव न मथ्नामि नेत्याकारिका प्रतीतिरतो मथनादिनिषेधस्य वाच्यस्य निषेधो व्यङ्ग्य एवेति। प्रसङ्गान्मीमांसकं प्रत्याह—दर्श इत्यादि। न दृश्यते चन्द्रोऽत्रेति व्युत्पत्त्या दर्शशब्दोऽमावास्यायां प्रयुज्यते। तथाचात्र दृशधातोर्दर्शनाभावे विपरीतलक्षणेति भावः। स्पष्टमिदं श्रौतसूत्रव्याख्याने॥ ३८॥

सङ्कीर्णं विषयमिति। प्रमुख एवान्यतरावधारणनियमासम्भवो यत्र युक्तिपरा-

तत्र यस्य युक्तिसहायता तत्र तेन व्यपदेशः कर्तव्यः । न सर्वत्र ध्वनि-रागिणा भवितव्यम् । यथा—

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥

लोचनम्

वात्र युक्तिः । **पत्युरिति** । **अनेनेति** । अलक्तकोपरक्तस्य हि चन्द्रमसः परभागलाभोऽनवरतपादपतनप्रसादनैर्विना न पत्युर्झटिति यथेष्टानुवर्तिन्या भाव्यमिति चोपदेशः । शिरोधृता या चन्द्रकला तामपि परिभवेति सपत्नीलोकापजय उक्तः ।

**निर्वचन**मिति । अनेन लज्जावहित्थहर्षेर्ष्यासाध्वससौभाग्याभिमानप्रभृति यद्यपि ध्वन्यते, तथापि तन्निर्वचनशब्दार्थस्य कुमारीजनोचितस्याप्रतिपत्तिलक्षणस्यार्थस्योपस्कारकतां केवलमाचरति । उपस्कृतस्त्वर्थः शृङ्गाराङ्गतामेतीति ।

बालप्रिया

मर्शं विना तं विषयमित्यर्थः । न्यायवित्सम्मतस्य युक्तिपदार्थस्यात्रासम्भवात्तत्पदं व्याचष्टे—**चारुत्वे**त्यादि । अत्र काव्यार्थतत्त्वचिन्ताविषये । यदि व्यङ्ग्योपस्कृताद्वाच्यादेव स चेतश्चमत्कारलाभः, तदा गुणीभूतव्यङ्ग्यत्वं; यदा तु व्यङ्ग्यादेव न्यक्कृतवाच्यात्तदा ध्वनित्वमिति चारुत्वप्रतीतिरूपकार्यबलादेव तदन्यतरावधारणसिद्धिरित्यर्थः । स्पृशेत्यन्तेन व्यज्यमानमर्थद्वयं दर्शयति—**अलक्तके**त्यादि । **परभागलाभ** इति । चन्द्रमसोऽतिधवलत्वादलक्तकस्य रक्तत्वाच्चेति भावः । अलक्तकोपरञ्जितत्वरूपविशेषणांशव्यङ्ग्यमुक्त्वा चरणेन शिरस्स्पर्शनविधिना व्यङ्ग्यमाह—**अनवरते**त्यादि । **झटितीति** । नैसर्गिकनिरतिशयरागपारतन्त्र्यबलात्कारादित्यर्थः । शिरोधिकरणकत्वविशेषणोपकृतेन स्त्रीलिङ्गनिर्देशेन व्यङ्ग्यमाह—**शिरोधृते**त्यादि । **उक्त** इति । व्यञ्जित इत्यर्थः ।

'निर्वचनमि'त्यादिवृत्तिग्रन्थेन दर्शितं व्यंग्यं तस्य गुणीभावं च प्रदर्शयति—**अनेने**त्यादि । **अनेन** निर्वचनं जघानेत्यनेन । **तदिति** । लज्जादिव्यंग्यजातमित्यर्थः । **कुमारीजनोचितस्ये**ति । अनेन वाच्यार्थस्य चमत्कारकारित्वयोग्यता दर्शिता । **उपस्कृतस्त्वर्थ** इति । उक्तव्यंग्योपस्कृतो 'निर्वचनं जघाने'ति वाच्यार्थ इत्यर्थः । **शृङ्गारेति** । विप्रलम्भशृङ्गारेत्यर्थः ।

उच्चैःशब्दस्योर्ध्वदेशस्थितार्थकत्वं कुसुमविशेषणत्वं चाभिप्रेत्य व्याचष्टे—

यथा च—

प्रायच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम्॥

इत्यत्र 'निर्वचनं जघान' 'न किञ्चिदूचे' इति प्रतिषेधमुखेन व्यङ्ग्यस्यार्थस्योक्त्या किञ्चिद्विषयीकृतत्वाद्गुणीभाव एव शोभते। यदा वक्रोक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येण प्रतीयते तदा तस्य प्राधान्यम्। यथा 'एवं वादिनि देवर्षौ' इत्यादौ। इह पुनरुक्तिभङ्ग्यास्तीति वाच्यस्यापि प्राधान्यम्। तस्मान्नात्रानुरणनरूपव्यङ्ग्यध्वनिव्यपदेशो विधेयः।

लोचनम्

प्रायच्छतेति। उच्चैरिति। उच्चैर्यानि कुसुमानि कान्तया स्वयं ग्रहीतुमशक्यत्वाद्याचितानीत्यर्थः। अस्मदुपाध्यायास्तु हृद्यतमानि पुष्पाणि अमुके, गृहाण गृहाणेत्युच्चैस्तारस्वरेणादरातिशयार्थं प्रयच्छता। अत एव लम्भितेति। न किंचिदिति। एवंविधेषु शृङ्गारावसरेषु तामेवायं स्मरतीति मानप्रदर्शनमेवात्र न युक्तमिति सातिशयमन्युसंभारो व्यङ्ग्यो वचननिषेधस्यैव वाच्यस्य संस्कारः। तद्वक्ष्यति—उक्तिभङ्ग्यास्तीति। तस्येति व्यङ्ग्यस्य। इहेति पत्युरित्यादौ। वाच्यस्यापीति। अपिशब्दो भिन्नक्रमः। प्राधान्यमपि भवति वाच्यस्य, रसाद्यपेक्षया तु गुणतापीत्यर्थः। अत एवोपसंहारे ध्वनिशब्दस्य विशेषण[1]मुक्तम्॥ ३९॥

बालप्रिया

उच्चैर्यानीत्यादि। एतद्विशेषणव्यंग्यमाह—कान्तयेत्यादि। उच्चैःशब्दस्य तारस्वरार्थकत्वं प्रदानक्रियाविशेषणत्वं च स्वाभिमतमित्याह—अस्मदित्यादि। अमुक इति। पाणितलादिपात्र इत्यर्थः। पुष्पाणीत्यनेन सम्बन्धः। उच्चैरित्यस्य व्याख्यानम्—तारस्वरेणेति। तारस्वरेण दाने निमित्तमादरातिशयद्योतनमित्याह—आदरेति। उक्तार्थसामञ्जस्यद्रढिम्ने पदान्तरमनुकूलयति—अत एवेत्यादि। अत एव तारस्वरेण कुसुमदानादेव। 'न किंचिदूच' इत्यस्य प्रयोजनं दर्शयन् व्यंग्यमाह—एवंविधेष्वित्यादि। मानप्रदर्शनमिति। अक्षिविवर्तनाद्यनुभावद्वारेति भावः। तदिति। व्यंग्यस्य वाच्योपस्कारकतया वाच्यायमानत्वमित्यर्थः। भिन्नक्रम इति। अन्यथा व्याहतत्वस्यादिति भावः। विशेषणमिति। अनुरणनेत्यादिविशेषणमित्यर्थः। असंलक्ष्यक्रमव्यंग्यध्वनिरूपत्वस्यात्रापि सत्त्वद्योतकं हि तद्विशेषणमिति भावः॥ ३९॥

---

१. ध्वनिशब्दस्य विशेषणम्—अनुरणनरूपव्यङ्ग्येति। एवं च रसध्वनिव्यपदे-

प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम् ।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥ ४० ॥

गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारो रसभावादितात्पर्यालोचने पुनर्ध्वनिरेव सम्पद्यते । यथात्रैवानन्तरोदाहृते श्लोकद्वये । यथा च—

दुराराधा राधा सुभग यदनेनापि मृजत-
स्तवैतत्प्राणेशाजघनवसनेनाश्रु पतितम् ।

लोचनम्

एतदेव निर्वाहयन् काव्यात्मत्वं ध्वनेरेव परिदीपयति-**प्रकार** इति । **श्लोकद्वय** इति तुल्यच्छायं यदुदाहृतं पत्युरित्यादि तत्रेति, द्वयशब्दादेवंवादिनीत्यस्यानवकाशः । **दुराराधे**ति । अकारणकुपिता पादपतिते मयि न प्रसीदसि अहो दुराराधासि मा रोदीरित्युक्तिपूर्वं प्रियतमेऽश्रूणि मार्जयति इयमस्या अभ्युपगमगर्भोक्तिः । **सुभगे**ति । प्रियया यः स्वसंभोगभूषणविहीनः क्षणमपि मोक्तुं न पार्यसे । **अनेनापी**ति । पश्येदं प्रत्यक्षेणेत्यर्थः । तदेव च यदेवमादृतं यत् लज्जादित्यागेनाप्येवं धार्यते । **मृजत** इत्यनेन हि प्रत्युत स्रोतस्सहस्रवाही बाष्पो भवति । इयच्च त्वं हतचेतनो

बालप्रिया

**एतदेवे**ति । गुणीभूतव्यंग्यस्य रसादिध्वनिरूपत्वं यदा सूत्रितं तदेवेत्यर्थः । **तुल्यच्छायमि**ति । पत्युरित्यादौ प्रयच्छतेत्यादौ च भावध्वनेर्वचननिषेधरूपवाच्यार्थोपस्कारकत्वस्यावगमात्तयोः तुल्यच्छायत्वम् । 'दुराराधे'ति । हे सुभग ! यत् पतितमेतदश्रु अनेन प्राणेशाजघनवसनेनापि मृजतस्तव राधा दुराराधा स्त्रीचेतः कठोरं तदुपचारैरलं, हे त्वं विरम, अनुनयेष्वेवमुदितो हरिः वः कल्याणं क्रियादित्यन्वयः । लोचने श्लोकं व्याकरिष्यन् पीठिकामारचयति—**अकारणे**त्यादि । श्लोकंगतानां पदानां व्यंग्यमर्थजातमासूत्रयति—**सुभगे**तीत्यादि । **य** इति । त्वमिति शेषः । **न पार्यस** इति । इत्येवं राधागताभिप्राय इत्यर्थः । व्यज्यत इति शेषः । एवमुत्तरत्रापि बोध्यम् । व्यंग्यान्तरमाह—**तदेव चे**ति । इदमित्यनुषज्यते । एवमादृतमित्येतत् स्फुटयति—**यदि**त्यादि । मृजत इति वर्तमानार्थकप्रत्ययेन मार्जनस्याविरामत्वोक्त्या व्यंग्यमाह-**अनेन हि प्रत्युते**त्यादि । प्रकृत्यंशव्यंग्यमाह-**इयच्चे**त्यादि । **मामि**ति । पुरःस्थितामपि मामित्यर्थः । मन्यस इत्यनेनाप्यस्य सम्ब-

शस्तु न्याय्य एवेति भावः । यत्तु वाच्यस्यापीत्यपिना रसस्य परामर्शः । अनुरणनरूपव्यङ्ग्यापेक्षया वाच्यस्य वाच्यापेक्षया च रसस्य प्राधान्यं सुसङ्घटमेवेति, तन्न; अग्रिमकारिकया पौनरुक्त्यापत्तेः ।

**कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे**
**क्रियात्कल्याणं वो हरिरनुनयेष्वेवमुदितः ॥**

लोचनम्

यन्मां विस्मृत्य तामेव कुपितां मन्यसे । अन्यथा कथमेवं कुर्याः । **पतितमिति** । गत इदानीं रोदनावकाशोऽपीत्यर्थः । यदि तूच्यते इयताप्यादरेण किमिति कोपं न मुञ्चसि, तत्किं क्रियते कठोरस्वभावं स्त्रीचेतः । **स्त्रीति** हि प्रेमाद्ययोगाद्वस्तुविशेषमात्रमेतत्; तस्य चैष स्वभावः, आत्मनि चैतत्सुकुमारहृदया योषित इति न किंचिद्वज्रसाराधिकमासां हृदयं यदेवंविधवृत्तान्तसाक्षात्कारेऽपि सहस्रधा न दलति । **उपचारै**रिति । दाक्षिण्यप्रयुक्तैः । **अनुनयेष्विति** बहुवचनेन वारं वारमस्य बहुवल्लभस्येयमेव स्थितिरिति सौभाग्यातिशय उक्तः । एवमेष व्यङ्ग्यार्थसारो वाच्यं भूषयति । तत्तु वाच्यं भूषितं सदीर्ष्याविप्रलम्भाङ्गत्वमेतीति । यस्तु त्रिष्वपि श्लोकेषु प्रतीयमानस्यैव रसाङ्गत्वं व्याचष्टे स्म । स देवं विक्रीय तद्यात्रोत्सवमकार्षीत् । एवं हि व्यङ्ग्यस्य या गुणीभूतता प्रकृता सैव समूलं त्रुटयेत् । रसादिव्यतिरिक्तस्य हि व्यङ्ग्यस्य रसाङ्गभा-

बालप्रिया

वः । पतितमिति भूतनिर्देशेन व्यंग्यमाह—**गत** इत्यादि । कठोरमित्यादिकं विवरिष्यन्नाह-**यदी**त्यादि । मुञ्चसीत्यस्यानन्तरमितीति शेषः । इत्युच्यते यदीति सम्बन्धः । तत् तर्हि । स्त्रीति पदेन व्यंग्यमाह-**प्रेमादी**ति । स्त्रीति ह्येतदिति सम्बन्धः । **एष** इति । कठोरहृदयत्वमित्यर्थः । एवं बोधनीयं प्रति व्यंग्यमुक्त्वा राधागतं व्यंग्यमाह—**आत्मनी**त्यादि । **आत्मनि चैत**दिति । वक्ष्यमाणं राधागतं व्यंग्यमित्यर्थः । **इती**ति । इत्येतदित्यर्थः । **न किञ्चि**दिति । अपरमार्थमित्यर्थः । उक्तस्य व्यंग्यजातस्य वाच्यं प्रति तस्य रसं प्रति चाङ्गभावमाह—**एवमि**त्यादि । व्याख्यानान्तरमनुवदति—**यस्त्वि**त्यादि । **प्रतीयमानस्यैवे**ति । एवकारेण प्रतीयमानोपस्कृतस्य वाच्यार्थस्य व्यवच्छेदः । **व्याचष्टे स्मे**ति । व्याख्यातुरस्यायमाशयः-यस्य हि मुख्यं प्राधान्यं तं प्रत्येव गुणीभावोऽन्याय्यः रसस्यैव च तत्प्राधान्यमिति नेदं व्याख्यानं साधीय इत्युपहासोक्त्या दर्शयति—**स देवमि**त्यादि । यथा कश्चिन्निर्धनतया देवं विक्रीय धनं सम्पाद्य तद्यात्रोत्सवं कर्तुमारभते, तथा गुणीभूतव्यंग्योपपादनाय प्रवृत्तस्तद्विरोधिनं कंचित्प्रकारमाश्रित इति महत्तरमस्य कौशलमित्युपहासः । एतदेव स्फुटयति—**एवं ही**त्यादि । ननु व्यंग्यस्य रसं प्रति गुणीभावोऽङ्गीकृत एवेति कथं स त्रुटयेदित्यत आह—**रसादी**त्यादि । **रसादिव्यतिरिक्तस्य व्यंग्यस्य** वस्त्वलङ्कारात्मकस्य । **रसाङ्गे**त्यादि । व्यंग्यैकस्वभावस्य रसादेस्तावत्स्वत एव प्राधान्यं, तद्व्यतिरिक्तस्य तु तदङ्गत्वेनेत्यतस्तस्य तदङ्गत्वे प्राधान्यमेवाप-

एवं स्थिते च 'न्यक्कारो ह्ययमेव' इत्यादिश्लोकनिर्दिष्टानां पदानां व्यङ्ग्यविशिष्टवाच्यप्रतिपादनेऽप्येतद्वाक्यार्थीभूतरसापेक्षया व्यञ्जकत्वमुक्तम् । न तेषां पदानामर्थान्तरसंक्रमितवाच्यध्वनिभ्रमो विधातव्यः, विवक्षितवाच्यत्वात्तेषाम् । तेषु हि व्यङ्ग्यविशिष्टत्वं वाच्यस्य प्रतीयते न तु व्यङ्ग्यरूपपरिणतत्वम् । तस्माद्वाक्यं तत्र ध्वनिः, पदानि तु गुणीभूतव्यङ्ग्यानि । न च केवलं गुणीभूतव्यङ्ग्यान्येव पदान्यलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यञ्जकानि यावदर्थान्तरसंक्रमितवाच्यानि ध्वनिप्रभेदरूपाण्यपि । यथात्रैव श्लोके रावण इत्यस्य प्रभेदान्तररूपव्यञ्जकत्वम् । यत्र तु वाक्ये रसादितात्पर्यं नास्ति गुणीभूतव्यङ्ग्यैः पदैरुद्भासितेऽपि तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः । यथा—

राजानमपि सेवन्ते विषमप्युपयुञ्जते ।
रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः ॥

लोचनम्

वयोगित्वमेव प्राधान्यं नान्यत्किञ्चिदित्यलं पूर्ववंश्यैः सह विवादेन ।

**एवं स्थित** इति । अनन्तरोक्तेन प्रकारेण ध्वनिगुणीभूतव्यङ्ग्ययोर्विभागे स्थिते सतीत्यर्थः । कारिकागतमपिशब्दं व्याख्यातुमाह—**न** चेति । एष च श्लोकः पूर्वमेव व्याख्यात इति न पुनर्लिख्यते । **यत्र** त्विति । यद्यपि चात्र विषयनिर्वेदात्मकशान्तरसप्रतीतिरस्ति, तथापि चमत्कारोऽयं वाच्यनिष्ठ एव । व्यङ्ग्यं त्वसम्भाव्यत्वविप-

बालप्रिया

तति, न तु गुणत्वमित्यर्थः । अतो वाच्यं प्रत्येव गुणीभावो वक्तव्य इति भावः । वृत्तौ–'पदानामि'त्यादि । व्यंग्यार्थाः पूर्वमुक्ताः 'वाक्यार्थीभूतरसे'ति । रौद्ररसेत्यर्थः । प्रसङ्गादाह—'न तेषामि'त्यादि ।

'न च केवल'मित्यादिग्रन्थस्योत्सूत्रत्वशङ्कां परिहर्तुमाह लोचने—**कारिके**त्यादि । **अपिशब्दं** गुणीभूतव्यंग्योऽपीत्यपिशब्दम् । **व्याख्यातुमि**ति । अपिशब्दोऽनुक्तसमुच्चायक इति भावः । ननु राजानमित्यादौ कथं रसादितात्पर्याभावः । राजसेवादिव्यवहारोपलक्षितस्य विषोपभोगतुल्यस्य सर्वस्यापि लौकिकव्यवहारस्य विषयवैरस्यापादकतया शान्तरसव्यंजकत्वादिति शङ्कामनूद्य परिहरति—**यद्यपी**त्यादि । **अयमि**ति । सहृदयैरनुभूयमान इत्यर्थः । **वाच्यार्थनिष्ठ** इति । यतो राजादेरपि सेवादिकं कुर्वन्ति, ततो मानवाः कुशलाः खल्विति वाच्यार्थप्रयुक्त इत्यर्थः ।

इत्यादौ। वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्यविवेके परः प्रयत्नो विधातव्यः, येन ध्वनिगुणीभूतव्यङ्ग्ययोरलङ्काराणां चासङ्कीर्णो विषयः सुज्ञातो भवति। अन्यथा तु प्रसिद्धालङ्कारविषय एव व्यामोहः प्रव-

लोचनम्

रीतकारित्वादि तस्यैवानुयायि, तच्चापिशब्दाभ्यामुभयतो योजिताभ्यां चशब्देन स्थानत्रययोजितेन खलुशब्देन चोभयतो योजितेन मानवशब्देन स्पृष्टमेवेति गुणीभूतम्। विवेकदर्शना चेयं न निरुपयोगीति दर्शयति—**वाच्यव्यङ्ग्ययोरिति**। **अलङ्काराणां चेति**। यत्र व्यङ्ग्यं नास्त्येव तत्र तेषां शुद्धानां प्राधान्यम्। **अन्यथा त्विति**। यदि प्रयत्नवता न भूयत इत्यर्थः।

व्यङ्ग्यप्रकारस्तु यो मया पूर्वमुत्प्रेक्षितस्तस्यासंदिग्धमेव व्यामोहस्थानत्वमित्येव-

बालप्रिया

एवकारेण शान्तरसनिष्ठत्वव्यवच्छेदः। ननु तथाऽप्यत्र राजसेवादेरसम्भाव्यत्वादिकं व्यज्यते, तत एव च चमत्कार इत्यत आह—**व्यंग्यमित्वत्यादि**। **विपरीतेति**। उद्दिष्टफलविपरीतफलेत्यर्थः। **तस्यैवेति**। वाच्यस्यैवेत्यर्थः। **अनुयायीति**। अङ्गमित्यर्थः। तदेव हेतुप्रदर्शनेनोपपादयति—**तच्चेत्यादि**। तच्च स्पृष्टमेवेति सम्बन्धः। **उभयतो योजिताभ्यामिति**। राजानमपि सेवन्ते अपि विषमपि उपभुञ्जते अपि इति कर्मणा क्रियया च योजिताभ्यामित्यर्थः। राजा तावत्कर्मभूतो यो दुरुपसर्पवस्तुषु मूर्धाभिषिक्तः। सेवाक्रियाया क्षणे क्षणे सुलभापायतया समाहितमतिभिरपि दुरनुष्ठेया। एवमन्यत्रापि बोध्यम्। **स्थानत्रययोजितेन चशब्देनेति**। एको द्योतको बहुष्वन्त्य इति न्यायाद्रमन्ते चेति चकारस्य समुच्चयार्थकस्य क्रियात्रयेण योजनेत्यर्थः। **उभयतो योजितेन खलुशब्देनेति**। खलुशब्दः कुशलशब्देन मानवशब्देन च योजनीय इत्यर्थः। मानवशब्देन चेति योजना। **स्पृष्टमिति**। किंचित्प्रकाशितमित्यर्थः। **इतीति** हेतौ। अलङ्काराणामसङ्कीर्णो विषयः क इत्यत्राह—**यत्रेत्यादि**। **तेषामिति**। अलङ्काराणामित्यर्थः।

प्रसिद्धालङ्कारविषय एवेत्येवकारेण किमुत व्यंग्यविषय इत्यर्थो दर्शित इत्याह—**व्यंग्यप्रकारस्त्वित्यादि**। **उत्प्रेक्षितः** उत्प्रेक्ष्य दर्शितः। **व्यमोहस्थानत्वं** व्यमोहविषयत्वम्। उदाहृतश्लोकगतानां पदानां व्यंग्यं दर्शयति—**द्रविणेत्यादि**। **द्रविणशब्देनेति**। लावण्ये द्रविणत्वारोपेणेत्यर्थः। **उक्तमिति**। लावण्यस्य व्यञ्जितमित्यर्थः। विदित इत्यनुक्त्वा गणित इत्युक्त्या व्यंग्यमाह—**चिरेणेत्यादि**। **तत्रेति**। तथाविधे व्यय इत्यर्थः। **अनन्तेति**। अनन्तेनानवधिना कालेन यन्निर्माणं तन्वीत-

र्तते । यथा—

> लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
> स्वच्छन्दस्य सुखं जनस्य वसतः चिन्तानलो दीपितः ।
> एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता
> कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥

इत्यत्र व्याजस्तुतिरलङ्कार इति व्याख्यायि केनचित्तन्न चतुरस्रम्; यतोऽस्याभिधेयस्यैतदलङ्कारस्वरूपमात्रपर्यवसायित्वे न सुश्लिष्टता । यतो न तावदयं रागिणः कस्यचिद्विकल्पः । तस्य 'एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता' इत्येवंविधोक्त्यनुपपत्तेः । नापि नीरागस्य;

## लोचनम्

काराभिप्रायः। द्रविणशब्देन सर्वस्वप्रायत्वमनेकस्वकृत्योपगित्वमुक्तम् । **गणित** इति । चिरेण हि यो व्ययः सम्पद्यते न तु विद्युदिव झटिति तत्रावश्यं गणनया भवितव्यम् । अनन्तकालनिर्माणकारिणोऽपि तु विधेर्न विवेकलेशोऽप्युदभूदिति परमस्याप्रेक्षावत्त्वम् । अत एवाह—**क्लेशो महानिति** । **स्वच्छन्दस्येति** । विश्रृङ्खलस्येत्यर्थः । **एषापीति** । यत्स्वयं निर्मीयते तदेव च निहन्यत इति महद्वैशसमपिशब्देन चकारेण चोक्तम् । **कोऽर्थ** इति । न स्वात्मनो न लोकस्य न निर्मितस्येत्यर्थः । **तस्येति** । रागिणो हि वराकी हतेति कृपणतालिङ्गितममङ्गलोपहतं चानुचितं वचनम् । तुल्यरमणा-

## बालप्रिया

तुनिर्माणं तत्कारिणोऽपीत्यर्थः । **नोदभूदिति** । तदगणनयेति भावः । **अस्य** विधेः । **अप्रेक्षावत्त्वम्** अविमृश्यकारित्वम् । उक्तमित्यनुषङ्गः । निर्माणझाटित्याभावविवक्षायां गमकमाह—**अतएवे**त्यादि । पादत्रयोक्तानां त्रयाणामेकेन योग्यो न कश्चिदर्थो निरूप्यमाणो दृश्यत इत्याह—**न स्वात्मन** इत्यादि । अर्थ इत्यनुषज्यते । वृत्तौ 'व्याजस्तुतिरलङ्कार' इति । निन्दाद्वारा नायिकायाः स्तुतेः प्रतीतेरिति भावः । 'न सुश्लिष्टते'ति । सुष्ठु सङ्गतत्वं न भवतीत्यर्थः । अत्र हेतुमाह—'यत' इत्यादि । 'अयमि'ति । श्लोकोक्त इत्यर्थः । 'विकल्पः' विविधकल्पनाविषयः । नेत्यत्र हेतुमाह—'तस्ये'त्यादि । कथं रागिणस्तथाविधोक्त्यनुपपत्तिरित्यत उपपादयति लोचने—**रागिणो ह्री**त्यादि । वराकीति कृपणतालिङ्गितं हतेत्यमङ्गलोपहतं च वचनं रागिणो ह्यनुचितमिति सम्बन्धः । रागी हि तन्निमग्नचित्तवृत्तितया तामेव बहुमन्यमानस्तद्रूपसुषमासुधामास्वादयन् कथङ्कारं तस्याः शोच्यत्वममङ्गलत्वं च पर्यालोचयेदिति भावः । **तुल्यरमणाभावादि**तीति । रागिणो वचनमित्यनुषङ्गः । **स्वात्मनी**ति । स्वात्मनि

लोचनम्

भावादिति स्वात्मन्यत्यन्तमनुचितम्। आत्मन्यपि तद्रूपासम्भावनायां रागितायां च पशुप्रायत्वं स्यात्।

ननु च रागिणोऽपि कुतश्चित्कारणात्परिगृहीतकतिपयकालव्रतस्य वा रावणप्रायस्य वा सीतादिविषये दुष्यन्तप्रायस्य वाऽनिर्ज्ञातजातिविशेषे शकुन्तलादौ किमियं स्वसौभाग्याभिमानगर्भा तत्स्तुतिगर्भा चोक्तिर्न भवति। वीतरागस्य वा अनादिकालाभ्यस्तरागवासनावासिततया मध्यस्थत्वेनापि तां वस्तुतस्तथा पश्यतो नेयमुक्तिः न संभाव्या। न हि वीतरागो विपर्यस्तान् भावान् पश्यति। न ह्यस्य वीणाक्वणितं काकरटितकल्पं प्रतिभाति। तस्मात्प्रस्तुतानुसारेणोभयस्यापीयमुक्तिरुपपद्यते। अप्रस्तुतप्रशंसायामपि ह्यप्रस्तुतः सम्भवन्नेवार्थो वक्तव्यः, न हि तेजसीत्थमप्रस्तुतप्रशंसा सम्भवति—अहो

बालप्रिया

सति, यद्वा-स्वात्मविषयकमित्यर्थः। **अत्यन्तमनुचितमिति**। काममस्तु स्वात्मव्यतिरिक्तजनापेक्षया तुल्यरमणाभावस्य सम्भावना स्वात्मापेक्षयाऽपि तत्सम्भावना न युक्तेत्यतस्तद्वचनमत्यन्तानुचितमित्यर्थः। कुतोऽनौचित्यमित्यत आह—**आत्मन्यपीत्यादि**। **तद्रूपासम्भावनायामिति**। तदनुरूपसौन्दर्यस्य सम्भावनाया अभावे सतीत्यर्थः। तुल्यरमणत्वसम्भावनाया अभावे सतीत्यर्थो वा। **रागितायां** तद्रागित्वे सति।

श्लोकस्यास्य प्रबन्धान्तर्गतत्वे यथा प्रकरणानुगुणार्थपरिकल्पनं, तथा प्रदर्श्य न चेत्यादिग्रन्थमवतारयति—**ननु चेत्यादि**। रागिणोऽपीयमुक्तिः किन्न भवतीति सम्बन्धः, भवत्येवेत्यर्थः। ननु तदभाव उक्त एवेत्यत आह—**कुतश्चिदित्यादि**। **स्वसौभाग्याभिमानगर्भेति**। तुल्यरमणाभावादिति तु स्वव्यतिरिक्तजनापेक्षयेति भावः। रागिजनोक्तित्वमुपपाद्य वीतरागोक्तित्वमप्युपपादयति—**वीतेत्यादि**। वीतरागस्य वा इयमुक्तिर्न सम्भाव्येति सम्बन्धः, सम्भाव्यैवेत्यर्थः। अत्र हेतुमाह—**अनादीत्यादि**। **तथा पश्यतः** निरतिशयलावण्यादिगुणशालितया पश्यतः। तथा दर्शनाच्च पूर्वरागवासनावशात् तथाविधोक्तिः सम्भवत्येवेत्यर्थः। वस्तुतस्तथा पश्यत इत्येतदुपपादयति—**न हीत्यादि**। निगमयति—**तस्मादिति**। **उभयस्य** रागिणो वीतरागस्य च। उक्तमेव द्रढयितुमाह—**अप्रस्तुतेत्यादि**। सम्भवन्नेवाप्रस्तुतोऽर्थो वक्तव्य इति सम्बन्धः। व्यतिरेकप्रदर्शनेनोक्तमेव साधयति—**न हीत्यादि**। **तेजसि** प्रस्तुततेजोविषये। विशेषमाह—**सेत्यादि**। **सा** अप्रस्तुतप्रशंसा। **प्रस्तुतपरतया** प्रस्तुतार्थतात्पर्यकतया। **इतीति** हेतौ। **अत्रेति**। लावण्येत्यादावित्यर्थः। **नासम्भव इति**। अभिधेयस्येति शेषः। किन्तूक्तरीत्या सम्भवोऽस्तीति भावः। **वृत्तौ**—'अप्रस्तुतप्रशंसे'ति। सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसेत्यर्थः। 'गुणीभूतात्मने'ति। उपायभूतेनेत्यर्थः। अत्र व्यंग्योपस्कृतस्य वाच्यार्थस्यैव प्राधान्यमित्यतोऽप्रस्तुतप्र-

तस्यैवंविधविकल्पपरिहारैकव्यापारत्वात् । न चायं श्लोकः क्वचित्प्रबन्ध इति श्रूयते, येन तत्प्रकरणानुगतार्थतास्य परिकल्प्यते । तस्मादप्रस्तुतप्रशंसेयम् । यस्मादनेन वाक्येन गुणीभूतात्मना निस्सामान्यगुणावलोपाध्मातस्य निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य विशेषज्ञमात्मनो न कञ्चिदेवापरं पश्यतः परिदेवितमेतदिति प्रकाश्यते । तथा चायं धर्मकीर्तेः श्लोक इति प्रसिद्धिः। सम्भाव्यते च तस्यैव। यस्मात्—

अनध्यवसितावगाहनमनल्पधीशक्तिना-
प्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि ।

लोचनम्

धिक्चे काष्ण्यमिति सा परं प्रस्तुतपरतयेति नात्रासम्भव इत्याशङ्क्याह—**न चेति** । निस्सामान्येति निजमहिमेति विशेषज्ञमिति परिदेवितमित्येतैश्चतुर्भिर्वाक्यखण्डैः क्रमेण पादचतुष्टयस्य तात्पर्यं व्याख्यातम् । नन्वत्रापि किं प्रमाणमित्याशङ्क्याह—**तथा चेति** । ननु किमियतेत्याशङ्क्य तदाशयेन निर्विवादतदीयश्लोकार्पितेनास्याशयं संवादयति—**सम्भाव्यत इति** । अवगाहनमध्यवसितमपि न यत्र आस्तां तस्य सम्पा-

बालप्रिया

शंसालङ्कार इति बोध्यम् । लोचने—**क्रमेणेति** । निस्सामान्यगुणेत्यनेन लावण्येत्याद्यपादतात्पर्यार्थ उक्तः, एवंवदतो श्लोकसामान्यगुणगणपूर्णत्वादहो! अहमिति महीयानवलेपः परिस्फुटं गम्यत इति भावः । **अत्रापीति** । अप्रस्तुतप्रशंसापक्षेऽपीत्यर्थः । वृत्तौ–'तथाचे'त्यादि । चकारो हेतौ । यतोऽयं धर्मकीर्तेः श्लोक इति प्रसिद्धिरतस्तथापूर्वोक्तार्थक इत्यर्थः । विनिश्चयग्रन्थान्ते स्थितोऽयं श्लोक इति श्रूयते । लोचने—किमित्यादि । इयतेति । धर्मकीर्तेः श्लोक इत्येतावतेत्यर्थः । **तदाशयेन** धर्मकीर्तेराशयेन । **निर्विवादेति** । प्रकृतोदाहरणे हि विवादो व्याजस्तुत्यप्रस्तुतप्रशंसाविषयो न वक्ष्यमाणतदीयश्लोक इति भावः । **अस्येति** । लावण्येत्यादिप्रकृतश्लोकस्येत्यर्थः । संवादयतीति । अयं भावः—यो यस्याशयोऽन्यत्र सुस्पष्टप्रतिपत्तिकस्स एव सम्भवन् अन्यत्रापरिस्फुटप्रतीतिके विषयेऽप्यध्यवसातुमुचित इत्यतो वाक्यशेषन्यायानुसारेणात्राप्रस्तुतप्रशंसावधारणसिद्धिरिति । वृत्तौ—'सम्भाव्यते च तस्यैवे'ति । श्लोकोऽयं धर्मकीर्तिसम्बन्धित्वेनैवानुमीयते चेत्यर्थः । अत्र हेतुमाह—'यस्मादि'त्यादि । 'अनध्यवसिते'ति । अनध्यवसितं सुधीभिर्न सम्पिपादयिषितमवगाहनमवबोधः, पयःपक्षे यदा दानायान्तः प्रवेशो यस्य तत्। अनल्पा धीशक्तिर्बुद्धिसामर्थ्यं यस्य तेनाप्यन्येन केनचित् कर्त्रा । अधिकैरभियोगैः प्रयत्नैरपि । अदृष्टानिपरमार्थतत्त्वानि यत्र । यद्वतान्युत्कृष्टार्थतत्त्वान्यदृष्टपूर्वाणीत्यर्थः। पयःपक्षे त्वेतल्लोचने विवृतम्—

मतं मम जगत्यलब्धसदृशप्रतिग्राहकं
प्रयास्यति पयोनिधेः पय इव स्वदेहे जराम् ॥

इत्यनेनापि श्लोकेनैवंविधोऽभिप्रायः प्रकाशित एव ।

लोचनम्

दनम् । परमं यदर्थतत्त्वं कौस्तुभादिभ्योऽप्युत्तमम्, अलब्धं प्रयत्नपरीक्षितमपि न प्राप्तं सदृशं यस्य तथाभूतं प्रतिग्राहमेकैको ग्राहो जलचरः प्राणी ऐरावतोच्चैःश्रवोधन्वन्तरिप्रायो यत्र तदलब्धसदृशप्रतिग्राहकम् ।

**एवंविध** इति । परिदेवितविषय इत्यर्थः । इयति चार्थे अप्रस्तुतप्रशंसोपमालक्षणमलङ्कारद्वयम् । अनन्तरं तु स्वात्मनि विस्मयधामतयाद्भुते विश्रान्तिः । परस्य

बालप्रिया

**अलब्धे**त्यादि च । एवंभूतं मम मतं मतप्रतिपादको ग्रन्थः । अलब्धः सदृशः स्वतुल्यः प्रतिग्राहकोऽन्यान् प्रतिबोधयिता स्वयं बो । च यस्य तथाविधं सत् । स्वदेहे जरां प्रयास्यति जीर्णं भविष्यति । अनध्यवसितमित्यनेन कैमुत्येन लब्धमर्थमाह लोचने—**आस्तामि**त्यादि । **तस्ये**ति । अवगाहनस्येत्यर्थः । परममित्यस्य विवरणम्—**कौस्तुभादिभ्योऽप्युत्तमं यदर्थतत्त्व**मिति । अदृष्टं परमं यस्मात्तथाविधमर्थतत्त्वं कौस्तुभादिं यत्र तत् । यद्गतार्थतत्त्वादुत्तममन्यत्रादृष्टमित्यर्थ इति भावः । लाभनिषेधेन तदुपायान्वेषणं सिध्यतीत्याशयेनाह—**प्रयत्ने**त्यादि । **सदृश**मिति । वस्त्विति शेषः । **तथाभूतं** प्रतिग्राहमिति । प्रतिग्राहमिति वीप्सायामव्ययीभावः । 'अव्ययीभावश्चे'ति नपुंसकत्वम् । प्रतीत्यस्य विवरणम्—**एकैक** इति । ग्राहशब्दश्चात्र न मुख्यार्थकः, किंतु जलचरप्राणित्वगुणयोगेनार्थान्तरवर्तीत्याह—**जलचर** इत्यादि । यद्गतैरावणादिजलचरसदृशं वस्त्वन्यत्र लब्धमित्यर्थः ।

**इयति चार्थ** इति । उक्ते श्लोकद्वयवाच्यार्थे इत्यर्थः । **अप्रस्तुते**त्यादि । लावण्येत्यादावप्रस्तुतप्रशंसा अनध्यवसितेत्यादावुपमेति तदात्मकालङ्कारद्वयमित्यर्थः । **अनन्तर**न्त्विति । उक्तालङ्कारसुन्दरवाच्यार्थप्रतीत्युत्तरकालमित्यर्थः । **स्वात्मनी**ति । वक्ता धर्मकीर्तिरत्र स्वात्मशब्दार्थः । **विस्मये**ति । विस्मयविषयत्वेनेत्यर्थः । लावण्येत्यादौ स्वस्य लोकगुणगणपूर्णत्वप्रतिपादनेनानध्यवसितेत्यादौ तादृग्ग्रन्थप्रवर्तकत्वप्रतिपादनेन चात्मनो विश्वोत्तरत्वप्रत्यायनात्तत्पद्यश्रोतुरात्मविषयकविस्मयजननादिति भावः। यद्वा—**विस्मयधामतये**ति । विस्मयाश्रयत्वेनेत्यर्थः । तत्तच्छलोकेन प्रतिपादितायास्तथाविधस्य स्वस्य स्वमतस्य च तथाविधशोच्यावस्थायाः स्वप्नेऽप्यसम्भाव्यायाः सम्भवात् स्वस्य विस्मयः । **अद्भुते विश्रान्ति**रिति । सहृदयानां तद्विस्मयचर्वणयेति भावः । अनध्यवसितेत्यादिश्लोकस्य वीररसेऽपि विश्रान्तिमाह—**परस्य** चेत्यादि ।

अप्रस्तुतप्रशंसायां च यद्वाच्यं तस्य कदाचिद्विवक्षितत्वं, कदाचिदविवक्षितत्वं, कदाचिद्विवक्षिताविवक्षितत्वमिति त्रयी बन्धच्छाया । तत्र विवक्षितत्वं यथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

यथा वा ममैव—

अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता
भवत्येषां यस्य क्षणमुपगतानां विषयताम् ।

लोचनम्

च श्रोतृजनस्यात्यादरास्पदतया प्रयत्नग्राह्यतया चोत्साहजननेनैवंभूतमत्यन्तोपादेयं सत्कतिपयसमुचितजनानुग्राहकं कृतमिति स्वात्मनि कुशलकारिताप्रदर्शनया धर्मवीरस्पर्शनेन वीररसे विश्रान्तिरिति मन्तव्यम् । अन्यथा परिदेवितमात्रेण किं कृतं स्यात् । अप्रेक्षापूर्वकारित्वमात्मन्यावेदितं चेत्किं ततः स्वार्थपरार्थासम्भवादित्यलं बहुना ।

ननु यथास्थितस्यार्थस्यासङ्गतौ भवत्वप्रस्तुतप्रशंसा, इह तु सङ्गतिरस्त्येवेत्याशङ्क्य सङ्गतावपि भवत्येवैषेति दर्शयितुमुपक्रमते—अप्रस्तुतेति । नन्विति । यैरिदं जगद्भूषितमित्यर्थः । यस्य चक्षुषो विषयतां क्षणं गतानामेषां सफलता भवति तदिदं

बालप्रिया

श्रोतृजनस्योत्साहजनने हेतुद्वयम्-अत्यादरेत्यादि । मतस्येति शेषः । उत्साहेति । मतग्रहविषयकोत्साहेत्यर्थः । एवंभूतमित्यादि । मतमिति शेषः । कुशलकारितेति । सम्मतनिर्माणरूपसत्कर्मकारितेत्यर्थः । अन्यथेति । रसविश्रान्त्यभाव इत्यर्थः । परिदेवितमात्रेणेति । मात्रशब्देन पूर्वोक्तविश्रान्तिस्थलपर्यवसानव्यवच्छेदः । नन्वप्रेक्षापूर्वकत्वमात्मनोऽनेन दर्शितं स्वविषयपरिदेवितस्य सर्वत्र तदावेदकत्वादिति न किंचित्करत्वविरह इत्याशंक्य परिहरति—अप्रेक्षेत्यादि ।

नन्वप्रस्तुतप्रशंसायामित्यादिग्रन्थस्य का संगतिरित्यतः प्रासङ्गिकी सेति दर्शयन्नवतारयति—नन्वित्यादि । यथास्थितस्यार्थस्येति । यथाश्रुतवाच्यार्थस्येत्यर्थः । असङ्गतौ असम्भवे । इह त्विति । लावण्येत्यादौ त्वित्यर्थः । सङ्गतिरिति । वाच्यार्थस्य सम्भव इत्यर्थः । स च पूर्वोक्तरीत्या बोध्यः । वृत्तौ 'अप्रस्तुतप्रशंसाया'मिति ।

निरालोके लोके कथमिदमहो चक्षुरधुना
समं जातं सर्वैर्न सममथवान्यैरवयवैः ॥

अनयोर्हि द्वयोः श्लोकयोरिक्षुचक्षुषी विवक्षितस्वरूपे एव न च प्रस्तुते। महागुणस्याविषयपतितत्वादप्राप्तपरभागस्य[1] कस्यचित्स्वरूपमुपवर्णयितुं द्वयोरपि श्लोकयोस्तात्पर्येण प्रस्तुतत्वात्। अविवक्षितत्वं यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि, साधु विदितं कस्मादिदं कथ्यते।

लोचनम्

चक्षुरिति सम्बन्धः। आलोको विवेकोऽपि। **न सममिति**। हस्तौ हि परस्पर्शादानादावप्युपयोगी। **अवयवैरिति**। अतितुच्छप्रायैरित्यर्थः। अप्राप्तः पर उत्कृष्टो भागोऽर्थलाभात्मकः स्वरूपप्रथनलक्षणो वा येन तस्य। कथयामीत्यादिप्रत्युक्तिः। अनेन पदेनेदमाह—अकथनीयमेतत् श्रूयमाणं हि निर्वेदाय भवति, तथापि तु यदि निर्बन्धस्तत्कथयामि **वैराग्यादिति**। काक्वा दैवहतकमित्यादिना च सूचितं ते वैराग्यमिति

बालप्रिया

अप्रस्तुतार्थवर्णनस्थल इत्यर्थः। 'विवक्षितत्वमि'ति। तस्येत्यनुषङ्गः। 'परार्थ' इति। पीडा नामाक्षौ निष्पीडनं सत्पुरुषे तु क्लेशः। एवं भङ्गो ग्रन्थिस्फोटनं धनाभावनिमित्तको विप्लवश्च। माधुर्यं रसविशेषोऽनुल्बणत्वञ्च। विकारश्शर्करादिश्चित्तविकारश्च। न हि सत्पुरुषाः क्रोधाद्यवस्थायामप्यसेव्याः। अक्षेत्रमूषरस्थानं निर्विवेकप्रभ्वादिस्थानं च। 'किमि'त्यादि। मरुभुव एव दोष इति भावः। 'अमी'ति। ये इत्यस्य प्रतिनिर्देशः- 'एषामि'ति 'यस्येत्यस्येदमि'ति च। ननु सुभगरूपा इत्येतद्विवृणोति लोचने—**यैरि**त्यादि। विवेकोऽपीत्यपिशब्देन प्रकाशरूपार्थस्य सङ्ग्रहः साम्याभावे विवक्षितं हेतुं दर्शयति-**हस्तौ हो**त्यादि। इदमुपलक्षणं, चरणादिकं हि गमनाद्युपयोगि। व्यंग्यार्थमाह-**अतितुच्छे**ति। भागशब्देन धनादिलाभः कीर्तिप्रसरलाभो वा ग्राह्यो द्वयोरपि भजनीयत्वेन भागशब्दवाच्यत्वादित्याह-**अर्थलाभ** इत्यादि। **अनेने**ति। कथयामीत्यनेनेत्यर्थः। **आह** व्यञ्जयति। अकथनीयत्वे हेतुमाह-**श्रूयमाणमि**त्यादि। श्रूयमाणं न तु श्रवणोत्तरमेवेत्यतिशयितनिर्वेदहेतुत्वं श्रवणस्य द्योतयितुं शतृप्रत्ययेन निर्देशः। वैराग्यादिव वक्षीत्यत्रेवशब्दः प्रतीतौ,त्वं वैराग्याद्वदसीति ज्ञायत इत्यर्थः। मदीयं वैराग्यं केन ज्ञातमित्यत आह-**काक्वे**त्यादि। **काक्वा** शोकसूचकध्वनिविकार-

१. अप्राप्तपरभागस्य, अलब्धोत्कर्षस्य। 'परभागो गुणोत्कर्षे' इति यादवः। परभागपदस्य योगार्थो लोचने द्रष्टव्यः।

वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरिणी मार्गस्थितस्यापि मे ॥

न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती सम्भवत इत्यविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवर्तिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयते ।

विवक्षितत्वाविवक्षितत्वं यथा—

उप्पहजाआए असोहिणीए फलकुसुमपत्तरहिआए ।
बेरीए वइं देन्तो पामर हो ओहसिज्जिहसि ॥

लोचनम्

यावत् । साधुविदितमित्युत्तरम् । कस्मादिति वैराग्ये हेतुप्रश्नः । इदं कथ्यत इत्यादिसनिर्वेदस्मरणोपक्रमं कथंकथमपि निरूपणीयतयोत्तरम्। वामेनेति । अनुचितेन कुलादिनोपलक्षित इत्यर्थः । वट इति । च्छायामात्रकरणादेव फलदानादिशून्यादुद्धुरकन्धर इत्यर्थः । छायापीति । शाखोटको[1] हि स्मशानाग्निज्वालालीढलतापल्लवादिस्तरुविशेषः ।

अत्राविवक्षायां हेतुमाह—न हीति । समृद्धो योऽसत्पुरुषः । 'समृद्धसत्पुरुष'

बालप्रिया

विशेषेण । इदं कथ्यत इति कथनप्रतिज्ञाभिप्रायमाह—सनिर्वेदेत्यादि। स्मृतिविषयवस्तुनो निर्वेदप्रदत्वात्स्मरणसहभावी निर्वेद इति सनिर्वेदत्वं स्मरणस्य। निरूपणीयतयेति निरूपणमुचितवचनपर्यालोचनम्। उत्तरमिति । इदं कथ्यत इत्यादीत्यस्यानेन सम्बन्धः । वामेनेत्येतत् प्रस्तुतार्थे योजयति—अनुचितेनेत्यादि । वटशब्देनार्थशक्तिबलेन गम्यमर्थमाह—छायेत्यादि । शून्यादिति । करणादित्यस्य विशेषणम् ।

अत्रेति । कस्त्वमित्याद्युदाहरण इत्यर्थः । वृत्तौ—'उत्पथे'ति । हे पामर तथाभूताया बदर्याः वृतिं ददात्त्वं जनैरपहसिष्यस इत्यन्वयः । बदरी वृक्षविशेषः । "प्राचीनं प्रान्ततो वृति"रित्यमरः । सम्भवीत्यस्यानन्तरं न चासम्भवीति च क्वचित्

१. शाखोटको भूतावासवृक्ष इति नागोजिभट्टप्रभृतयः । सिहोरेति उत्तरभारते प्रसिद्धः क्षुद्रवृक्षस्तुच्छच्छाय इति वैद्यविद्याविदः । शाखोटः पीतफलको भूतावासः खरच्छदः । शाखोटोरक्तपित्तार्शोवातश्लेष्मातिसारच्छित् ॥ इति निघण्टुश्च । भट्टोक्तिस्तु ग्रामिका भूतावाससा कलिद्रुमेऽपि प्रसिद्धेः ।

अत्र हि वाच्यार्थो नात्यन्तं सम्भवी नाचसम्भवी । तस्माद्वाच्य-व्यङ्ग्ययोः प्राधान्याप्राधान्ये यत्नतो निरूपणीये ।

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
काव्ये उभे ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥ ४१ ॥
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥ ४२ ॥

## लोचनम्

इति पाठे समृद्धेन ऋद्धिमात्रेण सत्पुरुषो न तु गुणादिनेति व्याख्येयम् । **नात्यन्त-मिति** । वाच्यभावनियमो नास्ति नास्तीति न शक्यं वक्तुं, व्यङ्ग्यस्यापि भावादिति तात्पर्यम् । तथा हि उत्पथजाताया इति न तथाकुलोद्भूतायाः । अशोभनाया इति लाव-ण्यरहितायाः । फलकुसुमपत्ररहिताया इत्येवम्भूतापि काचित्पुत्रिणी वा भ्रात्रादिपक्षप-रिपूर्णतया सम्बन्धिवर्गपोषिता वा परिरक्ष्यते । बदर्या वृत्तिं ददत्पामर भोः, हसिष्यसे सर्वलोकैरिति भावः । एवमप्रस्तुतप्रशंसां प्रसङ्गतो निरूप्य प्रकृतमेव यन्निरूपणीयं तदुप संहरति—**तस्मादिति** । अप्रस्तुतप्रशंसायामपि लावण्येत्यत्र श्लोके यस्माद्व्यामोहो लोकस्य दृष्टस्ततो हेतोरित्यर्थः ॥ ४० ॥

एवं व्यङ्ग्यस्वरूपं निरूप्य सर्वथा यत्तच्छून्यं तत्र का वार्तेति निरूपयितुमाह—**प्रधानेत्यादिना** । कारिकाद्वयेन । **शब्दचित्रमिति** । यमकचक्रबन्धादिचित्रतया

## बालप्रिया

ग्रन्थे पाठः । वाच्यार्थ इत्यादिग्रन्थं तात्पर्यतो विवृणोति लोचने—**वाच्यभावनियमो नास्तीति** । वाच्यार्थस्य सम्भवनियमो नास्तीत्यर्थः । **नास्तीति न शक्यं वक्तु-मिति** । वाच्यार्थो न सम्भवतीति वक्तुं च न शक्यमित्यर्थः । **भावात्** सत्त्वात् । व्यंग्यमर्थमाह—**न तथेत्यादि** । फलेत्यादेः **पुत्रसहोदरादिरहिताया** इति । वृतिमित्यस्य रक्षामिति च व्यंग्यमर्थमभिसन्धायाह—**एवंभूताऽपीत्यादि** । **एवं भूताऽपि** अकुलीना लावण्यादिगुणरहिता च भवन्त्यपि। **परिरक्ष्यत** इति । जनेनेति शेषः । इयं तु पुत्रादिरहिता च अतोऽस्या रक्षां कुर्वंस्त्वं परिहासास्पदं भविष्यसी-त्यर्थः । छायां दर्शयन्नाह—**बदर्या** इत्यादि । तस्मादित्यनेन विवक्षितं हेतुं विवृणो-ति—**अप्रस्तुतप्रशंसायामपीत्यादि** ॥ ४० ॥

पूर्वोत्तरग्रन्थयोः सङ्गतिं दर्शयन्नुत्तरग्रन्थमवतारयति—**एवमित्यादि** । **तच्छू-न्यमिति** । व्यंग्यशून्यमित्यर्थः । **का वार्तेति** । को व्यवहार इत्यर्थः । कारिकाद्व-येनाहेत्यन्वयः । विभागप्रदर्शनमात्रेण सिद्धे शब्दचित्रं वाच्यचित्रमिति समशीर्षि-

व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिसंज्ञितकाव्यप्रकारः गुणभावे तु गुणीभूतव्यङ्ग्यता। ततोऽन्यद्रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम्। न तन्मुख्यं काव्यम्। काव्यानुकारो ह्यसौ। तत्र किञ्चिच्छब्दचित्रं यथा दुष्करयमकादि। वाच्यचित्रं ततः शब्दचित्रादन्यद्व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्यरहितमुत्प्रेक्षादि।

अथ किमिदं चित्रं नाम? यत्र न प्रतीयमानार्थसंस्पर्शः। प्रतीयमानो ह्यर्थस्त्रिभेदः प्राक्प्रदर्शितः। तत्र यत्र वस्त्वलङ्कारान्तरं वा व्यङ्ग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः। यत्र तु रसादीनामविषयत्वं स काव्यप्रकारो न सम्भवत्येव। यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते। वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते अन्ततो विभावत्वेन। चित्तवृत्तिविशेषा हि रसादयः, न च तदस्ति वस्तु किञ्चिद्यन्न चित्तवृत्तिविशेषमुपजनयति तदनुत्पादने वा

लोचनम्

प्रसिद्धमेव तत्तुल्यमेवार्थचित्रं मन्तव्यमिति भावः। आलेख्यप्रख्यमिति। रसादिजीवरहितं मुख्यप्रतिकृतिरूपं चेत्यर्थः।

**अथ किमिदमिति** आक्षेपे वक्ष्यमाण आशयः। अत्रोत्तरम्—यत्र नेति। आक्षेप्ता स्वाभिप्रायं दर्शयति—प्रतीयमान इति। अवस्तुसंस्पर्शितेति। कचटतपादिवन्निरर्थकत्वं दशदाडिमादिवदसंबद्धार्थत्वं चेत्यर्थः।

बालप्रिया

कया संज्ञाकरणस्याभिप्रायमाह—यमकेत्यादि। बन्धादीति भिन्नं पदम्। प्रसिद्धमेवेति। यमकादेरक्षरसन्निवेशविशेषरूपत्वात्तस्य चित्रत्वमलङ्कारविद्भिर्निश्चितमेवेत्यर्थः। किञ्चिबन्धनमालेख्यप्रख्यत्वमित्यत आह—रसादीति। मुख्येत्यादि। गुणालङ्कारकृतसौन्दर्यशालित्वेन ध्वनेरनुकृतिरूपं चेत्यर्थः।

किमिदमित्याक्षेपे हेतुं दर्शयति—**वक्ष्यमाण** इति। अवस्तुसंस्पर्शितेत्येतद्द्वेधा विवृणोति-**कचटतपादी**त्यादि। माभूदिति। ध्वनिगुणीभूतव्यंग्ययोरेव कविविषयत्वौचित्यादिति भावः। भावं विवृणोति-काव्येत्यादि। न निर्दिष्ट इति। न तन्मुख्यं काव्यं काव्यानुकारो ह्यसाविति वचनादिति भावः। **असा**विति। चित्रविषय इत्यर्थः।

कविविषयतैव तस्य न स्यात् कविविषयश्च चित्रतया कश्चिन्निरूप्यते ।

अत्रोच्यते—सत्यं न तादृक्काव्यप्रकारोऽस्ति यत्र रसादीनामप्रतीतिः । किं तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोपनिबध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते । विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः । वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला

## लोचनम्

ननु मा भूत्कविविषय इत्याशङ्क्याह—**कविविषयश्चे**ति । काव्यरूपतया यद्यपि न निर्दिष्टस्तथापि कविगोचरीकृत एवासौ वक्तव्यः अन्यस्य वासुकिवृत्तान्ततुल्यस्येहाभिधानायोगात् कवेश्चेद्गोचरो नूनममुना प्रीतिर्जनयितव्या सा चावश्यं विभावानुभावव्यभिचारिपर्यवसायिनीति भावः । **किं त्वि**ति ।

विवक्षा तत्परत्वेन नाङ्गित्वेन कथंचन ।

इत्यदिर्योऽलंकारनिवेशने समीक्षाप्रकार उक्तस्तं यदा नानुसरतीत्यर्थः । **रसादिशून्यते**ति । नैव तत्र रसप्रतीतिरस्ति यथा पाकानभिज्ञसूदविरचिते मांसपाकविशेषे । ननु वस्तुसौन्दर्यादवश्यं भवति कदाचित्तथास्वादोऽकुशलकृतायामपि शिखरिण्यामिवेत्याशङ्क्याह—**वाच्ये**त्यादि । **अनेना**पीति । पूर्वं सर्वथा तच्छून्यत्वमुक्त-

## बालप्रिया

**अन्यस्ये**ति । कविगोचरीकृतादन्यस्येत्यर्थः । **वासुकिवृत्तान्ततुल्यस्ये**ति । अप्रकृतस्येत्यर्थः । नन्वस्तु कविगोचरत्वं किमतस्तत्राह—**कवेश्चे**त्यादि । यथोक्तम्—

स्वभावश्चायमर्थानां यन्न साक्षादमी तथा ।

स्वदन्ते सत्कविगिरां गता गोचरतां यथा ॥ इति ।

नन्वस्तु प्रीतिजनकत्वं, तथाऽपि कथं रसादिशून्यत्वाभाव इत्यत आह—**सा चे**त्यादि । काव्यजन्यस्य प्रीतिविशेषस्य नियमेन रसास्वादैकनिबन्धनत्वादिति भावः । 'किंत्वि'त्यादिग्रन्थस्य भावं विवृणोति—**विवक्षे**त्यादि । **यदा नानुसरती**ति । तदनुसारेणालङ्कारोपनिबन्ध एवालङ्काराणां रसाङ्गत्वमिति भावः । सदृष्टान्तं भावमाह—**नैवे**त्यादि । **तत्रे**ति । समीक्षाप्रकारो य उक्तस्तदनुसरणं विनाऽलङ्कारोपनिबन्धस्थल इत्यर्थः । **रसप्रतीति**रिति । रसशब्देन श्रृङ्गारादिर्मधुरादिश्च रसो विवक्षितः । **तथाऽस्वाद** इति । रसास्वाद इत्यर्थः । **शिखरिण्यामिवे**ति । शिखरिणी नाम दध्यादिमिश्रो भक्ष्यविशेषः । 'अनेनापी'त्यपिशब्दार्थमाह—**पूर्वमि**त्यादि । **तच्छून्यत्वम्** रसशून्यत्वम् । **दौर्बल्यमि**ति । रसास्वादस्येति शेषः ।

भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते। तदिदमुक्तम्—

'रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः॥'

एतच्च चित्रं कवीनां विशृङ्खलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम्। इदानीन्तनानां तु न्याय्ये काव्यनयव्यवस्थापने क्रियमाणे नास्त्येव ध्वनिव्यतिरिक्तः काव्यप्रकारः। यतः परिपाकवतां कवीनां रसादितात्पर्यविरहे व्यापार एव न शोभते। रसादितात्पर्ये च नास्त्येव तद्वस्तु यदभिमतरसाङ्गतां नीयमानं न प्रगुणीभवति। अचेतना अपि हि भावा यथायथमुचितरसविभावतया चेतनवृत्तान्तयोजनया वा न सन्त्येव ते ये यान्ति न रसाङ्गताम्। तथा चेद-

लोचनम्

मधुना तु दौर्बल्यमित्यपिशब्दस्यार्थः। अज्ञकृतायां च शिखरिण्यामहो शिखरिणीति न तज्ज्ञानाच्चमत्कारः अपि तु दधिगुडमरिचं चैतदसमञ्जसयोजितमिति वक्तारो भवन्ति। उक्तमिति। मयैवेत्यर्थः।

अलङ्काराणां शब्दार्थगतानां निबन्ध इत्यर्थः। ननु 'तच्चित्रमभिधीयते' इति किमनेनोपदिष्टेन। अकाव्यरूपं हि तदिति कथितम्। हेयतया तदुपदिश्यत इति चेत्—घटे कृते कविर्न भवतीत्येतदपि वक्तव्यमित्याशङ्क्य कविभिः खलु तत्कृतमतो हेयतयोपदिश्यत इत्येतन्निरूपयति—एतच्चेत्यादिना। परिपाकवतामिति। शब्दार्थविषयो रसौचित्यलक्षणः परिपाको विद्यते येषाम्।

बालप्रिया

इति वक्तारो भवन्तीत्यनेन रसास्वादस्य दौर्बल्यं दर्शितम्। उक्तमित्यनेनान्योक्तत्वं दर्शितमिति भ्रमं वारयति—**मयैवेति**। वृत्तिकारेण मयैवेत्यर्थः। **अकाव्यरूपम**-त्यादि। तदकाव्यरूपमिति कथितं हीत्यन्वयः। तदित्यस्य चित्रमित्यर्थः। मध्ये शङ्कते-**हेयत**येत्यादि। **हेयतया** त्याज्यतया। **तत्** चित्रम्। प्रतिवक्ति-**घट** इत्यादि। **तत्कृत**मिति। चित्रकाव्यं कृतमस्तीत्यर्थः। ननु—

यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।

मुच्यते—

अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥
भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ॥

तस्मान्नास्त्येव तद्वस्तु यत्सर्वात्मना रसतात्पर्यवतः कवेस्तदिच्छया तदभिमतरसाङ्गतां न धत्ते । तथोपनिबध्यमानं वा न चारुत्वातिशयं

लोचनम्

यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।

इत्यपि रसौचित्यशरणमेव वक्तव्यमन्यथा निर्हेतुकं तत् । **अपार** इति । अनाद्यन्त इत्यर्थः । यथारुचि परिवृत्तिमाह—**शृङ्गारीति** । शृङ्गारोक्तविभावानुभावव्यभिचारिचर्वणारूपप्रतीतिमयो न तु स्त्रीव्यसनीति मन्तव्यम् । अत एव भरतमुनिः—'कवेरन्तर्गतं भावं' 'काव्यार्थान् भावयति' इत्यादिषु कविशब्दमेव मूर्धाभिषिक्ततया प्रयुङ्क्ते । निरूपितं चैतद्रसस्वरूपनिर्णयावसरे । **जगदिति** । तद्रसनिमज्ज-

बालप्रिया

तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥

इत्यनेन पाकलक्षणमन्यदेवोक्तमित्यत आह—**यत्पदानीत्यादि** । **न तु स्त्रीव्यसनीति** । शृङ्गारिपदार्थ इति शेषः । व्यसनमासक्तिः । शृङ्गारीत्याद्युक्तार्थे उपष्टम्भकमाह—**अत एवेत्यादि** । **कवेरिति** ।

वागङ्गमुखरागेण सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥

इति श्लोकः, काव्यार्थानित्यादिवाक्यं च नाट्यशास्त्रे सप्तमाध्याये वर्तते । वागङ्गमुखरागात्मना अभिनयेन सत्त्वलक्षणेन चाभिनयेन करणेन । कवेः वर्णनानिपुणस्य योऽन्तर्गतोऽनादिप्राक्तनसंस्कारप्रतिभानमयो देशकालादिभेदाभावात्सर्वसाधारणीभावेनास्वादयोग्यश्चित्तवृत्तिलक्षणो भावस्तम् । भावयन्नास्वदयोग्यीकुर्वन् । **काव्यार्थानिति** । कोः कवतेर्वा कवनीयं काव्यं तत्र च पदार्थवाक्यार्थौ रसेष्वेव पर्यवस्यत इत्यसाधारण्यात्प्राधान्याच्च काव्यस्यार्था रसाः अर्थ्यन्ते प्रधान्येनेत्यर्था, इति चाभिनवभारत्यां विवृतम् । कथं जगतो रसमयत्वमित्यत आह—**तद्रसेत्यादि** । **रसोपल-**

पुष्णाति । सर्वमेतच्च महाकवीनां काव्येषु दृश्यते । अस्माभिरपि स्वेषु काव्यप्रबन्धेषु यथायथं दर्शितमेव । स्थिते चैवं सर्व एव काव्यप्रकारो न ध्वनिधर्मतामतिपतति रसाद्यपेक्षायां कवेर्गुणीभूतव्यङ्ग्यलक्षणोऽपि प्रकारस्तदङ्गतामवलम्बत इत्युक्तं प्राक् । यदा तु चाटुषु देवतास्तुतिषु वा रसादीनामङ्गतया व्यवस्थानं हृदयवतीषु च सप्रज्ञकगाथासु कासुचिद्व्यङ्ग्यविशिष्टवाच्ये प्राधान्यं तदपि गुणीभूतव्यङ्ग्यस्य ध्वनिनिष्पन्दभूतत्वमेवेत्युक्तं प्राक् । तदेवमिदानींतनकविकाव्यनयोपदेशे क्रियमाणे प्राथमिकानामभ्यासार्थिनां यदि परं चित्रेण व्यवहारः, प्राप्तपरिणतीनां तु

लोचनम्

नादित्यर्थः । शृङ्गारपदं रसोपलक्षणम् । स एवेति । यावद्रसिको न भवति तदा परिदृश्यमानोऽप्ययं भाववर्गो यद्यपि सुखदुःखमोहमाध्यस्थ्यमात्रं लौकिकं वितरति, तथापि कविवर्णनोपारोहं विना लोकातिक्रान्तरसास्वादभुवं नाधिशेत इत्यर्थः । चारुत्वातिशयं यत्र पुष्णाति तन्नास्त्येवेति संबन्धः । स्वेष्विति । विषमबाणलीलादिषु । हृदयवतीष्विति । 'हिअअललिआ' इति प्राकृतकविगोष्ठ्यां प्रसिद्धासु त्रिवर्गोपायोपेयकुशलासु सप्रज्ञाकाः सहृदया उच्यन्ते । तद्गाथा यथा भट्टेन्दुराजस्य—

लङ्घिअगअणा फलहीलआओ होन्तुत्ति वद्धअन्तीअ ।
हालिअस्स आसिसं पालिवेसवहुआ विणिठ्ठविआ ॥

बालप्रिया

क्षणमिति । रससामान्योपलक्षकमित्यर्थः । वीतरागश्चेदित्यादिकं विवृणोति—यावद्रसिको न भवतीत्यादि । सुखेति । मध्ये तिष्ठतीति मध्यस्थः तस्य भावो माध्यस्थ्यं सुखदुःखमोहानां यन्माध्यस्थ्यं तदेकानुभवं तन्मात्रमित्यर्थः । मात्रपदेन रसास्वादव्यवच्छेदः । वितरतीति । भाववर्गस्य त्रिगुणात्मकत्वादिति भावः । हृदयवतीष्वित्यस्य विवरणम्—हिअअललिआ इत्यादि । त्रिवर्गेति । त्रिवर्गस्य धर्मादित्रयस्य य उपायः, स एवोपेयो ज्ञातव्यस्तत्र कुशलास्वित्यर्थः । लङ्घिअ इति ।

लङ्घितगगनाः कार्पासलता भवन्त्विति वर्धयन्त्या ।
हालिकस्याशिषं प्रातिवेश्यवधुका निर्वापिता ॥

इतिच्छाया । हे हालिक ! कार्पासलताः त्वदुपजीवनभूताः कार्पासस्तम्बाः । लङ्घितगगनाः अत्युच्चाः । भवन्तु इति हालिकस्याशिषं वर्धयन्त्या पुनः पुनः कुर्वत्या कयाचित् । प्रातीति । प्रातिवेशिनी वधूरित्यर्थः । निर्वापिता निर्वृतिं प्रापिता । कार्पासलतानां परिपोषे तत्स्थले निश्शङ्कं हालिकेन सह रमणं भविष्यतीति बुद्ध्या निर्वृतिरित्यनेन तच्चौर्यसम्भोगाभिलाषो वध्वा व्यज्यते, तच्च गुणीभूतम्; तदे·

ध्वनिरेव काव्यमिति स्थितमेतत् । तदयमत्र संग्रहः—

यस्मिन् रसो वा भावो वा तात्पर्येण प्रकाशते ।
संवृत्त्याभिहितौ वस्तु यत्रालङ्कार एव वा ॥
काव्याध्वनि ध्वनिर्व्यङ्ग्यप्राधान्यैकनिबन्धनः ।

लोचनम्

अत्र लङ्घितगगना कर्पासलता भवन्त्विति हालिकस्याशिषं वर्धयन्त्या प्रातिवेश्यकवधुका निर्वृतिं प्रापिता इति चौर्यसंभोगाभिलाषिणीयमित्यनेन व्यङ्ग्येन विशिष्टं वाच्यमेव सुन्दरम् ।

गोलाकच्छकुडङ्गे भरेण जम्बूसु पच्चमाणासु ।
हलिअबहुआ णिअंसइ जम्बूरसरत्तअं सिअअम् ॥

अत्र गोदावरीकच्छलतागहने भरेण जम्बूफलेषु पच्यमानेषु । हालिकवधूः परिधत्ते जम्बूफलरसरक्तं निवसनमिति त्वरितचौर्यसंभोगसंभाव्यमानजम्बूफलरसरक्तत्वपरभागनिह्नवनं गुणीभूतव्यङ्ग्यमित्यलं बहुना ।

ध्वनिरेव काव्यमिति । आत्मात्मिनोरभेद एव वस्तुतो व्युत्पत्तये तु विभागः

बालप्रिया

तद्व्याचष्टे—अत्रेत्यादि । प्रातिवेश्यिको निर्वृतिं प्रापित इति च लोचने पाठः । सोऽपि साधुः । तदनुसारेण गाथा छाया च पठनीया । अत्र पक्षे सङ्केतस्थानार्थिनं स्वानुरक्तं प्रातिवेश्यिकं तत्सम्भोगाभिलाषिणी काचिद्यदृच्छया दृष्टं हालिकं प्रत्येवमाशीर्वादेन सङ्केतस्थानं ज्ञापितवतीति तत्सम्भोगाभिलाषो व्यंग्यो बोध्यः । गोलाकच्छेति ।

गोदाकच्छनिकुञ्जे भरेण जम्बूषु पच्यमाना ।
सुहालिकवधूर्नियच्छति जम्बूरसरक्तं सिचयम् ॥

इति च्छाया । भरेणेत्यस्यातिशयेनेत्यर्थः । लोचने 'गोदे'त्यादेः गोदावरीत्यादिविवरणं बोध्यम् । गुणीभूतं व्यंग्यं दर्शयति—त्वरितेत्यादि । त्वरितः पतितजम्बूफले निकुञ्जदेशे सिचयास्तरणे त्वरया कृतो यश्चौर्यसम्भोगस्तेन सम्भाव्यमानः समुत्पाद्यमानस्तद्धेतुकतया तर्क्यमाणो वा यो जम्बूफलरसरक्तत्वेन परभागः सिचयस्य तत्तद्भागे वर्णान्तरप्राप्तिः तस्य निह्नवनं गोपनेच्छेत्यर्थः । गुणीभूतव्यंग्यमिति । सर्वावयवावच्छेदेन जम्बूफलरसरक्तस्य सिचयस्य परिधानेन तन्निह्नवनं गम्यते, तत्तु वाच्यार्थे गुणीभूतमित्यर्थः ।

ननु ध्वनिकाव्ययोरात्मशरीरस्थानीययोर्भेदाद्वृत्तौ 'ध्वनिरेव काव्यमि'ति सामानाधिकरण्येन निर्देशोऽनुपपन्न इत्यत आह—आत्मात्मिनोरित्यादि । आत्मी देहः । व्युत्पत्तये शिष्यजनव्युत्पादनाय । विभाग इति । ध्वनिः काव्यस्यात्मा

सर्वत्र तत्र विषयी ज्ञेयः सहृदयैर्जनैः ॥

सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥ ४३ ॥

तस्य च ध्वनेः स्वप्रभेदैर्गुणीभूतव्यङ्ग्येन वाच्यालङ्कारैश्च सङ्कर-संसृष्टिव्यवस्थायां क्रियमाणायां बहुप्रभेदता लक्ष्ये दृश्यते । तथाहि स्वप्रभेदसङ्कीर्णः, स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो गुणीभूतव्यङ्ग्यसंसृष्टो वाच्यालङ्कारान्तरसङ्कीर्णो वाच्यालङ्कारान्तरसंसृष्टः संसृष्टालङ्कारसङ्कीर्णः संसृष्टालङ्कारसंसृष्टश्चेति बहुधा ध्वनिः प्रकाशते ।

लोचनम्

कृत इत्यर्थः । वाग्रहणात्तदाभासादेः पूर्वोक्तस्य ग्रहणम् । संवृत्येति । गोप्यमानतया लब्धसौन्दर्यमित्यर्थः । काव्याद्ध्वनीति । काव्यमार्गे । विषयीति । स त्रिविधस्य ध्वनेः काव्यमार्गो विषय इति यावत् ॥ ४१, ४२ ॥

एवं श्लोकद्वयेन संग्रहार्थमभिधाय बहुप्रकारत्वप्रदर्शिकां पठति—सगुणीति । सहगुणीभूतव्यङ्ग्येन सहालंकारैर्ये वर्तन्ते स्वे ध्वनेः प्रभेदास्तैः संकीर्णतया संसृष्टया वानन्तप्रकारो ध्वनिरिति तात्पर्यम् । बहुप्रकारतां दर्शयति—तथाहीति । स्वभेदैर्गुणीभूतव्यङ्ग्येनालंकारैः प्रकाश्यत इति त्रयो भेदाः । तत्रापि प्रत्येकं संकरेण संसृष्टया चेति षट् । संकरस्यापि त्रयः प्रकाराः अनुग्राह्यानुग्राहकभावेन संदेहास्पदत्वेनैकपदानुप्रवेशेनेति द्वादश भेदाः । पूर्वं च ये पञ्चत्रिंशद्भेदा उक्तास्ते गुणीभूतव्यङ्ग्यस्यापि

बालप्रिया

शब्दार्थमयं काव्यं शरीरमिति विभाग इत्यर्थः । वाग्रहणादिति । भावो वेति वाकारादित्यर्थः । संवृत्याभिहिताविल्यस्य विवरणम्—गोप्यमानतया लब्धसौन्दर्यं इति । ध्वनेर्विषयित्वोक्त्या काव्यमार्गस्य विषयत्वं लब्धमित्याशयेनाह—स त्रिविधस्येत्यादि । 'यस्मिन्नि'त्यादौ । यस्मिन् काव्याध्वनि । प्रकाशते सर्वत्र तत्र व्यंग्यप्राधान्यैकनिबन्धनो ध्वनिः विषयी सन् सहृदयैर्जनैर्ज्ञेय इत्यन्वयः ॥ ४१, ४२ ॥

कारिकां व्याचष्टे—सहेत्यादि । उद्योतत इत्यत्र ध्वनिरिति शेष इति भावः । सगुणीभूतव्यंग्यैस्सालङ्कारैस्स्वप्रभेदैः सह सङ्करसंसृष्टयोरुक्त्या प्रत्येकं तैस्त्रिभिस्सह ते लभ्येते इत्याशयेन विभागान् दर्शयति—स्वप्रभेदैरित्यादि । प्रकाश्यत इति सम्मिश्र्यत इति च पाठः । द्वादशेति । स्वप्रभेदादिभिस्त्रिभिः सह सङ्करकृता नव, संसृष्टिकृतास्त्रय इति द्वादशेत्यर्थः । पूर्वं च ये पञ्चत्रिंशद्भेदा उक्ता इति । द्वितीयोद्योतावसान 'एवं ध्वनेः प्रभेदान् प्रतिपाद्ये'ति वृत्तिग्रन्थव्याख्यानावसरे ये पञ्च-

तत्र स्वप्रभेदसङ्कीर्णत्वं कदाचिदनुग्राह्यानुग्राहकभावेन । यथा—'एवंवादिनि देवर्षौ' इत्यादौ । अत्र ह्यर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिप्रभेदेनालक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदोऽनुगृह्यमाणः प्रतीयते । एवं कदाचित्प्रभेदद्वयसम्पातसन्देहेन । यथा—

खणपाहुणिआ देअर एसा जाआएँ किंपि दे भणिदा ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥

## लोचनम्

मन्तव्याः । स्वप्रभेदास्तावन्तोऽलंकार इत्येकसप्ततिः । तत्र संकरत्रयेण संसृष्टया च गुणने द्वे शते चतुरशीत्यधिके । तावता पञ्चत्रिंशतो मुख्यभेदानां गुणने सप्तसहस्राणि चत्वारि शतानि विंशत्यधिकानि भवन्ति । अलंकाराणामानन्त्यात्त्वसंख्यत्वम् ।

तत्रा व्युत्पत्तये कतिपयभेदेषूदाहरणानि दित्सुः स्वप्रभेदानां कारिकायामन्यपदार्थत्वेन प्रधानतयोक्तत्वात्तदाश्रयाण्येव चत्वार्युदाहरणान्याह—**तत्रेति** । **अनुगृह्यमाण** इति । लज्जया हि प्रतीतया अभिलाषश्रृङ्गारोऽत्रानुगृह्यते व्यभिचारिभूतत्वेन । क्षण उत्सवस्तत्र निमन्त्रणेनानीता हे देवर ! एषा ते जायया किमपि भणिता रोदिति । पडाहरे शून्ये वलभीगृहे अनुनीयतां वराकी । सा तावद्देवरानुरक्ता तज्जायया विदितवृत्तान्तया किमप्युक्तेत्येषोक्ति-

## बालप्रिया

त्रिंशद्भेदाः स्वयं प्रतिपादिता इत्यर्थः । **ते** इति । पञ्चत्रिंशद्भेदा इत्यर्थः । **स्वप्रभेदा** इति । ध्वनेरवान्तरभेदा इत्यर्थः । **तावन्त** इति । पञ्चत्रिंशदित्यर्थः । **अलङ्कार** इति । अलङ्कारत्वावच्छिन्न इत्यर्थः । तत्रेत्यादि । एकसप्ततेश्चतुर्भिर्गुणन इत्यर्थः । **द्वे शते चतुरशीत्यधिके** इत्यस्यानन्तरं 'तावता पञ्चत्रिंशतो मुख्यभेदानां गुणने सप्तसहस्राणि चत्वारि शतानि विंशत्यधिकानि भवन्तीति पाठो बहुषु ग्रन्थेषु दृश्यते, तदर्थः सङ्गतो न भाति, विद्वद्भिर्विवेचनीयः । **असंख्यत्वमिति** । अतोऽलङ्कारत्वावच्छिन्न एक एव ग्राह्य इति भावः ।

**अन्यपदार्थत्वेनेति** । सगुणीभूतेत्यादिबहुव्रीहिद्वयान्यपदार्थत्वेनेत्यर्थः । अत्र ह्यर्थशक्तीत्यादिवृत्त्युक्तं विवृणोति–**लज्जयेत्यादि** । **व्यभिचारिभूतत्वेनेति** । लज्जायाः शृङ्गारव्यभिचारित्वेन हेतुनेत्यर्थः । **उत्सव** इति । उत्सवोऽयं देवरसम्बन्धी बोध्यः । प्राघुणिकेत्यस्याभ्यागतेति वाच्यार्थः । तद्भावार्थकथनम्—**निमन्त्रणेनानीतेति** । अनेनानुनयनस्यावश्यकत्वं द्योत्यते । **देवरेत्यादि**च्छायाप्रदर्शनम् । **किमपीति** । अनुचितमित्यर्थः । यतो रोदिति अतो वराकी दीना । सा त्वया अनुनीयतामिति सम्बन्धः । गाथामिमामवतारणपूर्वकं व्याचष्टे—सेत्यादि । सेति । या क्षणप्रा-

( क्षणप्राघुणिका देवर एषा जायया किमपि ते भणिता ।
रोदिति शून्यवलभीगृहेऽनुनीयतां वराकी ॥ इति च्छाया । )

अत्र अनुनीयतामित्येतत्पदमर्थान्तरसङ्क्रमितवाच्यत्वेन विवक्षितान्यपरवाच्यत्वेन च सम्भाव्यते । न चान्यतरपक्षनिर्णये प्रमाणमस्ति । एकव्यञ्जकानुप्रवेशेन तु व्यङ्ग्यत्वमलक्ष्यक्रमव्यङ्ग्यस्य स्वप्रभेदान्तरा-

### लोचनम्

स्तद्वृत्तान्तं दृष्टवत्या अन्यस्यास्तद्देवरचौरकामिन्याः । तत्र तव गृहिण्यायं वृत्तान्तो ज्ञात इत्युभयतः कलहायितुमिच्छन्त्येवमाह । तत्रार्थान्तरे संभोगेनैकान्तोचितेन परितोष्यतामित्येवंरूपे वाच्यस्य संक्रमणम् । यदि वा त्वं तावदेतस्यामेवानुरक्त इतीर्ष्याकोपतात्पर्यादनुनयनमन्यपरं विवक्षितम् । एषा तवेदानीमुचितमगर्हणीयं प्रेमास्पदमित्यनुनयो विवक्षितः, वयं त्विदानीं गर्हणीयाः संवृत्ता इत्येतत्परतया उभयथापि च स्वाभिप्रायप्रकाशनादेकतरनिश्चये प्रमाणाभाव इत्युक्तम् । विवक्षितस्य हि स्वरूपस्थ-

### बालप्रिया

घुणिकाऽभूत्सा नायिकेत्यर्थः । **देवरेति** । तस्या यो देवरो भर्तुर्भ्राता तस्मिन्ननुरक्तेत्यर्थः । **विदितेति** । विदितो वृत्तान्तस्तस्या देवरस्य च परस्परानुरागादिर्यया तयेत्यर्थः । **तद्वृत्तान्तमिति** । तज्जायावचनादिवृत्तान्तमित्यर्थः । कामिन्या इत्येषोक्तिरित्यन्वयः । जायया किमपि भणितेति रोदनहेतुप्रदर्शनमात्रं न तत्कथनस्य फलान्तरमप्यस्तीत्याह—**तत्रे**त्यादि । तद्वचने । **तत्र** इत्येवमाहेति सम्बन्धः । सेति शेषः । **उभयतः कलहायितुमिति** । तद्देवरस्य तज्जायायाश्च मिथः कलहमुत्पादयितुमित्यर्थः । वृत्तानुक्तं सन्देहसङ्करं विवृणोति—**तत्रे**त्यादि । **तत्र** तथावचने । इत्येवंरूपे अर्थान्तर इति सम्बन्धः । **वाच्यस्य** अनुनयतिवाच्यार्थस्य । **सङ्क्रमणमिति** । विवक्षितमित्यस्यापकर्षः । प्रियभाषणादिः परितोषजनको व्यापारस्तत्त्वेनानुनयतेर्वाच्यार्थः, स चात्र सम्भोगत्वेन रूपेण लक्ष्यो विवक्षित इत्यर्थः । तस्यां तवानुरागो मया ज्ञात इत्यादिरर्थश्चात्र व्यंग्यो बोध्यः । **एतस्यामेवेति** । देवर तस्यामेवेति च पाठः । या रोदिति तस्यामेवेत्यर्थः । इतीति हेतौ । **ईर्ष्येति** । वक्तृकामिनीगतयोरीर्ष्याकोपयोस्तात्पर्यादित्यर्थः । **अनुनयनमिति** । अनुनयति वाच्यार्थ इत्यर्थः । **अन्यपरमिति** । ईर्ष्याकोपव्यञ्जपरमित्यर्थः । उक्तमुपपदयति—**एषे**त्यादि । इत्येतत्परतया विवक्षितमिति सम्बन्धः । **उभयथाऽपीति** । अनुनयति वाच्यस्यार्थान्तरसङ्क्रमणपक्षे अन्यपरत्वेन विवक्षितत्वपक्षे चेत्यर्थः । **स्वभिप्रायेति** । वक्तृकामिनीगताभिलाषेत्यर्थः । **उक्तमिति** । वृत्तिकृतेति शेषः । प्रसङ्गादाह—

पेक्षया बाहुल्येन सम्भवति । यथा—'स्निग्धश्यामल' इत्यादौ । स्वप्रभेदसंसृष्टत्वं च यथा पूर्वोदाहरण एव । अत्र ह्यर्थान्तरसंक्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्यस्य च संसर्गः । गुणीभूतव्यङ्ग्यसङ्कीर्णत्वं यथा—'न्यक्कारो ह्ययमेव मे यदरयः' इत्यादौ । यथा वा—

> कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
>
> कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः ।
>
> राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
>
> क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥

लोचनम्

स्यैवान्यपरत्वम्, संक्रान्तिस्तु तस्यैतद्रूपतापत्तिः । यदि वा देवरानुरक्ताया एव तं देवरमन्यया सहावलोकितसंभोगवृत्तान्तं प्रतीयमुक्तिः, देवरेत्यामन्त्रणात् । पूर्वव्याख्याने तु तदपेक्षया देवरेत्यामन्त्रणं व्याख्यातम् । **बाहुल्येनेति** । सर्वत्र काव्ये रसादितात्पर्यं तावदस्ति तत्र रसध्वनेर्भावध्वनेश्चैकेन व्यञ्जकेनाभिव्यञ्जनं स्निग्धश्यामलेत्यत्र विप्रलम्भशृङ्गारस्य तद्व्यभिचारिणश्च शोकावेगात्मनश्चर्वणीयत्वात् । एवं त्रिविधं संकरं व्याख्याय संसृष्टिमुदाहरति—**स्वप्रभेदेति** । **अत्र हीति** । लिप्तशब्दादौ तिरस्कृतो वाच्यः, रामादौ तु संक्रान्त इत्यर्थः ।

एवं स्वप्रभेदं प्रति चतुर्भेदानुदाहृत्य गुणीभूतव्यङ्ग्यं प्रत्युदाहरति- **गुणीभूतेति** ।

बालप्रिया

**विवक्षितरूपेत्यादि** । **स्वरूपस्थस्य** वाच्यस्य । **तस्य** वाच्यस्य । **एतद्रूपतापत्तिः** विवक्षितरूपान्तरप्राप्तिः । **देवरानुरक्ताया** इति । अस्य यो देवरस्तदनुरक्ताया इत्यर्थः । सहेत्यस्य सम्भोगेत्यनेन सम्बन्धः । उक्तार्थे गमकमाह—**देवरेत्यादि** । **तदपेक्षयेति** । या प्राघुणिकाऽभूत्तदपेक्षयेत्यर्थः । तन्निरूपितं देवरत्वं बोध्यमित्यर्थः । गाथेयं काव्यप्रकाशेऽप्युदाहृता । बाहुल्येन सम्भवतीत्येतदुपपादयति—**सर्वत्रेत्यादि** । चर्वणीयत्वादभिव्यञ्जनमिति सम्बन्धः । **लिप्तशब्दादावित्यादि** । 'स्निग्धश्यामलकान्तिलिप्तवियत'इत्यत्र द्रवद्रव्यस्य सर्वावयवावच्छेदेन यः संयोगस्तदात्मकस्य लेपस्य वाच्यार्थस्य बाधाल्लिपिधातुः सम्पर्कं लक्षयंस्तदतिशयं द्योतयति । एवं पयोदाःसुहृदो येषामित्यत्र वाच्यार्थस्य बाधात्सुहृत्पदमुपकारित्वेन रूपेण लक्षयत्तदतिशयं व्यनक्तीत्यर्थः । **रामादाविति** । रामादिपद इत्यर्थः । वाच्य इत्यनुषज्यते । **सङ्क्रान्त** इति । यथासङ्क्रान्तिस्तथा द्वितीयोद्योते उक्तम् । रामादावित्यादिपदेन 'न्यक्कार' इत्यादिस्थरावणादिपदसंग्रहः । 'कर्ते'त्यादिश्लोको वेणीसंहा-

अत्र ह्यलक्ष्यक्रमव्यङ्ग्यस्य वाक्यार्थीभूतस्य व्यङ्ग्यविशिष्टवाच्याभिधायिभिः पदैः सम्मिश्रता। अत एव च पदार्थाश्रयत्वे गुणीभूतव्यङ्ग्यस्य वाक्यार्थाश्रयत्वे च ध्वनेः सङ्कीर्णतायामपि न विरोधः स्वप्रभेदा-

लोचनम्

अत्र हीत्युदाहरणद्वयेऽपि। अलक्ष्यक्रमव्यङ्ग्यस्येति। रौद्रस्य व्यङ्ग्यविशिष्टेत्यनेन गुणता व्यङ्ग्यस्योक्ता। पदैरित्युपलक्षणे तृतीया। तेन तदुपलक्षिता योऽर्थो व्यङ्ग्यगुणीभावेन वर्तते तेन संमिश्रता संकीर्णता। सा चानुग्राह्यानुग्राहकभावेन संदेहयोगेनैकव्यञ्जकानुप्रवेशेन चेति यथासंभवमुदाहरणद्वये योज्या। तथा हि—मे यदरय इत्यादिभिः सर्वैरेव पदार्थैः कर्तेत्यादिभिश्च विभावादिरूपतया रौद्र एवानुगृह्यते।

कर्तेत्यादौ च प्रतिपदं प्रत्यवान्तरवाक्यं प्रतिसमासं च व्यङ्ग्यमुत्प्रेक्षितुं शक्यमेवेति न लिखितम्। पाण्डवा यस्य दासा इति तदीयोक्त्यनुकारः। तत्र गुणीभूतव्यङ्ग्यतापि योजयितुं शक्या, वाच्यस्यैव क्रोधोद्दीपकत्वात्। दासैश्च कृतकृत्यैः स्वाम्यवश्यं द्रष्टव्य इत्यर्थशक्त्यनुरणनरूपतापि। उभयथापि चारुत्वादेकपक्षग्रहे प्रमाणाभावः। एकव्यञ्जकानुप्रवेशस्तु तैरेव पदैः गुणीभूतस्य व्यङ्ग्यस्य प्रधानीभूतस्य च रसस्य विभावादिद्वारतया-

बालप्रिया

स्त्वथः। वृत्तावत्रेत्यस्य कर्तेत्युदाहरणमात्रपरामर्शकत्वभ्रमवारणाय विवृणोति—उदाहरणद्वयेऽपीति। रौद्रस्येति। न्यक्कार इत्यादौ रावणगतस्य कर्तेत्यादौ भीमसेनगतस्य च क्रोधस्य प्रतीतेरिति भावः। व्यंग्यविशिष्टेत्यनेनेति। व्यंग्यवैशिष्ट्यकथनेनेत्यर्थः। गुणतेति। वाच्यार्थं प्रतीति शेषः। उक्ता दर्शिता। पदैस्सम्मिश्रतेत्यस्य यथाश्रुतार्थस्य बाधाद्व्याचष्टे—पदैरित्युपलक्षणे तृतीयेति। पदैरिति तृतीयार्थो ज्ञाप्यत्वमित्यर्थः। तमेवार्थं दर्शयति—तदुपलक्षितेति। केन सम्मिश्रतेत्यत्राह—योऽर्थ इत्यादि। योऽर्थः वाच्यार्थः। तेनेति। गुणीभूतव्यंग्येन वाच्येनेत्यर्थः। सा चेति। सङ्कीर्णतेत्यर्थः। तृतीयान्तत्रयस्यानेन सम्बन्धः।

कर्तेत्यादिभिश्चेति। पदार्थैरित्यनुषङ्गः। ननु न्यक्कारेत्यादौ व्यंग्यार्थाः पूर्वं व्याख्याताः। कर्तेत्यादौ तु ते किं न सन्तीत्यत आह—कर्तेत्यादाविति। तदीयोक्तीति। पाण्डवा मम दासा इति दुर्योधनोक्तीत्यर्थः। रौद्र एवानुगृह्यत इत्यनेनानुग्राह्यानुग्राहकभावेन सङ्करं प्रदर्श्य सन्देहयोगेन तं दर्शयति—तत्रेत्यादि। तत्र 'पाण्डवा यस्य दासाः' इत्यत्र। गुणीभूतव्यंग्यताऽपीति। व्यंग्यमत्र पाण्डवगतापकर्षादिकं बोध्यम्। इत्यर्थेत्यादि। उक्तं यदर्थशक्तिमूलं व्यंग्यं तद्रूपताऽपीत्यर्थः। योजयितुं शक्येत्यनुषङ्गः। उभयथापीत्यादि। तथा च गुणीभूतव्यंग्यस्य ध्वनेश्च सन्देहसङ्कर इति भावः। तैरिति। मे यदरय इत्यादिभिरित्यर्थः। विभावादिद्वारतया रसस्य चाभिव्यञ्जनादिति सम्बन्धः। अतएवेत्येतद्व्याख्याया त एवेत्यादि न

न्तरवत् । यथाहि ध्वनिप्रभेदान्तराणि परस्परं सङ्कीर्यन्ते पदार्थवाक्यार्थाश्रयत्वेन च न विरुद्धानि ।

किं चैकव्यङ्ग्याश्रयत्वे तु प्रधानगुणभावो विरुध्यते न तु व्यङ्ग्यभेदापेक्षया ततोऽप्यस्य न विरोधः । अयं च सङ्करसंसृष्टिव्यवहारो बहूनामेकत्र वाच्यवाचकभाव इव व्यङ्ग्यव्यञ्जकभावेऽपि निर्विरोध एव मन्तव्यः । यत्र तु पदानि कानिचिदविवक्षितवाच्यान्यनुरणनरूपव्यङ्ग्यवाच्यानि वा तत्र ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टत्वम् । यथा—'तेषां गोपवधूविलाससुहृदाम्' इत्यादौ । अत्र हि 'विलाससुहृदां' 'राधारहःसाक्षिणाम्' इत्येते पदे ध्वनिप्रभेदरूपे 'ते' 'जाने' इत्येते च पदे गुणीभूतव्यङ्ग्यरूपे ।

लोचनम्

भिव्यञ्जनात् । अत एव चेति । यतोऽत्र लक्ष्ये दृश्यते तत इत्यर्थः । ननु व्यङ्ग्यं गुणीभूतं प्रधानं चेति विरुद्धमेव तद्दृश्यमानमप्युक्तत्वान्न श्रद्धेयमित्याशङ्क्य व्यञ्जकभेदात्तावन्न विरोध इति दर्शयति—अत एवेति । स्वेति । स्वप्रभेदान्तराणि संकीर्णतया पूर्वमुदाहृतानीति तान्येव दृष्टान्तयति । तदेव व्याचष्टे—यथाहीति । तथात्रापीत्यध्याहारोऽत्र कर्तव्यः । 'तथा हि' इति वा पाठः ।

ननु व्यञ्जकभेदात्प्रथमभेदयोः परिहारोऽस्तु एकव्यञ्जकानुप्रवेशे तु किं वक्तव्यमित्याशङ्क्य पारमार्थिकं परिहारमाह—किञ्चेति । ततोऽपीति । यतोऽन्यद्व्यङ्ग्यं गुणीभूतमन्यच्च प्रधानमिति को विरोधः । ननु वाच्यालंकारविषये श्रुतोऽयं संकरादिव्यवहारो न तु व्यङ्ग्यविषय इत्याशङ्क्याह—अयं चेति । मन्तव्य इति । मननेन प्रतीत्या तथा निश्चेयः उभयत्रापि प्रतीतेरेव शरणत्वादिति भावः । एवं गुणीभूतव्यङ्ग्यसंकरभेदांस्त्रीनुदाहृत्य संसृष्टिमुदाहरति—यत्र तु पदानीति । कानिचिदित्य-

बालप्रिया

विरोध इत्यन्तं ग्रन्थमवतारयति—नन्वित्यादि । दृश्यमानमिति । लक्ष्य इति शेषः । स्वेति । दृष्टान्तयतीति सम्बन्धः । स्वप्रभेदान्तरवदित्यनेन दृष्टान्तं दर्शयतीत्यर्थः ।

प्रथमभेदयोरिति । अनुग्राह्यानुग्राहकभावेन सन्देहयोगेन च यौ सङ्करौ तयोरित्यर्थः । किं वक्तव्यमिति । किं कर्तव्यमिति च पाठः । व्यञ्जकभेदाभावादिति भावः । भावमाह—यतोऽन्यदित्यादि । मन्तव्य इत्येतत् प्रकृतानुगुणतया व्याचष्टे—मननेनेत्यादि । प्रतीत्या सहृदयप्रतीत्या । इत्यनेनेति । कानिचिदविवक्षितवाच्यानि कानिचिदनुरणनरूपव्यंग्यवाच्यानीत्युक्त्येत्यर्थः । सुहृदित्यादि । मुख्यार्थयोः

वाच्यालङ्कारसङ्कीर्णत्वमलक्ष्यक्रमव्यङ्ग्यापेक्षया रसवति सालङ्कारे काव्ये सर्वत्र सुव्यवस्थितम् । प्रभेदान्तराणामपि कदाचित्सङ्कीर्णत्वं भवत्येव । यथा ममैव—

लोचनम्

नेन संकरावकाशं निराकरोति । सुहृच्छब्देन साक्षिशब्देन चाविवक्षितवाच्यो ध्वनिः 'ते' इतिपदेनासाधारणगुणगणोऽभिव्यक्तोऽपि गुणत्वमवलम्बते, वाच्यस्यैव स्मरणस्य प्राधान्येन चारुत्वहेतुत्वात् । 'जाने' इत्यनेनोत्प्रेक्ष्यमाणानन्तधर्मव्यञ्जकेनापि वाच्यमेवोत्प्रेक्षणरूपं प्रधानीक्रियते । एवं गुणीभूतव्यङ्ग्येऽपि चत्वारो भेदा उदाहृताः ।

अधुनालंकारगतांस्तान्दर्शयति—**वाच्यालङ्कारे**ति । व्यङ्ग्यत्वे त्वलंकाराणामुक्तभेदाष्टक एवान्तर्भाव इति वाच्यशब्दस्याशयः । **काव्य** इति । एवंविधमेव हि काव्यं भवति । **सुव्यवस्थित**मिति । 'विवक्षा तत्परत्वेन' इति द्वितीयोद्द्योतमूलोदाहरणेभ्यः संकरत्रयं संसृष्टिश्च लभ्यत एव । 'चलापाङ्गां दृष्टिम्' इत्यत्र हि रूपकव्यतिरेकस्य प्राग्व्याख्यातस्य शृङ्गारानुग्राहकत्वं स्वभावोक्तेः शृङ्गारस्य चैकानुप्रवेशः । 'उप्पह जाया' इति गाथायां पामरस्वभावोक्तिर्वा ध्वनिर्वेति प्रकरणाद्यभावे एकतरग्राहकं प्रमाणं नास्ति ।

यद्यप्यलङ्कारो रसमवश्यमनुगृह्णाति, तथापि 'नाति निर्वहणैषिता' इति यदभिप्रायेणोक्तं तत्र सङ्करासम्भवात्संसृष्टिरेवालङ्कारेण रसध्वनेः । यथा–'बाहुलतिकापाशेन बद्ध्वा दृढम्' इत्यत्र । **प्रभेदान्तराणामपी**ति । रसादिध्वनिव्यतिरिक्तानाम् ।

बालप्रिया

सुहृत्वसाक्षित्वयोरचेतनेषु लतावेश्मसु बाधात्सुहृत्पदमुपकारित्वेन साक्षिपदमासन्नत्वेन रूपेण च लक्षयति । उपकारादिगतातिशयो व्यंग्यश्चेत्यनयोः पदयोर्ध्वनिरित्यर्थः । पदेनाभिव्यक्त इति सम्बन्धः । **गुणत्व**मिति । वाच्यं प्रतीति शेषः ।

वाच्यालङ्कारसङ्कीर्णत्वमित्यत्रालङ्कारे वाच्यत्वविशेषणस्य फलं दर्शयति—**व्यङ्ग्यत्व** इत्यादि । **उक्तभेदाष्टक** इति । सङ्करसंसृष्टिकृतभेदाष्टक इत्यर्थः । **एवंविध**मिति । रसवत्सालङ्कारं चेत्यर्थः । सुव्यवस्थितत्वं दर्शयति—**विवक्षे**त्यादि । **शृङ्गारानुग्राहकत्व**मिति । शृङ्गारेण सहानुग्राह्यानुग्राहकभाव इत्यर्थः । नायकान्तरगततत्तच्चेष्टादर्शनस्य रत्युद्दीपकत्वादिति भावः । **इति गाथाया**मिति । पूर्वोदाहृतायामिति शेषः । **प्रकरणाद्यभाव** इति निमित्ते सप्तमी ।

एवं त्रिविधस्य वाच्यालङ्कारसङ्करस्योदाहरणं प्रदर्श्य, तत्संसृष्टेर्विषयमुदाहरणं च दर्शयिष्यन्नाह—**यद्यपी**त्यादि । **यदभिप्राये**णेति । अनुग्राहकत्वाभावाभिप्रायेणेत्यर्थः । **इत्यत्रे**ति । अत्र हि रूपकेण रसस्य संसृष्टिरेवेत्यर्थः । वक्ष्यमाणोपपत्त्यर्थमाह—**निष्पादने**त्यादि । व्यापारवतीत्यादीनि पदानि विवृणोति—**तत्रे**त्यादिना ।

या व्यापारवती रसान् रसयितुं काचित्कवीनां नवा
दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती ।

## लोचनम्

**व्यापारवतीति** । निष्पादनप्राणो हि रस इत्युक्तम् । तत्र विभावादियोजनात्मिका वर्णना, ततः प्रभृति घटनापर्यन्ता क्रिया व्यापारः, तेन सततयुक्ता । **रसानिति** । रस्यमानतासारान् स्थायिभावान् रसयितुं रस्यमानतापत्तियोग्यान् कर्तुम् । **काचिदिति** लोकवार्तापतितबोधावस्थात्यागेनोन्मीलन्ती । अत एव ते कवयः वर्णनायोगात् तेषाम् । **नवेति** । क्षणेक्षणे नूतनैर्नूतनै वैचित्र्यैर्जगन्त्यासूत्रयन्ती । **दृष्टेति** । प्रतिभारूपा, तत्र दृष्टिश्चाक्षुषं ज्ञानं षाडवादि रसयतीति विरोधालङ्कारोऽत एव नवा । तदनुगृहीतश्च ध्वनिः, तथाहि चाक्षुषं ज्ञानं नाविवक्षितमत्यन्तमसम्भवाभावात् । न चान्यपरम् ; अपि त्वर्थान्तरे ऐन्द्रियकविज्ञानाभ्यासोल्लसिते प्रतिभानलक्षणेऽर्थे संक्रान्तम् । संक्रमणे च विरोधोऽनुग्राहक एव । तद्वक्ष्यति—'विरोधा-

## बालप्रिया

**विभावादीति** । विभावानुभावयर्थैरित्यर्थः । **घटनेति** । तत्तत्पदसङ्घटनेत्यर्थः । **क्रियेति** । तत्तदनुसन्धानात्मिका मनःक्रियेत्यर्थः । नित्ययोगे मतुबित्याह—**तेनेत्यादि** । युक्तत्वं जन्यजनकभावसम्बन्धेन बोध्यम् । रसानित्यस्य वाच्यार्थविवरणम्—**रस्यमानतासारानिति** । रसपदेन प्रकृते विवक्षितमाह—**स्थायिभावानिति** । **लोकयात्रापतितबोधेति** । लौकिकतत्तद्वस्तुविषयकज्ञानेत्यर्थः । **अतएवेति** । दृष्ट्युन्मीलनादेवेत्यर्थः । कविपदयोगार्थमाह—**वर्णनायोगादिति** । **आसूत्रयन्ती** प्रकाशयन्ती । वक्ष्यमाणं सङ्क्रमणं मनसि कृत्याह—**प्रतिभारूपेति** । अत्र दृष्टिश्चाक्षुषज्ञानम् । रसान् रसयितुं षाडवादिपेयद्रव्याणि मधुरादिरसयुक्तानि कर्तुम्, यद्वा—षाडवादिगतमधुरादिरसानास्वादयितुं व्यापारवतीति विरुद्धार्थस्य प्रतीत्या विरोधाभासालङ्कार इत्याह—**तत्र दृष्टिरित्यादि** । विरोधद्योतकमाह—**अतएवेत्यादि** । **नवेति** विरोधद्योतकमिति भावः । **ध्वनिः** दृष्टिरित्यर्थान्तरसङ्क्रमितवाच्यध्वनिः । **नाविवक्षितमत्यन्तमिति** । अत्यन्ततिरस्कृतं नेत्यर्थः । **असम्भवाभावादिति** । कविगतस्य चन्द्रोद्यानादिचाक्षुषज्ञानस्यापि रसनिष्पादनोपयोगित्वादिति भावः । **न चान्यपरमिति** । व्यंग्यपरं विवक्षितं च नेत्यर्थः । **अपितु प्रतिभानलक्षणे अर्थान्तरे सङ्क्रान्तमिति** । दृष्टिपदमत्र प्रतिभात्वेन रूपेण ज्ञानं लक्षयतीत्यर्थः । प्रतिभानस्यातिस्फुटत्वादिकमत्र व्यंग्यम् । मुख्यार्थसम्बन्धं दर्शयितुमाह—**ऐन्द्रियकेत्यादि** । ऐन्द्रियकं विज्ञानं लौकिकतत्तद्विषयकचाक्षुषज्ञानं तस्याभ्यास आवृत्तिः तेनोल्लसिते प्रकाशिते इत्यर्थः । उक्तमर्थं वृत्त्या सङ्गमयति—**तद्वक्ष्यतीत्यादि** ।

ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं
श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम् ॥

लोचनम्

लङ्कारेण' इत्यादिना । या चैवंविधा दृष्टिः परिनिष्ठितोऽचलः अर्थविषये निश्चेतव्ये विषये उन्मेषो यस्याः । तथा परिनिष्ठिते लोकप्रसिद्धेऽर्थे न तु कविवदपूर्वस्मिन्नर्थे उन्मेषो यस्याः सा । विपश्चितामियं वैपश्चिती । ते अवलम्ब्येति । कवीनामिति वैपश्चितीति वचनेन नाहं कविर्न पण्डित इत्यात्मनोऽनौद्धत्यं ध्वन्यते । अनात्मीयमपि दरिद्रगृह इवोपकरणतयान्यत आहृतमेतन्मया दृष्टिद्वयमित्यर्थः । ते द्वे अपीति । न ह्येकया दृष्ट्या सम्यङ्निर्वर्णनं निर्वहति । विश्वमित्यशेषम् । अनिशमिति । पुनः पुनरनवरतम् । निर्वर्णयन्तो वर्णनया, तथा निश्चितार्थं वर्णयन्तः इदमित्थमिति परामर्शानुमानादिना निर्भज्य निर्वर्णनं किमत्र सारं स्यादिति तिलशस्तिलशो विचयनम् । यच्च निर्वर्ण्यते तत्खलु मध्ये व्यापार्यमाणया मध्ये चार्थविशेषु निश्चितोन्मेषया निश्चलया दृष्ट्या सम्यङ्निर्वर्णितं भवति । वयमिति । मिथ्यातत्त्वदृष्ट्याहरणव्यसनिन इत्यर्थः । श्रान्ता इति । न केवलं सारं न लब्धं यावत्प्रत्युत खेदः प्राप्त इति भावः । चशब्दस्तुशब्दस्यार्थे । अब्धिशयनेति । योगनिद्रया त्वमत एव सारस्वरूपवेदी स्वरूपावस्थित इत्यर्थः । श्रान्तस्य शयनस्थितं प्रति बहुमानो भवति । त्वद्भक्तीति । त्वमेव परमात्मस्वरूपो विश्वसारस्तस्य भक्तिः श्रद्धादिपूर्वक उपासनाक्रमजस्तदावेश-

बालप्रिया

अर्थविषय इत्यस्यार्थमाह—निश्चेतव्य इत्यादि । अन्यथापि व्याचष्टे–तथेत्यादि । ते अवलम्ब्येत्यनेन ध्वनितमर्थमुक्त्वा तद्वाच्यार्थमाह—अनात्मीयमित्यादि । गृह इवेति । अविद्यमानं मण्डनादिकमिति शेषः । द्वे अपीत्युक्तेः फलमाह—न हीत्यादि । अनिशमित्यस्यार्थद्वयमाह—पुनरित्यादि । कविदृष्ट्यवलम्बनेन निर्वर्णनं द्वेधा विवृणोति—निर्वर्णयन्तो वर्णनयेति । तथेत्यादीति च । वर्णनया निर्वर्णयन्तो वीक्षमाणाः । विपश्चिद्दृष्ट्यवलम्बनेन निर्वर्णनं व्याख्याति—इदमित्थमित्यादि । निर्भज्य निर्वर्णनमेव स्फुटयति—किमत्रेत्यादि । दृष्टिद्वयालम्बनेन निर्वर्णनस्य फलम्—न ह्येकयेत्यादि । पूर्वोक्तमेव विशदयति–यच्चेत्यादि । वयमित्यस्य भावार्थमाह–मिथ्येत्यादि । मिथ्यादृष्टिः कविदृष्टिः तत्त्वदृष्टिः विपश्चिद्दृष्टिः, तयोराहरणे व्यसनिनस्तात्पर्यवन्त इत्यर्थः । तुशब्दस्यार्थ इति । विशेषरूपार्थबोधक इत्यर्थः । अब्धिशयनेत्यस्य गम्यार्थमाह—योगनिद्रयेत्यादि । अत एवेति । त्वद्भक्तितुल्यस्य सुखस्याभावादेवेत्यर्थः । सारेति । विश्वसारभूतं यत्स्वस्वरूपं तद्वेदीत्यर्थः । व्यङ्ग्यान्तरं च दर्शयति—श्रान्तस्येत्यादि । तदावेश इति । तद्विषयकप्रेमातिशय इत्यर्थः । यद्वा–अन्तःकरणवृत्तेस्तदाकाराकारितत्वमित्यर्थः । भक्तेः स्वरूपं

इत्यत्र विरोधालङ्कारेणार्थान्तरसंक्रमितवाच्यस्य ध्वनिप्रभेदस्य सङ्कीर्णत्वम् ।

वाच्यालङ्कारसंसृष्टत्वं च पदापेक्षयैव । यत्र हि कानिचित्पदानि

लोचनम्

स्तेन तुल्यमपि न लब्धमास्तां तावत्तज्जातीयम् ।

एवं प्रथममेव परमेश्वरभक्तिभाजः कुतूहलमात्रावलम्बितकविप्रामाणिकोभयवृत्तेः पुनरपि परमेश्वरभक्तिविश्रान्तिरेव युक्तेति मन्वानस्येयमुक्तिः । सकलप्रमाणपरिनिश्चितदृष्टादृष्टविषयविशेषजं यत्सुखं, यदपि वा लोकोत्तरं रसचर्वणात्मकं तत उभयतोऽपि परमेश्वरविश्रान्त्यानन्दः प्रकृष्यते तदानन्दविप्रुण्मात्रावभासो हि रसास्वाद इत्युक्तं प्रागस्माभिः । लौकिकं तु सुखं ततोऽपि निकृष्टप्रायं बहुतरदुःखानुषङ्गादिति तात्पर्यम् । तत्रैव दृष्टिशब्दापेक्षयैकपदानुप्रवेशः । दृष्टिमवलम्ब्य निर्वर्णनमिति विरोधालङ्कारो वाश्रीयताम् । अन्धपदन्यासेन दृष्टिशब्दोऽत्यन्ततिरस्कृतवाच्यो वास्तु इत्येकतरनिश्चये नास्ति प्रमाणम् , प्रकारद्वयेनापि हृद्यत्वात् । न च पूर्वत्राप्येवं वाच्यम् । नवाशब्देन शब्दशक्त्यनुरणनतया विरोधस्य सर्वथावलम्बनात् ।

एवं सङ्करं त्रिविधमुदाहृत्य संसृष्टिमुदाहरति—**वाच्येति** । सकलवाक्ये हि यद्यलङ्कारोऽपि व्यङ्ग्यार्थोऽपि प्रधानं तदानुग्राह्यानुग्राहकत्वसङ्करस्तदभावे त्वसङ्गतिरि-

बालप्रिया

तस्य परमानन्दरूपत्वं च भक्तिरसायनादिग्रन्थेषु प्रदर्शितम् ।

श्लोकस्यास्यावतारिकामाह—**एवमित्यादि** । एवमियमुक्तिरिति सम्बन्धः । श्लोकस्यास्य पार्यन्तिकं तात्पर्यार्थमाह—**सकलेत्यादि** । वृत्तौ सङ्कीर्णत्वमित्यनेनानुग्राह्यानुग्राहकभावेन सङ्करः एकपदानुप्रवेशसङ्करश्च विवक्षित इति दर्शयति—तत्रेत्यादि । **तत्रैव** उक्तश्लोक एव । **एकपदानुप्रवेश** इति । विरोधालङ्कारेण सहार्थान्तरसङ्क्रमितवाच्यस्य ध्वनेरिति शेषः । सन्देहसङ्करमप्यत्र दर्शयति—**दृष्टिमवलम्ब्येत्यादि** । **विरोधालङ्कारो वेति** । ते अवलम्ब्य निर्वर्णयन्त इत्यत्र ते इति तत्पदेन दृष्टिपदवाच्यार्थस्य दर्शनस्य परामर्शे दर्शनमवलम्ब्य पश्यन्त इति विरुद्धार्थस्य प्रतीत्या विरोधालङ्कारो वेत्यर्थः । वक्ष्यमाणमर्थमादायात्र विरोधपरिहारः । **अन्धेत्यादि** । निःश्वासान्ध इत्यादावन्धादिपदेनेवात्यन्ततिरस्कृतवाच्येन दृष्टिपदेन लक्ष्यस्य प्रतिभारूपार्थस्य परामर्शेऽत्यन्ततिरस्कृतवाच्यो ध्वनिर्वेत्यर्थः । **पूर्वत्रापीति** । या दृष्टिः रसान् रसयितुं व्यापारवतीत्यत्रापीत्यर्थः । **एवमिति** । सन्देहसङ्कर इत्यर्थः । **नवेत्यादि** । नवाशब्देनावलम्बनादिति सम्बन्धः । नवेति शब्देन द्योतनादित्यर्थः । **शब्दशक्त्यनुरणनतयेति** विशेषणे तृतीया ।

**उदाहरतीति** । दर्शयतीत्यर्थः । **सकलवाक्य** इति । सम्पूर्णवाक्य इत्यर्थः ।

वाच्यालङ्कारभाञ्जि कानिचिच्च ध्वनिप्रभेदयुक्तानि । यथा—

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।

लोचनम्

त्यलङ्कारेण वा ध्वनिना वा पर्यायेण द्वाभ्यामपि वा युगपत्पदविश्रान्ताभ्यां भाव्यमिति त्रयो भेदाः । एतद्गर्भीकृत्य सावधारणमाह—**पदापेक्षयैवेति** । यत्रानुग्राह्यानुग्राहकभावं प्रत्याशङ्कापि नावतरति तं तृतीयमेव प्रकारमुदाहर्तुमुपक्रमते—**यत्र हीति** । यस्माद्यत्र कानिचिदलङ्कारभाञ्जि कानिचिद्ध्वनियुक्तानि, यथा दीर्घीकुर्वन्नित्यत्रेति । तथाविधपदापेक्षयैव वाच्यालङ्कारसंसृष्टत्वमित्यावृत्त्या पूर्वग्रन्थेन सम्बन्धः कर्तव्यः । **अत्र हीति** । अत्रत्यो हिशब्दो मैत्रीपदमित्यस्यानन्तरं योज्य इति ग्रन्थसङ्गतिः ।

**दीर्घीकुर्वन्निति** । सिप्रावातेन हि दूरमप्यसौ शब्दो नीयते, तथा सुकुमारपवनस्पर्शजातहर्षाः चिरं कूजन्ति, तत्कूजितं च वातान्दोलितसिप्रातरङ्गजमधुरशब्दमिश्रं भवतीति दीर्घत्वम् । **पट्विति** । तथासौ सुकुमारो वायुर्येन तज्जः शब्दः सारसकूजितमपि नाभिभवति प्रत्युत तत्सब्रह्मचारी तदेव दीपयति । न च दीपनं तदीयमनुपयोगि यतस्तन्मदेन कलं मधुरमाकर्णनीयम् । **प्रत्यूषेष्विति** । प्रभातस्य तथाविधसेवावसरत्वम् । बहुवचनं सदैव तत्रैषा ह्यतेति निरूपयति । स्फुटितान्य-

बालप्रिया

**तदभाव** इति । तत्सङ्कराभाव इत्यर्थः । **पर्यायेणेति** । पदविश्रान्तेन भाव्यमिति शेषः । **तृतीयमेवेति** । द्वाभ्यामपि युगपत् पदविश्रान्ताभ्यां भाव्यमित्युक्तमेवेत्यर्थः । 'यत्रे'त्यादिवाक्यं सङ्गमयति—**यस्मादित्यादि** । **यस्मादिति** हिशब्दार्थकथनम् । **आवृत्येति** । वाच्यालङ्कारसंसृष्टत्वं पदापेक्षयैवेति पदानामावृत्तिः तत्र पदापेक्षयेत्यस्य तथाविधपदापेक्षयेत्यर्थश्चेति भावः । इदमुपलक्षणं तत्रेति शेषश्च बोध्यः । दीर्घीकुर्वन्नित्यनेनोक्तं सिप्रावातहेतुकं कूजितस्य दीर्घत्वं दैशिकं कालिकं स्वसजातीयसंवलनकृतं चेति त्रिविधमिति विवृणोति—**सिप्रावातेनेत्यादि दीर्घत्वमित्यन्तेन** । पटु समर्थं दीर्घीकुर्वन्निति क्रियाविशेषणमित्यभिप्रायेण व्याचष्टे—**तथेत्यादि** । **सुकुमारः** मन्दः । **दीपयति** पोषयति यतस्तन्मधुरमतो नानुपयोगीति सम्बन्धः । **तथाविधसेवेति** । सुरतग्लानिहरणादिरूपसेवेत्यर्थः। **तत्रेति** । उज्जयिन्यामित्यर्थः । **निरूपयति** दर्शयति । स्फुटितानीत्यस्य त्रुटितानीत्यर्थं मनसि कृत्य तत्र हेतुं गम्यं दर्शयति—**अन्तरित्यादि** । स्फुटितानीत्यनेनार्थान्तरं च विव-

यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥

लोचनम्

न्तर्वर्तमानमकरन्दभरेण। तथा स्फुटितानि विकसितानि नयनहारीणि यानि कमलानि तेषां य आमोदस्तेन या मैत्री अभ्यासाङ्गावियोगपरस्परानुकूल्यलाभस्तेन कषाय उपरक्तो मकरन्देन च कषायवर्णीकृतः। स्त्रीणामिति। सर्वस्य तथाविधस्य त्रैलोक्यसारभूतस्य य एवं करोति सुरतकृतां ग्लानिं तान्तिं हरति, अथ च तद्विषयां ग्लानिं पुनः सम्भोगाभिलाषोद्दीपनेन हरति।

न च प्रसह्यप्रभुततयापि त्वङ्गानुकूलो ह्यस्पर्शः हृदयान्तर्भूतश्च। प्रियतमे तद्विषये प्रार्थनार्थं चाटूनि कारयति। प्रियतमोऽपि तत्पवनस्पर्शप्रबुद्धसम्भोगाभिलाषः। प्रार्थनार्थं चाटूनि करोतीति तेन तथा कार्यत इति परस्परानुरागप्राणश्रृङ्गारसर्वस्वभूतोऽसौ पवनः। युक्तं चैतत्तस्य यतः सिप्रापरिचितोऽसौ वात इति नागरिको न त्ववि-

बालप्रिया

क्षितमित्याह—तथेत्यादि। भावार्थमाह—नयनेति। मैत्रीपदमुख्यार्थस्यात्र बाधात्तत्पदेन विवक्षितं दर्शयति—अभ्यासङ्गेत्यादि। अभ्यासङ्गस्य संश्लेषस्यावियोगोऽविच्छेदः अविच्छिन्नस्संश्लेष इति यावत्। तेन परस्परानुकूल्यस्य परस्परोपकारित्वस्य लाभ इत्यर्थः। अत्राविच्छिन्नस्संश्लेषो लक्ष्यार्थः, परस्परानुकूल्यलाभस्तु व्यंग्य इति विवेकः। उपरक्तः सम्बद्धः। अर्थान्तरं चाह—मकरन्देनेत्यादि। पीतमिश्रो रक्तः कषायवर्णः। सर्वस्येति बहुवचनार्थकथनम्। तथाविधस्य स्त्रीत्वविशिष्टस्य। त्रैलोक्येत्यादि गम्यार्थकथनम्। सुरतग्लानिमित्येतत्सुरतकृतां ग्लानिं सुरतविषयां ग्लानिमित्युभयथा विवृणोति—सुरतकृतामित्यादि। तान्तमिति। शारीरं श्रममित्यर्थः। ग्लानिमिति। अनुत्साहमित्यर्थः।

न चेति। हरतीत्यनुषज्यते। अङ्गस्य हृदयस्यानुकूल इत्यर्थोऽपीत्याह—हृदयान्तर्भूत इति। स्निग्ध इत्यर्थः। प्रियतमे इति च पदच्छेदमभिप्रेत्य प्रियतमे प्रार्थना चाटुकार इति वातविशेषणतयाऽपि योजयति—प्रियतम इत्यादि। प्रियतम इति सप्तम्यन्तस्य विवरणम्—तद्विषय इति। प्रार्थनार्थमिति। स्त्रीणां सम्भोगप्रार्थनोत्पादनमित्यर्थः। चाटुकार इति ण्यन्तात्कर्तरि प्रत्यय इत्याह—चाटूनि

१. अयं शब्दो 'नगरात्कुत्सनप्रावीण्ययोः' इति पाणिनीयसूत्रेण ठका निष्पन्नः। तत्रभवता भट्टोजिदीक्षितेन तु नागरिकशब्दश्चौरशिल्पिनोरुदाहृतो न तु सामान्यतो निपुणे। अत एव कालिदासेनापि तादृशेऽर्थे नगरपदं प्रायोजि—'नगराणामुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि' इति मेघदूते।

**अत्र हि मैत्रीपदमविवक्षितवाच्यो ध्वनिः । पदान्तरेष्वलंकारान्तराणि । संसृष्टालंकारान्तरसंकीर्णो ध्वनिर्यथा—**

लोचनम्

दग्धो ग्राम्यप्राय इत्यर्थः । प्रियतमोऽपि रतान्तेऽङ्गानुकूलः संवाहनादिना प्रार्थनार्थं चाटुकार एवमेव सुरतग्लानिं हरति । कूजितं चानङ्गीकरणवचनादि मधुरध्वनितं दीर्घीकरोति । चाटुकरणावसरे च स्फुटितं विकसितं यत्कमलकान्तिधारिवदनं तस्य यामोदमैत्री सहजसौरभपरिचयस्तेन कषाय उपरक्तो भवति । अङ्गेषु चातुष्षष्टिकप्रयोगेष्वनुकूलः । एवं शब्दरूपगन्धस्पर्शा यत्र हृद्या यत्र च पवनोऽपि तथा नागरिकः स तवाऽवश्यमभिगन्तव्यो देश इति मेघदूते मेघं प्रति कामिन इयमुक्तिः । उदाहरणे लक्षणं योजयति—**मैत्रीपदमिति** । हिशब्दोऽनन्तरं पठितव्य इत्युक्तमेव । **अलङ्कारान्तराणीति** । उत्प्रेक्षास्वभावोक्तिरूपकोपमाः क्रमेणेत्यर्थः । एवमियता

सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सहप्रभेदैः स्वैः ।

सङ्करसंसृष्टिभ्याम् ।

इत्येतदन्तं व्याख्यायोदाहरणानि च निरूप्य 'पुनरपि' इति यत्कारिकाभागे पदद्वयं तस्यार्थं प्रकाशयत्युदाहरणद्वारेणैव—**संसृष्टेत्यादि** । पुनःशब्दस्यायमर्थः—न केवलं ध्वनेः स्वप्रभेदादिभिः संसृष्टिसङ्करौ विवक्षितौ यावत्तेषामन्योन्यमपि स्वप्रभेदानां

बालप्रिया

**कारयतीति** । एतदेव विवृणोति—**प्रियतमोऽपीत्यादि** । **तेनेति** । वातेनेत्यर्थः । **परकपरेत्यादि** । स्त्रीणां प्रियतमस्य च सम्भोगाभिलाषोद्दीपकत्वादिति भावः । **सिप्रापरिचित** इति सिप्राया नायिकात्वं गम्यते । **इतीति** हेतौ । उपमाने प्रियतमेऽपि विशेषणानि योजयति-**प्रियतमोऽपीत्यादि** । संवाहनादिना अङ्गानुकूल इति योजना । **चाटुकार** इति । चाटुवाक्यकर्तेत्यर्थः । **अनङ्गीकरणवचनेति** । माऽलमित्यादिवचनेनेत्यर्थः । मदकलमित्यस्य विवरणम्—**मधुरध्वनितमिति** । **चाटुष्वि**त्यादि । प्रियतमचाटुवाक्यश्रवणावसर इत्यर्थः । **विकसितमिति** । चाटुश्रवणजनितस्मितेनेति भावः । कमलपदं साध्यवसानलक्षणया मुखपरमित्याह-**कमलेत्यादि** । **वदनमिति** । स्त्रीणामिति शेषः । अङ्गानुकूल इत्येतदन्यथाऽपि व्याचष्टे—**अङ्गेष्वि**त्यादि । श्लोकस्यास्य सारार्थं दर्शयन् विवरणमुपसंहरति—**एवमित्यादि** । **स देश इति** । उज्जयिनीदेश इत्यर्थः । **उत्प्रेक्षेत्यादि** । पटु दीर्घीकुर्वन्नित्यत्र गम्योत्प्रेक्षा, प्रत्यूषस्वभावोक्तिः, अङ्गानुकूलः स्निग्ध इत्यस्य वायावारोपाद्रूपकं, यद्वा—रूपकमित्यस्य रूपकातिशयोक्तिरित्यर्थः । कमलपदेन मुखस्य बोधनात्तत्र सा बोध्या । प्रियतम इवेत्युपमा चेत्यर्थः ।

संसृष्टेत्यादिग्रन्थमवतारयति—**एवमियतेत्यादि** । **तेषामन्योन्यमपीति** ।

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥

अत्र हि समासोक्तिसंसृष्टेन विरोधालंकारेण संकीर्णस्यालक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रकाशनम्। दयावीरस्य परमार्थतो वाक्यार्थीभूतत्वात्।

लोचनम्

स्वप्रभेदैर्गुणीभूतव्यङ्ग्येन वा सङ्कीर्णानां संसृष्टानां च ध्वनीनां सङ्कीर्णत्वं संसृष्टत्वं च दुर्लक्षमिति विस्पष्टोदाहरणं न भवतीत्यभिप्रायेणालङ्कारस्यालंकारेण संसृष्टस्य संकीर्णस्य वा ध्वनौ संकरसंसर्गौ प्रदर्शनीयौ।

तदस्मिन् भेदचतुष्टये प्रथमं भेदमुदाहरति—दन्तक्षतानीति। बोधिसत्त्वस्य स्वकिशोरभक्षणप्रवृत्तां सिंहीं प्रति निजशरीरं वितीर्णवतः केनचिच्चाटुकं क्रियते। प्रोद्भूतः सान्द्रः पुलकः परार्थसम्पत्तिजेनानन्दभरेण यत्र। रक्ते रुधिरे मनोऽभिलाषो यस्याः, अनुरक्तं च मनो यस्याः। मुनयश्चोद्बोधितमदनावेशाश्चेति विरोधः। जातस्पृहैरिति च वयमपि कदाचिदेवं कारुणिकपदवीमधिरोक्ष्यामस्तदा सत्यतो मुनयो भविष्याम इति मनोराज्ययुक्तैः। समासोक्तिश्च नायिकावृत्तान्तप्रतीतेः। दयावीरस्येति। दयाप्रयुक्तत्वादत्र धर्मस्य धर्मवीर एव दयावीरशब्देनोक्तः। वीरश्चात्र रसः, उत्साहस्यैव स्थायित्वादिति भावः। दयावीरशब्देन वा शान्तं व्यपदिशति। सोऽत्र

बालप्रिया

संसृष्टिसङ्करौ विवक्षितावित्यनुषङ्गः। अयमर्थ इति पूर्वेण सम्बन्धः। नन्वेवं वृत्तौ संसृष्टालङ्कारान्तरसङ्कीर्णत्वादिभेदमात्रप्रदर्शने किं बीजमित्यत आह—स्वप्रभेदानामित्यादि। ध्वनिनेति। ध्वनिना सहेत्यर्थः। दुर्लक्षमितीति। दुर्लक्षत्वाद्धेतोरित्यर्थः। विस्पष्टेति। सुस्पष्टेत्यर्थः। प्रदर्शनीयौ प्रदर्शयितुं शक्यौ।

प्रथमं भेदमिति। संसृष्टालङ्कारसङ्कीर्णत्वरूपं भेदमित्यर्थः। परार्थसम्पत्तिजेनेति। परपरित्राणजन्येनेत्यर्थः। नायिकासम्भोगजन्येन चेति। भवतश्शरीर इत्यनेन कामिनश्शरीर इति, मृगराजवध्वेत्यनेन मृगाख्यपुञ्जातिविशेषस्य वध्वेति च गम्यते। मुनिभिरपि जातस्पृहैरित्यत्र विषयविरक्तैरप्युद्बुद्धकामैरित्यर्थप्रतीत्या विरोध इत्याह—मुनयश्चेत्यादि। प्रकृतमर्थमाह—जातस्पृहैरित्यादि। मनोराज्ययुक्तैश्चेति योजना। मुनिना दयावीरस्याकथनादाह—दयेत्यादि। धर्मस्य दयाप्रयुक्तत्वादत्र दयावीरशब्देन धर्मवीर एवोक्त इति सम्बन्धः। पक्षान्तरमाह—दयावीरशब्देनेत्यादि। समासोक्तिसंसृष्टेनेत्यादिवृत्त्युक्तं विवृणोति—सोऽत्रेत्यादि। स रसः धर्मवीरश्शान्तो वा

संसृष्टालङ्कारसंसृष्टत्वं च ध्वनेर्यथा—

अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु ।
सोहइ पसारिअगीआणं णच्चिअं मोरवन्दाणम् ॥

लोचनम्

रसः संसृष्टालङ्कारेणानुगृह्यते । समासोक्तिमहिम्ना ह्ययमर्थः सम्पद्यते—यथा कश्चिन्मनोरथशतप्रार्थितप्रेयसीसम्भोगावसरे जातपुलकस्तथा त्वं परार्थसम्पादनाय स्वशरीरदान इति करुणातिशयोऽनुभावविभावसम्पदोद्दीपितः ।

द्वितीयं भेदमुदाहरति—संसृष्टेति । अभिनवं हृद्यं पयोदानां मेघानां रसितं येषु दिवसेषु । तथा पथिकान् प्रति श्यामायितेषु मोहजनकत्वाद्रात्रिरूपतामाचरितवत्सु । यदि वा पथिकानां श्यामायितं दुःखवशेन श्यामिका येभ्यः । शोभते प्रसारितग्रीवाणां मयूरवृन्दानां नृत्तम् । अभिनयप्रयोगरसिकेषु पथिकसामाजिकेषु सत्सु मयूरवृन्दानां प्रसारितगीतानां प्रकृष्टसारणानुसारिगीतानां तथा ग्रीवारेचकाय प्रसारितग्रीवाणां नृत्तं शोभते । पथिकान् प्रति श्यामा इवाचरन्तीति क्यच् । प्रत्ययेन लुप्तोपमा निर्दिष्टा । पथिकसामाजिकेष्विति कर्मधारयस्य स्पष्टत्वाद्रूपकम् । ताभ्यां ध्वनेः संसर्ग इति ग्रन्थकारस्याशयः । अत्रैवोदाहरणेऽन्यद्भेदद्वयमुदाहर्तुं शक्यमित्याशयेनोदाहरणान्तरं न दत्तम् । तथाहि—व्याघ्रादेराकृतिगणत्वे पथिकसामाजिकेष्वित्युपमारूपकाभ्यां

बालप्रिया

रसः । संसृष्टालङ्कारेणेति । समासोक्तिसंसृष्टेन विरोधालङ्कारेणेत्यर्थः । मुनिभिरपि जातस्पृहैरवलोकितानीत्यनेन दयावीरस्य परिपोषप्रतीत्या विरोधस्यानुग्राहकत्वं स्पष्टमिति मनसि कृत्य समासोक्तेस्तदुपपादयति—समासोक्तिमहिम्नेत्यादि । इतीति । इत्यर्थादिरित्यर्थः । अनुभावेत्यादि । अनुभावः सान्द्रपुलकाविर्भावः । आलम्बनविभावः सिंही । उद्दीपनविभावो दन्तक्षतादिरिति बोध्यम् ।

द्वितीयमिति । संसृष्टालङ्कारसंसृष्टत्वरूपमित्यर्थः । अभिनवेत्यादि वर्षावर्णनम् । अत्रादौ वाच्यमर्थं व्याचष्टे—अभिनवमित्यादि । पथिकान् विरहिणः । श्यामायितेष्वित्यत्र रात्रिवाचकात् श्यामाशब्दादाचारार्थे क्यजित्यभिप्रेत्य व्याचष्टे—मोहेत्यादि । श्यामायितमित्यस्य श्यामिकेत्यर्थमभिप्रेत्याह—यदि वेत्यादि । श्यामिका वर्णभेदः । छायान्तरदर्शनेनात्र व्यङ्ग्यमर्थं दर्शयति—अभिनयप्रयोगेत्यादि । प्रसारितगीतानामित्यस्य व्याख्यानम्—प्रकृष्टेत्यादि । अत्र पक्षे प्रसारितग्रीवाणामिति च योज्यमित्याह—तथेत्यादि । ध्वनेः संसृष्टालङ्कारसंसृष्टत्वं विवृणोति—पथिकानित्यादि । रूपकमिति । पथिकेषु सामाजिकत्वारोपादिति भावः । ध्वनेरिति । अभिनयप्रयोगेत्याद्युक्तस्य व्यङ्ग्यस्येत्यर्थः । संसर्गः संसृष्टिः । अन्य-

अत्र ह्युपमारूपकाभ्यां शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य ध्वनेः संसृष्टत्वम् ।

**एवं ध्वनेः प्रभेदाः प्रभेदभेदाश्च केन शक्यन्ते ।**
**संख्यातुं दिङ्मात्रं तेषामिदमुक्तमस्माभिः ॥ ४४ ॥**

अनन्ता हि ध्वनेः प्रकाराः सहृदयानां व्युत्पत्तये तेषां दिङ्मात्रं कथितम् ।

**इत्युक्तलक्षणो यो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः ।**
**सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः ॥ ४५ ॥**

उक्तस्वरूपध्वनिनिरूपणनिपुणा हि सत्कवयः सहृदयाश्च नियतमेव

लोचनम्

सन्देहास्पदत्वेन सङ्कीर्णाभ्यामभिनयप्रयोगे, अभिनवप्रयोगे च रसिकेष्विति प्रसारितगीतानामिति यः शब्दशक्त्युद्भवस्तस्य संसर्गमात्रमनुग्राह्यत्वाभावात् । 'पहिअसामाइएसु' इत्यत्र तु पदे सङ्कीर्णाभ्यां ताभ्यामुपमारूपकाभ्यां शब्दशक्तिमूलस्य ध्वनेः सङ्कीर्णत्वमेकव्यञ्जकानुप्रवेशादिति सङ्कीर्णालङ्कारसंसृष्टः । सङ्कीर्णालङ्कारसङ्कीर्णश्चेत्यपि भेदद्वयं मन्तव्यम् ॥ ४३ ॥

एतदुपसंहरति—**एवमिति** । स्पष्टम् ॥ ४४ ॥

अथ 'सहृदयमनःप्रीतये' इति यत्सूचितं तदिदानीं न शब्दमात्रमपि तु निर्व्यूढमित्याशयेनाह—**इत्युक्तेति** । यः प्रयत्नतो विवेच्यः अस्माभिश्चोक्तलक्षणो ध्वनिरेतदेव काव्यतत्त्वं यथोदितेन प्रपञ्चनिरूपणादिना व्याकर्तुमशक्नुवद्भिरलङ्कारैः रीतयः

बालप्रिया

**भेदद्वयमिति** । सङ्कीर्णालङ्कारसंसृष्टत्वसङ्कीर्णालङ्कारसङ्कीर्णत्वरूपभेदद्वयमित्यर्थः । सङ्कीर्णाभ्यामुपमारूपकाभ्यामिति सम्बन्धः । 'अहिणअ' इत्यस्य अभिनय अभिनव इत्युभयथाऽपि च्छायेति दर्शयन् ध्वनिं दर्शयति—**अभिनयेत्यादि** । **अनुग्राह्यत्वाभावादिति** । उपमारूपकाभ्यां तस्येत्यनुषङ्गः ॥ ४३ ॥

**एतदिति** । बहुप्रभेदकथनमित्यर्थः ॥ ४४ ॥

**सहृदयेत्यादि** । 'सहृदयमनःप्रीतये तत्स्वरूपं ब्रूमः' इति यदुक्तमित्यर्थः । **शब्दमात्रं** वाङ्मात्रम् । इत्युक्तलक्षण इत्यादिकारिकाद्वयमेकवाक्यमित्याह—**य इत्यादि** । उक्तेत्यत्र पूरयति—**अस्माभिरिति** । **एतदिति** य इत्यस्य प्रतिनिर्देशः । यथोदितमित्यस्य व्याकर्तुमित्यनेन सम्बन्ध इति दर्शयन् विवृणोति—**यथोदितेनेत्यादि** । **अन्ये त्वित्यादि** । इत्युक्तलक्षणोऽयं ध्वनिरिति पठन्तीत्यर्थः । एत

काव्यविषये परां प्रकर्षपदवीमासादयन्ति ।

अस्फुटस्फुरितं काव्यतत्त्वमेतद्यथोदितम् ।
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः ॥ ४६ ॥

एतद्ध्वनिप्रवर्तनेन निर्णीतं काव्यतत्त्वमस्फुटस्फुरितं सदशक्नुवद्भिः प्रतिपादयितुं वैदर्भी गौडी पाञ्चाली चेति रीतयः प्रवर्तिताः । रीतिलक्षणविधायिनां हि काव्यतत्त्वमेतदस्फुटतया मनाक्स्फुरितमासीदिति लक्ष्यते तदत्र स्फुटतया सम्प्रदर्शितेनान्येन रीतिलक्षणेन न किञ्चित् ।

शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः ।
वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे ॥ ४७ ॥

अस्मिन् व्यङ्ग्यव्यञ्जकभावविवेचनमये काव्यलक्षणे ज्ञाते सति याः काश्चित्प्रसिद्धा उपनागरिकाद्याः शब्दतत्त्वाश्रया वृत्तयो याश्चार्थतत्त्वसम्बद्धाः कैशिक्यादयस्ताः सम्यग्रीतिपदवीमवतरन्ति । अन्यथा तु तासामदृष्टार्थानामिव वृत्तीनामश्रद्धेयत्वमेव स्यान्नानुभवसिद्धत्वम् । एवं स्फुटतयैव लक्षणीयं स्वरूपमस्य ध्वनेः । यत्र शब्दानामर्थानां च केषाञ्चित्प्र-

लोचनम्

प्रवर्तिता इत्युत्तरकारिकया सम्बन्धः । अन्ये तु यच्छब्दस्थाने 'अयं' इति पठन्ति । प्रकर्षपदवीमिति । निर्माणे बोधे चेति भावः । व्याकर्तुमशक्नुवद्भिरित्यत्र हेतुः— अस्फुटं कृत्वा स्फुरितमिति । लक्ष्यत इति । रीतिर्हि गुणेष्वेव पर्यवसिता । यदाह— विशेषो गुणात्मा गुणाश्च रसपर्यवसायिन एवेति ह्युक्तं प्राग्गुणनिरूपणे 'शृङ्गार एव मधुरः' इत्यत्रेति ॥ ४५–४६ ॥

प्रकाशन्त इति । अनुभवसिद्धतां काव्यजीवितत्वे प्रयान्तीत्यर्थः । रीतिपद-

बालप्रिया

त्पक्षे इत्युक्तेत्यादिकमेकं वाक्यमस्फुटेत्यादिवाक्यान्तरं तत्रैतदित्यनेन ध्वनेः परामर्शश्चेति बोध्यम् । परां प्रकर्षपदवीमासादयन्तीत्यत्र पूरयति—निर्माणे बोधे चेति । 'अस्फुटस्फुरितं सदि'ति वृत्त्या तत्पदं हेतुगर्भमिति दर्शितं, तदेव स्पष्टयति—व्याकर्तुमित्यादि । 'इति लक्ष्यत' इत्युक्तं वृत्तौ तत्कथमित्यत उपपादयति—रीतिर्हीत्यादि । इत्यत्र इति ह्युक्तमिति सम्बन्धः ॥ ४५–४६ ॥

अनुभवसिद्धत्वमिति वृत्तौ वक्ष्यमाणं फलितमर्थं मनसिकृत्य विवृणोति—अनु-

तिपत्तृविशेषसंवेद्यं जात्यत्वमिव रत्नविशेषाणां चारुत्वमनाख्येयमवभासते काव्ये तत्र ध्वनिव्यवहार इति यल्लक्षणं ध्वनेरुच्यते केनचित्तदयुक्तमिति नाभिधेयतामर्हति । यतः शब्दानां स्वरूपाश्रयस्तावदक्लिष्टत्वे सत्यप्रयुक्तप्रयोगः । वाचकाश्रयस्तु प्रसादो व्यञ्जकत्वं चेति विशेषः । अर्थानां च स्फुटत्वेनावभासनं व्यङ्ग्यपरत्वं व्यङ्ग्यांशविशिष्टत्वं चेति विशेषः ।

तौ च विशेषौ व्याख्यातुं शक्येते व्याख्यातौ च बहुप्रकारम् । तद्व्यतिरिक्तानाख्येयविशेषसम्भावना तु विवेकावसादभावमूलैव । यस्मा-

लोचनम्

वीमिति । तद्वदेव रसपर्यवसायित्वात् । प्रतीतिपदवीमिति वा पाठः । नागरिकया ह्युपमितेत्यनुप्रासवृत्तिः शृङ्गारादौ विश्राम्यति । परुषेति दीप्तेषु रौद्रादिषु । कोमलेति हास्यादौ । तथा—'वृत्तयः काव्यमातृकाः' इति यदुक्तं मुनिना तत्र रसोचित एव चेष्टाविशेषो वृत्तिः । यदाह—

'कैशिकी श्लक्ष्णनेपथ्या शृङ्गाररससम्भवा' इत्यादि ।

इयता 'तस्याभावं जगदुरपरे' इत्यादावभावविकल्पेषु 'वृत्तयो रीतयश्च गताः श्रवणगोचरं, तदतिरिक्तः कोऽयं ध्वनिरि'ति । तत्र कथञ्चिदभ्युपगमः कृतः कथञ्चिच्च दूषणं दत्तमस्फुटस्फुरितमिति वचनेन । इदानीं वाचां स्थितमविषये' इति यदुक्तं तत्तु प्रथमोद्द्योते दूषितमपि दूषयति सर्वप्रपञ्चकथने हि असम्भाव्यमेवानाख्येयत्वमित्यभिप्रायेण । अक्लिष्टत्व इति । श्रुतिकष्टाद्यभाव इत्यर्थः । अप्रयुक्तस्य प्रयोग इत्यपौनरु-

बालप्रिया

भवेत्यादि । तद्वदेव रीतिवदेव । रीतिपदवीमवतरन्तीति प्रकाशन्त इत्यस्य विवरणमिति वक्तव्यं, तच्च न सम्भवति तयोर्भिन्नार्थत्वात् । किञ्च रीतिपदवीमवतरन्तीत्यत्र काव्यलक्षणज्ञानस्य हेतुत्वमपि दुर्घटमित्यतोऽन्यथैवात्र पाठ इत्याह—**प्रतीतिपदवीमिति** । वृत्तेः रसपर्यवसायितां विशिष्य दर्शयति—**नागरिकये**त्यादि । वृत्तौ—'यत्रे'त्यादि । रत्नविशेषाणां जात्यत्वमिव प्रतिपत्तृविशेषसंवेद्यं यत्र केषाञ्चिच्छब्दानामर्थानां च चारुत्वमनाख्येयमेवावभासत इत्यन्वयः । 'अयुक्तमि'तीति । अयुक्तत्वाद्धेतोरित्यर्थः। चारुत्वं नाम कश्चिद्विशेष इति वक्तव्यमित्यभिप्रेत्य नाभिधेयतामर्हतीत्युक्तमुपपादयति—'यत' इत्यादि । 'स्वरूपाश्रय' इति 'विशेष' इत्यनेनास्य सम्बन्धः ।

लोचने वृत्तानुवादपूर्वकमाह—**इयते**त्यादि । ध्वनिरितीति । यदुक्ते इत्यस्यात्रापकर्षः । **दूषयतीति** । यत्रेत्यादिनाऽनूद्य तदयुक्तमित्यादिना ग्रन्थेन दूषयतीत्यर्थः । अभिप्रायेण दूषयतीति सम्बन्धः । अक्लिष्टत्व इत्येतद्विवृणोति—**श्रुती**त्यादि । विवेका-

दनाख्येयत्वं सर्वशब्दागोचरत्वेन न कस्यचित्सम्भवति। अन्ततोऽनाख्येयशब्देन तस्याभिधानसम्भवात्। सामान्यसंस्पर्शिविकल्पशब्दागोचरत्वे सति, प्रकाशमानत्वं तु यदनाख्येयत्वमुच्यते क्वचित् तदपि काव्यविशेषाणां रत्नविशेषाणामिव न सम्भवति। तेषां लक्षणकारैर्व्याकृतरूपत्वात्। रत्नविशेषाणां च सामान्यसम्भावनयैव मूल्यस्थितिपरिकल्पनादर्शनाच्च। उभयेषामपि तेषां प्रतिपत्तृविशेषसंवेद्यत्वमस्त्येव। वैकटिका एव हि रत्नतत्त्वविदः, सहृदया एव हि काव्यानां रसज्ञा इति कस्यात्र विप्रतिपत्तिः।

यत्त्वनिर्देश्यत्वं सर्वलक्षणविषयं बौद्धानां प्रसिद्धं तत्तन्मतपरीक्षायां ग्रन्थान्तरे निरूपयिष्यामः। इह तु ग्रन्थान्तरश्रवणलवप्रकाशनं सहृदयवैमनस्यप्रदायीति न प्रक्रियते। बौद्धमतेन वा यथा प्रत्यक्षादिलक्षणं तथास्माकं ध्वनिलक्षणं भविष्यति। तस्माल्लक्षणान्तरस्याघटनादशब्दा-

लोचनम्

ख्यम्। ताविति शब्दगतोऽर्थगतश्च। विवेकस्यावसादो यत्र तस्य भावो निर्विवेकत्वम्। सामान्यस्पर्शी यो विकल्पस्ततो यः शब्दः दृष्टान्तेऽपि अनाख्येयत्वं नास्तीति दर्शयति—रत्नविशेषाणां चेति। ननु सर्वेण तन्न संवेद्यत इत्याशङ्क्याभ्युपगमेनैवोत्तरयति—उभयेषामिति। रत्नानां काव्यानां च।

ननु नार्थं शब्दाः स्पृशन्त्यपीति, अनिर्देश्यस्य वेदकमित्यादौ कथमनाख्येयत्वं वस्तूनामुक्तमिति चेदत्राह—यत्त्विति। एवं हि सर्वभाववृत्तान्ततुल्य एव ध्वनिरिति ध्वनिस्वरूपमनाख्येयमित्यतिव्यापकं लक्षणं स्यादिति भावः। ग्रन्थान्तर इति विनिश्चयटीकायां धर्मोत्तर्यां या विवृतिरमुना ग्रन्थकृता कृता तत्रैव तद्व्याख्यातम्।

बालप्रिया

वसादभावेत्यंशं व्याचष्टे—विवेकस्येत्यादि। सामान्येत्यादिकं विवृणोति—सामान्येत्यादि। सामान्यसंस्पर्शीति। जात्यादिसामान्यावगाहीत्यर्थः। विकल्प इति। सविकल्पकज्ञानमित्यर्थः। ततो यश्शब्द इति। तद्धेतुको व्यवहारात्मको यश्शब्द इत्यर्थः। नास्तीति दर्शयतीति। रत्नविशेषाणां जात्यत्वादिसामान्यस्य सम्भावनयैव मूल्यपरिकल्पनाया दर्शनादिति भावः। तद्विति। जात्यत्वं चारुत्वञ्चेत्यर्थः।

तद्ग्रन्थान्तरे निरूपयिष्याम इत्युक्त्या सूचितमनिर्देश्यत्वरूपलक्षणस्य दोषं दर्शयति—एवं हीत्यादि। सर्वभावेति। सर्वपदार्थेत्यर्थः। इति लक्षणमतिव्यापकं स्यादिति सम्बन्धः। मयैवेत्यर्थ इति। अनेन 'अनाख्येये'त्यादेः परिकरश्लोकत्वं दर्शितम्। अनाख्येयांशस्येति। अनाख्येयो योऽशः स्वरूपांशः तस्येत्यर्थः। भास इति। क्वचित् ग्रन्थे भाव इति च पाठः। तत्पक्षे अनाख्येयांशभावित्वमिति श्लोके

श्रुत्वाच्च तस्योक्तमेव ध्वनिलक्षणं साधीयः । तदिदमुक्तम्—

अनाख्येयांशभासित्वं निर्वाच्यार्थतया ध्वनेः ।
न लक्षणं, लक्षणं तु साधीयोऽस्य यथोदितम् ॥

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके
तृतीय उद्द्योतः ॥

लोचनम्

**उक्तमिति** । संग्रहार्थं मयैवेत्यर्थः । अनाख्येयांशस्याभासो विद्यते यस्मिन् काव्ये तस्य भावस्तत्र लक्षणं ध्वनेरिति सम्बन्धः । अत्र हेतुः—**निर्वाच्यार्थतयेति** । निर्विभज्य वक्तुं शक्यत्वादित्यर्थः । अन्यस्तु 'निर्वाच्यार्थतया' इत्यत्र निसो नञर्थत्वं परिकल्प्यानाख्येयांशभासित्वेऽयं हेतुरिति व्याचष्टे, तत्तु क्लिष्टम् । हेतुश्च साध्याविशिष्ट इत्युक्तव्याख्यानमेवेति शिवम् ।

काव्यालोके प्रथां नीतान् ध्वनिभेदान् परामृशत् ।
इदानीं लोचनं लोकान् कृतार्थान्संविधास्यति ॥
आसूत्रितानां भेदानां स्फुटतापत्तिदायिनीम् ।
त्रिलोचनप्रियां वन्दे मध्यमां परमेश्वरीम् ॥

इति श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तोन्मीलिते सहृदयालोकलोचने ध्वनिसङ्केते तृतीय उद्द्योतः ॥

बालप्रिया

पठनीयम् । **तदिति** । अनाख्येयस्वरूपत्वमित्यर्थः । निर्वाच्यार्थतयेति **निर्वाच्यार्थतयेति** वा पाठः । निरित्यस्य विवरणम्—विभज्येति । दूषणान्तरमाह—**हेतुश्चेत्यादि** । **साध्याविशिष्ट** इति । साध्यादभिन्न इत्यर्थः ।

**काव्यालोका** इति । **प्रथां नीतानिति** । विस्तृतानित्यर्थः । **परामृशदिति** हेतुगर्भम् । **लोचनमित्यादि** । यथा नयनं लोकान् कृतार्थान् विदधाति, तथेदं व्याख्यानमिति भावः ।

**आसूत्रितानामिति** । आसूत्रितानां भेदानां सम्यक्सूत्रैर्निर्दिष्टानां ध्वन्यादिभेदरूपाणां काव्यवाणीनां या **स्फुटताऽपत्तिः** । स्फुटत्वप्राप्तिस्तद्दायिनीम् । मध्यमा हि वैखर्याः स्फुटत्वं ददाति । **मध्यमामिति** । मध्यमारूपामित्यर्थः ।

शुभमस्तु सर्वं शिवम्

इति श्रीरामषारकरचितायां लोचनटिप्पण्यां तृतीय उद्योतः ॥

## चतुर्थ उद्द्योतः

एवं ध्वनिं सप्रपञ्चं विप्रतिपत्तिनिरासार्थं व्युत्पाद्य तद्व्युत्पादने

---

लोचनम्

### चतुर्थ उद्द्योतः

कृत्यपञ्चकनिर्वाहयोगेऽपि परमेश्वरः ।
नान्योपकरणापेक्षो यया तां नौमि शाङ्करीम् ॥

उद्योतान्तरसङ्गतिं विरचयितुं वृत्तिकार आह—**एवमिति । प्रयोजनान्तरमिति ।** यद्यपि 'सहृदयमनःप्रीतये' इत्यनेन प्रयोजनं प्रागेवोक्तं, तृतीयोद्योतावधौ च सत्काव्यं कर्तुं वा ज्ञातुं वेति तदेवेषत्स्फुटीकृतं, तथापि स्फुटतरीकर्तुमिदानीं यत्नः। यतस्सुस्पष्टरूपत्वेन विज्ञायते, अतोऽस्पष्टनिरूपितात्स्पष्टनिरूपणमन्यथैव प्रतिभातीति प्रयोजनान्तरमित्युक्तम् । अथवा पूर्वोक्तयोः प्रयोजनयोरन्तरं विशेषोऽभिधीयते; केन विशेषेण सत्काव्यकरणमस्य प्रयोजनं, केन च सत्काव्यबोध इति विशेषो निरूप्य-

बालप्रिया

### अथ चतुर्थोद्योतटिप्पणी प्रारभ्यते

अथोद्योतं चतुर्थं च लोचनस्य यथामति ।
किमपि व्याकरिष्यामि प्रसीदन्त्वत्र मे बुधाः ॥

**कृत्येति ।** कृत्यपञ्चकं सृष्ट्यादिरूपम् । यथोक्तं—"पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहारतिरोभावः तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य" इति । **यया** मायारूपया हेतुना । नान्योपकरणापेक्ष इति सम्बन्धः । मायारूपां यामेवापेक्षमाणः सृष्ट्यादिकं निर्वहतीत्यर्थः ।

**उद्योतान्तरसङ्गतिमिति ।** तृतीयोद्योतेन सह चतुर्थोद्योतस्य सङ्गतिमित्यर्थः । पूर्वोक्तस्यैव प्रयोजनस्य वक्ष्यमाणत्वात् प्रयोजनान्तरमित्युक्तिरयुक्तेत्याशङ्क्य समाधत्ते—**यद्यपीत्यादि ।** ननु प्रीतिरूपप्रयोजनस्योक्तत्वेऽपि वक्ष्यमाणं तदन्यदेवेत्यत आह—**तृतीयेत्यादि । तदेवेति ।** प्रयोजनमेवेत्यर्थः । **स्फुटतरीकर्तुमिति ।** तदेवेत्यनुषज्यते । **विज्ञायत इति ।** वक्ष्यमाणमिति शेषः । ततः किमत आह—**अत** इत्यादि । **अस्पष्टनिरूपितादिति ।** प्रयोजनादिति शेषः । सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः सद्भिः ध्वनिः प्रयत्नतो विवेच्य इत्युक्त्या सत्काव्यकरणज्ञानयोः ध्वनिविवेचनप्रयोजनत्वमर्थाल्लभ्यत इत्यतस्तत्प्रयोजनमस्पष्टनिरूपितमित्यर्थः । **स्पष्टनिरूपणमिति ।** स्पष्टमुक्तमित्यर्थः । प्रकारान्तरेण व्याचष्टे—**अथवेत्यादि ।** उक्तस्यैव विवरणम्—**केन विशेषेणेत्यादि । अस्येति ।** ध्वनिव्यु-

प्रयोजनान्तरमुच्यते—

**ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः ।**
**अनेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥ १ ॥**

य एष ध्वनेर्गुणीभूतव्यङ्ग्यस्य च मार्गः प्रकाशितस्तस्य फलान्तरं कविप्रतिभानन्त्यम् ।

कथमिति चेत्—

**अतो ह्यन्यतमेनापि प्रकारेण विभूषिता ।**
**वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि ॥ २ ॥**

लोचनम्

ते । तत्र सत्काव्यकरणे कथमस्य व्यापार इति पूर्वं वक्तव्यं निष्पादितस्य ज्ञेयत्वादिति तदुच्यते—**ध्वनेर्य** इति ॥ १ ॥

ननु ध्वनिभेदात् प्रतिभानामानन्त्यमिति व्यधिकरणमेतदित्यभिप्रायेणाशङ्कते—**कथमितीति** ।

अत्रोत्तरम्—**अतो हीति** । आसतान्तावद् बहवः प्रकाराः, एकेनाप्येवं भवतीत्यपिशब्दार्थः । एतदुक्तं भवति—वर्णनीयवस्तुनिष्ठः प्रज्ञाविशेषः प्रतिभानं, तत्र वर्णनीयस्य पारिमित्यादाद्यकविनैव स्पृष्टत्वात् सर्वस्य तद्विषयं प्रतिभानं तज्जातीयमेव स्यात् । ततश्च काव्यमपि तज्जातीयमेवेति भ्रष्ट इदानीं कविप्रयोगः, उक्तवैचित्र्येण तु त एवार्था निरवधयो भवन्तीति तद्विषयाणां प्रतिभानामानन्त्यमुपपन्नमिति । ननु प्रतिभानन्त्यस्य किं फलमिति निर्णेतुं **वाणी नवत्वमायातीत्युक्तं**, तेन वाणीनां काव्यवाक्यानां तावन्नवत्वमायाति । तच्च प्रतिभानन्त्ये सत्युपपद्यते, तच्चार्थानन्त्ये, तच्च ध्वनिप्रभेदादिति ।

बालप्रिया

त्पादनस्येत्यर्थः । **कथमस्य व्यापार इतीति** । ध्वनिप्रतिपादनं कथमुपयोगीत्येतदित्यर्थः । इत्येतदिति सम्बन्धः ॥ १ ॥

**व्यधिकरणमिति** । असङ्गतमित्यर्थः । 'अन्यतमेनापी'त्यपिशब्दं दर्शयति—**आसतामिति** । **एतदुक्तं भवतीति** । प्रथमकारिकोत्तरार्धेन द्वितीयकारिकया च वक्ष्यमाणो भावार्थः प्रदर्शितो भवतीत्यर्थः । तमेवाह—वर्णनीयेत्यादि **ध्वनिप्रभेदादित्यन्तेन** । वर्णनीयवस्तुनिष्ठः वर्णनीयतत्तद्वस्तुविषयकः । **प्रज्ञाविशेष इति** । स्फूर्तिरूप इत्यर्थः । कवेरिति शेषः । **तज्जातीयमिति** । आद्यकविप्रतिभानजातीयमित्यर्थः । **तज्जातीयमेवेति** । आद्यकविकाव्यजातीयमेवेत्यर्थः । **इतीति** हेतौ । **भ्रष्ट इति** । स्यादित्यनुषङ्गः । **उक्तवैचित्र्येणेति** । ध्वनिगुणीभूतव्यंग्यवैचित्र्येणेत्यर्थः । वाणीनामित्यस्य विवरणम्—**काव्यवाक्यानामिति** । **इतीति** समाप्तौ ।

अतो ध्वनेरुक्तप्रभेदमध्यादन्यतमेनापि प्रकारेण विभूषिता सती वाणी पुरातनकविनिबद्धार्थसंस्पर्शवत्यपि नवत्वमायाति । तथाह्यविवक्षित-वाच्यस्य ध्वनेः प्रकारद्वयसमाश्रयणेन नवत्वं पूर्वार्थानुगमेऽपि यथा--

स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोर्मिसरसः ।
गतानामारम्भः किसलयितलीलापरिमलः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः ॥

लोचनम्

तत्र प्रथममत्यन्ततिरस्कृतवाच्यान्वयमाह—**स्मितमिति** । मुग्धमधुरविभवस-रसकिसलयितपरिमलस्पर्शनान्यत्यन्ततिरस्कृतानि । तैरनाहतसौन्दर्यसर्वजनवाल्लभ्या-क्षीणप्रसरत्वसन्तापप्रशमनतर्पकत्वसौकुमार्यसार्वकालिकतत्संस्कारानुवृत्तित्वयत्नाभिलष-णीयसङ्गत्वानि ध्वन्यमानानि यानि, तैः स्मितादेः प्रसिद्धस्यार्थस्य स्थविरवेधोविहि-तधर्मव्यतिरेकेण धर्मान्तरपात्रता यावत् क्रियते, तावत्तदपूर्वमेव सम्पद्यत इति सर्वत्रेति मन्तव्यम् । **अस्येति** अपूर्वत्वमेव भासत इति दूरेण सम्बन्धः । सर्वत्रैवा-

बालप्रिया

'**स्मितमि**'ति । किंचित् स्मितं मन्दस्मितम् । मुग्धं भवति इति सर्वत्र शेषः । तरलश्च मधुरश्च तरलमधुरः । दृष्टिविभवः विभवविशिष्टा दृष्टिः । परिस्पन्दः प्रसरः । अभिनवा ये विलासास्तात्कालिका विशेषास्तेषामूर्मिभिः उत्तरोत्तरमुत्पद्यमा-नाभिः परम्पराभिः सरसः । किसलयितः किसलयसम्बन्धी लीलायाः परिमलो यत्र तथाभूतः । मोहयतीति व्युत्पत्त्या मोहकारित्वं "मुग्धा नववयःकामे"त्यादिना लक्षि-तं मौग्ध्यं वा यत्तद्वान्मुग्धशब्दस्य मुख्यार्थः । एवं मधुरविभावादिशब्दानां मधुररसै-श्वर्यादयो मुख्यार्थाः, तेषामत्र बाधात्तत्सादृश्येन निमित्तेन मुग्धादिशब्दाः स्मितादीन् लक्षयन्ति, तेन च स्मितादीनां सौन्दर्यविशेषादिकं द्योत्यत इत्याह—**मुग्धेत्यादि** । **मुग्धमधुरेत्यादि** । मुग्धमधुरादयो मुख्यार्थां इत्यर्थः । **अत्यन्ततिरस्कृता-नीति** । बाधादिति भावः । **तैरित्यस्य** ध्वन्यमानानीत्यनेन सम्बन्धः । अत्र यथा-संख्यं तेन स्मितस्य अनाहतमकृत्रिमं सौन्दर्यम् । दृष्टेः सार्वजनवाल्लभ्यमक्षीणप्रस-रत्वं च । वचसस्सन्तापप्रशमनत्वं तर्पकत्वं च, गमनस्य सुकुमारपादकृतत्वेन मान्द्यं सार्वकालिकलीलानुवृत्तित्वं च, तारुण्यस्य यत्नाभिलषणीयसङ्गतत्वं च ध्वन्यत इत्यर्थः । तैर्धर्मान्तरपात्रतेति सम्बन्धः । अनाहतसौन्दर्यादिरूपधर्मान्तरपात्रत्वमित्यर्थः । **स्थ-विरवेधाः** ब्रह्मा । **तदिति** । स्मितादिकमित्यर्थः । **इतीति** हेतौ । **सर्वत्रेत्यादि** । इत्थं सर्वत्र मन्तव्यमित्यर्थः । **अपूर्वत्वमेव भासत इति** । भाविभ्रमेत्यादौ स्मिता-

इत्यादिश्लोकस्य 'नानाभङ्गिभ्रमद्भ्रूः' इत्यादिश्लोकापेक्षयान्यत्वम् ।

युक्त्याऽनयानुसर्तव्यो रसादिर्बहुविस्तरः ।
मिथोऽप्यनन्ततां प्राप्तः काव्यमार्गो यदाश्रयात् ॥ ३ ॥

बहुविस्तारोऽयं रसभावतदाभासतत्प्रशमनलक्षणो मार्गो यथास्वं विभावानुभावप्रभेदकलनया यथोक्तं प्राक् । स सर्व एवानया युक्त्यानुसर्तव्यः । यस्य रसादेराश्रयादयं काव्यमार्गः पुरातनैः कविभिः सहस्रसंख्यैरसंख्यैर्वा बहुप्रकारं क्षुण्णत्वान्मिथोऽप्यनन्ततामेति । रसभावादीनां हि प्रत्येकं विभावानुभावव्यभिचारिसमाश्रयादपरिमितत्वम् । तेषां चैकैकप्रभेदापेक्षयापि तावज्जगद्वृत्तमुपनिबध्यमानं सुकविभिस्तदिच्छावशादन्यथा स्थितमप्यन्यथैव विवर्तते । प्रतिपादितं चैतच्चित्रविचारावसरे ।

लोचनम्

रतिरुक्ता, सोभयोरप्येकस्वरूपचित्तवृत्त्यनुप्रवेशमाचक्षाणा रतिं सुतरां पोषयति ॥ २ ॥

एवं मौलं भेदचतुष्टयमुदाहृत्यालक्ष्यक्रमभेदेष्वतिदेशमुखेन सर्वोपभेदविषयं निर्देशं करोति—**युक्त्यानयेति** । **अनुसर्तव्य** इति । उदाहर्तव्य इत्यर्थः । **यथोक्तमिति** ।

तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये ।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पना ॥

इत्यत्र । **प्रतिपादितं चैतदिति** । चशब्दोऽपिशब्दार्थे भिन्नक्रमः । एतदपि

बालप्रिया

तदसम्भवेन तत्सम्भवं विनेत्यर्थः । रतिरिति । निर्वृतिरित्यर्थः । **उक्तेति** । दर्शितेत्यर्थः । **सुतरामिति** । द्वितीयश्लोकतोऽप्यधिकमित्यर्थः ॥ २ ॥

**मौलं भेदचतुष्टयमिति** । अत्यन्ततिरस्कृतवाच्यार्थान्तरसङ्क्रमितवाच्याविवक्षितवाच्यस्य द्वौ भेदौ, असंलक्ष्यक्रमव्यंग्यसंलक्ष्यक्रमव्यंग्यौ विवक्षितान्यपरवाच्यस्य द्वौ भेदावित्येवमादिमं भेदचतुष्टयमित्यर्थः । **उदाहृत्येति** । अनेन तरङ्गेत्यादिकं संलक्ष्यक्रमव्यंग्योदाहरणमिति स्फुटीकृतं विक्रमोर्वशीयस्थं, द्वितीयोद्योतोदाहृतं तत्पद्यं तु यथा तदुदाहरणं भवति, तथा सहृदयैरालोचनीयम् । **नानाभङ्गी**त्यादिश्लोकस्समग्रतया नोपलब्धः । **अलक्ष्येति** । अलक्ष्यक्रमस्यावान्तरभेदेष्वित्यर्थः । कारिकास्थस्यानुसर्तव्य इत्यस्य व्याख्यानम्—**उदाहर्तव्य** इति । यथोक्तं प्रागित्यत्रत्यप्राक्पदार्थकथनं **तस्याङ्गानामित्यादि** । **अपिशब्दार्थ** इति । समुच्चय इत्यर्थः । इत्यत्र प्रतिपादितमिति सम्बन्धः । अतथास्थितानित्यत्र पूरयति—**बहिरिति** । हृदयाद्बहिर्लोक इत्य-

गाथा चात्र कृतैव महाकविना—

अतहट्ठिए वि तहसण्ठिए व्व हिअअम्मि जा णिवेसेइ ।
अत्थविसेसे सा जअइ विकडकइगोअरा वाणी ॥
[ अतथास्थितानपि तथासंस्थितानिव हृदये या निवेशयति ।
अर्थविशेषान् सा जयति विकटकविगोचरा वाणी ॥ इति छाया । ]

तदित्थं रसभावाद्याश्रयेण काव्यार्थानामानन्त्यं सुप्रतिपादितम् । एतदेवोपपादयितुमुच्यते—

लोचनम्

प्रतिपादितं "भावानचेतनानपि चेतनवच्चेतनानचेतनवद्" इत्यत्र । **अतथास्थितानपि बहिस्तथासंस्थितानिवेति** । इवशब्देन एकतरत्र विश्रान्तियोगाभावादेव सुतरां विचित्ररूपानित्यर्थः । **हृदय** इति । प्रधानतमे समस्तभावकनकनिकषस्थान इत्यर्थः । **निवेशयति** यस्य यस्य हृदयमस्ति, तस्य तस्य अचलतया तत्र स्थापयतीत्यर्थः । अतएव ते प्रसिद्धार्थेभ्योऽन्य एवेत्यर्थविशेषास्सम्पद्यन्ते । हृदयनिविष्टा एव च तथा भवन्ति नान्यथेत्यर्थः। **सा जयति** परिच्छिन्नशक्तिभ्यः प्रजापतिभ्योऽप्युत्कर्षेण वर्तते। तत्प्रसादादेव कविगोचरो वर्णनीयोऽर्थो विकटो निस्सीमा सम्पद्यते॥३॥

प्रतिभानां वाणीनाञ्चानन्त्यं ध्वनिकृतमिति यदनुद्भिन्नमुक्तं, तदेव कारिकया भङ्ग्या निरूप्यत इत्याह—**उपपादयितुमिति** । उपपत्त्या निरूपयितुमित्यर्थः । यद्यप्यर्थानन्त्यमात्रे हेतुर्वृत्तिकारेणोक्तः, तथापि कारिकाकारेण नोक्त इति भावः । यदि वा उच्यते संग्रहश्लोकोऽयमिति भावः । अत एवास्य श्लोकस्य वृत्तिग्रन्थे व्याख्यानं न कृतम् ।

बालप्रिया

र्थः । **इवशब्देनेति** । सम्भावनार्थकेनेति भावः । **इत्यर्थ** इति । गम्यत इति शेषः । **समस्तेति** । समस्तभावाः सकलपदार्था एव कनकानि तेषां निकषस्थान इत्यर्थः । हृदये निवेशयतीत्यस्य विवरणम्—**यस्येत्यादि** । **अतएव** हृदयस्थापनादेव । **ते** हृदयस्थापितार्थाः । अर्थविशेषानित्यस्य विवरणम्—**प्रसिद्धेत्यादि** । **तथेति** । **अर्थविशेषा** इत्यर्थः । विकटः कविगोचरो यस्या इति व्युत्पत्तिमभिप्रेत्य विवृणोति—**कविगोचर इत्यादि** ॥ ३३ ॥

'एतदेवे'त्यादिग्रन्थमवतारयति—**प्रतिभानामित्यादि** । **ध्वनिकृतमिति** । ध्वनिभेदकृतार्थानन्त्यप्रयुक्तमित्यर्थः । **अनुद्भिन्नमिति** । उपपत्तेरकथनेनास्फुटमित्यर्थः । **उक्तमिति** । ध्वनेर्य इत्यादिनोक्तमित्यर्थः । **वृत्तिकारेणोक्त** इति । 'युक्त्यानये'त्यादिकारिकाव्याख्यावसर इति शेषः । **संग्रहश्लोक** इति । वृत्तिकारकृतः परिकरश्लोक इत्यर्थः ।

दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥ ४ ॥

तथा हि विवक्षितान्यपरवाच्यस्यैव शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यप्रकारसमाश्रयेण नवत्वम् । यथा—'धरणीधारणायाधुना त्वं शेषः' इत्यादेः ।

शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।
यदलङ्घितमर्यादाश्चलन्तीं बिभ्रते भुवम् ॥

इत्यादिषु सत्स्वपि । तस्यैवार्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण नवत्वम् । यथा—'एवंवादिनि देवर्षौ' इत्यादि श्लोकस्य ।

कृते वरकथालापे कुमार्यः पुलकोद्गमैः ।
सूचयन्ति स्पृहामन्तर्लज्जयावनताननाः ॥

इत्यादिषु सत्स्वर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविप्रौढोक्तिनिर्मितशरीरत्वेन नवत्वम् । यथा—'सज्जेइ सुरहिमासो' इत्यादेः ।

सुरभिसमये प्रवृत्ते सहसा प्रादुर्भवन्ति रमणीयाः ।
रागवतामुत्कलिकाः सहैव सहकारकलिकाभिः ॥

इत्यादिषु सत्स्वप्यपूर्वत्वमेव ।

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविनिबद्धवक्तृप्रौढोक्तिमात्रनि-

लोचनम्

दृष्टपूर्वा इति । बहिः प्रत्यक्षादिभिः प्रमाणैः प्राक्तनैश्च कविभिरित्युभयथा नेयम् । काव्यं मधुमासस्थानीयम्, स्पृहां लज्जामिति, रागवतामुत्कलिका इति च । शब्दस्पृष्टेऽर्थे का हृद्यता ।

एतानि चोदाहरणानि वितत्य पूर्वमेव व्याख्यातानीति किं पुनरुक्त्या सत्यपि प्राक्तनकविस्पृष्टत्वे नूतनत्वं भवत्येवैतत्प्रकारानुग्रहादित्येतावति तात्पर्यं हि ग्रन्थस्या-

बालप्रिया

द्रुमान्वयिनमर्थमाह—बहिरित्यादि । अर्थान्वयिनमाह—प्राक्तनैरित्यादि । का हृद्यतेति । अतश्च 'कृत' इत्यादिश्लोकात् 'एवंवादिनी'त्यादेः 'सुरभी'त्यादिश्लोकात् 'सज्जयती'त्यादेश्च नवत्वमस्तीति भावः ।

सत्यपीत्यादि । एतेषामिति शेषः । एतत्प्रकारानुग्रहान्नूतनत्वं भवत्येवेति

व्यङ्ग्यशरीरत्वेन नवत्वम्। यथा—'वाणिअअ हत्थिदन्ता' इत्यादिगाथार्थस्य।

करिणीवेहव्वअरो मह पुत्तो एक्ककाण्डविणिवाइ।

हअसोह्नाएँ तह कहो जह कण्डकरण्डअं वहइ॥

[करिणीवैधव्यकरो मम पुत्र एककाण्डविनिपाती।

हतस्नुषया तथा कृतो यथा काण्डकरण्डकं वहति॥ इति च्छाया]

एवमादिष्वर्थेषु सत्स्वप्यनालीढतैव।

यथा व्यङ्ग्यभेदसमाश्रयेण ध्वनेः काव्यार्थानां नवत्वमुत्पद्यते, तथा व्यञ्जकभेदसमाश्रयेणापि। तत्तु ग्रन्थविस्तरभयान्न लिख्यते स्वयमेव सहृदयैरभ्यूह्यम्। अत्र च पुनःपुनरुक्तमपि सारतयेदमुच्यते—

व्यङ्ग्यव्यञ्जकभावेऽस्मिन्विविधे सम्भवत्यपि।

रसादिमय एकस्मिन् कविः स्यादवधानवान्॥ ५॥

अस्मिन्नर्थानन्त्यहेतौ व्यङ्ग्यव्यञ्जकभावे विचित्रे शब्दानां सम्भवत्यपि कविरपूर्वार्थलाभार्थी रसादिमय एकस्मिन् व्यङ्ग्यव्यञ्जकभावे यत्नादवदधीत। रसभावतदाभासरूपे हि व्यङ्ग्ये तद्व्यञ्जकेषु च यथानिर्दिष्टेषु वर्णपदवाक्यरचनाप्रबन्धेष्ववहितमनसः कवेः सर्वमपूर्वं काव्यं सम्पद्यते। तथा च रामायणमहाभारतादिषु सङ्ग्रामादयः पुनःपुनरभिहिता अपि नवनवाः प्रकाशन्ते। प्रबन्धे चाङ्गी रस एक एवोपनिबध्यमानोऽर्थविशेषलाभं छायातिशयं च पुष्णाति। कस्मिन्निवेति चेत्—यथा रामायणे यथा वा महाभारते। रामायणे हि करुणो रसः स्वयमादिकविना सूत्रितः 'शोकः श्लोकत्वमागतः' इत्येवंवादिना। निर्व्यूढश्च स एव

लोचनम्

धिकत्वान्यत्। करिणीवैधव्यकरो मम पुत्रः एकेन काण्डेन विनिपातनसमर्थः हतस्नुषया तथा कृतो यथा काण्डकरणकं वहतीत्युत्तान एवायमर्थः, गाथार्थस्यानालीढतैवेति सम्बन्धः॥ ४॥

बालप्रिया

सम्बन्धः। एतत्प्रकारेत्यस्य ध्वनिप्रभेदेत्यर्थः। वृत्तौ 'शरीरत्वेन नवत्व'मित्युभयत्र भवतीति शेषः। 'एककाण्डविनिपाती'ति छाया, तस्य विवरणम्—एकेन काण्डेनेत्यादि। काण्डो बाणः॥ ४॥

सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता। महाभारतेऽपि शास्त्ररूपे काव्यच्छायान्वयिनि वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः। एतच्चांशेन विवृतमेवान्यैर्व्याख्याविधायिभिः। स्वयमेव चैतदुद्गीर्णं तेनोदीर्णमहामोहमग्नमुज्जिहीर्षता लोकमतिविमलज्ञानालोकदायिना लोकनाथेन—

यथा यथा विपर्येति लोकतन्त्रमसारवत्।
तथा तथा विरागोऽत्र जायते नात्र संशयः॥

लोचनम्

अत्यन्तग्रहणेन निरपेक्षभावतया विप्रलम्भाशङ्कां परिहरति। वृष्णीनां परस्परक्षयः, पाण्डवानामपि महापथक्लेशेनानुचिता विपत्तिः, कृष्णस्यापि व्याधाद्विध्वंस इति सर्वस्यापि विरसमेवावसानमिति। मुख्यतयेति। यद्यपि "धर्मे चार्थे च कामे च मोक्षे च" इत्युक्तं, तथापि चत्वारश्चकारा एवमाहुः—यद्यपि धर्मार्थकामानां सर्वस्वं तादृङ्नास्ति यदन्यत्र न विद्यते, तथापि पर्यन्तविरसत्वमत्रैवावलोक्यताम्। मोक्षे तु यद्रूपं तस्य सारतात्रैव विचार्यतामिति।

यथायथेति। लोकैस्तन्त्र्यमाणं यत्नेन सम्पाद्यमानन्धर्मार्थकामतत्साधनलक्षणं वस्तुभूततयाभिमतमपि। येन येनार्जनरक्षणक्षयादिना प्रकारेण। असारवत्तुच्छेन्द्रजालादिवत्। विपर्येति। प्रत्युत विपरीतं सम्पद्यते। आस्तान्तस्य स्वरूपचिन्तेत्यर्थः। तेन तेन प्रकारेण अत्र लोकतन्त्रे। विरागो जायत इत्यनेन तत्वज्ञानोत्थितं निर्वेदं

बालप्रिया

'सीतात्यन्तवियोगपर्यन्त'मित्यत्रात्यन्तग्रहणफलमाह—अत्यन्तग्रहणेनेत्यादि। वृष्णिपाण्डवविरसावसानेत्युक्तं विवृणोति—वृष्णीनामित्यादि। मोक्षलक्षणः पुरुषार्थो मुख्यतया विवक्षाविषयत्वेन सूचित इति यदुक्तं तस्यानुपपत्तिमाशंक्य परिहरति—यद्यपीत्यदिना। मोक्षे चेत्युक्तमिति। क्वचिद्ग्रन्थे 'भरतर्षभ यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचि'दिति च पाठः। एवमाहुरिति। वक्ष्यमाणं विशेषं द्योतयन्तीत्यर्थः। सर्वस्वमिति। प्रधानं स्वरूपमित्यर्थः। नास्तीति। अत्रेति शेषः। यदन्यत्र न विद्यते तादृगत्र नास्तीति सम्बन्धः। यदत्रास्ति तदन्यत्राप्यस्तीति भावः। द्योत्यं विशेषं दर्शयति—तथापीत्यादि। पर्यन्तविरसत्वमिति। धर्मार्थकामानामित्यनुषज्यते। लोकतन्त्रमित्येतद्व्याचष्टे—लोकैरित्यादि।

इत्यादि बहुशः कथयता । ततश्च शान्तो रसो रसान्तरैर्मोक्षलक्षणः पुरुषार्थः पुरुषार्थान्तरैस्तदुपसर्जनत्वेनानुगम्यमानोऽङ्गित्वेन विवक्षाविषय इति महाभारततात्पर्यं सुव्यक्तमेवावभासते । अङ्गाङ्गिभावश्च यथा रसानां तथा प्रतिपादितमेव ।

पारमार्थिकान्तस्तत्त्वानपेक्षया शरीरस्येवाङ्गभूतस्य रसस्य पुरुषार्थस्य च स्वप्राधान्येन चारुत्वमप्यविरुद्धम् । ननु महाभारते यावान्विवक्षाविषयः सोऽनुक्रमण्यां सर्व एवानुक्रान्तो न चैतत्र दृश्यते, प्रत्युत सर्वपुरुषार्थप्रबोधहेतुत्वं सर्वरसगर्भत्वं च महाभारतस्य तस्मिन्नुद्देशे स्वशब्दनिवेदितत्वेन प्रतीयते । अत्रोच्यते—सत्यं शान्तस्यैव रसस्याङ्गित्वं महाभारते मोक्षस्य च सर्वपुरुषार्थेभ्यः प्राधान्यमित्येतन्न स्वशब्दाभिधेयत्वेनानुक्रमण्या दर्शितम्, दर्शितं तु व्यङ्ग्यत्वेन—

'भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः'

इत्यस्मिन् वाक्ये । अनेन ह्ययमर्थो व्यङ्ग्यत्वेन विवक्षितो यदत्र महाभारते पाण्डवादिचरितं यत्कीर्त्यते तत्सर्वमवसानविरसमविद्याप्रपञ्चरूपञ्च, परमार्थसत्यस्वरूपस्तु भगवान् वासुदेवोऽत्र कीर्त्यते । तस्मात्तस्मिन्नेव परमेश्वरे भगवति भवत भावितचेतसो, मा भूत विभूतिषु निःसारासु रागिणो गुणेषु वा नयविनयपराक्रमादिष्वमीषु केवलेषु केषुचित्सर्वात्मना प्रतिनिविष्टधियः । तथा चाग्रे—पश्यत निःसारतां संसा-

लोचनम्

शान्तरसस्थायिनं सूचयता तस्यैव च सर्वेतरासारत्वप्रतिपादनेन प्राधान्यमुक्तम् ।

ननु शृङ्गारवीरादिचमत्कारोऽपि तत्र भातीत्याशङ्क्याह—**पारमार्थिकेति** । भोगाभिनिवेशिनां लोकवासनाविष्टानामङ्गभूतेऽपि रसे तथाभिमानः, यथा शरीरे प्रमातृत्वाभिमानः प्रमातुर्भोगायतनमात्रेऽपि । केवलेष्विति । परमेश्वरभक्त्युपकरणेषु

बालप्रिया

**वस्तुभूततयेति** । परमार्थतयेत्यर्थः । **तुच्छेति** । तुच्छं शशशृङ्गादि । **तस्यैवेति** । शान्तरसस्यैवेत्यर्थः ।

पारमार्थिकेत्यादिग्रन्थमवतारयति—**नन्वित्यादि** । तत्र महाभारते । भावं विवृणोति—**भोगेत्यादि** । **तथाऽभिमानः** प्राधान्याभिमानः । मात्रेऽपि शरीरे इति

रस्येत्यमुमेवार्थं द्योतयन् स्फुटमेवावभासते व्यञ्जकशक्त्यनुगृहीतश्च शब्दः। एवंविधमेवार्थं गर्भीकृतं सन्दर्शयन्तोऽनन्तरश्लोका लक्ष्यन्ते—'स हि सत्यम्' इत्यादयः।

अयं च निगूढरमणीयोऽर्थो महाभारतावसाने हरिवंशवर्णनेन समाप्तिं विदधता तेनैव कविवेधसा कृष्णद्वैपायनेन सम्यक्स्फुटीकृतः। अनेन चार्थेन संसारातीते तत्त्वान्तरे भक्त्यतिशयं प्रवर्तयता सकल एव सांसारिको व्यवहारः पूर्वपक्षीकृतो न्यक्षेण प्रकाशते। देवतातीर्थतपः-प्रभृतीनां च प्रभावातिशयवर्णनं तस्यैव परब्रह्मणः प्राप्त्युपायत्वेन तद्विभूतित्वेनैव देवताविशेषाणामन्येषां च। पाण्डवादिचरितवर्णनस्यापि वैराग्यजननतात्पर्याद्वैराग्यस्य च मोक्षमूलत्वान्मोक्षस्य च भगवत्प्राप्त्युपायत्वेन मुख्यतया गीतादिषु प्रदर्शितत्वात्परब्रह्मप्राप्त्युपायत्वमेव। परम्परया वासुदेवादिसञ्ज्ञाभिधेयत्वेन चापरिमितशक्त्यास्पदं परं ब्रह्म गीतादिप्रदेशान्तरेषु तदभिधानत्वेन लब्धप्रसिद्धि माथुरप्रादुर्भावानुकृतसकलस्वरूपं विवक्षितं न तु माथुरप्रादुर्भावांश एव, सनातनशब्दविशेषितत्वात्।

लोचनम्

तु न दोष इत्यर्थः। विभूतिषु रागिणो गुणेषु च निविष्टधियो मा भूतेति सम्बन्धः। अग्र इति। अनुक्रमण्यनन्तरं यो भारतग्रन्थः तत्रेत्यर्थः। ननु वसुदेवापत्यं वासुदेव इत्युच्यते, न परमेश्वरः परमात्मा महादेव इत्याशङ्क्याह—वासुदेवादिसंज्ञाभिधेयत्वेनेति।

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।
वासुदेवस्सर्वम्

बालप्रिया

सम्बन्धः। अन्वयं दर्शयति—विभूतिष्वित्यादि। वृत्तौ'तथाचे'त्यादि। द्योतयन् शब्दोऽवभासत इति सम्बन्धः। 'न्यक्षेणे'ति। कार्त्स्न्येनेत्यर्थः। प्राप्त्युपायत्वेन वर्णनमित्यन्वयः। देवताविशेषाणामित्यत्र प्रभावातिशयवर्णनमित्यनुषज्यते। 'मोक्षस्ये'ति। अज्ञाननिवृत्तेरित्यर्थः। वासुदेवसंज्ञाभिधेयत्वेन ब्रह्म विवक्षितमित्यन्वयः। 'तदभिधानत्वेन' वासुदेवसंज्ञाभिधेयत्वेन। माथुरो यः प्रादुर्भावस्तेनानुकृतं सकलस्वरूपं येन तत्। 'न त्वि'त्यादि। 'विवक्षित' इति विपरिमाणामेनानुषङ्गः। हेत्वन्तरमप्याह—'रामायणादिष्वि'त्यादि। 'पुरुषार्थ' इति 'विवक्षित' इत्यनेनास्य सम्बन्धः।

रामायणादिषु चानया सञ्ज्ञया भगवन्मूर्त्यन्तरे व्यवहारदर्शनात् । निर्णीतश्चायमर्थः शब्दतत्त्वविद्भिरेव ।

तदेवमनुक्रमणीनिर्दिष्टेन वाक्येन भगवद्व्यतिरेकिणः सर्वस्यान्यस्यानित्यतां प्रकाशयता मोक्षलक्षण एवैकः परः पुरुषार्थः शास्त्रनये, काव्यनये च तृष्णाक्षयसुखपरिपोषलक्षणः शान्तो रसो महाभारतस्याङ्गित्वेन विवक्षित इति सुप्रतिपादितम् । अत्यन्तसारभूतत्वाच्चायमर्थो व्यङ्ग्यत्वेनैव दर्शितो न तु वाच्यत्वेन । सारभूतो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति । प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेन ।

लोचनम्

इत्यादौ अंशिरूपमेतत्संज्ञाभिधेयमिति निर्णीतं तात्पर्यम् । **निर्णीतश्चेति** । शब्दा हि नित्या एव सन्तोऽनन्तरं काकतालीयवशात्तथा सङ्केतिता इत्युक्तम्—"ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यत्र ।

**शास्त्रनय** इति । तत्रास्वादयोगाभावे पुरुषेणार्थ्यत इत्ययमेव व्यपदेशः सादरः, चमत्कारयोगे तु रसव्यपदेश इति भावः । एतच्च ग्रन्थकारेण तत्त्वालोके वितत्योक्तमिह त्वस्य न मुख्योऽवसर इति नास्माभिस्तद्दर्शितम् । **सुतरामेवेति** यदुक्तं तत्र हेतुमाह—**प्रसिद्धिश्चेति** । चशब्दो यस्मादर्थे । यत इयं लौकिकी प्रसिद्धिरनादिस्ततो भगवद्व्यासप्रभृतीनामप्ययमेवास्वशब्दाभिधाने आशयः, अन्यथा हि क्रियाकारकसम्बन्धादौ 'नारायणं नमस्कृत्ये'त्यादिशब्दार्थनिरूपणे च तथाविध एव तस्य भगवत आशय इत्यत्र किं प्रमाणमिति भावः । विदग्धविद्वद्ग्रहणेन काव्यनये शास्त्रनय इति चानुसृतम् । रसादिमय एतस्मिन् कविः स्यादवधानवानिति यदुक्तं, तदेव प्रस-

बालप्रिया

'गीतादिप्रदेशान्तरेषु' इत्यादिकं विवृणोति लोचने—**बह्वूनामित्यादि** । **काकतालीयवशादिति** यदृच्छयेत्यर्थः । इत्यत्रोक्तमिति सम्बन्धः । काशिकावृत्ताविति शेषः ।

शास्त्रनये मोक्षः पुरुषार्थः, काव्यनये तु शान्तो रस इत्युक्तं विवृणोति—**तत्रेत्यादि** । **सादर** इति । अर्ह इत्यर्थः । **यस्मादर्थ** इति । हेत्वर्थक इत्यर्थः । **अयमेवेति** । उक्ता विदग्धविद्वत्परिषत्प्रसिद्धिरेवेत्यर्थः । **अस्वशब्दाभिधाने** अभिमतस्यार्थस्य स्वशब्देनानभिधाने । **आशयः** अभिमतो हेतुः । अत्रोपष्टम्भकमाह—**अन्यथेत्यादि** । 'नारायणं नमस्कृत्ये'त्यादिश्लोकेषु नारायणाद्यर्थस्य क्रियाकारकभावादिसम्बन्धेन नमस्कारादावन्वयो विवक्षितः । एवं नारायणादिपदानां विष्ण्वादयोऽर्थाश्च तद्विवक्षा च

तस्मात्स्थितमेतत्—अङ्गिभूतरसाद्याश्रयेण काव्ये क्रियमाणे नवार्थलाभो भवति बन्धच्छाया च महती सम्पद्यत इति। अत एव च रसानुगुणार्थविशेषोपनिबन्धमलङ्कारान्तरविरहेऽपि छायातिशययोगि लक्ष्ये दृश्यते। यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलके दृष्टौ तौ दिव्यौ मत्स्यकच्छपौ॥

इत्यादौ। अत्र ह्यद्भुतरसानुगुणमेकचुलके मत्स्यकच्छपदर्शनं छायातिशयं पुष्णाति। तत्र ह्येकचुलके सकलजलधिसन्निधानादपि दिव्यमत्स्यकच्छपदर्शनमक्षुण्णत्वाददद्भुतरसानुगुणतरम्। क्षुण्णं हि वस्तु

लोचनम्

आगतभारतसम्बन्धनिरूपणानन्तरमुपसंहरति—तस्मात्स्थितमिति। अत इति। यत एवं स्थितं अत एवेदमपि यल्लक्ष्ये दृश्यते, तदुपपन्नमन्यथा तदनुपपन्नमेव, न च तदनुपपन्नम्; चारुत्वेन प्रतीतेः। तस्याश्चैतदेव कारणं रसानुगुणार्थत्वमेवेत्याशयः। अलङ्कारान्तरेति। अन्तरशब्दो विशेषवाची। यदि वा दिदिक्षिते उदाहरणे रसवदलङ्कारस्य विद्यमानत्वात्तदपेक्षयालङ्कारान्तरशब्दः।

ननु मत्स्यकच्छपदर्शनात्प्रतीयमानं यदेकचुलके जलनिधिसन्निधानं ततो मुनेर्माहात्म्यप्रतिपत्तिरिति न रसानुगुणेनार्थेन च्छायापोषितेत्याशङ्क्याह—अत्र हीति। नन्वेवं प्रतीयमानं जलनिधिदर्शनमेवाद्भुतानुगुणं भवत्विति रसानुगुणोऽत्र वाच्योऽर्थ इत्यस्मिन्नंशे कथमिदमुदाहरणमित्याशङ्क्याह—तत्रेति। क्षुण्णं हीति। पुनः पुनर्वर्णननिरूपणादिना यत्पिष्टपिष्टत्वादतिनिर्भिन्नस्वरूपमित्यर्थः। बहुतरलक्ष्यव्यापकश्चै-

बालप्रिया

लोकप्रसिद्ध्यनुरोधिनीति भावः। 'अत एवे'त्यादि 'दृश्यत' इत्यन्तं विवृणोति—यत इत्यादि। तस्या इति। चारुत्वेन प्रतीतेरित्यर्थः। 'अलङ्कारान्तरविरहेऽपी'त्यत्रालङ्कारान्तरशब्दं द्वेधा विवृणोति—अलङ्कारान्तरशब्द इत्यादि।

इतीति हेतौ। नेत्यादि। किन्तूक्तेन व्यंग्येनैव छाया पोषितेति भावः। वृत्तौ—'अद्भुतरसानुगुणमि'ति। मुन्यालम्बितस्याद्भुतरसस्यानुगुणमित्यर्थः। काकतालीयेनेति भावार्थविवरणम्। 'प्रतिलग्न' इति। नायकपार्श्वेन सम्बन्ध इत्यर्थः। असीत्यव्ययं त्वमित्यर्थे। हे सुभग त्वं येन तस्या येन पार्श्वेण अतिक्रान्तः, तस्याः रथ्या तुलाग्रप्रतिलग्नस्य पार्श्वोऽद्यापि स्विद्यतीत्याद्यन्वयः। 'परस्परे'ति। पार्श्वसम्बन्धातिक्रमणेन नायकगतस्याप्यनुरागस्य प्रतीतेरिति भावः।

लोकप्रसिद्ध्याद्भुतमपि नाश्चर्यकारि भवति। न चाक्षुण्णं वस्तूपनिबध्य-मानमद्भुतरसस्यैवानुगुणं यावद्रसान्तरस्यापि। तद्यथा—

सिज्जइ रोमञ्चिज्जइ वेवइ रत्थातुलग्गपडिलग्गो।
सोपासो अज्ज वि सुहअ जेणासि वोलीणो॥

एतद्गाथार्थाद्भाव्यमानाद्या रसप्रतीतिर्भवति, सा त्वां स्पृष्ट्वा स्विद्यति रोमाञ्चते वेपते इत्येवंविधादर्थात्प्रतीयमानान्मनागपि नो जायते।

तदेवं ध्वनिप्रभेदसमाश्रयेण यथा काव्यार्थानां नवत्वं जायते तथा प्रतिपादितम्। गुणीभूतव्यङ्ग्यस्यापि त्रिभेदव्यङ्ग्यापेक्षया ये प्रकारास्त-त्समाश्रयेणापि काव्यवस्तूनां नवत्वं भवत्येव। तत्त्वतिविस्तारकारीति नोदाहृतं सहृदयैः स्वयमुत्प्रेक्षणीयम्।

लोचनम्

तदिति दर्शयति—न चेत्यादिना। रथ्यायान्तुलाग्रेण काकतालीयेन प्रतिलग्नस्सा मुख्येन स पार्श्वोऽद्यापि सुभग तस्या येनास्यतिक्रान्तः। रसप्रतीतिरिति। परस्प-रहेतुकशृङ्गारप्रतीतिः। अस्यार्थस्य रसानुगुणत्वं व्यतिरेकद्वारेण द्रढयति—सा त्वा-मित्यादिना।

'ध्वनेर्यस्सगुणीभूतव्यंग्यस्याध्वा प्रदर्शित'

इत्युद्योतारम्भे यः श्लोकः तत्र ध्वनेरध्वना कवीनां प्रतिभागुणोऽनन्तो भवतीत्येष भागो व्याख्यात इत्युपसंहरति—तदेवमित्यादिना। सगुणीभूतव्यङ्ग्यस्येत्यमुं भागं व्याचष्टे-गुणीभूतेत्यादिना। त्रिप्रभेदो वस्त्वलङ्काररसात्मना यो व्यङ्ग्यः तस्य यापे-क्षा वाच्ये गुणीभावः तयेत्यर्थः। तत्र सर्वे ये ध्वनिभेदास्तेषां गुणीभावादानन्त्यमिति तदाह—अतिविस्तरेति। स्वयमिति। तत्र वस्तुना व्यंग्येन गुणीभूतेन नवत्वं सत्यपि पुराणार्थस्पर्शे यथा ममैव—

भअविहलरक्खणेक्कमल्लसरणागआणअत्थाण।
खणमत्तं विण दिण्णा विस्सामकहेत्ति जुत्तमिणम्॥

अत्र त्वमनवरतमर्थास्त्यजसीति औदार्यलक्षणं वस्तु ध्वन्यमानं वाच्यस्योपस्का-

बालप्रिया

त्रिभेदव्यंग्यापेक्षयेत्येतद्व्याचष्टे—त्रिप्रभेद इत्यादि। भअविहलेति।

भयविह्वलरक्षणैकमल्लशरणागतानामर्थानाम्।
क्षणमात्रमात्रमपि न दत्ता विश्रामकथेति युक्तमिदम्॥

इतिच्छाया। इतीदंयुक्तमित्यत्र काका इत्येतन्न युक्तमित्यर्थः। चाइअणेति।

लोचनम्

र्कं नवत्वन्ददाति, सत्यपि पुराणकविस्पृष्टेऽर्थे। तथाहि पुराणीगाथा—

चाइअणकरपरम्परसञ्चारणखे अणिस्सहइसरीरा।
अथ्था किवणघरंथ्था सथ्थापथ्थास्सवंतीव॥

अलङ्कारेण व्यङ्ग्येन वाच्योपस्कारे नवत्वं यथा ममैव—

वसन्तमत्तालिपरम्परोपमाः कचास्तवासन् कल रागवृद्धये।
श्मशानभूभागपरागभासुराः कथन्तदेतेन मनाग्विरक्तये॥

अत्र आक्षेपेण विभावनया च ध्वन्यमानाभ्यां वाच्यमुपस्कृतमिति नवत्वं सत्यपि पुराणार्थयोगित्वे। तथाहि पुराणश्लोकः—

क्षुत्तृष्णाकाममात्सर्यं मरणाच्च महद्भयम्।
पञ्चैतानि विवर्धन्ते वार्धके विदुषामपि॥ इति।

व्यङ्ग्येन रसेन गुणीभूतेन वाच्योपस्कारेण नवत्वं यथा ममैव—

जरा नेयं मूर्ध्नि ध्रुवमयमसौ कालभुजगः
क्रुधान्धः फूत्कारैः स्फुटगरलफेनान् प्रकिरति॥
तदेनं संपश्यत्यथ च सुखितम्मन्यहृदयः
शिवो पायन्नेच्छन् बत बत सुधीरः खलु जनः॥

बालप्रिया

त्यागिजनकरपरम्परासञ्चारणखेदनिस्सहशरीराः।
अर्थाः कृपणगृहस्थाः स्वस्थावस्थाः स्वपन्तीव॥

इति छाया। अर्थः स्पष्टः। वसन्तेति। कञ्चन मित्रं प्रति कस्यचिदुक्तिः। वसन्ते वसन्तेन वा मत्ता ये अलयो भृङ्गास्तत्परम्परोपमाः तेषां परम्परया तुल्याः अतिनीलस्निग्धा इति यावत्। तथाभूताः कचा इत्यनेन यौवनदशा प्रदर्शिता। तव रागस्य वृद्धये आसन् किल। श्मशानभूभागे ये परागाः भस्मरेणवस्ते इव भासुराः शुभ्राः जरया शुक्ला इति यावत्। एते कचाः। रागस्य वैराग्यस्य चोद्दीपकत्वात्तत्तदुपमानमुपात्तम्। तव मनागीषदपि विरक्तये वैराग्याय न भवन्ति। तत् तथं वैराग्यस्य कारणे सत्यपि तदजननं कुत इत्यर्थः।

अनेन प्रत्युत कारणाभावेऽपि काम एव वर्धत इत्यर्थस्य कामस्य महिमा वर्णयितुमशक्य इत्यर्थस्य च प्रकाशनाद्विभावनाक्षेपौ व्यज्येते, ताभ्यां च वाच्यमुपस्क्रियत इत्याह—अत्र हीत्यादि॥

क्षुदिति। क्षुत्तृष्णेत्यादिसमाहारद्वन्द्वः। जरेति। जराजीर्णं कञ्चिदुद्दिश्योक्तिः। मूर्ध्नि इयं दृश्यमाना जरा न भवति। अयमसौ क्रुधान्धः। कालभुजगः कृष्णसर्पः। अथ च अन्तकरूपो भुजगः। फूत्कारैः स्फुटं गरलं येषु तथाभूतान् फेनान् प्रकिरति वर्षति। इयं न जरा, किन्तु शिरस्थकालभुजगाभिवृष्टः फेननिकर

**ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात् ।**
**न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुणः ॥ ६ ॥**

सत्स्वपि पुरातनकविप्रबन्धेषु यदि स्यात्प्रतिभागुणः, तस्मिंस्त्वसति न किञ्चिदेव कवेर्वस्त्वस्ति । बन्धच्छायाप्यर्थद्वयानुरूपशब्दसन्निवेशोऽर्थप्रतिभानाभावे कथमुपपद्यते । अनपेक्षितार्थविशेषाक्षररचनैव बन्धच्छायेति नेदं नेदीयः सहृदयानाम् । एवं हि सत्यर्थानपेक्षचतुरमधुरवचन-

लोचनम्

अत्राद्भुतेन व्यङ्ग्येन वाच्यमुपस्कृतं शान्तरसप्रतिपत्त्यङ्गत्वाच्चारु भवतीति नवत्वं सत्यप्यस्मिन् पुराणश्लोके जराजीर्णशरीरस्य वैराग्यं यन्न जायते, तन्नूनं हृदये मृत्युर्दृढन्नास्तीति निश्चयः ॥ ५ ॥

**सत्स्वपी**त्यादि कारिकाया उपस्कारः । त्रीन् पादान् स्पष्टान्मत्वा तुर्यं पादं व्याख्यातुं पठति—**यदी**ति । विद्यमानो ह्यसौ प्रतिभागण उत्करीत्या भूयान् भवति, न त्वत्यन्तासन्नेवेत्यर्थः । **तस्मिन्नि**ति । अनन्तीभूते प्रतिभागुणे । **न किञ्चिदेवे**ति । सर्वं हि पुराणकविनैव स्पृष्टमिति किमिदानीं वर्ण्यं, यत्र कवेर्वर्णनाव्यापारः स्यात् । ननु यद्यपि वर्ण्यमपूर्वं नास्ति, तथाप्युक्तिपरिपाकगुम्भघटनाद्यपरपर्यायबन्धच्छाया नवनवा भविष्यति । यन्निवेशाने काव्यान्तराणां संरम्भ इत्याशङ्क्याह—**बन्धच्छायापी**ति । **अर्थद्वयं** गुणीभूतव्यंग्यं प्रधानभूतं व्यंग्यं च । **नेदीय** इति । निकटतरं हृदयानुप्रवेशि न भवतीत्यर्थः। अत्र हेतुमाह—**एवं हि सती**ति ।

बालप्रिया

इत्यर्थः । **ध्रुवमि**त्युत्प्रेक्षायाम् । **तदि**ति जनः । **तदेनान्** तथाभूतान् फेनान् । फेनमिति तदेनमिति वा पाठः । सम्पश्यति अथ च सुखितमन्यहृदयः शिवो पार्यं नेच्छंश्च । अतः सुधीरः खल्वित्यन्वयः । **बते**त्यद्भुते । **जरे**ति । **तदि**ति तस्मादित्यर्थः । मृत्युर्नास्तीति निश्चयः हृदये दृढमस्ति नूनमित्यन्वयः ॥ ५ ॥

**उपस्कार** इति । सत्स्वपीत्यादेः न काव्यार्थविरामोऽस्तीत्यनेनान्वय इति भावः । यदीत्यादेर्भावं विवृणोति—**विद्यमान** इत्यादि । वृत्तौ 'बन्धच्छाये'त्यस्य विवरणम्–'अर्थद्वयानुरूपशब्दसन्निवेश'इति । तद्रूपा बन्धच्छायेत्यर्थः । 'अनपेक्षिते'त्यादिशङ्काग्रन्थः । इतीदं सहृदयानां न नेदीय इति सम्बन्धः । पुनश्शङ्कते–'शब्दार्थयो'रित्यादि । 'काव्यत्व' इति निमित्ते सप्तमी । शब्दार्थयोः सहितयोः काव्यत्वेन हेतुनेत्यर्थः । 'तथाविध' इति । अर्थानपेक्षचतुरमधुरवचनरचन इत्यर्थः । 'काव्यव्यवस्थे'ति । काव्यव्यपदेश इत्यर्थः । समाधत्ते—'परे'त्यादि । 'तत्काव्यत्वे'ति तत्पदेन परः परामृश्यते । 'काव्यसन्दर्भाणामि'ति । तत्काव्यत्वव्यवहार इत्यनुषज्यते ।

रचनायामपि काव्यव्यपदेशः प्रवर्तेत। शब्दार्थयोः साहित्येन काव्यत्वे कथं तथाविधे विषये काव्यव्यवस्थेति चेत्— परोपनिबद्धार्थविरचने यथा तत्काव्यत्वव्यवहारस्तथा तथाविधानां काव्यसन्दर्भाणाम्।

न चार्थानन्त्यं व्यङ्ग्यार्थापेक्षयैव यावद्वाच्यार्थापेक्षयापीति प्रतिपादयितुमुच्यते—

**अवस्थादेशकालादिविशेषैरपि जायते।**
**आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः॥ ७॥**

शुद्धस्यानपेक्षितव्यङ्ग्यस्यापि वाच्यस्यानन्त्यमेव जायते स्वभावतः। स्वभावो ह्ययं वाच्यानां चेतनानामचेतनानां च यदवस्थाभेदाद्देशभेदात्कालभेदात्स्वालक्षण्यभेदाच्चानन्तता भवति। तैश्च तथाव्यवस्थितैः सद्भिः प्रसिद्धानेकस्वभावानुसरणरूपया स्वभावोक्त्यापि तावदुपनिबध्यमानैर्नि-

लोचनम्

चतुरत्वं समाससङ्घटना। मधुरत्वमपारुष्यम्। **तथाविधानामिति**। अपूर्वबन्धच्छायायुक्तानामपि परोपनिबद्धार्थनिबन्धने परकृतकाव्यत्वव्यवहार एव स्यादित्यर्थस्यापूर्वत्वमाश्रयणीयम्। कवनीयं काव्यं तस्य भावः काव्यत्वं, न त्वयं भावप्रत्ययान्तात् भावप्रत्यय इति शङ्कितव्यम्॥ ६॥

**प्रतिपादयितुमिति**। प्रसङ्गादिति शेषः। यदि वा वाच्यन्तावद्द्विविधव्यंग्योपयोगि तदेव चेदनन्तं तद्बलादेव व्यंग्यानन्त्यं भवतीत्यभिप्रायेणेदं प्रकृतमेवोच्यते। **शुद्धस्येति**। व्यंग्यविषयो यो व्यापारः तत्स्पर्शं विनाप्यानन्त्यं स्वरूपमात्रेणैव पश्चात्तु तथा स्वरूपेणानन्तं सद्व्यङ्ग्यं व्यनक्तीति भावः। न तु सर्वथा तत्र व्यंग्यं नास्तीति मन्तव्यमात्मभूततद्रूपाभावे काव्यव्यवहारहानेः; तथा चोदाहरणेषु रसध्वनेस्सद्भावोऽस्त्येव। आदिग्रहणं व्याचष्टे—**स्वालक्षण्येति**। स्वरूपेत्यर्थः। यथा रूपस्पर्शयोस्तीव्रैकावस्थयोरेकद्रव्यनिष्ठयोरेककालयोश्च।

बालप्रिया

स्यादिति शेषः। लोचने भावं विवृणोति—**अपूर्वबन्धेत्यादि**। काव्यत्वमित्यस्य व्युत्पत्तिं दर्शयति—**कवनीयमित्यादि**॥ ६॥

कारिकास्थं शुद्धस्येति पदमन्यथाप्रतिपत्तिपरिहाराय व्याचष्टे—**व्यंग्येत्यादि**। **व्यापार** इति। वाच्यस्येति शेषः। **आत्मेति**। आत्मभूतस्य व्यंग्यस्याभाव इत्यर्थः। **हानिः** अभावः। ननु कीदृशं व्यंग्यं तत्र भवतीत्यत्राह—**तथाचेत्यादि**। वृत्तौ 'अनपेक्षितव्यंग्यस्ये'त्येतदप्युक्तरीत्या व्याख्येयम्। 'तैश्चे'ति। 'तैः' वाच्यार्थैः। 'प्रथम-

रवधिः काव्यार्थः सम्पद्यते। तथा ह्यवस्थाभेदान्नवत्वं यथा—भगवती पार्वती कुमारसम्भवे 'सर्वोपमाद्रव्यसमुच्चयेन' इत्यादिभिरुक्तिभिः प्रथममेव परिसमापितरूपवर्णनापि पुनर्भगवतः शम्भोर्लोचनगोचरमायान्ती 'वसन्तपुष्पाभरणं वहन्ती' मन्मथोपकरणभूतेन भङ्ग्यन्तरेणोपवर्णिता। सैव च पुनर्नवोद्वाहसमये प्रसाध्यमाना 'तां प्राङ्मुखीं तत्र निवेश्य तन्वीम्' इत्याद्युक्तिभिर्नवेनैव प्रकारेण निरूपितरूपसौष्ठवा। न च ते तस्य कवेरेकत्रैवासकृत्कृता वर्णनप्रकारा अपुनरुक्तत्वेन वा नवनवार्थनिर्भरत्वेन वा प्रतिभासन्ते। दर्शितमेव चैतद्विषमबाणलीलायाम्—

ण अ ताण घडइ ओही ण अ ते दीसन्ति कह वि पुनरुत्ता।
जे विब्भमा पिआणं अत्था वा सुकइवाणीणम्॥

अयमपरश्चावस्थाभेदप्रकारो यदचेतनानां सर्वेषां चेतनं द्वितीयं रूपमभिमानित्वप्रसिद्धं हिमवद्गङ्गादीनाम्। तच्चोचितचेतनविषयस्वरूपयोजनयोपनिबध्यमानमन्यदेव सम्पद्यते। यथा कुमारसम्भव एव पर्वतस्वरूपस्य हिमवतो वर्णनं, पुनः सप्तर्षिप्रियोक्तिषु चेतनतत्स्वरूपापेक्षया प्रदर्शितं तदपूर्वमेव प्रतिभाति। प्रसिद्धश्चायं सत्कवीनां मार्गः। इदं

लोचनम्

न च तेषां घटतेऽवधिः, न च ते दृश्यन्ते कथमपि पुनरुक्ताः।
ये विभ्रमाः प्रियाणामर्था वा सुकविवाणीनाम्॥

चकाराभ्यामतिविस्मयस्सूच्यते। कथमपीति। प्रयत्नेनापि विचार्यमाणं पौनरुक्त्यं न लभ्यमिति यावत्। प्रियाणामिति। बहुवल्लभो हि सुभगो राधावल्लभप्रायस्तास्ताः कामिनीः परिभोगसुभगमुपभुञ्जानोऽपि न विभ्रमपौनरुक्त्यं पश्यति तदा। एतदेव प्रियात्वमुच्यते, यदाह—

बालप्रिया

मेवे'ति। प्रथमसर्ग इत्यर्थः। 'उपवर्णिते'ति। तृतीयसर्ग इति शेषः। 'निरूपितरूपसौष्ठवे'ति। सप्तमसर्ग इति शेषः। ते वर्णनप्रकाराः न च भासन्त इति सम्बन्धः। 'तस्य कवेरि'ति। कालिदासस्यापि कवेरित्यर्थः।

'णअ' इत्यादेः छायां दर्शयति लोचने—न चेत्यादि। प्रियाणां विभ्रमाः कथमपि पुनरुक्ता न दृश्यन्त इत्येतद्विवृणोति—बहुवल्लभ इत्यादि। तदा विभ्रमपौनरुक्त्यं न पश्यतीति सम्बन्धः। तदा परिभोगकाले। यदाहेति माघकविरिति शेषः।

च प्रस्थानं कविव्युत्पत्तये विषमबाणलीलायां सप्रपञ्चं दर्शितम् । चेतनानां च बाल्याद्यवस्थाभिरन्यत्वं सत्कवीनां प्रसिद्धमेव । चेतनानामवस्थाभेदेऽप्यवान्तरावस्थाभेदान्नानात्वम् । यथा कुमारीणां कुसुमशरभिन्नहृदयानामन्यासां च । तत्रापि विनीतानामविनीतानां च । अचेतनानां च भावानामारम्भाद्यवस्थाभेदभिन्नानामेकैकशः स्वरूपमुपनिबध्यमानमानन्त्यमेवोपयाति । यथा—

हंसानां निनदेषु यैः कवलितैरासज्यते कूजता-
मन्यः कोऽपि कषायकण्ठलुठनादाघर्घरो विभ्रमः ।
ते सम्प्रत्यकठोरवारणवधूदन्ताङ्कुरस्पर्धिनो
निर्याताः कमलाकरेषु बिसिनीकन्दाग्रिमग्रन्थयः ॥

एवमन्यत्रापि दिशानयानुसर्तव्यम् ।

लोचनम्

क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयताया इति ।

प्रियाणामिति चासंसारं प्रवहद्रूपो योऽयं कान्तानां विभ्रमविशेषः स नवनव एव दृश्यते । न ह्यसावग्निचयनादिवदन्यतश्शिक्षितः, येन तस्मादृश्यात्पुनरुक्ततां गच्छेत् । अपि तु निसर्गोद्भिद्यमानमदनाङ्कुरविकासमात्रं तदिति नवनवत्वम् । तद्वत्परकीयशिक्षानपेक्षनिजप्रतिभागुणनिष्यन्दभूतः काव्यार्थ इति भावः ।

बालप्रिया

प्रियाणां विभ्रमा इत्यनेन गम्यमर्थमाह—प्रियाणामिति चेत्यादि । न हीत्यादि । असौ विभ्रमविशेषः । यथा अग्निचयनमन्यतश्शिक्ष्यते तथा शिक्षितो नेत्यर्थः । येनेति । अन्यतश्शिक्षितत्वेनेत्यर्थः । तदिति । विभ्रमविशेष इत्यर्थः । नवनवत्वमिति । तस्येति शेषः । 'अर्थो वा सुकविवाणीनामि'ति प्रकृतं विवृणोति—तद्वदित्यादि । तद्वदिति । तेन तुल्यो भवति नवनवो भवतीत्यर्थः । वृत्तौ'चेतनतत्स्वरूपापेक्षये'ति । हिमवतो वर्णनमित्यनुषज्यते । 'प्रदर्शितं तदि'ति । वर्णितं तदित्यर्थः । 'अवस्थाऽभेदेऽपी'ति । कौमारादिशरीरावस्थाया भेदाभावेऽपीत्यर्थः । 'आन्तरे'ति । मानसिकेत्यर्थः । 'हंसानामि'ति । 'कवलितैः' भक्षितैः । यैः कूजतां हंसानां निनदेषु कषायकण्ठलुण्ठनादाघर्घरः अन्यः कोऽपि विभ्रमः आसज्यते आसक्तः क्रियत इत्याद्यन्वयः ।

तच्च यथाऽवस्थितमपि तावदुपनिबध्यमानमित्यत्र तावत्पदं लोचने विवृणोति–

देशभेदान्नानात्वमचेतनानां तावत् । यथा वायूनां नानादिग्देशचारिणामन्येषामपि सलिलकुसुमादीनां प्रसिद्धमेव । चेतनानामपि मानुषपशुपक्षिप्रभृतीनां ग्रामारण्यसलिलादिसमेधितानां परस्परं महान्विशेषः समुपलक्ष्यत एव । स च विविच्य यथायथमुपनिबध्यमानस्तथैवानन्त्यमायाति । तथा हि—मानुषाणामेव तावद्दिग्देशादिभिन्नानां ये व्यवहारव्यापारादिषु विचित्रा विशेषास्तेषां केनान्तः शक्यते गन्तुम्, विशेषतो योषिताम् । उपनिबध्यते च तत्सर्वमेव सुकविभिर्यथाप्रतिभम् ।

कालभेदाच्च नानात्वम् । यथर्तुभेदाद्दिग्व्योमसलिलादीनामचेतनानाम् । चेतनानां चौत्सुक्यादयः कालविशेषाश्रयिणः प्रसिद्धा एव । स्वालक्षण्यप्रभेदाच्च सकलजगद्गतानां वस्तूनां विनिबन्धनं प्रसिद्धमेव । तच्च यथावस्थितमपि तावदुपनिबध्यमानमनन्ततामेव काव्यार्थस्यापादयति ।

अत्र केचिदाचक्षीरन्—यथा सामान्यात्मना वस्तूनि वाच्यतां प्रतिपद्यन्ते न विशेषात्मना ; तानि हि स्वयमनुभूतानां सुखादीनां तन्निमित्तानां च स्वरूपमन्यत्रारोपयद्भिः स्वपरानुभूतरूपसामान्यमात्राश्रयेणोपनिबध्यन्ते कविभिः । न हि तैरतीतमनागतं वर्तमानञ्च परिचितादिस्वलक्षणं योगिभिरिव प्रत्यक्षीक्रियते ; तच्चानुभाव्यानुभवसामान्यं सर्वप्रतिपत्तृसाधारणं परिमितत्वात्पुरातनानामेव गोचरीभूतम्, तस्या विषयत्वानुपपत्तेः ।

लोचनम्

तावदिति । उत्तरकालन्तु व्यंग्यस्पर्शनेन विचित्रतां परां भजतान्नाम, तावति तु स्वभावेनैव सा विचित्रेति तावच्छब्दस्याभिप्रायः । तन्निमित्तानाञ्चेति । ऋतुमाल्यादीनाम् । स्वेति । स्वानुभूतपरानुभूतानां यत्सामान्यं तदेव विशेषान्तररहितन्तन्मात्रं तस्याश्रयेण । न हि तैरिति कविभिः । एतच्चात्यन्तासंभावनार्थमुक्तम् ।

बालप्रिया

उत्तरकालन्त्वित्यादि । स्वपरानुभूतेत्येतत् व्याचष्टे—स्वानुभूतेत्यादि । मात्रशब्दार्थविवरणम्—विशेषान्तररहितमिति । वृत्तौ 'अपरिचितादिस्वलक्षणमि'ति । अपरिचितादीनां वस्तूनां स्वरूपमित्यर्थः । एतच्चोक्तमिति सम्बन्धः । न हीत्यादि कथनं चेत्यर्थः । 'अत्यन्तासम्भावनार्थमि'ति । अत्यन्तं यदसम्भावनं वस्तूनां विशेषात्मना प्रतिपादनसम्भवाभावस्तदर्थं तत्प्रतिपत्त्यर्थमित्यर्थः । एतदेव विशदयति—

अतएव स प्रकारविशेषो यैरद्यतनैरभिनवत्वेन प्रतीयते तेषामभिमान मात्रमेव भणितिकृतं वैचित्र्यमात्रमत्रास्तीति ।

तत्रोच्यते—यत्तूक्तं सामान्यमात्राश्रयेण काव्यप्रवृत्तिस्तस्य च परिमितत्वेन प्रागेव गोचरीकृतत्वान्नास्ति नवत्वं काव्यवस्तूनामिति, तदयुक्तम्; यतो यदि सामान्यमात्रमाश्रित्य काव्यं प्रवर्तते किङ्कृतस्तर्हि महाकविनिबध्यमानानां काव्यार्थानामतिशयः । वाल्मीकिव्यतिरिक्तस्यान्यस्य कविव्यपदेश एव वा सामान्यव्यतिरिक्तस्यान्यस्य काव्यार्थस्याभावात्, सामान्यस्य चादिकविनैव प्रदर्शितत्वात् । उक्तिवैचित्र्यान्नैष दोष इति चेत्—किमिदमुक्तिवैचित्र्यम्? उक्तिर्हि वाच्यविशेषप्रतिपादि वचनम् । तद्वैचित्र्ये कथं न वाच्यवैचित्र्यम् । वाच्यवाचकयोरविना-

लोचनम्

प्रत्यक्षदर्शनेऽपि हि—

> शब्दास्संकेतितं प्राहुर्व्यवहाराय स स्मृतः ।
> तदा स्वलक्षणं नास्ति सङ्केतस्तेन तत्र नः ॥

इत्यादियुक्तिभिस्सामान्यमेव स्पृश्यते । किमिति । असंवेद्यमानमर्थपौनरुक्त्यं कथं प्राकरणिकैरङ्गीकार्यमिति भावः । तमेव प्रकटयति—न चेदिति । उक्तिर्हीति । पर्यायमात्रतैव यद्युक्तिविशेषस्तत्पर्यायान्तरैरविकलं तदर्थोपनिबन्धे अपौनरुक्त्याभि-

बालप्रिया

प्रत्यक्षेत्यादि । प्रत्यक्षदर्शनेऽपीति । कवीनां वस्तुस्वरूपप्रत्यक्षदर्शने सत्यपीत्यर्थः । स्पृश्यत इति । कविवाचेति शेषः । वृत्तौ—'अनुभाव्ये'ति । अनुभाव्यानामनुभवितव्यानां वस्तूनामनुभवानां च यत् सामान्यं सामान्यस्वरूपमित्यर्थः । 'तस्ये'ति । अनुभाव्यानुभावसामान्यस्येत्यर्थः । 'अविषयत्वे'ति । पुरातनानामित्यनुषङ्गः । 'तेषामि'ति । अद्यतनानामित्यर्थः । इत्यभिमानमात्रमेवेति सम्बन्धः । 'तत्रोच्यत' इत्यस्यानन्तरं 'यत्तूक्तं सामान्यमात्राश्रयेण काव्यप्रवृत्ति'रित्यादि पाठः । क्वचिद्ग्रन्थे त्वस्मात् पूर्वं 'यदि सामान्यमात्राश्रयेण काव्यप्रवृत्तिस्तत्प्रदर्शितप्रकारं काव्यवैचित्र्यमवस्थादिविशेषात्किं पुनरुक्तमेवास्तु न चेत्तथा तत्कथं न काव्यानन्त्यमि'त्यपि पाठः । तदनुरोधी किमितीत्यादि न चेदितीत्यन्तो लोचनग्रन्थः । 'उक्तिर्ही'त्यादिग्रन्थस्य भावं विवृणोति—पर्यायेत्यादि । पर्यायमात्रतैव शब्दान्तरेण निर्देश एव । तत् तर्हि । अविकलं वैकल्यं विना । अपौनरुक्त्याभिमानो न भवतीति ।

भावेन प्रवृत्तेः। वाच्यानां च काव्ये प्रतिभासमानानां यद्रूपं तत्तु ग्राह्यविशेषाभेदेनैव प्रतीयते। तेनोक्तिवैचित्र्यवादिना वाच्यवैचित्र्यमनिच्छताप्यवश्यमेवाभ्युपगन्तव्यम्। तदयमत्र सङ्क्षेपः—

वाल्मीकिव्यतिरिक्तस्य यद्येकस्यापि कस्यचित्।
इष्यते प्रतिभार्थेषु तत्तदानन्त्यमक्षयम्॥

किञ्च, उक्तिवैचित्र्यं यत्काव्यनवत्वे निबन्धनमुच्यते तदस्मत्पक्षानुगुणमेव। यतो यावानयं काव्यार्थानन्त्यभेदहेतुः प्रकारः प्राग्दर्शितः स सर्व एव पुनरुक्तिवैचित्र्याद्द्विगुणतामापद्यते। यश्चायमुपमाश्लेषादि-

लोचनम्

मानो न भवति। तस्माद्विशिष्टवाच्यप्रतिपादकनैवोक्तेर्विशेष इति भावः। ग्राह्यविशेषेति। ग्राह्यः प्रत्यक्षादिप्रमाणैर्यो विशेषः तस्य योऽभेदः।

तेनायमर्थः—पदानान्तावत्सामान्ये वा तद्वति वाऽपोहे वा यत्र कुत्रापि वस्तुनि समयः, किमनेन वादान्तरेण? वाक्यात्तद्विशेषः प्रतीयत इति कस्यात्र वादिनो विमतिः। अन्विताभिधानतद्विपर्ययसंसर्गभेदादिवाक्यार्थपक्षेषु सर्वत्र विशेषस्याप्रत्याख्येयत्वात्। उक्तिवैचित्र्यञ्च न पर्यायमात्रकृतमित्युक्तम्। अन्यत्तु यत्तत्प्रस्तुतास्माकं पक्षसाधकमित्याह—किञ्चेति। पुनरिति। भूय इत्यर्थः। उपमा हि निभ, प्रतिम, च्छल, प्रतिबिम्ब, प्रतिच्छाय, तुल्य, सदृशाभासादिभिर्विचित्राभिरुक्तिभिर्विचित्रीभवत्येव। वस्तुत एतासामुक्तीनामर्थवैचित्र्यस्य विद्यमानत्वात्। नियमेन भानयोगाद्धि निभ-

बालप्रिया

किन्तु पौनरुक्त्यबुद्धिरेव भवतीत्यर्थः। **विशिष्टवाच्येति**। वाच्यविशेषेत्यर्थः। प्रत्यक्षादिप्रमाणैः ग्राह्य इति सम्बन्धः।

**तेनायमर्थ** इति। उक्तग्रन्थेन वक्ष्यमाणोऽर्थस्सिध्यतीत्यर्थः। मीमांसकादीनां मते सामान्ये वस्तुनि, नैयायिकमते तद्वति, बौद्धमते अपोहे समयः। **वादान्तरेण** वादविशेषेण। **तद्विशेषः** वस्तुविशेषः। **कस्यात्र विमतिः** न कस्यापि। अत्र हेतुमाह—**अन्वितेत्यादि**। अन्विताभिधानादीनां ये वाक्यार्थत्वपक्षास्तेषु सर्वेष्वपीत्यर्थः। **विशेषस्याप्रत्याख्येयत्वादिति**। प्रतीताविति शेषः। वस्तुविशेषप्रतीतेः प्रत्याख्यातुमशक्यत्वादित्यर्थः। पुनरुक्तिवैचित्र्यादित्यत्रत्यपुनश्शब्दस्य व्याख्यानम्—**भूय** इति। 'यश्चायमि'त्यादिग्रन्थस्य भावार्थविवरणम्—**उपमेत्यादि**। उपमा हि विचित्रीभवत्येवेति सम्बन्धः। ननु निभप्रतिमादिशब्दानां समानार्थकत्वात् कथं त[ द्वै]चित्र्यमित्यत आह—**वस्तुत** इत्यादि। उपसंहरति—**एवमिति**। तदिति।

रलङ्कारवर्गः प्रसिद्धः स भणितिवैचित्र्यादुपनिबध्यमानः स्वयमेवानवधिर्धत्ते पुनः शतशाखताम्। भणितिश्च स्वभाषाभेदेन व्यवस्थिता सती प्रतिनियतभाषागोचरार्थवैचित्र्यनिबन्धनं पुनरपरं काव्यार्थानामानन्त्यमापादयति। यथा ममैव—

महमह इत्ति भणन्तउ वज्जदि कालो जणस्स।
तोइ ण देउ जणद्दण गोअरी भोदि मणसो॥

इत्थं यथा यथा निरूप्यते तथा तथा न लभ्यतेऽन्तः काव्यार्थानाम्। इदं तूच्यते—

**अवस्थादिविभिन्नानां वाच्यानां विनिबन्धनम्।**
**यत्प्रदर्शितं प्राक्**

लोचनम्

शब्दः, तदनुकारतया तु प्रतिमशब्द इत्येवं सर्वत्र वाच्यं केवलं बालोपयोगि काव्यटीकापरिशीलनदौरात्म्यादेषु पर्यायत्वभ्रम इति भावः। एवमर्थानन्त्यमलङ्कारानन्त्यञ्च भणितिवैचित्र्याद्भवति। अन्यथापि च तत्ततो भवतीति दर्शयति—**भणितिश्चेति**। प्रतिनियताया भाषाया गोचरो वाच्यो योऽर्थस्तत्कृतं यद्वैचित्र्यं तन्निबन्धनं निमित्तं यस्य, अलङ्काराणां काव्यार्थानाञ्चानन्त्यस्य। तत्कर्मभूतं भणितिवैचित्र्यं कर्तृभूतमापादयतीति सम्बन्धः। कर्मणो विशेषणच्छलेन हेतुर्दर्शितः।

मम मम इति भणतो व्रजति कालो जनस्य।
तथापि न देवो जनार्दनो गोचरो भवति मनसः॥

मधुमथन इति यो अनवरतं भणति, तस्य कथन्न देवो मनोगोचरो भवतीति विरोधालङ्कारच्छाया। सैन्धवभाषया महमह इत्यनया भणित्या समुन्मेषिता॥ ७॥

**अवस्थादिविभिन्नानां वाच्यानां विनिबन्धनम्।**

बालप्रिया

अर्थाद्यानन्त्यमित्यर्थः। **तत इति**। भणितिवैचित्र्यादित्यर्थः। यस्येत्यन्यपदार्थविवरणम्—**अलङ्काराणामित्यादि**। **विशेषणच्छलेनेति**। प्रतिनियतेत्यादिविशेषणव्याजेनेत्यर्थः।

'महे'त्यादेः छायामाह—**ममेत्यादि**। **मम मम इति भणतः** ममायं ममेदमित्यादि भणतः। अत्र ममेति प्रकृतार्थः। मधुमथन इति प्रतीयमानो विरुद्धार्थः। **तथापीति** विरोधद्योतकम्। **समुन्मिषितेति**। महमह इत्यस्य मम मम इति मधुमथन इति च छाया भवतीति भावः॥ ७॥

इत ऊर्ध्वं कारिकावृत्त्योर्भेदस्य दुर्ग्रहतया तदुभयं पृथक्प्रदर्शयन् विवृणोति-**अवस्थे-**

**भूम्नैव दृश्यते लक्ष्ये**

न तच्छक्यमपोहितुम् ।

**तत्तु भाति रसाश्रयात् ॥ ८ ॥**

तदिदमत्र सङ्क्षेपेणाभिधीयते सत्कवीनामुपदेशाय—

**रसभावादिसम्बद्धा यथौचित्यानुसारिणी ।**

**अन्वीयते वस्तुगतिर्देशकालादिभेदिनी ॥ ९ ॥**

तत्का गणना कवीनामन्येषां परिमितशक्तीनाम् ।

**वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः ।**

**निबद्धा सा क्षयं नैति प्रकृतिर्जगतामिव ॥ १० ॥**

यथाहि जगत्प्रकृतिरतीतकल्पपरम्पराविर्भूतविचित्रवस्तुप्रपञ्चा सती

लोचनम्

**भूम्नैव दृश्यते लक्ष्ये तत्तु भाति रसाश्रयात् ॥**

इति कारिका । अन्यस्तु ग्रन्थो मध्योपस्कारः ॥ ८ ॥

अत्र तु पादत्रयस्यार्थमनूद्य चतुर्थपादार्थोऽपूर्वतयाभिधीयते । **तदित्यादि शक्तीनामित्यन्तं** कारिकयोर्मध्योपस्कारः । द्वितीयकारिकायास्तुर्यं पादं व्याचष्टे—**यथाहीति** ॥ ९, १० ॥

बालप्रिया

त्यादि । **अन्यस्तु ग्रन्थ** इति । 'यत्प्रदर्शितं प्रागि'ति 'न तच्छक्यमपोहितुमि'ति च ग्रन्थ इत्यर्थः ॥ ८ ॥

**चतुर्थेत्यादि** । 'तत्तु भाति रसाश्रया'दित्यस्यार्थोऽत्र विधीयमान इत्यर्थः । **कारिकयोरिति** । 'रसभावे'त्यादेः 'वाचस्पती'त्यादेश्च कारिकयोरित्यर्थः । **उपस्कार** इति । यद्यन्वीयते अन्यैः कविभिः तर्त्तहि इत्यर्थः । **अन्येषां** वाल्मीकिव्यतिरिक्तानाम् । कवीनां गणना का । ते अगण्या भवेयुरिति तदर्थः । **तुर्यं पादमिति** । प्रकृतिर्जगतामिवेति पादमित्यर्थः । **व्याचष्ट** इति । क्षयं नैतीत्यनेन सह विवृणोतीत्यर्थः। **यथाहीतीति** । 'यथाही'त्यादिना 'अभिधातुमि'त्यन्तग्रन्थेनेत्यर्थः । 'तद्वदि'त्यादिकं तु वाचस्पतीत्यादिपादत्रयार्थविवरणम् । वृत्तौ 'जगत्प्रकृतिरि'ति । **जगत्कारणभूता** प्रकृतिरित्यर्थः । 'अतीते'ति । अतीतानां कल्पानां परम्परायामाविर्भूतः आविर्भावितः विचित्राणां वस्तूनां प्रपञ्चो यया सा 'सती'ति । परिक्षीणा नष्टा अपरपदार्थानां निर्माणशक्तिर्यस्यास्सेत्यर्थः ॥ ९, १० ॥

पुनरिदानीं परिक्षीणा परपदार्थनिर्माणशक्तिरिति न शक्यतेऽभिधातुम्। तद्वदेवेयं काव्यस्थितिरनन्ताभिः कविमतिभिरुपभुक्तापि नेदानीं परिहीयते, प्रत्युत नवनवाभिर्व्युत्पत्तिभिः परिवर्धते। इत्थं स्थितेऽपि—

संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम्।

स्थितं ह्येतत् संवादिन्य एव मेधाविनां बुद्धयः। किन्तु—

नैकरूपतया सर्वे ते मन्तव्या विपश्चिता॥ ११॥

कथमिति चेत्—

संवादो ह्यन्यसादृश्यं तत्पुनः प्रतिबिम्बवत्।

आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम्॥ १२॥

संवादो हि काव्यार्थस्योच्यते यदन्येन काव्यवस्तुना सादृश्यम्। तत्पुनः शरीरिणां प्रतिबिम्बवदालेख्याकारवत्तुल्यदेहिवच्च त्रिधा व्यवस्थितम्। किञ्चिद्धि काव्यवस्तु वस्त्वन्तरस्य शरीरिणः प्रतिबिम्बकल्पम्,

लोचनम्

संवादा इति कारिकाया अर्धं, नैकरूपतयेति द्वितीयम्॥ ११॥

किमियं राजाज्ञेत्यभिप्रायेणाशङ्कते—कथमिति चेदिति। अत्रोत्तरम्—

संवादो ह्यन्यसादृश्यन्तत्पुनः प्रतिबिम्बवत्।

आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम्॥

इत्यनेया कारिकया। एषा खण्डीकृत्य वृत्तौ व्याख्याता। शरीरिणामित्ययञ्चशब्दः प्रतिवाक्यं द्रष्टव्य इति दर्शितम्। शरीरिण इति। पूर्वमेव प्रतिलब्धस्वरूपतया

बालप्रिया

लोचने—संवादा इत्यादि। 'संवादा' इत्यादि'सुमेधसामि'त्यन्तं कारिकायाः प्रथमार्धं, 'नैके'त्यदि 'विपश्चिते' त्यन्तं द्वितीयार्धं चेत्यर्थः। अत्र सुमेधसां संवादा इत्यस्य सुमेधसां बुद्धीनां काव्यानां च संवादा इत्यर्थं इत्यभिप्रेत्य 'स्थितं ह्येतदि'त्यादिकं 'संवादो हि काव्यार्थस्योच्यत' इति च वृत्तावुक्तमिति बोध्यम्॥ ११॥

खण्डीकृत्य वृत्तौ व्याख्यातेति। केषुचित्पुस्तकेष्विति शेषः। अतएव वक्ष्यते—केषुचित् पुस्तकेषु कारिका अखण्डीकृता एव दृश्यन्त इति। खण्डीकृत्य व्याख्यानं तु 'संवादो ह्यन्यसादृश्यम्' 'संवादो हि काव्यार्थस्योच्यते, यदन्येन काव्यवस्तुना सादृश्यम्, तत् पुनः प्रतिबिम्बवत्, तत्पुनश्शरीरिणां प्रतिबिम्बवत्' इत्यादिकं बोध्यम्। प्रतिवाक्यमित्यादि। शरीरिणामित्यस्य प्रतिबिम्बादिभिस्त्रिभि·

अन्यदालेख्यप्रख्यम्, अन्यत्तुल्येन शरीरिणा सदृशम् ।

**तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम् ।**
**तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत्कविः ॥ १३ ॥**

तत्र पूर्वं प्रतिबिम्बकल्पं काव्यवस्तु परिहर्तव्यं सुमतिना । यत-स्तदनन्यात्म तात्त्विकशरीरशून्यम् । तदनन्तरमालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तमपि तुच्छात्मत्वेन त्यक्तव्यम् । तृतीयं तु विभिन्नकमनीय-शरीरसद्भावे सति ससंवादमपि काव्यवस्तु न त्यक्तव्यं कविना । न हि शरीरी शरीरिणान्येन सदृशोऽप्येक एवेति शक्यते वक्तुम् ।

लोचनम्

प्रधानभूतस्येत्यर्थः ॥ १२ ॥

**तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम् ।**
**तृतीयन्तु प्रसिद्धात्म नान्यसाम्यन्त्यजेत्कविः ॥**

इति कारिका। अनन्यः पूर्वोपनिबन्धकाव्यादात्मा स्वभावो यस्य तदनन्यात्म येन रूपेण भाति तत्प्राक्कविस्पृष्टमेव, यथा येन रूपेण प्रतिबिम्बं भाति, तेन रूपेण बिम्ब-मेवैतत् । स्वयन्तु तत्कीदृशमित्यत्राह—**तात्त्विकशरीरशून्यमिति** । न हि तेन किञ्चिदपूर्वमुत्प्रेक्षितं प्रतिबिम्बमप्येवमेव । एवं प्रथमं प्रकारं व्याख्याय द्वितीयं व्या-चष्टे-**तदनन्तरन्त्विति** । द्वितीयमित्यर्थः । अन्येन साम्यं यस्य तत्तथा । **तुच्छा-त्मेति** । अनुकारे ह्यनुकार्यबुद्धिरेव चित्रपुस्तादाविव न तु सिन्दूरादिबुद्धिः स्फुरति, सापि च न चारुत्वायेति भावः ॥ १३ ॥

बालप्रिया

त्सम्बन्ध इति भावः । वृत्तौ 'काव्यार्थस्ये'ति पूरितम् । काव्यार्थगतमन्यसादृश्यं विवृणोति—**'यदन्येने'**त्यादि । प्रतिबिम्बवदित्यादित्रये षष्ठ्यन्ताद्वतिः । प्रतिबिम्बे अन्यसादृश्यं शरीरिणा बिम्बेन सादृश्यमेवमालेख्याकारतुल्यदेहिनोश्च शरीरिणा सादृश्यं बोध्यम् । **'किञ्चिद्धी'**त्यादिफलितार्थकथनम् । तत्र शरीरिण इत्येतत्पदस्य विवरणं लोचने—**पूर्वमेवे**त्यादि । नान्यसाम्यं त्यजेत्कविरित्युक्त्या गम्यस्यार्थस्य विवरणं वृत्तौ **'परिहर्तव्यं सुमतिने'**ति । **'त्यक्तव्यमि'**ति च ॥ १२ ॥

तात्त्विकशरीरशून्यमित्यनन्यात्मेत्यस्य विवरणमित्यन्यथा प्रतिपत्तिः स्यादित्यतो लोचने विवृणोति—**अनन्य** इत्यादि । **भातीति** । काव्यवस्त्विति शेषः । तस्य प्रति-बिम्बकल्पत्वं दर्शयति—**यथेत्यादि** । **इत्यत्राहेति** । तथाच तात्त्विकेत्यादिकमनन्या-त्मेत्यस्य विवरणं नेति भावः । तात्त्विकशरीरशून्यत्वे हेतुमाह—**न हीत्यादि** । **तेनेति** । नवीनकविनेत्यर्थः । **अपूर्वमिति** । काव्यवस्त्विति शेषः । तुच्छात्मत्वमुप-पादयति—**अनुकारे ह्रीत्यादि** । **साऽपीति** । सा अनुकार्यबुद्धिः ॥ १३ ॥

एतदेवोपपादयितुमुच्यते—

आत्मनोऽन्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ।
वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥ १४ ॥

तत्त्वस्य सारभूतस्यात्मनः सद्भावेऽन्यस्य पूर्वस्थित्यनुयाय्यपि वस्तु भातितराम् । पुराणरमणीयच्छायानुगृहीतं हि वस्तु शरीरवत्परां शोभां पुष्यति । न तु पुनरुक्तत्वेनावभासते । तन्व्याः शशिच्छायमिवाननम् ।

एवं तावत्ससंवादानां समुदायरूपाणां वाक्यार्थानां विभक्ताः सीमानः । पदार्थरूपाणां च वस्त्वन्तरसदृशानां काव्यवस्तूनां नास्त्येव दोष इति प्रतिपादयितुमुच्यते—

अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी ।
नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति ॥१५॥

न हि वाचस्पतिनाप्यक्षराणि पदानि वा कानिचिदपूर्वाणि घटयितुं

लोचनम्

एतदेवेति तृतीयस्य रूपस्यात्याज्यत्वम् ।

आत्मनोऽन्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ।
वस्तु भातितरान्तन्व्याश्शशिच्छायमिवाननम् ॥

इति कारिका खण्डीकृत्य वृत्तौ पठिता । केषुचित्पुस्तकेषु कारिका अखण्डीकृता एव दृश्यन्ते । आत्मन इत्यस्य शब्दस्य पूर्वपठिताभ्यामेव तत्त्वस्य सारभूतस्येति च पदाभ्यामर्थो निरूपितः ॥ १४ ॥

ससंवादानामिति पाठः । संवादानामिति तु पाठे वाक्यार्थरूपाणां समुदायानां ये संवादाः तेषामिति वैयधिकरण्येन संगतिः । वस्तुशब्देन एको वा द्वौ वा त्रयो

बालप्रिया

एतदेवेत्यत्रस्यैतत्पदार्थविवरणम्—तृतीयस्येत्यादि । आत्मन इत्यस्यार्थो निरूपित इति सम्बन्धः तत्त्वस्य सारभूतस्येति चात्मपदार्थविवरणमिति भावः । वृत्तौ 'पूर्वस्थिती' त्याद्युक्तस्यैव विवरणं 'पुराणे'त्यादि 'पुष्यती' त्यन्तम् । 'पुराणे'ति । पुराणी रमणीया च या छाया तयाऽनुगृहीतमित्यर्थः । 'शरीरवत्' शरीरेण तुल्यम् ॥ १४ ॥

कारिकायां वस्तुरचनेत्यत्र वस्तुपदं विवृणोति लोचने—वस्तुशब्देनेत्यादि ।

शक्यन्ते। तानि तु तान्येवोपनिबद्धानि न काव्यादिषु नवतां विरुध्यन्ति। तथैव पदार्थरूपाणि श्लेषादिमयान्यर्थतत्त्वानि। तस्मात्—

यदपि तदपि रम्यं यत्र लोकस्य किञ्चित्-
स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते।

स्फुरणेयं काचिदिति सहृदयानां चमत्कृतिरुत्पद्यते।

अनुगतमपि पूर्वच्छायया वस्तु तादृ-
क्सुकविरुपनिबध्नन्निन्द्यतां नोपयाति॥ १६॥

लोचनम्

वा चतुरादयो वा पदानामर्थाः। तानि त्विति। अक्षराणि च पदानि च। तान्येवेति। तेनैव रूपेण युक्तानि मनागप्यन्यरूपतामनागतानीत्यर्थः। एवमक्षरादिरचनैवेति दृष्टान्तभागं व्याख्याय दार्ष्टान्तिके योजयति—**तथैवेति**। **श्लेषादिमयानीति**। श्लेषादिस्वभावानीत्यर्थः। सद्वृत्ततेजस्विगुणद्विजादयो हि शब्दाः पूर्वपूर्वैरपि कविसहस्रैः श्लेषच्छायया निबध्यन्ते, निबद्धाश्चन्द्रादयश्चोपमानत्वेन। तथैव पदार्थरूपाणीत्यत्र नापूर्वाणि घटयितुं शक्यन्ते इत्यादि विरुध्यन्तीत्येवमन्तं प्राक्तनं वाक्यमभिसन्धानीयम्॥ १५॥

'लोकस्ये'ति व्याचष्टे—**सहृदयानामिति**। **चमत्कृतिरिति**। आस्वादप्रधाना बुद्धिरित्यर्थः। 'अभ्युज्जीहीत' इति व्याचष्टे—**उत्पद्यत इति**। उदेतीत्यर्थः। बुद्धेरेवाकारं दर्शयति—**स्फुरणेयं काचिदिति**।

यदपि तदपि रम्यं यत्र लोकस्य किञ्चि-
त्स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते।

बालप्रिया

**अर्था** इति। विवक्षिता इति शेषः। तानि त्वित्यादिकं विवृणोति—**अक्षराणी**त्यादि। तान्येवोपनिबद्धानीत्यस्य विवरणम्—**तेनैवे**त्यादि। **व्याख्यायेति**। न हीत्यादिना विरुध्यन्तीत्यन्तेनेति शेषः। **सद्वृत्ते**त्यादि। सद्वृत्तादयो हि शब्दा नानार्थकाः। **निबद्धा** इत्यादि। पूर्वैरुपमानत्वेन निबद्धाश्चन्द्रादयश्चाद्यतनैरुपमानत्वेन निबध्यन्त इत्यर्थः। **अभिसन्धानीयमिति**। अनुषञ्जनीयमित्यर्थः।

कारिकायां यत्रेत्युक्त्या तत्रेत्यध्याहृत्य काव्यवस्तुनीत्यनेन योज्यम्। यत्रेत्यस्य स्थाने या त्विति वा पाठः। कारिकायां 'यदपी'त्यादि। 'यदपि तदपि' यत्किञ्चित्तुच्छमपि। 'रम्यं' काव्ये चारु भवति। तत्पदार्थं विवृणोति—'यत्रे'त्यादि। 'यत्र' निबद्धे यस्मिन् वस्तुनि। इदं किञ्चित् स्फुरितमितीयं बुद्धिः लोकस्य उज्जिहीते इत्य-

तदनुगतमपि पूर्वच्छायया वस्तु तादृक् तादृक्षं सुकविर्विवक्षितव्यङ्ग्यवाच्यार्थसमर्पणसमर्थशब्दरचनारूपया बन्धच्छाययोपनिबध्नन्निन्द्यतां नैव याति ।

तदित्थं स्थितम्—

**प्रतायन्तां वाचो निमितविविधार्थामृतरसा**
**न सादः कर्तव्यः कविभिरनवद्ये स्वविषये ।**

सन्ति नवाः काव्यार्थाः परोपनिबद्धार्थविरचने न कश्चित्कवेर्गुण इति भावयित्वा ।

**परस्वादानेच्छाविरतमनसो वस्तु सुकवेः**
**सरस्वत्येवैषा घटयति यथेष्टं भगवती ॥ १७ ॥**

लोचनम्

अनुगतमपि पूर्वच्छायया वस्तु तादृ-
क्सुकविरुपनिबध्नन्निन्द्यतां नोपयति ॥

इति कारिका खण्डीकृत्य पठिता ॥ १६ ॥

**स्वविषय** इति । स्वयन्तात्कालिकत्वेनास्फुरित इत्यर्थः। **परस्वादानेच्छे**त्यादिद्वितीयं श्लोकार्धं पूर्वोपस्कारेण सह पठति—**परस्वादानेच्छाविरतमनसो**

बालप्रिया

न्वयः । तत्र लोकस्येत्यादेर्विवरणं वृत्तौ 'स्फुरणेयमि'त्यादि । तदेतद्दर्शयन्नाह लोचने-**लोकस्येत्यादि** । **खण्डीकृत्य पठितेति** । 'यदपी'त्यादिकारिकापूर्वार्धपाठानन्तरं 'स्फुरणेय'मित्यादिवृत्तिग्रन्थपाठः, स्तदनन्तरं 'अनुगतमपी'त्याद्युत्तरार्धपाठः, तदनन्तरं 'गतमि'त्यादिवृत्तिग्रन्थपाठश्चेति भावः ॥ १६ ॥

'प्रतायन्तामि'ति । निमिताः तुलिताः विविधार्थामृतरसाः अमृतरसतुल्याः विविधार्थाः याभिः ताः, यावन्तोऽर्थास्तावत्य इति भावः । यथा माघे 'यावदर्थपदां वाचमि'ति । वाचः काव्यरूपाः । कविभिः 'प्रतायन्तां' सविस्तराः निबध्यन्ताम् । 'अनवद्ये' निर्दोषे । 'स्वविषये' काव्यवस्तुनि विषये कविभिः 'सादः' मनस्सादः, कुतः खल्वपूर्वमानयामीत्यादिचिन्तया विषाद इति यावत्; न कर्तव्यः, कुत इत्यत्राह—'परस्वे'त्यादि । 'वस्तु' काव्यम् । सुकवेर्घटयतीति सम्बन्धः । 'यथेष्टं' कवेरिष्टमनतिक्रम्य इति कारिकार्थं स्पष्टं मत्वा स्वविषय इत्यत्र पूरयति लोचने—**स्वयं तात्कालिकत्वेनास्फुरित** इति । तत्काले कवेरस्फुरित इत्यर्थः । अनेन सादस्य हेतुर्दर्शितः । **पूर्वोपस्कारेण सह पठतीति** । कारिकापूर्वार्धपाठानन्तरं सन्ती

परस्वादानेच्छाविरतमनसः सुकवेः सरस्वत्येषा भगवती यथेष्टं घटयति वस्तु । येषां सुकवीनां प्राक्तनपुण्याभ्यासपरिपाकवशेन प्रवृत्तिस्तेषां परोपरचितार्थपरिग्रहनिःस्पृहाणां स्वव्यापारो न क्वचिदुपयुज्यते । सैव भगवती सरस्वती स्वयमभिमतमर्थमाविर्भावयति । एतदेव हि महाकवित्वं महाकवीनामित्योम् ।

इत्यक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतो
यस्माद्वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते ।

**लोचनम्**

**वस्तु सुकवेरिति** तृतीयः पादः । कुतः खल्वपूर्वमानयामीत्याशयेन निरुद्योगः परोपनिबद्धवस्तूपजीवको वा स्यादित्याशङ्क्याह—**सरस्वत्येवेति** । कारिकायां सुकवेरिति जातावेकवचनमित्यभिप्रायेण व्याचष्टे—**सुकविनामिति** । एतदेव स्पष्टयति—**प्राक्तनेत्यादि न तेषामित्यन्तेन** । **आविर्भावयतीति** । नूतनमेव सृजतीत्यर्थः ॥ १७ ॥

**इतीति** । कारिकातद्वृत्तिनिरूपणप्रकारेणेत्यर्थः । अक्लिष्टा रसाश्रयेण उचिता ये गुणालङ्कारास्ततो या शोभा तां बिभर्ति काव्यम् । उद्यानमप्यक्लिष्टः कालोचितो यो रसः सेकादिकृतः तदाश्रयस्तत्कृतो यो गुणानां सौकुमार्यच्छायावत्त्वसौगन्ध्यप्रभृतीनमलङ्कारः पर्याप्तताकारणं तेन च या शोभा तां बिभर्ति । **यस्मादिति** काव्याख्यादुद्यानात् । **सर्वं समीहितमिति** । व्युत्पत्तिकीर्तिप्रीतिलक्षणमित्यर्थः ।

**बालप्रिया**

त्यादिभावयित्वेत्यन्तस्य वृत्तिग्रन्थस्य पाठः । तस्य परस्वादानेच्छाविरतमनस इत्यत्र विरतेत्यनेन सम्बन्धश्चेति भावः । अवतारयति—**कुत** इत्यादि । **आशयेन** चिन्तया । **निरुद्योगः** काव्यविषयकोद्योगरहितः । **स्यादिति** । कुतो न स्यात्, स्यादेवेत्यर्थः ॥ १७ ॥

इत्यक्लिष्टेत्यादिश्लोकस्थस्येतिपदस्य विवरणम्—**कारिकेत्यादि** । कारिका च तद्वृत्तिश्च ताभ्यां यन्निरूपणं तत्प्रकारेणेत्यर्थः । अस्य ध्वनिर्दर्शित इत्यनेन सम्बन्धः । अक्लिष्टेति शोभायाः रसाश्रयोचितेति गुणालङ्कारयोश्च विशेषणमिति दर्शयन् व्याचष्टे—**अक्लिष्टेत्यादि** । तत इति । गुणालङ्कारहेतुकेत्यर्थः । **तत्कृत** इति । तत्प्रयुक्त इत्यर्थः । कालोचितजलसेकेन हि पल्लवपत्रपुष्पादिसमृद्ध्या लतावृक्षादिसमुदायरूपस्योद्यानस्य सौकुमार्यादिगुणसम्पत्तिर्भवति । अलंशब्दोऽत्र पर्याप्ततावाचीत्याशयेन विवृणोति—**पर्याप्तताकरणमिति** । परिपूर्णताप्रापणमित्यर्थः ।

काव्याख्येऽखिलसौख्यधाम्नि विबुधोद्याने ध्वनिर्दर्शितः
सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम् ॥
सत्काव्यतत्त्वनयवर्त्म चिरप्रसुप्त-
कल्पं मनस्सु परिपक्वधियां यदासीत् ।

लोचनम्

एतच्च सर्वं पूर्वमेव वितत्योक्तमिति श्लोकार्थमात्रं व्याख्यातम् । **सुकृतिभिरिति** । ये कष्टोपदेशेनापि विना तथाविधफलभाजः तैरित्यर्थः । **अखिलसौख्यधाम्नीति** । अखिलं दुःखलेशेनाप्यननुविद्धं यत्सौख्यं तस्य धाम्नि एकायतन इत्यर्थः । सर्वथा प्रियं सर्वथा च हितं दुर्लभं जगतीति भावः । विबुधोद्यानं नन्दनम् । सुकृतीनां कृतज्योतिष्टोमादीनामेव समीहितास्वादननिमित्तम् । विबुधाश्च काव्यतत्वविदः । **दर्शित** इति । स्थित एव सन् प्रकाशितः, अप्रकाशितस्य हि कथं भोग्यत्वम् । कल्पतरुणा उपमानं यस्य तादृङ्महिमा यस्येति बहुव्रीहिगर्भो बहुव्रीहिः । सर्वसमीहितप्राप्तिर्हि काव्ये तदेकायत्ता । एतच्चोक्तं विस्तरतः ॥

सत्काव्यतत्वनयवर्त्म चिरप्रसुप्त-
कल्पं मनस्सु परिपक्वधियां यदासीत् ।

बालप्रिया

**तथाविधफलभाज** इति । तथाविधानि व्युत्पत्त्यादीनि फलानि भजन्ते तद्भजनशीलाः तदर्हा इत्यर्थः । **तैरिति** । राजकुमारादिभिरित्यर्थः । खिलशब्दोऽत्र दुःखार्थकः । नास्ति खिलं यस्मिंस्तदखिलं इति बहुव्रीहिश्चेत्याशयेन विवृणोति—**दुःखे**त्यादि । भावमाह—**सर्वथे**त्यादि । कृतज्योतिष्टोमेत्यादिना उद्यानपक्षे सुकृतिपदार्थो विवृतः । उद्यानस्येव काव्यस्यापि विबुधपदार्थसम्बन्धोऽर्थाद्विवक्षित इत्याशयेनाह—**विबुधाश्चे**त्यादि । काव्यतत्वविदश्चेति योजना । चकारेण देवा इत्यर्थस्य समुच्चयः । दर्शित इति भोग्यत्वोपपादकमिति दर्शयन्नाह—**अप्रकाशितस्ये**त्यादि । उपमानपदस्योपमित्यर्थकत्वाभिप्रायेण विग्रहमाह—**कल्पतरुणे**त्यादि । उपमानपदस्योपमितिकरणार्थकत्वे तु कल्पतरुरुपमानमिति विग्रहः । **बहुव्रीहिरिति** । अत्र कल्पतरुसाम्यस्य महिम्नि शब्देन बोधनेऽपि महिमाश्रये ध्वनौ तस्य पर्यवसानं बोध्यम् । काव्यं नन्दनोद्यानेन तुल्यं ध्वनिः कल्पतरुतुल्यश्चेति भावः । अत एव ध्वनेः कल्पतरुसाम्यप्रयोजकं दर्शयन्नाह—**सर्वे**त्यादि । समीहितं प्रीत्यादि । **तदेकायत्ता** ध्वन्येकप्रयुक्ता ।

'सत्काव्ये'ति । सत्काव्यतत्वस्य ध्वनिस्वरूपस्य 'नयवर्त्म' न्याय्यमार्गः साधकं युक्तिजातमित्यर्थः । 'चिरे'ति । चिरकालादारभ्य प्रसुप्ततुल्यं स्फुटमप्रकाशमित्यर्थः। 'परिपक्वधियां' परिणतप्रज्ञानां पूर्वेषां ग्रन्थकृताम् । 'तदि'ति । ध्वनिस्वरूपं तस्य

तद्व्याकरोत्सहृदयोदयलाभहेतो-
रानन्दवर्धन इति प्रथिताभिधानः ॥

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके
चतुर्थ उद्द्योतः

समाप्तोऽयं ग्रन्थः ॥

लोचनम्

**तद्व्याकरोत्सहृदयोदयलाभहेतोः**

इति सम्बन्धाभिधेयप्रयोजनोपसंहारः । इह बाहुल्येन लोको लोकप्रसिद्ध्या सम्भावनाप्रत्ययबलेन प्रवर्तते । स च सम्भावनाप्रत्ययो नामश्रवणवशात्प्रसिद्धान्यतदीयसमाचारकवित्वविद्वत्तादिसमनुस्मरणेन भवति । तथाहि—भर्तृहरिणेदं कृतम्—यस्यायमौदार्यमहिमा यस्यास्मिञ्छास्त्रे । एवंविधस्सारो दृश्यते तस्यायं श्लोकप्रबन्धस्तस्मादादरणीयमेतदिति लोकः प्रवर्तमानो दृश्यते । लोकश्चावश्यं प्रवर्तनीयः तच्छास्त्रोदितप्रयोजनसम्पत्तये । तदनुग्राह्यश्रोतृजनप्रवर्तनाङ्गत्वाद्ग्रन्थकाराः स्वनामनिबन्धनं कुर्वन्ति, तदभिप्रायेणाह—**आनन्दवर्धन** इति । प्रथितशब्देनैतदेव प्रथितं यत्तु

बालप्रिया

थर्कं युक्तिजातं चेत्यर्थः । 'व्याकरोत्' विशदीकृतवान् । 'सहृदये'ति । सहृदयानां य उदय अभ्युदयः ध्वनिस्वरूपावबोधहेतुका प्रीतिः तल्लाभस्य हेतोः । तल्लाभरूपप्रयोजनायेत्यर्थः । 'तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपमि'त्युपक्रमानुरूपोऽयमुपसंहारः । श्लोकार्थं स्पष्टं मत्वा वक्तव्यमंशं विवृणोति लोचने—सत्काव्येत्यादि । **इतिसम्बन्धाभिधेयप्रयोजनोपसंहार** इति । सम्बन्धः ध्वनिस्वरूपस्यैतद्ग्रन्थस्य च प्रतिपाद्यप्रतिपादकभावः । अभिधेयं ध्वनिस्वरूपं, प्रयोजनं ध्वनिस्वरूपज्ञानहेतुका प्रीतिः । तद्व्याकरोत्सहृदयोदयलाभहेतोरित्यनेनाभिधेयप्रयोजने स्पष्टमुक्ते, सम्बन्धस्त्वर्थाल्लभ्यते । अथानन्देत्यादिचतुर्थपादमवतारयति—इहेत्यादि । **सम्भावनाप्रत्ययेति** । बहुमानेत्यर्थः । **नामेति** । ग्रन्थकारनाम्नो यच्छ्रावणं तद्वशादित्यर्थः । **प्रसिद्धेति** । प्रसिद्धमन्यन्नाम्नोऽन्यत् । यद्वा—प्रसिद्धान्यमसाधारणमित्यर्थः । तथाविधं यत्तदीयं ग्रन्थकारसम्बन्धिसमाचारस्सदाचारः तदादि तत्स्मरणेनेत्यर्थः । स च सम्भावना प्रत्ययो भवतीति सम्बन्धः । उक्तं सदृष्टान्तमाह—तथाहीत्यादि । **भर्तृहरिणेदं कृतमित्यादिकं** लोकबुद्ध्याकारकथनम् । **यस्य** भर्तृहरेः । **अयमिति** ग्रन्थमुद्दिश्योक्तिः । **इतीति** । इति बुद्ध्येत्यर्थः । सम्पत्तये प्रवर्तनीय इति सम्बन्धः ।

लोचनम्

तदेव नामश्रवणं केषाञ्चिन्निवृत्तिं करोति, तन्मात्सर्यविजृम्भितं नात्र गणनीयम्, निश्रेयसप्रयोजनादेव हि श्रुतात्कोऽपि रागान्धो यदि निवर्तते किमेतावता प्रयोजनमप्रयोजनमप्यवश्यं वक्तव्यमेव स्यात्। तस्मादर्थिनां प्रवृत्त्यङ्गन्नाम प्रसिद्धम्।

स्फुटीकृतार्थवैचित्र्यबहिःप्रसरदायिनीम्॥
तुर्यां शक्तिमहं वन्दे प्रत्यक्षार्थनिदर्शिनीम्॥

आनन्दवर्धनविवेकविकासिकाव्यालोकार्थतत्त्वघटनादनुमेयसारम्।
यत्प्रोन्मिषत्सकलसद्विषयप्रकाशि व्यापार्यताभिनवगुप्तविलोचनं तत्॥

बालप्रिया

**तदिति**। तस्मादित्यर्थः। **एतदेव प्रथितमिति**। उक्तमेव प्रकाशितमित्यर्थः। **तदेव नामश्रवणमिति**। यदेव नामश्रवणं बहूनां प्रवृत्तिं करोति, तदेव नामश्रवणमित्यर्थः। **करोति** उत्पादयति। **निःश्रेयसेति**। निश्रेयसं प्रयोजनं यस्य तस्मादित्यर्थः। **श्रुतादिति**। श्रुतिप्रतिपादितात्तत्त्वज्ञानादित इत्यर्थः। **एतावतेति**। रागान्धनिवृत्तिमात्रेणेत्यर्थः। **प्रयोजनमिति**। वस्तुतः प्रयोजनमित्यर्थः। **अप्रयोजनं** प्रयोजनमिदम्। वक्तव्यमेव स्यात्कमिति सम्बन्धः। न वक्तव्यमिति भावः। प्रथितं नामप्रवृत्त्यङ्गमिति सम्बन्धः।

प्रथमोद्योतान्ते पराया द्वितीयोद्योतान्ते पश्यन्त्यास्तृतीयोद्योतान्ते मध्यमायाश्च वन्दनं कृतवान् ग्रन्थकारः, चतुर्थोद्योतान्ते वैखर्या वन्दनमनुतिष्ठति—**स्फुटीत्यादि**। स्फुटीकृतानि वक्त्रा मनसि स्पष्टीकृतानि यानि अर्थवैचित्र्याणि विचित्रार्थाः तेषां यः बहिःप्रसरः श्रोतृजनेषु प्रकाशः तद्दायिनीम्। **प्रत्यक्षेति**। प्रत्यक्षं यथा तथा अर्थनिदर्शिनीमर्थान्निदर्शयन्तीम्। अप्रत्यक्षानप्यर्थान् प्रत्यक्षानिव प्रदर्शयन्तीमिति यावत्। **तुर्यां शक्तिं** वैखरीरूपां शक्तिम्। अहं वन्दे इत्यर्थः।

**आनन्देति**। आनन्दवर्धनस्य यो विवेकः विविच्यतत्तदर्थावबोधः तेन विकासी प्रकाशमानो यः काव्यलोकस्तस्य यान्यर्थतत्त्वानि सारार्थाः तेषां घटनात्संयोजनाद्धेतोः। अनुमेयस्सार उत्कर्षो यस्य तत्, किंच **यत् प्रोन्मिषत्** सहृदयेषु प्रकाशमानमथ च प्रकर्षेण उन्मिषत् सत् सकलानां सर्वेषां काव्यादीनां सद्विषयान् सारार्थान् सकलान् सद्विषयान् वा अथ च सकलान् सद्विषयान् विद्यमानान् पदार्थान् प्रकाशयतीति तथा भवति तत् तथाविधम्। अभिनवगुप्तस्य तन्नाम्नः स्वस्य, अथ च अभिनवं नवीनं गुप्तमन्येषामविदितं च लोचनमालोचनं ज्ञानं नेत्रं च **व्यापार्यत** आत्मना व्यापारितम्। णिजन्तात्कर्मणि लङ्। अत्र ज्ञाने नेत्रसाम्यं गम्यते।

**श्रीसिद्धीति**। श्रीमतः सिद्धिचेलस्य तन्नाम्नः गुरोः चरणाब्जपरागैः पूतो यो

**लोचनम्**

श्रीसिद्धिचेलचरणाब्जपरागपूतभट्टेन्दुराजमतिसंस्कृतबुद्धिलेशः ।
वाक्यप्रमाणपदवेदिगुरुः प्रबन्धसेवारसो व्यरचयद्ध्वनि वस्तुवृत्तिम् ॥

सज्जनान् कविरसौ न याचते ह्लादनाय शशभृत्किमर्थितः ।
नैव निन्दति खलान्मुहुर्मुहुः धिक्कृतोऽपि न हि शीतलोऽनलः ॥

वस्तुतश्शिवमये हृदि स्फुटं सर्वतश्शिवमयं विराजते ।
नाशिवं क्वचन कस्यचिद्वचः तेन वश्शिवमयी दशा भवेत् ॥

**इति महामाहेश्वराभिनवगुप्तविरचिते काव्यालोकलोचने चतुर्थ उद्योतः**

**समाप्तश्चायं ग्रन्थः ॥**

**बालप्रिया**

भट्टेन्दुराजः तस्य मत्या ज्ञानेन संस्कृतो बुद्धिलेशो यस्य सः । **वाक्येति** । वाक्यं मीमांसाशास्त्रं, प्रमाणं न्यायशास्त्रं, पदं व्याकरणशास्त्रं, तद्वेदिनां गुरुरित्यर्थः । प्रबन्धसेवायां रसो यस्य सः । अभिनवगुप्त इति शेषः । **ध्वनिवस्तुवृत्तिं** ध्वनिग्रन्थविवृतिम् । **व्यरचयत्** कृतवान् ।

**सज्जनानिति** । असौ कविरित्यात्मानं निर्दिश्योक्तिः । **ह्लादनाय** स्वग्रन्थादरणेन स्वप्रीणनाय **सज्जनान्न याचते** । कुतो न याचत इत्याशङ्कां दृष्टान्तप्रदर्शनेन परिहरति—**शशभृत्किमर्थित** इति । ह्लादनायेत्यनुषङ्गः । किमर्थितः जनैरर्थितः । किं नैवेत्यर्थः । चन्द्र इव सज्जनः स्वयमेव परानाह्लादयतीति चन्द्रस्येव पराह्लादनं सज्जनस्य स्वभाव इत्यर्थः । नैवेति । मुहुर्मुहुः धिक्कृतोऽपि खलैः पुनः पुनरधिक्षिप्तोऽपि । असौ कविरित्यनुषङ्गः । खलान्नैव निन्दति कुत इत्यत आह—**न ही**त्यादि । अनलः अग्निः, शीतलः अनुष्णः । न हि यथा अग्निः सर्वदा उष्णस्वभाव एव तथा खलजनः परदूषणस्वभाव एव, स्वभावश्चापरिहार्य इत्यर्थः । अत इत्युभयत्र पूर्वेण सम्बन्धः ।

अथ परममाहेश्वरो ग्रन्थकारो ग्रन्थान्ते परमशिवानुसन्धानात्मकं परममङ्गलमनुतिष्ठन्नाह—**वस्तुत** इत्यादि । जनस्य हृदि हृदये वस्तुतः शिवमये सति शिवमये हृदीति वा योजना, सर्वतः सर्वं वस्तु स्फुटं शिवमयं विराजते भाति । **नाशिवमि**त्यादि । क्वचन क्वचिदपि कस्यचिद्वचः अशिवं न भवति, किंतु सर्वत्र शिवमेव भवतीत्यर्थः । अनेन वस्तुतः शिवमये स्वस्य हृदये सर्वं शिवमयं भाति । अतस्सर्वत्रापि विषये स्ववचः शिवमेवेत्यर्थः प्रदर्शितः । तेनेति । स्ववचनेनेत्यर्थः । व इति श्रोतॄनुद्दिश्योक्तिः । शिवमयी मङ्गलमयी दशा भवेत् भवत्विति सर्वं शिवम् ।

देवी विजयतां वाणी सर्म सत्कविसूरिभिः ।
हृयस्वचेतसां काव्यालोकश्च सहलोचनः ॥
सर्वविद्याब्धिराजर्षिमहागोश्रीमृदादितः ।
बिरुदं यस्सहृदयतिलकाख्यमवाप्तवान् ॥
सम्मानितश्चाङ्गलश्रीचक्रवर्तिसुतेजियः । लुतेन यः।
शाकुन्तलादि यो व्याख्याद्गोश्रीशादिगुरुश्च यः ॥
शास्त्रसाहित्यविन्मौलिः परीक्षिदुपनामकः ।
सुहृत्सतीर्थ्यो गोश्रीशो यस्यालम्बोऽस्ति सर्वतः ॥
रामाख्यष्षारकस्सोऽहमकार्षं टिप्पणीमिमाम् ।
इष्वग्निखेषु-कल्यब्दे बालानामस्त्वियं प्रिया ॥ ५०३५
प्रौढं क्व लोचनं क्वाहं मन्दधीर्बहुधात्र तत् ।
टिप्पण्यां स्खलितानि स्युस्तदियं शोध्यतां बुधैः ॥

इति श्रीसहृदयतिलक पण्डितराज बिरुदद्वयशालिना रामनाम्ना षारकेण विरचिता काव्यालोकलोचनटिप्पण्यां बालप्रियाख्यायां चतुर्थ उद्योतः

समाप्तोऽयं ग्रन्थः ॥



प्राप्तिस्थानम्—
चौखम्बा–संस्कृत–पुस्तकालय,
बनारस सिटी ।

